॥ श्रीः ॥

॥ शिवाभ्यां न[illegible]न्दसरस्वतीश्रीच-
श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भू[illegible]श्रीमद्रामा-
रणानुग्रहलब्धसारस्वतपदैः यतिकुला[illegible]र्थ-
नन्दतीर्थमुखारविन्द[illegible]
तत्त्वैः श्रीमदद्वैतानन्दाख्ययतिसार्वभौ[illegible]

विरचितं

---

श्रीमच्छारीरकसूत्रभाष्यव्याख्यानं

# ॥ ब्रह्मविद्याभरणम् ॥

परमानन्दाविर्भावलक्षणमोक्षप्रयोजकाद्वितीयब्रह्मज्ञानपरिप-
न्थिकुमत्युद्भावितकुयुक्त्युत्सारणपूर्वकं वाचस्पत्यक-
ल्पतरुपरिमलाद्यनेकप्राचीनप्रबन्धार्थसङ्ग्रहकं
श्रीमच्चम्पकारण्यवास्तव्यश्रीमहामहोपाध्याय-
बिरुदाङ्कित श्री राजुशास्त्र्य परनामक-
श्रीमत्त्यागराजचरणानुग्रहलब्धब्रह्म-
विद्यावैशद्येन श्रीगोष्ठीपुराभिजनेन

## हरिहरशास्त्रिणा

संशोधितं

कोनेरिराजपुरग्रामवास्तव्येन

**वि. साम्बशिवार्येण**

कुम्भघोणस्थस्वकीय-
श्रीविद्यामुद्राक्षरशालायां
मुद्राक्षरैरङ्कयित्वा प्राकाश्यं प्रापिता
समुल्लसतितमाम् ।

—:(*):—

मूल्यं रूप्यदशकं (प्रापणव्ययः द्वादश कलाश्च)

## ॥ अद्वैतानन्दबोधेन्द्राः ॥

एते हि सकलकलिकलुषसर्वंकषाशेषसलिलायाः सह्यशैलभुवः सरितः कवेरजायाः कूलमनुविराजमाने विश्रुतजप्येशदीक्षानिरस्तव्यामोहदेहिनिवहानुभूयमानतारकोपदेशपरिपूतदक्षिणश्रवणदेशे देशे पञ्चनदाभिधाने कौण्डिन्यप्रेमनाथमखिनः पार्वतीनाम्न्यां पाणिगृहीत्यां उदभवन्नात्तसीतापतिप्रथाः प्रथमाश्रमे। तदुक्तमेभिरेव स्वकृतौ शान्तिविवरणे । यथा—"जप्येशस्य कृपाभरात् समुदभूद्यः पार्वतीगर्भतः प्रेमेशस्य सुतः श्रुतिप्रवचने धीरस्स सीतापतिः । आदेशात् गुरुचन्द्रचूडयमिनस्सर्वज्ञपीठीविभोराधत्ते किल शान्तिवाकनवकव्याख्यां सुखख्यातये ॥" इति—अयञ्चासप्तदशहायनमाश्रमे प्रथम एव वर्तमानः आसेतुशीताचलमाहितभ्रमणः आसादितन्यायमीमांसाप्रावीण्यः प्रयत्नदृष्टश्रीभूमानन्दापरपर्यायचन्द्रशेखरेन्द्रसरस्वतीसमनुगृहीतश्रीकाञ्चीशारदामठाधिपत्यः प्रत्यरुणाचलं प्रपन्ने परमपदं गुरौ प्रतिवाराणसि प्रचलितः तदभ्यर्णवर्तिनां श्रीरामानन्दसरस्वतीनां सकाशात् उपात्तसमग्रशारीरकसूत्रभाष्यः तान्त्रिककुलगर्वनिर्वापणपटुः प्रधर्षितश्रीहर्षप्रमुखसकलविद्वन्मण्डलः प्रतिष्ठाप्य समयमद्वैतमभितः कश्मीरानाव्रनत् आत्मवासपीठीमधिचोलमायांश्च गामसेतुमधिकनकसभमर्चन्नमृतालिङ्गमन्तरधादधिचिदम्बरमेवेति वृद्धाः । तथाहि शान्तिविवरणपरिसमाप्तौ ॥ "भूमानन्दपराभिधानविलसच्छ्रीचन्द्रचूडाश्रमिप्रेक्षाऽवाप्तसमस्तवित्पदतया श्रीकामकोटीश्वरः । व्याख्यायाखिलशान्तिवाकमचिरादाप्ताय दिव्यं पदं दत्ते प्रत्यरुणाचलं स्वगुरवे नाम्नास्य भूम्नाङ्कितम् ॥" इति॥ सर्वज्ञश्रीसदाशिवब्रह्मेन्द्रकृतौ गुरुरत्नमालिकायामपि—"अभिचारकगुप्तपादवाडिप्रभुहर्षादिपराभवाग्रभूमिम् । कलये हृदि संश्रितं स्वभासा विलयं चिद्वियतीह चिद्विलासम् ॥" इति ॥ श्रीहर्षकृतौ स्थैर्यविचारप्रकरणे—"तन्त्रैर्दुर्यन्त्रमन्त्रैरपि बुधजनतागाधबोधापमृत्योः कृत्योद्यत्क्रूरधारापरुषतरमतेर्गुप्तनाम्नः शरारोः । चेष्टाविष्टम्भकानां प्रतिविबुधसभोत्खातजैत्रध्वजानामाजानज्ञानभाजां विभवमभिदधे चिद्विलासाख्यभूम्नाम् ॥" तेनैवान्यत्रापि— क्षोणीस्त्रीमणिरत्नकाञ्चिविकचत्काञ्चीपदोद्यद्दृसश्रीकामासनवासवासितगहासत्वोऽप्यमत्वच्यवः । प्रस्फूर्जच्चिदचिद्विलासवदुमासोमार्धचूडालयोरैक्योक्ताविह भारतीं मदयतां श्रीचिद्विलासो मम ॥" इति च अस्यैव चिद्विलासः आनन्दबोधाचार्यः अद्वैतानन्दः इत्यादीनि नामान्तराण्यपि पुण्यश्लोकमञ्जर्यादिभिः प्रबन्धैरधिगम्यन्ते । विस्तरतश्चास्य चरितमपि पुण्यश्लोकमञ्जर्याम्—"प्रेमेशस्य पिनाकिनीतटभुवस्सूनुस्स सीतापतिः स्नात्वा सप्तदशायुराश्रममधात् श्रीचन्द्रचूडान्मुनेः । खण्डं खण्डमखण्डखण्डनकृदार्योद्दण्ड्यमुद्दण्डवागाचार्यस्त्रिरहिण्डताजलनिधिं विष्वक्सविश्वम्भराम् ॥ वाग्वर्षैर्विशदय्य विश्वमभितोऽद्वैतं विदां सम्मतं सिद्धार्थिन्यपि हायने शुचिदशम्यह्नि श्रितश्वित्सभाम् । अर्चन्नेव स मुक्तिलिङ्गमदधादन्तः समन्ताच्छ्रुतेष्वासीदस्त्वपि चिद्विलासनियमी चिद्व्योम्नि साक्षादसौ ॥" एष चिद्विलासापरनामा श्रीमदद्वैतानन्दबोधेन्द्रः श्रीहर्षाभिनवगुप्तपादादिवादिमदावलवीरसिंहः ब्रह्मविद्याभरणविवरणाद्यनेकप्रबन्धकर्ता सुप्रसिद्ध एव" ॥ इति ॥ अन्ते च तत्कृतीनाम्—"श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयतिकुलोत्तंस-श्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वैतानन्दकृतौ" इति च दृश्यते ॥ उदाहृतवचनैरेष श्रीकाञ्चीकामकोटिपीठाधिपतिरासीत् प्रदक्षिणितसकलभूमण्डलः प्रसिद्धविद्वदभिनवगुप्तपण्डितश्रीहर्षसमकालिक इत्यपि सिद्धम् । एतेनायं इतः प्राक् सप्तशतसंवत्सरेभ्य आ-

सीत् कालश्चास्य संयमनसिध्योर्मध्ये पुण्यश्लोकरीत्या कल्यादि ४२६८ संवत्सरादि ४३०१ संवत्सरपर्यन्तं चतुस्त्रिंशदब्दाः पीठाधीशस्य समभूदिति सर्वतोभद्रम्। एतत् कृताश्च प्रबन्धाः— शान्तिविवरणब्रह्मविद्याभरणगुरुप्रदीपनामानः त्रय एव श्रूयन्ते येष्वयमेक एव प्रसिद्धः प्रथीयांश्च। अस्त्यत्र किंवदन्त्यपि— “आनन्दबोधार्यकृताः प्रबन्धाः परे प्रकाशं न गता बुधानां। यद्ब्रह्मविद्याभरणामृताब्धौ मग्ना न पश्यन्ति परं प्रबन्धम्॥” इति अयं च प्रबन्धः ब्रह्मसूत्रभाष्यविवरणात्मा समग्रचतुरध्यायीभामतीनिगूढभावप्रकाशनपरश्च अद्वैतिनामत्यन्तोपकारक इति च प्रबन्धत एव भवति प्रत्यक्षं विचक्षणानाम्। अन्ये तु कतिपये कर्तारममुष्य कृतिरत्नस्य कमप्यर्वाञ्चमेव नियमिनमितः प्रागब्दत्रिंशत्यन्तर एव स्थितं आमनन्ति प्रमाणयन्ति च पूर्वेषां कतिपयानां वृद्धनियमिनां विस्रंभवाक्यान्येव। मन्यन्ते च ते भिन्नमेव तद्यत् किञ्चित् ब्रह्मविद्याभरणं नाम प्रागुदितवाक्यैरात्मबोधेन्द्रादिनिरूपणैश्च प्रतिपादितमिति। तदत्र निर्णये प्रामाणिकाः प्रपञ्चवृत्तान्तविमर्शनशीलाः पण्डिता एव शरणीकरणीया इत्यलम्। इदं च श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदाङ्कितश्रीमज्जगद्गुरुश्रीकामकोटिपीठाधीश्वरश्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणकरुणालोकप्रोत्साहितैः सप्रयत्नमान्तं सुसंशोध्य प्रकटितमिति प्रमोमुदीतितमां प्रेक्षावतां मन इति सर्वं शिवम्॥

अस्य च मातृकाः पञ्चषाः परिशोधनार्थमार्जिताः यासु तिस्र एव समग्राः अन्यास्तु असमग्राः। तत्र **क**—चिह्नितं कडप्पाडिस्त्रिक्ट प्रोथत्तूर. डि- वेंकटाचलशास्त्रिणां अन्तिकादागतमतिशुद्धं अधितालपत्रमान्ध्रयां अतिरमणीयलेखालिखितं द्वितीयतृतीयाध्यायमात्रम्। **ख**—चिह्नितं श्रीस्वयंप्रकाशानन्दतीर्थसंगृहीतात् गौरीमायूरपरिसरगतारयंपुरस्थापितात् पुस्तकालयादाहृतं शुद्धं सुविशदहस्तलेखञ्च ग्रन्थलिप्यां तालपत्रे लिखितं समग्रम्। **ग**—चिह्नितं कुंभघोणपरिसरवर्तिश्रीवटारण्यस्थलस्थापितात् पुस्तकालयादानीतं अतिविशदहस्तलेखं अनुकाकलं ग्रन्थलिप्यामसमग्रञ्च। **घ**— चिह्नितं सुप्रसिद्धषड्दर्शनीपारदृश्वनां महामहोपाध्यायश्रीत्यागराजमखिराजानामालयादानीतं आदिमाध्यायप्रथमपादान्तं अधितालपत्रमतिविशदग्रन्थलिप्यां लिखितमसमग्रम्। **ङ**—चिह्नितं अतिसमृद्धसुप्रसिद्धशेङ्गालिपुरवास्तव्यानां कर्मठकुलतिलकश्रीवैद्यनाथदीक्षितानां आश्रमादुपाहृतं द्वितीयाध्यायमात्रमधितालपत्रं ग्रन्थलिप्यां लिखितमसमग्रञ्च। **च**—चिह्नितं श्रीपरमहंसपरिव्राजकश्रीदक्षिणामूर्तिश्रीचरणेभ्यः वाराणसीनगरादासादितं चतुर्थाध्यायमात्रं अधिकाकल-अलिखितं ग्रन्थलिप्यामसमग्रञ्च। इमाश्च सार्धमेतन्नगरनिवासिभट्टश्रीनारायणीयसदनस्थितविद्यामन्दिराख्यविद्याकोशस्थितप्राचीनान्ध्रमातृकासाहाय्येन च सर्वतस्सुसंशोधितपाठाः प्रायश ऐकरूप्यमेव पाठेषु प्रतिपन्ना इति **ख**—चिह्नितपुस्तकपाठरीत्यैव प्रकटितमखिलमिति विदां कुर्वन्तु विद्वांसः॥

ॐ

# ॥ अध्यायचतुष्टयार्थनिरूपणम् ॥

| प्रतिपाद्यविषयाः | अध्यायसङ्ख्या |
|---|---|
| सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः, | १ |
| साङ्ख्ययोगकाणादादिस्मृतिभिस्साङ्ख्यादिप्रयुक्ततर्कैः श्रुत्यन्तरैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, | २ |
| मोक्षसाधनानां वैराग्यत्वंतत्पदार्थशोधनब्रह्मोपासनयज्ञशमदमश्रवणमननादीनां निरूपणम्, | ३ |
| ब्रह्मसाक्षात्कारवतां पुण्यपापनिवृत्तिलक्षणमुक्तेः, म्रियमाणस्य उत्क्रान्तिप्रदर्शनस्य, सगुणब्रह्मविदः उत्तरमार्गाभिगमनस्य, निर्गुणब्रह्मविदः विदेहकैवल्यप्राप्तेः, सगुणब्रह्मविदः ब्रह्मलोकास्थितेश्च निरूपणम्, | ४ |

## ॥ ब्रह्मसूत्रीयषोडशपादार्थनिरूपणम् ॥

| प्रतिपाद्यविषयाः | अध्यायाङ्काः | पादाङ्काः |
|---|---|---|
| सुस्पष्टब्रह्मबोधकश्रुतिवाक्यानां समन्वयः, | १ | १ |
| उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | २ |
| ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | ३ |
| अव्यक्तादिसन्दिग्धपदमात्राणां समन्वयः, | १ | ४ |
| साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, | २ | १ |
| साङ्ख्यादिमतानां दुष्टत्वनिरूपणम्, | २ | २ |
| पूर्वभागेण पञ्चमहाभूतश्रुतिनाम्, उत्तरभागेण च जीवश्रुतीनां परस्परविरोधपरिहारः, | २ | ३ |
| लिङ्गशरीरश्रुतीनां विरोधपरिहारः, | २ | ४ |
| जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणम्, | ३ | १ |
| पूर्वभागेण त्वंपदार्थस्य उत्तरभागेण तत्पदार्थस्य च शोधनम् | ३ | २ |

## ॥ समन्वयाध्यायाख्यप्रथमाध्यायस्य प्रथमपादे ॥

## ॥ समन्वयाध्यायाख्यप्रथमाध्यायस्य द्वितीयपादे ॥

## समन्वयाध्यायाख्यप्रथमाध्यायस्य चतुर्थपादे ।



इति प्रथमाध्यायः ।

# अविरोधाध्यायाख्यद्वितीयाध्यायस्य प्रथमपादे ।

## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य द्वितीयपादे ॥



## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य तृतीयपादे ॥

## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य चतुर्थपादे ॥

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ५५९ | (प्राणोत्पत्त्यधिकरणे) इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वम्, | १—४ | १ |
| ५६२ | (सप्तगत्यधिकरणे) इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वम्, | ५—६ | २ |
| ५६५ | (प्राणाणुत्वाधिकरणे) साङ्ख्यसम्मतेन्द्रियसर्वगत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनम्, | ७ | ३ |
| ५६६ | (प्राणश्रैष्ठ्याधिकरणे) प्राणस्य अनादित्वखण्डनपूर्वकं तदुत्पत्तिसाधनम्, | ८ | ४ |
| ५६६ | (वायुक्रियाधिकरणे) प्राणवायोः स्वतन्त्रताकथनम्, | ९—१२ | ५ |
| ५६८ | (मुख्यप्राणाणुत्वाधिकरणे) प्राणस्य समष्टिरूपेणाधिदैविकी विभुता, आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, | १३ | ६ |
| ५६९ | (ज्योतिराद्यधिष्ठानाधिकरणे) इन्द्रियगणस्य देवताविशेषाधीनत्वकथनम्, | १४—१६ | ७ |
| ५७० | (इन्द्रियाधिकरणे) विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वम्, | १७—१९ | ८ |
| ५७२ | (संज्ञामूर्तिक्लृप्त्यधिकरणे) सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्त्वात् तस्यैव तन्निर्मातृत्वम्, | २०—२२ | ९ |

इति द्वितीयाध्यायः ।

---

## साधनाध्यायाख्यतृतीयाध्यायस्य प्रथमपादे ॥

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ५७८ | (तदन्तरप्रतिपत्त्यधिकरणे) जीवस्य भाविशरीरबीजरूपसूक्ष्मभूतवेष्टितस्यैवेतोगमनम्, | १—७ | १ |
| ५८८ | (कृतात्ययाधिकरणे) कर्मान्तरैः सानुशयस्य जीवस्य लोकान्तरादवरोहणम्, | ८—११ | |

## साधनाध्यायाख्यतृतीयाध्यायस्य द्वितीयपादे ॥

## ॥ साधनाध्यायाख्यतृतीयाध्यायस्य तृतीयपादे ॥

॥ साधनाध्यायाख्यतृतीयाध्यायस्य चतुर्थपादे ॥

इति तृतीयाध्यायः ॥

---

## ॥ फलाध्यायाख्यचतुर्थाध्यायस्य प्रथमपादे ॥



---

## फलाध्यायाख्यचतुर्थाध्यायस्य द्वितीयपादे ।

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ७८९ | (मनोऽधिकरणे) मनसः प्राणे वृत्तिद्वारा प्रविलयः, | ३ | २ |
| ७८९ | (अध्यक्षाधिकरणे) प्राणस्य जीवे लयानन्तरं पुनर्भूतेषु लयः, | ४—६ | ३ |
| ७९२ | (आसृत्युपक्रमाधिकरणे) ज्ञान्यज्ञानिनोरुत्क्रान्तेरपि साम्यम, | ७ | ४ |
| ७९३ | (तदापीत्यधिकरणे) तेजःप्रभृतीनां परमात्मनि वृत्तिद्वारा लयः, | ८—११ | ५ |
| ७९५ | (प्रतिषेधाधिकरणे) देहादेव प्राणोत्क्रान्तेर्निषेधः, | १२—१४ | ६ |
| ७९८ | (परसंपत्त्यधिकरणे) तत्त्वज्ञानिनो वागादीनां परमात्मनि लयः, | १५ | ७ |
| ७९९ | (अविभागाधिकरणे) तत्त्वविदो वागादीनां निश्शेषेण परमात्मनि लयः, | १६ | ८ |
| ७९९ | (तदोकोऽग्राधिकरणे) उपासकस्योत्क्रान्तेर्विशेषवत्त्वम, | १७ | ९ |
| ८०१ | (रश्म्यधिकरणे) निशायामपि मृतानां रश्मिप्राप्तिः, | १८—१९ | १० |
| ८०१ | (अयनाधिकरणे) दक्षिणायनमृतस्यापि उपासकस्य ज्ञानफलप्राप्तिः, | २०—२१ | ११ |

## फलाध्यायाख्यचतुर्थाध्यायस्य तृतीयपादे ।

| | | | |
|---|---|---|---|
| ८०२ | (अर्चिरधिकरणे) अर्चिरादिकेनैव मार्गेण ब्रह्मलोकगमनम्, | १ | १ |
| ८०४ | (वाय्वधिकरणे) संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकयोः सन्निवेशयितव्यत्वम्, | २ | २ |
| ८०५ | (तटिदधिकरणे) विद्युत उपरिष्टात् वरुणादीनां सन्निवेशात् अर्चिरादिमार्गस्य व्यवस्थितत्वम्, | ३ | ३ |
| ८०६ | (आतिवाहिकाधिकरणे) अर्चिरादीनामातिवाहिकत्वम्, | ४—६ | ४ |
| ८०७ | (बादर्यधिकरणे) उत्तरमार्गेण कार्यब्रह्मगमनम्, | ७—१४ | ५ |

---

## फलाध्यायाख्यचतुर्थाध्यायस्य चतुर्थपादे ।



इति चतुर्थाध्यायः ।

इति ब्रह्मसूत्राधिकरणार्थसूचिका ।

—oO[:*:]Oo—

॥ श्रीः ॥

# ॥ अद्वैतमञ्जरी ॥

अथ

## ॥ ब्रह्मविद्याभरणम् ॥

वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥

शङ्कराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥

वेदान्तनिकुरुम्बेण तात्पर्येण प्रकाशितः ।
स्वात्मानन्दैकरस्येन कल्याणाय शिवोऽस्तु नः ॥

स्वानन्दाम्बुधिमग्नचित्तमनिशं निर्धूतमायामलं
कारुण्यार्जवशान्तिसौरभमम्ं देव्या गिरां सेवितम् ।
रामानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा
चित्ते सङ्कलयामि वेदशिरसस्तत्त्वावबोधाप्तये ॥

## ॥ अथातो ब्रह्मजिज्ञासा ॥

अनेन सूत्रेण साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्म जिज्ञासितव्यमिति प्रतिपाद्यते । एतत्सूत्रावतारिकारूपेण ‘युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन भाष्येण कर्तृत्वादिबन्धस्याक्षेपसमाधानाभ्यां मिथ्यात्वं प्रतिपाद्यते । कथमिदमुपपद्यते । पदविधया वा वाक्यविधया वा यस्सूत्रेणार्थस्संगृह्यते, स एव भाष्ये विशदतया प्रतिपादनीयः । बन्धमिथ्यात्वं तु सूत्रेण न कथञ्चिदपि संगृहीतं, संगृहीतमिति वदामः । सूत्रे ब्रह्मपदं विषयनिर्देशकम् । तेन च प्रत्यगभिन्नं ब्रह्मैव विवक्षितम् । यथा चैतत्तथोत्तरत्र स्पष्टं भविष्यति । न च बन्धमिथ्यात्वं विना जीवब्रह्मैक्यं सम्भवति । विरुद्धकर्तृत्वाकर्तृत्वध-

र्माक्रान्तयोरैक्यायोग्यत्वात् । कर्तृत्वमिथ्यात्वे तु न तदकर्तृत्वेन विरुध्यते । विषमसत्ताकयोर्भावाभावयोश्शुक्तौ रजतत्वतदभावयोरिव समावेशसम्भवात् । अवच्छेदकभेदेन संयोगतदभावयोरिव कर्तृत्वतदभावयोरपि समावेशोपपत्तौ मिथ्यात्वमेव किमर्थं तदुपपादनाय प्रतिपाद्यत इति तु न शङ्कनीयम् । प्रत्यगभिन्नब्रह्मप्रकरणान्तर्गतैः 'असङ्गो ह्ययं पुरुषः असङ्गो न हि सज्जते' 'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' 'स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे'ति 'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः' ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।' इत्यादिभिश्श्रुतिस्मृतिवाक्यैर्जीवत्वावच्छेदेनापि सङ्गाभावं, तस्य चान्योपाधिकस्यात्मनि मिथ्यात्वमिति प्रतिपादयद्भिःप्रकारान्तरेण तदुपपादनस्य निराकृतत्वात् । अतः प्रत्यगभिन्नब्रह्मरूपविषयोपपादकतया सूत्रसूचितं बन्धमिथ्यात्वमिति भाष्यमपि तत्प्रतिपादकं तेन सङ्गतम् । अध्यासभाष्येण चेत्थमधिकरणं सूच्यते । 'वेदान्तमीमांसाशास्त्रमारम्भणीयं न वे'ति विषयसम्भवासम्भवाभ्यां संशये पूर्वपक्षः नारम्भणीयमिति । विरुद्धधर्माक्रान्तयोरैक्यायोगेन जीवब्रह्मैक्यं विषयो न सम्भवति । न 'चाहं कर्ताऽहं भोक्ते'ति प्रतीयमानो जीव एव विषयः । तस्य प्रत्यक्षसिद्धस्य तेनैव रूपेण विचारविषयत्वासम्भवात् । न च विभुत्वनित्यत्वादिना जीवरूपस्य सर्वज्ञत्वादिना ईश्वररूपस्य वियदादिसर्गप्रकारस्योपासनाभेदाभेदादिप्रकारस्य च प्रमाणान्तरानधिगतस्य विचारविषयत्वं मुमुक्षूणामुपपद्यते । अद्वैतिमते प्रत्यगभिन्नब्रह्मज्ञानस्यैव मोक्षसाधनतया तदुपयोगितयैवान्यस्य सर्वस्य विचारणीयत्वेन तदसम्भवे इतरविचारस्य व्यर्थतापत्तेः । अथ 'अहं करोमि भुञ्जे' इत्यादिप्रत्यक्षस्य 'स्थूलोऽहं कृशोऽह'मित्यादिविसंवादिप्रत्यक्षसजातीयस्य निरस्तसमस्तदोषाशङ्कतात्पर्योपेतागमविरुद्धस्य 'उपलभ्याप्सु चेत् गन्धं केचिद्ब्रूयुरनैपुणाः । पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥' इति वचनविरुद्धस्य 'सुरभि जलं सुरभिः पवन'इति प्रत्यक्षस्य पार्थिवावयवसंसर्गेणेवान्तःकरणतादात्म्येनौपाधिकधर्मावगाहितया भ्रमत्वोपपत्तौ स्वाभाविकासङ्गत्वप्रतिपादकागमबाधितानां कर्तृत्वादीनां न ब्रह्मात्मैक्यविरोधित्वमिति विषयसम्भवेन विचारारम्भानुपपत्तिरिति चेन्न । प्रत्यक्षागमयोर्विरोधे हि प्रत्यक्षस्योपजीव्यतया तदनुसारेणागमस्यैव नयनमुचितम् । इतरथा वेदान्तार्थबोधस्यैवानुन्मेषप्रसङ्गात् । कर्तृत्वादीनामिव वर्णपदतत्प्रत्यक्षादीनामपि बाध्यत्वापत्त्या शुक्तिरजतादिवत् कार्याक्षमत्वापत्तेः । न

च तेषां तात्त्विकत्वापहारेऽपि व्यावहारिकत्वं नापह्रियते । तावन्मात्रेण च कार्यक्षमत्वमुपपन्नमिति नोपजीव्यविरोधः । उपजीव्यस्य व्यावहारिकत्वस्यानुपमर्दात् उपमर्दितस्य च तात्त्विकत्वस्यानुपजीव्यत्वादिति वाच्यम् । पदार्थेषु तात्त्विकत्वव्यावहारिकत्वविभागस्य श्रौतबाधनिर्धारणात् प्रागसिद्धेः । तन्निर्धारणे हि सति बाधितानां पारमार्थिकत्वानुपपत्त्या प्रातिभासिकत्वेऽर्थक्रियाकारित्वानुपपत्त्या च शुक्तिरजतवैलक्षण्येन व्यावहारिकत्वं नाम धर्मान्तरमर्थक्रियाप्रयोजकं स्वीकर्तव्यम् । तथा च प्राप्तमितरेतराश्रयत्वम् । बाधे सति व्यावहारिकत्वार्थक्रियाकारित्वयोः प्रयोज्यप्रयोजकत्वम् । तत्त्वे चोपजीव्यविरोधपरिहारेण बाध इति । न चोपक्रमोपसंहारैकरूप्यादिलिङ्गैः तात्पर्यस्य निष्प्रपञ्चप्रत्यगभिन्नब्रह्मविषयत्वनिर्धारणेन तन्निर्वाहार्थं प्रत्यक्षस्यातत्त्वावेदकत्वसिद्धौ उक्तगत्या व्यावहारिकत्वं कल्प्यत इति साम्प्रतम् । उपजीव्यप्रमाणविरुद्धार्थे तात्पर्यकल्पनस्यैवानुन्मेषात् । अर्थान्तरतात्पर्यकत्वे उपक्रमादिसहितवाक्यस्वारस्यभङ्गापत्तिरिति चेत, इष्टत्वात् । तत्रापि प्रत्यक्षस्वारस्यभङ्ग आपन्नः । गृह्यमाणं ज्ञानं स्वतःप्रामाण्याभ्युपगमात् प्रमाणत्वेनैव गृह्यते । तथा च प्रथमोपस्थितप्रामाण्यबाधोऽपि । न च चरमोपस्थितोपजीवकस्वारस्यानुसारेण प्रथमोपस्थितोपजीव्यस्वारस्यबाधो न्याय्यः । अपि तु आगमस्वारस्यबाध एव । उपजीवकगतत्वाच्चरमोपस्थितत्वाच्च । अत एव 'आदित्यो यूपः यजमानः प्रस्तर'इत्यत्र स्वारसिकार्थस्य प्रत्यक्षबाधेन तेजस्वित्वक्रतुनिर्वर्तकत्वगुणमादाय सामानाधिकरण्यमिति स्वीक्रियते । स्तावकवाक्येषु तथा स्वीकारेऽप्यज्ञातार्थज्ञापकेषु न प्रत्यक्षानुसार इति चेन्न । 'सोमेन यजेत'कृष्णलं श्रपयेत्' इत्यत्र प्रत्यक्षविरोधपरिहाराय मत्वर्थलक्षणोष्णीकरणपर्यन्तत्वयोस्स्वीकारात् भवद्भिरपि तत्त्वमस्यादौ भागत्यागलक्षणायास्तदर्थमेव स्वीकाराच्च । अपि च प्रत्यक्षप्रामाण्यज्ञानं निरवकाशम् । श्रुतिस्तु लाक्षणिकार्थेऽपि सावकाशा । अतः 'सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेनापि प्रत्यक्षप्रामाण्यज्ञानमेव बलीयः । न च व्यावहारिकप्रामाण्ये सावकाशम् । एतत्परिभाषाया अद्वैतिपरिकल्पितायाः वस्तुव्यवस्थापकत्वासम्भवात् । ननु, 'स्थूलोऽहं कृशोऽहं मनुष्योऽहमन्धोऽहं बधिरोऽहं मूकोऽह'मिति शरीरेन्द्रियधर्माणां भासमानानामात्मनि तत्तद्धर्म्यध्यासपूर्वकत्वं वक्तव्यम् । अतो विसंवादिस्थूलोऽहमित्यादिप्रत्यक्षजातीयस्य करोमीत्यादेरप्यन्तःकरणतादात्म्याध्यासपूर्वकं तद्धर्मावगाहित्वमेवोचितम् । एवं च सम्भाविताप्रामाण्येन कथं तद्विपरीतायाश्श्रुतेरन्यथानयनम् । किं त

'सुरभि जल'मिति प्रत्यक्षस्यैवागमेन तद्बाध एवोचितः । उपजीव्यत्वप्रथमोपस्थितिनिरवकाशत्वानामसम्भावितप्रामाण्ययोस्सन्निपात एव प्राबल्यप्रयोजकत्वम् । 'आदित्यो यूप' इत्यादौ चान्यथानयने गत्यन्तराभावेनानुसरणीयमिति चेन्न । स्थूलोऽहमित्येव रूपेण शरीरात्माभेदावगाहिज्ञानस्यैवासम्प्रतिपत्तेः आत्मशरीरयोरभेदज्ञानस्य तद्भेदाग्रहजन्यत्वेन तद्भेदग्रहे सत्यसम्भवात आत्मशरीरयोर्भेदग्रहः प्रसिद्ध एव मम शरीरमित्यभिज्ञारूपः । प्रत्यभिज्ञयापि तद्भेदो गृह्यते । 'य एवाहं बाल्ये पितरावन्वभूवं स एव स्थाविरे प्रणप्तॄननुभवा' मीति । न च शरीरमेवात्र प्रत्यभिज्ञायत इति वाच्यम् । प्रत्यभिज्ञाया अवस्थाद्वयानुयायिवस्तुविषयत्वात् । शरीरयोश्च परिमाणभेदेन भिन्नतयानुयायित्वासम्भवात् अवयवोपचयापचयाभ्यां स्थौल्यकार्श्यादिरूपः परिमाणभेदो वाच्यः । अवयवोपचये आगतैरवयवैः पूर्वसिद्धावयविनिवेशायोगैस्तत्सहायेनावयव्यन्तरमारभ्यते । अपचये तु अवयवविश्लेषेणासमवायिकारणसंयोगनाशात् पूर्वावयविनि नष्टे अवशिष्टैः खण्डोऽवयव्यारभ्यत इति शरीरयोर्भेदेन प्रत्यभिज्ञाविषयत्वासम्भवः । अतः प्रत्यभिज्ञाबलात् अनुयाय्यात्मा स्वीकर्तव्यः । शरीरं च नानुयायि । अतः प्रत्यभिज्ञाबलादपि तद्भेदोऽवगतः । स्वप्ने च देवशरीरमात्मानमनुभूय जाग्रति मनुष्यशरीरं पश्यन्नपि प्रत्यभिजानाति 'स्वप्ने य एवाहं देवशरीरमात्मानमन्वभूवं, स एवाहं मनुष्यशरीरमात्मानमनुभवामीति । तत्र च देहयोर्भेदः स्पष्टमनुभूयते । न च तावतात्मनोऽवस्थाद्वये ऐक्यं शरीरयोर्भेद इत्येतावत् सिध्यति तत्रापि परिमाणभेदात् द्रव्यभेद आनुमानिकः । स्वप्नजाग्रच्छरीरयोस्तु भेदः प्रत्यक्षः । ताभ्यामात्मनो भेदस्त्वानुमानिक एव । येषु व्यावर्तमानेषु यदनुवर्तते, तत्तेभ्यो भिन्नम् । यथा कुसुमेभ्यः सूत्रम् । तथाचायं तस्मात्तथेति आनुमानिकभेदग्रहश्च नापरोक्षभ्रमविरोधीति वाच्यम् । भेदकसाक्षात्कारस्य भेदसाक्षात्कारनियतत्वं शुक्तित्वसाक्षात्कारेण रजतभेदसाक्षात्करात् तावत स्वीकर्तव्यम् । प्रकृते द्वाभ्यां भेदकस्यैकत्वस्यात्मनि साक्षात्कारात् भेदसाक्षात्कारोऽप्यवश्यंभावी । एवं बाह्यान्तःकरणाध्यासोऽपि न सम्भवति । तत्रापि 'मम चक्षुः, मम श्रोत्रं, मम मन' इति भेदग्रहस्य सत्त्वात । कथं च बहुत्वेनावधृतानां देहेन्द्रियान्तःकरणानां प्रत्यभिज्ञावधृतैकत्वे आत्मन्यध्यासः । बहुत्वैकत्वलक्षणवैलक्षण्यग्रहस्याभेदभ्रमपरिपन्थित्वात् । तथा च 'मनुष्योऽह'मित्याद्यभेदग्रहो न सम्भवति । येन तद्दृष्टान्तेन करोमीत्यादेरप्रामाण्यशङ्काकलङ्कितया श्रुतितो दौर्बल्यं शंक्येत । तत्सिद्धमुपजीव्यप्रत्यक्षस्वारस्यानुसारेण श्रुतिस्वारस्यभङ्ग इति । न चैवं 'सुरभि

जलमित्यादिप्रत्यक्षस्याप्यागमेन बाधो न स्यादिति शंक्यम् । जले हि सौरभाश्रयचन्दनादिसम्पर्कः, पवने च पुष्पवाटिकातो निर्गत एव तथा । प्रत्यय इति तत्रापि सौरभाश्रयपुष्पावयवसम्पर्कस्सम्प्रतिपन्नः । तत्राकुशलानां सौरभाससर्गाग्रहसम्भवात् जलादौ तदारोपस्सम्भवतीति युक्तं स्मृतेस्तत्र विवेचकत्वम् । न चैवं कर्तृत्वाद्याश्रयभूतं किंचिद्द्रव्यं संप्रतिपन्नम् । येन तदुपाधिकः कर्तृत्वादिप्रत्ययस्स्यादात्मनि भ्रमरूपः । ननु मनुष्योऽहमित्यादिप्रत्ययाभावे कथं सामानाधिकरण्यव्यवहारश्शब्दाभिलापरूपः । मनुष्योऽहमिति व्यवहर्तव्यज्ञानाभावे व्यवहारानुपपत्तेः । न च नायं व्यवहारस्सामानाधिकरण्यावगाही । किं तु शरीरसम्बन्धावगाही । अर्शआद्यच्प्रत्ययसम्भवात् अन्धादिशब्दानां विकलाङ्गवाचिनां गणे पाठात् । मनुष्यादिशब्दानां तु आकृतिगणत्वात सङ्ग्रहो भविष्यति । अतश्च—'तदस्यास्त्यस्मिन्निति मतुबि'तिविहितमत्वर्थीयतया सम्बन्धवाचकत्वमुपपन्नमिति वाच्यम् । 'गच्छामि कृश्यामि कुणिरह' मित्यादिव्यवहाराणां तथा निर्वाहासम्भवात् । तत्राध्यासस्यागत्या आश्रयणे 'अन्धोऽह' मित्यत्रापि तथैवास्तु । न च तथा सति विकलाङ्गवाचिनां गणपाठो व्यर्थस्स्यादितिवाच्यम् । स्वरार्थतया पाठोपपत्तेः । वर्णवाचिनां हि नीलादिशब्दानां मतुल्लोपेनैव सम्बन्धबोधोपपत्तौ गणपाठस्य स्वर एव प्रयोजनमित्यङ्गीकरणीयम् । तत्तुल्यमन्धादिशब्देष्वपि । न च शुक्लैः प्रासादैर्धवले नगरे 'शुक्यं नगर' मिति प्रयोगश्शुक्लगुणयुक्तप्रासादवैशिष्ट्यबोधक इति सम्बन्धद्वयबोधनाय प्रत्ययद्वयमावश्यकमिति वाच्यम् । तत्र सन्निवेशविशेषविशिष्टा गृहा एव नगरामित्यभ्युपगमे साक्षादेव सम्बन्धश्शुक्लत्वस्येति न प्रत्ययद्वयापेक्षा । गृहाधिकरणस्य स्थलस्यैव नगरत्वे तु परम्परासम्बधस्यैकेनैव बोधनात् । न प्रत्ययद्वयापेक्षा । अन्यथा 'अश्वेतनगरमपुष्पयद्वन' मित्यादौ का गतिः । अतस्सामानाधिकरण्यव्यवहारोपपादकतया देहेन्द्रियाद्यध्यासः स्वीकर्तव्य इति चेन्न । भेदग्रहेणाध्यासानुपपत्तौ व्यवहारस्य गौणत्वोपपत्तेः । गृहीतभेदयोर्हि सिंहमाणवकयोः 'सिंहो माणवक' इति व्यवहारो गौण इति सर्वसम्प्रतिपन्नम् । अध्यासवादिनापि हि कायव्यूहवतां योगिनामपरोक्षीकृताद्वैतात्मतत्त्वानां जीवन्मुक्तानां च सः व्यवहारो गौणोऽवश्यमङ्गीकर्तव्यः । तस्मात् मनुष्योहऽमिति दृष्टान्तेनाप्रामाण्यशङ्काया अनुन्मेषान्निर्णीतप्रामाण्येनोपजीव्यतया प्रबलेन प्रत्यक्षेणागमस्याद्वैतात्मावबोधकत्वविरोधादर्थान्तरपरत्वमेव स्वीकर्तव्यमिति विषयाभावः । विषयाभावे च प्रयोजनमपि न सम्भवति । विषयप्रमा हि साक्षात्प्रयोजनम् । न चासम्भाविते

विषये प्रमा सम्भवति । परमप्रयोजनं च प्रत्यगभिन्नब्रह्मविषयाज्ञाननिवृत्तिपूर्वकं जीवस्य नित्यसिद्धब्रह्मात्मनावस्थानम् । न च तदपि सम्भवति । प्रमाणाभावेन ब्रह्मात्मताया एवासम्भवात् । श्रुतेरन्यपरत्वस्य दर्शितत्वात् प्रमाणान्तरस्य चासम्भवात् । अतो विषयप्रयोजनयोरभावेन शास्त्रं नारम्भणीयमित्यभिप्रेत्य विषयप्रयोजननिर्णयोपयोगिनमध्यासमाक्षिप्य परिहरति—'युष्मदित्यादिना नैसर्गिकोऽयं लोकव्यवहार' इत्यन्तेन भगवान् भाष्यकारः । अत्र युष्मत्प्रत्ययगोचरत्वं युष्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं विषयस्य शरीरादेः । अस्मत्प्रत्ययगोचरत्वमस्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं विषयिण आत्मनः । अनेन च विरुद्धप्रवृत्तिनिमित्तकशब्दप्रतिपाद्यत्वेन भेदग्रहो दर्शितः । यद्यपि इदंशब्दोल्लेखिप्रत्ययगोचरत्वमेव जडस्य वक्तुमुचितम् । सम्बोध्यचेतनस्यैव हि युष्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं, तथापि इदंशब्दोल्लेखिप्रत्ययगोचर एव स्वभिन्नत्वगुणयोगादत्यन्तविरोधख्यापनाय तथोपचरितम् । इदमस्मच्छब्दयोर्हि 'इमे वयं अयमहमस्मी'ति लौकिकवैदिकसामानाधिकरण्यव्यवहारप्राचुर्यात्तथाविरोधो न स्फुरति । युष्मदस्मच्छब्दयोस्तु प्रचुरसामानाधिकरण्यप्रयोगाभावात् स्फुरति विरोधः । अनेन च 'ममेदं शरीरमि' तिप्रतीतिर्दर्शिता । तमःप्रकाशवत् विरुद्धस्वभावयोः तथावगतयोरिति यावत् । भेदाग्रहाभावसिद्ध्यर्थं विरुद्धस्वभावग्रहणमेव प्रतिपादनीयमिति तथा व्याख्यातम् । विरुद्धस्वभावत्वं च परस्परानात्मत्वम् । इतरेतरभावानुपपत्तौ सिद्धायां तादात्म्यप्रतीत्यनुपपत्तौ सिद्धायाम् । एवं च यत् सिद्धान्तिनोच्यते शरीरात्माभेदभ्रमवत् कर्त्रात्माभेदभ्रमोऽपि सम्भवतीति, तत् निरस्तम् । 'ममेदं शरीरमि'त्यादि भेदग्रहे जाग्रति शरीरात्मनोरभेदभ्रम एव न सम्भवति । तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः इतरेतरभावो धर्माणां व्यत्यासः, तदध्यासानुपपत्तिःधर्म्यभेदाध्यासाभावादेव धर्माध्यासाभावे अर्थसिद्धे पुनः प्रतिपादनं शङ्काविशेषनिराकरणार्थम् । ननु, मास्तु धर्म्यभेदाध्यासः । तदभावेऽपि जपाकुसुमाभेदाध्यासरहिते स्फटिके जपाकुसुमारुणिम्न इव शरीरे आत्मधर्मस्य चैतन्यादेरध्यासः किं न स्यात । न च तदभेदाध्यासस्तत्प्रतिबिम्बो वा तदगृहीतभेदस्तद्धर्माध्यासप्रयोजकः । स्फटिके चास्ति जपाकुसुमप्रतिबिम्बः स्फटिकागृहीतभेदः । शरीरेचात्माभेदाध्यासनिराकरणादगृहीतभेदश्शरीरे आत्मप्रतिबिम्बो वक्तव्यः । सोऽपि न सम्भवति । नीरूपस्य आत्मनः प्रतिबिम्बासम्भवात् । रूपवत एव प्रतिबिम्ब इति हि नियम इति वाच्यम् । नीरूपस्यापि गगनस्य जले प्रतिबिम्बदर्शनेन नियमभङ्गात् । अथ जले न गगनप्रतिबिम्बः । अपि त

आलोकप्रतिबिम्ब एव । गगनप्रतिबिम्ब इति भ्रममात्रम् । अतो न नियमभङ्गः । ननु, नायं नियमस्साधुः । प्रतीत्यनुसारी हि नियमः कल्पनीयः । न त्वप्रयोजकनियमानुसारेण गगनप्रतिबिम्बप्रतीतेरप्रामाण्यं कल्पयितुं युक्तम् । अन्यथा रूपवत एव चाक्षुषत्वमिति स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्येति च नियमं परिकल्प्य 'विशालं नभः' नीलं नभः 'नीलं सलिलमि'त्यादिप्रतीतीनामप्यन्यविषयत्वपरिकल्पनापत्तेः। यदि च रूपवदेव चाक्षुषमिति स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्येति न नियमः । किं तु स्वगतेनान्यगतेनारोपितेन वा रूपेण सम्बद्धस्य चाक्षुषत्वम् । तादृशरूपचाक्षुषविषयत्वमेव द्रव्यस्येत्युच्येत, तदा रूपवत एव प्रतिबिम्ब इत्यपि नियमो मास्तु । यथाकथञ्चिद्रूपोपहितस्य प्रतिबिम्ब इत्येवास्तु । तथा चाकाशस्याप्यालोकरूपोपधानेनारोपितरूपोपधानेन च प्रतिबिम्बसम्भवे किमिति तत्प्रतीतेर्भ्रमत्वं कल्प्यते । एवमात्मनोऽपि शरीररूपोपधानेन प्रतिबिम्बोऽस्तु । दृश्यते हि दर्पणादिगतनैल्याद्युपधानेनापि मुखादिप्रतिबिम्ब इति चेन्न । येनापि हि गगनप्रतिबिम्ब इष्यते, तेनाप्यालोकप्रतिबिम्बस्तावदभ्युपगन्तव्यः । अन्यथा वैशाल्यप्रतीत्यनुपपत्तेः । यत्र रूपं प्रतिभासते, तत्रैव परिमाणभानमिति नियमात् । एवं चालोकप्रतिबिम्बे भासमानस्य वैशाल्यस्य गगनप्रतिबिम्बगततया भानमिति भ्रमोऽपि स्वीकार्यः । तद्वरमालोकस्यैव प्रतिबिम्बोऽस्तु । तत्रैव गगनप्रतिबिम्बत्वभ्रममात्रम् । तलमलिनत्वादिकं चालोकप्रतिबिम्ब एवाध्यस्यताम् । कल्पनालाघवात् । एवं च रूपवत एव प्रतिबिम्ब इति न नियमभङ्गः । रूपोपहितस्य प्रतिबिम्ब इति कल्पने त्वनन्तरसम्प्रतिपन्न आकाशप्रतिबिम्ब एव मूलम् । स तु न सम्भवति । गौरवपराहतत्वादित्युक्तम् । बहिस्त्वाकाशस्य सर्वसम्प्रतिपन्नत्वात् 'विशालं नभः नीलं नभः' इति प्रतीतेर्यथार्थत्वेन गौरवमिति तदुपपत्तये रूपोपहितस्य चाक्षुषत्वमित्येव स्वीक्रियते । तथा च नीरूपस्यात्मनो न प्रतिबिम्बस्सम्भवति । एवमपि गगनप्रतिबिम्बत्वभ्रमाश्रयः यथा जले आलोकोऽस्ति । तस्मिंश्च गगनधर्मस्य तलमलिनत्वस्यारोपे स एव बाह्यगगनसदृशः तलमलिनत्वादिविशिष्टगगनत्वप्रकारकप्रत्ययविषयो भवति । तादृशालोकेन कूपस्य भेदाग्रहशालिनां च कूपे तलमलिनत्वादिकमित्यपि भ्रमो भवति । एवं शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति चेत् तत्रात्मधर्मस्य चैतन्यादेरध्यासस्सम्भवेत् । तस्य चेतनत्वेनावगम्यमानस्य शरीरात् भेदाग्रहे सति तत्रापि तद्धर्माध्यासस्सम्भवेत् । न तु शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति । एवं चाभेदाध्यासाभावेऽपि जपाकुसुमारुणिम्न इवात्मधर्मस्य चैतन्यादेरध्यासोऽस्त्विति क-

थमुच्यत इति चेन्न । रूपोपधानेन प्रतिबिम्ब इति पक्षे जलान्तर्गततया अपूर्वो गगनप्रतिबिम्बः कल्पनीय इति बाह्य एवाकाशे प्रतिहतैर्नायनरश्मिभिः संसृष्टे जलान्तर्गतत्वमारोप्यत इतिवदन्तं प्रतिवक्तुं न शक्यते । बाह्यगगने चालोकरूपोपहिते सर्वसम्प्रतिपन्नतया भवताप्यभ्युपगता वैशाल्यप्रतीतिर्भ्रम इत्यपि वक्तुं न शक्यत इति कथं गौरवम् । प्रत्युत भवत एव गौरवम् । तलमलिनत्वस्य गगनगततया सर्वप्रतीतिसिद्धस्य प्रतिबिम्बप्रत्यये आलोकगततया आरोप्यस्य स्वीकारात् । यन्मते चापूर्व एव प्रतिबिम्बो जले उत्पद्यते । तत्रापि न वैशाल्यस्य गगनप्रतिबिम्बगततया भानं भ्रमः । आलोकरूपोपहितस्यैव प्रतिबिम्बाभ्युपगमात् । न च प्रतिबिम्बद्वयाभ्युपगमात् गौरवम् । येनापि ह्यालोकप्रतिबिम्ब एव गगनप्रतिबिम्ब इति स्वीक्रियते, तेनाप्यालोकप्रतिबिम्बाधिष्ठानो गगनप्रतिबिम्ब उत्पद्यत इति वक्तव्यम् । अनिर्वचनीयवादाभ्युपगमात् । तदस्तु जलाधिष्ठान एव । किमनया कुसृष्ट्या । अपि च गगनप्रतिबिम्बाभ्युपगमे बिम्बसदृशः प्रतिबिम्ब इति तलमलिनताप्रत्यये नापूर्वं किञ्चित् कल्पनीयम् । तदनभ्युपगमे त्वालोकप्रतिबिम्बे अक्लृप्तस्तदध्यासः कल्पनीय इति विपरीतं गौरवम् । तस्मान्नीरूपस्याप्याकाशस्य रूपोपधानेनेवात्मनोऽपि रूपोपधानेन प्रतिबिम्बे न कदाचिदनुपपत्तिः । तथा च स्फटिके जपाकुसुमारुणिम्न इव धर्म्यध्यासाभावेऽपि शरीरे आत्मधर्मस्य चैतन्यादेरध्यासः किं न स्यादिति शङ्का । तन्निराकरणं च तद्धर्माणामप्रत्ययेनेत्थं विवक्षितम् । वेदान्तिनो हि 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि'तिसूत्रे वक्ष्यमाणरीत्यान्तःकरणाद्यैक्याध्यासमापन्नस्य तद्धर्मानुविधायित्वमेव तत्र प्रतिबिम्बितत्वमिति गतम् । न तु मुख्यं सूर्यप्रतिबिम्बादिवत् । तदुपपत्तिश्च तत्रैव स्फुटीभविष्यति । अन्तःकरणाद्यैक्याध्यासश्च न सम्भवतीत्युक्तम् । अतो न तद्धर्माध्यासः । धर्म्यभेदाध्यासाभावेऽपि नीलं सलिलमिति सलिले नैल्याध्यासो दृश्यते । एवं प्रकृते किं न स्यादिति शङ्कायां—**सुतरामिति** । अन्यत्र यथा कथञ्चिदस्तु नाम । परस्परधर्म्यभेदाध्यासपूर्वक एव चिज्जडयोः परस्परधर्माध्यास इति वदता सिद्धान्तिना तथा शङ्कितुमेव न शक्यमिति भावः । एवं देहात्माध्यासरूपं दृष्टान्तं निरस्य तेन सम्भावनीयं बुद्ध्यात्मनोरैक्याध्यासमपि निरस्यति । **इत्यतोऽस्मत्प्रत्ययगोचर इति** । अत्र विषयशब्दोऽन्तःकरणप्रतिपादकः । **तद्विपर्ययेणेति** । उत्तरत्राध्यास इत्यनेन सम्बध्यते । एकत्रात्माधिष्ठानं, अन्यत्र जडोऽधिष्ठानमित्यध्यासयोर्वैपरीत्यम् । **मिथ्येतिभवितुं युक्तमिति** । न सम्भवतीति यावत् । तथापीत्यादेः

परिहारस्यायमाशयः—श्रुतितदन्यप्रमाणविरोधे हि श्रुतेरेव प्राबल्यं वैदिकैरभ्युपगन्तव्यमित्युत्सर्गः । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।' इति स्मृतेः । न चेदं वचनं आगमैकसमधिगम्यस्वर्गयागादिसाध्यसाधनभावादौ तत्प्राबल्यप्रतिपादनपरम् । न तु प्रत्यक्षसाधारणात्मविषय इति वाच्यम् । तथासङ्कोचकल्पने प्रमाणाभावात् एकविषयानेकविरुद्धप्रमाणसन्निपाते निर्णयोपयोगितया प्राबल्यप्रतिपादनेनापेक्षितार्थसमर्पकत्वे सम्भवति विरुद्धप्रमाणान्तराप्रसक्त्याप्यर्थत्वापादकस्यागमैकसमधिगम्यविषयकत्वस्य कल्पयितुमनुचितत्वाच्च । उपजीव्यप्राबल्यन्यायश्च न प्रकृते सम्भवति । सामान्यन्यायस्य 'उपजीव्योपजीवकयोरेवोपदेशानुपदेशत्वे विपरीतं बलाबलमि'ति विशेषन्यायेन बाधात् । न चाप्रयोजकत्वम् । अनुपदेशस्य दुष्टत्वसम्भवात् । स च दोषः क्वचिदप्रामाण्यशङ्काकलङ्कितत्वम् । क्वचिद्विलम्बितप्रवृत्त्यादिकम् । तद्यथा कुण्डपायिनामयने श्रुतस्य 'यो होता सोऽध्वर्युरि'ति वाक्यस्य विरुद्धार्थकयोर्होत्रध्वर्युशब्दयोरसामानाधिकरण्यनिर्वाहार्थं प्रथमश्रुतहोतृशब्दानुसारेणाध्वर्युशब्देन लक्षणयोपस्थापिते अध्वर्युकार्ये होतृविधायकत्वे स्थिते यूपपरिव्याणे करणस्य 'परिवीरसी'ति मन्त्रस्यान्यत्राध्वर्युप्रयोज्यस्यापि अत्र वचनानुसारेण होत्रा प्रयोगः प्राप्नोति । अतिदेशानुसारेण च होतृकार्यान्तर्गते 'युवा सुवासा' इति वर्तमानतानुवादिमन्त्रे होता प्राप्नोति । न चोभावपि मन्त्रौ होत्रा प्रयोक्तुं शक्यौ । परिव्याणसङ्कल्पमारभ्य तत्समाप्तिपर्यन्तः कृत्स्नोऽपि वर्तमानकाल इति तावन्तं कालं वर्तमानतानुवादी मन्त्रः प्रयोक्तव्यः । परिव्याणाव्यवहितपूर्वक्षणे करणमन्त्रः समापनीय इत्येककाले समावेशात् । तत्रान्यतरबाधे वर्तमानतानुवादिमन्त्रबाध एवाश्रितः । तत्र होतुरतिदेशः तत्कार्यस्य च प्रत्यक्षेण 'यो होता सोऽध्वर्युरित्यनेनोपजीव्यः । प्राप्तोभयानुवादेन सम्बन्धमात्रविधानात् । होतृप्राप्त्यर्थं होतृकार्यमप्युपजीव्यम् । पदार्थानां कार्यमुखेनैव विकृतिषु प्राप्तेस्स्वीकारात् । न चात्र सावकाशनिरवकाशन्यायः । 'वचनस्य 'परिवीरसी'तिमन्त्रातिरिक्तेऽप्याध्वर्यवे सावकाशत्वात । अत उपजीव्यस्यापि विलम्बितप्रवृत्तिकतया शीघ्रप्रवृत्तिकेन उपदेशेन बाध इत्येव स्वीकर्तव्यम् । एवं प्रकृतेऽपि संभाविताप्रामाण्यस्य प्रत्यक्षादेरुपदेशेन तद्विपरीतेन बाधो भविष्यति । एवमुपजीव्योपजीवकयोरेव तात्पर्यलिङ्गसाहितस्य उपजीवकस्य तद्रहितादुपजीव्यात् प्राबल्यमभ्युपगन्तव्यम् । अद्वैतविषयकोपक्रमानामिदमेव प्रयोजनम् । यत् प्रमाणान्तरानुसारेण 'तत्त्वमस्या'दिवाक्यस्यार्थान्तरशङ्कानिराकरणम् । न च तथा प्रत्यक्षादेस्तत्त्वावेदकत्वमेव स्वीकर्तव्यमित्यत्र किञ्चिन्निर्-

न्धकारणमस्ति । अतोऽन्यथासिद्धिशङ्काकलङ्कितप्रत्यक्षविरोधं तिरस्कृत्य तात्पर्यग्रहे न काचिदनुपपत्तिः । अत एव लाघवरूपतात्पर्यलिङ्गसहकृतत्वेन 'हिरण्यगर्भस्समवर्तताग्र'इत्याघारमाघारयतीति विधिना हिरण्यगर्भ इतिमन्त्रस्यान्यथानयनमाश्रितम् । इदं वचनं वायव्यपशावाम्नायते । प्रकृतौ च द्वावाघारौ प्रथमः प्राजापत्यः, द्वितीयः ऐन्द्रस्समन्त्रकः । तत्रैव च मन्त्रजन्यादृष्टम् । न तु प्रथमेऽमन्त्रके । तत्र यद्याघारसामान्यप्रतिपादकेनानेन विधिना मन्त्रलिङ्गस्वारस्यानुसारेण 'प्रजापतिर्वै हिरण्यगर्भ इत्यर्थवादस्वारस्यानुरोधेन च प्रथमाघार एव मन्त्रो विधीयेत, तदादृष्टं किञ्चित् परिकल्पनीयम् । तस्य प्रथमाघारोपकारकत्वं, तत्र मन्त्रजन्यत्वसामान्यं तद्विशेषश्चेति बहु कल्पनीयं स्यात् । द्वितीयाघारे तद्विधाने तु प्रकृतौ तस्य मन्त्रसामान्यादृष्टसम्बन्धः क्लृप्त इति विधेर्मन्त्रविशेषसम्बन्धमात्रपरत्वमिति लाघवरूपतात्पर्यलिङ्गोपेतेन द्वितीयाघारे मन्त्रविधानेन विनियोज्यतया विनियोगविध्युपजीव्यस्यापि स्वरसतो हिरण्यगर्भप्रकाशकस्य लक्षणयेन्द्रप्रकाशकत्वं स्वीकृतम् । तत्सिद्धं प्रबलश्रुतिप्रमाणानुसारेण वर्णपदादिस्वरूपमात्रोपजीवनमभ्युपगम्यानपेक्षितलौकिकप्रमाणगततत्त्वावेदकत्वबाधेऽपि न कदाचिदनुपपत्तिः । एवं च यत् प्रामाण्यज्ञानस्य प्राथम्यं प्राबल्ये प्रयोजकमुक्तं, तत् विपरीतम् । तत्रैव हि प्रथमस्य प्राबल्यम् । यत्रोत्तरेण तदपेक्ष्यते । यथा 'प्रजापतिर्वरुणायाश्वमनयत् सस्वान्देवतामाच्छेत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपदित्युपक्रमेणासञ्जातविरोधिना दातुरिष्टिरि'ति बोधे सति एकवाक्यतापन्नानां सम्भूयैकार्थप्रतिपादकत्वमिति व्युत्पत्त्या तमपेक्षमाणस्य 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेदिति तदुपसंहारस्य तद्विरोधेन प्रतिग्रहीतुरिष्टिरित्येवंरूपार्थबोधकत्वानुपपत्त्या णिजर्थान्तर्भावेन दातुरेवेष्टिरित्येवंरूपार्थबोधकत्वमुपेयते । अनपेक्षत्वे तु स्वप्रमाणानुसारेण लब्धात्मकस्योत्तरज्ञानस्यैव प्राबल्यम् । यथा बहिष्पवमानार्थं हविर्धानात् बहिर्निर्गच्छतामाम्नातान्वारम्भाणां विच्छेदे कुतश्चिन्निमित्तात् प्राप्ते प्रायश्चित्तमाम्नायते 'यद्युद्गातापच्छिद्येत अदक्षिणं तं यज्ञं परिसमाप्य पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वत्र दास्यन् स्यात् यदि प्रतिहर्ता सर्ववेदसं दद्यादि'ति । तत्र विरुद्धयोः क्रमेणापच्छेदे कर्तव्यतया प्राप्तयोस्समुच्चयासम्भवादन्यतरबाधेऽवश्यं स्वीकर्तव्ये पूर्वनैमित्तिकज्ञानानपेक्षेण स्वप्रमाणप्राप्तेनोत्तर नैमित्तिककर्तव्यताज्ञानेन पूर्वनैमित्तिककर्तव्यताज्ञानबाध एवाश्रितः । लोके 'इदं रजतमि'ति पूर्वज्ञानस्योत्तरेण 'नेदं रजतं शुक्तिरेवे'ति ज्ञानेन बाधदर्शनात् । तथाचोत्तरेण श्रौतात्मज्ञानेन प्रत्यक्षप्रामाण्यज्ञानस्यैव बाधो भवि-

ष्यति । ननु, उत्तरज्ञानेन पूर्वज्ञानबाधे नेदमुदाहरणम् । न ह्यत्र पूर्वनैमित्तिककर्तव्यताज्ञानं भ्रमरूपम् । अस्मिन्नपि प्रयोगे पूर्वनैमित्तिककर्तव्यताया उत्पन्नत्वात् । सातूत्तरनैमित्तिककर्तव्यतया नाश्यते । बदरे पूर्वोत्पन्ना श्यामतेवोत्तरोत्पन्नया रक्ततयेति चेन्न । तत्तत्क्रतुप्रयोगे तदेव कर्तव्यम् । यत् तत्प्रधानोद्देशेन कर्तव्यतया विधीयते, तदेव च प्रयोगविधिना कर्तव्यतया विधीयते । यदङ्गविधिभिः प्रधानोपकारकतया विनियुज्यते । न च विरोध्युत्तरनिमित्ताक्रान्ते क्रतौ पूर्वनिमित्तसम्बन्धिनोऽङ्गत्वं बोध्यते विधिना । विचारदशायां नैमित्तिकशास्त्रद्वयं पर्यालोच्य तदर्थयोर्निमित्तकयोर्विरुद्धयोः क्रमेण सम्पन्नयोस्समुच्चयासम्भवं लौकिकन्यायेन उत्तरेण पूर्वस्य बाध्यत्वं चानुसन्धाय विरोध्युत्तरनिमित्तराहितक्रतावेवाङ्गत्वबोधे विधेस्तात्पर्यं निर्धार्यत इति तादृशप्रयोगे पूर्वस्य नैमित्तिकस्याङ्गत्वाभावे कर्तव्यतापि नास्ती'ति विरोध्युत्तरनिमित्तं भविष्यतीति द्रागेव पुरुषैर्निर्णेतुमशक्यतया तद्दोषोपपन्नत्वेन जायमानः पूर्वनैमित्तिककर्तव्यताप्रत्ययो भ्रम एवेति पश्चात् उत्तरनिमित्तसम्पाते तन्नैमित्तिककर्तव्यताज्ञानेनोत्तरभाविना शास्त्रानुमतेन च पूर्वं बाध्यत इति युक्तमुदाहरणम् । मीमांसकमर्यादामतिलंघितया च वक्तव्यं बदरश्यामतोपमितं किं पूर्वनैमित्तिककर्तव्यत्वं कृतियोग्यत्वं तावत् उत्तरनैमित्तिकेनापि न नाश्यते । कृत्युपहितत्वं तु निष्पन्नमेव न भवति । प्रधानवैकल्यप्रयोजको यदनुष्ठानाभावस्तत्त्वमिति चेन्न । अनुष्ठानाभावस्य वैकल्यप्रयोजकत्वं नाम यस्मिन् प्रयोगे पूर्वनैमित्तिकानुष्ठानाभावः सति निमित्ते तत्र सर्वत्रापि परमापूर्वाजनकत्वमिति व्याप्तिरूपं वक्तव्यम् । तत्र विरोध्युत्तराभाव इति विशेष्यते, न वा । यदि विशेष्येत विरोध्युत्तरनिमित्तवति क्रतौ वैकल्यप्रयोजकत्वरूपं कर्तव्यत्वमेव नास्ति । द्वितीये तु नियमभङ्गः । विरोध्युत्तरापच्छेदवति तदनुष्ठानाभावेऽपि वैकल्यस्याभावात् । अथाङ्गत्वं कर्तव्यत्वमुच्यते, तदपि न । अङ्गत्वं सन्निपत्योपकारजनकत्वं, आरादुपकारजनकत्वं वा । उभयत्रापि योग्यत्वविवक्षायां तदुत्तरेण न नाश्यते । फलोपहितत्वं तु नोत्पन्नमेव । न चागमापायिभूतमखण्डं कर्तव्यत्वं नाम धर्मान्तरं कल्प्यत इत्यत्र किञ्चित्प्रमाणमस्ति । तस्मात् न श्यामरक्ततान्यायः प्रकृत उपन्यासार्हः । किं तु शुक्तित्वज्ञानन्याय एव । ननु, भवतोऽप्युत्तरज्ञानेन पूर्वज्ञानस्य किंरूपो बाधो विवक्षितः । ध्वंसो वा स्वरूपतो, विषयतश्चाभावो वा । नाद्यः । तस्य विभुविशेषोत्तरगुणमात्रसाधारणस्य द्विक्षणमात्रावस्थायिनां कालसाधारणस्य वा विरोध्युत्तरज्ञानासाधारणत्वानुपपत्तेः । नापि द्वितीयः । लब्धात्मकयोर्ज्ञानविषययो-

रभावबोधासम्भवात् । उत्पत्तिप्रतिबन्धस्तु उत्तरज्ञाने असम्भावित एव । न चाप्रामाण्यबोधनं पूर्वज्ञाने उत्तरज्ञानेनैवेति नियमः । प्रतिबिम्बादिभ्रमस्थले वृक्षाणामुपर्यग्रताज्ञानादिना पूर्वेणाप्युत्तरज्ञाने अप्रामाण्यबोधनात् । तस्मात् पूर्वज्ञानाद्व्यावृत्तं विरोध्युत्तरज्ञानासाधारणं बाधकत्वं निर्वक्तव्यमिति चेदुच्यते । विषयस्य तात्त्विकत्वाभावबोधनद्वारा पूर्वज्ञानस्याप्रामाण्यबोधनमेव बाधकत्वम् । तच्चोत्सर्गत उत्तरज्ञानस्येति तावन्मात्रेणापच्छेदनय प्रवृत्तिः । यत्र पूर्वप्रमाणस्य प्रवृत्तिसंवादः उत्तरज्ञानस्य तद्विसंवादो लोके वेदे च न्यायतः पूर्वस्यैव प्राबल्यं, तत्र उत्सर्गः परित्यज्यते । यथा वृक्षाणामूर्ध्वाग्रत्वज्ञाने । यथा वा श्रुतिलिङ्गादौ । तत्र ज्ञानस्य बाधकत्वे श्रुतिलिङ्गादौ लोके निरुपाधिकभ्रमस्थलेचोत्पत्तिप्रतिबन्धः । उत्तरस्य त्वप्रामाण्यबोधकत्वमेव । सोपाधिकभ्रमस्थले पूर्वस्यापि तथैव । वेदान्तवाक्यानां चोत्तरत्वेन स्मृतिन्यायाभ्यां प्राबल्येन च लौकिकप्रमाणबाधकत्वमास्थेयम् । उक्तगत्या व्यावहारिकत्वेन सावकाशस्य प्रामाण्यज्ञानस्य न सावकाशनिरवकाशन्यायविषयता । अस्तु वा निरवकाशता । अथापि 'स्थूलोऽहमि'त्यादिभ्रमे प्रामाण्यावगाहिन इव कर्त्रादिज्ञाने प्रामाण्यावगाहिनोऽपि न क्वचिदप्यवकाशः कल्पनीयः । विशेषशास्त्रापवादापर्यालोचनामूलस्य तद्विषयेऽपि सामान्यशास्त्रातिदेशाभ्यां जनितस्य ज्ञानस्य न कश्चिदपि प्रवृत्तिसंवादी विषयः कल्प्यते । प्रातिभासिकत्वोपपत्तेरिति तद्वत् प्रकृतेऽपि । यच्च 'स्थूलोऽहमित्यादिभ्रमोऽसम्प्रतिपन्नः । भेदस्य गृहीतत्वादिति । तत्र 'मम शरीरं मम चक्षुरित्या'दिरूपेण भेदग्रहः न 'स्थूलोऽहमित्यादिरूपस्याभेदग्रहस्य-विरोधी । रूपान्तरेण भेदग्रहस्य रूपान्तरेणाभेदग्रहापारपन्थित्वात् । चैत्रमैत्रयोः स्वरूपतो भेदे गृहीते तयोरपि व्यत्यासेन भ्रमविषयत्वदर्शनात् । अपि चायं सम्बन्धग्रहो न साक्षात् भेदग्रहः । स च स्थूलस्य शरीरं घटस्य स्वरूपमित्यभेदेऽपि दृश्यत इति कथं ततो भेदनिश्चयः । न च द्वाभ्यां शरीराभ्यां बाल्यवार्द्धकयोरेकत्वेन प्रत्यभिज्ञारूपात् भेदकसाक्षात्कारात् आत्मनि भेदो गृह्यत इति वाच्यम् । परिणामवादे ह्यवयवोपचयापचयाभ्यां न शरीरभेदः । एकस्यैव शरीरस्यापचयो नामावयवविश्लेषावस्था । उपचयस्त्ववयवान्तरसंश्लेषावस्थेत्यवस्थाद्वयानुयायितया शरीरस्यैव 'य एवाहं बाल्ये पितरावन्वभूवं, स एवाहं स्थाविरे प्रणप्तॄननुभवामी'ति प्रत्यभिज्ञाविषयत्वोपपत्तेः । न चानुभवितृत्वावगाहिन्याः प्रत्यभिज्ञायाः न शरीरविषयत्वं सम्भवति । तथा चानुभवितृत्वमेव भेदकमस्त्विति शंक्यम् । तदपि हि 'य एवाहं बाल्ये पुष्टः पितरावन्वभूवं, स

एव स्थविरे कृशः पृणप्तृननुभवामी'ति पुष्टत्वादिशरीरधर्मसामानाधिकरण्येनानुभूयते । अत एवारम्भवादे शरीरभेदे सत्यपि न प्रत्यभिज्ञया एक आत्मा सिध्यति अवस्थाद्वयानुयायी । 'य एवाहं कृशः, स एव स्थूल' इति शरीरेऽपि प्रत्यभिज्ञादर्शनात् । तथा सत्यपि भेदे आत्मनि प्रत्यभिज्ञेति शङ्का समुन्मिषेत् । 'य एवाहं स्वप्ने देव, स्स एव मनुष्य इति प्रतीतिस्तु ' यदेव रजतं सैव शुक्तिरिति वत् स्वप्नशरीरस्य मिथ्यात्वेन सर्वसम्प्रतिपन्नतया बाधायां सामानाधिकरण्यावगाहिनीति शङ्काकलङ्किता न स्थायितया देहादात्मनि भेदनिर्णयोपयोगिनी । बहुत्वेन गृहीतानां देहेन्द्रियाणां एकस्मिन्नात्मन्यभेदभ्रमोऽपि न विरुद्धः । रूपान्तरेण वैलक्षण्यग्रहस्य रूपान्तरेणाभेदभ्रमाविरोधित्वादेव । यथाधीयानानधीयानयोश्चैत्रमैत्रयोस्समीपस्थिते देवदत्ते अधीयानो मैत्र इति द्वयोरेकस्मिन्नभेदारोपः, एवमेकस्मिन्नात्मनि बहूनां देहेन्द्रियाणामारोपोपपत्तेः । भेदकसाक्षात्कारश्च दोषविशेषे न भ्रमविरोधि । शङ्खत्वसाक्षात्कारेऽपि पीतिमभ्रमदर्शनात् । एवं जीवन्मुक्तानामपि प्रारब्धदोषविशेषात् सम्भावितो 'मनुष्योऽह'मिति भ्रमः पामराणामपि नास्तीति साहसमात्रम् । चार्वाकव्यतिरिक्तानां च सर्वेषामप्येतस्य भ्रमत्वेन विप्रतिपत्तिः । ततश्च बहुष्वपि प्रदेशेषु दृष्टाप्रामाण्यस्याहंप्रत्ययस्य कर्तृत्वाद्यंशेऽप्यप्रामाण्यसम्भवात् तत्र प्रामाण्यज्ञानस्य न क्वाप्यवकाशः कल्पनीयः । ततश्च श्रुत्यनुसारेण 'अहं कर्ता अहं भोक्तेति' प्रत्यक्षस्यौपाधिकत्वे सिद्धे तत्र मम मनः कामयत इति प्रत्यक्षसिद्धः ' कामस्सङ्कल्प ' इत्यादिश्रुतिसिद्धश्च मनोरूप उपाधिस्सम्भवति । तत्सिद्धं श्रुतितदन्यप्रमाणयोर्विरोधे प्रमाणान्तरस्यान्यथानयनम् । कथं तर्हि ' सोमेन यजेते'त्यादिषु सोमादिपदानां लक्षणा । उच्यते—तात्पर्यविषये श्रुतेः प्रमाणान्तरेण नान्यथाकरणम् । 'सोमेन यजेते'त्यत्र विशिष्टभावनैव तात्पर्यविषयः । तस्याश्च सोमयागसंसर्गघटितत्वात् तात्पर्याविषयीभूतोऽपि स प्रतीयते । तथा च करणीभूतयागेन समानपदोपात्तेनावरुद्धायां भावनायां करणतया पदान्तरोपात्तस्य सोमस्य पार्थक्येनान्वयासभवात् यागभाव्यकभावनामध्याहृत्य तस्यां सोमस्य करणतया सोमेन भावयित्वा यजेतेति णकारेण वचनव्यक्तिकल्पने अध्याहारविरुद्धत्रिकद्वयापत्तिदोषाभ्यां यजिसामानाधिकरण्येन वाक्यभेदपरिहारायान्वये वक्तव्ये अभेदस्य तात्पर्याविषयीभूतस्य प्रत्यक्षबाधिततया प्रत्यक्षसिद्धसाध्यसाधनभाव एव वक्तव्य इति तत्र मत्वर्थलक्षणा । आदित्यो यूप इत्यादौ च स्तुतिविशिष्टवाक्यार्थ एव तात्पर्यं न मुख्यसंसर्ग इति तत्र प्रत्यक्षानुसारः । तात्पर्याविषयस्यापि यथा शब्दात् प्रत्ययः, तथा देवताधि-

करणे वर्णयिष्यते । 'तत्त्वमसीति वाक्ये च निर्विशेष एव तात्पर्यमिति तदर्थमेव भागत्यागलक्षणाश्रयणं न प्रत्यक्षानुरोधाय । ननु, कृष्णलं श्रपयेदित्यत्र प्रकृतितः प्राप्तस्य द्वारलोपान्निवर्तमानस्य पाकस्यैव प्रतिप्रसवविधिरिति तस्यैव तात्पर्यविषयता स्वरसतोऽवगम्यते । तत्र कथं प्रत्यक्षानुरोधेनोष्णीकरणे लक्षणाश्रयणे तात्पर्यविषये श्रुतेः प्राबल्यमिति नियमनिर्वाहः ! उच्यते—तात्पर्यविषये श्रुतेः प्राबल्यमित्युत्सर्गः । स त्वानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति रीत्या क्वचित् प्रत्यक्षस्यात्यन्तागतिकत्वे परित्यज्यते । तत्र हि विकृत्यभावः प्रवृत्तिसंवादी न प्रातिभासिकः । किं तु व्यावहारिकः । तत्र पाकोऽपि यदि व्यावहारिकः कल्प्येत, तदा समानसत्ताकयोः विरोध इति प्रपञ्चतदभावन्यायेन सत्ताभेदं परिकल्प्य तात्त्विके पाके स्वीकृते अद्वैतावबोधकप्रबलानेकवाक्यविरोधः । तत्स्वीकारेऽपि तदप्रत्यक्षत्वनिर्वाहाय तस्यावृतत्वेन व्यवहाराविषयत्वं वक्तव्यम् । तथा च तद्बोधने वाक्यवैयर्थ्यमपि स्यात् । प्रातिभासिकत्वे तु शुक्तिरजतादिवदपरोक्षस्स्यादिति प्रत्यक्षस्यात्यन्तागतिकत्वपरिहाराय वाक्यवैयर्थ्यपरिहाराय चोष्णीकरणे लक्षणा । तस्मात् प्रबलस्य प्रमाणस्य सति सम्भवे दुर्बलप्रमाणानुसारेणान्यथानयनायोगादद्वैतात्मबोधकत्वे न काचिदनुपपत्तिः श्रुतेरिति विषयसम्भवेन तत्प्रतीतिद्वारा मोक्षरूपस्य प्रयोजनस्यापि सम्भवादारम्भणीयं शास्त्रम् । नन्वारम्भणाधिकरणे शास्त्रस्य प्राबल्यं तदनुसारेण प्रत्यक्षनयनमित्येतत् सर्वं व्यवस्थापयिष्यते । पुनः किमिति इह तन्निरूपणम् । उच्यते—वक्ष्यमाण एवार्थश्शास्त्रारम्भोपयोगितया इह स्मारितः । अथवा बहुशो दृष्टाप्रामाण्येन प्रत्यक्षेणात्मनि कर्तृत्वादिकं सत्यमेवेति न विस्रम्भणीयम् । अपि तु श्रुतिर्यादृशमात्मतत्त्वं बोधयति, तथैव स्वीकर्तव्यमिति प्रतिपादनायैव तत्त्वावेदकत्वात् प्रच्युतस्य व्यावहारिकत्वेन कार्योपयोगिता तत्र प्रतिपादनीया । अक्षरार्थस्तु अन्योन्यात्मकतामध्यस्याहमिदमिति व्यवहारः, अन्योन्यधर्मांश्चाध्यस्य ममेदमिति व्यवहार इति योजना । अहमिदमित्यनेन मनुष्योऽहमितिशब्दाभिलापरूपो व्यवहारः, इतिशब्देन प्रवृत्तिनिवृत्त्यादिरूपश्च विवक्षितः । ममेदमित्यनेन मम सुखं मम रूपं इतिशब्देन च प्रवृत्त्यादिरित्येवंरूपो विवक्षितः । व्यवहारपर्यन्तधावनमध्यासाभावे व्यवहारो न स्यादिति उपपत्तिसूचनाय । न चायं गौणः । मुख्यत्वस्य तत्र सर्वानुभवसिद्धत्वात् । नाप्ययं परम्परासम्बन्धेनात्मनि मनुष्यत्वावगाही । उत्सर्गप्राप्तस्य साक्षात्सम्बन्धस्य परित्यागानौचित्यात् साक्षात्सम्बन्धावगाहित्वानुभवाच्च । न च विवेकिनां साक्षात्सम्बन्धस्य बाधितत्वात्

परम्परासम्बन्धविषयत्वं स्वीकर्तव्यमिति वाच्यम् । तेषामपि प्रारब्धादिदोषवशेन तादात्म्याध्यासानुवृत्तौ तन्मूले साक्षात्सम्बन्धावगाहिनि व्यवहारे बाधकाभावात् । विवेकमूलकस्तु 'नाहं मनुष्यो न च देवयक्षो भिक्षुश्च नाहं निजबोधरूपः' । इत्येव । विदुषामपि लौकिकव्यवहारे लोकसाम्यं भाष्यकार एव वक्ष्यति 'पश्वादिभिश्चाविशेषादि'ति । लोकानां व्यवहारो लोकव्यवहारः अध्यासव्यवहारक्रिययोर्लौककस्समानः कर्तेति क्त्वाप्रत्ययः । अध्यासे निमित्तमाह—**इतरेतराविवेकेनेति** । मम शरीरमिति विवेके सत्यपि नाहं मनुष्य इत्येवंरूपस्यापरोक्षस्य विवेकस्याभावात् अध्यास उपपद्यत इति तात्पर्यम् । चार्वाकनिराकरणार्थम् **अत्यन्तविविक्तयोरिति** । धर्मिणोर्विवेकस्तादात्म्याभावः । धर्माणां विवेकस्संसर्गाभावः । नन्वितरेतराविवेकशब्दोदितो भेदाग्रहो धर्म्यारोप्योपस्थितिकालिक एवाध्यासहेतुः । अध्यासप्राचीना चोपस्थितिः प्रमारूपैव वक्तव्या । सा चाद्वैतवादिनो न सम्भवतीति अत उक्तम्—**सत्यानृते मिथुनीकृत्येति** । प्रमारूपैवोपस्थितिरुप युज्यत इति न नियमः । अप्रयोजकत्वादित्यारोप्यसमर्पकेणानृतशब्देन सूचितम् । मिथुनीकरणमुपस्थितिविषयत्वम् । ननु, नाप्रयोजकत्वम् । अध्यासप्राचीनोपस्थितेरपि भ्रमत्वाङ्गीकारे साप्युपस्थितिर्भ्रममूलेति पूर्वपूर्वभ्रमानवस्थितिस्स्यात् । न च प्रवाहानादित्वान्न दोषः । प्रलये प्रवाहविच्छेदेन तथाकल्पनायोगात् । न च तदापि पूर्वकल्पीयाध्याससंस्कारसत्त्वान्नानुपपत्तिरिति शङ्कयम् । तथासति क्वचित्संस्कारः, क्वचिदध्यास इति वैरूप्यापत्तेरित्यत आह—**नैसर्गिक इति** । व्यवहारनैसर्गिकत्वोक्त्या तत्कारणस्याध्यासस्य नैसर्गिकत्वमाक्षिप्तमिति प्रकृतशङ्कानिराकरणलाभः । सर्वत्रापि पूर्वपूर्वाध्याससंस्कारसचिवात् भेदाग्रहादुत्तरोत्तराध्यास इति न वैरूप्यमिति भावः । नैसर्गिकत्वं अनादित्वं तत्प्रवाहान्तर्गतव्यक्तीनां न सम्भवति । जन्यत्वात् । नापि प्रवाहस्य । तस्य क्रमिकोत्पत्तिशालिव्यक्तिव्यतिरेकाभावात् । तत् कथं नैसर्गिकत्वम् । उच्यते । द्विविधमनादित्वं स्वरूपेण प्रवाहतश्च । आद्यमजन्यानामेव । द्वितीयं तु जन्यानाम् । तच्च द्वयोर्व्यक्त्योर्मध्येऽन्यतरव्यक्तिगतजातियुक्तव्यक्तिं विना पूर्वकालस्यावर्तनम् । अस्तिचाध्याससंस्कारव्यक्त्योर्मध्येऽन्यतरव्यक्तिजातीयया कया चित् व्यक्त्या पूर्वकालस्यापि युक्तता । ननु, प्रलये निराश्रयसंस्कारो नोपपद्यते । न चान्तःकरणादिकं तदाश्रयः । तेषां सर्गश्रवणेन तदानीमसत्त्वावगमात् । नाप्यात्मा । उपाधिव्यतिरेकेण शुद्धस्य तदाश्रयत्वायोगादित्यत उक्तम्—**मिथ्याज्ञाननिमित्त इति** । अनृताज्ञाननिबन्धन इत्यर्थः । व्यवहारोपादानत्वं च संस्काराध्यासद्वारा विवक्षितमज्ञानस्य । त-

था च प्रलये अज्ञानस्य तदुपहितचैतन्यस्य च सत्त्वान्नाश्रयानुपपत्तिरिति भावः । सत्यानृते मिथुनीकृत्य अत्यन्तविविक्तयोः धर्मधर्मिणोरितरेतराविवेकेनान्योन्यस्मिन्नन्योन्यात्मकतां अन्योन्यधर्मांश्चाध्यस्य मिथ्याज्ञाननिमित्तो नैसर्गिकोऽहमिदं ममेदमिति लोकव्यवहार इति योजना । सत्यानृते मिथुनीकृत्येत्यनेनान्तःकरणादेर्मिथ्याभूतस्यापि पूर्वपूर्वाध्यासविषयत्वमुक्तम् । तन्न सम्भवति । असतोऽनृतस्य प्रतीत्ययोगात् । ननु, देहेन्द्रियादयो नात्यन्तमसन्तः । किन्तु अनिर्वचनीयाः सदसद्विलक्षणाः । अतो न प्रतीत्यनुपपत्तिरिति चेन्न । पदार्थानां सदसद्विलक्षणत्वायोगात् । सद्विलक्षणत्वं ह्यसतः, तद्विलक्षणत्वं च सतः । एवं च यथा सदसत्त्वं एकस्य विरुद्धत्वान्नाङ्गीक्रियते । एवमुभयविलक्षणत्वमपि विरोधादेव नाङ्गीकरणीयम् । तस्मात् सर्वं सदेव । भासमानत्वात् आत्मवत् । न च शुक्तिरजतादौ व्यभिचारः । तेषामपि सत्त्वाभ्युपगमात् । इदन्त्वेन भासमानं हि वस्तु द्व्यात्मकं शुक्त्यवयवैरजतावयवैश्चारब्धं शुक्तित्वरजतत्वधर्मशालि । तच्च दोषाभावदशायां शुक्तित्वेन प्रतीयते । रजतत्वेन न प्रतीयते । शुक्तित्वज्ञानेन प्रतिबन्धात् । तत्रापि शुक्त्यवयवानां भूयस्त्वम् । अल्पत्वं रजतावयवानाम् । अतो लोके शुक्तिरित्येव व्यवहारः । दोषेण च शुक्तित्वज्ञाने प्रतिबद्धे रजतत्वेनैव प्रतीयते । दोषापगमे शुक्तित्वज्ञानेन रजतव्यवहाराभाव एव बाध इत्युच्यते । एवं मरुमरीचिषु तोयभ्रमेऽपि द्रष्टव्यम् । अतो नाध्याससम्भव इत्यभिप्रायेणाक्षिपति । **आह कोऽयमिति** । परिहरति । **स्मृतिरूप इति** । ननु, आक्षेपमपरिहृत्य लक्षणकथनमसङ्गतम् । न च लक्षणकथनेनैव तद्गतैः पदैराक्षेपसमाधानं लभ्यत इति पृथक्तदकरणमिति वाच्यम् । तादृशपदानुपलम्भात् । लक्षणत्वमप्येतस्य न सम्भवति । स्मृतिरूपत्वं हि यद्यपीदं रजतमित्यनुभवानन्तरं जायमानायां स्मृतौ त्वस्ति । तथापि परत्रेति पदं न सम्भवति । तथा अनुभवरूपेषु भ्रमेषु स्मृतिरूपपदवल्लक्षणमसम्भवि । किं च परत्रेतिपदेन यदि पूर्वदृष्टदेशादन्यदेशत्वं विवक्षितं, तदाहङ्काराद्यध्यासेष्वव्याप्तिः । यस्मिन्नेव साक्षिणि पूर्वं दृष्टा अहङ्कारादयस्तत्रैवाध्यासात यदि सत्य इत्यर्थः, तदा जडे आत्माध्यासस्यान्योन्याध्यासमतेऽभ्युपगमात्तत्राव्याप्तिः । जडस्यानृततया सत्ये पूर्वदृष्टावभास इति लक्षणासङ्गतेः । पूर्वदृष्टत्वं चाव्यापकम् । शुक्तिरजतादेरपूर्वस्यैवाभ्युपगमात् । एवं पीतशङ्खविभ्रमेऽपि । ननु, पीतःशङ्ख इति न शुक्तिरजतभ्रमवदपूर्ववस्तुविषयको भ्रमः । किं तु नायनरश्मिगतस्य पित्तद्रव्यस्य रश्मिभिस्सह शङ्खे संसृष्टस्य यः पीतिमा साक्षात्सम्बन्धेन तद्विषयकः । तस्य चारोपात्

पूर्वं दर्शनं सम्भवतीति न तत्र पूर्वदृष्टपदाव्याप्तिरिति चेन्न । पित्तपीतिम्नः अयोग्यतया दर्शनासम्भवात् । अन्यथा कनकलिप्तशङ्खस्य पीतिम्नोऽन्यैर्गृह्यमाणत्ववत् पित्तद्रव्यलिप्तशङ्खस्य पीतिम्नोऽन्यैर्गृह्यमाणत्वापत्तेः । न च दूरोत्पतितस्य विहगस्य तद्विषयकपूर्वदर्शनधाराशालिना पुरुषेणैव ग्रहणम् । नान्येन । एवमेतस्य पुरुषविशेषेणैव ग्रहणमिति वाच्यम् । तथासति तच्चक्षुस्संयुक्तचक्षुषा पुरुषेण तद्ग्रहणवत् तादृशेनैतस्यापि ग्रहणं स्यात् । पक्षिणोऽन्तरालदेश इव चक्षुश्शङ्खयोरन्तरालदेशेऽपि तादृशदर्शनं स्यात् । अत एव दोषयुक्तपुरुषेण तस्य ग्रहणमित्यपि परास्तम् । अन्तराले ग्रहणापत्तेरेव शङ्खसमीपदेश एव तस्य ग्रहणयोग्यत्वं, नान्यत्रेति कल्पनं तु पित्तद्रव्यगतपीतिमैव गृह्यत इत्यत्र प्रमाणावतारं विनानुचितम् । नील्यादिसम्पर्करहिते स्वच्छजले 'नीलं सलिल'मिति भ्रमे उक्तगतेरसम्भवाच्च । तस्मादपूर्वस्यैवोत्पत्तिरित्यव्याप्तं पूर्वदृष्टपदम् । ननु पूर्वदृष्टपदं पूर्वदृष्टसजातीयपरम् । तथा च नोक्तदोषः । न च पित्तदोषयुक्तस्य गर्भान्निर्गतस्य पीतिमभ्रमे सजातीयपूर्वदर्शनासम्भव इति वाच्यम् । जन्मान्तरीयस्य तत्रापि सम्भवादिति चेन्न । एवमपि येनकेनचिद्धर्मेण साजात्यस्य सर्वसाधारणत्वादव्यावर्तकं पदं व्यर्थमापद्यते । ननु येन प्रकारेणाध्यासः, तेन प्रकारेण पूर्वदर्शनं विवक्षितम् । न च तथापि व्यर्थता । न हीदं लक्षणान्तर्गतम् । किं त्वध्यासकारणनिरूपणपरमिति चेन्न । संसर्गाध्यासे तदसम्भवात् । संसर्गांशे निष्प्रकारकतया येन प्रकारेणेत्येवंरूपस्यासम्भवात् । सन्ति च केवलसंसर्गाध्यासाः । यथा दर्पणे मुखाध्यासः । तत्र हि दर्पणं मुखं वा परस्परमध्यस्यत इति नानिर्वचनीयख्यातौ वक्तुं शक्यम् । तयोर्व्यावहारिकत्वेन प्रातिभासिकाध्यासानिर्वाहात् । किं तु तयोराधाराधेयभाव एव । न च सोऽधुना केनचित्प्रकारेणानुभूयते । येन तत्सजातीयस्य तत्समानप्रकारोपस्थितिः कारणमिति निरूप्येत । एवं 'रक्तः पट' इत्यत्रापि कुसुम्भादिगतस्य रक्तिम्नः पटे साक्षात्सम्बन्धस्याभावात् सोऽध्यस्यते । यदि तु दर्पणे अपूर्वमेव मुखमुत्पद्यत इति मतम् । पटे च रञ्जकद्रव्यसम्बन्धात् वर्णान्तरमेव रञ्जकद्रव्यवर्णेन सदृशं तदुत्कर्षापकर्षानुगतोत्कर्षापकर्षशालि पटेन साक्षात्सम्बद्धं जायत इति तत्र न कस्याप्यध्यासः । अपूर्वमुखाध्यासे च तत्समानप्रकारप्रतिबिम्बसजातीयमुखविषयोपस्थितिस्सम्भाव्यत इति उच्यते, तदापि चूर्णलिप्ते घटे वर्णान्तरोत्पादासम्भवात् शुक्लो घट इति साक्षात्संसर्गविषयतयाध्यासावश्यम्भावात् तत्रोक्तकारणासम्भवः । न च तत्रापि चूर्णोपादानभूतेषु पाषाणेषु वह्निसम्पर्कात् श्वेतिम्न इवापूर्वस्यात्रापि तथाविधस्योत्पत्तिः तस्य किं न स्यादिति वाच्यम् । तत्र वह्न्यपगमेऽपि तस्यानुवर्तमानतया

तथाङ्गीकारेऽपि चूर्णापाये तदनुपलम्भेन तथाङ्गीकारायोगादेतादृशेषु संसर्गाध्यासेषु नोक्तं कारणं सम्भवति । शुक्तिरजताध्यासेऽपि संसर्गांशे तन्न सम्भवति । न च संसर्गातिरिक्ताध्यास एव तस्य कारणत्वमिति शङ्कनीयम् । कुत्राप्यसम्भावितस्य व्यक्तिविशेषस्य स्वप्ने सजातीयपूर्वदर्शनासम्भवात् असम्भाविते वस्तुनि जन्मान्तरीयस्यापि तस्य कल्पयितुमयोगात्।तस्मात्कथमेतदध्यासलक्षणमुपपद्यत इति चेत्, उच्यते । इमामेवानुपपत्तिं मनसि निधायाध्यासो नाम 'अतस्मिन् तद्बुद्धिरित्यवोचामे'त्यनुवादव्याजेनैतस्यार्थं स्फुटीकरिष्यति भाष्यकारः । तेन ह्यारोप्याभावस्याधिष्ठाने प्रतिपादनादेकत्र समानसत्ताकयोः प्रतियोगितदभावयोर्विरोधाद्विषमसत्ताकत्वसूचनेनारोप्याभावस्य च वस्तुतोऽधिष्ठानातिरेकानभ्युपगमादधिष्ठानविषमसत्ताकस्य बुद्धिरध्यास इति फलितोऽर्थः । तदनुसारेण स्मृतिरूपपदं स्मर्यमाणवस्तुसादृश्यप्रतिपादकम् । तत्सादृश्यं च प्रतीतिकाले असत्त्वम् । परत्रेति तु अधिष्ठान इत्यर्थकम् । तथा चाधिष्ठाने अपरोक्षतया भासमानस्य स्वरूपतोऽसत्त्वायोगादधिष्ठानस्य यादृशं सत्त्वं, तादृशसत्त्वराहित्ये प्रतिपादितेऽधिष्ठानविषमसत्ताकावभासत्वं लक्षणं पर्यवस्यति । नन्विदमपि स्वप्नविभ्रमे न सम्भवति । तत्राधिष्ठानासम्भवात् । न च तत्र साक्ष्येवाधिष्ठानम् । तस्य पारमार्थिकत्वेन प्रातिभासिकस्वप्नपदार्थान्प्रति केवलस्याधिष्ठानत्वायोगात् । अध्यस्तरजतादौ प्रातिभासिके व्यावहारिकशुक्त्यवच्छिन्नस्यैव तस्य तथात्वात् 'अहं गजो मयि गज' इति प्रतिभासापत्तेश्चेति चेन्न । अज्ञानान्तःकरणतद्धर्माणां व्यावहारिकपदार्थानवच्छिन्ने तत्राध्यस्तानां प्रातिभासिकत्वाभ्युपगमेन प्रातिभासिकाध्यासे व्यावहारिकपदार्थविच्छिन्नस्यैव साक्षिणोऽधिष्ठानत्वमिति नियमस्याप्रयोजकस्यानभ्युपगमात् । 'अहं गजो मयि गज' इति प्रतीतिस्तु क्वचिदिष्टैव । सर्वत्र तु न भवति । दोषवैचित्र्यात् । अविद्यादीनां प्रातिभासिकत्वं चानावृतचैतन्यविषयतानियतस्वरूपत्वं प्रातिभासिकत्वम् । तादृशाविषयतया कदाचित्सम्बद्धत्वं व्यावहारिकत्वमिति मतमनुसृत्य द्रष्टव्यम् । यन्मते त्वविद्यातिरिक्तदोषाजन्यत्वं व्यावहारिकत्वम् । अविद्यातिरिक्तदोषजन्यत्वं प्रातिभासिकत्वं, तदा अविद्यान्तःकरणतद्धर्माणामपि व्यावहारिकत्वम् । एवं च स्वप्नस्याप्यधिष्ठानभूतेन पारमार्थिकेन साक्षिणा विषमया मिथ्यात्वरूपया सत्तया समन्वयाल्लक्षणानुगतिः । ननु, सिद्धान्ते ब्रह्मण एव सत्ता नान्यस्येत्यभ्युपगमात् कथं स्वाप्नेष्वात्मसत्तातो विलक्षणा सत्तेति चेत्, उच्यते—लक्षणे सत्ताशब्देन तारत्वादिवदुत्कर्षविशेषात्मकाः केचनाखण्डोपाधिभूता विवक्षिताः । न च तत्र प्रमाणाभावः । श्रुत्या हि वियदादिसत्तातो ब्रह्मण उत्कृष्टा सत्ता निर्दिश्यते । 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष स-

त्य'मितिप्रत्यक्षेण शुक्ते रजतसत्तातो विलक्षणा सत्ता गृह्यते, रजतापेक्षया शुक्तिस्सत्त्येति । एवं स्वाप्नशुक्तिकादिषु तस्यामेवावस्थायामध्यस्तरजते सत्तावान्तरभेदः प्रतीतिसिद्धो द्रष्टव्यः । यद्गतमवभास्यं, तदधिष्ठानम् । ततश्च जडेऽपि ब्रह्माधारत्वमारोपितमिति तदधिष्ठानम् । जडसत्तातश्च ब्रह्मसत्ता उत्कृष्टेति अधिष्ठानविषमसत्ताकावभासत्वं जडे ब्रह्माध्यासेऽप्यस्तीति लक्षणसमन्वयः । एवं तत्र तत्र लक्षणयोजना द्रष्टव्या । ख्यात्यन्तरवैषम्यं च स्वपक्षे अनेन सूच्यत इति तासामनादेयत्वसूचनद्वारा प्रकृतापेक्षपरिहारोऽपि सूचितः । तार्किकपक्षे ह्यधिष्ठानमवभास्यस्य रजतादेर्हट्टादिकं तत्समानसत्ताकं रजतम् । सत्ख्यातिमते च शुक्तिरेवाधिष्ठानम् । किं तु रजतं शुक्तिसमानसत्ताकम् । आत्मख्यातिमते आत्माधिष्ठानं तत्समानसत्ताकं चारोप्यम् । अख्यातिमते तु तार्किकवदेव सर्वम् । असंसर्गाग्रहः परं विशेषः । तेषु मतेषु अधिष्ठानविषमसत्ताकत्वाभावः । असत्ख्यातिर्द्विधा । शून्यवादिनां निरधिष्ठाना । तान्त्रिकाणां केषां चित् साधिष्ठाना असदारोप्या । आद्याया अधिष्ठानपदेन व्यावृत्तिः । अपरायास्त्ववभासपदेन । यद्यपि लक्षणे अवभासपदं ज्ञानसामान्यपरम् । ज्ञानसामान्यान्तर्गतपरोक्षज्ञानविषयत्वं चासतोऽपि सम्भवत्येव, तथापि रजताद्यध्यासेष्वपरोक्षेष्ववभासपदं वस्तुगत्या अपरोक्षावभासपरं पर्यवस्यतीति तेन तद्व्यावृत्तिः । पूर्वदृष्टपदं च क्वचित्पूर्वमारोप्यसजातीयोपस्थितिः अपेक्षितेत्येतावन्मात्रपरं सच्छङ्काविशेषनिराकरणार्थम् । सा चैवं समानसत्ताकयोरारोप्यविशेषाधिष्ठानसामान्यांशयोरैक्यज्ञानजन्यस्संस्कारोऽध्यासेनापेक्षितः । शुक्तिरजताध्यासे तथादर्शनात् । प्रकृते च न सम्भवति । आत्मना समानसत्ताकस्यान्यस्याभावादिति । अप्रयोजकत्वान्नायं नियमस्साधुः । अपूर्वव्यक्तिविषयस्वप्ने तदभावात् व्यभिचारदुष्टश्च । इदं च लक्षणमनिर्वचनीयस्य आरोप्यस्योत्पत्तिं स्वीकृत्य लक्ष्येषु सङ्गमनीयम् । न च सदसद्विलक्षणत्वं विरुद्धम् । सद्विलक्षणत्वं हि बाध्यत्वम् । असद्विलक्षणत्वं च सस्वरूपत्वम् । तच्च सम्भवत्येव शुक्तिरजतस्य । लब्धस्वरूपं हि तत् । अन्यथा शशशृङ्गादिवदपरोक्षत्वानुपपत्तेः । बाधश्चैकावच्छेदेन स्वोपादाने त्रैकालिकोऽभावः । सोऽपि रजतस्य नेदं रजतमिति प्रमाणसिद्धः । तदा परं विरोधस्स्यात् । यदि सद्विलक्षणत्वं निस्स्वरूपत्वम्, असद्विलक्षणत्वं सस्वरूपत्वमिति एवं विवक्षितं स्यात् । न तु तथा विवक्षितम् । प्रकारान्तरस्य दर्शितत्वात् । न च सोऽपि विरुद्धः । स्वोपादाने त्रैकालिकाभावस्यायोगादिति वाच्यम् । प्रतीत्यनुसारेण हि विरुद्धत्वमविरुद्धत्वं च व्यवस्थापनीयम् । एवं च यथा पुरुषवति भूतले 'दण्डी

पुरुषो नास्ती'तिप्रतीत्या प्रतियोगितावच्छेदकविशिष्टस्यैव प्रतियोगिनोऽभावेन सह विरोधः । एवं समानसत्ताकस्यैव तेन सह विरोध इति नियमः । एतेन यत् सत्ख्यातिवादिनोक्तं—शुक्तित्वाधिकरणे इदमि रजतत्वं वर्तत इति, तत् प्रत्युक्तम् । यदि तत् प्रतिभासकाल उत्पद्यते, तदा अस्मन्मतप्रवेशः । यदि तु त्रैकालिकं कथं विरोधपरिहारः । न च तत्र किञ्चित् प्रमाणमस्ति । 'इदं रजतमिति प्रतीतिः' तात्कालिकरजतमादायापि सम्भवात् । न च तत्र प्रसिद्धरजतोत्पादिका सामग्री सम्प्रतिपन्ना । ननु, त्रिवृत्करणश्रुतिबलात् शुक्त्यारम्भकद्रव्येण सह तेजस्संसृष्टतया शुक्त्यारम्भकाले तैजसैरवयवै रजतमारभ्यत इति न सामग्य्रनुपपत्तिः । न च शुक्ते रजतसंसर्गोऽनुपपन्नः । द्रव्यान्तरेण सहात्यन्तिकस्य द्रव्यान्तरसंसर्गस्यादर्शनादिति वाच्यम् । नीवारेषु व्रीहिसंसर्गस्यात्यन्तिकस्य सर्वसम्प्रतिपन्नत्वात् । अत एव दर्शपूर्णमासयोर्नित्यतयावश्यकर्तव्यत्वे यदा सकला व्रीहयो न लभ्यन्ते, तदा विकलान्नीवारगतानुपादाय यष्टव्यमिति व्यवस्थापितं पूर्वतन्त्र इति चेन्न । यदि तैजसैरवयवैश्शुक्तिकायां रजतमारब्धं भवेत्, तदा रजतयुक्तमृदादिदाहे रजतपरिशेषवत् शुक्तिदाहे रजतपरिशेषोऽपि स्यात् । औषधपुटसंयुक्तस्य दाहे यथा रजतस्य न परिशेषः । किं तु भस्मीभावः । एवं शुक्तिसंयुक्तस्यापीति कल्पनं तु शुक्तौ सार्वकालिकरजतमस्तीत्यत्र प्रामाणावतारं विनानुचितम् । त्रिवृत्करणश्रुतिभिर्महाभूतानां संसर्गं प्रतिपादयन्ती न तत्र रजतपरिणामे प्रमाणम् । न च क्वचिन्नीवारादौ तथादृष्टमिति अन्यत्रापि तथाभ्युपगन्तुं युक्तं असति प्रमाणे । न च नीवारेषु व्रीहयो विद्यन्ते । रूपरससंस्थानविशेषनियतस्य व्रीहित्वस्य नीवारेषु कथंचिदपि अभ्युपगन्तुमशक्यत्वात् । तर्हि कथं तेषां प्रतिनिधित्वं, कथं वा व्रीहिभिस्समानधर्मत्वम् । एवं दर्शपूर्णमासयोः 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति नित्यत्वमुपश्रुत्य तत्र च केन चिन्निमित्तेन मुख्यद्रव्यासम्भवं भाविनं कदाचित् अनुसन्धाय विचारावस्थः पुरुषः 'व्रीहिभिर्यजेते'ति नियमशास्त्रस्याक्षेपापवादकस्याशक्त्या तस्यां दशायामप्रवृत्तिमालोच्य नित्यचोदनाया द्रव्याक्षेपकताशक्तिमकुण्ठितामनुसन्दधानः यदि कथञ्चिदपि मुख्यशास्त्रानुग्रहो भवेत्, तदा तमनादृत्य न यत्किञ्चित् द्रव्यं आक्षेप्तव्यमिति निर्धार्य व्रीहिषु यादृशरसयुक्ता अवयवाः, तादृशरसयुक्ता अवयवा नीवारेष्वपि विद्यन्त इति स्मरन् तावन्मात्रानुग्रहो मुख्यशास्त्रस्यानुसर्तव्य इति मुख्यस्य पयसोऽलाभे नालिकेररसः तत्सदृशो लोके सन्निधाप्यत इति लौकिकन्यायसनाथाया नित्यचोदनाया अत्यन्तसदृशद्रव्याक्षेपकत्वं निर्धार्य व्रीहीणामलाभे नीवारा एव प्रतिनिधेया इति नि

श्चिनोति । 'व्रीहीनवहन्तीत्या'दिशास्त्राणां चापेक्षानुसारेण पुरोडाशादिहविस्सम्पादनद्वारा अपूर्वजनकपदार्थोद्देशेन संस्कारविधायकतया यववन्नीवाराणामपि व्रीहिभिस्साधर्म्यम् । परं तु यवेषु 'व्रीहीणां मेधसुमनस्यमान इति मन्त्रो न प्रवर्तते । मुख्यया वृत्त्या तत्प्रकाशनसामर्थ्याभावात् । उद्भूतसादृश्याभावेन गौण्यारोपयोरप्यसम्भवात् । नीवाराणां तु सम्भवति व्रीहित्वारोपेण प्रकाशनम् । लोके हि यो यस्य स्थाने प्रतिनिधीयते, स तेन शब्देन व्यवह्रियते । यथा विष्णुस्थाने प्रतिनिहिता प्रतिमा विष्णुशब्देनेति प्रतिनिधेर्मुख्यशब्दभाक्त्वस्य व्युत्पत्तिसिद्धत्वात् । अतो न पूर्वमीमांसकव्यवहारपर्यालोचनया शुक्तौ रजतं तात्त्विकमस्तीति । अस्तु वा यथाकथञ्चित्तत्र रजतावयवसमावेशः तावन्मात्रेण च 'रजत'मिति प्रतीतेः प्रमात्वम् । रजतत्वजातेरवयवावयविसाधारण्यात् दधित्वादिवत् । वल्मीकनीवारादिषु घटत्वव्रीहित्वाद्यवगाहिषु भ्रमेषु का गतिः । घटत्वव्रीहित्वादिजातेरवयविविशेषमात्रोपरक्तत्वात् । तत्राख्यातिस्वीकारे च सैव सर्वत्रास्तु । किमनया कुसृष्ट्या अव्यापिकया । अख्यातिरपि न सम्भवतीत्यनुपदमेव वक्ष्यते । 'निरधिष्ठानासत्ख्यातिरि'ति शून्यवादिमतं तु तर्कपाद एव निराकरिष्यते । रजतमिदमित्यत्रापरोक्षतया इदंपदार्थे अधिष्ठाने निस्स्वरूपमेव रजतं प्रतीयत इति मतं तु अनुभवविरोधादेवानादरणीयम् । लब्धस्वरूपस्य रजतस्यानुभवसिद्धत्वात् । सिद्धान्ते तु दोषसहिता अविद्या शुक्तिगता रजतत्वेन परिणमत इति तस्य लब्धात्मकत्वान्नानुभवविरोधः । न चोत्पत्त्यङ्गीकारे तत्त्वज्ञानेन च नाशाङ्गीकारे शुक्तिरजतसम्बन्धितया तयोरनुभवोऽपि स्यादिति वाच्यम् । प्राक्सिद्धशुक्तितादात्म्येनाध्यस्ते शुक्तीदंत्वसंसर्गस्येव शुक्तिप्राक्सिद्धत्वसंसर्गस्यापि आरोपिततयोत्पत्त्यनुभवानुपपत्तेः । बाधेन त्रैकालिकाभावप्रतियोगित्वस्य ग्रहात् तदधिकरणे नाशासम्भवेन तदनुभवानुपपत्तेः । परिणाम्युपादानमेव कार्यनाशाधिकरणम् । न विवर्तोपादानम् । न चैवं तत्र नाशानङ्गीकारे तस्य नित्यतापत्तिः । बाधेन हि सहाज्ञानेन परिणामिना रजतस्य सदसद्व्यवहारायोग्यत्वापादनेनाधिष्ठानमात्रपरिशेषतासम्पादनात् । अत एवान्यथाख्यातिरपि निराकृता । तात्कालिकरजतमादाय प्रतीत्युपपत्तौ देशान्तरस्थरजतप्रतीतिकल्पनानुपपत्तेः । नापि देशान्तरस्थस्यासन्निकृष्टस्य भानं सम्भवति । न च रजतानुभवजन्यः संस्कारः, स्मृतिर्वा तत्र प्रत्यासत्तिः । तथासति वह्न्यनुभवजन्यसंस्कारस्मृत्योः परामर्शस्य वा सत्त्वेन 'पर्वतो वह्निमानि'ति प्रत्यक्षप्रसङ्गात् । न चानुमितिसामग्र्या तत्प्रतिबन्धः । विशेषदर्शनाधीनसंशयोत्तरप्रत्यक्षानुसारेण

समाने विषये प्रत्यक्षसामग्र्याः प्रबलत्वात् । न च लौकिकप्रत्यक्षसामग्र्या एवानुमितिसामग्रीतः प्राबल्यम् । अलौकिके तु अनुमितिसामग्र्या एवेति पर्वतो वह्निमानित्यनुमितौ न काचिदनुपपत्तिरिति वाच्यम् । तथात्वे स्थाणौ स्थाणुर्वा पुरुषो वेति संशयोत्तरं पुरुषत्वव्याप्यकरादिमानिति विशेषदर्शनानन्तरं पुरुष एवेति प्रत्यक्षं न स्यात् । तत्र लौकिकसामग्र्या असम्भवात् । न च तत्रानुमितिरूप एव भ्रमः, न प्रत्यक्ष इति शङ्क्यम् । पुरुषं साक्षात्करोमीत्यनुभवात् । अस्तु वान्यत्रोपनीतभानम् । प्रकृते तु न सम्भवति । न हि चक्षुषा सुरभि चन्दनमिति ज्ञाने चन्दनत्वांशे यथा प्राकट्यं, तथा सौरभांशेऽपि विद्यत इति सर्वानुभवसिद्धम् । एवं रजतांशेऽपि अलौकिकत्वेऽभ्युपगते सौरभवत् अप्राकट्यमेव स्यात् । अपि च यत्र यदनुभवः तत्र वा यदवच्छेदेन यस्यानुभवस्तदवच्छेदकवत्तया उपस्थिते वा संस्कारादेरुपनयत्वम् । शुक्तौ तु रजतं प्राङ्नानुभूतम् । नापि शुक्तिगतेदंत्वावच्छेदेनेति कथं तत्रोपनीयेत । न च त्वया दोषस्याक्लृप्तं रजतस्वरूपे कारणत्वं कल्पनीयम् । तदपेक्षया व्यवहितरजतसाक्षात्कार एव तस्य कारणत्वकल्पनमुचितम् । तथासति अपूर्वरजतानङ्गीकारात् लाघवं भवतीति वाच्यम् । भवेदेवं, यदि दोषस्याक्लृप्तमर्थं प्रति कारणत्वं कल्प्येत । न त्वेतदस्ति । येनापि हि देशान्तरस्थं रजतं भासत इत्युच्यते, तेनापि शुक्तिरजतोभयनिरूपितं तादात्म्यमत्रैवोत्पद्यत इत्यवश्यमभ्युपेयम् । तस्यान्यत्राप्रसिद्धेरत्राप्यनुत्पत्तावपरोक्षता न स्यात् । स्वप्ने चापूर्वव्यक्तिगोचरे तत्रैव विषयस्योत्पत्तिरुपेया । तस्यान्यत्राप्रसिद्धेः । किं बहुना । स्वाप्निकानां पदार्थानां मिथ्यात्वं सन्ध्यधिकरणे निरूपयिष्यते । 'तेषां च 'अथ रथान्रथयोगान् पथस्सृजत' इति श्रुतिपर्यालोचनया तत्रैवोत्पत्तिः । तत्र सर्वत्र दोषस्य कारणत्वं क्लृप्तमेवेति नाक्लृप्तकल्पनमपि । येन दोषस्यासन्निहितरजतसाक्षात्कारजनकत्वं कल्प्यते । तेन ज्ञानप्रत्यासत्त्याद्यजन्यरजतचाक्षुषत्वेन रजतचक्षुस्सन्निकर्षस्य रजतालोकसंयोगस्य च कारणत्वं क्लृप्तं परित्यक्तव्यम् । दोषस्य चासन्निहितचाक्षुषजनकत्वं तत्प्राकट्यप्रयोजकत्वं च कल्पनीयमिति भूयस्यनुभवविरुद्धा कल्पनापद्यते । अर्थोत्पादकत्वं तु अन्यत्र क्लृप्तमेव । उत्पन्नस्य च प्रमात्रवकुण्ठिततया अपरोक्षतायां न काचिदनुपपत्तिः । सर्वत्रापरोक्षे प्रमात्रवकुण्ठनस्यैव मन्मते प्रयोजकत्वादत्रैव लाघवम् । न च 'मैत्रे चैत्रोऽय'मिति भ्रमस्य प्रसिद्धचैत्रविषयकत्वं अवश्यं वक्तव्यम् । प्रातिभासिकचैत्रज्ञानात् प्रसिद्धचैत्रार्थिप्रवृत्तेरयोगात् । रजतसामान्यज्ञानाद्धि रजतसामान्यार्थिप्रवृत्तिः सम्भवति । नैवमन्यव्यक्तिज्ञानात् अन्यव्यक्त्यर्थिप्रवृत्तिरसम्भवतीति वाच्यम् । मैत्रे चैत्रभ्रमान-

न्तरं चैत्रो मे स्यादितीच्छापूर्विका प्रवृत्तिः । सा तु चैत्रत्वप्रकारकज्ञानाद्भवति । ज्ञानस्य स्वसमानप्रकारकेच्छाद्वारा प्रवर्तकत्वोपपत्तेः । न चैवं 'तदेवेदं रजत'मिति प्रत्यभिज्ञा कथमुपपद्यते । प्रत्युत्पन्ने पुरोवर्तिनि तत्ताया अभावात्तत्रान्यथाख्यात्यङ्गीकारेऽन्यत्रापि सैवास्त्विति वाच्यम् । तत्तांशे परोक्षत्वेनान्यथाख्यात्यङ्गीकारेऽप्यापरोक्ष्यस्य प्रमात्रवकुण्ठनं विनासम्भवात् 'इदं रजत'मित्यादावनिर्वचनीयत्वोपपत्तेः । अत्रापि वा संसर्गारोपाभ्युपगमात्तस्मिन्नंशे अनिर्वचनीयत्वोपपत्तेः । तत्तांशे तु सर्वप्रत्यभिज्ञासाधारण्येन स्मृतिरूपत्वं सिद्धान्ते इष्टमेव । 'पर्वतो वह्निमा'नित्यनुमितिरूपभ्रमे तु दोषबलाद्वह्निरुत्पद्यत इति न कुत्राप्यन्यथाख्यातिः । शशशृङ्गमिति विकल्पस्त्वसत्ख्यातिरेव । दोषाभावदशायामपि जायमानत्वात् । तं केचिदिति । नन्वत्र मतान्तरोपन्यासः किमर्थः । न तावत् सम्मत्यर्थः । विरुद्धत्वात् । नापि निराकरणार्थः । दूषणानभिधानादिति चेन्न । भ्रमस्सर्वसम्प्रतिपन्न इत्येतावन्मात्रे संवादार्थः । यद्यपि सोऽप्यंशोऽख्यातिवादिनोऽसम्प्रतिपन्नः, तथापि तमंशं साधयित्वा सम्प्रतिपत्त्यर्थः । विषयांशे तु केचिदित्यस्वरसोद्भावनाद्दूषणार्थः । तत्रात्मख्यातिमते रजतमात्मधर्मः दोषबलादिदन्त्वेन प्रतीयते । न तु बहिरेव रजतमुत्पद्यते । तथासति 'नेदं रजतमि'ति बाधो द्वयोः कल्पनीयः । भ्रमविषयस्य रजतस्य धर्मिणः तद्धर्मस्येदंत्वस्य चानिर्वचनीयमते उभयोरपि कल्पितत्वोपगमात् । मन्मते त्विदंत्वमात्रस्य बाधः, न रजतस्य । तस्यात्मधर्मस्य सत्त्वाभ्युपगमात् शून्यवादिव्यतिरिक्तानां सर्वेषां सौगतानामप्यन्तरार्थेषु सत्त्वे विप्रतिपत्त्यभावात् । तत्रेदंत्वरूपे बाधिते तदान्तरत्वेन पर्यवस्यति । तं केचिदन्यत्र शुक्तौ बाह्यायामन्यधर्मस्याध्यासः । आत्मधर्मस्य रजतस्य योऽवभासस्स एवाध्यास इति वदन्ति । एतदपरे न क्षमन्ते । रजतस्यान्तरत्वे प्रमाणाभावात् । न ह्यान्तरत्वेन कुत्रापि भ्रमस्थले प्रमास्थले वा केचिद्रजतमनुभवन्ति । तथा हि सति 'अहं रजतं, मयि रजतमि'ति वा प्रत्ययस्स्यात । 'इदं रजत'मित्येव तु सर्वत्र प्रत्ययः । ननु, सर्वत्र मास्तु आन्तरत्वम् । भ्रमस्थले तु तथा किं न स्यात् । इदंत्वस्य बाधादिति चेन्न । इदंत्वं सन्निहितत्वम् । तत्बाधे असन्निहितत्वं पर्यवस्यति । तच्चापणादिगतस्य प्रसिद्धमेव । अतो न बाधेनात्माकारत्वं व्यवस्थापयितुं युक्तम् । न चापणादिगतस्य प्रत्यक्षत्वानुपपत्तिः । न ह्यख्यातिवादे तस्य प्रत्यक्षत्वमभ्युपगम्यते । किं तु पूर्वानुभववशात् रजतस्य स्मृतिः । पुरोवस्थितस्य शुक्त्यादेर्दोषबलाच्छुक्तित्वेनावभासाभावश्चक्षुस्सान्निकर्षवशादिदन्त्वेन ग्रहणम् । दोषवशादेव च विषयज्ञानयोर्विद्यमानोऽपि भेदो न गृह्यते । तावन्मात्रेण चेदं रजतमिति व्यवहारो रजतार्थि-

प्रवृत्तिश्च। न त्वनिर्वचनीयान्यथाख्यातिमतवदपूर्वो विषयः, विशिष्टज्ञानं वा, संसर्गावगाहि किञ्चिदभ्युपगम्यते । असंसर्गाग्रहेण प्रवृत्त्युपपत्तावतिरिक्तकल्पने गौरवात् । अपि च तन्मते क्वचित् ज्ञानस्याप्रामाण्येऽभ्युपगते ज्ञानत्वरूपसाधारण धर्मदर्शनात् सर्वत्राप्रामाण्यशङ्काप्रसरो भवेत् । तथा च न कुत्रापि पुरुषो निष्कंपं प्रवर्तेत । निष्कम्पप्रवृत्तिमात्रे अप्रामाण्यशङ्काविरहस्य, प्रामाण्यनिश्चयस्य वा प्रयोजकत्वात् । सति संशये उभयोरसम्भवात् । न चैवं दोषाभावस्थलेऽपि विशिष्टज्ञानं मास्तु । असंसर्गाग्रहेण सर्वोपपत्तेरिति वाच्यम् ; तत्र संवादिप्रवृत्त्यात्मककार्यवैलक्षण्यस्य साधारणेनासंसर्गाग्रहेणासम्भवात् । असाधारणकारणापेक्षायां संसर्गोपस्थितिर्विलक्षणं कारणं कल्प्यते । न च तत्कल्पने किञ्चिदनाश्वासादिरूपं बाधकमस्तीत्यतो भ्रमो नाम न ज्ञानान्तरमस्ति । भ्रमत्वप्रसिद्धिस्तु विसंवादिप्रवृत्तिजनकत्वमात्रेण द्वयोरेव ज्ञानयोरुपपद्यते । भेदग्रहश्च भेदाग्रहाभावः । तस्मिन् सति प्रवृत्तिर्नजायते । भेदाग्रहस्य कारणस्याभावे प्रवृत्त्यनुपपत्तेः । प्रवृत्त्यभाव एव च बाध इत्युच्यते । तदिदमाह केचित्तु **यत्र यदध्यास इति** । अन्येषां वादिनां प्रसिद्धिः । तद्विवेकाग्रहनिबन्धनः तयोरिदंरजतयोः विवेकस्य भेदस्याग्रहणं निबन्धनं स्वरूपं यस्य भेदाग्रहस्य, स एव भ्रम इत्यर्थः । अत्रायमस्वरसः—भेदाग्रहात् प्रवृत्तिरिति मतमसङ्गतम् । प्रवृत्तौ प्रवृत्तिविषयज्ञानं इष्टोपस्थितिश्च कारणं, न भेदाग्रहमात्रमिति परस्यापि संप्रतिपन्नम् । तत्र भेदाग्रहोऽप्यधिकं कारणं किमर्थमिति पृष्टे परेणेत्थं वक्तव्यं । यत्रेदं यत्किञ्चिद्रजतं तदिति पुरोवर्तिनो देशात् भिन्नदेशे रजतं गृह्यते । तत्रेष्टोपस्थितौ सत्यामपि पुरोदेशे न प्रवर्तते । पुरोवर्तिनो रजतस्य चासंसर्गाग्रहात । अतोऽसंसर्गग्रहस्य प्रतिबन्धकत्वात्तदभावः कारणमिति । तथासति इष्टाभेदग्रहस्य निवृत्तिप्रतिबन्धकतया तदग्रहो निवृत्तौ कारणमिति इदं रजतमित्यत्र तव मते उभयोस्समावेशात् प्रवृत्तिनिवृत्त्योस्तटस्थ एव पुरुषो भवेत् । यदि तु भावाभावयोर्मध्ये भावस्य लघुत्वात् इष्टभेदग्रह एव निवृत्तौ कारणं, तदा प्रवृत्तावपि इष्टाभेदग्रह एव कारणमस्तु । यदि तु भ्रमस्थले इष्टाभेदग्रहस्याप्रसिद्धतया तदभावो न सम्भवतीत्युच्येत तदा प्रमास्थले इष्टभेदग्रहस्याप्रसिद्धतया तदभावोऽपि न सम्भवतीति तुल्यम् । यदि पुरोवर्त्तिनीष्टभेदग्रहविषयत्वाभाव एव प्रयोजकः, तत्र च नानुपपत्तिः । घटादाविष्टभेदग्रहविषयत्वस्य प्रसिद्धतया रजते तदभावस्य सुलभत्वादिति उच्येत, तदा इष्टाभेदग्रहविषयत्वस्य रजते प्रसिद्धतया पुरोवर्तिनि शुक्त्यादौ तदभावः कारणमिति अख्यातिवादिना प्रवृत्तिनिवृत्त्योस्ताटस्थ्यं वा

स्वीकर्तव्यं, प्रवृत्तौ पक्षपाते विशिष्टज्ञानस्य निवृत्तौ कारणत्वं वदता प्रवृत्तावपि तथैव स्वीकर्तव्यम्। लाघवयुक्तेरुभयत्रापि तुल्यत्वात्। अपि च येन विशिष्टज्ञानस्य कारणत्वमुच्यते, तन्मते एकमेव कारणं संसर्गविषयत्वकल्पनेनैवासंसर्गग्रहस्थलव्यावृत्तिसिद्धेः। परेण तु प्रतिबन्धकाभावतया असंसर्गाग्रहः कारणान्तरं कल्पनीयमिति महत् गौरवम्। अपि च रङ्गरजतयोः 'इमे रजते' इत्यत्रांशद्वये तुल्यतयोल्लेखेऽपि रङ्गांशे असंसर्गाग्रहः, रजतांशे संसर्गग्रह इति वदतानुभवानुसारः परित्यक्तः। तदस्तु रजतांशेऽप्यसंसर्गाग्रहः। मास्तु च कुत्रापि विशिष्टज्ञानम्। अर्धजरतीयस्यान्याय्यत्वादित्येव स्वीकर्तुं युक्तम्। अथ न तथा युक्तम्। तथात्वे संवादिप्रवृत्तिरूपकार्यवैलक्षण्यं न स्यादित्युच्यते, तदा प्राप्तमपरमपि गौरवम्। विशिष्टज्ञानजन्यतायां प्रवृत्तित्वस्यैवावच्छेदकत्वसम्भवे तत् परित्यज्य संवादिविषयप्रवृत्तित्वस्य तथात्वकल्पनात्। प्रवृत्तिमात्रे इष्टासंसर्गाग्रहः कारणं, संवादिप्रवृत्तौ विशिष्टज्ञानं कारणमिति प्रकारद्वयकल्पनाच्च। मन्मते तु सर्वत्र प्रवृत्तित्वेन लघुना विशिष्टज्ञानत्वेन एकेनैव कार्यकारणभावग्रहात् नास्ति गौरवमिति स्पष्टमेव। प्रवृत्तौ संवादित्वं हीष्टफलसमर्थवस्तुविषयत्वम्। तच्चार्थसत्तासमाजग्रस्तमिति न कार्यतावच्छेदककोटौ निवेशनीयम्। न चैवंसति भ्रमरूपं विशिष्टज्ञानं किञ्चित् कल्पनीयमिति तवापि गौरवमिति वाच्यम्। तस्य लाघवतर्कनिष्पन्नकार्यकारणभावग्रहमूलकतया फलमुखत्वेनादोषत्वात्। अपि च निर्धूमे वह्निमति पर्वते जायमानायां वह्निविषयकसदनुमितौ यत्र 'वह्निव्याप्यधूमवानि'ति परामर्शः, तत्र परेण पक्षे धूमासंसर्गग्रहविषयत्वाभाव एव कारणं वाच्यमित्यनुमितिमात्रे हेतोः पक्षासंसर्गाग्रह एव कारणत्वेन स्वीकर्तव्यः। वैरूप्यकल्पनाया अनुचितत्वात्। तथा च 'इदं रजतमि'ति भ्रमस्थले इष्टसाधनताव्याप्यरजतत्वासंसर्गाग्रहस्येदमंशे सम्पन्नतया कारणानुसारेण 'इदमिष्टसाधनमि'ति भ्रमरूपानुमितिः केन वारयितुं शक्या। प्रत्यक्ष इवानुमितावर्थसत्ताया अनपेक्षितत्वात्। अन्यथा भूतभविष्यतोरनुमितिर्न स्यात्। एवं रजतत्वांशे असंसर्गाग्रहवादिनोऽपि इष्टसाधनतांशे भ्रमरूपविशिष्टज्ञानं गलग्रहन्यायेन प्राप्नोत्येव। तत्किमाद्यवेव पलायनेनेति रजतत्वांशेऽपि तदस्तु। अपि च सत्यरजतस्थले नेदं रजतमिति ज्ञानस्य न रजतासंसर्गविषयत्वं वक्तुं शक्यत इति तत्रापीष्टासंसर्गाग्रहस्य सत्त्वात् प्रवर्तेत। अथ स्वातन्त्र्यं तत्र नास्ति। तच्च भेदप्रतियोगित्वेनानुपस्थितत्वं तत्र वक्तव्यम्। तत् पृथक्भूतं कारणं, उत इष्टविशेषणतया असंसर्गाग्रहे स्वीक्रियते। तत्र न तावद्द्वितीयः।

'नेदं रजतमि'ति भ्रमस्थले भेदप्रतियोगित्वेनानुपस्थितेष्टभेदाग्रहस्य द्वितीयपक्षे पर्यवसितस्य कारणस्य विद्यमानत्वात्। अयं हि विशिष्टाभावो 'नेदं रजतमि'ति भ्रमस्थले इष्टभेदग्रहरूपस्य विशेष्यस्याभावमादाय इष्टस्य भेदप्रतियोगित्वेन उपस्थिततया भेदप्रतियोगित्वेनानुपस्थितत्वरूपविशेषणाभावमादाय च सिध्यतीति यदर्थं विवक्षितं, तत् न सिध्यति। अपि चैतद्विवक्षाभावे 'नेदं रजतमिति प्रमास्थले प्रवृत्तिर्न प्रसज्यते। भेदग्रहस्य सत्त्वेन तदभावस्याभावात्। विवक्षायां तु तत्र विशेष्यसत्त्वेऽपि भेदप्रतियोगित्वेनोपस्थिततया विशेषणाभावमादाय विशिष्टाभावस्सिध्यतीति तत्रापि प्रवृत्तिः प्रसज्यत एव। किं बहुना भेदप्रतियोगित्वेनानुपस्थितेष्टभेदग्रहस्य प्रतियोगिनोऽप्रसिद्ध्या तदभाव एव न प्रसिध्यति। इष्टभेदग्रहस्थले इष्टस्य भेदप्रतियोगित्वेन उपस्थितिनियमात्। तथा अनुपस्थितेष्टभेदाग्रहस्य दुस्सम्पादत्वात्। प्रतियोग्यप्रसिद्ध्या तदभावाप्रसिद्धौ तादृशविशिष्टाभावस्य कारणत्वं दूरोत्सारितमिति न द्वितीयकल्पः सङ्गच्छते। अथेष्टभेदाग्रह एकं कारणम्। इष्टस्य भेदप्रतियोगित्वेनानुपस्थितत्वमपरं कारणमित्याद्यः पक्षः स्वीक्रियते, तदा गौरवं तावत् स्पष्टमेव। 'इदं रजतं घटनिष्ठभेदप्रतियोगी'ति ज्ञाने च प्रवृत्तिर्न स्यात्। भेदप्रतियोगित्वेनोपस्थिततया तदभावस्याभावात्। अथ पुरोवर्तिगृह्यमाणसंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वम्। इदं रजतं घटनिष्ठभेदप्रतियोगीत्यत्र तु घटगृह्यमाणसंसर्गकभेदप्रतियोगित्वेन उपस्थितावपि पुरोवर्तिगृह्यमाणसंसर्गकभेदप्रतियोगित्वेन नोपस्थितत्वमस्ति। अतो नानुपपत्तिरिति चेन्न। तथासति नेदं रजतमिति भ्रमस्थले अख्यातिवादिनो भेदे पुरोवर्तिगृह्यमाणसंसर्गत्वस्य वक्तुं अशक्यतया भेदप्रतियोगित्वेनोपस्थितिरूपस्य विशेष्यस्य सत्त्वे केवलाभावस्य वक्तुं अशक्यत्वेऽपि पुरोवर्तिगृह्यमाणसंसर्गकत्वरूपविशेषणाभावमादाय विशिष्टाभावः प्राप्नोतीति तत्र प्रसज्यत एव प्रवृत्तिः। अथ पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वम्। तच्च नेदं रजतमिति भ्रमेऽपि न सम्भवत्येव। तत्र हि यथा पुरोवर्तिगृहीतसंसर्गको न भवति भेदः, तथा पुरोवर्तिगृहीतासंसर्गकोऽपि न भवति। ततश्च पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनोपस्थितत्वात् रजतस्यानुपस्थितत्वरूपस्वातन्त्र्यं तत्र नास्तीति न प्रवृत्तिः। रजतं घटनिष्ठभेदप्रतियोगीत्यत्र तु रजतभेदसंसर्गाभावरूपस्य रजताभेदस्य पुरोवर्तिनि गृहीततया पुरोवर्तिन्यगृहीतासंसर्गको न भवति रजतभेद इति भेदप्रतियोगित्वेनोपस्थितिरूपविशेष्यस्य सत्वेन केवलाभावस्य वक्तुमशक्यत्वेऽपि पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनोपस्थितिरूपस्य विशिष्टस्य प्रतियोगिनोऽभावस्संभवतीति न तत्र प्रवृत्त्यनुपपत्तिरिति चेन्न। परमते यथा 'नेदं रजत-

मि'ति अधिकरणसंसर्गग्रहं विना सप्रतियोगिकभेदग्रहरूपो ऽसंसर्गाग्रहः, एवं 'रजतमिदं ने'ति प्रतियोगिसंसर्गग्रहं विना साधिकरणकभेदग्रहरूपोऽसंसर्गाग्रहस्संभवतीति तत्र प्रवृत्तिस्स्यात् । स्वातन्त्र्यस्य तत्रापि सम्भवात् । तत्र हि पुरोवर्तिन्यधिकरणे गृहीतसंसर्गत्वेन पुरोवर्तिन्यग्रहीतासंसर्गको भवति भेदः । रजते च तत्प्रतियोगित्वस्याग्रहात् पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वमस्तीति । अथ भेदप्रतियोगित्वेनानुपस्थितत्वमित्यनेन भेदप्रतियोगित्वासंसर्गाग्रहाभावो विवक्षितः । एवं च निष्प्रतियोगिकोपस्थितिस्थले यथा रजते भेदप्रतियोगित्वसंसर्गग्रहो नास्ति, एवं भेदप्रतियोगित्वासंसर्गग्रहोऽपि नास्तीति तत्र भेदप्रतियोगित्वासंसर्गाग्रहस्य विद्यमानतया तदभावो नास्तीति न तत्र स्वातन्त्र्यम् । रजतं घटनिष्ठभेदप्रतियोगीत्यत्र भेदप्रतियोगित्वसंसर्गग्रहसत्त्वेनासंसर्गाग्रहाभावो यद्यपि न विद्यते, तथापि भेदे पुरोवर्त्यगृहीतासंसर्गकत्वं नास्तीति पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रहाभावरूपं स्वातन्त्र्यं तत्र सम्भवतीति न काचिदनुपपत्तिरिति चेन्न । एवमपीदं रजतं घटनिष्ठभेदप्रतियोगीति भ्रमस्थले अभेदग्रहस्य वक्तुमशक्यतया पुरोवर्त्यगृहीतासंसर्गको भवति भेदः, तत्प्रतियोगित्वेनोपस्थिते रजते प्रतियोगित्वासंसर्गाग्रहो विद्यत इति विशेषणविशेष्ययोरुभयोरपि सत्त्वान्न विशिष्टाभावरूपं स्वातन्त्र्यं सम्भवतीति तत्र प्रवृत्तिर्न स्यात् । अपि च 'रङ्गरजतयोरिदं रजतं नेदमि'ति विपरीतभ्रमस्थले रङ्गे प्रवृत्तिर्न स्यात् । तत्र पुरोवर्तिनि रङ्गे अगृहीतासंसर्गको भवति रजतभेदः । तत्प्रतियोगित्वेन च रजतस्योपस्थितत्वात् पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रह एव विद्यत इति न तदभावरूपं स्वातन्त्र्यं सम्भवतीति । किं बहुना 'इदं रजतमि'ति प्रसिद्धभ्रमस्थलेऽपि नोक्तस्वातन्त्र्यसम्भवः । तत्र पुरोवर्तिन्यां शुक्तौ अगृहीतासंसर्गकभेदस्य रजते प्रतियोगित्वं यथा न गृह्यते, तथा प्रतियोगित्वासंसर्गोऽपि न गृह्यत इति पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रहसत्त्वान्न तदभावरूपं स्वातन्त्र्यं सम्भवतीति तत्रापि प्रवृत्तिर्न स्यात् । यच्चोक्तं क्वचित् ज्ञानस्याप्रामाण्ये सर्वत्रापि प्रामाण्यसंशयापत्त्या निष्कम्पप्रवृत्तिर्न स्यादिति, तन्न । परस्यापि क्वचिद्विद्यमानासंसर्गाग्रहाङ्गीकारे सर्वत्रापि तत्संशयापत्त्या निष्कम्पप्रवृत्तिर्न स्यादिति तुल्यम् । अतः परेणापि निष्कम्पप्रवृत्तिरित्थमुपपादनीया । तत्र यदि परतस्त्ववाद आश्रीयते, तदा तदनुसारेण । स च वाद इत्थं—तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यम् । इदं च सर्वेषामपि सम्प्रतिपन्नम् । यद्यपि सिद्धान्ते इदं शुक्तिरजतज्ञानसाधारणम् । तदप्रामाण्यं चाभ्युपगम्यते, तथाप्यनेनोपाधिना सिद्धान्ते

तत् प्रमाणमेव उपगम्यते । प्रवृत्तावपि तावदेवोपयुज्यते । तज्ज्ञानेनैव तदभाववत्ताज्ञानप्रतिबन्धसम्भवात् । अप्रामाण्याभ्युपगमस्तु बाध्यत्वाभिप्रायेण । परतस्त्वमते च न प्रामाण्यज्ञानं प्रवृत्तौ कारणं शक्यते वक्तुम् । अनवस्थापातात् । तथा हि प्राथमिकानुव्यवसायेन प्रामाण्यघटकीभूतस्तद्वत्तांशो न गृह्यते । अनभ्यासदशापन्नजलादिज्ञाने प्रामाण्यसंशयानुसारात् । घटकाज्ञाने तद्घटितं प्रामाण्यमपि न गृह्यते । किन्तु समीपोपसर्पणानन्तरं वह्नित्वप्रकारकज्ञानविषयीभूते दाहादिसामर्थ्योपलम्भे इदं ज्ञानं दाहसमर्थे वह्नित्वप्रकारकमिति प्रतीते तेन विशिष्टेन धर्मेणानुमीयते । एवं यथासम्भवं तत्र तत्रान्येऽप्युपायास्सम्भवन्तीति अभ्युपगमः । तत्र यदि प्रवृत्तिप्रतिबन्धकीभूताप्रामाण्यप्रतीतिविघटकतया प्रामाण्यज्ञानस्य कारणत्वमभ्युगम्येत, तदा प्रामाण्यग्रहकारणीभूतलिङ्गज्ञानेऽपि अप्रामाण्यज्ञानस्य प्रामाण्यानुमितिप्रतिबन्धकत्वात्तदनुमितौ लिङ्गज्ञानप्रामाण्यज्ञानमपि कारणं भवेत् । एवं तत्र तत्र प्रामाण्यानुमितौ तत्तल्लिङ्गज्ञानप्रामाण्यज्ञानमपीत्यनवस्था । अतोऽप्रामाण्यज्ञानाभाव एव प्रवृत्तौ कारणम् । स च क्वचित्स्वारसिकः । यत्र त्वप्रामाण्यज्ञानं केनचित् कारणेनावतरति, तत्र प्रामाण्यज्ञाने यत्नानुसरणमिति सर्वत्र प्रामाण्यज्ञानानपेक्षणात् नानवस्था । एवं यदि त्वयाप्युत्पन्ने ज्ञाने यत्र स्वारसिकः असंसर्गाग्रहत्वज्ञानाभावः, तत्र तावतैव प्रवृत्तिः । यत्र तु दोषसहकृतसामग्रीजन्यत्वज्ञानेनासंसर्गाग्रहत्वज्ञानं, तत्र यत्नान्तरमनुसरणीयमिति प्रवृत्तौ प्रामाण्यज्ञानस्य कारणत्वं परित्यज्य उच्यते । तदन्यस्यापि तुल्यम् । यदि च भावाभावयोर्मध्ये भावस्यैव लघुत्वात् अप्रामाण्यज्ञानविघटकतया प्रामाण्यज्ञानस्यैव प्रवृत्तौ कारणत्वमुच्यते, तदा तु प्रामाण्यस्य स्वतस्त्वमनवस्थापरिहारायाभ्युपेयम् । तदित्थं ज्ञानस्वप्रकाशत्वे अस्वप्रकाशत्वे वा यत्र सविषयकं ज्ञानं भासते, तत्र सर्वत्र तद्गतं प्रामाण्यं गृह्यत एवेति उत्सर्गः । परस्त्ववादिनापि हि वह्निज्ञाने भासमाने वह्नित्वप्रकारकत्वं, तज्ज्ञाने यद्विशेष्यं तद्विशेष्यकत्वं च भासत इति अभ्युपगतमेव । प्रकारविशेष्ययोः परं वैशिष्ट्यमात्रं न भासत इत्युच्यते, तन्निर्बन्धमात्रम् । योग्यस्याभानकल्पनाया विरुद्धत्वात् । अयोग्यत्वे च कदापि न भासेतेति प्रामाण्यग्रह एव लुप्तो भवेत । न चैवं जलादिज्ञाने प्रामाण्यसंशयो न स्यादिति वाच्यम् । यथा दोषवशाद्योग्यत्वेऽपि स्थाणुत्वांशे निश्चयो न भवति । एवं प्रामाण्यांशेऽपि सम्भवात् । एवं च सति चक्षुरुन्मीलनानन्तरं 'इदं जलं जलत्वेन जानामी'ति व्यवहारोऽपि सङ्गच्छते । अत्र हि जले जलत्ववैशिष्ट्यं, ज्ञाने च जलविशेष्यकत्वे सति जलत्वप्रकारकत्वं च व्यवह्रियते । इदमेव च जलज्ञानस्य प्रामाण्यम् । स्वतःप्रामाण्यानभ्युपगमे चायं व्यवहारो न स्यात् ।

अपि च तदनभ्युपगमे अनुमानेनापि तद्ग्रहीतुं न शक्यते । तत् लिङ्गानिरूपणात् । न चेदं वह्निज्ञानं प्रमाणम् । दाहसमर्थे वह्न्यर्थिप्रवृत्तिजनकत्वादित्येवंरूपं अनुमानं सम्भवतीति वाच्यम् । एवमपि ज्योतिष्टोमादिवाक्यजन्यज्ञाने प्रामाण्यानुमितौ तादृशं लिङ्गं न सम्भवति । एतादृशलिङ्गज्ञानं हि प्रवृत्त्यनन्तरं यत्र फलजननसामर्थ्योपलम्भः, तत्रैव । ज्योतिष्टोमादिवाक्ये तु प्रवृत्तेः प्रागेव प्रामाण्यनिर्द्धारणमपेक्षितम् । अन्यथा निष्कम्पप्रवृत्त्यनुपपत्तेः । नापि गुणजन्यत्वलिङ्गकानुमानं सम्भवति । प्रमाया गुणजन्यत्वस्यैवासम्प्रतिपत्तेः । तत्र गुणशब्देन किं चक्षुर्गतं, रूपं विवक्षितं, उत भूयोऽवयवेन्द्रियसन्निकर्षस्थूलावयविसन्निकर्षो वा, यावद्विषयेन्द्रियसन्निकर्षो वा, विशेषणवद्विशेष्येन्द्रियसन्निकर्षो वा, अर्थयाथार्थ्यज्ञानं वा । तत्र न तावच्चक्षूरूपं तथा सम्भवति । तस्य हि चाक्षुषप्रमायां गुणत्वं वक्तव्यम् । तत्तु न सम्भवति । तस्यास्तज्जन्यत्वे प्रमाणाभावात् । न च व्यञ्जकतेजोरूपत्वेन आलोकरूपवत् तस्य जनकत्वमिति वाच्यम् । उद्भूतस्यैव तथाविधस्य जनकत्वात्। चक्षूरूपस्य चानुद्भूतत्वात् । उद्भूतानुद्भूतसाधारण्येन लाघवाद्व्यञ्जकरूपत्वेनैव जनकत्वेऽपि तादृशगुणजन्यत्वस्य सर्वप्रमासाधारण्यं न सम्भवति । अत एव भूयोऽवयवेन्द्रियसन्निकर्षो न गुणः । तस्य स्थूलावयविप्रत्यक्षप्रमायां कारणत्वेऽपि सर्वत्र तज्जन्यत्वस्य प्रामाण्यानुमितिलिङ्गत्वासम्भवात् । न च तस्यामपि तस्य कारणत्वम् । भूयोऽवयवेन्द्रियसन्निकर्षाभावेऽपि यत्किञ्चित्प्रदेशे सन्निकर्षमात्रेण तदवच्छेदेन स्थूलावयविप्रत्यक्षदर्शनात् । न च सर्वावयवावच्छेदेन स्थूलावयविप्रत्यक्षप्रमायां स कारणमिति वाच्यम् । यदवयवावच्छेदेन यत्र सन्निकर्षः, तदवयवावच्छेदेन तस्य प्रत्यक्षत्वमिति विशेषकारणादेवोपपत्तौ पृथक्कारणत्वकल्पनायाः अयोगात् । नापि स्थूलावयवावच्छेदेन सन्निकर्षः स्थूलावयविप्रत्यक्षप्रमायां गुणः । द्व्यणुकाद्यवच्छेदेन सन्निकर्षे भ्रमस्यापि अनुदयेन तस्य प्रमायां असाधारणकारणरूपगुणत्वानुपपत्तेः । नापि यावद्विषयेन्द्रियसन्निकर्षो गुणः । तस्यापि भ्रमसाधारणत्वेन प्रमां प्रत्यसाधारणकारणगुणत्वानुपपत्तेः । न हि यावद्विषयेन्द्रियसन्निकर्षं विना परमते भ्रमोऽपि सम्भवति । यदि तु दोषवशादसन्निकृष्टस्यैव रजतादेर्भानं सम्भवतीत्युच्यते, तदा निधिशास्त्रोक्ताञ्जनादिवशादसन्निकृष्टस्यैव निधेर्भानं सम्भवतीति यावद्विषयसन्निकर्षः प्रमायामपि गुणो न स्यात् । न च विशेषणवद्विशेष्येन्द्रियसन्निकर्षो गुणः । लोहितस्स्फटिक इति भ्रमेऽपि परम्परासम्बन्धेन विशेषणवतो विशेष्यस्य सन्निकर्षोऽस्तीति तस्यापि न प्रमां प्रति असाधारण्यम् । न च येन सम्बन्धेन विशेषणवत्तावगाहिज्ञानं, तेन सम्बन्धेन विशेषणव-

द्विशेष्येन्द्रियसन्निकर्षो न भ्रमसाधारण इति वाच्यम् । यत्तत्पदघटितत्वेनाननुगतस्यानुगतधर्मावच्छेदेन कार्यप्रयोजकत्वासम्भवात् । परेण यावद्विषयेन्द्रियसन्निकर्षस्य विशेषणवद्विशेष्यसन्निकर्षस्य च प्रत्यक्षप्रमायामेव गुणत्वाङ्गीकारेणास्यैत्रिकत्वाच्च । नापि प्रमामात्रे अर्थयथार्थज्ञानं कारणम् । घटादिप्रमायां व्यभिचारेण तस्य कारणत्वानुपपत्तेः । यदि तु वक्तृवाक्यार्थयथार्थज्ञानस्य शाब्दप्रमायां कारणत्वात् 'यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्, सामान्ययोरि'ति न्यायेन प्रमामात्रेऽर्थयथार्थज्ञानस्य कारणत्वं कल्प्यते । यत्र चास्मदीयं तादृशं ज्ञानं न सम्भवति, तत्रेश्वरीयं तत् स्वीक्रियत इत्युच्यते, तदा शाब्दभ्रमे वक्तृवाक्यार्थभ्रमस्यापि कारणत्वकल्पनात् 'यद्विशेषयोरि'ति न्यायात् भ्रममात्रं प्रति भ्रमस्य कारणत्वं प्रकल्प्य यत्रास्मदीयभ्रमो न सम्भवति, तत्रेश्वरभ्रमस्य कारणत्वं कल्प्यत इतीश्वरे भ्रमोऽपि सिध्येत् । ननु, तदभाववति तत्प्रकारकं ज्ञानं भ्रमः । तदपेक्षया तदभाववज्ज्ञानं लघु । तदेव भ्रमे कारणमस्तु । तदाश्रयतायां चेश्वरस्य न कोऽपि विरोधः । एवं च सति प्रमायामपि तद्वत्ताज्ञानमेव कारणमस्त्विति आपादनन्तु नानिष्टम् । तावतापि प्रमाया गुणजन्यत्वसिद्धेः तदाश्रयतया ईश्वरसिद्धेश्चेति चेन्न । तदभाववज्ज्ञानस्य विशेषणविषयस्य प्रमायामपि कारणतया तदभाववज्ज्ञानत्वेन भ्रमासाधारणकारणत्वानुपपत्तेः । न च तदभाववद्विशेष्यकज्ञानं भ्रमे कारणम् । विशेषणज्ञानस्यापि प्रमाप्राचीनस्य रजतमित्येवंरूपस्य रजताभाववद्विशेष्यकत्वात् । नापि तदभाववद्भ्रमविशेष्यविशेष्यकज्ञानं कारणम् । तदपेक्षया भ्रमत्वस्यैव लघुतया कारणतावच्छेदकत्वसम्भवेन तद्घटितं गुरुकारणतावच्छेदकमुपेयम् । अतो 'यद्विशेषयोरिति न्यायेन प्रमामात्रे यथार्थज्ञानं कारणं वक्तुं न शक्यत इति न गुणजन्यत्वलिङ्गकानुमानं सम्भवति । ननु, पित्तादिदोषे न श्वैत्यादिप्रमा, तदभावे तत्प्रमेत्यन्वयव्यतिरेकाभ्यां पित्तदोषस्य तत्प्रमाप्रतिबन्धकत्वं, तदभावस्य कारणत्वं च तस्यामुपेयम् । एवमन्यत्रापि यथायथं दोषतदभावयोस्तत्तत्प्रमाप्रतिबन्धकत्वं कारणत्वं चाभ्युपेयमिति दोषाभावजन्यत्वलिङ्गकमनुमानं सम्भवतीति चेन्न । दोषस्य प्रतिबन्धकत्वेऽपि तदभावस्य कारणत्वासम्भवात् । न हि कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम् । किं तु सत्यां सामग्र्यां कार्यानुत्पादप्रयोजकत्वम् । इतरथा व्यभिचारादिज्ञानानामनुमितिप्रतिबन्धकत्वाभावप्रसङ्गात् । अव्यभिचारज्ञानस्यैव तद्विरोधिनोऽनुमितौ कारणत्वाभ्युपगमेन व्यभिचारज्ञानाभावस्य प्रतिबन्धकाभावत्वेऽपि कारणत्वानङ्गीकारात् । अत एवोत्पत्तावपि परतस्त्वं परास्तम् । भ्रमप्रमासाधारणज्ञानसामग्रीतोऽधिकसामग्रीजन्यत्व-

मेव प्रमायाः परतस्त्वम् । सा चाधिका सामग्री गुणो वा दोषाभावो वेति ते वदन्ति । तच्चोक्तगत्या न सम्भवतीति । न चैवं जन्यप्रमात्वमाकस्मिकं स्यादिति शङ्कनीयम् । जन्यज्ञानत्वं भ्रमप्रमासाधारणज्ञानसामग्रीमात्रप्रयोज्यम् । नाकस्मिकम् । प्रमात्वं तु तद्वति तत्प्रकारकत्वरूपं यतच्छब्दार्थघटितत्वात् अननुगतं नानुगतं किञ्चित् कारणमपेक्षते । ततश्च भ्रमप्रमासाधारणज्ञानसामग्र्यतिरिक्तकारणानपेक्षत्वरूपमुत्पत्तावपि प्रमायां स्वतस्त्वं सिध्यति । ननु, ज्ञप्तिस्वतस्त्ववादिनापि यत्र दोषवशादप्रामाण्यसंशयः, तत्र न ज्ञानग्राहकसामग्र्यैव प्रामाण्यं गृह्यत इत्यभ्युपगतम् । तत्र च तन्निश्चयार्थं दोषासहकृतसामग्रीजन्यत्वलिङ्गकानुमानं अन्यद्वा प्रामाण्यनिश्चायकं किञ्चिदुपेयमिति तदेव सर्वत्र प्रथमप्रामाण्यज्ञाने परतस्त्ववादिनोऽपि भविष्यतीति चेन्न । योग्यधर्मस्य प्रामाण्यस्य सर्वत्र धर्मिग्राहकेण ग्रहणमित्युत्सर्गेण इदञ्जलञ्जलत्वेन जानामीति व्यवहारानुसारिणा प्रथमप्रामाण्यज्ञानस्यापि धर्मिग्राहकसामग्रीजन्यत्वसिद्धौ सर्वत्र यत्नान्तरानुसरणस्यानुचितत्वात् । ततश्च प्रामाण्यस्वतस्त्वसिद्धौ नाख्यातिवादिना सर्वत्रानाश्वासदोष आपादयितुं शक्यते । ननु, ज्ञानस्वप्रकाशत्वमते स्वतस्त्वन्नोपगमन्तुं युक्तम् । घटज्ञानेन हि स्वगतं घटत्वप्रकारकत्वे सति घटत्ववद्विशेष्यकत्वरूपं प्रामाण्यं स्वस्वरूपञ्चावभासत इत्युपगमे तत्र प्रामाण्यप्रकारकत्वे सति प्रामाण्यवद्विशेष्यकत्वं प्रामाण्यान्तरमपि भासत इत्यापन्नम् । न चैतद्युज्यते । तथा सति तत्रानन्तप्रामाण्यसमावेशेन तेषां सर्वेषामपि भानकल्पनमनुभवविरुद्धं आपद्यत इति चेन्न । स्वप्रकाशवादिना प्रामाण्यस्वतस्त्वं हि 'घटं घटत्वेन जानामी'ति व्यवहारानुसारेण कल्प्यते । अयं च व्यवहारः आद्यं यत् घटत्वांशे प्रामाण्यं, तत्रैव । नैवं प्रामाण्यांशेऽपि ज्ञानस्य यत् प्रामाण्यं. तत्रापि 'इदं प्रमाणज्ञानं प्रमाणत्वेन जानामी'ति व्यवहारोऽस्ति । अतो घटांशे प्रमाण्यग्रहे तज्ज्ञाने यत्प्रामाण्यप्रकारकत्वप्रामाण्यवद्विशेष्यकत्वं प्रामाण्यांशे ज्ञानप्रामाण्यघटकं, तदयोग्यमिति कल्प्यते । अतो नानन्तप्रामाण्यग्रहापादनं सम्भवतीति । एवं मतान्तरेष्वस्वरसं सूचयित्वा स्वमतमुपसंहरति । **अन्ये तु यत्र यदध्यासस्तस्यैव तद्विपरीतधर्मत्वकल्पनामाचक्षत इति ।** अधिष्ठानस्य शुक्त्यादेर्विषमसत्ताकरजतात्मकतामनिर्वचनीयतां आचक्षत इत्यर्थः । न चान्येत्वित्युक्त्या मतान्तरोपन्यासोऽयमिति शङ्कनीयम् । स्वमतोपन्यासेऽपि हि भाष्ये तथा व्यवहारो दृश्यते आत्मा स भोक्तुरित्यपर इत्यादौ । रजतमिथ्यात्वं लोकप्रसिद्ध्यापि दृढयति । **तथा च लोक इति ।** अत्र वियदादेर्ब्रह्मण्यारोपं सम्भावयितुं आद्यो दृष्टान्तः । एकस्यैव ब्रह्मणो जी-

वेश्वररूपेण भेदे अपरो दृष्टान्तः । ननु, नायं व्यवहारः रजतादेर्मिथ्यात्वं प्रतिपादयति । किं तु शुक्तिभानस्य रजतभानतुल्यताम् । क्रियासादृश्यप्रतिपादकत्वात् वतिप्रत्ययस्येति चेन्न । अयं हि व्यवहारो नात्र रजतं मिथ्यैव रजतमिति तात्पर्येणेति सर्वलोकप्रसिद्धम् । अतः प्रयोगानुसारेण सादृश्यार्थयोरपि वतिप्रत्यये वशब्दयोर्दूरादागच्छन्देवदत्त इव देवदत्तवत् इत्यादावुत्कटकोटिकसंशयरूपसम्भावनार्थत्वमुपेयते । एवं प्रयोगानुसारेण अत्रापि वतिप्रत्ययस्य मिथ्यात्वमर्थो भविष्यतीति न काचिदनुपपत्तिः । अत्र शुक्तिग्रहणं वस्तुगतिमनुरुध्य । भ्रमदशायां शुक्तिकोल्लेखस्यासम्भवात् । एवं प्रत्यक्षप्राबल्यानुसारेण भासमानस्यानृतत्वानुपपत्त्या च कृतयोरध्यासाक्षेपयोः प्रत्यक्षस्य दौर्बल्यव्युत्पादनेनारोपितस्य भानसमर्थनेन च परिहारो दर्शितः । इदानीं स्वप्रकाशस्य निरंशस्य ब्रह्मणोऽधिष्ठानत्वं न सम्भवतीति आक्षेपः क्रियते । **कथं पुनरिति** । अयमाशयः—अपरोक्षाध्यासे आरोप्यवस्तुविनिर्मुक्ततया अधिष्ठानसामान्यांशगोचरं अपरोक्षज्ञानं विशेषांशाज्ञानं च अपेक्षितम् । 'इदं रजतमित्यध्यासेषु तथा दर्शनात् । न सर्वात्मनैव भासमानत्वम् । न वा सर्वात्मनैवाभासमानत्वम् । इदं च प्रत्यगात्मनि अन्तःकरणाध्यासे न सम्भवति । यस्य हि सांशस्य ज्ञानान्तरेण जन्येन भानं, तस्यांशभेदसम्भवात् । करणदोषेण विशेषांशज्ञानप्रतिबन्धे सति सामान्यांशगोचरमिन्द्रियेण ज्ञानं जायत इति युक्तम् । प्रत्यगात्मा तु निरंशः । नापि जन्यं ज्ञानं तद्विषयम् । तव मते तस्य स्वप्रकाशतया स्वरूपभुतेन नित्यज्ञानेनैव भानाभ्युपगमात् । अतो नित्यज्ञानस्य करणदोषवशात् सामान्यांशमात्रावगाहित्वं विशेषांशानवगाहित्वमिति तावदुक्तुं न शक्यते । तदिदमाह—**प्रत्यगात्मन्यविषय इति** । बुद्ध्यादिभ्यस्सांशेभ्यः प्रातिलोम्येन निरंशत्वरूपेण अञ्चति वर्तते इति प्रत्यगात्मा निरंश इति यावत् । अविषय इत्यनेनाध्यासोपयुक्तसामान्यांशमात्रग्रहणराहित्यमुक्तम् । ततश्च **नाध्यास** इत्यर्थः । उक्तमर्थं लोकदृष्ट्या साधयति—**सर्वो हीति** । पुरोवस्थिते अपरोक्षविषये सामान्यात्मना गृहीते । ननु सिद्धान्ते आत्मनस्स्वरूपज्ञानविषयत्वमेव न स्वीक्रियते । वृत्तिज्ञानवियत्वं तु स्वीक्रियते । परमार्थतस्सांशत्वाभावेऽपि काल्पनिकं सांशत्वमप्यस्ति । बुद्ध्यादिसहितत्वमेकोंऽशः । तद्विनिर्मुक्तत्वमपरोंऽशः । उभयानुस्यूतं स्वरूपमात्रं सामान्यांशः । ततश्च पूर्वपूर्वाध्यासविषयीकृते अहमित्येवंरूपेण भासमाने आत्मनि बुद्ध्यादिविनिर्मुक्तांशाग्रहणादुत्तरोत्तराध्यास उपपद्यत इत्यत आह—**युष्मत्प्रत्ययापेतस्येति** । युष्मत्प्रत्ययः युष्मच्छब्दोल्लेखिप्रत्ययः इदमित्येवंरूप इति यावत् । तदपेतः इदमित्येवम-

प्रतीयमानः । ततश्च यदि वृत्तिविषयत्वं स्वीक्रियेत । इदमित्येवं प्रतीतिस्स्यात् । घटादीनां वृत्तिविषयाणां तथा दर्शनात् । नापि बुद्ध्यादिव्यतिरिक्तत्वांशाग्रह इति वक्तुं शक्यते । तत्र मते अरोपिताभावस्याधिष्ठानमात्रतया आत्मस्वरूपे गृह्यमाणे तदग्रहासम्भवात् । अपि च वृत्तिविषयत्वेऽभ्युपगम्यमाने आत्मनो विषयत्वमिति सिद्धान्तविरोधः । न च स्वरूपज्ञानाभिप्रायेणाविषयत्वमिति न विरोध इति वाच्यम् । वृत्तिज्ञानाभ्युपगमे तावन्मात्रेणैवात्मव्यवहारोपपत्तौ तदतिरिक्तं स्वरूपभूतं स्वप्रकाशं ज्ञानमित्यभ्युपगमस्यैव निर्मूलत्वापत्तेः । अपि च आत्मनस्स्वाश्रितवृत्तिविषयत्वाभ्युपगमे कर्तृकर्मविरोधस्स्यात् । अतो नात्मन्यध्यासस्सम्भवतीति भावः । परिहरति—उच्यत इति । यत्तावदुक्तमात्मनो विषयत्वे अविषयत्वं न स्यात् । कर्तृकर्मविरोधश्च स्यादिति, तन्नेत्याह—न तावदिति । यथा घटवति भूतले नीलघटो नास्तीत्युक्त्या नैकान्तेन घटाभावो विवक्ष्यते । एवं स्वरूपज्ञानविषयत्वाभावोक्त्या अहंप्रत्ययविषयत्वेनाभ्युपगते आत्मनि नैकान्तेन विषयत्वाभावो विवक्षितः । नापि कर्तृकर्मविरोधः । स्वरूपज्ञानं प्रति न मुख्यं विषयत्वरूपं कर्मत्वं विवक्ष्यते । स्वविषयत्वेन स्वप्रकाशत्वानभ्युपगमात् । एकस्मिन्विषयविषयिभावविरोधात् । किं तु स्वरूपज्ञानजन्यव्यवहारविषयत्वरूपममुख्यं विषयत्वम् । वृत्तिविषयत्वं तु मुख्यमुपेयते । येन हि ज्ञानं निरूप्यते, स एव ज्ञानस्य विषय इत्युच्यते । अहमितिज्ञानं चात्मना निरूप्यत इति यथा घटज्ञाननिरूपकतया घटो विषयो भवति स्वज्ञानस्य । एवमात्मापि अहमितिज्ञानस्य । आत्मनो वृत्तिविषयत्वमपि नास्तीति तत्र तत्र ग्रन्थकृतां व्यवहारस्तु तदप्यात्मनि न पारमार्थिकमिति कृत्वा । व्यावहारिकं तदिष्यत एव । न चेदमप्यनुपपन्नम् । एकस्मिन्नेव ज्ञाने तस्यैव विषयत्वं तस्यैवाश्रयत्वमिति । दृश्यते हि 'अहं सुखी'त्यादिप्रत्यये तस्यैव विषयत्वं तस्यैवाश्रयत्वमिति । न च दृष्टेऽनुपपत्तिः । न च तत्र रूपभेदेन परिहारः । अहंत्वेनाश्रयत्वं, सुखित्वेन विषयत्वमिति । प्रकृतेऽपि तर्हि अहंत्वेन विषयत्वं, वृत्तिपरिणामित्वेनाश्रयत्वमिति न काचिदनुपपत्तिः । न च वृत्तिविषयत्वे इदमित्येव प्रत्ययस्स्यात् नाहमिति । न च चैतन्यविषयत्वमहमित्याकारे प्रयोजकम् । 'घटोऽयं स्फुरती'त्यादिप्रत्ययानां चैतन्यविषयत्वेऽपि अहमित्युल्लेखाभावात् । अतो वृत्तिविषयत्वे कथमहमित्युल्लेख इति वाच्यम् । वृत्तिविषयत्वं हि नेदमित्युल्लेखे प्रयोजकम् । किं तु अन्तःकरणशबलितात्मभिन्नत्वमेव । तच्छबलितत्वं तु अहमित्युल्लेखे प्रयोजकम् । श्रीकृष्णाद्यवतारेषु भगवतस्तथाविधव्यवहारः यथा शरीरित्वप्रयोजकपुण्यपापाद्यसंसर्गेऽपि श-

रीरित्वम् । एवमहं सर्वस्य प्रभव इत्युपपद्यते । अस्मदादिव्यवहार एव ह्येतत्प्रयोजकमिति न काचिदनुपपत्तिः । न च तथाव्यवस्थायां प्रमाणाभावः । 'अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ।' इति स्मृत्या 'अहङ्कारश्चाहङ्कर्तव्यं चे'तिवाक्येनान्तःकरणचतुष्टयान्तर्गततया प्रतिपादिताहङ्कारतादात्म्यभ्रमरूपमोहस्यैवाहमित्यभिमानप्रयोजकत्वाम्नानात् । नन्वहमितिवृत्तिविषयत्वाङ्गीकारे तावतैवात्मत्वव्यवहारोपपत्तौ किमिति स्वप्रकाशरूपत्वमात्मन इष्यत इत्यत आह—**अपरोक्षत्वाच्चेति** । प्रत्यगात्मरूपायाः प्रसिद्धेरपरोक्षत्वादित्यर्थः । अयमाशयः—आत्मा हि जन्तुमात्रस्य सन्देहविपर्ययपरोक्षापरोक्षप्रमास्थले तदभावदशायां च एकरूपतया अपरोक्षो निर्णीतः । प्रथते आन्तराश्च ज्ञानादयस्सहोत्पत्तिविनाशाभ्यां अव्यभिचरितप्रकाशाः तदेतत्सर्वं स्वप्रकाशं ज्ञानादिसाक्षिणं विहाय प्रकारान्तरेणोपपादयितुं न शक्यते । तथा हि तार्किकमते तावदनुव्यवसायगम्यं ज्ञानम् । न चोत्पन्ने ज्ञाने नियमेन तदनुव्यवसायोऽस्तीति शक्यते वक्तुम् । तथासति आन्तरज्ञानधाराणामविच्छेदप्रसङ्गेन बाह्यव्यवहार एव लुप्तस्स्यात् । एवं ज्ञानोत्पत्त्यादिकमपि कदाचिदेव प्रकाशमानं स्यात् । न च तन्मते ज्ञानोत्पत्तिः प्रत्यक्षीकर्तुं शक्यते । प्रत्यक्षे हि विषयस्य कारणत्वं वक्तव्यम् । ततश्च ज्ञानोत्पत्त्यनन्तरक्षणे तद्विषयेण प्रत्यक्षेण भवितव्यमित्यापन्नम् । तस्यां च दशायामुत्पत्तेरभावः । तस्याः क्षणिकत्वात् । विषयाभावकालं च ज्ञानं न तत्र प्राकट्यप्रयोजकम् । एवमात्मनोऽपि नाव्यभिचरितप्रकाशत्वं शक्यं तन्मते वक्तुम् । न हि स्वगतविशेषगुणानवगाहिद्रव्यप्रत्यक्षं तन्मते सम्भवति । तथा च आत्मनः अव्यभिचरितप्रकाशत्वाय आन्तरपदार्थज्ञानधाराभ्युपगमे बाह्यपदार्थज्ञानलोप एव स्यात् । न चानुभवानुसारिणात्मादीनामव्यभिचरितप्रकाशत्वं नास्तीति शक्यते वक्तुम् । अनुभवापलापे च शून्यवादिमतमेवास्थेयम् । किमर्द्धजरतीयेन । अपि च देवतादिध्यानकाले नानुव्यवसायश्शक्यते वक्तुम् । ध्यानसामग्र्या इच्छाघटितत्वेन ध्येयव्यतिरिक्तध्यानान्तर्गतवृत्तिविषयानुव्यवसायप्रतिबन्धकत्वात् । ततश्च 'एतावन्तं कालं ध्यायन्नेवासमि'ति अनुसन्धानं अनुपपन्नं स्यात् । अतस्साक्षिरूपः प्रकाशस्सर्वदात्मतद्धर्मावभासकोऽनुस्यूतोऽस्तीति स्वीकर्तव्यम् । ननु, प्रभाकरमते ज्ञानं स्वप्रकाशम् । तत्र चात्मा आश्रयतया भासते, घटादिकं च विषयतया । तन्मते ज्ञानाकारश्च 'घटमहं जानामी' त्येवंरूपः । तथाचात्मनि किञ्चिज्ज्ञानं सदा वर्तत एवेति ज्ञानात्मनोरव्यभिचरितप्रकाशत्वमुपपद्यत इति न नित्यसाक्ष्यभ्युपगन्तव्य इति चेन्न । तन्मतेऽपि सुखादीनामव्यभि-

चरितप्रकाशता न स्यात् । ज्ञानोत्पत्तिश्च न प्रत्यक्षा स्यात् । अपि च तन्मते भासमानतायां बहूनि प्रयोजकानि कल्पनीयानि । आत्मनि ज्ञानाश्रयत्वं, ज्ञाने ज्ञानाभिन्नत्वं, घटादौ ज्ञानविषयत्वम् । तदपेक्षया वरं ज्ञाने क्लृप्तं ज्ञानाभिन्नत्वमेव सर्वत्र भासमानतायां प्रयोजकमाश्रयितुम् । तच्च वेदान्तिन एवोपपद्यते । आत्मनो ज्ञानरूपत्वाङ्गीकारात् । विषयाणां च ज्ञानरूपब्रह्माध्यस्तत्वाङ्गीकारात् । न चैतत् नित्यज्ञानाभ्युपगमं विना वक्तुं शक्यते । अनित्यज्ञानस्यात्माभेदासम्भवात् । विषयाणां च जन्यज्ञानाध्यस्तत्वायोगात् । अध्यासे हि अधिष्ठानं प्रागेवाध्यासात् भासमानतया लब्धसत्ताकमपेक्षितम् । न चैतज्जन्यस्य घटप्रत्यक्षस्य सम्भवति । तस्य घटजन्यस्य घटात्प्रागेव लब्धसत्ताकतया भासमानत्वानुपपत्तेः । एवं च सति सर्वत्र 'घटः स्फुरति ज्ञानं स्फुरति आत्मा स्फुरती'ति व्यवहारः स्फुरणतादात्म्यविषयक उपपन्नो भवति । परमते चात्मनि ज्ञानाश्रयताविषयकः, ज्ञाने तदभेदविषयकः, घटादौ ज्ञानविषयताविषयक इति वैरूप्यं भवेत् । ननु, वेदान्तिनोऽपि भासमानतायां नैकरूपं प्रयोजकं सम्भवति । न हि यथात्मनः स्वरूपैक्यं ज्ञानेन स्वीक्रियते, एवं विषयाणामप्यध्यस्तानां पारमार्थिके न । स्वरूपैक्यासम्भवात् । अतः क्वचित् स्वरूपैक्यं क्वचिदाध्यासिकं तादात्म्यं भासमानतायां प्रयोजकमिति नैकरूपं प्रयोजकं सम्भवति । एवं 'स्फुरती'तिव्यवहारोऽपि आत्मांशे स्वरूपैक्यं, विषयांशे आध्यासिकं तादात्म्यमवगाहत इति नैकरूप इति चेन्न । अभेदो हि द्विरूपः । स्वरूपैक्यरूपः, सत्तावच्छेदकभेदाभावरूपः तादात्म्यापरपर्यायश्च । तत्र यद्यपि स्वरूपैक्यं ज्ञानविषयोर्न भवति, तथापि तादात्म्यं सम्भवत्येव । यो हि भेद इदमिति स्पष्टसामानाधिकरण्यव्यवहारप्रयोजको न भवति, स सत्तावच्छेदक इत्युच्यते । विषयज्ञानयोर्भेदस्तु 'इदं सर्वं यदयमात्मे'ति ज्ञानस्वरूपात्मना सामानाधिकरण्यव्यवहारप्रयोजक इति न सत्ताया अवच्छेदकः । तादृशतादात्म्यं च ज्ञानं प्रत्यगात्मविषययोस्समानमिति न वैरूप्यम् । न चैवं ज्ञानतादात्म्यस्य सार्वकालिकत्वाद्विषयाणां सदैव भासमानता स्यादिति वाच्यम् । भासमानतायां ज्ञानाभेदो हि साधारणं कारणं तद्विषयेषु चाक्षुषवृत्त्यादिकं विशेषकारणमपेक्षते । नित्यसाक्ष्यभ्युपगम एव च सुषुप्तिनिरोधसमाधिकालयोरात्माव्यभिचरितप्रकाश इति वक्तुं शक्यते । न हि सुषुप्तौ जन्यज्ञानं सम्भवति । तस्यां दशायां 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति बाह्यान्तःकरणलयाम्नानात् । इन्द्रियाणां प्राणशब्दोदितानां विज्ञानं ज्ञानजननानुकूलां शक्तिं विज्ञानेन स्वरूपभूतेनादाय निरुध्य शेत इति हि तदर्थः । न च तस्यां दशायाम् इन्द्रियाणां लयेऽपि अहंवृत्तिस्सम्भ-

वति अविद्यावृत्तिरूपा । अन्यथा 'सुखमहमस्वाप्स'मिति परामर्शो न स्यात् । अहंवृत्त्यभावे अहन्तायाः प्रागननुभूतायाः परामर्शविषयत्वायोगात् । तथापि हि सुषुप्तौ आत्मा अव्यभिचरितप्रकाश इत्यत्रायमेव व्यवहारो लिङ्गमिति वाच्यम् । 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति तस्यां दशायां बाह्याभ्यन्तरविषयस्य जन्यज्ञानस्य प्रतिषेधात् । विशिष्य'चाहमिति ज्ञानं निषिद्धम् । नाहं खल्वयमेवं सम्प्रत्यात्मानं जानाति 'अयमहमस्मी'ति नो एवमेवेमानि भूतानीति । न चायमहमस्मीति अनेन ब्राह्मणोऽहमिति एवंरूपेण निषेधः, न त्वहमिति ज्ञानसामान्यरूपेणेति शङ्कनीयम् । एवं ह्यनेन ब्राह्मणादिशरीरज्ञानं नास्तीत्युक्तं भवेत् । तथासति तस्य शरीरस्य भूतान्तर्गततया नो एवेमानि भूतानीत्येव तज्ज्ञानप्रतिषेधसिद्धेः पृथङ्निषेधोऽनर्थ एव स्यात् । तस्मादहन्त्वज्ञाननिषेध एव तत्र क्रियते । न चैवं तज्ज्ञानाभावे तस्य परामर्शविषयता न स्यादिति वाच्यम् । न हि 'सुखमहमस्वाप्स'मिति ज्ञानमहन्त्वांशे परामर्शरूपम् । अपि तु तद्व्यतिरिक्तांश एव । सुषुप्तौ हि तज्ज्ञानं नास्तीत्युक्तम् । नापि तत्स्वरूपमस्ति । अन्तःकरणतादात्म्यापन्नो ह्यात्मा तदाश्रयः । न च तस्यां दशायामन्तःकरणमस्ति । इन्द्रियसामान्यस्य लयाम्नानात् । 'गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन' इत्यत्र केषांचिदिन्द्रियाणां ग्रहणं सर्वोपलक्षणार्थम् । 'तदेषां प्राणाना'मिति सामान्योपक्रमात् । 'एतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठन्त इति स्वस्वायतनरूपेषु गोलकेषु पुनर्जाग्रदारम्भे जीवाधीनाया विशेषेण प्रतिष्ठारूपाया उत्पत्तेराम्नानाच्च । अहन्तायास्तु तत्कालसञ्जातायाः अनुभव एव 'सुखमहमस्वाप्स'मिति । न चैकस्य ज्ञानस्य क्वचिदंशे परामर्शरूपत्वं, क्वचिदंशेऽनुभवरूपत्वं विरुद्धमिति शङ्कनीयम् । प्रत्यभिज्ञायास्तत्तांशे स्मृतिरूपत्वस्यांशान्तरेऽनुभवरूपत्वस्य चेष्टत्वात् । एवं निरोधसमाधावपि सर्ववृत्तिनिरोधस्य श्रुतिस्मृतियोगशास्त्रप्रसिद्धतया तस्यामपि जन्यज्ञानासम्भवेन 'एतावन्तं कालं निरुद्धचित्त एवास'मिति परामर्शानुसारेण निरोधसाक्ष्यभ्युपगन्तव्यः । ततश्च नित्यज्ञानसिद्धौ ज्ञानमुत्पन्नं, ज्ञानं विनष्टं, अहं ज्ञानवानित्यादिव्यवहारो वृत्तिज्ञानोपाधिक इत्यवगन्तव्यम् । नन्वेवमात्मनो नित्यं प्रकाशमानत्वे तस्मिन्नज्ञानविषयत्वासम्भवात् कथमध्यासः । न च स्वरूपेण भासमानत्वेऽपि निरतिशयानन्दत्वप्रपञ्चविनिर्मुक्तत्वाद्याकारेणाभासमानत्वात्तेन रूपेणाज्ञानविषयत्वमस्तीति वाच्यम् । न हि तव मते निरतिशयानन्दत्वादिकं स्वरूपाद्व्यतिरिच्यते । तथा च स्वरूपे भासमाने कथं तेषामभासमानता । अपि च तेषां स्वरूपाद्व्यतिरेके अखण्डाकारवृत्तावपि तेषां न भानं स्यात् । तस्याः

स्वरूपमात्रविषयत्वात् । एवं चाखण्डाकारवृत्तिदशायां यावत्स्वरूपं भासते, तावदेवाधुनापि भासत इति आधुनिकस्वरूपप्रकाशस्याज्ञानानिवर्तकत्वे अखण्डाकारवृत्तिरप्यज्ञानानिवर्तिका स्यात् । अपि चाधुना यावदेव स्वरूपं भासते, तावदेव मोक्षदशायामपि । अतश्चाधुनिकस्य स्वरूपभानस्यापुरुषार्थत्वे मोक्षस्यापि पुरुषार्थता न स्यात् । तस्मादद्वैतवादिनः स्वप्रकाशात्माभ्युपगमो विरुद्ध इति चेन्न । भासत एवाधुनाप्यात्मस्वरूपम् । तच्च भानं नाज्ञानविरोधि । न ह्यधिष्ठानस्वरूपभानमात्रमारोपविरोधीति शक्यमुपगन्तुम् । तथा सति 'इदं रजत'मिति भ्रमो न स्यात् । तत्रापीदन्ताया अधिष्ठानस्वरूपभूताया भानात् । नाप्यधिष्ठानासाधारणरूपभानम् । इदन्ता च न तथेति । शङ्खः श्वेत इत्यधिष्ठानासाधारणस्वरूपभानेऽप्यज्ञानानिवर्तनात् । नाप्यधिष्ठानासाधारणापरोक्षज्ञानं तथेति । तथासति 'इदं शुक्तिरित्याप्तोपदेशात् अज्ञाननिवृत्तिर्न स्यात् । न च सोपाधिकभ्रमेष्वपरोक्षज्ञानं, अन्यत्र तु परोक्षमपरोक्षं वा अज्ञाननिवर्तकमिति शुक्तिरजतादिभ्रमाणां परोक्षापरोक्षसाधारण्येन ज्ञानमात्रमज्ञाननिवर्तकम् । पीतशङ्खादिविभ्रमेषु तु अपरोक्षज्ञानमेवाज्ञाननिवर्तकमिति शक्यते वक्तुम् । न हि शुक्तिरजतादिभ्रमव्यावृत्तं पीतशङ्खादिभ्रमेष्वनुगतं सोपाधिकभ्रमत्वं निरूपयितुं शक्यते । शुक्तिरजतादिभ्रमेऽपि सादृश्यादिदोषस्यैव उपाधित्वसम्भवात् । न हि पित्तादिदोष एवोपाधिः । न सादृश्यादिदोष इत्यत्र किंचिद्व्यवस्थापकमस्ति । तस्मात् प्रमाणानुसारेण यादृशभ्रमे यत् ज्ञानं प्राप्नोति निवर्तकतया, तत्तथैव स्वीकर्तव्यम् । आत्मविषयाज्ञाननिवर्तकतया च शास्त्रबलाद्वेदान्तवाक्यजन्यज्ञानमेव निवर्तकमास्थीयते तदपि ह्यधिष्ठानतत्त्वावगाह्येवेति । लोकेऽपि ह्यधिष्ठानतत्त्वावगाह्येव ज्ञानमज्ञाननिवर्तकमिति तावता लोकदृष्टनिवर्त्यनिवर्तकभावानुसारः । न स्वर्गयागादिसाध्यसाधनभाववदत्यन्तमदृष्टरूपता । लोके च न सर्वज्ञानं अधिष्ठानतत्त्वावगाहि आरोपनिवर्तकम् । शङ्खश्वैत्यानुमितौ व्यभिचारात् । ततस्तत्रापरोक्षज्ञानमेव पैत्त्यभ्रमनिवर्तकमिति लोकादेवावगम्यते । प्रपञ्चविभ्रमे तु स्वरूपप्रकाशस्य प्रपञ्चविभ्रमेण सहानुवर्तमानतया तस्य विभ्रमानिवर्तकत्वे विशेषकारणापेक्षायां स विशेषः वेदान्तवाक्यजन्य आत्मसत्तानिश्चयरूपो वृत्तिविशेषः प्रपञ्चविभ्रमविरोधीति शास्त्रबलादवधार्यते । ननु, च विभ्रमे यावदेव स्वरूपं भासते, तदनधिकविषयकस्याखण्डाकारज्ञानस्य कथं निवर्तकता । भ्रमाधिकविषयस्यैव तस्य तन्निवर्तकतया लोके दर्शनादिति चेन्न । भ्रमानधिकविषयाणामपि तन्निवर्तकत्वदर्शनात् । यथा तटाकतीरे घोष इति येन केन चित् कपालेन तुषोपवापः कर्तव्य इति च भ्रमवतः पुरुषानुद्दिश्य तीरत्वमात्रप्रकारकेण तात्पर्येण प्रयुक्तात् 'गङ्गायां

घोष' इति वाक्यात् कपालत्वमात्रप्रकारकेण तात्पर्येण प्रयुक्ताच्च 'पुरोडाशकपालेन तुषानुपवपती' तिवाक्याच्च तीरे घोषः कपालेन तुषोपवापः कर्तव्य इत्येव बोधो दृश्यते । न हि तत्र भ्रमे भासमानयोस्तीरकपालयोश्शाब्दबोधे कोऽपि विशेषो गृह्यते भ्रमाधिकविषयः । तद्वि चेत् सामग्रीविशेषजन्यत्वेन शाब्दबोधस्य भ्रमनिवर्तकत्वम् । स च सामग्रीविशेषश्शाब्दबोधात् प्राक् तीरस्य गङ्गासम्बन्धित्वेनोपस्थितिः । कपालस्य पुरोडाशसम्बन्धित्वेनोपस्थितिः । दृश्यते ह्यन्यत्रापि सामग्रीवैचित्र्यादेव विषयवैलक्षण्याभावेऽपि किंचिज्ज्ञानं कार्यविशेषप्रयोजकं किंचिज्ज्ञानं नेति । तद्यथा अयं प्रशस्त इत्युक्ते न तथाप्रतीतिर्भवति । यथा सदसदनेकगुणकीर्तनपूर्वकं लक्षणया प्राशस्त्योक्तौ । अत एव वेदे न कण्ठत एव प्रशस्त इत्येवंरूपेण कर्म स्तूयते । किं तु सदसदनेकगुणकीर्तनपूर्वकं लक्षणयैव । तर्हि प्रकृतेऽपि तुल्यम् । वेदान्तवाक्यजन्यज्ञानेऽपि हि निष्प्रपञ्चत्वोल्लेखिनी प्राचीना वाच्यार्थविषयिणी उपस्थितिरस्त्येव । अपि च लोके भ्रमाधिकविषयस्यैव भ्रमनिवर्तकत्वं दृष्टं अस्तु नाम । तस्मिन् भ्रमनिवर्तके सामग्रीविशेषजन्यत्वमपि दृष्टमेव । एवं च वक्ष्यमाणया रीत्या वेदान्तानामखण्डार्थत्वसिद्धौ तस्य च ज्ञानस्य प्रपञ्चविरोधित्वे शास्त्रबलात्सिद्धे तदनुसारेणापि सामग्रीविशेषजन्यत्वमेव निवर्तकतायां प्रयोजकमाश्रयणीयम् । लोके उभयथापि सम्भवात् । न तु तद्विरोधेन भ्रमाधिकविषयत्वम् । ततस्साक्षिणि स्वतो भासमानेऽपि नाविद्यासम्बन्धविरोध इति नाध्यासानुपपत्तिः । एवं च यत्पूर्वपक्षिणोक्तं निरंशस्वप्रकाशे कथमध्यास इति, तदपाकृतम् । स्वप्रकाशस्यापि अविद्यासम्बन्धाविरोधितया अध्यासाधिष्ठानत्वोपपत्तेः । यद्यपि साक्षिस्वरूपभूतानन्दस्सदा भासत एव । अत एव निरतिशयित आत्मनि प्रेमा । तथापि तत्रानाद्यविद्यावशात् दुःखाद्यपुरुषार्थसम्बन्धोऽपि आरोपितः । तथा तारतम्यापन्नतत्तद्विषयसम्पर्कजनितवृत्तितादात्म्याध्यासात् साक्षिण्यपि तारतम्यमध्यस्तम् । ततश्चानन्दे अनुभूयमानेऽप्यन्य इतः अधिक आनन्दोऽस्तीति भ्रमः समयानवाप्त इत्येवं भ्रमान्तरम् । ततश्चाकृतार्थतेति । तत्त्वज्ञानेन तु अविद्यायां निवर्त्तितायां उक्तभ्रमविनाकृतं केवलं स्वरूपं भासत इति संसारमोक्षयोर्वैलक्षण्यम् । संसारदशायां हि दुःखं अनवाप्तत्वभ्रमरूपानन्दानवाप्तिश्च । मोक्षदशायां तु दुःखाभावः, अनवाप्तत्वभ्रमनिवृत्तिरूपानन्दावाप्तिश्च । न च मोक्षदशायामविद्यानिवृत्त्यभ्युपगमे ब्रह्मातिरिक्ताया निवृत्तेर्विद्यमानतया द्वैतापत्तिरिति वाच्यम् । अधिष्ठानपारिशेष्याभ्युपगमेन ब्रह्मातिरिक्तपदार्थानभ्युपगमात् । एतदुक्तं भवति । आरोपितपदार्थानां हि यथा घटादीनां स्वोपादाने परिणामवादरीत्या उपादान-

स्यैवावस्थान्तरापत्तिरूपः । आरम्भवादे ध्वंसात्मको नाशः । तदभिव्यञ्जकं च कपालतच्छकलादिकम् । नैवं विधः शुक्त्यादौ रजतादीनाम् । न हि तत्र रजतस्य तत्त्वज्ञानबाधितस्य किंचिच्छकलादिकमुपलभ्यते । येन घटादिनाशतुल्यता स्यात् । किं तु यथा कालत्रयेऽपि शशशृङ्गस्य सदसद्व्यवहारायोग्यत्वरूपं निःस्वरूपत्वम् । नापि तेन निःस्वरूपेण शशशृङ्गेण कस्य चिद्वस्तुनः सद्वितीयत्वम् । एवं तत्त्वज्ञानेन प्राक् लब्धस्वरूपस्य रजतस्य निःस्वरूपत्वमापाद्यते । न च तत्र तत्त्वज्ञानापादितनिःस्वरूपेण रजतेन भावाभावव्यवहारायोग्येन शुक्तेस्सद्वितीयता । तदेतत् सर्वानुभवसिद्धम् । एवमात्मतत्त्वज्ञानेनापि अविद्यादेः कृत्स्नस्य निःस्वरूपतापादनात्तत्त्वज्ञानोत्तरमधिष्ठानपरिशेषेण न द्वैतापत्तिः । तथा च श्रुतिः—'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थम्मन्यन्ते, स आत्मा स विज्ञेयः यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदि'त्याद्यधिष्ठानपरिशेषतां दर्शयति । अतः स्वप्रकाशत्वे न काचिदनुपपत्तिः । एवं च यत् पूर्वपक्षिणोक्तं विषयत्वाभावेऽध्यासो न स्यादिति तदप्यपाकृतम् । न ह्यारोपेऽधिष्ठानस्य विषयतया भानमपेक्षितम् । गौरवात् । किं तु भानमात्रम् । तच्च स्वप्रकाशस्य स्वत एव । जडस्य तु ज्ञानविषयतयेत्यन्यदेतत् । भाष्ये आत्मनोऽपि विषयत्वप्रतिपादनं तु वस्तुगतिमनुरुध्य तदपि वक्तुं शक्यत इत्यभिप्रायेण । यच्चोक्तं आरोप्यविनिर्मुक्ततया आरोपात् पूर्वमधिष्ठानज्ञानमपेक्षितमिति, तन्न । नीलिमारोपात् पूर्वमारोप्यविनिर्मुक्ततयाकाशभानाभावेऽपि नीलिमारोपदर्शनादित्यभिप्रेत्याह—**अप्रत्यक्षेऽपीति** । यद्यप्युपरि नीलिमारोपेण मध्ये चालोकगतवैशल्यारोपेणाकाशः प्रत्यक्षः, तथापि तद्विनिर्मुक्ततया केवलः प्रत्यक्षो न भवतीत्यर्थः । तलं अवाङ्मुखकटाहाकारत्वम् । 'अहम्ममे'तिप्रतीतेरध्यासत्वं अविद्यात्वप्रसिद्ध्या दृढयति । **तमेतमिति** । तथा च स्मृतिः—'अहम्ममेत्यविद्येयं व्यवहारस्तथानये'ति । ननु, साक्षिस्वरूपभूतं ज्ञानमज्ञानाविरोधि । एवं वृत्तिरपि नाज्ञानविरोधिनी । तस्या अन्तःकरणपरिणामरूपायाः जडत्वात् । अतः कथं अविद्यानिवृत्तिरित्याशङ्क्य केवलसाक्षिणो विरोधित्वाभावेऽपि यथा केवलानां सौरकिरणानां तृणादिदाहकत्वाभावेऽपि सूर्यकान्तमणिनिष्ठानां तद्दाहकत्वम् । एवं वेदान्तजन्यवृत्तिनिविष्टस्य साक्षिणोऽविद्यानिवर्तकता भविष्यतीत्यभिप्रेत्याह—**तद्विवेकेन चेति** । तयोरात्मानात्मनोः आत्मा सत्यः, अनृतोऽनात्मा इत्येवंरूपेण विवेकेन सम्पन्नं यद्वस्तु स्वरूपभूतं आत्मस्वरूपं अवधारणात्मकवृत्त्यभिव्यक्तं, सैव विद्येत्यर्थः । एवं च यच्छा

स्त्रानारम्भवादिनोक्तं । कर्तृत्वभोक्तृत्वयुक्तस्य कथं तद्राहित्यमिति, तत्तस्य मिथ्यात्वनिरूपणेन परिहृतमित्याह— **तत्रैवं सतीति** । पूर्वोक्तमध्यासकृतत्वं व्यवहारस्य शङ्काविशेषनिराकरणेन व्युत्पादयितुं पुनरुपक्षिपति । **तमेतमविद्याख्यमिति** । नन्वविद्यायाः दोषरूपत्वात् दुष्टपुरुषसंयुक्तानां इन्द्रियादीनां प्रमां प्रति कारणत्वासम्भवात् प्रत्यक्षादीनां प्रामाण्यप्रसिद्धिः कथं, कथं वा श्रुतिस्मृत्यादीनां शास्त्रत्वप्रसिद्धिः । अलौकिकार्थप्रमापकं हि शास्त्रमित्युच्यत इत्यभिप्रेत्य शङ्कते—**कथमिति** । अविद्यावत्पुरुषविषयाणि तादृशपुरुषाश्रयाणि तत्प्रमातृकाणीत्यर्थः । ततश्च 'शुक्तिरजतादिज्ञानजनकमप्रमाणं, अन्यत् प्रमाण'मिति सर्वलोकप्रसिद्धव्यवस्थानुपपत्तिरिति भावः । प्रामाण्यं द्विविधम् । संवादिप्रवृत्तिजननयोग्यज्ञानजनकत्वलक्षणं, अबाधितवस्तुविषयकज्ञानजनकत्वलक्षणं च । आद्यं लौकिकवैदिकप्रमाणसाधारणम् । द्वितीयं तु ब्रह्मप्रमाणस्यैव । शुक्तिरजतज्ञानजनकस्य तु नोभयथापीति न तत्र प्रमाणत्वव्यवहारः । एतादृशप्रमाणप्रेरकतायामहङ्काराध्यासरूपदोषोऽनुकूल एव । न प्रतिकूलः । असङ्गस्यात्मनः अहङ्काराध्यासं विना प्रमाणप्रेरकत्वासम्भवात् । तादृशप्रामाण्यपरिपन्थित्वं बाधस्यैव । स च यावद्ब्रह्मज्ञानन्नास्ति लौकिकप्रमाणानामिति व्यावहारिकं प्रामाण्यं तेषामुपपद्यते । वेदान्तानां तु न कदापि प्रमेयबाधोऽस्तीति तत्त्वावेदकत्वं तेषामुपपद्यते इत्यभिप्रेत्य परिहरति । **उच्यत इति** । प्रमातृत्वं हि प्रमाणप्रेरकत्वं, प्रमां प्रत्याश्रयत्वं च । उभयमप्यध्यासाधीनम् । कूटस्थस्य स्वत एव प्रेरणारूपव्यापारासम्भवात् । प्रमा च चैतन्यप्रतिबिम्बविशिष्टोऽन्तःकरणपरिणामः । स न केवलस्यात्मनः सम्भवति । अपरिणामित्वात् । चैतन्यप्रतिबिम्बश्च न केवलेनान्तःकरणेन सम्भवति । अतः प्रमास्वरूपोपयोगितया अन्तःकरणात्मनोरध्यास एषितव्यः । प्रमा चेन्द्रियाणां प्रेरणे फलम् । ततश्चेन्द्रियप्रवृत्तौ प्रेरणा, प्रमा चात्मन्यपेक्षितेति, तदुभयोपयोगितयाध्यासः प्राप्नोतीत्याह—**देहेन्द्रियादिष्विति** । आदिशब्देनान्तःकरणं गृह्यते । प्रमातृत्वं प्रत्यन्तःकरणमाश्रयकोटौ निविष्टं इन्द्रियादि उपकरणतया । प्रमाणप्रवृत्तौ प्रमातृत्वमुपयुज्यते इत्युक्तम् । प्रमाणप्रवृत्तिस्तर्हि किमर्थेत्यपेक्षायामाह—**न हीति** । इन्द्रियपदं प्रमाणमात्रोपलक्षणम् । प्रत्यक्षादीत्यादिपदमनुमित्यादिसङ्ग्राहकम् । अत्र सम्भवे व्यवहारः कर्ता, अनुपादाने प्रमातेत्यनुपादायेत्यस्य सम्भवतीत्यनेन नान्वयः । किं तु अनुपादाय यो व्यवहारः प्रमातुः, स न सम्भवतीत्यन्वयो ग्राह्यः । तथासति 'समानकर्तृकयोः पूर्वकाल' इति अनुशासनानुगुण्यं भवति । नन्विन्द्रियाणां प्रवृ-

तौ प्रमात्रोपादानं किमर्थमपेक्षितमित्याशङ्क्य जडानां प्रवृत्तिश्चेतनप्रेरणां विना न सम्भवतीत्याह—**न चाधिष्ठानमन्तरेणेति**। अधिष्ठानं चेतनव्यापारविषयत्वम्। ननु, शरीरमेव प्रेरकमस्त्वित्याशङ्क्य तस्य जडतया चेतनतादात्म्यं विना प्रेरकत्वं न सम्भवतीत्याह–**न चानध्यस्तात्मभावेनेति**। उक्तया रीत्या प्रमातृत्वोपयोगितया श्रुतिस्मृतिसिद्धासङ्गत्वनिर्वाहायाध्यास एषितव्यः इत्याह—**न चैतस्मिन्निति**। ननु, प्रत्यक्षादिव्यवहारस्याध्यासमूलत्वे विवेकिनां तद्व्यवहारो न स्यात्। शास्त्रजन्यज्ञानरूपस्य विवेकस्याध्यासविरुद्धत्वादित्याशंक्याह–**पश्वादिभिश्चेति**। सङ्ग्रहवाक्यं विवृणोति। **यथाहीति**। द्विविधा हि विवेकिनः। केचिद्देहातिरिक्तात्ममात्रपर्यवसितविवेकाः। केचिदशनायाद्यतीतात्मपर्यन्तविवेकाः। तत्र आद्यो विवेकः कर्तृत्वादिभ्रमविरोधी न भवत्येव। ततश्च न तस्य ज्योतिष्टोमादिप्रवृत्तिविरोधित्वम्। तेन च शरीरतादात्म्याध्यासस्यानपोदितत्वात् पश्वादितुल्यतया इष्टसाधनताज्ञाने प्रवृत्तिर्लौकिकी, अनिष्टसाधनताज्ञाने निवृत्तिश्च, मनुष्योऽहमित्याद्यभिलापश्च उपपद्यते। सति हि दोषे जातमपि देहातिरिक्तात्मज्ञानं न देहतादात्म्याध्यासविरोधि। अत एव देहातिरिक्तात्मज्ञानवन्तोऽपि अस्माकमिदमिष्टसाधनमिति वदन्तः अंगुल्या शरीरमेव निर्दिशन्ति लौकिकव्यवहारेषु। विवेककृतस्तु तेषां व्यवहारः नाहं मनुष्यो देहपातोत्तरं परलोके फलं भविष्यतीति। अशनायाद्यतीतात्मज्ञानं तु तेषां लौकिकवैदिकप्रवृत्त्युपयोग्येव न भवति। प्रत्युत दृढस्तन्निश्चयः अविश्वासापादकतया वैदिकप्रवृत्तिविरोध्येव। येषामपि दृढोऽशनायाद्यतीतात्मनिश्चयः, तेषामपि प्रारब्धदोषवशात् देहे आत्माध्यासोऽनुवर्तत इति तत्कृतो 'ब्राह्मणोऽहं भुञ्ज'इत्यादिव्यवहार उपपद्यत इति ग्रन्थार्थः। वेदस्यापि लौकिकभ्रमानुवादित्वं दृश्यत इत्याह—**ब्राह्मणो यजेतेति**। ननु, 'ब्राह्मणो यजेते'त्यादौ ब्राह्मणादिशब्दानां साक्षात्सम्बन्धेन ब्राह्मणत्वप्रकारकात्मविशेष्यकज्ञानजनकत्वे हि अध्यासजनकत्वं भवेत्। ब्राह्मणत्वादेः शरीरगततया आत्मनि साक्षात्सम्बन्धाभावात्। न त्वेतदस्ति। ब्राह्मणादिशब्दानां साक्षात्परम्परासम्बन्धौदासीन्येन यत्र ब्राह्मणत्वं वर्तते, तत्प्रतिपादकत्वस्य शरीरप्रतिपादकत्ववत् शरीरविशिष्टप्रतिपादकत्वस्य वा व्युत्पत्तिसिद्धत्वात्। न च तथात्वेऽध्यासजनकत्वं परम्परासम्बन्धेन ब्राह्मणत्वस्य ब्राह्मणशरीरवैशिष्ट्यस्य वा आत्मनि विद्यमानत्वात् साक्षात्परम्परासाधारण्येन ब्राह्मणत्वाश्रयप्रतिपादकत्वं वा, ब्राह्मणशरीरविशिष्टप्रतिपादकत्वं वा, कथं व्युत्पत्तिसिद्धम्। इत्थं–सन्ति तावन्नीलादिशब्दाः। ते च नीलं रूपमिति गुणेऽपि प्रयुज्यन्ते, नीलो घट इति गुणिन्यपि। तत्र चोभयत्रापि शक्तिरेव। उभयत्रापि अनुपपत्तिप्रतिसन्धानं विना बोधकत्वस्य प्रयोगप्राचुर्यस्य च तुल्य-

तया गुण एव शक्तिः, गुणिनि तु लक्षणेति नियन्तुमशक्यत्वात् । यैरपि गुणिनि लक्षणेत्युच्यते, तेषामपि मते गङ्गायां घोष इतिवत् नेयं लक्षणा । किं तु निरूढेति तैरपि वाचोयुक्त्यन्तरेण गुणिनो मुख्यार्थत्वं स्वीकृतप्रायमेव । तत्र च नीलादिपदेषु यद्येकैव शक्तिरभ्युपेयते, तदा यत्र नीलत्वं वर्तते, तत्र सर्वत्र नीलपदस्य शक्तिरुपेया । तच्च परम्परया घटेऽपि वर्तत इति नीलगुण इव घटेऽपि नीलत्वप्रवृत्तिनिमित्तेनैव नीलशब्दस्य शक्तिरित्येकैव शक्तिः । एवं च नीलशब्दस्य प्रकारशब्दतया प्रकारिपर्यन्तत्वदर्शनेन अन्येऽपि प्रकारशब्दाः प्रकारिपर्यन्ता इत्युपेयते । न चैवं रूपादिशब्दानामपि प्रकारशब्दतया द्रव्यपर्यन्तता स्यात् । प्रकारो नाम अपृथक्सिद्धो धर्म इत्युच्यते । अपृथक्सिद्धत्वं च तेन सह तस्य भवति । यो यस्माद्विश्लिष्य न तिष्ठति । नीलादयश्च न द्रव्याद्विश्लिष्य तिष्ठन्ति । अतस्तद्वाचकाश्शब्दाः प्रकारशब्दा इत्युच्यन्ते । तच्च रूपादिशब्देऽपि तुल्यमिति प्रकारशब्दानां प्रकारिपर्यन्तत्वे रूपादिशब्दानामपि तत् प्राप्नोतीति वाच्यम् । न हि सर्वेषां प्रकारशब्दानां प्रकारिपर्यन्तत्वम् । किं तु येषां प्रवृत्तिनिमित्तं प्रकारिणि वर्तते, तेषामेव तत्पर्यन्तत्वम् । नीलत्वादीनां च 'नीलो घट इति प्रती'त्यनुसारेण परम्परासम्बन्ध-आधारतानियामक इत्युपेयते । अतो नीलादिशब्दाः प्रकारिपर्यन्ताः । रूपत्वादीनां परम्परासम्बन्ध आधारतानियामको न भवति । 'रूपं घट' इति प्रतीतेरभावात् । अतो न तेषां प्रकारिपर्यन्तत्वम् । एवं च ब्राह्मणादिशब्दानामपि प्रकारशब्दतया प्रकारिपर्यन्तत्वमेकयैव शक्त्या सिध्यति । ब्राह्मणादिशरीरमपि आत्मविश्लेषे विशीर्णं भवतीत्यात्मना अपृथक्सिद्धं भवतीत्यात्मनि प्रकारः । न चैवं शरीरादिशब्दानामपि आत्मपर्यन्तत्वं शङ्कनीयम् । रूपत्वादिवत शरीरत्वस्यापि परम्परासम्बन्धो नाधारतानियामकः । 'शरीरमह'मिति प्रतीतेरभावात् । ब्राह्मणत्वस्य तु परम्परासम्बन्धो नीलत्ववत् भवत्याधारतानियामकः । 'ब्राह्मणोऽह'मिति प्रतीतेः । यदि तु नीलशब्दस्य द्रव्ये नीलत्वप्रवृत्तिनिमित्तशक्त्यपेक्षया नीलगुणप्रवृत्तिनिमित्तकं शक्त्यन्तरमेवोपेयमित्युच्यते । अन्यथा नीलिमेत्यादौ नीलगुणप्रत्ययो न स्यात् । भावप्रत्ययानां प्रकृतिप्रतिपाद्यप्रकारवचनत्वात् । नीलत्वप्रवृत्तिनिमित्तकशक्तिपक्षे तस्यैव प्रकृतिप्रतिपाद्यप्रकारकतया नीलगुणस्य तदभावेन भावप्रत्ययार्थता न स्यात् । गुणप्रवृत्तिनिमित्तकत्वपक्षे तु न काचिदनुपपत्तिरिति तदापि प्रकारशब्दस्य प्रकारिपर्यन्तत्वं दृष्टमेवेति ब्राह्मणादिशब्दानामपि शक्तिद्वयकल्पनया उभयवाचकतायां न काचिदनुपपत्तिः । 'ब्राह्मणोऽह'मिति प्रयोगस्यात्रापि विद्यमानत्वात् । एवं च 'ब्राह्मणो यजेते'त्यादिश्रुतेः प्रमाजनकत्वे सम्भवति न भ्रमजनकत्वं कल्पयितुम्-

न्वितमिति चेन्न । प्रकारशब्दानां प्रकारिपर्यन्तत्वमिति नियमस्तावत न सम्भवति । शरीरादिशब्दानामपि तथात्वेन शरीरिपर्यन्तत्वस्य रूपादिशब्दानां रूपिपर्यन्तत्वस्य च प्रसङ्गात् । न च येषां शब्दानां प्रवृत्तिनिमित्तं धर्मिपर्यन्तं, तेष्वेव प्रकारशब्देष्वयं नियमः । रूपादिशब्दानां प्रवृत्तिनिमित्तं तु न धर्मिपर्यन्तम् । तत्र परम्परासम्बन्धस्याधारतानियामकत्वाभावादिति वाच्यम् । नीलत्वादीनां परम्परासम्बन्ध आधारतानियामकः, न रूपत्वादीनामित्यत्र नियामकाभावात् । न च 'नीलो घट'इतिवत् रूपं घट इति प्रतीतिर्नास्ति । अतस्तथा व्यवस्थाश्रीयत इति युक्तम् । किमियं प्रत्यक्षप्रतीतिः, उत शाब्दी नीलत्वघटयोराधाराधेयभावावगाहिनी । न तावत् प्रत्यक्षप्रतीत्या तयोराधाराधेयभावोऽवगाह्यते । अपि तु नीलगुणे नीलत्वम् । गुणस्य च घटे समवायः । तथा रूपत्वस्य रूपे । रूपस्य च घटे सम्बन्ध इति कोऽत्र विशेषः । न च नीलत्वघटयोराधाराधेयभावानवगाहने 'नीलो घट' इत्युल्लेखो न स्यादिति वाच्यम् । तादृशोल्लेखो हि प्रत्यक्षप्रतीतेस्समानाधिकरणनीलघटरूपशब्दद्वयानुरागकृतः । न तु नीलत्वाधारताकृतः । तयोस्सामानाधिकरण्यं तु नीलशब्दस्य द्रव्ये शक्तत्वादेव । अत एव शाब्दप्रत्ययोऽपि नाधारतानियामकः । तस्यापि गुणविशिष्टद्रव्यविषयत्वात् । प्रमाणान्तरसिद्धं सम्बन्धमादाय हि लौकिकशब्दानां बोधकत्वम् । न तु स्वत एव किञ्चिदर्थसाधकत्वम् । अतो 'नीलो घट' इति शब्दसामानाधिकरण्यात् न नीलत्वघटयोराधाराधेयभावः । नीलशब्दस्य च द्रव्ये शक्तिः नीलत्वप्रवृत्तिनिमित्तैकैवास्तु । गुणप्रवृत्तिनिमित्तेन भिन्ना वास्तु । न तत्र निर्बन्धः । परं तु नीलिमेत्यादिप्रयोगानुसारेण गुणप्रवृत्तिनिमित्तायाः शक्तेरावश्यकत्वे तयैव सामानाधिकरण्यव्यवहारोपपत्तावुत्सर्गतः प्राप्तस्साक्षात्सम्बन्ध एव नीलत्वप्रवृत्तिनिमित्तकशक्तिघटक इति न तस्यां परम्परासम्बन्धोऽपि घटक आश्रयितुं युक्तः । एवं च 'नीलो घट' इत्युल्लेखिन्याः प्रत्यक्षप्रतीतेस्तयोश्शब्दयोस्सामानाधिकरण्यस्य च नीलत्वघटयोरक्लृप्ताधाराधेयभावकल्पनां विनैवोपपत्तौ न तदपूर्वं कल्पनीयम् । गौरवात् । अपि च प्रकारशब्दानां प्रवृत्तिनिमित्ताश्रये सर्वत्र शक्त्यभ्युपगमे नीलिमशब्दस्यापि घटपर्यन्तता स्यात् । तत्र हीमनिच्प्रत्ययो नीलगुणाभिधायकः । भावप्रत्यया हि सर्वनामतुल्याः प्रकारतासम्बन्धेन प्रकृतिजन्यामुपस्थितिं प्रयोगोपाधिं कृत्वा तं तमर्थं साक्षादेवाभिदधति । ततश्चात्रेमनिच्प्रत्ययो नीलत्वं प्रवृत्तिनिमित्तीकृत्य नीलगुणाभिधायी । स च प्रकारशब्दः तत्प्रवृत्तिनिमित्तं च परोक्तरीत्यैव घटेऽपि वर्तत इति तस्यापि घटपर्यन्तता स्यात् । एवमरुणिमादिशब्देष्वपि द्रष्टव्यम् । अतो न प्रकारशब्दानां प्रकारिपर्यन्तत्वमिति नियमस्सम्भवति । ननु, मास्त्वयं

नियमः । उत्सर्ग एवायमस्तु । स च क्वचित् रूपादिशब्देषु बाधकवशात् परित्यज्यते । तावन्मात्रेणापि मनुष्यादिशब्दानां आत्मपर्यन्तता सिध्यतीति चेन्न । न हि क्वचित् सहचारदर्शनमात्रेण बहुषु रूपरसादिशब्देषु व्यभिचारे सत्यपि उत्सर्गः कल्पयितुं शक्यते । अन्यथा नीलादिशब्ददृष्टान्तेनैव एकसम्बन्धिवाचकस्य शब्दस्य सम्बन्ध्यन्तरपर्यन्तत्वमित्युत्सर्गं प्रकल्प्य गङ्गायां घोष इति प्रयोगेऽपि गङ्गाशब्दस्तीरं शक्त्यैव बोधयतीति वक्तुं शक्यमिति लक्षणैव दत्तजलाञ्जलिस्स्यात् । तस्माद्येषां नीलारुणादिशब्दानां धर्मिपर्यन्तत्वं दृष्टं, तेषामेव तद्व्यवस्थितम् । ननु, दृष्टान्तेन असत्यनुशासने प्रकारशब्दानां प्रकारिपर्यन्तत्वं प्रकल्प्यान्यत्रापि शक्यं सञ्चारयितुम् । ननु, मास्तु प्रकारशब्दानां प्रकारिपर्यन्तत्वम् । तथापि यथा नीलशब्दस्य द्रव्यपदसामानाधिकरण्यात् द्रव्ये शक्तिः कल्पते । एवं ब्राह्मणादिशब्दानामप्यात्मनि शक्तिः कल्पनीया । आत्मपदसामानाधिकरण्यनिर्वाहायेति चेन्न । यथा रजतपदस्य शुक्तौ शक्त्यन्तराभावेऽपि रजताभेदभ्रममादाय रजतमिदमिति सामानाधिकरण्यं व्यवह्रियते । तथा मनुष्योऽहमिति सामानाधिकरण्यस्याभेदभ्रममादायोपपत्तौ न शक्त्यन्तरं कल्पनीयम् । विवेकिनामपि तादृशभ्रम उपपादित एवेति तेषामपि व्यवहारो न शक्त्यन्तरकल्पकः । अभेदभ्रमश्च मनुष्यत्वाकारेणैव न शरीरत्वाकारेणेति प्राक् निरूपितम् । अतो न शरीरपदसामानाधिकरण्यव्यवहारः । एवं च 'मनुष्योऽहमि'ति व्यवहारवत् 'शरीरमहमि'तिव्यवहाराभावान्मनुष्यत्वस्य परम्परासम्बन्ध आधारताप्रयोजकः । न शरीरत्वस्येति कल्पनमपि निरस्तम् । क्लृप्तेन सकलवैदिकसम्मतेन मनुष्यत्वाकारेण तादात्म्यभ्रमेणोपपत्तौ 'मनुष्योऽहमि'तिसामानाधिकरण्यस्याक्लृप्ताधाराधेयभावप्रयोजकत्वानुपपत्तेः । एवं च शरीरवाचकानां शब्दानां शरीरिणि मनुष्यादिशब्ददृष्टान्तेन शक्तिरित्यपि कल्पनमपास्तम् । मनुष्यशब्दस्योक्तगत्यात्मनि शक्तिकल्पनं विनैव 'मनुष्योऽहमि'ति सामानाधिकरण्यस्योपपादिततया दृष्टान्तस्यासिद्धेः । न च तथासति 'ब्राह्मणो यजेते'त्यादिश्रुतेः भ्रमजनकतया अप्रामाण्यप्रसङ्ग इति शङ्कनीयम् । बोध्यबुद्ध्यनुसारेण तत्प्रसिद्धार्थानुवादकतया लोकसिद्धभ्रमानुवादकतामात्रेणाप्रामाण्याप्रसक्तेः । दृश्यते हि लोकसिद्धभ्रमानुवादकत्वमन्यत्रापि । 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात् समावृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनात्वि'ति वस्तुगत्या मेरुं प्रदक्षिणीकुर्वन्नप्यादित्यस्समुद्रतीरवासिनां समुद्रात् उद्गत इव प्रतिभातीति तद्भ्रमसिद्धं समुद्रादुद्गतत्वं श्रुत्या अनूद्यते । तथा तं प्रेतं दिष्टमितोऽग्नय एव हरन्तीति प-

श्चाग्निविद्यागतवाक्यमपि लोकप्रसिद्धशरीरतादात्म्यभ्रमानुवादकम् । यः दिष्टं गतः, स एवाग्नौ प्रक्षेप्तुं नीयत इति हि तदर्थः । एवं नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इत्यादीन्यपि उदाहार्याणि । अत्र वारिस्थत्वं भ्रमप्रसिद्धमनूद्यते । न च यन्मते परम्परासम्बन्धेन शक्तिद्वयेन वा 'ब्राह्मणो यजेते'त्यादिवाक्यं प्रवर्तते, तत्र प्रमितिसिद्धार्थानुवादकत्वमित्युत्सर्गोऽनुसृतो भवति । तत्र तु स परित्यक्तस्स्यादिति वाच्यम् । परस्यापि हि साक्षात्सम्बन्धेन प्रवृत्तिनिमित्तप्रकारकज्ञानजनकत्वमित्युत्सर्गपरित्यागः प्राप्त एव । परं तु 'क्वचिदाधारतानियामकः परम्परासम्बन्धः, क्वचित् ने'ति कल्पनं शक्तिद्वयकल्पनं बोध्यम् । अतिक्लेशश्चेत्यधिकम् । ततश्च 'ब्राह्मणो यजेते'ति वाक्यं वर्णाध्यासमाश्रित्य प्रवर्तेत इति सिद्धम् । 'अविलुप्तब्रह्मचर्यो गृहस्थाश्रममावसेत् ।' इत्याश्रमाध्यासः । 'तं चेदेतस्मिन्वयसि किञ्चिदुपतपेदि'ति वयोऽवस्थयोरध्यासः । अध्यासमुदाहर्तुं पूर्वोक्तं लक्षणं स्मारयति—**अध्यासो नामेति** । उदाहरति—**तद्यथेति** । यद्यपि भेदग्रहस्य विद्यमानतया पुत्रादिधर्माणां शरीरधर्माणां कृशत्वादीनामिव नाध्यासः आत्मनि सम्भवति, तथापि पुत्रादिकृतशरीरोपचारजनितं स्वात्मनि सुखभाक्त्वं पुत्रादिसाकल्यवैकल्यप्रयुक्तसाकल्यवैकल्ययोग्यमध्यस्य सुखवैकल्यसाकल्याभ्यां तद्विशिष्टस्यात्मनो वैकल्यसाकल्ये अनुसन्दधानः पुत्रे विकले अहमेव विकलः सकले सकल इति व्यवहरतीति बाह्यधर्मप्रयुक्तसाकल्यवैकल्याध्यास एव बाह्यधर्माध्यासो विवक्षितः । अहं प्रत्ययिनं अहङ्कारम् । अध्यासस्यानन्तत्वमात्मतत्त्वविज्ञानं विना नाशरहितत्वम् । एवं कर्तृत्वादिबन्धस्याध्यासत्वं प्रसाध्य तत्प्रसाधनफलभूतां विषयप्रयोजनयोस्सिद्धिमाह—**अस्यानर्थहेतोः प्रहाणायेति** । अहमित्यभिमानस्य प्रवृत्तिजननद्वारा अनर्थहेतुत्वं प्रसिद्धमेव । बन्धस्य सत्यत्वे हि तत्त्वज्ञाननिवर्त्यता न स्यात् । निष्प्रपञ्चात्मज्ञानं तत्त्वज्ञानं च न स्यात् । मिथ्यात्वे तु शुक्तिरजतादिवत्तत्त्वज्ञाननिवर्त्यता सिध्यति । रजतसंसर्गे विद्यमानेऽपि 'नेदं रजत'मिति तत्त्वज्ञानवत् निष्प्रपञ्चात्मज्ञानं तत्त्वज्ञानमपि भवतीति सफलं बन्धमिथ्यात्वनिरूपणम् । आरभ्यन्ते अध्यापकैः पठ्यन्त इत्यर्थः । नन्वत्र वेदान्तजन्यज्ञानस्य साक्षात्कारात्मकप्रतिपत्तिरूपस्यात्मैकत्वविषयकस्यानर्थात्मकबन्धनिवृत्तिः प्रयोजनमुच्यते । नैतदुपपद्यते । वेदान्तजन्यज्ञानस्य शाब्दबोधात्मकस्य प्रमाणस्वभावपर्यालोचनया साक्षात्कारत्वानुपपत्तेः । तदनुपपत्तौ चानर्थनिवर्तकत्वमपि न सम्भवति । अपरोक्षाध्यासरूपे अहङ्काराद्यनर्थे अपरोक्षज्ञा-

नस्यैव निवर्तकत्वात् । ननु, च ज्ञानस्यापरोक्षत्वं न करणविशेषप्रयुक्तम् । किं तु अपरोक्षार्थसम्बन्धप्रयुक्तम् । ततश्च 'यत् साक्षात् अपरोक्षात् ब्रह्मे'तिशास्त्रात् ब्रह्मणो नित्यापरोक्षतया वेदान्तजन्यमपि अपरोक्षब्रह्मसम्बन्धितया ज्ञानमपरोक्षमेव भविष्यतीति चेन्न । अपरोक्षार्थसम्बन्धिज्ञानमपरोक्षमिति वदता अर्थस्यापरोक्ष्यं किंरूपं विवक्षितमिति वक्तव्यम् । न तावदपरोक्षज्ञानविषयत्वम् । इतरेतराश्रयापातात् । नापि चैतन्याभिन्नत्वम् । व्यवहितस्यापि घटाद्यवच्छिन्नचैतन्यस्य स्वाभाविकचैतन्याभेदशालितया तादृशघटस्याध्यासिकचैतन्याभेदशालितया चापरोक्षत्वापातात् । नाप्यभिव्यक्तचैतन्याभिन्नत्वं तत् । अभिव्यक्तिश्चावरणनिवृत्तिः । सा व्यवहिते वृत्तिसंसर्गाभावात् न सम्भवतीति युक्तं वक्तुम् । तादृशचैतन्येन यदि वास्तविकोऽभेदो विवक्षितः । तदा पूर्वोक्तदोषस्तदवस्थ एव । अन्तःकरणावच्छिन्नचैतन्यस्याभिव्यक्ततया तेन व्यवहितचैतन्यघटयोर्वास्तविकस्याभेदस्य विद्यमानत्वात् । नापि तादृशचैतन्येन स्फुरदभेदो विवक्षितः । व्यवहिते विद्यमानोऽप्यभेदो न स्फुरतीति युक्तम् । तथासति सुखादीनामपरोक्षता न स्यात् । तेषां संसर्गाध्यासाभ्युपगमेनाभेदस्य स्फुरत्ताया अभावात् । नापि निवृत्तभेदोपाधिकचैतन्याभेदशालित्वम् । व्यवहितेचान्तःकरणावच्छेदतदनवच्छेदरूपभेदोपाधेर्विद्यमानतया न निवृत्तभेदोपाधिकाभेदशालित्वमिति युक्तम् । तथासति चरमसाक्षात्कारोत्पत्तिदशायां चैतन्यस्यापरोक्षता न स्यात् । तदा अविद्याया भेदोपाधेर्विद्यमानत्वात । नापि स्वव्यवहारानुकूलचैपन्याभेदशालित्वम् । आनुकूल्यस्य चैतन्यविशेषणत्वे व्यवहितघटादौ पूर्वोक्तदोषस्तदवस्थ एव । स्वव्यवहारानुकूलेन जीवचैतन्येन वस्तुगत्या अभेदस्य विद्यमानत्वात् । स्फुरत्ताविवक्षायां च सुखादौ दोषस्तदवस्थ एव । आनुकूल्यस्याभेदविशेषणत्वे तु असम्भवः । अनुमेयस्य वृत्तिकृतचैतन्याभेदाभावेऽपि व्यवह्रियमाणतया व्यभिचारेण व्यवहारे जीवचैतन्याभेदस्यानुकूलत्वाभावात् । नापि निवृत्तावरणचैतन्याभेदशालित्वं तत् । निवृत्तावरणत्वस्यापरोक्ष्यज्ञानाधीनज्ञानत्वेनापरोक्ष्यस्य तद्धटितत्वेऽन्योन्याश्रयात् । तस्मात् नापरोक्षार्थसम्बन्धित्वं ज्ञानस्यापरोक्षत्वम् । अर्थापरोक्ष्यस्यैव दुर्ज्ञानत्वात् । तस्मादेवं ज्ञानापरोक्षत्वं वक्तव्यम् । स्वाविषयविषयकज्ञानाजन्यज्ञानत्वं ज्ञाने अपरोक्षत्वम् । विशेषणज्ञानजन्यविशिष्टज्ञानेऽव्याप्तिवारणाय स्वाविषयविषयकेति । विशेषणस्यापि विशिष्टज्ञानविषयत्वात् नाव्याप्तिः । न चैवमपि 'दण्डी'ति विशिष्टज्ञानात् प्राक् 'दण्डकुण्डले' इति यत्र विशेषणज्ञानं, तत्र कुण्डलस्य विशिष्टज्ञानाविषयत्वादव्याप्तिरिति वाच्यम् । स्वाविषयविषयकत्वं यस्य ज्ञानस्य वस्तु-

गत्या जनकतावच्छेदककोटिनिविष्टम् । तज्जन्यत्वस्य विवक्षितत्वात् । उक्तज्ञानस्य च कुण्डलविषयत्वं न तथेति तादृशज्ञानजन्यत्वेऽपि न दोषः । ईश्वरज्ञानस्योपादानगोचरज्ञानत्वेन 'बहुस्यामि' ति सङ्कल्परूपेण वा जनकत्वेन तज्जन्यतयाऽव्याप्तिवारणायानैश्वरेत्यपि विशेषणीयम् । तथा सगुणध्यानजन्यस्य 'मनसैतान् कामान् पश्यन्नमते य एते ब्रह्मलोक' इति श्रुतिसिद्धस्य ब्राह्मलौकिकपित्रादिकाम' साक्षात्कारस्य स्वाविषयविषयकोपासनारूपज्ञानजन्यतया तत्राऽव्याप्तिवारणाय अदृष्टाद्वारकेत्यपि विशेषणीयम् । न च सगुणोपासनाया अप्युपास्यसाक्षात्काररूपदृष्टद्वारतया पुनरपि स दोषस्तदवस्थ इति शङ्कनीयम् । न हि तत्र तावन्मात्रमेव द्वारम् । पारलौकिकफलतया दृष्टमपि तत्र द्वारभूतमस्त्येव । न चैवं कोलाहलस्थलीयस्वपुत्रादिशब्दसाक्षात्कारस्य बुभुत्साद्वारा साक्षात्कारगतेष्टसाधनताज्ञानजन्यतया तत्राऽव्याप्तिरिति शङ्कनीयम् । बुभुत्सया अन्यथासिद्धस्य तस्य साक्षात्काराजनकत्वात् । बुभुत्सापि शब्दान्तरगोचरसाक्षात्कारप्रतिबन्धिका । तस्मिन् प्रतिबद्धे स्वसामग्रीवशादेव पुत्रादिशब्दसाक्षात्कार इति न तत्राऽव्याप्तिशङ्कापि । न चैवमपि सर्वं व्याप्तिज्ञानं अनुमितिकारणम् । व्याप्तिज्ञानत्वादित्येवमनुमितिस्थले अनुमितेस्सर्वव्याप्तिगोचरतया कारणीभूतव्याप्तिज्ञानविषयोऽपि व्याप्तिविशेषो विषयो भवतीति तत्रातिव्याप्तिरिति वाच्यम् । 'यत्र यत्र व्याप्तिज्ञानत्वं, तत्र तत्रानुमितिकारणत्वमि'ति व्याप्तिज्ञानस्य साध्यतावच्छेदकानुमितिकारणत्वतव्याप्यतावच्छेदकव्याप्तिज्ञानत्वत्वादिविषयतया अनुमितेः तदविषयतया च नातिव्याप्तिः । न चैवमपि साध्यतावच्छेदकव्याप्यतावच्छेदकविषयकव्याप्तिज्ञानमिति पक्षीकारे स दोषस्तदवस्थ इति शंक्यम् । तत्र साध्यतावच्छेदकव्याप्यतावच्छेदकयोस्सामान्यधर्ममात्रेण विषयीकारात्सामान्यधर्ममात्रानवच्छिन्नतया यस्स्वविषयो न भवतीति विवक्षया तद्दोषवारणसम्भवात् । न चैवमप्यभावज्ञानेऽतिव्याप्तिः । तस्य ज्ञानाभावजन्यतया ज्ञानाजन्यत्वादिति वाच्यम् । न हि तत्रानुपलब्धिरूपज्ञानाभावमात्रं कारणम् । किं तु योग्यतासहकृतम् । योग्यता च भेदसाक्षात्कारे प्रतियोगितादात्म्यज्ञानप्रसञ्जनरूपा ,संसर्गाभावस्थले प्रतियोगिसंसर्गज्ञानप्रसञ्जनरूपेति तर्करूपायाः योग्यतायाः स्वाविषयविषयतया तज्जन्ये अभावज्ञाने नातिव्याप्तिः । न चैवं प्रत्यभिज्ञायास्तत्तांशेऽतिव्याप्तिः । चरमज्ञानपदस्यानुभवपरत्वात् । प्रत्यभिज्ञायाश्च तत्तांशे स्मृतिरूपतया न दोषः । इदं च नित्यानित्यज्ञानसाधारणमपरोक्षत्वमिति न कोऽपि दोषः । तादृशज्ञानजन्यव्यवहारविषययोग्यत्वं च अर्थस्य अपरोक्षत्वम् । शाब्दज्ञानस्य च स्वाविषयविष-

यकशब्दतच्छक्त्यादिज्ञानजन्यतया नोक्तलक्षणसङ्गतिरिति नापरोक्षत्वम् । ततश्च कथं वेदान्तजन्यज्ञानस्य अपरोक्षत्वमुच्यत इति चेत् सत्यम् । यद्यपि शब्दादपरोक्षज्ञानं उक्तगत्या न सम्भवति, तथापि निर्विचिकित्सशाब्दज्ञानानन्तरं तत्समानविषयिण्या आदरदीर्घकालनैरन्तर्ययुक्तया भावनया संस्कृतेन चित्तेन अविद्यानिवर्तकः आत्मविषयकस्साक्षात्कारो जायते । मनसश्च कर्तृत्वादिविशिष्टात्मसाक्षात्कारकारणत्वं क्लृप्तमेव । विशुद्धात्मसाक्षात्कारे तु 'दृश्यते त्वग्र्यया बुद्ध्ये' ति श्रुतिप्रामाण्यादुपासनाजनितसंस्कारो विशेषसहकारी'ति कल्प्यते । यद्यपि भावनाजनितस्य विधुरादिगतकामिनीसाक्षात्कारस्य प्रायशो विसंवादो दृश्यत इति, अत्रापि शुद्धात्मसाक्षात्कारे भावनाविनिष्पन्नतारूपसाधारण्याद्विसंवादशङ्का भवेत्, तथापि सा शङ्का निर्णीतप्रामाण्यस्वसमानाकारौपनिषदात्मज्ञानानुसन्धानेनोन्मूलनीया । न हि समानाकारयोः ज्ञानयोः किञ्चित् ज्ञानं संवादि, किञ्चित् नेति प्रतिपन्नम् । एवं परैर्निराकृतं शाब्दापरोक्षं तथैवानुसरतां भामतीमतानुयायिनां पक्षे परम्परया शाब्दज्ञानस्यानर्थनिवर्तकत्वमिति भाष्यार्थो द्रष्टव्यः । विवरणानुयायिनस्तु न शाब्दापरोक्षनिराकरणं सम्मन्यन्ते । तथा हि अपरोक्षार्थगोचरव्यवहारजनकत्वयोग्यज्ञानत्वमेव ज्ञानस्यापरोक्षत्वम् । न तु स्वाविषयविषयकज्ञानाजन्यज्ञानत्वम् । अयमस्मात् परः अयमस्मात् अपरः इति कालकृतपरत्वापरत्वप्रत्यक्षयोः स्वाविषयविषयकबहुतरतपनपरिस्पन्दाल्पतरतपनपरिस्पन्दान्तरितजन्मत्वावगाह्यपेक्षाबुद्धिजन्ययोरव्याप्तेः, अयमेकोऽयमेक इति अपेक्षाबुद्धिजन्यद्वित्वादिसाक्षात्कारे अव्याप्तेश्च, विशिष्टमातापितृजन्यत्वज्ञानजन्ये ब्राह्मणत्वादिसाक्षात्कारेऽव्याप्तेश्च । न चोपदेशोपनीतं विशिष्टमातापितृजन्यत्वमपि ब्राह्मणत्वसाक्षात्कारविषय इति न विशिष्टमातापितृजन्यत्वज्ञानस्य स्वाविषयविषयत्वमिति । न ह्युपनीतं सर्वं सर्वत्र भासत इति नियमः । तथासति परामर्शोपनीतस्यापि लिङ्गादेर्लैङ्गिकभानविषयतापत्त्यानुमितौ सर्वत्रातिव्याप्त्यापत्तेः । स्वपदघटिततया अननुगतं च अर्थापरोक्ष्यघटितमपि ज्ञानापरोक्ष्यं वक्तुं न शक्यत इत्युक्तमिति चेन्न । भवेदेतदेवम् । यद्यर्थापरोक्ष्यं दुर्निरूपं स्यात् । अभिव्यक्तचैतन्याभिन्नतया भासमानत्वमर्थापरोक्षत्वमित्येवंरूपेण सुनिरूपमेव हि तत् । न च सांसर्गिकाध्यासविषयेषु 'अहं सुखी इच्छामो'त्येवमाकारेण प्रतीयमानेषु साक्ष्यभिन्नतया भासमानत्वाभावात् अव्याप्तिरिति वाच्यम् । तेषामहन्त्वाकारेण चैतन्यस्य संसर्गाधिष्ठानत्वेऽपि स्फुरणात्मना तादात्म्याध्यासोपपत्तेः । तथा च 'सुखं स्फुरती'त्यनुभवः । दृष्टं चाकारभेदेनाध्यासवैलक्षण्यं शरीरत्वाका-

रेण संसर्गाध्यासविषये मनुष्यत्वाकारेण तादात्म्याध्यासविषये च शरीरे । ततश्च स्फुरणाभिन्नतया भासमानेषु सुखादिषु नाऽव्याप्तिः । न चानुमेयादावतिव्याप्तिः । अभिव्यक्तचैतन्याभिन्नतया भासमानत्वाभावात् । न चैवमभिव्यक्तिरत्रावरणनिवृत्तिः । तत्रचापरोक्षज्ञानं प्रयोजकम् । ततश्चापरोक्षार्थगोचरव्यवहारजननयोग्यत्वलक्षणस्य ज्ञानापरोक्ष्यस्यावरणनिवृत्तिप्रयोजकतयान्योन्याश्रय इति शङ्कनीयम् । अर्थस्याभिव्यक्तिर्हि न निरुक्तज्ञानापरोक्ष्याधीना । किं तु केषां चिदर्थानामविद्यान्तःकरणतद्धर्मतदवच्छिन्नचैतन्यानां स्वत एव । बाह्यघटादीनां तु वृत्तिसंसर्गाधीना । ततश्च बाह्ये घटादौ यत् ज्ञानं स्वकारणमहिम्ना योग्यविषयसंसर्गेणोदेति, तत् तत्रावरणनिवर्तकम् । गन्धादेस्तु चाक्षुषवृत्तावयोग्यत्वादेव वृत्तिसंसर्गेऽपि नावरणनिवृत्तिः । एवं धर्माधर्मादावपि । नचैवं हृदयादिगोचरानुमितेः अन्तःकरणस्य हृदयस्थितिदशायां जायमानायास्तत्संसर्गेण निष्पत्तेः आवरणनिवर्तकता स्यात् । न च तस्य धर्मादिवदयोग्यत्वमेव । तथासति विशसनादिना बहिर्निर्गतस्याप्यभिव्यक्तिर्न स्यादिति वाच्यम् । न हि हृदयादिगोचरानुमितिः स्वकारणमहिम्ना विषयसंसृष्टा । यत्करणजन्या यद्विषया वा जायमाना विषयेण नियततया संसृष्टैवोदेति, सा खलु स्वकारणमहिम्ना विषयसंसृष्टेत्युच्यते । चक्षुरादिकरणिका करणमाहात्म्यात् नियतविषयसंसर्गा । प्रत्यग्विषया तु विषयमहिम्ना । न हि काचिदपि वृत्तिः प्रतीचा संसर्गरहिता जायते । तस्य वृत्तिषूपादानत्वात् । हृदयगोचरा त्वनुमितिः न तथा । न ह्यनुमानं वृत्तिसंसर्गे प्रयोजकम् । वह्न्याद्यनुमाने व्यभिचारात् । नापि हृदयरूपविषयमहिम्ना । हृदयात् बहिर्निर्गतान्तःकरणावयवावच्छेदेन जायमानायाः हृदयविषयवृत्तेः हृदयसंसर्गनियमाभावात् । ततश्च वेदान्तजन्यज्ञानस्य प्रत्यगभिन्नब्रह्मविषयस्य विषयमहिमाधीनतत्संसर्गशालितया निरतिशयानन्दगोचरावरणनिवर्तकता । प्रतीचश्चाभिव्यक्तचैतन्यस्वरूपात्मना अपरोक्षार्थतया तद्विषयव्यवहारजननयोग्यस्य वेदान्तजन्यवृत्तिरूपस्य वा स्वरूपभूतस्य वा ज्ञानस्यापरोक्षत्वं च । ततश्च 'दशमस्त्वमसी'तिवाक्यजन्यमपि ज्ञानं साक्षिविषयतया अपरोक्षम् । एवं पर्वताद्यंशे अनुमितेरप्यपरोक्षत्वम् । न चैवमावरणनिवृत्तौ ज्ञाने अपरोक्षत्वातिरिक्तस्य विषयसंसर्गस्य प्रयोजकतायाः स्वीकारात् किमर्थं वेदान्तजन्यज्ञानस्यापरोक्षत्वप्रसाधनमिति शङ्कनीयम् । यद्यदावरणनिवर्तकं, तत् सर्वमपरोक्षमिति नियमः प्रकृते बाधितो माभूदिति । 'नेदं रजतं, किं तु शुक्तिरि'तिपरोक्षज्ञानं तु विक्षेपांशाज्ञानमात्रनिवर्तकम् । न त्वावरणमपि निवर्तयति । न चैवमध्ययन-

गृहीतवेदान्तजन्यज्ञानस्यापि साक्षिगोचरस्य श्रवणादेः पूर्वमज्ञाननिवर्तकता स्यात् । अपरोक्षत्वादिति वाच्यम् । निदिध्यासनपर्यन्तं तत्तद्दोषप्रतिबद्धस्याज्ञानानिवर्तकत्वात् । तत्र च श्रवणनिवर्तनीयो दोषः 'इदं वाक्यं प्रत्यगभिन्नब्रह्मपरं न सम्भवती'ति प्रमाणासम्भावनारूपः । मननिवर्तनीयश्च विरुद्धतया भासमाने प्रतीचि कथं ब्रह्माभेद इति प्रमेयासम्भावनारूपः । निदिध्यासननिवर्तनीयस्तु कर्तृत्वाध्यासस्य स्वरसवाहितारूपो विपरीतभावनात्मकः । अतो निदिध्यासनान्तैस्साधनैः प्रतिबन्धकेष्वपनीतेषु जायमानं वेदान्तवाक्यजन्यं ज्ञानमविद्यां नाशयत्येव । न च यन्मते मानसं ज्ञानमविद्यानिवर्तकं , तस्य निदिध्यासनानन्तरं वेदान्तवाक्यानुसन्धानं नापेक्षितम् । शाब्दापरोक्षवादिनस्तु तत्कल्पनं निर्मूलमिति शङ्कनीयम् । 'ओमित्यात्मानं युञ्जीते'त्यादिभिः शास्त्रैस्तापनीयश्रुत्यादिपर्यालोचनया महावाक्यसमानार्थस्य प्रणवस्य ध्यानकालेऽप्यनुसन्धानप्रतिपादनेनाखण्डाकारचरमवृत्तिकालेऽपि तदनुस्मरणस्य श्रुतिसम्मतत्वात् । अस्मिंश्च पक्षे भाष्यं न परम्पराभिप्रायं व्याख्येयम् । एवं तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिप्रतिपन्नमुपनिषदेकगम्यत्वं 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरमि'त्याचार्याधीनस्य शाब्दज्ञानस्य जन्मान्तरनिवृत्तप्रायसकलदोषपुरुषविशेषे प्रारब्धमात्रावशेषरूपजीवन्मुक्तिसाधनत्वं, 'तस्मै मृदितकषायाय तमसः पारं दर्शयती'ति दृशिधातूपात्तसाक्षात्काररूपत्वं, 'तद्धास्य विजज्ञाविति विजज्ञावि'ति विशिष्टज्ञानरूपत्वं चोपपद्यते । 'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् । ज्ञाने त्वनाहते तस्मिन् सर्वं ब्रह्ममयं भवेत् ॥' इति बृहन्नारदीयवचनं 'तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥' इति वाक्यवृत्तौ भगवत्पादवचनं च सङ्गच्छते । ब्रह्मणश्च मनोगम्यत्वं 'यन्मनसा न मनुत' इति श्रुत्या निषिद्धम् । न च सा श्रुतिः 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुत्यनुसारेणाशुद्धमनोविषयेति वाच्यम् । 'येनाहुर्मनो मत'मिति वाक्यशेषस्य मनोमात्रपरतया तदैकरूप्याय पूर्वत्रापि मनोमात्रग्रहणस्योचितत्वात् । दृश्यत इति श्रुतिस्तु मनस उपादानतया कारणत्वाभिप्राया भविष्यति । दृश्यते च तावत्मात्राभिप्रायान्यत्रापि तृतीया 'मनसा ह्येव पश्यति मनसा शृणोती'त्यादौ । न हि चाक्षुषादिज्ञाने मनसः करणत्वं सम्भवति । एवं वेदान्तप्रमाणकेऽपि ब्रह्मसाक्षात्कारे भविष्यति । न च शब्दगम्यत्वमपि निषिद्धं 'यतो वाचो निवर्तन्त' इति । तत्र हि प्रवृत्त्यभावरूपा निवृत्तिः प्रतिपाद्यते । वाचश्चार्थे प्रवृत्तिश्शक्तिरूपेति तन्निषेधेऽपि लक्षणयौपनिषदत्वे न काचिदनुपपत्तिः । ननु, वेदान्तानामात्मैकत्वप्रतिपत्तिः प्रयोजनमिति कथमुच्यते । प्रपञ्चसृष्ट्यादीनां त-

दनुगुणतया ब्रह्मणि सर्वज्ञत्वादिगुणबृन्दस्य तत्र तत्र प्रतिपादनदर्शनादित्याशङ्क्याध्यारोपप्रक्रियथापवादशेषभूतानां तद्वाक्यानां प्रत्यगभिन्नब्रह्मण्येव तात्पर्यमिति वक्ष्यमाणैर्न्यायैः स्पष्टं भविष्यतीत्याह—**यथा चायमर्थ इति** । ननु वेदान्तानामेव ब्रह्म प्रतिपाद्यम् । तत् कथमस्य शास्त्रस्य विषय इत्याशङ्क्य साक्षाद्विषयत्वासम्भवेऽपि वेदान्तद्वारा विषयो भविष्यति सूत्ररूपस्य शास्त्रस्य तात्पर्यनिर्णयानुकूलयुक्तिज्ञानं साक्षात्प्रयोजनम् । युक्तयो विषयः । युक्तिज्ञानमेव मीमांसेत्युच्यते । मीमांसाया वेदान्तवाक्यं विषयः । तात्पर्यनिर्णयः प्रयोजनम् । वाक्यस्य च ब्रह्म विषयः । तज्ज्ञानं प्रयोजनमिति परम्परया सूत्राणां ब्रह्म विषय इत्यभिप्रेत्याह—**वेदान्तमीमांसाशास्त्रस्येति** । व्याचिख्यासितस्येत्यनेन स्वग्रन्थस्य सूत्रार्थज्ञानं साक्षात्प्रयोजनमिति दर्शितम् । आदिमं सूत्रमित्यनेन विषयादिप्रतिपत्तिद्वारा कृत्स्नशास्त्रोपोद्घातसङ्गतिर्दर्शिता । सूत्रपदानि व्याचष्टे—**तत्रेति** । ननु, 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथे'ति बहुष्वर्थेष्वनुशिष्टस्य कथं सहसानन्तर्यार्थत्वनिश्चय इत्याशङ्क्यार्थान्तराणामनुपपन्नत्वं प्रकृते दर्शयति—**नाधिकारार्थ इत्यादिना** । जिज्ञासा हि ज्ञानेच्छा । शास्त्रेण च तत्प्रतिपादने क्रियमाणे तदारम्भार्थकत्वं सूत्रस्थाथशब्दस्य भविष्यति । न च तदस्तीत्यभिप्रायेणाह—**ब्रह्मजिज्ञासाया इति** । ननु, जिज्ञासाशब्दस्य विचारेऽपि प्रचुरः प्रयोगो दृश्यते 'तद्विजिज्ञासस्व स विजिज्ञासितव्य' इत्यादिश्रुतौ । न च तत्रेच्छा प्रतिपाद्या । तस्या विध्यनन्वयित्वात् । तस्मात् ब्रह्म जिज्ञासितव्यमिति च भाष्यकारप्रयोगः । ततश्च जिज्ञासापदस्य विचारार्थकत्वपक्षे तस्य सूत्रैः क्रियमाणतया तदारम्भार्थकत्वमथशब्दस्योपपद्यते । न चारभ्यत इत्यनुक्त्वापि विचारे क्रियमाणे तदारम्भस्य ज्ञातुं शक्यतया तत्प्रतिपादनवैयर्थ्यमिति वाच्यम् । तथा सति 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वे'त्यादावपि वक्ष्यामि व्याख्यास्यामीत्यादिप्रतिज्ञाकरणं व्यर्थं स्यात् । तत्र यदि त्वामस्मि वच्मि विदुषां समवायोऽत्र वर्तते । आत्मीयां मतिमादाय स्थितमत्र विधेर्हि तत् ॥' इति नटीं प्रति सूत्रधारवचनेऽहं वच्मीत्यस्य वैयर्थ्यं माभूदिति वचनसामान्यप्रतिपादकस्य वच्मीत्यस्य उपदेशात्मकवचनविशेषे लक्षणां स्वीकृत्य तदर्थस्यावश्यवक्तव्यताद्योतनफलकत्वमुपेयते, तथाहं सखा भर्ता वा गुरुसमीपत आज्ञारूपोपदेशग्राह्यमपि अर्थं लालित्येन प्रतिपादयामीति विशेषपरं सदघुनैवावश्यं सावधानतया ग्राह्यमिति द्योतयतीति न वैयर्थ्यं, तर्हि प्रकृतेऽप्यधिकारमात्रपरस्याथशब्दस्याधिकारिविशिष्टारम्भाविशेषलक्षणामुपेत्याधिकार्यभावादनारम्भणीयमिति शङ्कानिवृत्तिद्योतनफलकत्वमुपेयमिति

चेन्न । आनन्तर्यार्थत्वे तत्प्रतियोगिविवेकादिप्रतिपादनद्वारा अधिकारिविशेषलाभफलकत्वे सम्भवत्यधिकारिसामान्यफलकस्यारम्भार्थकत्वस्यानुचितत्वात् । ननु, मङ्गलार्थता तर्ह्यस्तु । न च तस्यानन्वयः । ब्रह्मजिज्ञासा मङ्गलमिति स्तुतिपरत्वोपपत्तेः इत्याशङ्क्य शास्त्रारम्भे तदुपयोगितयाधिकारिबोधनसम्भवेन व्यर्थप्रायस्तुतिपरत्वं कल्पनीयमित्याह—मङ्गलस्यचेति । ननु, शास्त्रादौ मङ्गलमाचरितव्यम् । ततो मङ्गलार्थत्वे न व्यर्थतेत्याशङ्क्य सत्यं मङ्गलमाचरितव्यम् । तदर्थं न मङ्गलप्रतिपादनमपेक्षितम् । न हि मङ्गलप्रतिपादनमात्रेण मङ्गलाचारस्सिद्धो भवति । अपि तु तदनुष्ठानेन । तच्चाथशब्दोच्चारणं तदनुसन्धानं वा । तथा च स्मृतिः 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति । अत्र हि माङ्गलिकाविति 'तदस्य प्रयोजनमि'त्यधिकारविहितठक्प्रत्ययान्तम् । ततश्च तदनुसन्धानस्य तदुच्चारणस्य वा मङ्गलत्वे विषयतया तत्राथशब्दस्य कारकत्वात् । मङ्गलप्रयोजनकत्वमुपपद्यते । तच्चानन्तर्याद्यर्थान्तरपरत्वेऽपि सिध्यतीत्याह—अर्थान्तरप्रयुक्त एव ह्यथशब्द इति । एतेन भाष्यकृता मङ्गलं कुतो न कृतम् । न च निबद्धं ग्रन्थादाविति शङ्का निरस्ता । नित्यसन्ततात्मतत्त्वानुसन्धानेन हि भगवता भाष्यकृता मङ्गलं न कृतमिति न शङ्कनीयम् । ग्रन्थतो निबन्धनं च शिष्याणामाचारप्रदर्शनार्थम् । ततश्चाथशब्दव्याख्यानेनैवाचारप्रदर्शनं स्फुटं भविष्यतीति न तदर्थं निबन्धनं कृतम् । ननु,पूर्वप्रकृतापेक्षार्थत्वं अथशब्दस्य दृष्टम् । यथा 'आत्मा नित्यः, अथानित्य' इति विप्रतिपत्तिवाक्ये । नन्वत्र प्रकृतापेक्षां किं तेनैव रूपेणाथशब्दः प्रतिपादयति, उत तां प्रयोगोपाधिं कृत्वा प्रकृतमनित्यशब्देन विशेष्यतयापेक्ष्यमाणमात्मानमेव प्रतिपादयति । नाद्यः । तथासत्यनन्वयात् । आत्मा नित्यः पूर्वप्रकृतापेक्षा अनित्य इति किं केन सङ्गतं स्यात् । नापि द्वितीयः । तथासति आत्मा नित्यः, आत्मा अनित्य इति एकस्मिन्वाक्ये विशेष्यस्य द्विरुपादानं व्यर्थं स्यात् इति चेन्न । द्वे एते वाक्ये एकेनात्मा नित्य इत्युक्ते अन्येनाथ अनित्य इति हि प्रयुज्यते । ततश्च विप्रतिपत्तिरूपत्वमप्युपपद्यते । तत्राथशब्दस्य प्रकृतापेक्षां प्रयोगोपाधिं कृत्वा आत्मप्रतिपादकत्वं दृष्टम् । तद्वत् प्रकृते किं न स्यादित्याशङ्क्य तथासति अत्र जिज्ञासयापेक्ष्यमाणं स्वहेतुतयाक्षिप्तत्वात् प्रकृतं च विवेकादिकमेव पर्यवस्यति । ततश्चानन्तर्यार्थत्वपक्षे योऽर्थस्सिध्यति, सोऽस्मिन् पक्षेऽपि सिध्यतीति प्रतिपादयति—पूर्वप्रकृतापेक्षायाश्चेति । परं तु विप्रतिपत्त्यारम्भ एव तदर्थकाथशब्दप्रयोगस्साधुः । वृद्धव्यवहारानुसारादिति फल-

त इतिशब्दगतेन काक्वा सूच्यते । एवं कस्य चित् प्रष्टुरप्रस्तुतत्वात् ब्रह्मजिज्ञासा कृत्स्नेति प्रतिपादनस्यानर्थक्यात्, तथासति अधिकार्यलाभाच्च प्रश्नकात्स्न्यर्थियोरप्यनुपपन्नत्वं द्रष्टव्यम् । नन्वानन्तर्यार्थत्वपक्षेऽपि वेदाध्ययनमेव तत्प्रतियोगिभूतमस्तु । 'स्वाध्यायोऽध्येतव्य' इति विधिना हि स्वाध्यायस्य यद्यत् प्रयोजनं, तत्सर्वमर्थतैनैव संपादनीयमिति नियमिततया वेदान्तवाक्यानुसन्धानजन्यस्य तत्तात्पर्यनिर्णयद्वारा तदर्थावबोधफलकस्य च वेदान्तविचारस्य वेदान्तविषयकदृढसंस्कारापेक्षतया स्वाध्यायप्रयोज्यस्याध्ययननियमापेक्षत्वात् धर्मविचारवत् ब्रह्मविचारेऽपि अध्ययनानन्तर्यस्यावश्यकत्वादित्याशङ्क्य तथापि तत् न पुष्कलकारणम् ! विचारद्वयसाधारणत्वात् । अतो विशेषकारणमन्यदपि वक्तव्यमित्याशयवानाह—**स्वाध्यायेति** । स्वाध्यायपदं तदध्ययनपरम् । **नन्विति** । अत्र किं कर्मावबोधस्य पुष्कलकारणत्वं शङ्क्यते, किं वा तदन्तर्गतिमात्रम् । नाद्यः । विवेकादीनामन्येषामपि श्रुतिस्मृतिसिद्धानां विद्यमानत्वान् न कर्मावबोध एव सामग्री वेदान्तविचारे । न द्वितीयः । तत्रापि किं विविदिषाद्वारा ब्रह्मविचारोपयुक्ततया तदानन्तर्यमथशब्दार्थतया विवक्षितम् । उत ब्रह्मविचारकालेऽपि कर्मणां करणीयतया तदानन्तर्यमथशब्दार्थ इति । नाद्यः । आनन्तर्योक्तिद्वाराधिकारिविशेषणसमर्पको ह्यथशब्दः । ततश्च कर्मावबोधानन्तर्ये तद्बोधस्य कर्मविचारं विना असिद्धेर्विचारितकर्मत्वमधिकारिविशेषणं लभ्यते । न च विविदिषोपयुक्तस्य विचारितकर्मत्वस्याधिकारिविशेषणत्वमत्र वक्तव्यमधिकारं विना कृतमकृतमितिशङ्कानिराकरणद्वारायं निर्णय उपयुज्यते । तदेवाधिकारिविशेषणम् । वेदान्तविचारे च उत्कटविविदिषादिनिर्णयेनैव तादृशशङ्काया निराससम्भवात् न विविदिषाप्राचीनस्य विचारितकर्मत्वस्य पृथङ्निर्णयोऽपेक्षितः । तस्य विविदिषाद्वारैव विचारोपयुक्तत्वात् । द्वितीये तु कर्मसहितवेदान्तविचारस्य ततः प्राक् कर्मविचारं विना कर्तुमशक्यतया वेदान्तविचारारम्भे कर्मसमानकाले विचारितकर्मत्वनिर्णय उपयुक्तो भवेत् । न तु तदस्ति । कर्मानुष्ठानसहित एव ब्रह्मविचारस्स्वकार्योपयुक्त इत्यत्र प्रमाणाभावात् । ननु, विविदिषावाक्येन कर्मणां मोक्षार्थत्वविधानात् ज्ञानैकसाध्ये मोक्षे तद्द्वारा कर्मोपयोगस्य वक्तव्यतया ज्ञानसाधनैश्श्रवणादिभिस्समुचितानि कर्माणि भविष्यन्तीतिचेन्न । विविदिषावाक्यं विविदिषार्थमेव कर्माणि विधत्त इति 'अत एव चाग्नीन्धनाद्यनपेक्षा' इत्यादिभिस्सूत्रैर्निरूपयिष्यते । तस्मात् कथं कर्मविचारतदवबोधानन्तर्यं ब्रह्मविचारस्येति चेत्, उच्येत । अत्र हि येनास्मिन् जन्मनि कर्मविचारः कृतः । तेनैव वेदान्तविचारः कर्तुं शक्यते । नान्येनेति शङ्क-

को मन्यते । तथाहि अस्मिन् शास्त्रे निर्विशेषब्रह्मविद्यायाः निरूपणं सविशेषब्रह्मविद्यायाः दहरोपासनादिरूपायाः कर्मानवबद्धायास्तदवबद्धायाश्चान्तरादित्यादिविद्याया भविष्यति । निरूपणं च तदनुष्ठानार्थम् । तत्र कर्मावबद्धोपासनस्य कर्मसमुच्चयस्स्पष्ट एव । दहराद्युपासनानामपि 'अग्निहोत्रादि तु तत्कार्यायैवे'त्यधिकरणे कर्मसमुच्चयो निरूपयिष्यते । निर्विशेषविद्यानुष्ठानकालेऽपि 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' । इति निर्विशेषब्रह्मवित्त्वेन श्रुतिस्मृतिप्रसिद्धानां जनकादीनां कर्मदर्शनात् कर्मकर्तव्यतावगम्यते । न च कर्मणैव हि संसिद्धिमिति वाक्यं विद्यानुष्ठानकाले न जनकादिषु कर्म प्रतिपादयति । किं तु तेषु विविदिषोपयुक्तं कर्म प्रतिपादयतीति समञ्जसम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'तिवाक्ये ब्राह्मणग्रहणेन विविदिषोपयुक्ते कर्मणि ब्राह्मणानामेवाधिकारात् । न च विविदिषाकामस्याधिकारिणोऽर्थसिद्धस्योद्देश्यतया न ब्राह्मण्येन विशेषणं युक्तमिति वाच्यम् । 'राजा स्वाराज्यकामो राजसूयेन यजेते'त्यत्र राजकर्तृकप्रयोगविधिपक्षे राजकर्तृके प्रयोगे तदन्यस्यासामर्थ्येनाधिकारासम्भवात् । यथा राजत्वस्यार्थादधिकारिकोटिप्रवेशः, फलयागविधिसम्बन्धपक्षे प्राप्तयागोद्देशेन फलसम्बन्धस्य राजत्वजातेश्च कर्त्रवच्छेदद्वारा विधानासम्भवेऽपि फलसम्बन्धमात्रविधिं स्वीकृत्य कर्तृविशेषापेक्षायां स्वाराज्यकामपदं राजानुवादकपदसमभिव्याहारेण वस्तुगत्या तत्परमेव पर्यवस्यतीति स एवार्थात् कर्ताधिकारी च भविष्यतीति वा स्वीक्रियते, तद्वत् प्रकृतेऽपि भविष्यतीति अतो विविदिषार्थे कर्मणि ब्राह्मणानामेवाधिकाराज्जनकादिषु दृश्यमानं कर्म मोक्षार्थमेव भविष्यतीति ज्ञानैकसाध्ये मोक्षे ज्ञानाङ्गतया तस्य निवेशो वक्तव्य इति निष्प्रपञ्चब्रह्मसाक्षात्कारोपयुक्तायां तदुपासनायां कर्मसाहित्यं सिद्धं भवति । अपि च प्रत्यवायपरिहारार्थमपि उपासनाकाले नित्यनैमित्तिकानि कर्माणि कर्तव्यानि । ततश्च वेदान्तशास्त्रनिरूपणीया सर्वाप्युपासना कर्मसमुच्चितैवेति तत्तदुपासनाफलकामेनाधिकारिणा वेदान्तविचारमात्रेण कर्मसमुच्चिततत्तदुपासनायाः कर्तुमशक्यतया कर्मविचारोऽपि कर्तव्यः प्राप्नोतीत्युभयोरेकः कर्ता सिध्यति । अपि च पूर्वोत्तरमीमांसयोरेकपुरुषाध्येतव्यताप्रयोजकमेकग्रन्थत्वमपि शक्यं व्युत्पादयितुम् । अथातोधर्मजिज्ञासेत्यत्र हि अथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते । अतश्शब्देन कृत्स्नस्य विवक्षितार्थत्वमुच्यते । तदनुसारेण धर्मशब्दः कृत्स्नवेदार्थपर इत्येव वक्तुमुचितम् । कृत्स्नवेदाध्ययनस्य कृत्स्नवेदार्थविचार एवानन्तर्योक्तिरुचिता । तदेकदेशाध्ययनमेव धर्मशब्दस्य यथाश्रुतार्थत्वे आनन्त-

र्थप्रतियोगितया वक्तुमुचितम् । उपनिषदध्ययनानन्तर्यस्य धर्मविचारेऽनुपयोगात् । एवं कृत्स्नवेदविवक्षितार्थत्वहेतुरपि धर्मशब्दस्य वेदार्थपरतां न्यायतौल्यादुपदर्शयति । धर्मस्य हि वेदविवक्षितत्वाद्विचारणीयत्वे उच्यमाने यो यो वेदविवक्षितः स विचारणीय इति प्राप्नोति । ततश्च उपनिषदर्थस्यापि विचारणीयता प्राप्नोति । वेदविवक्षितत्वाविशेषात् । अथवा धर्मशब्दः अलौकिकश्रेयस्साधनताप्रवृत्तिनिमित्तकस्सन् ज्योतिष्टोमादिवत् ब्रह्मणोऽपि शक्त्यैवाभिधायकः । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत' इति श्रुत्या ब्रह्मणोऽपि श्रेयस्साधनताबोधनात् । ननु, श्रेयस्साधनतामात्रार्थत्वे श्येनादीनामपि तथात्वात् धर्मता स्यात् । तद्व्यावृत्त्यर्थं बलवदनिष्टाननुबन्धित्वमपि वक्तव्यम् । ततश्च न ब्रह्मसाधारण्यम् । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति वचनेन ब्रह्मणोऽपि बलवदनिष्टानुबन्धित्वादिति चेन्न । बलवदनिष्टाननुबन्धित्वं किं साधनविशेषणं, उत श्रेयोविशेषणम् । आद्येऽपि किं तदविनाभूतत्वं बलवदनिष्टानुबन्धित्वं, उत तज्जननयोग्यत्वम् । नाद्यः । श्येनादीनामपि प्रायश्चित्ते सति नरकाजनकतया तद्विनाभूतत्वात् धर्मता स्यात् । द्वितीये तु सर्वेभ्यः कामेभ्यः दर्शपूर्णमासाविति वचनानुसारेणाभिचारफलकत्वस्यापि सिद्धौ नित्यप्रयोगेऽपि सत्यामभिचारकामनायां वैरिविपत्तिफलकत्वस्यापि सम्भवात् बलवदनिष्टजननयोग्यत्वमस्तीति धर्मता न स्यात् । नापि श्रेयोविशेषणं तदिति द्वितीयः पक्षः । तथासति श्येनादीनां धर्मता स्यात् । तज्जन्यश्रेयसोऽनिष्टानुबन्धनाभावात् । तस्मादेवं बलवदनिष्टाननुबन्धित्वं वक्तव्यम् । बलवदनिष्टप्रयोजकश्रेयोगतोद्देश्यताप्रतियोग्यनुष्ठाननिष्पन्नभिन्नताविशिष्टत्वम् । तच्च श्रेयस्साधनविशेषणम् । उद्देश्यताया अनिष्टप्रयोजकत्वं स्वजन्ययागानुष्ठानद्वारकं बोध्यम् । ततश्च यदा वैरिविपत्तिकामनां विना दर्शपूर्णमासावनुष्ठीयेते, तदा तत्प्रयोगफलपापक्षयगतोद्देश्यताया नरकप्रयोजकत्वाभावेन तत्प्रतियोग्यनुष्ठाननिष्पन्नस्य कर्मणो निरुक्तं बलवदनिष्टाननुबन्धित्वमस्त्येवेति न दोषः । वैरिविपत्त्यर्थप्रयोगे तु निरुक्तं नास्तीति श्येनादिवत् तस्याधर्मत्वमेव । निरुक्तं बलवदनिष्टाननुबन्धित्वं ब्रह्मणोऽप्यस्ति । तस्यानुष्ठेयत्वाभावेनानुष्ठाननिष्पन्नभिन्नतायास्सत्त्वात् । ततश्च निरुक्तेन प्रवृत्तिनिमित्तेन धर्मशब्दः कर्मब्रह्मसाधारणो भविष्यति । ततश्च 'अथातो धर्मजिज्ञासे'ति प्रतिज्ञा कर्मब्रह्मसाधारणीति सिद्धम् । **एवमेकप्रतिज्ञाक्रोडीकृतत्वात्** अथातो धर्मजिज्ञासेत्यारभ्यानावृत्तिश्शब्दादित्यन्त**पर्यन्तगतेन सङ्कर्षकाण्डेन** सह विंशतिलक्षणीरूपमेकं शास्त्रं सिध्यति । ननु, **सङ्कर्षेण षोडशलक्षणी कर्ममीमांसा**

जैमिनिकृता चतुर्लक्षणी ब्रह्ममीमांसा बादरायणकृता । जैमिनिबादरायणयोश्च विरुद्धसिद्धान्ताभिनिवेशोऽवगम्यते । 'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ।' 'परामर्शं जैमिनिरचोदना चापवदति ही'तिसूत्राभ्यां ब्रह्मसन्यासापलापं जैमिनिमतत्वेनानूद्य 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । 'अनुष्ठेयं बादरायणस्साम्यश्रुते'रितिसूत्राभ्यां ब्रह्मसन्यासस्वीकारः बादरायणमतत्वेन दर्शितः । 'परं जैमिनिर्मुख्यत्वात्' 'तद्भूतस्य तु नातद्भावो जैमिनेरपी'ति सूत्राभ्यां ब्रह्मसन्यासयोरुपगमो जैमिनिमतत्वेनापि दर्शित इति चेन्न । 'विप्रतिषेधाच्चासमञ्जसमि'तिन्यायेन सांख्यमतवत् जैमिनिमतमपि पूर्वोत्तरवचनविरोधेनानादेयमिति सूचनाय तद्दर्शनोपपत्तेः । ततश्च विरुद्धसिद्धान्ताभिनिविष्टकविकृतग्रन्थयोः कथमेकत्वम् । अपि च ग्रन्थयोरप्यस्ति विरोधः । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ' इत्यक्रियार्थानामप्रामाण्यमाशंक्य 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि'ति तेषामेव विधिस्तावकत्वेन प्रामाण्यं व्यवस्थापितं जैमिनिना । इदं वेदान्तवाक्यसाधारणमपि प्रतीयते । आम्नायशब्दस्य वेदमात्रपरत्वात् । बादरायणेन तु 'शास्त्रयोनित्वादि'ति वेदान्तानां ब्रह्मणि प्रामाण्यं उपक्षिप्य 'तत्तु समन्वयादि'ति सूत्रेणार्थवादाधिकरणोक्तं वेदान्तेषु क्रियाशेषत्वं पूर्वपक्षीकृत्य स्वातन्त्र्येण ब्रह्मणि प्रामाण्यं प्रतिष्ठापितम् । तथा नवमे देवतानिराकरणं जैमिनितन्त्रे दृश्यते । बादरायणेन तु देवताविग्रहादिकं मन्त्रार्थवादादिप्रामाण्याभ्युपगमेन 'तदुपर्यपि बादरायणस्सम्भवादि' त्यत्र व्यवस्थापयिष्यते । तत् कथं एवं सत्येकप्रबन्धत्वमिति चेत, न तावद्विरुद्धमताभिनिविष्टकविकृतत्वमेकग्रन्थत्वविरोधि । विरुद्धाभिप्रायशालिनोरपि कञ्चिदर्थविशेषमुद्दिश्य समयबन्धपूर्वकमेकप्रबन्धनिर्मातृतोपपत्तेः । दृश्यते हि विरुद्धमताभिनिविष्टयोः वामनजयादित्ययोः काशिकाख्यैकप्रबन्धनिर्मातृत्वम् । ग्रन्थतस्तु विरोधो नास्त्येव । 'अथातो धर्मजिज्ञासे'ति हि द्वे प्रतिज्ञे । एका विंशतिलक्षणीसाधारणी । तस्यां धर्मशब्दः कर्मब्रह्मसाधारणः । द्वितीया तु कर्मकाण्डमात्रविषया । तस्यां धर्मशब्दः कर्ममात्रपरः । प्रतिज्ञाद्वयं चावृत्त्या एकेन सूत्रेण सुसम्पादमेव । सूत्राणामावृत्त्या अनेकार्थत्वस्यालङ्कारत्वात् । अत एव 'अथातश्शेषलक्षणमि'ति सूत्रं 'द्विलक्षण्याः परं शिष्टं यावत् किञ्चन लक्षणम् । तत्सर्वं वक्तुमारब्धथातश्शेषलक्षणम् ॥'इति अवशिष्टदशाध्यायीप्रतिज्ञापरत्वेन व्याख्याय तृतीयाध्यायप्रतिज्ञापरत्वेनापि व्याख्यातम् । 'शेषः परार्थत्वादि'ति सूत्रं तु द्वितीयप्रतिज्ञायां लक्षणप्रतिपादनपरतया सङ्गतम् । तद्वत् 'चोदनालक्षणोऽर्थो धर्म' इति सूत्रं

द्वितीयप्रतिज्ञायां लक्षणप्रतिपादकतया समनुगतं भविष्यति। तत्र च कर्मणि चोदनायाः प्रामाण्ये प्रतिज्ञाते तत्प्रामाण्यनिरूपणं प्रथमाध्यायार्थत्वेन प्रतिज्ञायते । तस्य निमित्तपरीष्टिरिति तदनुसारेण 'आम्नायस्ये'ति सूत्रे चोदनासमभिव्याहृतानामेव सिद्धार्थपरत्वेन प्रतीयमानानामप्रामाण्यमाशङ्क्य 'विधिना त्वेकवाक्यत्वा'दिति सूत्रेण तेष्वेव विधेयस्तावकत्वमुच्यत इति न वेदान्तविषयकशास्त्रयोनित्वात्तत्तुसमन्वयादिति'सूत्रयोर्विरोधः । न 'देवता देवतान्तराभावादि'तिसूत्रेण न देवानां कर्मण्यधिकारः । स्वोद्देश्यदेवतान्तराभावादिति प्रतिपादयता मन्त्रार्थवादप्रामाण्यानुसारेण देवतादिकं जैमिनिना स्वीकृतमेवेति तदीयतन्त्रगतं नावमिकाधिकरणम् अपूर्वमेव धर्माणां प्रयोजकम्। न देवता। तस्यास्तत्र गुणत्वादित्येवमर्थपरम् । न तु देवतास्वरूपादिनिराकरणपरम् । देवतायाश्च गुणत्वं देवतोद्देश्यकत्यागरूपे यागे उद्देश्यकारकत्वेनेति तत्सत्यपि फलदातृत्वे न प्राधान्येन तेन विरुध्यते । अतो न ग्रन्थतो विरोध इति सिद्धमेकग्रन्थत्वं विंशतिलक्षण्याः । एकश्च ग्रन्थः कृत्स्नः एकेनैवाध्येतव्यः। ततश्च पूर्वोत्तरमीमांसाध्ययनस्यैककर्तृकत्वे सिद्धे युगपदध्येतुमशक्यत्वात् क्रमापेक्षायां यथाग्निहोत्रयवागूपाकयोरर्थात् क्रम आश्रीयते । पूर्वं यवागूपाकः, ततोऽग्निहोत्रहोमः । यवागूपाकं विना यवागूरूपद्रव्यासिद्धौ होमस्यैवानिष्पत्तेः । तथा पूर्वमीमांसाया उत्तरमीमांसापेक्षणात् सैव पूर्वं कर्तव्या अर्थक्रमानुसारेण । पूर्वमीमांसागतः प्रामाण्यविचारः श्रुत्यादिविषयकः सर्वत्रापि वेदान्तविचारे अपेक्षितः । शब्दान्तरादिभिः कृतो धर्मभेदविचारः विद्याभेदविचारे अपेक्षितः । श्रुतिलिङ्गादितत्प्राबल्यविचारः प्रायशोऽपेक्षितः। सर्वत्र श्रुत्यादिभिः कृतः क्रमविचारः सृष्ट्यादिक्रमे अर्चिरादिमार्गक्रमे च अपेक्षितः । अतिदेशादिविचारोऽपि 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यादिवाक्यार्थनिर्णये अपेक्षितः । 'प्रदानवदेव तदुक्तम्' । 'कुशाच्छन्दस्तुत्युपगानवत्तदुक्त'मित्यादौ सम्मतित्वेन पूर्वमीमांसागतन्यायानां उदाहृतत्वात् तदर्थज्ञानार्थमप्यपेक्षास्त्येव । तथा पाठानुसारेण क्रमस्सिध्यति । स्वाध्यायोऽध्येतव्य इति विधिना क्रमविशेषविशिष्टमक्षरराशिं स्वाध्यायशब्दोदितं अधीयीतेति विधाने व्युत्क्रमेणाध्ययने क्रियमाणे स्वाध्यायाध्ययनत्वासम्भवात् स्वाध्यायाक्षराणां यः क्रमः, तदनुसारी अध्ययनक्रम इति पर्यवसिते वर्णानां स्वतः क्रमासम्भवात् पाठोपाधिकः क्रमः प्राप्नोति । स च पाठो अध्ययनविधिना विधीयमानोऽध्येतृगतः अक्षरक्रमकल्पको न भवति । तस्यैवाद्यापि क्रमविशेषाज्ञानात् । किं तु अनादिसम्प्रदायागतः पूर्वपूर्वाध्यापकपाठः । ततश्च यथापूर्वपूर्वाध्यापकपाठानुसारेणाध्ययनक्रमः कल्प्यते, तथा तद-

नुसारेण विचारक्रमोऽपि कल्पनीयः ।तथा च कर्मकाण्डस्य पूर्वं पाठात् ज्ञानकाण्डस्यानन्तरं पाठात् तद्विचारयोरपि तथैव क्रमः प्राप्नोति । मुख्यक्रमानुसारेणापि विचारयोः क्रमः।तथा हि आग्नेयैन्द्रहविषोः पुरोडाशसान्नाय्ययोः प्रयाजशेषाभिघारणे आग्नेयस्य प्रथममनुष्ठेयतया तदङ्गस्य प्रयाजशेषाभिघारणस्य प्रथममनुष्ठानम् । एवं स्वाध्यायाध्ययनेनार्थज्ञानं भावयेदिति वचनव्यक्तिपक्षे अध्ययनस्यार्थज्ञानरूपफलं प्रतिकरणतया प्राधान्यात् पूर्वकाण्डाध्ययनस्य च प्रथमं कृतत्वात् तदङ्गभूतः प्रथमकाण्डविचारोऽपि प्रथमं कर्तव्यः । एवं प्रवृत्तिक्रमानुसारेणापि क्रमः । यथा 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति विहितानामेकस्मिन्काले प्राजापत्यानां साङ्गानां साहित्येनानुष्ठाने प्राप्ते पङ्क्तिपरिवेषणन्यायेन तदङ्गभूतानां उपाकरणादीनामेकमङ्गं प्रथमं सर्वेष्वनुष्ठाय द्वितीयं तदनन्तरं अनुष्ठेयमिति स्थिते, अङ्गसाहित्याय प्रथमाङ्गानुष्ठानावसरे यः पशुः प्रथमं संस्कृतः द्वितीयाङ्गानुष्ठानमपि तमारभ्यैव कर्तव्यमिति, तथाधीतेन वेदेनार्थज्ञानं भावयेदिति वचनव्यक्तिपक्षे अध्ययनस्य वेदं प्रत्यङ्गत्वात् । यस्य भागस्याध्ययनरूपमेकमङ्गं प्रथममनुष्ठितं तमारभ्य विचाररूपं द्वितीयमप्यङ्गमनुष्ठेयमिति प्राप्नोति । तत् सिद्धं कर्मविचारानन्तरमेव ब्रह्मविचार इति । एतत्सर्वमभिप्रेत्योक्तं—**नन्विह कर्मावबोधानन्तर्यं विशेष इति** । कर्मावबोधानन्तर्योक्त्या तत्कारणीभूतकर्मविचारानन्तर्यमपि अर्थादुक्तं भवति । **न धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्येति** । अयमाशयः । विचारयोरेककर्तृकत्वे सिद्धे क्रमसामान्यापेक्षायां क्रमविशेषनियामकान्यर्थादीनि वक्तुं शक्यन्ते । तत्र एककर्तृकत्वमेव नास्ति । यत्तावदुक्तं विविदिषावाक्ये ब्राह्मणग्रहणस्य विवक्षितत्वात् जनकादिषु दृश्यमानं कर्म मोक्षार्थमेवेति, तन्न । विविदिषावाक्येन यादृशा नित्यनैमित्तिककर्मप्रयोगाः पापक्षयार्थत्वेन प्रसिद्धाः, तेषां विविदिषासंयोगमात्रं क्रियत इति 'सर्वथापि त एवोभयलिङ्गा'दित्यत्र निरूपयिष्यते । ततश्च प्राप्तकर्मोद्देशेन फलसम्बन्धविधौ ब्राह्मणत्वस्य कर्तृविशेषणतया विधाने वाक्यभेदः स्यात् । न च तदनुवादमात्रेणाख्याताक्षिप्तः कर्ता वस्तुगत्या स एव पर्यवसितो भवति । 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति वाक्य इवेति युक्तम् । राजसूयस्यानिर्ज्ञातकर्तृविशेषतया कर्त्राकांक्षायां तथाभ्युपगमेऽपि त्रैवर्णिकतया निर्ज्ञातकर्तृकाणां भावनानां विविदिषावाक्ये विविदिषार्थत्वेन विधीयमानानां कर्तृविशेषानपेक्षतया अनुवादमात्रेण विशेषपर्यवसानासम्भवात् । तस्मात् तत्र ब्राह्मणपदं त्रैवर्णिकोपलक्षणमेव । ततश्च जनकादिषु दृश्यमानस्य कर्मणो विविदिषार्थत्वे न कोऽपि विरोधः । न च प्रत्यवायपरिहारार्थान्यग्निहोत्रादीनि निर्विशेषविद्यानुष्ठानकाले सम्भवन्ति । निर्विशेषविद्यानुष्ठाने श्रवणमननिदिध्यासनरूपे परिव्राज एवाधिका-

रोऽवगम्यते 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति वचनेन । तत्र हि मोक्षार्थतया पारिव्राज्यविधानात् ज्ञानैकसाध्ये मोक्षे साक्षात्कारणत्वासम्भवेन द्वारापेक्षायां 'तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमा'निति श्रुतिवचनेन 'निस्सारमेव संसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥' इति स्मृत्या च द्वारतया ज्ञानस्य प्रतिपादनात् तत्रापि प्रमाणसाध्ये द्वारापेक्षायां 'संन्यस्य श्रवणं कुर्या'दिति वचनेन श्रवणस्य द्वारताप्रतिपादनात् श्रवणे च दृष्टेन चित्तविक्षेपाभावेनोपयोगसम्भवे नादृष्टं कल्पनीयमिति अवघातविधिवत् प्रकारान्तरेण चित्तविक्षेपाभावसम्पादनं वारयन्नियमविधिः पर्यवस्यति । न चैवं 'ब्राह्मणो निर्वेदमायात् ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति श्रुत्या 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥' इति स्मृत्या च ब्राह्मणानामेव संन्यासविधानात् जनकादिष्वात्मविद्यादर्शनमनुपपन्नं स्यादिति वाच्यम् । तेषां 'दिने दिने च वेदान्तश्रवणात् भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ॥' इति पापक्षयार्थस्य प्रतिषेधाभावेन शूद्रादिवत् करणे प्रत्यवायाभावेन वेदान्तार्थनिर्णयरूपदृष्टप्रयोजनार्थस्य च सम्भवात् । तच्च जन्मान्तरे विद्यापरिपाकोपयुक्तं भविष्यति । संन्यासिनस्तु तत्त्वसाक्षात्कारोपयुक्तसकलवैदिकाङ्गसहितश्रवणाधिकारसम्भवात् असति प्रतिबन्धे अस्मिन्नेव जन्मनि विद्या परिपच्यते । दहराद्युपासनया देवत्वं गतानां तु वैदिककर्मकृतचित्तविक्षेपनिवृत्तेः स्वत एव विद्यमानतया स्वयन्दिने बर्हिषि लवननियम इव संन्यासनियमो न प्रवर्तत इति प्रैषाद्युच्चारणपूर्वकवैदिकलौकिककर्मपरित्यागात्मकसंन्यासनियमाभावेऽपि ब्रह्मलोक एव विद्यापरिपाकसम्भवात् क्रममुक्तिफलसगुणविद्याविधानान्यथानुपपत्त्या संन्यासं विनापि विद्यापरिपाक इति कल्पनोपपत्तेश्चापुनरावृत्तिश्रवणे न काचिदनुपपत्तिः । अतो विवेकादिसम्पन्नस्य मोक्षपर्यन्तश्रवणाधिकारिणः परिव्राजोऽग्निहोत्रादिकर्मसु अधिकाराभावेन तदकरणे प्रत्यवायाभावान्न निर्विशेषविद्यानुष्ठानकाले कर्माणि कर्तव्यानि । अतो न निर्विशेषविद्याधिकारिणि विचारितकर्मत्वस्योपयोगोऽस्ति । न चात्र सविशेषविद्यानां कर्मसमुच्चितानां निरूपणमस्तीत्येतावता विचारितकर्मत्वस्याधिकारे निवेशस्सम्भवति । निर्विशेषविद्याधिकारिणि हि न तस्योपयोग इत्युक्तम् । अतः पृथगधिकारं निरूप्य तेनाधिकारिणा सविशेषाधिकरणानां सङ्गतिर्वक्तव्या । न चैतद्वक्ष्यमाणाभिस्तत्तदधिकरणप्रस्तावे सङ्गतिभिस्सविशेषविचाराणां विवेकादिसाधनसम्पन्नाधिकारिकर्तव्यप्रधाननिर्विशेषविचारान्तर्गतिसम्भवे कल्पयितुं युक्तम् । ततश्च विचारद्वयस्य एककर्तृकत्वे प्रमाणाभावेन क्र-

मसामान्यापेक्षाया एवाभावात् अनियमेन क्रमविशेषाप्रसक्तेः न पाठादीनां क्रमनियामकानां प्रकृतयोर्विचारयोर्निवेशस्सम्भवतीत्याह—यथा चेति ।'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस' इत्यादिवाक्यविहितानां हृदयाद्यवदानानामेकस्मिन् पशौ शेषिणि शेषभूतानां'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्ये'ति वाक्येन पश्वर्थतया विहितस्य गोदोहनस्य दर्शपूर्णमासाङ्गभूताप्प्रणयनाश्रितस्य दर्शपूर्णमासाविकृताधिकारतया समानकर्तृकत्वे प्राप्ते, क्रमसामान्यस्य विवक्षितत्वात् । पाठादिभिः पश्वङ्गैरवदानानां दर्शपूर्णमासाङ्गैर्गोदोहनस्यानन्तर्यनियमाख्यः क्रमविशेषस्स्वीक्रियते।नैवं कर्मब्रह्मविचारयोः शेषशेषित्वमविकृताधिकारित्वं वा अन्यदपि पूर्वतन्त्रप्रसिद्धं समानकर्तृकताप्रयोजकं किञ्चिदस्ति।प्रमाणाभावादित्यर्थः । अपि च पाठादिभिः विचारक्रमस्सम्पादयितुमपि न शक्यते । एकस्मिन् हि न्याये व्युत्पादिते व्यवहितविप्रकृष्टानि पूर्वोत्तरवाक्यानि निर्णीतानि भवन्ति।तत्र कथं यद्वाक्यं पूर्वमधीतं, तद्वाक्यमेव पूर्वं विचारणीयम्,अनन्तरमधीतमनन्तरं विचारणीयमिति नियन्तुं शक्यम।अत एव हि जैमिनिबादरायणाभ्यां न पाठक्रमेणैव सूत्राणि प्रणीतानि। अन्यथा हि यथा वेदभाष्यादिषु श्रुतिक्रमेणैव व्याख्यानमारच्यते, तथाधिकरणक्रमोऽपि स्यात् । यच्चोक्तं वेदप्रामाण्यादिनिरूपणे पूर्वतन्त्रापेक्षास्तीति, तन्न । इहापि हि'अत एव च नित्यत्व'मिति वेदप्रामाण्यं, 'प्रत्यक्षानुमानाभ्यामि'ति प्रत्यक्षानुमानशब्दाभ्यां श्रुतस्मृतिव्यवहाराच्छ्रुतेर्निरपेक्षत्वं, स्मृतेर्वेदानुमानापेक्षत्वं स्वमूलतयेत्यपि प्रतिपादनात् स्मृतिप्रामाण्यं, तस्याश्श्रुतितो दौर्बल्यं,'नानाशब्दादिभेदादि'ति शब्दान्तरादिकं,'द्युभ्वाद्यायतनं स्वशब्दात्''आकाशस्तल्लिङ्गात्''तथा चैकवाक्योपपन्धात् प्रकरणा'दित्यादिभिःश्रुतिलिङ्गादीनां श्रुत्यादिबलीयस्त्वाच्च न बाध इति तेषां यथायथं प्राबल्यस्य,'विपर्ययेण तु क्रमोऽत उपपद्यते' च वायुमब्दादविशेषविशेषाभ्यामि'ति क्रमप्रमाणस्य अतिदेशाच्चेत्यतिदेशस्य च स्वरूपं सूत्रकृतैव निरूपयिष्यते। व्याख्यानेन स्पष्टीकरणं तु पूर्वोत्तरमीमांसासाधारणम् । तदुक्तमित्यादौ सम्मिलितेनोपक्षिप्तानां न्यायानां त्ववगम इहैव व्याख्यातॄणां वचनैः स्पष्टीभविष्यति । अन्यथा बौद्धाधिकरणेषु तत्प्रक्रियासंग्राहकसूत्रार्थावबोधे का गतिः । न हि तदर्थं बौद्धशास्त्राध्ययनानन्तर्यमपि सूत्रगतायशब्दार्थो वर्णनीयः।यच्च पूर्वोत्तरमीमांसयोः शास्त्रैकत्वमुक्तं, तत् न सम्भवतीत्याह—**फलजिज्ञास्यभेदाच्चेति** । शास्त्रं हि वाक्यविशेषः । तस्यैकत्वे प्रयोजकमेतत्। 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्या'दिति सूत्रे यद्यर्थशब्दः प्रयोजनपरः, तदा एकफलत्वमेकवाक्यतायां प्रयोजकम् । यदा प्रधानविशेष्यपरः, तदा तदेकत्वमिति यथायथं प्रकृते द्वयमपि नास्तीति दर्शयितुम उभयग्रहणम । पूर्वोत्तरमीमांसयोर्भे-

स्तद्ग्रन्थपर्यालोचनयावगम्यते । न चावान्तरार्थभेदेन अवान्तरवाक्यभेदे सत्यपि महावाक्यैकत्ववद्धर्मब्रह्मरूपावान्तरार्थभेदे सत्यपि वेदार्थरूपो वा अलौकिकश्रेयस्साधनरूपो वा एको महावाक्यार्थो भविष्यतीति प्रकृते महावाक्यमेकमित्युच्यत इति वाच्यम्। तादृशैकवाक्यताग्राहकप्रमाणाभावात्। यत्तावदुक्तं प्रतिज्ञासाधारण्यं, तन्न सम्भवति। धर्मशब्दस्य प्रथमसूत्रस्थस्य चोदनासूत्रानुसारेण ज्योतिष्टोमादिमात्रपरत्वावगमात् । चोदनासूत्रं हि 'चोदना चोपदेशश्च विधिश्चैकार्थवाचकाः।'इत्यभियुक्तव्यवहारानुसारेण निर्णीतविधिपदैकार्थ्यचोदनाशब्दसहितमलौकिकविधिगम्यश्रेयस्साधनत्वमेव धर्मशब्दप्रवृत्तिनिमित्तं दर्शयति । न चैतत् प्रथमसूत्रस्य प्रतिज्ञाद्वयपरत्वमभ्युपेत्य द्वितीयप्रतिज्ञान्तर्गतधर्मशब्दव्याख्यानपरमिति क्लिष्टकल्पनायां किञ्चिन्नियामकमस्ति । न च प्रथमसूत्रान्तर्गतधर्मशब्दस्य धर्मब्रह्मोभयसाधारण्ये कृत्स्नवेदाध्ययनानन्तर्यप्रतिपादकेनाथशब्देन कृत्स्नवेदविवक्षितार्थत्वरूपहेतुप्रतिपादकेनातश्शब्देन चावगते तन्निर्वाहाय तथा कल्पनीयमिति वाच्यम् । वेदविवक्षितार्थत्वहेतुर्हि यदि व्याप्त्यभिप्रायेण प्रयुक्तस्स्यात्, तदा खलु वेदविवक्षितत्वाद्धर्मस्य विचारणीयत्वे उच्यमाने तत्सामान्याद्ब्रह्मणोऽपि विचारणीयत्वं प्राप्नोतीति धर्मशब्द उभयपरस्स्यात् । तत्र यदि यो यो वेदविवक्षितः, स विचारणीय इति व्याप्तिः प्रतिपाद्यते, तदा दृष्टान्तालाभः।यदि तु यो यो विवक्षितार्थस्सोऽधीतवेदविचारणीय इति व्याप्तिर्विवक्षिता, तदा असच्छास्त्रविवक्षितोऽप्यर्थोऽधीतवेदविचारणीय इत्यपि दूषणं प्राप्नोति । तस्मान्नायं व्याप्त्यभिप्रायेण प्रयुज्यते । किं तु विषनिर्हरणादिमन्त्रवत् प्रतीयमानेऽर्थे वेदतात्पर्याभावात् तद्विचारो व्यर्थः । प्रमाफलपर्यवसानासम्भवादिति शङ्कायामविवक्षाकारणाभावात् वेदस्य स्वार्थे विवक्षास्त्येवेति धर्मविचारः कर्तव्य इति एतावन्मात्रमुच्यते । न तु तत्र वेदस्य कृत्स्नत्वमप्याहत्यैवोच्यते। किं तु पूर्वकाण्डस्य विवक्षितत्वादिति विशिष्य नोच्यते। तथोक्तौ हि तद्व्यावर्त्यो वेदान्तभाग इति सोऽविवक्षितार्थ इति शङ्का प्रसरेत् । तत्सामान्यात् पूर्वकाण्डार्थोऽप्यविवक्षितोऽस्त्विति पुनः शङ्का प्रसरेदिति अथशब्देनापि धर्मविचारस्य वेदाध्ययनानन्तर्योक्तौ न वेदः पूर्वभागेन विशेषयितुं शक्यते । पूर्वभागमात्राध्ययनस्य स्वाध्यायविधिविहितत्वाभावेन तदानन्तर्योक्तिर्निर्मूला स्यादिति । ततश्च शङ्काविशेषोन्मेषो माभूदिति । अथातश्शब्दार्थयोः पूर्वभागानिवेशमात्रेण लक्षणसूत्रपर्यालोचनया प्रतीयमानं सूत्रार्थं परित्यज्यार्थान्तरकल्पनमनुचितम् । न च धर्मशब्दस्य धर्मब्रह्मोभयसाधारण्याभावे 'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते सर्वेऽपि वदन्त्येनं कृष्णं धर्मं सनातनम्॥' इति धर्मशब्दस्य परमेश्वरसाधारण्येन व्यवहारोऽनुपपन्नस्स्यादिति वाच्यम् । यथा 'प्रणम्रेषु

महर्षिषु प्रसादो मूर्तिमानय'मिति मूर्तप्रसादरूपत्वेन स्तुतिपरम् । तथा सनातनधर्मत्वेन स्तुतिपरमेव । तत् न शक्तिनिर्णायकम् । अत एव बादरायणेनापि 'फलमत उपपत्ते'रित्यतश्शब्देन प्रकृतं ब्रह्म फलदातृत्वेनोपक्षिप्य तत्प्रतिद्वन्द्वितया जैमिनीयमतोपन्यासे ज्योतिष्टोमादिमात्रपरो धर्मशब्दः 'धर्मं जैमिनिरत एवे'ति प्रयुक्तः 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यास'न्निति सृष्ट्यारम्भे देवैः क्रियमाणे धर्मे प्रथमत्वव्यवहारोऽपि धर्मशब्दस्योभयसाधारणत्वं व्यावर्तयति। अन्यथा ततः पूर्वं ब्रह्मरूपधर्मस्य विद्यमानतया देवानुष्ठीयमानयज्ञस्य प्रथमधर्मत्वं न स्यादतो न धर्मपदशक्तिपर्यालोचनायामपि साधारणी प्रतिज्ञा लभ्यते । आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनित्यमुच्यत'इति पूर्वपक्षसूत्रपर्यालोचनया वेदान्तगतसिद्धवस्तुप्रतिपादककृत्स्नवाक्यसाधारणमपूर्वपक्षः प्रतीयते।तदनुसारेण सिद्धान्तोऽपि सर्वसाधारण इत्येव प्रतीयते । न च तत्क्लेशेन व्याख्याय शास्त्रैकत्वसमर्थने किञ्चन प्रमाणमस्ति।न च यथाश्रुतजैमिनिसूत्रपर्यालोचनया विरोधेऽवगम्यमानेऽपि बादरायणेन तेषां स्वाविरुद्धमर्थान्तरं प्रकल्प्य तदेकग्रन्थतया सूत्राणि प्रणीतानीति कल्पनायां किंचित् नियामकमस्ति। तन्मतोपमर्दकतयैव सूत्रप्रणयनस्य स्वरसतः प्रतीयमानत्वात्। न च 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।वेदास्स्थानानि विद्यानां धर्मस्य च चतुर्दश॥' इति मीमांसाया एकत्वेन व्यवहारोऽस्ति। तयोर्द्वित्वे पञ्चदशसङ्ख्याकत्वं विद्यास्थानानां स्यादिति वाच्यम्। तथात्वे पुराणानामप्येकग्रन्थता स्यात्। एवं न्याययोरप्येकग्रन्थता स्यात् । न चैकवेदार्थोपयोगितया तदिष्टमेवेति वाच्यम् । तथात्वे चतुर्दशत्वमपि विद्यास्थानानां न स्यात्। तस्मात् एकेन मीमांसात्वेन धर्मेण भिन्नग्रन्थयोः क्रोडीकारमभिप्रेत्य चतुर्दशत्वेन परिगणनमिति न तावतैकग्रन्थत्वसिद्धिः । अस्तु वैकग्रन्थत्वसिद्धिः । तथापि कथं कृत्स्नमेकेनाध्येयमिति सिध्यति । न ह्येको ग्रन्थः कृत्स्न एकेनाध्येय इत्यत्र किञ्चिन्नियामकमस्ति । अपि तु यस्य यावानंश उपयुक्तः तेन तावदध्येयम् । न हि ज्वरनिवृत्तिकामेन तन्निवर्तकौषधपरिज्ञानाय ज्वरचिकित्सामारभ्य वाजीकरणान्तं वैद्यशास्त्रं पठनीयम् । तत्र तथा निर्बन्धकशास्त्राभावात् अधिकारिभेदाच्च न कृत्स्नचिकित्साशास्त्राध्ययनमेकेनेति यद्युच्येत, तत्प्रकृतेऽपि तुल्यम् । अधिकारिभेदस्य दर्शितत्वात् । कर्मावबोधकामस्तत्राधिकारी, ब्रह्मावबोधकामो वेदान्तविचारे इति न विचारशास्त्रद्वयमेकेन पठनीयमित्यत्र किञ्चिद्वचनमस्ति । स्वाध्यायविधिस्त्वक्षरावाप्तिपर्यन्तो न विचारद्वयस्यैककर्तृकत्वं प्रयोजयतीति 'अध्ययनमात्रवत' इति सूत्रे स्पष्टं भविष्यति । अतो व्यर्थमेकशास्त्रप्रसाधनं, नचोपपद्यत इति सिद्धम् । सङ्ग्रहवाक्यं विवृण्वन्

फलभेदं विवृणोति—अभ्युदयेति । कारणमभिलक्ष्य उदेतीत्यभ्युदयः उत्पद्यमानं स्वर्गादिकं, तत्फलकं धर्मज्ञानम् । ननु, यागादेरेव स्वर्गफलकत्वम् । तत्कथं धर्मज्ञानस्येत्याशङ्क्य स्वजन्ययागानुष्ठानद्वारा इत्याह—तच्चेति । ततश्च कर्मविचारस्यापि ज्ञानद्वारा स्वर्गादिकं फलम् । तच्चोत्पद्यमानतया अनित्यमित्यनित्यफलाद्विरक्तस्य न कर्मविचाराधिकार इति भावः । न च दृढविविदिषार्थं तत्राधिकार इत्यपि शङ्कनीयम् । जन्मान्तरकृतैः कर्मभिरपि तत्सिद्धिसम्भवात् । निश्रेयसेति । नितरां श्रेयो निश्रेयसं ब्रह्मस्वरूपभूतं नित्यं सुखम् । तत्फलकं ब्रह्मज्ञानम् । तच्च कर्मज्ञानवत् न स्वोत्पत्त्यनन्तरं फलात् प्राचीनमान्तरमनुष्ठानमपेक्षते । ततश्च मोक्षस्य न ज्ञानोत्पाद्यतया ज्ञानफलत्वम् । अपि तु कण्ठचामीकरवत् ज्ञानाभिव्यङ्ग्यतया । ततश्च ज्ञानफलस्य न कर्मफलवदनित्यत्वमिति भावः । मोक्षजनकब्रह्मज्ञानफलकत्वं विचारस्य चित्तदोषनिवृत्तिद्वारकं द्रष्टव्यम् । ततश्च विचारयोः फलभेदात् भेदः । जिज्ञास्यभेदमाह—भव्यश्चेति । उत्पद्यमानो भव्यः । भव्यत्वं विशदयति—न ज्ञानकाल इति । ततश्च ज्ञानजन्यचिकीर्षया यत्ने सति यागादिर्धर्मो भवति । ततश्च धर्मजिज्ञासासूत्रगतधर्मशब्दो वस्तुगत्या जन्यं यच्छ्रेयस्साधनं, तदेव प्रतिपादयतीति प्रथमसूत्रपर्यालोचनयैव विषयवैलक्षण्यं सिद्धं कर्मविचारे । एवं ब्रह्मविचारेऽपि कर्मविचारवैलक्षण्येन प्रथमसूत्रपर्यालोचनयैव विषयस्सिध्यतीत्याह—इहेति । भूतं निर्विकारम् । तदेव व्युत्पादयति—नित्येति । नित्यनिर्वृत्तत्वं सदा सिद्धस्वभावत्वम् । विकारायोग्यत्वादित्यर्थः । निर्विकारत्वात् न पुरुषव्यापारापेक्षा । पुरुषव्यापारजन्यधर्माश्रयस्यैव पुरुषव्यापारापेक्षा भवति । ननु, वेदान्तानामुपासनापरत्वात् उपासनायाश्च विधिबोधितश्रेयस्साधनरूपतया धर्मशब्दार्थत्वात् वेदान्तविचारोऽपि धर्मजिज्ञासासूत्रेण प्रतिज्ञातः । ब्रह्मजिज्ञासासूत्रं तु अथातश्शेषलक्षणमितिवदुपासनारूपावान्तरधर्मविचारप्रतिज्ञापरं भविष्यतीत्याशङ्क्याह—चोदनाप्रवृत्तिभेदाच्चेति । चोदना कर्मब्रह्मकाण्डसाधारण्येनाज्ञातज्ञापकं वाक्यम् । तस्य प्रवृत्तिः तात्पर्येण बोधजननशक्तिः । तस्याः विषयवैलक्षण्येन विलक्षणत्वादित्यर्थः । उक्तशङ्कानिरासद्वारा समुच्चयद्योतनार्थश्चकारः । वेदान्तानां निर्विशेषप्रकरणगतानामखण्डवस्तुमात्रपरत्वं प्राधान्येन । न तूपासनापरत्वमिति समन्वयसूत्रे व्युत्पादयिष्यते । अतो वेदान्तार्थो धर्मजिज्ञासासूत्रे न संगृहीत इति भावः । सङ्ग्रहवाक्यं विवृणोति—याहीति । लक्षणं प्रमाणम् । नियुञ्जाना प्रवृत्तिजनकं यागादिगतेष्टसाधनताज्ञानमादधाना । अवबोधयत्येव केवलमित्येवकारेण निर्विशेषवाक्यजन्यबोधस्य प्रवृत्तिजनकत्वं व्यावर्त्यते । ननु, निर्विशेषवाक्यानां शाब्दबोधाविधिपरत्वमस्त्वित्याशङ्क्य

योऽर्थः प्रमाणजन्यज्ञानानन्तरं पुरुषयत्नमपेक्ष्य सिध्यति । तत्रैव प्रमाणानांप्रवर्तकत्वम् । न तु स्वजन्यज्ञान एव यत्नं विनैव प्रमाणव्यापारमात्रेण सिद्धत्वादित्याह—**अवबोधस्येति** । **नित्यानित्यवस्तुविवेक इति** । नन्वत्र नित्यानित्यवस्तुविवेकस्य वैराग्यं,तस्य शमादिसम्पत्, तस्या मोक्षेच्छा, तस्या ब्रह्मजिज्ञासा फलत्वेनावगम्यते । क्रमानुसारेण तत्र नित्यानित्यवस्तुविवेकस्य नित्यवस्तुभूतमोक्षेच्छां विनैव अनित्ये वस्तुनि वैराग्यहेतुत्वं न सम्भवति । अनित्यपदार्थासक्तो हि यदि नित्यं स्वानुकूलं कंचित्पदार्थमवगम्य तमिच्छन् तदुपायं स्वकृतिसाध्यमवगच्छति । तदैवानित्याद्वस्तुनो विरक्तो भवति । नान्यथा । अस्तु तर्हि सत्यासत्यविवेको वैराग्यहेतुः । अनृतासक्तो हि सत्यवस्तुप्राप्तिमननुसन्धायैव भोग्यस्यानृतत्वज्ञानमात्रात् ततो विरज्यतीति नैतदपि सम्भवति । अनृततया स्वप्नपदार्थानवगच्छन्नपि कामुकस्तेषां सुखसाधनतां अवगम्य तदुपयोगिमन्त्रौषधसेवादौ प्रवर्तमानो दृश्यते । अपि च वैराग्यं नाम तस्मिन् तस्मिन् विषये तत्तद्विषयानुरागासमानकालीना तत्तद्विषयानुरागप्रागवस्थैव । तस्याश्च स्वतोऽसाध्यत्वेऽपि परिपाल्यतया साध्यत्वम् । तत्र चेच्छाप्रतिबन्धकस्यैवोपयोगः । इच्छाप्रतिबन्धकं च तत्तद्वस्तुनो बलवद्दुःखसाधनताज्ञानमेव । अतः कथं नित्यानित्यवस्तुविवेकस्य वैराग्यहेतुत्वमिति चेत्, उच्यते । 'सांसारिकफलं सर्वमनित्यमि'ति ज्ञानवतः सांसारिकभोगवियोगावश्यम्भावे' नावश्यमेतस्माच्छोकाख्यं दुःखं भविष्यतीत्यनित्यवस्तुविवेको दुःखसाधनताज्ञानद्वारा वैराग्यहेतुः । तत्र च दुःखसाधनताज्ञानमपि न सर्वदा रागप्रतिबन्धकम् । आस्तिककामुकस्य तस्मिन् सत्यपि निषेधे प्रवृत्तिदर्शनात् । किं तु, तस्मिन् दुःखे असहिष्णुताख्यद्वेषदशायां तत्र च यस्य स्थिरभोगसम्भावनायामेव अस्मिन् भोगसम्पर्कजनितदुःखे तादृशो द्वेषः । स तदा ततो विरक्तो भवति । यस्य तु तदापि न स द्वेषः । नासौ स्थिरभोगसम्भावनायामपि ततो विरज्यति । पुमिच्छाया नियन्तुमशक्यत्वात् । एवं च यस्य जन्मान्तरसुकृतवशात् दुःखमात्रे सदा तादृशो द्वेषः, तस्य कृतं स्थिरभोगसम्भावनया वैराग्यं प्रति तादृशपुरुषधौरेयाभिप्रायेण भाष्ये अयं क्रमः । एवं पदार्थानामसत्यतानिश्चयोऽपि वैराग्यहेतुः । यस्य हि कन्यादिसादृश्येनानुसन्धीयमानान्नादिभोजनं जुगुप्साबीभत्सावैरूप्याद्यपरपर्यायचेतोविकारात्मकदुःखजनकम् । यस्य वा गर्दभयानादिकं सङ्कोचाख्यदुःखजनकम् । तादृशः पुरुषः ततो निवर्तत इति सर्वलोकप्रसिद्धम् । एवमसत्यत्वेनानुसन्धीयमानवस्तुभोगो यस्य 'बुध्वाप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः । बध्नाति वासनां भूयो नरो नासौ स गर्दभः ॥' इति अभियुक्तकृतमुपालम्भमनुसन्दधान-

स्य तादृशदुःखजनकः ततो विरक्तो भवत्येव । न हि कस्यचित् निर्लज्जस्य स्वाम्रभोगेष्वपि कामना वर्तत इति ईश्वरानुग्रहलब्धसत्त्वशुद्धेरपि तथा भाव्यम् । एवं 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ती'ति श्रुतौ सत्यभूमप्रतिद्वंद्वित्वेन निर्दिष्टमल्पमसत्यं दुःखविनिर्मुक्तसुखयुक्तं न भवतीति प्रतिपादनात्तद्वाक्यमनुसन्दधानस्य पदार्थेष्वसत्यबुद्धौ दुःखसाधनताज्ञानं भवतीति पुरुषविशेषस्य विवेको वैराग्यं प्रति हेतुर्भवति । एवं पुरुषभेदेन वैराग्यहेतुः सांसारिकेषु विषयेषु यादृशो विवेकः सम्भावितः, स सर्वोऽपि इह विवक्षितः । तादृशविवेकश्च ईश्वरार्पणबुद्ध्यानुष्ठितैः कर्मभिः ईश्वरानुगृहीतस्य स्वत एव भवति अध्ययनात्प्रागपि कस्यचित् । अधीतसाङ्गस्वाध्यायस्य कस्यचित्तु कर्मविचारलब्धमतिकौशलेन । न तत्राग्रहः । तदभिप्रायेणोक्तं—प्रागूर्ध्वं च धर्मजिज्ञासाया इति । अयं च विवेको अधीतसाङ्गस्वाध्यायस्य 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवती'ति एवमादिवाक्यं पश्यतः शङ्काकलङ्कित इव भवति । तथापि तद्वाक्यमन्यथा व्याख्येयमित्येतावन्मात्रम् अनित्यताप्रतिपादकवाक्यार्थे ईश्वरानुग्रहलब्धदृढविश्वासबलात् स्वत एव सम्भवति कस्यचित् । कश्चित्तु तावन्मात्रोपयोगिनं न्यायं स्वत एवानुसन्धत्ते । कश्चित् पुनः प्रथमसूत्राध्ययनेन सा शङ्कापोदिता भविष्यतीत्याप्तोपदेशं लब्ध्वा तदध्ययनेन तां शङ्कां निवर्तयतीति न कदाचिदनुपपत्तिः । एतेन आत्मा नित्यः सत्य इति वा विवेके शास्त्राध्ययनात् प्रागेव सञ्जाते तदध्ययनं व्यर्थं स्यादिति शङ्का निरस्ता । तादृशोऽप्यात्मा किमेकः, उत बहवः, सगुणो वा, निर्गुणो वा, ईश्वरभिन्नो वा, अभिन्नो वेत्येवमादिविचारणीयांशसद्भावात् । अत एव च संसारानित्यत्वे वा असत्यत्वे वा प्रागेव निर्णीते तदनित्यत्वप्रतिपादकानि तदसत्यत्वप्रतिपादकानि च उत्तराधिकरणानि व्यर्थानि स्युः । यदि तु तत्तदधिकरणनिवर्तनीयशङ्काविशेषनिराकरणपूर्वकं उत्पन्नस्यैव विवेकस्य दृढतासम्पादकानि, तर्हि तासु शङ्कासु अनिवर्तितासु अदृढो विवेकः कथं वैराग्यं सम्पादयेदिति शङ्का निरस्ता । अवशिष्टाश्शङ्काः उत्तरत्र निराकरिष्यन्त इति अध्यापकवचनेनैव तद्दार्ढ्योपपत्तेः । कथमन्यथा स्वर्गकामाधिकरणनिवर्तनीयकर्मनिष्फलत्वशङ्कास्नानकर्मविचारनिष्फलत्वशङ्कायां कर्मविचारः परम्परया स्वर्गादिफलोपयोगीति विचारशास्त्राध्ययनप्रवर्तको निर्णयो दृढो भवेत् । ततश्चोक्तरूपाद्विवेकात् सांसारिकभोगाद्विरक्तस्य शमादिसम्पत् । आदिपदेन 'तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्यती'त्यादि श्रुत्युक्तानि गृह्यन्ते। ततो मुमुक्षुत्वम् । ननु,मुमुक्षायामधिकारिविशेषणत्वेन गृहीतायां ततः प्राचीना-

न्यर्थाल्लभ्यन्त इति पृथगुपादानं व्यर्थमिति चेन्न। मुमुक्षा हि निर्दुःखसुखाभिलाष एव। स च सर्वसाधारणो नाधिकारिविशेषणम् । अपितु उत्कट इति वक्तव्यम्। तदुत्कटत्वं चाधिकारिणा अवश्यं निर्णेतव्यम्। अन्यथा सर्वकर्मसन्न्यासपूर्वकं श्रवणारम्भे उत्कटमुमुक्षाया अभावे च फलपर्यवसायिश्रवणासम्भवात् व्यर्थः प्रयासस्स्यादिति शङ्काकुलस्य श्रवणे प्रवृत्त्यसम्भवात् । उत्कटमुमुक्षा च सैवोच्यते। या विवेकादिपरम्परया सञ्जाता। अतस्तदुत्कटत्वाभिव्यञ्जकतया विवेकाद्युपन्यासोऽपि आवश्यकः। न च शमादीनां प्राक्सिद्धत्वे शमदमाद्युपेतस्स्यादिति विद्यानुष्ठानकाले तेषामनुष्ठेयत्वप्रतिपादनं व्यर्थं स्यादिति वाच्यम्। प्राक्सिद्धानां तेषां विद्यास्वरूपोपयोगितया परिपालनावश्यम्भावेन तत्परिपालनोपयोगियत्नविशेषापेक्षणात् । स च यत्नो दोषदर्शनप्रसङ्ख्यानादिरूप इति तत्सिद्धमथशब्देन विवेकाद्यानन्तर्यमेवोच्यत इति। अत्रेयमाशङ्का भवति। आत्मैव नित्यः। तद्व्यतिरिक्तं ब्रह्मलोकान्तं सकललौकिकवैदिककर्मसाध्यं फलमनित्यम् । 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो 'लोकःक्षीयत' इत्यादिश्रुतेः इत्येवंरूपेण नित्यानित्यवस्तुविवेकाद्वैराग्यं भवतीत्युक्तम्। तन्न सम्भवति। 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' 'अपाम सोमममृता अभूम' 'स्वर्गे लोके न भयं किञ्चनास्ति' 'न तत्र त्वं न जरया बिभेति। उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोक' इत्यादिवाक्यैः कर्मफलानामपि नित्यत्वशोकरहितत्वप्रतिपादनात्। न च 'यत्कृतकं तदनित्य'मिति न्यायेन चिरकालस्थायित्वमात्रप्रतिपादनपराणि तानीति शङ्कनीयम्।वचनविरोधे न्यायस्याभासत्वादिति न केवलेन न्यायेन तस्यान्यथानयनम्। अपि तु न्यायोपोद्बलितश्रुत्यनुसारेण । तद्यथेहेत्यादिश्रुतिः 'यत्कृतकं तदनित्य'मिति न्यायं 'तद्यथेह कर्मचितो लोकः क्षीयत' इत्यंशेनानूद्य कर्मफलस्यानित्यत्वं प्रतिपादयति। अत उपपत्तिरूपतात्पर्यलिङ्गोपोद्बलिता तद्रहितात् 'अक्षय्यं ह वै चातुर्मास्ययाजिन' इत्यादिवाक्यात् विशेषरूपादपि सा बलवती। एवम् आत्तो वै सशरीरः प्रियाप्रियाभ्यामित्यपि वचनं न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति अन्वयव्यतिरेकरूपोपपत्त्यात्मकतात्पर्यलिङ्गोपोद्बलितं स्वर्गे लोक इति वाक्याद्बलीयः। विशिष्य च हिरण्यगर्भस्यैव भयादिकमाम्नायते सो बिभेत् स वै नैव रेम इत्यादि। तत्र का कथा अन्येषां तल्लोकं गतानां भयादौ। तस्मादक्षय्यवाक्यं आपेक्षिकामृतत्वाभिप्रायेण व्याख्येयम्। तथा चोपबृंहितं 'आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते इति' स्वर्गे लोक इति वाक्यञ्च न तत्र त्वमिति वाक्यशेषानुसारेण मृत्य्वशनायादिकृतं दुःखं वारयदपि पारत

न्यादिकृतं न वारयतीति परिहारः । अमुमर्थं द्योतयितुं अतश्शब्दः । तत्र यद्यतश्शब्देनाथशब्दोक्तं साधनचतुष्टयं परामृश्यते, तदा अथशब्दोक्तस्यैव पुनरतश्शब्देन परामर्शं कृत्वा तस्य जिज्ञासां प्रति हेतुत्वं प्रतिपाद्यत इति वक्तुमयुक्तम् । आनन्तर्यप्रतिपादकेनैवाथशब्देनैतदर्थसिद्धेरिति शङ्का स्यात् । तन्निराकरणमेवं—अतश्शब्देन मुख्यया वृत्त्या साधनचतुष्टयसंपत्तिमात्रपरामर्शेऽपि लक्षणया लब्धात्मत्वेन तत् परामृश्यते । तेन चालब्धात्मकत्वशङ्का तदुपोद्वलकतया चाक्षय्यमित्यादिवाक्यं सूच्यते । तत्परिहारश्च लक्षितेन लब्धात्मकत्वेन लभ्यते । तदुपपत्तितया तद्यथेत्यादिवाक्यं सूच्यते । एतत्सर्वमभिप्रेत्याह—**अतश्शब्दो हेत्वर्थ इति** । यस्माद्वेद एवेत्यादिवाक्यमाभिप्रायिकार्थकथनपरम् । ननु सांसारिकफलस्यानित्यत्वावधारणं वैराग्यद्वारा शमादिसम्पत्त्युपयुक्तमस्तु । आत्मनित्यत्वावधारणं तु क्वोपयुज्यत इत्याशङ्क्याह—**तथा ब्रह्मज्ञानादिति** । अयं भावः । आत्मनित्यतामवगत्य तस्य 'विज्ञानमानन्दं ब्रह्मे'ति आनन्दरूपतामवगच्छन् 'तं कामयते तदुपायं च ज्ञानं 'ब्रह्मविदाप्नोति पर'मिति निर्धार्य तं जिज्ञासते। ततश्च मुमुक्षाद्वारा ब्रह्मजिज्ञासायामात्मनित्यत्वावधारणमुपयुज्यत इति । ब्रह्मजिज्ञासेत्यत्र ब्रह्मणे जिज्ञासेति केचिद्विगृह्णन्ति । तेषामयमाशयः । ब्रह्मणो हि निवृत्तावरणत्वेन फलरूपत्वम् । तज्ज्ञानोपयोगितया चतुर्थीसमास एषितव्यः । ननु 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितै'रिति सूत्रेण किल चतुर्थीसमासो वक्तव्यः । तस्य चायमर्थः चतुर्थ्यन्तं पदं चतुर्थीप्रकृतिप्रतिपाद्यसाधनवाचिनार्थादिभिश्च शब्दैः समस्यत इति यूपदारु द्विजार्थः सूपः कुबेरबलि'रित्यादीनि चतुर्थीगर्भविग्रहाण्युदाहरणानि । तदर्थेत्यंशस्य चेदं ब्रह्मजिज्ञासेत्युदाहरणं वक्तव्यम् । तन्न सम्भवति । विकृतिः प्रकृत्येति वार्तिकेन तस्य प्रकृतिविकारभाव एव नियमादिति चेन्न । तेनैवाश्वघासादिषु उपसङ्ख्यानमिति प्रकृतिविकारभावाभावेऽपि अश्वघासादिशब्देषु चतुर्थीसमासस्य प्रतिप्रसूतत्वात् अश्वघासादेश्चाकृतिगणत्वात् ब्रह्मजिज्ञासाशब्दोऽपि तदन्तर्गतो भविष्यति । अत एव शास्त्रेण धर्मनियम इति वार्तिकव्याख्यानावसरे धर्माय नियम इति विग्रहो महाभाष्ये दर्शितः । तन्निराकर्तुं स्वाभिमतं विग्रहं दर्शयति—**ब्रह्मणो जिज्ञासेति** । अयमाशयः । विकृतिः प्रकृत्येति वचनं ब्राह्मणसूप इत्यादौ चतुर्थीसमासव्यावृत्त्यर्थं पृथक् न कर्तव्यम् । सूत्रकृतैव प्रकृतिविकारभावस्य ज्ञापितत्वात् । तदर्थेत्युक्त्वा पुनरर्थादीन् पृथङ्निर्दिशति । तन्निर्देशो व्यर्थः प्राप्नोति । द्विजार्थः कुबेरबलिरित्यादीनामपि तादर्थ्यप्रतिपादकत्वेन तदर्थेत्येव समाससिद्धेः । पृथगर्थादिनिर्देशात् तदर्थेत्यत्र विवक्षाविशेषं गमयति । तत्र प्रकृतिविकृतिभावे

तादर्थ्यस्य स्पष्टत्वात् स एव तेन विवक्ष्यते । अतोऽतिप्रसङ्गाभावात तद्वचनं न कर्तव्यमिति तद्वार्तिकं महाभाष्ये प्रत्याख्यातम् । कथं तर्ह्यश्वघास इत्याशङ्क्य तत्रापि चतुर्थीसमाससिद्ध्यर्थं पृथग्वचनं न कर्तव्यम् । षष्ठीसमासेनैव तादृशरूपसिद्धेः स्वरे विशेषाभावाच्च । ततश्च महाभाष्यपर्यालोचनया अश्वघासादिषु षष्ठीसमास एवेति ब्रह्मजिज्ञासापदेऽपि स एवैषितव्यः । अत एव धर्माय नियम इति न विग्रहकथनम् । किं तु षष्ठीगर्भविग्रहेणैव व्युत्पादने क्रियमाणे सम्बन्धसामान्यप्रतिपादिकाया षष्ठ्याः तादर्थ्ये पर्यवसानाभिप्रायमिति तद्व्याख्यातृभिरुक्तम् । ननु, ब्रह्मशब्दस्ये'दं ब्रह्म इदं क्षत्र'मिति ब्राह्मणजातौ इदं ब्रह्मायाति, इदमागच्छतीति जीवे 'तस्मादेतत ब्रह्म नाम रूपमन्नं च जायत' इति हिरण्यगर्भे प्रयोगो दृश्यते । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति परमात्मनि च । अतस्सूत्रगतो ब्रह्मशब्दः किंपर इत्यत आह—ब्रह्म चेति । 'जन्माद्यस्य यत' इत्यत्र त्रिविधपरिच्छेदशून्यं मायिकसकलजगत्कर्तृत्वोपादानत्वलक्षितं सत्यत्वादिधर्मिमात्रस्वरूपं श्रुतिप्रमाणकं व्यवस्थापयिष्यते । तदेवात्र ब्रह्मशब्देन ग्राह्यमिति भावः । ननु, षष्ठीगर्भसमासेऽपि शेषषष्ठ्येव प्रकृते ग्राह्या । न कर्मषष्ठी । तथा हि सति ब्रह्मकर्मक एव विचारः प्रतिज्ञातस्स्यात् । तथा च समन्वयादिविचारस्याप्रतिज्ञाततया शास्त्रे तत्कथनमसङ्गतं स्यात् । शेषषष्ठीपक्षे तु ब्रह्मसम्बन्धिविचारस्य प्रतिज्ञालाभात् समन्वयादिविचारस्यापि परम्परया ब्रह्मसम्बन्धित्वात् न तत्कथनमसङ्गतं भविष्यतीति यो मन्यते तं प्रत्याह—**ब्रह्मण इति । कर्मणीति** । अयमाशयः । येनापि शेषषष्ठीगर्भस्समासः स्वीक्रियते, तस्यापि न साक्षात्प्रमाणादिविचारो ब्रह्मजिज्ञासेति प्रतिज्ञया संगृहीतः । अपि तु सम्बन्धसामान्यस्य विशेषपर्यवसानावश्यंभावात् वक्ष्यमाणसूत्रपर्यालोचनया ब्रह्मस्वरूपतत्प्रमाणादिपर्यवसानं वक्तव्यमिति क्लेश एव । तथापर्यालोचनायां कर्मषष्ठीगर्भसमासपक्षेऽपि ब्रह्मकर्मकविचारप्रतिज्ञया प्रमाणादिविचारोऽपि प्रतिज्ञातो भवत्येव । प्रमाणादिविचारं विना ब्रह्मविचारस्य फलपर्यवसायित्वासम्भवात । फलपर्यवसायिब्रह्मविचारस्यैव प्रतिज्ञाविषयत्वात् । अपि च प्रमाणादिविचारोऽपीदं ब्रह्मणि प्रमाणम्, इदं ब्रह्मप्राप्तिसाधनम्, इदं ब्रह्मज्ञानफलमित्येवंरूपेण क्रियमाणो ब्रह्मविषयो भवत्येवेति न तेषामसङ्गतत्वम् । परं तु सविषयायाः जिज्ञासायाः कर्मांशे उत्थिताकांक्षत्वात् तत्परित्यज्य सम्बन्धांशे आकांक्षामुत्थाप्य ब्रह्मजिज्ञासापदस्य सम्बन्धसामान्यपरत्वकल्पनमनुचितमिति । ननु, कर्मषष्ठीपक्षे कर्तृकर्मणोः कृतीति षष्ठी वक्तव्या । तस्याश्च समासो निषिद्धः । प्रतिपदविधाना च षष्ठी न समस्यत इति । या हि पदविशेषं निमित्तीकृत्य षष्ठी वि-

धीयते । यथा 'ज्ञोऽविदर्थस्य करणे' इत्येतेनाविदर्थस्याज्ञानार्थस्य प्रवृत्त्याद्यर्थस्य जानातेः करणे षष्ठी सर्पिषो ज्ञानं सर्पिषा कारणेन प्रवृत्तिरित्येवं करणार्थे जानातियोगं निमित्तीकृत्य विहिता, तादृशी प्रतिपदविधानेत्युच्यते । ततश्च कृद्योगं निमित्तीकृत्य कर्तृकर्मणोर्विधीयमाना प्रतिपदविधाना भवत्येवेति कथं समासः । ननु, कृद्योगलक्षणा च षष्ठी समस्यत इति प्रतिप्रसवबलात् समासो भविष्यतीति चेन्न । कृद्योगलक्षणाया अपि कर्मषष्ठ्याः 'कर्मणि चे'त्यनेन सूत्रेण निषेधात् । तस्मात् कर्मषष्ठीपक्षे समासो नोपपद्यत इति चेत्, उच्यते । 'कर्मणि चे'ति सूत्रं न कर्मषष्ठीमात्रस्य प्रतिषेधकम् । तथासति 'तृजकाभ्यां कर्तरी'त्यनेन कर्त्रर्थतृजकाभ्यां षष्ठ्या न समास इत्येवमर्थकेनौदनस्य भोजकः, ओदनस्य भोक्ता इत्युदाहरणसिध्यर्थं पृथङ्निषेधो व्यर्थः स्यात् । ओदनस्य कर्मतया कर्मणि चेत्यनेनैव रूपसिद्धेः । अतः 'कर्मणि चे'ति सूत्रे चशब्द इतिशब्दसमानार्थकः । ततश्च कर्मणीति शब्दमुच्चार्य कर्तृनिषेधपूर्वकं या षष्ठी कर्मणि परिशेषिता, सा न समस्यत इति तदर्थो ग्राह्यः । ततश्च 'उभयप्राप्तौ कर्मणी'ति सूत्रस्य विषये षष्ठीसमासो न भवतीति पर्यवसितोऽर्थः । नन्वयमपि तस्य विषयो भवत्येव । तस्य ह्ययमर्थः । उभयोः कर्तृकर्मणोः यत्र प्राप्तिः कृत्प्रयोगे, तत्र 'कर्तृकर्मणोः कृती'त्यनेनोभयत्र षष्ठीप्राप्तौ कर्मण्येव भवति, न कर्तरीति परिसङ्ख्यारूपा । ततश्चात्रापि साधनचतुष्टयसम्पन्नस्य कर्तुः स्वशब्देनोपादाने सति उभयप्राप्तेस्सम्भवात् उभयत्र षष्ठीप्राप्तौ 'उभयप्राप्तौ कर्मणी'ति परिसङ्ख्या प्राप्नोत्येवेति चेन्न। 'उभयप्राप्तौ कर्मणी'तिसूत्रे 'कृत्वोऽर्थप्रयोग' इति व्यवहितसूत्रात् प्रयोग इत्यनुवर्तते । ततश्च कर्तृकर्मगतविशेषप्रतिपादनतात्पर्यकप्रयोगे कर्मण्येवेति तदर्थः । आश्चर्यो गवां दोहोऽगोपेनेति । अत्र हि आश्चर्यत्वसम्पादनायाजाद्विलक्षण्येन दुर्दोहत्वं कर्मणः प्रतिपादयितुं गोरूपेण निर्देशोऽपेक्षितः । तथा दोग्धुरकुशलत्वप्रतिपादनाय गोपालभिन्नत्वेन निर्देशोऽपेक्षितः । प्रकृते तु न कर्तृकर्मोभयगतविशेषप्रतिपादनपरं सूत्रम् । किं तु विचारे पुष्कलकारणविषयप्रयोजनानि दर्शयितुम् । अतो नायमुभयप्राप्तिसूत्रविषयः । ननु, तथासति 'अन्तर्धौ येनादर्शनमिच्छती'त्यत्र येनेति तृतीया न स्यात् । अन्तरङ्गत्वस्यासत्त्या गम्यमानस्यात्मनः यत्कर्तृकमन्तर्धाननिमित्तं दर्शनाभावमिच्छति तस्य कर्तुरपादानसंज्ञा भवति । यथोपाध्यायादन्तर्धत्ते इत्येवमपादानसंज्ञापरत्वेन कर्मगतविशेषप्रतिपादनातात्पर्यकात्वादिति चेन्न । तत्राप्यपादानसंज्ञां प्रति निमित्ततया दर्शनकर्तृत्वेनादर्शनकर्मत्वेन चान्तर्धानसम्बन्धितया कर्तृकर्मप्रतिपादनतात्पर्यकत्वसम्भवात् । अथवा कर्मणि प्रतिषेधे 'अकाकारयोर-

प्रतिषेध' इति वार्तिकवचनेन अप्रत्ययात्'दिति सूत्रेण प्रत्ययान्तेभ्यः अकारप्रत्ययो भवतीति विहिते अकारप्रत्यये धात्वर्थनिर्देशे ण्वुल्वक्तव्य इति ण्वुल्प्रत्ययादेशे अके च विभिन्नाभेदिका वा रूद्रस्य जगत इति उदाहरणयोः कर्मणि उभयप्राप्तौ इति प्रतिषेधो न प्रवर्तत इति प्रतिपादितम् । ततश्च ब्रह्मजिज्ञासापदस्याकारप्रत्ययान्तत्वात् 'उभयप्राप्तौ कर्मणी' ति प्रतिषेधो न प्रवर्तते । अतः 'कर्तृकर्मणोः कृती' त्येव प्रकृते षष्ठी। तस्याश्च न समासनिषेधः । ननु, सुखं, दुःखाभावो वा साक्षादिच्छाविषयः, तत्साधनतया अन्यः तत्कथं ज्ञानस्य इच्छाविषयत्वम् । तत्राह— **अवगतिपर्यन्तमिति** । अवगतिरविद्यानिवर्तको वृत्तिरूपः साक्षात्कारः । तत्साधनं विचारजनितं तात्पर्यावधारणरूपं जिज्ञासेत्यत्र प्रकृतिप्रतिपाद्यमित्यर्थः । तत्र च हेतुमाह—**फलविषयत्वादिति** । सुखदुःखाभावविषया साक्षादेव फलविषया । तत्साधनविषया तु विशेषणविधया । तात्पर्यावधारणं च सत्तानिश्चयरूपशाब्दज्ञानद्वारा साक्षात्कारोपयोगि । तदिदमाह—**ज्ञानेन हीति**।अवगतेश्चाविद्यानिवर्तकतया पुरुषाभिलषितत्वमित्याह—**ब्रह्मावगतिर्हीति** । ततश्चायं सूत्रार्थः । साधनचतुष्टयसम्पत्त्यनन्तरं तद्धेतुका ब्रह्मजिज्ञासा भवतीति । जिज्ञासापदान्तर्गतज्ञाधातूपात्तं ब्रह्मणि-वेदान्ततात्पर्यावधारणमपि ब्रह्मकर्मकं भवत्येवेति तद्द्वारा जिज्ञासाया ब्रह्म विषयः । यद्यपि ब्रह्मणि वेदान्ततात्पर्यावधारणेच्छारूपा ब्रह्मजिज्ञासोक्तप्रणाडिकया तात्पर्यनिर्धारणस्येष्टसाधनतामवगच्छत साधनचतुष्टयसम्पत्त्यभावेऽपि भवत्येव, तथापि न सा साक्षात्कारपर्यन्तविचारप्रयोजिका। किं तु साधनचतुष्टयसम्पत्त्यनन्तरम् उत्कटजिज्ञासैव । कामुको हि सांसारिकफलासक्तः तज्जनितं दुःखमङ्गीकृत्यैव वैषयिकं सुखं बहुमन्यमानः तदुपयोगिनं इहामुत्र गमनरूपं संसारं न निविवृत्सति । विरक्तस्य तु संसारकृतोपयोगाभावात् तत्कृते दुःखे आत्यन्तिकद्वेषो भवति । ततस्तन्निवृत्तिं कामयते । ततश्च विरक्तस्य निरतिशयानन्दप्रेप्सारूपा मुमुक्षा संसारनिविवृत्सासहिता भवति । एषैवोत्कटमुमुक्षेत्युच्यते । तादृशमुमुक्षाप्रयुक्ता च जिज्ञासा सूत्रोपात्तेति न विवेकाद्यानन्तर्यानुपपत्तिः । तथा च जिज्ञासया स्वविषयप्रयोजकतया विचार आक्षिप्यते । तदभिप्रायेण जिज्ञासितव्यमिति उपसंहारवाक्ये तव्यप्रत्ययप्रयोगः । अत्राक्षिप्तविचारं प्रति जिज्ञासापदोपात्तं ज्ञानं साध्यम् । ज्ञानस्य चोक्तपरम्परया अधिकारिविशेषणीभूतमुमुक्षाविषयो मोक्षः फलम् । तथा च श्रुत्यर्थाभ्यामयं सूत्रार्थः पर्यवसितः । विवेकादिदार्ढ्यानन्तरं तद्दार्ढ्यस्य च तद्यर्थेहेत्यादिवचनपर्यालोचनयोपपत्तेः । परम्परया मोक्षसाधनीभूतवेदान्ततात्पर्यनिर्धारणाय वेदान्तवाक्यानि विचारयेदिति । **तत्पुनरिति** । ब्रह्मज्ञाने-

च्छा हि 'ब्रह्मज्ञानमिष्टसाधन'मिति ज्ञानं विना न सम्भवति। तज्ज्ञानं च विशेषणी भूतब्रह्मज्ञानं विना न सम्भवति । ब्रह्मज्ञानं च वेदान्तेभ्य एव वक्तव्यम् । तेषां च यदि निर्णयजनकत्वमिष्यते, तदा विचारं विनैव निर्णयस्य सिद्धत्वात् व्यर्थो विचारः । यदि तु तेभ्यः ब्रह्मनिर्णयो न भवति, तदा तदज्ञाने जिज्ञासैव न भवेत् । न च संशयरूपां प्रसिद्धिमादाय ब्रह्मजिज्ञासा समर्थयितुं शक्यते - वेदान्तानां संशयजनकत्वानुपपत्तेः । ततः कथं जिज्ञासापूर्वको विचारः कर्तव्य इति शङ्काभिप्रायः । उच्यत इति । अस्मिन् हि शास्त्रे 'तत्त्वमसि अयमात्मा ब्रह्मे'ति जीवब्रह्माभेदबोधकवाक्यानि 'सत्यं ज्ञानमनन्तं ब्रह्म 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमय'मित्यादीनि तत्पदार्थप्रतिपादकानि। 'असङ्गो ह्ययं पुरुषो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति स समानस्सन्नुभौ लोकावनुसञ्चरतीत्यादीनि त्वम्पदार्थप्रतिपादकानि च वाक्यानि विचारयिष्यन्ते सपरिकरं कृत्स्नेन शास्त्रेण । तानि च विचारात्प्रागेवाधीतसाङ्गस्वाध्यायं प्रत्यर्थावबोधकान्येव। ततश्च ब्रह्मप्रसिद्धिः । एवं ब्रह्मशब्दादपि तत्पदार्थप्रसिद्धिः । तस्य हि ब्रह्मत्वं प्रवृत्तिनिमित्तम् । तच्च त्रिविधपरिच्छेदशून्यत्वम् । ततश्च यद्यन्यो जगत्कर्ता स्यात्, जगदुपादानं वा, ततस्तमादाय वस्तुपरिच्छेदप्राप्तेः ब्रह्मत्वं न स्यात्। अतो ब्रह्मैव जगत्कर्त्रुपादानरूपं सिध्यत् तदुपयोगितया सर्वज्ञं सर्वशक्तिसमन्वितं सिध्यति। तस्यापि जगतः पारमार्थिकत्वे वस्तुपरिच्छेदराहित्यं न सिध्यतीति तस्य मिथ्यात्वमुपक्षिप्य परमार्थतः तद्राहित्यरूपं नित्यशुद्धत्वादिकम् उपक्षिपति । तथा 'अह'मिति प्रत्ययेऽपि त्वम्पदार्थः प्रसिध्यति । न चैतावता विचारानारम्भः । यद्यपि विचारात्प्रागेव अशनायाद्यतीतो जीवस्सकलवेदान्तप्रतिपाद्यं परं ब्रह्मेति स्वरसतोऽधीतसाङ्गस्वाध्यायस्य बोधो भवति, तथाप्यनभ्यासदशापन्नजलादिज्ञानवत् स बोधश्चित्तदोषवशात् आपातरूप इत्युच्यते । तत्र यथा जलज्ञाने अप्रामाण्यशङ्का, एवं प्रकृतेऽपि नानाविधाश्शङ्काः भवन्ति । तत्राहमितिप्रतीतिविषयश्शरीरमेवेति चार्वाकाः । इन्द्रियाण्येवेति तदेकदेशिनः । मन एवेति तादृशाः । क्षणिकविज्ञानमिति सौगताः । शून्यमिति तदेकदेशिनः। एते च सर्वे वेदाप्रामाण्यवादिनः । सर्वामेव वैदिकप्रतीतिमप्रमामेव वदन्ति । अस्ति देहादिविलक्षणः स्थिरः कर्तृत्वादिविशिष्ट इति नैयायिका मीमांसकाश्च । ते त्वविनाशितया जीवप्रतिपादकानि वाक्यानि यथाश्रुतान्येव व्याचक्षते । असङ्गत्वादिप्रतिपादकस्त्वागमो न यथाश्रुतो ग्राह्य इति वदन्ति । साङ्ख्यास्तु भोक्तैवात्मा । न कर्ता । भोक्तृत्वं च स्वप्रकाशचिद्रूपत्वमेवेति वदन्तः असङ्गत्वादिप्रतिपादक आ-

गमो यथाश्रुतार्थ एव । परं तु जीवानां भिन्नत्वात् तदैक्यप्रतिपादक आगमो न यथाश्रुतो ग्राह्य इति वदन्ति । एवं त्वम्पदार्थशोधकवाक्येषु वैदिकानामेव विप्रतिपत्तयः । मीमांसकास्साङ्ख्याश्च ईश्वरं नेच्छन्ति । ते सर्वज्ञत्वादिप्रतिपादकमागममन्यथा व्याचक्षते । तार्किकादयोऽपीश्वरमभ्युपगम्य तस्य निर्विशेषतां जीवाभिन्नतां चानिच्छन्तोऽस्थूलादिवाक्यानि च तत्त्वमस्यादिवाक्यानि चान्यथा व्याचक्षते । सिद्धान्ते तु तानि यथाश्रुतान्येव । तत्र सिद्धान्तव्यतिरिक्तेषु पक्षेषु यानि यानि तत्तन्मतोपष्टम्भकतया वचनान्युदाह्रियन्ते याश्च युक्तयः तासामाभासत्वं प्रतिपादनीयम्। सिद्धान्तोदाहृतवचनानां युक्तीनां च तत्तदाशङ्कानिराकरणपूर्वकं व्यवस्थितत्वं च व्युत्पादनीयम्। तदभावे तत्तद्वादिवाक्यश्रवणक्षुब्धचित्तस्य स्वोद्भावितशङ्काभिश्च क्षुब्धचित्तस्य उत्पन्नमपि साङ्गाधीतवेदवाक्यजनितं ज्ञानं नानाविधशङ्कारूपचित्तदोषकलुषितम् आपातरूपमेव स्यादिति तात्पर्यार्थः । सर्वशक्तिसमन्वितमित्येतदनन्तरं वेदान्तेभ्यः प्रसिद्धमिति शेषः । **ब्रह्मशब्दस्य हीति** । अयं हिशब्दः चार्थे द्रष्टव्यः । तथासति उपपत्त्यन्तरोपन्यासपरता स्पष्टा भवति । **सर्वस्यात्मत्वाच्चेति** । सङ्ग्रहवाक्यमेतत् । तत्र ब्रह्मास्तित्वप्रसिद्धिरित्यमुमंशमन्वयेन व्यतिरेकेण च व्याचष्टे—**सर्वो हीति** । अहमस्मीति न प्रत्येतीति न । किं तु प्रत्येत्येवेति योजना । ततश्च विवक्षितार्थलाभः । नाहमिति न प्रतीयादित्यन्वयः । **आत्मा स भोक्तुरिति** । भोक्तुस्स्वरूपमीश्वर इति सिद्धान्तिन इत्यर्थः। **वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणेति** । यद्यपि सदेवेत्यादिवाक्यं प्राधान्येन ब्रह्मप्रतिपादकम् । ब्रह्मविषयकोपक्रमोपसंहारैकरूप्याद्यात्मकब्रह्मविषयपरमतात्पर्यग्राहकलिङ्गसमन्वयादित्येवंरूपेण युक्त्यनुसन्धानात्मिका वेदान्तमीमांसापि तर्क एव, तथापि तत्र शङ्काविशेषनिराकरणाय गुणसूत्रैः प्रदर्श्यमाना युक्तयः उपकरणत्वेन विवक्षिताः । अथवा सूत्रकृता संगृहीतानां श्रुत्यादीनां तद्बलाबलस्य च संगृहीतस्य विशदीकरणाय अध्वरमीमांसाव्याख्यातृभिरुक्तं प्रमेयम् इह भाष्यकारादिभिरुद्गृह्यते । तदुपकरणभूतं द्रष्टव्यम् । एवं 'स्मरन्ति च' 'अपि च सप्त' 'तत्रापि च तद्व्यापारादविरोधः' 'आचारदर्शनात्' 'बहिस्तूभयथापि स्मृतेराचाराच्च' इति नरकादिप्रतिपादकतया कर्मसमुच्चयप्रतिपादकतया आरूढपतितबहिष्कारप्रतिपादकतया च स्मृत्या आचारा उपन्यस्ताः । स्मृतिषु च अनुमानशब्दप्रयोगात् वेदानुमापकत्वं दर्शितम् । श्रुतौ च प्रत्यक्षशब्दप्रयोगात् स्वातन्त्र्येण प्रामाण्यं दर्शितम् । तत्र च सर्वत्र तर्कशास्त्रोक्तमनुमानादिलक्षणमुपयुक्तम् । तदिह व्याख्यातृभिरुपन्यस्यते । एवमपशूद्राधिकरणे संवर्गविद्यायां जानश्रुतौ प्रयुक्तशूद्रशब्दः न जातिवचनः। किं तु व्यक्तिवचन इत्यु-

क्तम् । 'समाननामरूपत्वादि'ति सूत्रेण इन्द्रादिशब्दानां जातिवचनत्वमाश्रितम् । तत्र तर्कशास्त्रोक्तं जातिव्यक्त्यादिलक्षणनिरूपणं उपयुक्तम् । तत्सर्वमत्र व्याख्यातृभिर्विशदीक्रियते । तदिहोपकरणतया विवक्षितम् ॥ १ ॥

॥ इति जिज्ञासाधिकरणम् ॥

विषयादिसम्भवात् ब्रह्मजिज्ञासा आरम्भणीयेत्युक्तम् । तामारभते भगवान् सूत्रकारः—

## जन्माद्यस्य यत इति । २ ।

पूर्वोत्तराधिकरणयोस्सङ्गतिं वक्तुं वृत्ताधिकरणप्रमेयानुवादपूर्वकं उत्तराधिकरणमवतारयति—**ब्रह्म जिज्ञासितव्यमित्युक्तमिति** । स्वाभिमतं किञ्चिद्वस्तु असाधारण्येन निर्दिश्य तत्र प्रमाणोपन्यासः कर्तव्यः । अत एव चोत्तरत्र इदं ब्रह्मणि प्रमाणमित्येवं व्यवहारः । अतः प्रमाणोपन्यासात् प्रागेवासाधारण्याय लक्षणमुखेन ब्रह्म निर्देष्टव्यम् । अन्यथा हि प्रमाणोपन्यासोऽनाकाङ्क्षिताभिधानमेव स्यात् । ततः प्रथमसूत्रेण ब्रह्मस्वरूपतत्प्रमाणादिविचारेषु सर्वेषु प्रतिज्ञातेष्वपि लक्षणमुखेन ब्रह्मस्वरूपं प्रथमं निरूप्यते । तत्र च यत्र सर्वं विशेषजातं कल्पितं । यश्च सत्यज्ञानानन्दादिपदार्थेषु धर्मिभूतमखण्डं वस्तुगत्या, स एव ब्रह्मशब्दविशेष्यभूतोऽर्थः जन्मादिसूत्रेण प्रतिज्ञायते । तत्र 'शास्त्रयोनित्वात्' 'तत्तु समन्वयादि'ति सूत्राभ्यां प्रमाणं सर्वे वेदान्ता इत्युपन्यस्यते । ईक्षत्याद्यधिकरणमारभ्यावान्तरकिञ्चिद्वाक्यपर्यालोचनया अन्यपरत्वमाशङ्क्य कृत्स्नेनाध्यायेन तत्रैवोपनिषदां प्रामाण्यमुत्सर्गापवादाभ्यां दृढीक्रियते । अत्रायं विशयः—'जगज्जन्मादिकारणत्वं सत्यादिष्वभिन्नमखण्डं धर्मिमात्रं च ब्रह्मलक्षणं सम्भवति वा, नवे'ति । तत्राद्यं तटस्थलक्षणमित्युच्यते । यो हि धर्मोऽसाधारणस्सन्नेव कदाचिद्धर्मिणा सम्बध्यते, स तटस्थलक्षणमित्युच्यते । यथा छत्रचामरादिकं राज्ञः । आद्यलक्षणे चायं तदर्थसंशयः—किं तत् विरुद्धम्, अविरुद्धं वेति । द्वितीये तु तदखण्डं स्वरूपं प्रसिद्धम्, अप्रसिद्धं वेति । ततश्च पूर्वाधिकरणेनाक्षेपिकी सङ्गतिः । ब्रह्म विचारणीयमित्युक्तम् । तत् न सम्भवति । विरोधाप्रसिद्धिभ्यां ब्रह्मलक्षणस्यैवासम्भवात् । लक्षणं विना प्रधानादिव्यावृत्ततया तन्निर्णयासम्भवात् तद्विचारस्यं व्यर्थतापत्तेः । तत्र पूर्वः पक्षः—जगत्कारणत्वं ब्रह्मलक्षणं न सम्भवति । निर्विशेषस्य तस्य जगत्कारणत्वासम्भवात् । न हि कृतकत्वं नित्यस्य वस्तुनो लक्षणं भवति । एवं सत्याद्यात्मत्वं स्वरूपलक्षणमित्युच्यते । यथा चन्द्रस्य प्र-

कृष्टप्रकाशत्वाभिव्यङ्ग्यं चन्द्रत्वं, तदपि न सम्भवति। तत्र किं सत्यत्वादिधर्म एव लक्षणं, उत तद्धर्मी । नाद्यः । विरोधादेव । न द्वितीयः । सत्यज्ञानानन्दादिष्वभिन्नस्य सर्वधर्मविनिर्मुक्तस्य धर्मिणोऽप्रसिद्धत्वात् । न च श्रुत्यैव तादृशधर्मिमात्रप्रसिद्धिः। यज्जगज्जन्मादिकारणं ब्रह्म, तत् सत्यज्ञानानन्दात्मकमित्येवंरूपेण प्रवृत्तायाः श्रुतेः कारणत्वसत्यत्वादिरूपोद्देश्यताविधेयतावच्छेदकानेकधर्मसंसृष्टतया ब्रह्मबोधिकायास्सकलधर्मविनिर्मुक्तधर्मिमात्रबोधकत्वासम्भवात् । अपि च सर्वत्र धर्म एव लक्षणम् । तत्कथं धर्म्यैव स्वरूपलक्षणमिति एतदभिप्रायेणाह—**किं लक्षणं पुनरिति** । सूत्रे यच्छब्देन सत्यादिलक्षणं संगृहीतम् । यतस्सत्यादिरूपादित्यर्थः । अयमत्र परिहाराभिप्रायः । यथा ह्यर्थवादवाक्येषु मुख्येऽर्थे उद्देश्यविधेयसंसर्गबोधे सत्यपि लक्षणीये स्तुतिरूपे न तत्संसर्गो भासते, तद्वत् सत्यादिवाक्येषु द्वारभूते वाच्यार्थे तद्भानेऽपि लक्षिते धर्मिमात्रे तन्न भासत इति लक्षणया धर्मिमात्रबोधकत्वमुपपद्यते । एवं च यथा 'पुरोडाशकपालेने'त्यत्र धर्मिमात्रलक्षणा, तद्वत् प्रकृतेऽपि स्वीक्रियत इति श्रुतितस्तत्प्रसिद्धिरुपपद्यते । नन्वेवमपि यथा लक्षितेन प्राशस्त्येन विधिपदोपात्तानां यागदेवतादीनां संसर्गो भासते, एवमत्रापि पर्यवसिते बोधे पदान्तरार्थसंसर्गभानं नियतमिति कथमेतस्य सकलधर्मातीतवस्तुमात्रबोधकता । यत्किञ्चिद्धर्मसंसृष्टतया बोधे तु न त्वदभिमतब्रह्मस्वरूपसिद्धिः । उच्यते—पर्यवसिते बोधे पदान्तरार्थसंसर्गभानमावश्यकमिति नियमोऽप्रयोजको नानुस्रियते । न च तथा ज्योतिष्टोमादिवाक्ये दृष्टमिति तावन्मात्रेण तथा स्वीकर्तुं युक्तम् । तथासति लौकिकवाक्यानां प्रमाणान्तरप्रसिद्धार्थत्व एव प्रामाण्यम् । न तु कविप्रतिभामात्रसिद्धे प्रमाणान्तररहिते दृष्टमिति ज्योतिष्टोमादिवाक्येष्वप्यलौकिकोऽर्थो न सिध्येत् । यदि तु तत्र वेदवाक्यानां तात्पर्यस्य गृहीतत्वात् लोकदृष्टनियमानादरेण तथाभूतोऽर्थस्स्वीक्रियते, तर्हि प्रकृतेऽपि तुल्यम् । अपि च प्रकृष्टप्रकाशश्चन्द्र इति लक्षणवाक्येषु पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वाभावो दृष्टः । न च लक्षणवाक्येऽस्मिन् प्रकृष्टप्रकाशपदं हेतुगर्भं विशेषणम् । चन्द्रपदं च चन्द्रेतरव्यावृत्ततया वा चन्द्रपदवाच्यतया वा चन्द्रपरम् । ततश्च प्रकृष्टप्रकाशोऽचन्द्रव्यावृत्त इति वा चन्द्रपदवाच्य इति वा तत्र बोधः । तत् कथं तस्य पदान्तरार्थसंसर्गगोचरतया चन्द्रस्वरूपमात्रबोधकतेति वाच्यम् । तस्य हि वाक्यस्य न प्रकृष्टप्रकाशवैशिष्ट्यपरत्वम् । न वा चन्द्रेतरतारकादिव्यावृत्तिपरत्वम्। उभयोरपि प्रत्यक्षेण गृहीतत्वात् । नापि चन्द्रपदवाच्यत्वपरत्वम् । चन्द्रत्वमिति जातिविशेषः, तं प्रवृत्तिनिमित्तीकृत्य तदाश्रये चन्द्रपदं प्रवर्तत

इति प्रागेवाप्तोपदेशाल्लाभात् । न च तथापि व्यक्तिविशेषे तद्वाच्यत्वं न गृहीतमिति वाच्यम् । वस्तुतः प्रकृष्टप्रकाशाश्रयव्यक्तिविशेषस्यैव तदुपदेशविषयत्वात् । तस्मादज्ञातं चन्द्रत्वमेव वाक्यतात्पर्यविषय इति तदेव वाक्येन बोध्यते । ननु, चन्द्रत्वजातिरपि प्रत्यक्षेण गृहीता । प्रकृष्टप्रकाशत्वस्य तदभिव्यञ्जकस्य ग्रहणे सति तदग्रहणस्य वक्तुमनुचितत्वात् अभिव्यञ्जकसमानवित्तिवेद्यत्वाज्जातेः । अथ गृहीतापि चन्द्रत्वजातिर्नाज्ञाततातविनिर्मुक्ता भवति । उपदेशं विना जातस्य ज्ञानस्य प्रत्यक्षस्याप्यापाततत्त्वोपपत्तेः । अत एवायं 'चन्द्रो न वे'ति संशयो दृश्यते । अथवाभिव्यञ्जकतया यदभिव्यञ्जकं गृहीतं, तत्समानवित्तिवेद्यत्वमेव जातेः । न त्वभिव्यञ्जकत्वाग्रहणदशायामपि । अत एव भास्वररूपत्वेन सुवर्णे गृहीते शीतस्पर्शवत्तया च करकायां गृह्यमाणायामपि भास्वररूपशीतस्पर्शयोस्तेजस्त्वजलत्वाभिव्यञ्जकताज्ञानाभावदशायां न तत्र तदुभयग्रहणम् । ततश्च उपदेशात्प्राक् प्रकृष्टप्रकाशे गृह्यमाणेऽपि न चन्द्रत्वजातिसाक्षात्कारः । उपदेशेन तु प्रकृष्टप्रकाशानुवादेन चन्द्रस्वरूपे बोधिते वाच्यार्थबोधदशायामुपस्थितं प्रकृष्टप्रकाशमेव चन्द्रत्वाभिव्यञ्जकं कल्पयतीति अर्थादभिव्यङ्ग्याभिव्यञ्जकभावग्रहः । शाब्दस्तु चन्द्रस्वरूपग्रह एवेति चेत्, तर्हि प्राचीनोपदेशजनितं वाच्यत्वज्ञानमपि आपातरूपमेवेति शक्यं वक्तुम् । तत्रापि हि 'प्रकृष्टप्रकाशश्चन्द्रपदवाच्यो न वे'ति प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशात् प्राक्संशयोऽनुवर्तत एव । अभिव्यञ्जकताग्रहात्प्राक् प्रकृष्टप्रकाशे गृह्यमाणेऽपि चन्द्रत्वं न गृहीतमिति कल्पने तु अभिव्यञ्जकतापरमेव वाक्यमस्तु । स्वरूपमेव शाब्दं अभिव्यञ्जकतार्थीत्यत्र नियामकाभावादिति चेत्, उच्यते—तात्पर्यानुसारेण वाक्यार्थो वर्णनीयः । तत्र यदि वाच्यवाचकभावाभिप्रायेण यदि वा व्यङ्ग्यव्यञ्जकभावाभिप्रायेण प्रश्नः, तदा तत्परत्वमेवास्तु । न तत्राग्रहः । यदा तु चन्द्रशब्दवाच्यत्वाश्रयो यो व्यक्तिविशेषः स क इति प्रष्टुरभिप्रायः, तदा तन्मात्रपरतैव प्रकृष्टप्रकाशवाक्यस्य । ननु, तदापि व्यक्तिविशेषबोधनार्थं प्रकृष्टप्रकाशत्ववैशिष्ट्यं बोधनीयमेव । अन्यथा व्यावर्तकोपस्थितिं विना व्यक्तिविशेषालाभात् । अपि च प्रष्टुर्यद्यत् बुभुत्सितं, तत्तावदवश्यं वक्तव्यमित्येव नियमः । न तु तदबुभुत्सितमवक्तव्यमित्यपि । अन्यथा काश्याः को मार्ग इति प्रश्ने तद्व्यतिरिक्तानां मार्गचिह्नानां गिरिनद्यादीनां निरूपणं न स्यात् । यदि तु मार्गप्रतिपत्त्युपयोगितया तदपि प्रष्टुर्बुभुत्सितमेव, तदा प्रकृष्टप्रकाशत्वमपि तथास्त्विति चेत्, उच्यते—यत्र हि बुभुत्सितवस्तुप्रतिपत्त्युपयोग्यज्ञातं भवति, तत्र प्रष्टुर्जिज्ञासा भव-

त्वेवेति तादृशमार्गचिह्नादिषु वाक्यतात्पर्यस्य प्रश्नं विना स्वीकारेऽपि प्रकृते सम्बोधनीयेन प्रकृष्टप्रकाशसम्बन्धस्य जिज्ञासिते व्यक्तिविशेषेऽवगतत्वेन तदभिधाने न वक्तुस्तात्पर्यम् । परं तु तदनुवादं विना व्यक्तिविशेषस्य बोधयितुमशक्यतया तदर्थं द्वारतयाभिधानमात्रं तत्र प्रकृष्टप्रकाशस्य । यथा च तीरत्वप्रकारेणैव तीरविशेषोपस्थितिर्भवत्वित्यभिप्रायेण प्रयुक्तस्य गङ्गायां घोष इति वाक्यस्य गङ्गासम्बन्धित्वेन तीरबोधाजनकत्वेऽपि गङ्गापदवाच्यस्य प्रवाहविशेषस्य तीरान्तरे सम्बन्धाभावेन तदुपस्थापनशक्त्यभावात् तीरविशेष एव स्वरूपेण बोध्यते, तद्वत् प्रकृष्टप्रकाशसंसर्गतात्पर्यरहितस्यापि व्यक्त्यन्तरबोधकतायां सामर्थ्याभावादेव व्यक्तिविशेषोपस्थापकत्वमुपपद्यते । एवं चन्द्रत्वमात्रतात्पर्येण प्रयुक्तस्य प्रकृष्टप्रकाशश्चन्द्र इतिवाक्यस्य पदान्तरार्थसंसर्गागोचरप्रमितिजनकत्वेनाखण्डार्थत्वेऽभ्युपगम्यमाने तज्जन्यज्ञानस्य 'अयमसौ वा चन्द्र' इति संशयनिवर्तकत्वेन चन्द्रोऽस्तीतिवाक्यजन्यभानस्य तदनिवर्तकत्वेन च सामग्रीविशेषजन्यत्वमेव संशयादिनिवर्तकतायां फलबलात् प्रयोजकमास्थेयम् । न च वाक्यस्य पदान्तरार्थसंसर्गागोचरप्रमितिजनकत्वमेव न सम्भवतीति शङ्कनीयम् । अकांक्षादिसामग्र्यां सत्यां तदजनकत्वस्य वक्तुमशक्यत्वात् । दृष्टं चार्थवादवाक्यानामवान्तरवाक्यविधया प्राशस्त्यरूपार्थबोधकतायां पदान्तरार्थसंगागोचरप्रमितिजनकत्वम् । इयांस्तु विशेषः— प्रकृष्टप्रकाशवाक्ये चन्द्रप्रादिपदिकोपात्तस्य लक्ष्यतावच्छेदकस्य चन्द्रत्वस्य चन्द्रे संसर्गो भासते । इह तु सत्यादिवाक्ये ब्रह्मणि ब्रह्मपदोपात्तस्य ब्रह्मत्वस्य संसर्गोऽपि न भासते । सर्वत्र ब्रह्मप्रकरणे आम्नातैः आथात आदेशो नेति नेति, यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते, आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्, 'सदेव सोम्येदमग्र आसी'दित्यादिवाक्यैर्ब्रह्मस्वरूपस्य सकलधर्मातीतत्वप्रतिपादनात् । न च मिथ्यात्वं तावता धर्माणां सिध्यति । मिथ्याभूतानामपि वाक्यार्थकोटौ निवेशे को दोष इति वाच्यम् । 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति, अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्, उदरमन्तरं कुरुते अथ तस्य भयं भवती'त्यादिवाक्यैर्भेददर्शनस्य निन्दितत्वात् 'ब्रह्मविदाप्नोति परम । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योम'न्निति अनन्तपदेन मोक्षजनकज्ञानविषयतया सर्वधर्मातीतत्वस्य प्रतिपादनाच्च । अयं च मन्त्रः 'प्रत्यस्तमितभेदं यत् सत्तामात्र-

मगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ इति पराशरेण वस्तुमात्रबोधनपरतया व्याख्यातः । अत्र प्रत्यस्तमितभेदमित्यनन्तपदं, सत्तामात्रमिति सत्यपदं, अगोचरं वचसामिति 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । नबिभेति कुतश्चने'ति उपसंहारैकरूप्यमुक्तम् । अस्यात्मसंवेद्यं तत् ज्ञानमिति स्वप्रकाशनित्यज्ञानपरतया ज्ञानपदं, 'ब्रह्मसंज्ञितमिति' 'ब्रह्मविदाप्नोति परमिति सङ्ग्रहवाक्येन लक्षणवाक्यस्यैकवाक्यत्वं च व्याख्यातम् । अत्र संज्ञितमिति संज्ञापदोपादानं वस्तुमात्रबोधकत्वेऽप्यार्थिकार्थपरतया नेयम् । ननु, सत्यत्वादिधर्माणां मिथ्यात्वे ब्रह्मणस्सत्यादिरूपता न सिध्येदिति चेत्, किं सत्यत्वादिवैशिष्ट्यं न सिध्येदित्युच्यते, सत्यत्वादीनां मिथ्यात्वे बाध्यत्वादिरूपधर्मान्तरं सम्भवेदिति वा । आद्ये इष्टापत्तिः । व्यावहारिकसत्यत्वादिवैशिष्ट्याङ्गीकारेऽपि परमार्थतस्तदनङ्गीकारात् । न द्वितीयः । न हि बाध्यत्वरूपं धर्मान्तरं ब्रह्मणि स्वीकृत्य शुक्तिरजतादिवत् सत्यत्वं निषिध्यते । किं तु 'अथात आदेशो नेति नेती'त्यादिश्रुतिप्रतिपादितनिर्धर्मवस्तुस्वरूपपर्यालोचनया । तत्र कथं बाध्यत्वरूपधर्मसम्भवः । न च सत्यज्ञानानन्दादिपदार्थानां परस्परं प्रत्येकं च भिन्नतयावगतानां कथमेकब्रह्मासाधारणरूपत्वसिद्धिरिति शङ्कनीयम् । अत एव ब्रह्मासाधारणस्वरूपप्रतिपादकवाक्यादभेदे त्रयाणां सिद्धे घटाद्युपाधिकस्सत्यभेदः, वृत्त्युपाधिको ज्ञानानन्दभेद इति, धर्मी तु सर्वत्रानुस्यूत एक इति च सिध्यति । यच्च धर्मिमात्रपरत्वे लक्षणवाक्यता न स्यादिति तदिष्टमेव । न हि सत्यज्ञानानन्दाभिन्नं धर्मिमात्रं मुख्यं लक्षणमिति वदामः । अपि तु तदवगम इतरव्यावृत्तिबुद्धावुपयुज्यत इति, तस्य लक्षणत्वोपचारः । न चैकवस्तुमात्रबोधकत्वे चन्द्रश्चन्द्र इतिवत् ब्रह्म ब्रह्मेतिवच्चासाङ्गत्यमिति युक्तम् । पर्यायपदानां शक्तिग्राहकवाक्यादन्यत्र सहप्रयोगस्याव्युत्पन्नतया तादृशसमभिव्याहारस्यासङ्गत्यम् । इह तु सत्यादिपदानां भिन्नप्रवृत्तिनिमित्तकतया न सहप्रयोगानुपपत्तिः । सत्यशब्दे अबाध्यत्वं, ज्ञानानन्दपदयोस्तु ज्ञानत्वानन्दत्वरूपो जातिविशेषः । स च तार्किकमते पदार्थविशेषः सामान्यात्मकः । अस्मन्मते तत्तदुपाध्युपहितं ब्रह्मैवेत्यन्यदेतत् । न चैकधर्मिमात्रपर्यवसाने पदान्तरवैयर्थ्यम् । पदार्थोपस्थितिदशायामनेकधर्मविशिष्टैकधर्मिबोधकतया बाध्यत्वादिभ्रमव्युदासपूर्वकं व्यक्तिविशेषोपस्थापनोपयोगित्वात् । तत् सिद्धं सत्यादिवाक्यस्याखण्डार्थत्वम् । तत्त्वं च पदान्तरार्थसंसर्गागोचरप्रमितिपरवाक्यत्वम् । संसर्गागोचरेत्युक्ते प्रकृष्टप्रकाशवाक्येऽव्याप्तिः । तज्जन्यज्ञानस्य चन्द्रे चन्द्रत्वावगाहित्वात् । अतः पदान्तरेति ।

न च प्रकृष्टप्रकाशशब्दलक्षितधर्मिणः अभेदस्य चन्द्रपदार्थे भानात् तद्दोषतादवस्थ्यमिति शङ्कनीयम्। अभेदस्य स्वरूपमात्रतयोभयगतत्वाभावेन संसर्गरूपत्वाभावात्। अखण्डवाक्यतात्पर्यविषयीभूतज्ञानविषयत्वं चार्थस्याखण्डत्वम्। तथाचोक्तगत्या सत्यादिवाक्यस्य सर्वधर्मविनिर्मुक्तवस्तुमात्रबोधकतोपपत्तौ श्रुतिप्रसिद्धं स्वरूपलक्षणमिति सिद्धम्। एवं जगज्जन्मादिकारणत्वं 'यतो वे'त्यादिवाक्यप्रसिद्धं ब्रह्मलक्षणं नोक्तस्वरूपेण विरुध्यते। मायिकस्य जगत्कारणत्वस्यानृततया परमार्थतो निर्धर्मस्वरूपेण विरोधानुपपत्तेः। एवं च यथा यद्रजतमभात्,सा शुक्तिरित्यारोपितेन रजतेन शुक्तिर्लक्ष्यते, एवमारोपितेन जगज्जन्मादिकारणत्वेन ब्रह्म लक्ष्यते। आरोपितत्वेऽपि तस्य ब्रह्मण्येवासाधारणत्वात्। ननु, लक्षणद्वयोपन्यासस्य किं प्रयोजनम्, इदं—यथा चन्द्रं दिदर्शयिषुराप्तः प्रथमं दिगन्तरगतनक्षत्रादिभ्यो दृष्टिं वारयितुं शाखायां चन्द्र इत्यधिकरणतया सम्बन्धविशेषेण शाखामुपलक्षणमुपादत्ते। ततश्च दिगन्तरव्यावृत्तचक्षुषश्चन्द्रसमीपवर्त्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोधयति। एवं हि बोध्यबुद्धिस्सुखेन चन्द्रेऽवतारिता भवति। एवं 'ब्रह्मविदाप्नोति पर' मित्युपश्रुत्यब्रह्मशब्दस्यानेकत्र प्रयोगदर्शनात् मुमुक्षुभिर्ज्ञेयो ब्रह्मशब्दार्थः क इति बुभुत्सोर्जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्वं न सम्भवति, तेषां सृज्यकोटौ निविष्टतया स्रष्टृत्वासम्भवात् तेभ्यो व्यावृत्तबुद्धेरपि सम्भवज्जगत्कारणभावेषु प्रधानादिषु ब्रह्मभ्रममपनेतुं स्वरूपलक्षणं उपन्यस्यते। न हि जडानां प्रधानादीनां ज्ञानादिस्वरूपतोपपद्यते। ततश्चाद्यं लक्षणं केभ्यश्चिद्व्यावृत्तिनिश्चयपूर्वकं बुद्धिस्थिरीकरणार्थम्। द्वितीयं तु सकलभ्रमनिवृत्तिपूर्वकं वस्तुस्वरूपसत्तानिश्चयार्थम्। अपि च ब्रह्मण एव जगत्कारणत्वानुपन्यासे 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमेति' श्रुतिसहकृतेन ब्रह्मशब्देन त्रिविधपरिच्छेदशून्यं वस्तु लक्ष्यत्वेन निर्दिष्टम्। स्वरूपलक्षणमात्रोक्तावेवंशङ्का भवेत् उक्तस्वरूपमपि ब्रह्म कथं त्रिविधपरिच्छेदशून्यम्। जगतस्तदुपादानस्य तन्निमित्तस्य चान्यस्य वस्तुनो विद्यमानत्वात्। अतस्तन्निवृत्तये यज्जगज्जन्मादिकारणं, तद्ब्रह्मेति बोधनीयम्। ततश्च जगत्कारणमन्यदिति भ्रमः ब्रह्मण एव कारणताबोधादपगतो भवति। जगतश्चोपादानं ब्रह्मेत्यवगते जगदधिष्ठानं ब्रह्मेति पर्यवस्यति। तत्र ब्रह्मशब्दोपात्ते सर्ववस्त्वभावे बोधिते स्वाधिष्ठानगताभावप्रतियोगित्वरूपं मिथ्यात्वं जगतस्सिध्यतीति जगतोऽन्यस्य वस्तुनो विद्यमानतया कथं त्रिविधपरिच्छेद इति शङ्कानिवारणं लभ्यते। अत एव जगदुत्पत्तिस्थितिलयकारणत्वं ब्र-

ह्मलक्षणत्वेन निर्दिश्यते । उत्पत्तिमात्रकारणत्वादिकमपि हि ब्रह्मासाधारणमेव। परं तु एकैकमात्रकारणत्वोक्तौ ततोऽन्यत्रान्यदेव कारणमस्त्विति। तेन च वस्तुपरिच्छेदप्राप्तिरिति शङ्का नापगता स्यात् । उत्पत्तिस्थितिलयानां त्रयाणामपि ब्रह्मकारणमिति प्रतिपादने तु न काचिदाशङ्का प्रसरति। अपि च 'असंसारि चेतनं किमपि नास्ती'ति मन्यमानस्य सर्वधर्मातीतमसंसारि ब्रह्म जीवस्य पारमार्थिकं स्वरूपमिति सहसा बोधयितुं न शक्यम् । अतः कार्यस्यांकुरादेः केन चित् कर्त्रा भवितव्यमिति लोकसिद्धार्थानुवादपूर्वकमसंसारिवस्तु लोकदृष्ट्या सम्भावनीयम् । तत्सम्भावनायां तस्य पारमार्थिकं स्वरूपं श्रुत्या सुबोधं भवतीति तटस्थतया स्वरूपेण च लक्षणतो ब्रह्मबोधनप्रयोजनम् अमुं सूत्रार्थं मनसि निधाय सौत्रपदानि व्याचष्टे—**जन्म उत्पत्तिरिति** । सूत्रे 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति श्रुत्यनुसारेण जन्मादीनां त्रयाणां ग्रहणं विवक्षितम् । तत्र यदि अतद्गुणसंविज्ञानबहुव्रीहिर्विवक्षितस्स्यात्, तदा स्थितिलययोरेव ग्रहणं प्राप्नुयात्। न त्रयाणाम्। अतस्त्रितयलाभाय तद्गुणसंविज्ञानबहुव्रीहिसमासो विवक्षितः । तत्रापि यदि जन्म आदिः येषां ते जन्मस्थितिभङ्गा इति विग्रहे इतरेतरयोगद्वन्द्वघटितं विशेष्यं गृह्येत, तदा जन्मादयोऽस्य यत इति सूत्रापत्त्या यथाश्रुतसूत्रमसमर्थितं स्यात् । तन्माभूदिति समाहारद्वन्द्वघटितं विशेष्यं विवक्षितम् । तत्र हि 'सर्वो द्वन्द्वो विभाषैकवद्भवती' त्यनेनैकवचनं 'स नपुंसक'मित्यनेन समाहारे द्विगुर्द्वन्द्वश्च क्लीबं स्यादित्येवमर्थकेन नपुंसकलिङ्गं च सिध्यति। ततश्च जन्मादीति पदम् । ननु, जन्मनः किं कृत्स्नप्रपञ्चापेक्षया आदित्वम्, उत स्थितिभङ्गावपेक्ष्य । नाद्यः । जन्मनोऽपि प्रपञ्चान्तर्गततया स्वनिरूपितादित्वासम्भवात । न द्वितीयः । तथासति त्रितयलाभासम्भवादित्याशङ्क्याह—**जन्मनश्चेति** । श्रुत्या वा तथा निर्देशे किमालम्बनमित्याशङ्क्याह—**वस्तुवृत्तापेक्षं चेति** । यद्यपि जन्मापि त्रितयान्तर्गतं, तथापि त्रितयमध्ये जन्म प्रथम भागो भवतीति तदादित्वेन त्रितयसमुदायो निर्देष्टुं शक्यत एवेति भावः । सङ्ग्रहवाक्यं विवृणोति—**श्रुतिनिर्देशस्तावदित्यादिना** । नन्विदंशब्दस्य प्रत्यक्षसन्निहितवस्तुनिर्देशकत्वात् सूत्रे न सर्वजगत्कारणत्वलाभ इत्याशङ्क्याह—**अस्येति** । **प्रत्यक्षादीति** । 'इदं सर्वमसृजत। यदिदं किञ्चे'ति प्रत्यक्षादिसन्निधापितसकलजगत्कारणत्वस्य श्रुतिषु प्रतिपादनात् तदनुसारेण सूत्रेऽपि तथैव ग्रहणमिति भावः । ननु, जन्मादिशब्देन त्रितयसमुदायस्य प्रतिपादनात् तस्यैव प्रकृत्यर्थेन जगता सह षष्ठ्या सम्बन्धः प्रतितादितो भवेत् । न तु जन्मस्थितिप्रलयैस्समुदायिभिरित्याश-

ङ्क्याह—षष्ठीति । यत्किञ्चिदेकोपाध्यवच्छिन्नाः पदार्था एव समुदाय इति समुदायसमुदायिनोर्भेदाभावान्नोक्तानुपपत्तिरिति भावः । ननु, सूत्रे यत इति पञ्चम्यन्तात्तसिल्प्रत्ययो वक्तुमयुक्तः । किमियं 'यतो वा इमानि भूतानि जायन्त'इति श्रुताविवापादानपञ्चमी, किं वा जाड्याद्बद्ध इतिवत् हेतुपञ्चमी । नाद्यः । 'जनिकर्तुः प्रकृति'रिति सूत्रेण उत्पत्त्यर्थकधातुसमभिव्याहार एव तस्या विधानात् । इह तु जन्मादिशब्देन त्रितयसमुदायग्रहणात् । अपि च तथात्वे हेतुत्वस्याग्रहात् उपादाननिमित्तत्वयोरुभयोरपि ग्रहणं न स्यात् । नापि हेतुपञ्चमी । 'विभाषा गुणेऽस्त्रिया'मिति गुणवाचकेभ्य एव तद्विधानादित्यत आह—यत इतीति । 'हेता'विति सूत्रेण हेत्वर्थे तृतीया विधीयते । 'अन्याभ्योऽपि दृश्यत इति ततोऽपि तसिल्प्रत्ययो भविष्यति । ततश्च यत इति सौत्रपदं तृतीयान्तात्तसिल्प्रत्ययेन सिद्धं कारणत्वसामान्यं प्रतिपादयति । अस्य च श्रुतिपर्यालोचनया उपादानत्वे सति निमित्ततायां पर्यवसानं लभ्यते। अथवा 'विभाषा गुणेऽस्त्रिया'मिति सूत्रे विभाषेति योगविभागाद्वा अगुण इति प्रश्लेषाद्वा 'दण्डाद्घटः, पुत्रात्प्रमोदः, धूमाद्वह्निमा'नित्यादिप्रयोगनिर्वाहः तथेहापि भविष्यतीति भावः । ननु, 'एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्त' इत्यत्र प्रतिपद्यमाना इति पदेनोपस्थितस्य प्रतिपत्तिवर्तमानकालस्य मानवावर्तविशेषणत्वेन प्रयुक्तेनेममितिशब्देन स्वैयर्थ्यपरिहारार्थं मानवावर्तान्तरव्यावर्तको विशेषः प्रतिपादनीय इति साकांक्षेण परामर्शात् अर्चिरादिमार्गेण ब्रह्मलोकं गच्छन्तो यस्मिन्मानवे गतास्तस्मिन्नेव मानवे नावर्तन्त इत्येवमर्थपर्यवसानाय मार्गप्रतिपत्तिसमानकालं 'इमं मानवमावर्तं नावर्तन्त' इति वर्मानार्थकत्वमिममितिशब्दस्य स्वीकृतम् । तद्वत् प्रकृतेऽपि 'यतो वा इमानि भूतानि जायन्त'इति श्रुतौ इमानीतिशब्दस्य सूत्रे चास्येतिशब्दस्य वर्तमानार्थतां स्वीकृत्य वर्तमानजगदुत्पत्त्यादिप्रतिपादकत्वमेव किं न स्यादित्याशङ्क्य श्रुताविमानीतिशब्दो नावर्तमानाद्वर्तमाने व्यावृत्तिबोधनार्थः। 'यतो वे'त्यादिवाक्यं हि 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इति वाक्यप्रतिपन्नां सृष्टिमनुवदति । तच्च वाक्यं श्लोकान्तर्गतानन्तपदोपात्तत्रिविधपरिच्छेदशून्यत्वप्रतिपादकम् । अतोऽतीतानागतवर्तमानसकलवियदादिकारणत्वेन प्रतिपादकं ब्रह्मण इति यतो वेत्यादिवाक्यमपि पुरोवादानुसारेणातीतादिसाधारण्येन सर्वजगत्कारणत्वप्रतिपादनपरम् । तत्र नेमानीतिशब्दोऽतीतादिभ्यो व्यावृत्तिबोधनार्थो वक्तुं शक्यते ; किं तु प्रत्यक्षादिसन्निधापितं जगत्प्रकारं परामृशतीति वक्तव्यम् । तथा च सत्येतादृशे जगति ब्रह्मणोऽन्यः कर्ता न सम्भवतीति कर्त्रन्तरव्यासेधेन सप्रयोजनं प्रकृतोपयोगि चेदंशब्दो विशेषणं भविष्यतीति तात्पर्येण श्रुतिसूत्रगतेदंशब्दोपात्तप्र-

कारं जगद्विशेषणैर्विशदयन् ब्रह्मजिज्ञासेत्यत्र विद्यमानस्य ब्रह्मपदस्य प्रथमान्ततया विपरिणामेनानुषङ्गं तत्पदाध्याहारं भवतिपदाध्याहारं च कृत्वा सूत्रवाक्यार्थं कथयति—**अस्येत्यारभ्य वाक्यशेष इत्यन्तेन**। नामरूपाभ्यां व्याकृतस्येति विशेषणेन कर्तारं विना जगदुत्पद्यत इति निरीश्वरपक्षो व्यावर्तितः । घटो हि नाम्ना घट इत्येवंरूपेण कम्बुग्रीवाद्यात्मना रूपेण च यथा भविष्यति, तथा यतितव्यमिति सङ्कल्पपूर्वकं क्रियमाण एव तादृशनामरूपाभ्यां व्यक्तो भवति, तद्वदंकुरादिकमपि नामरूपव्यवस्थितं तदनुकूलसङ्कल्पाश्रयं कर्तारमाक्षिपतीति न निरीश्वरपक्षस्समञ्जसः। व्याकृतस्येत्यनेन उत्पत्तेः प्रागव्याकृतनामरूपसद्भावसूचनात् उत्पत्तेः प्राक् कार्यप्रागभाव एवेति परमाणुभ्योऽसदेव द्व्यणुकादिकं जायत इति तार्किकमतवैलक्षण्यं सूचितम् । श्रुतौ सृज्यसमर्पक इदंशब्दो बहुवचनान्ततया प्रयुक्तः । सूत्रे एकवचनान्ततया प्रयोगेण इदंशब्दोपात्तं सृज्यं यस्य दृष्ट्या एककार्यमिव भवतीति सूचनेन 'अयं च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैव निश्वसितानी'ति वचनैकवाक्यतासूचनेनेदं सर्वमेककार्यवदप्रयत्नेनैव करोतीति सूचनेन एक ईश्वरः इदं सर्वं कथं कुर्यादिति शङ्का दूरत एव निरस्ता भवति । यो हि निश्वासवदप्रयत्नेनैव सर्वं करोति, तत्रेदं न करोतीति का शङ्का । ततश्च निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च भगवतस्सिद्धं भवति । अतस्सोऽप्यत्र यतश्शब्देनार्थो विवक्षित इत्यभिप्रेयोक्तं—**यस्मात्सर्वज्ञात्सर्वशक्तेरिति** । अनेककर्तृभोक्तृसंयुक्तस्येत्यनेन जीवानां सृज्यकोटौ निवेशात् तेषां जगत्कर्तृत्वं न सम्भवतीत्युक्तम्। **प्रतिनियतेति** । किञ्चित्कार्यं प्रति देशो नियतो भवति । यथा कृष्णमृगादौ किञ्चित्प्रतिनियतः कालः । यथा रसालमञ्जरीणाम् उद्भेदे वसन्तरूपः । एवं निमित्तक्रिययोरपि यथायथं नैयत्यं द्रष्टव्यम्। एतादृशविभागाभिज्ञो हि तत्र कर्ता भवति । जीवैस्तु तत् मनसापि चिन्तयितुमशक्यम् । दूरे तत्करणशक्तिरित्यभिप्रेत्याह—**मनसापीति** । अनेन च भाष्येण 'कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्य'मिति श्वेताश्वतरमन्त्रार्थः संगृहीतः । स्वभावादेव सर्वं भवतीति स्वभावपक्षः । नियतिरदृष्टं किमपि नियामकं नास्तीति यदृच्छापक्षः । योनिः प्रधानम्। पुरुषो जीवः। एते सर्वेऽपि निरीश्वरकारणपक्षाश्चिन्त्याः । तत्र प्रधानादिपूर्वपक्षा ईक्षत्यधिकरणमारभ्य निराकरिष्यन्ते । जीवपूर्वपक्षस्तु श्रुत्यन्तरावलम्बनः अन्यत्र न निराकृतः इहैव सूत्रसूचितेन सर्वज्ञत्वसर्वशक्तित्वेन निराचिकीर्षितः । तथा हि प्रश्नोपनिषदि—'अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमि-

मं वेदेत्युपक्रम्य तं त्वा पृच्छामि क्वासौ पुरुष' इति पिप्पलादं प्रति भारद्वाजप्रश्ने षोडशकलं पुरुषं प्रस्तुत्याम्नायते । 'इहैवान्तश्शरीरे सोम्य पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति स ईक्षाञ्चक्रे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपोमन्त्राः कर्म लोकालोकेषु नाम चे'ति । अत्र प्राणोत्क्रान्तिप्रतिष्ठाभ्याम् उत्क्रान्तिप्रतिष्ठावत्त्वं शरीरान्तस्स्थत्वं च जीवलिङ्गम् । तदनुसारेण प्राणादिनामान्तषोडशकलासृष्टृत्वमपि जीवस्यैव स्वीकर्तव्यम् । ततश्च सर्वाणि कारणवाक्यानि जीवपराण्येव यथाकथञ्चिद्व्याख्येयानि । न तु ब्रह्मपराणि । निर्धर्मकस्य जगत्कारणत्वविरोधादिति शङ्को मन्यते । परिहारस्तु सर्वासूपनिषत्सु सर्वज्ञत्वादिभिस्संसारिष्वसम्भवद्भिर्गुणैर्जगत्कारणं प्रतिपाद्यते । जीवाश्च हिरण्यगर्भादयोऽपि सृज्यकोटौ निवेश्यन्ते 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादीभिर्वचनैः । न च तानि सर्वाण्येकेन वचनेनान्यथा नेतुं युक्तानि । न च निर्धर्मके जगत्कारणत्वादिविरोध इति प्रागेव व्युत्पादितम् । अतः प्रश्नोपनिषद्वाक्यमपि परब्रह्मपरमेव । तत्र जीवलिङ्गं जीवरूपेण ब्रह्मैव संसरतीत्यभेदाभिप्रायम् । अत एव ब्रह्मज्ञानैकसाध्यममृतत्वं प्रकृतषोडशकलपुरुषद्रष्टुः 'एवमेवास्य परिद्रष्टुरि'त्यादिना 'स एषोऽकलोऽमृतो भवती'त्यन्तेन नदीसमुद्रविलयनदृष्टान्तपूर्वकं प्रतिपादितम् । 'एतावदेवाहमेतत् परं ब्रह्म वेद । नातः परमस्ती'तिचान्ते उपसंहृतमिति । ननु, जन्मादिभ्यस्त्रिभ्योऽन्येऽपि भावविकारा वृद्धिपरिणामापक्षयरूपाः प्रसिद्धाः । तेऽपि कुत आदिशब्देन न गृहीताः इत्याशङ्क्याह—**अन्येषामपीति** । वृद्धिस्तावदवयवोपचयरूपा उत्पत्तिरेव । परिणामोऽपि त्रिविधः—धर्मलक्षणो मृदादेर्घटादिरूपः, लक्षणलक्षणोऽतीतत्ववर्तमानत्वानागतत्वादिरूपः, अवस्थालक्षणः चिरातीतत्वादिवर्तमानत्वात्यन्तानागतत्वादिरूपः, तद्धर्मविशिष्टतया उत्पत्तिरेव । अपक्षयस्तु अवयवविश्लेषः नाशान्तर्गत एवेति त्रिष्वेवोत्पत्त्यादिष्वन्तर्भाव इत्यर्थः । ननु, 'यतो वे'त्यादिश्रुतिवाक्यं उदाहृत्यावशिष्टानां तेष्वेवान्तर्भाव इति क्लेशेन व्याख्याने किं प्रयोजनं, 'जायतेऽस्ति वर्धते परिणमते अपक्षीयते नश्यती'त्येवं यास्कवचनमेव कुतो नोदाहृियत इत्याशङ्क्य तदुदाहरणे मूलकारणाज्जगदुत्पत्तिस्संगृहीता न स्यात् । तद्धि वचनं पौरुषेयं मूलप्रमाणमपेक्षमाणं 'यतो वे'त्यादिवाक्यं नोपस्थापयति । अर्थप्रत्यभिज्ञानाभावात् । अतः प्रत्यक्षमेव वक्तव्यम् । न च मूलकारणं तद्विषयः । तस्यालौकिकत्वात् । न च ऋषेस्तद्दर्शनं योगमाहात्म्यात् कल्पनीयम् । कल्पकाभावात्

'जायत' इति वचनस्य सृष्ट्यनन्तरं भौतिकेषु षड्भावविकारान् दृष्ट्वा प्रणीतमिति कल्पनस्य सम्भवात् । अतस्तदुदाहरणे मूलकारणाग्रहणशङ्कानिवृत्त्यर्थं योत्पत्तिर्ब्रह्मणस्सकाशाज्जगतः, या च तत्रैव ब्रह्मणि जगतास्स्थितिः, यश्च तत्रैव ब्रह्मणि प्रलयो जगतः, ते 'यतो वे'त्यादिवाक्योदाहरणपूर्वकं गृह्यन्त इत्याह—**यास्केत्यादिना गृह्यन्त इत्यन्तेन** । पूर्वोक्तजगद्विशेषणव्यावर्त्यमाह—**न च यथोक्तविशेषणस्येति** । अभावादिति शून्यवादिमतोपन्यासः । **विशिष्टेति** । तत्तत्कार्योचितेत्यर्थः । यद्यप्यत्र प्रश्नोपनिषद्वाक्यजनिता जीवाशङ्कैव निराकरणीया । अन्यासां प्रधानादिगोचरशङ्कानामधिकरणान्तरेषु निराकरिष्यमाणत्वात्, तथापि यथा प्रधानादिभ्यो न सम्भवति, तथा संसारिणोऽपि न सम्भवतीत्युपमानोपमेयभावेन योजनीयम् । अस्मिन् सूत्रे यज्जगत उत्पद्यमानत्वमुक्तं, तदेव हेतूकृत्यादृष्टाद्वारकजन्यकृत्यजन्यानि जन्यान्यंकुरादीनि उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि । उत्पद्यमानत्वात् । घटवदिति प्रकारेण संसारिव्यतिरिक्तमीश्वरं साधयन्तीत्याह—**एतदेवेति** । ततश्च यत् स्वयं पूर्ववाक्ये यथोक्तविशेषणस्य जगतस्संसारिणस्सकाशादुत्पत्तिर्न सम्भवतीत्युक्तं, तत् युक्तिकुशलानामपि सम्मतमिति भावः । मन्यन्त इति तन्मते अस्वरसोद्भावनम् । तद्यथा अनेन हि जगदुत्पत्त्युपयोगिकृत्यादिमान् एकः, तद्गतं कृत्यादिकं च नित्यं सर्वविषयं च यदि सिध्येत्, तदा खलु संसारिवैलक्षण्यं सिध्येत् । न तु तदस्ति । कार्यत्वहेतोस्तत्र सामर्थ्याभावात् । स हि तत्र कर्तारमपेक्षते । तदेकत्वे कृत्यादीनां नित्यत्वे च उदासीन एव लाघवतर्कसहकृतस्तदेकत्वादिकं साधयिष्यतीति चेन्न । एकत्वं किमेकत्वरूपसङ्ख्यावैशिष्ट्यमनुमितिविषयतया उपनयति, किं वा अनेकत्वाभाववैशिष्ट्यम् । नाद्यः । प्रत्येकं बहूनामप्यंकुरादिकर्तॄणामेकत्वसम्भवात् न विवक्षितार्थसिद्धिः । न द्वितीयः । न हि यदग्रे वस्तुलाघवपर्यवसितं स्वानुग्राह्यप्रमाणजन्यज्ञानस्य विषयगौरवमापादयति तत् प्रमाणसहकारितया क्लृप्तं लाघवम् । अत एव पुरोवर्तिज्ञानस्येष्टभेदग्रहदशायां प्रवृत्तिजनकत्वाभावेन तादृशप्रतिबन्धकव्यावृत्तयेऽधिककारणविवक्षाप्रसक्तौ प्रवृत्तिकारणताग्रहविषयतयाग्रेऽप्यधिकरणप्रकारकज्ञानान्तरकल्पनाराहित्यरूपलाघवानुसन्धानं नेष्टभेदग्रहाभावमुपनयति । प्रवृत्तिरिष्टभेदग्रहविरोधिकारणजन्या । तत्प्रतिबद्धत्वादिति स्वानुग्राह्यप्रमाणजन्यज्ञानस्य गुरुविषयतापादकत्वात् । अपि तु भाविगौरवं सोढ्वापि स्वानुग्राह्यप्रमाणजन्यज्ञानस्य विषयलघुतापादकमिष्टभेदग्रहरूपमेव पुरोवर्तिज्ञानस्य कारणताकोटौ अवच्छेदकं कल्पनीयम् । भावरूपतया स्वरूपतो लाघवात् । सचीनज्ञानस्थले ज्ञानवित्तिवेद्यतया उभयसम्मततयोपस्थितितोऽपि लघुत्वात् कामी-

रणतावच्छेदककोटौ निवेशकल्पनेन कारणान्तरकल्पनाभावरूपलाघवसम्भवाच्चेत्य नुसन्धानमेवोक्तप्रमाणस्य पुरोवर्तिज्ञानेष्टाभेदविषयोपनायकं कल्प्यते। अतो न लाघवानुसारेणानेकत्वाभावविशिष्टकर्तृसिद्धिः । अपि च नात्र भाविगौरवमपि । न हि कर्तृमात्रसिद्धावपि एकः कर्ता न सिध्येदिति वदता क्लृप्तजीवव्यतिरिक्ता एव बहवः कर्तार आपाद्यन्ते। येन गौरवग्रस्ततया तदापादनमनुन्मिषितम् । किं तु क्लृप्तेष्वेव जीवेषु जगत्कर्तृत्वमस्तु । न चासम्भवः । तेषां जगत्कृतौ अस्मदादीनामसम्भवेऽपि महामहिमशालिनामगस्त्यविश्वामित्रादिसदृशानां तत्सम्भवात् । प्रसिद्धं हि विश्वामित्रागस्त्ययोरस्मदाद्यसम्भावितमप्यभिनवसर्गाम्बुधिचुलुकीकरणादिकम् । योगशास्त्रे च योगमाहात्म्यं सृष्ट्याद्युपयोगि प्रतिपादितम् । एवं च क्लृप्तानामेव जीवानां तत्कृत्यादीनां च जगदुत्पत्त्युपयोगित्वे धर्ममात्रकल्पनमेवापूर्वेश्वरतत्कृतितद्गतजगदुपयोगित्वधर्मिकल्पनाद्वरम् । अतो विपरीतं गौरवमिति शङ्काकलङ्कितः हेतुः कथमलौकिकमर्थं साधयेत् । अपि च कर्त्रैकत्वसाधनविपरीतसाधनमपि जगत उपलभ्यते विचित्रमहाकार्यत्वरूपम् । यद्धि विचित्रं महत् गोपुरप्रासादादिकं, तत् सर्वं क्रमभाव्यसर्वविषयज्ञानादिभिरनेकैःशिल्पिभिः क्रमशः क्रियमाणं दृष्टम् । जगदपि विचित्रमहाकार्यत्वात्तथास्त्विति कथं नित्यसर्वविषयज्ञानादिमानेकः कर्ता सिध्येत् । अपि च कृत्यादिषु जन्यत्वे लाघवात् कृतित्वादिकमेव तत्र प्रयोजकम् । न तु जैवकृतित्वादिकमपि । गौरवात् । ततश्च या या कृतिः, सा सर्वापि जन्येत्यादि व्याप्तिविरोधात् नित्यकृत्यादिसिद्धिः कथं स्यात् । अपि च यथा किञ्चित्कार्यं ससम्प्रदानकं, किञ्चित् नेति, यथा किञ्चित्कार्यं सापादानकं, किञ्चित् नेति, तथा किञ्चित् सकर्तृकं किञ्चित् नेत्यस्तु । एवं च लोके कृतत्वेन घटादिव्यवहारः, अकृतत्वेनांकुरादिव्यवहारश्चोपपद्यते । नन्वेवं तार्किकोक्तानुमानस्यात्यन्तासङ्गतत्वे किमर्थं तन्मतोपन्यासः एतदेवानुमानमिति वाक्येन कृत इति चेदुच्यते । यद्यपि हैतुकस्य सा युक्तिर्निर्णयोपयोगिनी न भवति, तथाप्यौपनिषदस्य श्रुत्यर्थपरिशोधकतया निर्णयोपगिनी भवत्येव । जगतः कर्ता कश्चिदस्ति वा न वे'ति सन्दिहानं प्रति यत्र यत्र घटादिषु कार्यत्वमस्ति, तत्र सर्वत्र सकर्तृकत्वं दृष्टमिति कर्तृकारकस्य सम्प्रदानकारकवत् स्पष्टव्यभिचारानिर्णयाभावात् उक्तशङ्काशूके सत्यपि कार्यत्वं भूयोगृहीतसहचारतया कर्तुरस्तित्वकोटिमुत्कटामापादयति । तावन्मात्रेण सम्भावितमतिर्बोध्यः श्रुत्या सुखेन बोधयितुं शक्य इति । तदेकत्वतत्सर्वज्ञत्वाद्यंशे तु उपन्यस्तानेकयुक्तिविरोधात् सम्भावनापि न भवति । तथापि सर्वज्ञत्वैकत्वादिसंशये दुर्बलाया अपि एकत्वसर्वज्ञत्वकोटेर्यत्किञ्चित्तार्किकोपन्यस्तयुक्त्याभाससन्दृब्धायास्तावन्मात्रेण

श्रुतिसाहाय्यमाचरन्त्याः श्रुत्यनुवादात् दृढता भवति । सोऽयं वनसिंहन्यायो हृद-नक्रन्यायश्च । हृदनक्रयोः सिंहवनयोश्च परस्परं वियुक्तयोर्धीवरशबराभ्यां प्रधर्षणीयता भवति । संयुक्तयोस्तु परस्परं साहाय्यमाचरतोर्दुर्धर्षता भवति, तद्वद्युक्त्यागमयोरपि द्रष्टव्यमिति तात्पर्यार्थः । उक्तमर्थमाक्षेपसमाधानाभ्यामुपपादयति—**नन्विहापीति** । यथा हि चोदनासूत्रं 'यश्चोदनाप्रमाणकस्स धर्मः' 'चोदनाप्रमाणगम्यो धर्म' इति वचनव्यक्तिद्वयेन लक्षणप्रमाणोभयपरम् । एवं जन्मादिसूत्रमपि यज्जगज्जन्मादिकारणं,तत् ब्रह्मेति यज्जगज्जन्मादिकारणं, तत् ब्रह्मास्तीति वचनव्यक्तिद्वयेन लक्षणप्रमाणोभयपरम् । ततश्चानुमानमेव कार्यत्वलिङ्गकं तेन सूत्र्यताम् । ततश्च कथं तास्मन्नस्वरससूचनमिति भावः । शास्त्रयोनित्वाधिकरणपर्यालोचनया प्रमाणतया श्रुतिरेवसूत्रितेति परिहरति—**न वेदान्तेति** । न चेहापि प्रमाणतया शास्त्रे उदाहृते शास्त्रयोनित्वाधिकरणं व्यर्थं स्यादिति वाच्यम् । विरुद्धत्वाशङ्कानिराकरणार्थत्वादस्य । **वेदान्तवाक्यानीति** । उत्तरसूत्रगतशास्त्रशब्दस्वारस्यादित्यर्थः । उत्तरसूत्रस्य वा शास्त्रे किमर्थं निबन्ध इत्याशङ्क्याह—**वाक्यार्थेति** । **अध्यवसानेति** । विचारितवेदान्तवाक्यजन्यशाब्दबोधरूपाध्यवसानेत्यर्थः । ब्रह्मावगतिः अविद्यानिवर्तको वृत्तिविशेषरूपः साक्षात्कार इत्यर्थः । **नानुमानादीति** । 'नावेदविन्मनुते तं बृहन्त'मितिश्रुतेः अलौकिके तस्मिन् अनुमानायोगाच्चेति भावः । एवं तर्हि सर्वात्मना अनुमानानुपयोगस्स्यादित्याशङ्क्य प्रमेयासम्भावनानिवृत्तौ तदुपयोग इत्याह—**सत्सु तु वेदान्तवाक्येष्विति** । अनुमानस्य साक्षात्कारोपयोगे प्रमाणमाह—**श्रोतव्यो मन्तव्य इति** । तस्करैर्गन्धारदेशेभ्यः पिहितनेत्रं पुरुषमानीय वने अतिसृष्टं स्ववृत्तान्तकथनपूर्वकं वने क्रोशन्तमुपलक्ष्य नेत्रपिधानदूरीकरणपूर्वकमस्यां दिशि गन्धारा इति साधुना कृतोपदेशं तदुपदिष्टदिशं पुरस्कृत्य गच्छन्तं प्रकृत्याम्नातं 'पण्डितो मेधावी'ति वाक्यं यथा प्रकृतः पुरुषः उपदेशस्य सम्यग्गृहीतत्वात् पण्डितः तत्रोहापोहसमर्थत्वान्मेधावी गन्धारदेशान् प्राप्नोति, एवमेवेहाचार्यवान् पुरुषो लब्धाचार्योपदेशः, तदुक्तार्थपरिष्कारकुशलश्च यो भवति, स एवात्मतत्त्वं वेदेति प्रतिपादयत् पूर्वोक्तस्य मेधावित्वस्यैवंशब्देन परामर्शात् आत्मतत्त्वापरोक्ष्ये युक्तिमभ्यनुजानाति । अत एव च सूत्रकृता प्रत्यक्षादिविषयविवेचिका युक्तयो द्वितीयाध्याये निबद्धाः । ननु, यथा जैमिनिना प्रत्यक्षादिप्रमाणविषयस्यानृतत्वेऽपि न लौकिकव्यवहारविरोध इति निर्णयाद्युपयोगिनो न्यायास्स्वशास्त्रे उपेक्षिताः, एवं बादरायणेनापि कुतो नोपेक्षिता इत्याशङ्क्याह—**न धर्मजिज्ञासायामिति** । **प्रमाणमिति** । उपन्यसनीयमिति शेषः । ननु,

धर्मब्रह्मजिज्ञासयोरेतादृशवैषम्ये किं नियामकमित्याशङ्क्याह—**अनुभवावसानत्वादिति** । धर्मजिज्ञासा हि स्वर्गादिरूपपुरुषार्थसिद्ध्यर्थं स्वप्रमेयानुष्ठानावसाना । ब्रह्मजिज्ञासा तु मोक्षरूपपुरुषार्थावसानाय स्वप्रमेयस्य ब्रह्मणोऽप्रतिबद्धसाक्षात्कारपर्यवसाना । तत्र च प्रत्यक्षादिविषयविवेचनरूपमननाभावे आचार्योपदेशपूर्वकमुपासनया तत्त्वसाक्षात्कारेऽपि प्रत्यक्षादिविरोधानुसन्धानक्षुभितचित्तस्यायं साक्षात्कारो विधुरपरिभावितकामिनीसाक्षात्कारवत् न तत्त्वनिष्ठः । प्रत्यक्षविरुद्धेऽर्थे श्रुतितात्पर्यायोगेन मूलप्रमाणविकलत्वादिति शङ्काकलङ्कसम्भवान्मननापेक्षा । तथा च श्रुतिः 'तत्त्वेव भयं विदुषो मन्वानस्येति । अत आवश्यकमस्मिन् शास्त्रे युक्तिनिबन्धनम् । ननु, यथा विरुद्धयोस्समबलयोश्शास्त्रयोर्विकल्पमाश्रित्य विरोधः परिह्रियते, तद्वत् प्रकृतेऽपि सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्विकल्पसम्भवात् । प्रत्यक्षादिप्रमितसप्रपञ्चत्वस्य सत्यत्वेऽपि कादाचित्किं निष्प्रपञ्चतामादाय आत्मनि निष्प्रपञ्चत्वसाक्षात्कारोऽपि प्रमाणमस्त्वित्याशङ्क्याह—**भूतेति** । भूतं पुरुषेच्छानधीनम् । यद्धि पुरुषेच्छाधीनं, तद्विकल्प्यते । सप्रपञ्चत्वनिष्प्रपञ्चत्वे तु न तथेति भावः । सङ्गृहीतं हेतुद्वयं विवृणोति—**कर्तव्ये हीत्यादिना भूतवस्तुविषयत्वादित्यन्तेन** । पुरुषाधीनात्मलाभत्वाच्चेत्येतद्विवृणोति—**पुरुषेणेति** । लौकिकमुदाहरति—**यथाश्वेनेति** । **अन्यथा वेति** । उन्मत्तसादृश्येनेत्यर्थः । वैदिकमन्यथाकरणमुदाहरति—**अनुदित इति** । ननु, वैदिकस्यापि कर्मणः पुरुषेच्छाधीनत्वे विधिप्रतिषेधौ व्यर्थौ स्यातामित्याशङ्क्याह—**विधिप्रतिषेधाश्चेति** । पुरुषेच्छासिद्ध्यर्थमेव इष्टसाधनताबोधी विधिरपेक्षितः करणाय । पुरुषेच्छाप्रतिबन्धाय अनिष्टसाधनताबोधी निषेधोऽकरणायापेक्षितः । अतो न तयोर्वैयर्थ्यमिति भावः । ननु, विधिप्रतिषेधयोरेकस्मिन्नेव षोडशिग्रहादौ कथं निवेशस्स्यात् । विरुद्धत्वादित्याशङ्क्याह—**विकल्पेति** । यथा सामान्यविशेषशास्त्रयोर्विरोधपरिहारायोत्सर्गापवादरूपः प्रकार आश्रीयते, तद्वद्विरुद्धयोस्समानकालयोरतिरात्रे षोडशिग्रहविधिनिषेधयोर्विरोधपरिहाराय विकल्प आश्रीयत इत्यर्थः । एवं कर्तव्ये विकल्पमाश्रित्य विरोधपरिहारमुक्त्वा सिद्धे वस्तुनि न विकल्पसम्भव इत्याह—**न त्विति** । एकः प्रकारविकल्पः । अपरो वस्तुस्वरूपविकल्पः । ननु, स्थाणुर्वा पुरुषो वेति सिद्धे वस्तुन्यपि विकल्प उपलभ्यते । नेत्याह—**विकल्पनास्त्विति** । अयं हि कोट्युपस्थित्यादिकारणवशाद्यादृशं वस्तुस्वरूपं, तद्विपरीतरूपावगाहिसंशय एव । न तु विकल्पः । तस्य निश्चयरूपत्वात् । अत एव 'व्रीहिभिर्यवैर्वा यष्टव्यमि'ति सन्दिहानं प्रति व्रीहिभिर्वा यजेत, यवैर्वा यजेते'तिवाक्यं विकल्पजनक-

मपि निश्चायकं भवति। विकल्पस्य प्रमारूपत्वेन पुरुषबुद्धिमात्रमुपयुक्तम्। किं तु यादृशं वस्तुस्वरूपं, तादृशावगाहित्वमपि। ततश्च कर्तव्ये वस्तुनि विरुद्धकोटिद्वयावगाहिनामपि ज्ञानानां वस्तुतत्त्वानुसारित्वात् प्रामाण्यमुपपद्यते। न सिद्धे वस्तुनि। तादृशज्ञानस्य तत्त्वानुसारित्वाभावादीत्यर्थः। प्रकृतमुपसंहरति—**तत्रैवमिति**। वस्तुतन्त्रमेव सत् प्रमाणमित्यर्थः। अतोऽप्रतिबन्धसाक्षात्कारोपयोगितया युक्तिसूत्रणमावश्यकमिति भावः। ननु, यत्सिद्धार्थप्रतिपादकं, तत् प्रमाणान्तरमूलकं वाक्यं भवति। यथा नद्यास्तीरे पञ्च फलानि सन्तीतिवाक्यम्। ततश्च वेदान्तानामपि सिद्धार्थबोधकत्वे प्रमाणान्तरमूलता प्रसज्येतेति शङ्कते—**नन्विति**। न हि भूतवस्तुविषयत्वं प्रमाणान्तरमूलतायां वाक्यस्य प्रयोजकम्। तथानियमे प्रमाणाभावात्। अपि तु अर्थं प्रमाणान्तरेणोपलभ्य तदनुसारेण रचितत्वम्। ब्रह्मणश्च प्रमाणान्तरायोग्यतया नार्थमुपलभ्य रचितत्वं ब्रह्मप्रतिपादकानां वेदान्तानां वक्तुं शक्यत इति परिहरति—**नेति**। संगृहीतं हेतुं विवृण्वन् प्रत्यक्षाविषयत्वमाह—**स्वभावत इति**। रूपादिहीनत्वात् 'पराञ्चि खानि व्यतृणत् स्वयम्भूरि'त्यादिश्रुतेश्च न ब्रह्मण इन्द्रियविषयत्वमिति भावः। ततश्च 'यत् कार्यं, तत सर्वज्ञत्वादिगुणविशिष्टकर्तृकमि'ति व्याप्तेरग्रहात 'कार्यं सकर्तृ'कमिति व्याप्तिग्रहेण नाभिलषितवस्तुसिद्धिरित्याह—**सति हीति**। एवं लौकिकशब्दागोचरत्वमपि यथायथं द्रष्टव्यमित्यभिप्रेत्योपसंहरति—**तस्मादिति**। विजिज्ञासस्वेति मध्यमपुरुषापेक्षितसम्बोध्यचेतनप्रदर्शनार्थं सोपक्रमं वाक्यमुदाहरति—**भृगुरिति**। अधीहि अध्यापयेत्यर्थः। ननु, नानेन वाक्येनालौकिको वस्तुविशेषो ब्रह्मशब्दार्थ इति निश्चयस्सम्भवति। 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति वाक्येनानन्दशब्देन प्रसिद्धानन्दानुवादेन पूर्वोक्तजगत्कारणतायाः पर्यवसानकरणात्। ततश्च, प्रसिद्धस्य लौकिकानन्दस्यादृष्टादिवच्छास्त्रप्रामाण्यात् कारणत्वं प्राप्नोतीत्याशंक्याह—**तस्येति**। नानेन वाक्येन लौकिकानन्दमुद्दिश्य जगत्कारणता विधीयते। तथा सति शब्दासन्निहिततया लौकिकानन्दस्य तदनुवादे क्लेशस्स्यात्, तन्माभूदिति 'यतोवेत्यादिश्रुतिप्रसिद्धं जगत्कारणमुद्दिश्य तस्यानन्दस्वरूपता बोध्यते। तत्र च सत्यादिवाक्यैकवाक्यतया यज्जगज्जन्मादिकारणं सर्वज्ञत्वादिगुणगणोपबृंहितं, तत् सत्यादिरूपं त्रिविधपरिच्छेदशून्यमिति वचनव्यक्त्या स्वाभिमतवस्तुस्वरूपसिद्धिरित्यभिप्रेत्याह—**अन्यानपीति** ॥ २ ॥

॥ इति जन्माद्यधिकरणम् ॥

# शास्त्रयोनित्वात् ।३।

'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदश्श्लोकास्सूत्राण्यनुव्याख्यानानि व्याख्यानानीति वाक्यं विषयः । तत् किं वेदे स्वतन्त्रमीश्वरं कर्तारं प्रतिपादयति, उत नेति । तत्र पूर्वः पक्षः । न प्रतिपादयतीति । तथासति 'वाचा विरूपनित्यये'ति वचनावगतनित्यत्वविरोधापत्तेः । ननु, चोभयोश्श्रुतित्वाविशेषे नित्यत्वप्रतिपादकवचनानुरोधेनैव निश्वसितश्रुतेस्स्वार्थप्रतिपादनाक्षमत्वमिति कथं निश्चीयत इति चेत्, उच्यते । निश्वसितश्रुतिर्हि यथाश्रुता गृह्यमाणा यथा व्यासादिर्भारतादावादिकर्ता, तथा परमेश्वरोऽपि वेदे आदिकर्तेति प्रतिपादयतीति वक्तव्यम् । ततश्च भारतादिवद्वेदस्यापि पौरुषेयत्वं प्राप्नोति । ततश्च मूलभूतपौरुषेयज्ञानप्रामाण्याप्रामाण्यसंशये वेदस्यापि तथा सन्दिग्धता स्यात् । न च तत्कर्तुरीश्वरस्य सर्वज्ञतया निर्णीतत्वात् तस्मिल्लौकिकपुरुषवद्भ्रमादिपुरुषदोषाणां न शङ्कास्पदत्वमिति वाच्यम् । सर्वज्ञतया ईश्वरनिर्णयो ह्यनुमाना न्न सम्भवतीत्युक्तम् । वेदादेव तन्निर्णये च प्राप्तमन्योन्याश्रयत्वं, 'वेदप्रामाण्यनिर्णये सर्वज्ञत्वादिनिर्णयः, तन्निर्णये च भ्रमादिशङ्कानिरासपूर्वकं वेदप्रामाण्यनिर्णय' इति । अतः कृत्स्नवेदाप्रामाण्यापादकं तद्वचनम् । नित्यत्ववचनं तु वेदापौरुषेयतां न विरुणद्धीति तदादर एवोचितः । न चापौरुषेयत्वेऽपि कथं प्रामाण्यनिर्वाहः । इदमेव ह्यपौरुषेयत्वं, यत् प्रमाणान्तरेणार्थमुपलभ्य तदनुसारेण रचितत्वाभावः । न चैतावता प्रामाण्यं सम्भवति । तथासति काकतालीयसम्पन्नस्यालौकिकार्थगोचरस्य प्रमाणान्तरबाधरहितस्यार्थज्ञानं विना विरचितस्य 'नालिकेरसलिलपानेन स्वर्गो भवती'त्यादिवाक्यस्यापि वेदतुल्यतया प्रामाण्यं स्यादिति वाच्यम् । अस्मिन् हि वाक्ये पुरुषविशेषविनिर्मितत्वं प्रत्यक्षेण गृह्यते । तस्य च वाक्यस्यार्थज्ञानं विना रचितत्वात् भ्रमवञ्चनादिमूलत्वासम्भवेऽपि प्रमादमूलत्वं सम्भवत्येव । न ह्यप्रमत्तस्तथा वाक्यं रचयति । अतस्स्वतन्त्रकर्तृकत्वेनानुसन्धीयमानेषु वाक्येषु प्रमामूलकत्वानुसन्धानं विना न प्रामाण्यनिर्णयः । वेदस्य तु तादृशपुरुषजन्यत्वे प्रमाणाभावात् न कर्तृगतदोषमूलत्वाशङ्का । नापि लौकिकबाधोपलब्धिरित्याकांक्षादिमत्तया योग्यवाक्यत्वेन ज्ञानजनकस्य उत्सर्गतः प्राप्तं प्रामाण्यमनपोदितमेव भवति । तस्मादपौरुषेयतया वेदप्रामाण्यनिर्वाहार्थं सम्प्रदायप्रवर्तकत्वाभिप्रायं निश्वसितवाक्यं व्याख्येयमिति । सिद्धान्तस्तु सत्यं वेदस्यापौरुषेयत्वेन प्रामाण्यम् । न तु तद्विरोधिनिश्वसितवाक्यम् । तेन हि

वाक्येन कश्चिदतिनिपुण उपाध्यायस्सुप्त्वोत्थितः अनायासेन वेदान् माणवकेभ्यः पूर्वं यथाध्यापितवान्, तथैवाध्यापयति पुनरपि । एवमीश्वरोऽपीति प्रतिपाद्यते । परं तु लौकिकाध्यापकस्य वेदप्राप्तिरुपाध्यायान्तराधीना । ईश्वरस्तु पूर्वकल्पेऽपि स्वयमेव उपाध्यायान्तरमनपेक्ष्य यथावस्थितान् वेदान् मन्वादिभ्योऽध्यापयामास । ततः प्रलये स्वस्मिन्नेव संस्कारावशेषान् वेदान् सृष्ट्यारम्भे यथावस्थितानेव स्मृत्वा मन्वादिभ्योऽध्यापयामासेति लौकिकोपाध्यायवदेव सम्प्रदायप्रवर्तकत्वमेवास्थीयते । न चैतावन्मात्रेण भारतादिवत् पुरुषबुद्धिप्रभवत्वं शङ्कितुं शक्यते । भारतादिकं स्वयं प्रमाणान्तरेणार्थमुपलभ्य हि तदनुसारेणापूर्वां वर्णावलीं मनसालोच्य रचितमिति भारतादिवचनैरेवावगम्यते । वेदे तु यद्यपि निश्वसितश्रुत्या 'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् । आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥' इति वचनेन सृष्ट्यारम्भे वेदकर्तृत्वावगमात् उपाध्यायान्तरानपेक्षत्वम्, आदिकवित्वेन च निरूपणात् विवक्षापूर्वकं कर्तृत्वमवगम्यते, तथापि पूर्वस्मिन् कल्पे यादृशी वर्णावली, यच्च तात्पर्यं, तदनुसन्धायास्मिन्नपि कल्पे तथैव करोतीति उपगम्यते । न चैतावता पूर्वकल्पीयक्रमादिसापेक्षतामात्रेण तस्य स्वातन्त्र्यं विहन्यते । न हि यादृशः कटः पूर्वं रचितः, तमाकारमनुसन्धाय क्रयादिव्यवहारार्थं तादृशमेव पुनः कटं सृजतः तत्र स्वातन्त्र्यविघातो भवति । एवं च सति 'धाता यथा पूर्वमकल्पयदि'त्यादिवचनमनुसृतं भवति । न चैतादृशेन ईश्वरकृतत्वेन 'वाचा विरूपनित्यये'ति वचनं विरुध्यते । तद्धि वचनं नाहत्यैव वेदस्य नित्यत्वं प्रतिपादयति । वर्णानां नित्यत्वेऽपि न वर्णा एव वेदः । अपि तु क्रमविशेषेण स्वरविशेषेण च विशिष्टाः । नित्यानां विभूनां च वर्णानां न देशतः कालतो वा क्रमस्सम्भवति । स्वरोऽपि न स्थानविशेषनिष्पत्तिप्रयुक्तः नित्येषु सम्भवति । अपि तु तदभिव्यञ्जकध्वन्युपाधिक एव स्वरादिस्स्वीकर्तव्यः । ततश्च विशेषणीभूतक्रमादस्तदुपाधेर्ध्वनेश्चानित्यतया कथं वेदस्स्वरूपेण नित्यस्स्यात् । तस्मात् प्रवाहनित्यताभिप्रायमेव तद्वचनमुपेयम् । तच्चास्माकमपि सम्मतमेव । न च वेदस्य परमेश्वरकृतत्वाभ्युपगमे सिद्धान्ते अपौरुषेयत्वाभ्युपगमो विरुध्यत इति वाच्यम् । तार्किकैर्हि यादृशं पौरुषेयत्वमभ्युपेयते, प्रमाया गुणजन्यत्वाभ्युपगमात् । ईश्वरप्रमाधीनं तन्मूलस्य वेदस्य प्रामाण्यम् । यथा कालिदासादिवाक्यार्थप्रमाधीनं तत्कृतस्य वाक्यस्य प्रामाण्यं, नैवमुपेयते । तदभिप्राया सिद्धान्ते अपौरुषेयत्वोक्तिस्तत्र तत्र । ततश्च कर्तृज्ञानप्रामाण्यसंशये वेदेऽपि प्रामाण्यसंशयः । न चेश्वरस्य परमाप्तत्वं वेदप्रामाण्यनिर्णयं विनाधिगन्तुं शक्यमित्यादिपूर्वपक्षदु-

पणानाम् अनवसरः । न चेदमपौरुषेयत्वं मीमांसकमर्यादया उपेयते । ते हि सृष्टिप्रलयादिकमनङ्गीकृत्याध्यापकाध्येतृपरम्परामविच्छिन्नां स्वीकृत्य स्वतन्त्रमीश्वरं नेच्छन्ति । येन निश्वासितश्रुतिर्विरुध्येत । तस्मादादिकर्तुरीश्वरस्याभ्युपगमात्तस्यापि पूर्वपूर्वकल्पानुसारेणैव वेदविरचनोपगमात् वेदस्य च योग्यवाक्यत्वेनैवासति बाधे प्रमाजनकत्वोपगमात् अनादितात्पर्योपगमाच्च न श्रुतिस्मृतिविरोधः, नापि सापेक्षत्वाप्रामाण्यमिति । ततश्च शास्त्रस्य वेदस्य योनित्वात् कारणत्वादिति सूत्रार्थः । अत्रेयं शङ्का भवति—निश्वसितश्रुतेर्वेदनित्यत्वश्रुतेश्चाविरोधोपपादनपूर्वकं वेदस्येश्वरकृतत्वप्रतिपादनं वियत्पाद एव सङ्गतम् । न त्वत्र । अपि च शास्त्रयोनित्वादिति हेतोस्साकांक्षता । साध्यालाभादिति । तां निराकर्तुमाह—जगत्कारणत्वेति । ततश्च पूर्वाधिकरणोपक्षिप्तसर्वज्ञत्वदृढीकरणार्थत्वात् नासङ्गतिः । सर्वज्ञमिति पदाध्याहारेण ब्रह्मपदानुषङ्गेण च सूत्रं पूरणीयं वेदकर्तृत्वात् ब्रह्म सर्वज्ञमिति । न चैवं सति पूर्वाधिकरणगुणसूत्रतापत्त्या अधिकरणान्तरता न स्यादिति शङ्क्यम् । पूर्वाधिकरणाक्षिप्तसर्वज्ञत्वे हेत्वन्तरसमर्पकतया तदुपयोगित्वेऽपि तस्यैवासिद्धस्य हेतोस्साधकतयाधिकरणान्तरत्वोपपत्तेः । निर्विशेषवस्तुविचारात्मके शास्त्रे सर्वज्ञत्वनिरूपणं क्वोपयुज्यते । पूर्वाधिकरणापेक्षितजीवव्यावृत्तिप्रतिपादने सर्वज्ञत्ववत् सर्वशक्तित्वमपि तद्व्यावृत्तावुपयुज्यते इति तदपि कुतो न निरूप्यते । निरूपितप्रायमेव हि तदपि । 'अस्य निश्वासितमेवैत'दित्यत्र वैदिकप्रपञ्चोत्पत्त्यनन्तरम् 'अयं च लोकः परश्च लोकस्सर्वाणि च भूतान्यस्यैव निश्वसितानी'ति लौकिकप्रपञ्चस्यापि निश्वसितन्यायेन सृष्टिराम्नाता । ततश्च सर्वशक्तित्वमपि सिद्धम् । तदपि शास्त्रयोनित्वसूत्रेणेन सूचितमेव । आहत्य तु नोक्तम् । वेदांशे शङ्काविशेषस्येव निराकरणीयस्य लोकांशे अभावात् । शास्त्रयोनित्वहेतुकं सर्वज्ञत्वसाधकं सूत्रप्रणीतमनुमानं प्रपञ्चयति—**महत इत्यादिना सर्वज्ञत्वमित्यन्तेन** । महत इत्यादि कारणं ब्रह्मेत्यन्तं हेतुवाक्यम् । न हीदृशस्येत्यादि सर्वज्ञादन्यतस्सम्भवोऽस्तीत्यन्तं व्यतिरेकमुखेन सर्वज्ञत्वप्रतिज्ञापरम् । यद्यद्विस्तरार्थं शास्त्रमित्यादि प्रसिद्धं लोक इत्यन्तम् उदाहरणवाक्यम् । किमु वक्तव्यमित्यादि श्रुतेरित्यन्तमुपनयः । तस्येत्यादि निगमनम् । महत इति ग्रन्थतोऽर्थतश्च महत्त्वं विवक्षितम् । निरतिशयसार्वज्ञ्योपपादनात् । ग्रन्थतो महत्त्वविवरणम्—**ऋग्वेदादेरिति** । अर्थतो महत्त्वं विवृणोति—**अनेकेति** । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदास्स्थानानि विद्यानां धर्मस्य च चतुर्दशे'ति ॥ 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष'मिति षडङ्गानि । उपबृंहणीयाश्चत्वारो वेदाः । तत्र पुराणानि सृष्ट्यादिप्रतिपाद-

कवाक्यानि परकृतिपुराकल्परूपानर्थवादांश्च प्राधान्येनोपबृम्हयन्ति । प्रसङ्गाद्द्वैतभागं कर्मभागं चोपबृम्हयन्ति । न्यायशास्त्रं तु प्रमाणप्रमेयलक्षणनिरूपणेन पदार्थान्विविच्य ज्ञापयदुपबृम्हयति । पूर्वोत्तरमीमांसे तु तात्पर्यनिर्णयद्वारोपयुक्ते । धर्मशास्त्रं तु श्रुतमनुमितं वा विधिभागम् उपबृम्हयति । शिक्षा तु स्थानकरणादिनिरूपणद्वारा स्वाध्यायोऽध्येतव्य इति विध्यर्थमुपबृम्हयति । कल्पास्तु प्रयोगनिरूपणार्थं उपयुक्ताः । व्याकरणं तु अस्मिन्नर्थे इदं पदं साध्विति पदार्थान्व्याकरोति । निरुक्तं तु तेषुतेषु पदेषु यौगिकमर्थं प्रतिपादयति । छन्दश्शास्त्रं तु वेदगतान् गायत्र्यादिशब्दान् लक्षणमुखेन विशदयति । ज्योतिषं तु 'पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेते'त्यादिनोपात्तं कालविशेषं व्यवस्थापयति । तथा च तत्तदेकदेशव्याख्यानाय बहवो महर्षयः पुराणादिनिबन्धनप्रणेतारो यत्र प्रवृत्ताः, तस्य महार्थत्वं व्यक्तमेवेति भावः । प्रदीपवदिति । अनेन स्पष्टज्ञानजनकत्वं विवक्षितम् । तथा च न सन्देहाज्ञानविपर्यासजनकतया वेदस्याप्रामाण्यमिति । नन्वाधुनिकपुरुषपाणिगतवराटकसंख्याद्यप्रतिपादकतया कथं सर्वावद्योतकत्वमित्यत आह—**सर्वज्ञकल्पस्येति** । ईषदूनस्सर्वज्ञस्सर्वज्ञकल्पः । करणे कर्तृत्वोपचारात् । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययो द्रष्टव्यः । सर्वज्ञकल्पस्य योनिरित्यनेन च शास्त्रस्य योनिः शास्त्रयोनिः, तस्य भावस्तत्त्वादिति सूत्रे विग्रहो दर्शितः । **सर्वज्ञगुणान्वितस्येति** । सर्वज्ञस्य कर्तुः सर्वविषयकज्ञानजननानुकूला कर्तृकारकशक्तिर्गुणः । वेदे तु तादृशज्ञानानुकूलकरणकारकशक्तिः । तयोश्च शक्त्योस्सर्वविषयज्ञानजननानुकूलशक्तित्वेन सादृश्यात् सर्वज्ञशक्तिरूपगुणसदृशगुणान्वितस्येत्यर्थो द्रष्टव्यः । अत्रायं प्रयोगः वेदकर्तृत्वेन निश्वसितश्रुतिप्रतिपादित ईश्वरः वेदानधीनवेदार्थाधिकार्थगोचरज्ञानवान् । उपाध्यायान्तरमनपेक्ष्य कृत्स्नवेदकर्तृत्वात् । मन्वादीनामपि वेदार्थतदधिकवर्णावलीविशेषादिरूपार्थज्ञानं वर्तते । परं तु तद्वेदाधीनम् । ईश्वरज्ञानस्य तद्वैलक्षण्यद्योतनाय वेदानधीनेत्युक्तम् । ततश्च यस्य वेदं विना वेदार्थतदधिकार्थगोचरं ज्ञानं, तस्याधुनिकपुरुषविशेषपाणिगतवराटकसङ्ख्याज्ञानमपि कैमुतिकन्यायेन सिध्यतीत्यभिप्रेत्य भाष्ये न हि सर्वज्ञादन्यतस्सम्भवोऽस्तीत्युक्तम् । ननु, वेदं विनोक्तरूपज्ञानसिद्धावपि सर्वज्ञत्वं कथं सिध्यतीति चेदुच्यते । परमेश्वरस्य वेदकर्तृत्वेन निरुक्तसाध्यपर्यवसानम् । उपायान्तराभावात् स्वशक्तिमादाय पर्यवस्यतीति वक्तव्यम् । ततश्च यस्य शक्तिर्वेदार्थतदधिकार्थज्ञानजननक्षमा, तस्य इतरविषयमपि ज्ञानमस्तीत्यत्र को विवादः । न च सर्वज्ञ इत्येव कुतस्साध्यनिर्देशो न क्रि-

सत इति वाच्यम् । वक्ष्यमाणव्याप्तेस्तत्र सामर्थ्याभावात् । आधुनिकोपाध्यायस्य वेदार्थज्ञानविधुरस्यापि वेदकर्तृत्वमस्तीति तद्व्यावृत्त्यर्थं कृत्स्नवेदकर्तृत्वम् । तदपि मन्वादिषु विद्यत इति तद्व्यावृत्त्यर्थम् उपाध्यायान्तरमनपेक्ष्येति । मन्वादीनां त्वीश्वर एव उपाध्यायः । यद्यप्युपाध्यायान्तरानपेक्षत्वेनैवाधुनिकोपाध्यायव्यावृत्तिर्लभ्यते, तथापि घुणाक्षरन्यायेन वेदसमानानुपूर्वीकं स्वत एव यदि कश्चिद्रचयेत्, तद्व्यावृत्त्यर्थं कृत्स्नेत्यपि विशेषणमावश्यकम् । अत्र सामान्यव्याप्तिमाह—यद्यद्विस्तरार्थमिति । अत्र यो विवक्षापूर्वकं यद्वाक्यं रचयति, स तदर्थतदधिकार्थज्ञानवा'निति व्याप्तिर्विवक्षिता । यथा व्याकरणादिकर्ता पाणिन्यादिरिति दृष्टान्तः । ज्ञेयैकदेशार्थमपीति व्याकरणविशेषणम् । तच्च वेदैकदेशार्थपरिष्कारोपयोगिव्याकरणकर्तुरपि पाणिनेर्लोके सर्वज्ञत्वप्रसिद्धिरस्ति । ततस्सकलवेदकर्तुरीश्वरस्य सर्वज्ञत्वे का शङ्केति द्योतनाय । व्याप्तौ च विवक्षां विना वाक्यरचयितुश्शुकादेर्न वाक्यार्थज्ञानमस्तीति व्यभिचारव्यावृत्तये विवक्षापूर्वकत्वं विशेषणम् । तच्च भाष्ये पुरुषविशेषपदेन सूचितम् । अस्याश्च सामान्यव्याप्तेः पक्षे पर्यवसाने सति वेदस्यापि विवक्षापूर्वकं रचितत्वं लभ्यते । ततश्चास्त्वीश्वरस्य कृत्स्नवेदकर्तृत्वम् । तावता वेदरचने उपयुक्तं वर्णावलीज्ञानमेवेश्वरस्य सिध्येत् । न तु तदर्थज्ञानमपीति शङ्का निरस्ता । अर्थज्ञानं विना अस्माच्छब्दादयमर्थावगमोऽस्त्विति विवक्षाया असम्भवात् । न चार्थज्ञानपूर्वकं विवक्षापूर्वकं च वेदकर्तृत्वाभ्युपगमे वेदस्य सापेक्षत्वमिति वाच्यम् । वेदस्य विवक्षापूर्वकमीश्वरः कर्तेति निश्वसितश्रुत्या 'तदेव ब्रह्म परमं कवीनामि'ति श्रुत्या चावगन्तव्यम् । न तु प्रकारान्तरेण । ततश्च योग्यवाक्यत्वेन निर्दोषत्वेन च प्रागेव प्रामाण्यमवधारणीयम् । अतोऽनेन वाक्येन स्वोपजीव्यतया प्रागेवावधृतप्रामाण्याविघातेनैव कर्ता प्रतिपादनीय इति तत्प्रतिपाद्यः परमेश्वरो निर्दोष एव सिध्यतीति तत्प्रमासापेक्षत्वेऽपि नाप्रामाण्यापादकसापेक्षत्वप्रसङ्गः । परं त्वीश्वरस्य निर्दुष्टतया परमाप्तत्वनिर्णयात्प्रागेव वेदप्रामाण्यनिर्णयस्यावश्यकतया न तदर्थमीश्वरज्ञानप्रामाण्यनिर्णयोऽपेक्षित इति वस्तुस्थितिः । ततश्च विवक्षोपयोगितया वेदार्थज्ञानमीश्वरस्य सिध्यतीति प्रकृतसाध्यसिद्धौ न कोऽपि विवादः । ननु, यदि वेदार्थज्ञानमीश्वरस्य स्वीक्रियते, तदा 'स प्रजापतिरात्मनो वपामुदक्खिदत्' 'एतं मनोऽनृतवादिनी' 'वाक्' 'शृणोत ग्रावाण' इत्यादिमन्त्रार्थवादप्रतिपाद्यात्तदर्थगोचरमपि तस्मिन् ज्ञानं प्राप्नुयात् । ततश्च कथं निर्दुष्टतयेश्वरसिद्धिः । असदर्थावगाहिज्ञानस्य दोषमूलत्वादित्याशङ्क्योक्तं—यद्यद्विस्तरार्थं शास्त्रमिति । अत्र 'प्रथने वावशब्दे' इति सूत्रेण वावुपसर्गे उपपदे अशब्दधर्मिके प्रथने गम्यमाने स्तृधातोस्तृधातोश्च घञ् भवतीति

प्राप्ति इदं ऽनेन'ऋदोरबिति'सूत्रापवादभूते घञि कृते विस्तार इति स्यात्। तन्मा भूदित्यर्थशब्दस्य वस्तुसामान्यवाचकस्य धर्मरूपवस्तुविशेषे पर्यवसानं कृत्वा विस्तररूपार्थो धर्मः यस्येति विगृह्य 'ऋदोरबि'ति सूत्रेण ऋकारान्तादुकारान्ताच्चाप्प्रत्ययो भवतीति प्रतिपादकेनाप्प्रत्ययमाश्रित्य विस्तृतमित्यर्थं विस्तरमिति स्वीकर्तव्यम् । शास्त्रपदं हितसाधनताबोधकशब्दराशिपरम् । ततश्च हितसाधनं प्ररोचयितुं शब्दप्रपञ्च एव स्तेनादिवाक्यम् । न तु तत्र स्वार्थे तात्पर्यपर्यवसानमस्तीत्यभिप्रायः । न च प्ररोचनोपयोगिन्यसदर्थालम्बने तात्पर्यपर्यवसानविधुरे ज्ञानेऽभ्युपगम्यमाने परमेश्वरस्याप्तत्वं विहन्यते, भ्रान्तत्वं वा प्राप्नोति । लोके हि औषधपानादिकं प्ररोचयितुं शिखावर्धनादिकमसदपि प्रतिपादयन्तो वृद्धाः परमाप्ता एव प्रमाणभूता एव च भवन्ति । तत् कस्य हेतोः । यथाकथञ्चित् बाल औषधं पिबत्विति तात्पर्यात् । एवं सर्वोऽपि जनः यथाधिकारं सन्मार्गे प्रवृत्तो भवत्विति असदर्थमाहरतोऽपीश्वरस्य परमाप्तत्वे प्रमाणत्वे च न काचिदनुपपत्तिः । **किमु वक्तव्यमिति** । अनेकेत्यादिविशेषणविशिष्टस्य ऋग्वेदाद्याख्यस्यास्येति श्रुतेर्यस्मात् सम्भवः, तस्य सर्वज्ञत्वादिकं किमु वक्तव्यमित्यन्वयः । 'अयं च लोकः परश्च लोक' इत्यादिवाक्यपर्यालोचनालभ्यार्थकथनं सर्वशक्तित्वं चेति । अत्र शास्त्रयोनित्वादिति हेतुसमर्थनोपयोग्यधिकरणे पूर्वपक्षे वेदस्येश्वरकृतत्वानभ्युपगमात् न कृत्स्नप्रपञ्चकारणत्वमीश्वरस्य । सिद्धान्ते तु तदङ्गीकारात् कृत्स्नप्रपञ्चकारणत्वं निर्व्यूढमिति—एवं शास्त्रकर्तेश्वर इत्यभिप्रायं सूत्रं व्याख्याय शास्त्रैकगम्यं ईश्वर इत्यभिप्रायेण सूत्रं व्याचष्टे । **अथवेति** । अत्र तं त्वौपनिषदं पुरुषं पृच्छामि' 'नावेदविन्मनुते तं बृहन्त'मित्यादिशास्त्रं विषयः । तत् किं वेदैकगम्यत्वमीश्वरस्य प्रतिपादयति, उत नेति । एवं च सति यदि वेदैकगम्यो न भवेदीश्वरः । प्रमाणान्तरगम्यत्वादिति, तदा प्रमाणान्तरगम्ये वेदस्य तात्पर्याभावात्तद्विचारो न कर्तव्य इति पूर्वपक्षे फलम् । सिद्धान्ते तु तद्वैपरीत्यम् । तत्र जगज्जन्मादिकारणं सर्वज्ञं सर्वशक्तिसमन्वितं परं ब्रह्म परमार्थगत्या त्रिविधपरिच्छेदशून्यं सत्यज्ञानानन्दात्मकं प्रत्यगभिन्नमिति प्रतिपादनार्थं शास्त्रं नापेक्षितम् । जगज्जन्मादिकारणत्वस्यानुमानेन सिद्धत्वात् तेनैव लाघवाद्यनुगृहीतेन सर्वज्ञत्वादेरपि सिद्धत्वात् भेदप्रपञ्चस्य दृश्यत्वहेतुना मिथ्यात्वसिद्धेः भेदमात्रमिथ्यात्वे च जीवब्रह्मणोरैक्यस्यापि सिद्धतया प्रत्यगभिन्नब्रह्मणश्च 'अहमस्मि सदा भामि कदाचिन्नाहमप्रियः' इति सत्यादिरूपतायाः प्रत्यक्षसिद्धतया न शास्त्रेण किञ्चित्कृत्यमिति तं त्वौपनिषदमित्यादिवाक्यं यथाकथञ्चिन्नेयमिति पूर्वः पक्षः । सर्वज्ञेश्वरसिद्धिरनुमानाद्यथा न भवति, तथा प्रागेवोक्तम् । न च दृश्यत्वहेतुमात्रेण

मूलभूतश्रुतिरूपप्रमाणाभावे भेदामिथ्यात्वं प्रत्यक्षादिप्रमाणविरोधनिरासपूर्वकं निरूपयितुं शक्यम्। अतो मूलभूतं श्रुतिप्रमाणमेव परमात्मस्वरूपनिरूपणोपयोगि। उक्तानुमानं तस्मिन्मूलभूतप्रमाणे विद्यमाने तमर्थं सम्भावयत्तत्रोपयुज्यते। एतच्च सर्वमत्रवक्तव्य, मेव नन्विहापीत्यादिभाष्येण प्रागुपपादितम्। ततश्चायं सूत्रार्थः—ब्रह्म शास्त्रप्रमाणम्। शास्त्रैकगम्यत्वादिति ॥ ३ ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥

# तत्तु समन्वयात् ।४।

'सदेव सोम्येदमग्र आसीदि'त्येवमादीनि वेदान्तवाक्यानि पूर्वाधिकरणे ब्रह्मप्रमाणतया व्यवस्थापितानि प्राधान्येन ब्रह्म प्रतिपादयन्ति, किं वा अन्यशेषतयेति प्राधान्येन प्रतिपादने फलनिरपेक्षत्वयोस्सदसद्भावाभ्यां संशये, पूर्वः पक्षः—न स्वातन्त्र्येण ब्रह्म प्रतिपादयन्ति। अपि तु अन्यशेषतया-ब्रह्मणोऽक्रियारूपस्य प्रतिपादने वेदान्तानां फलं न लभ्यत इति अमुमर्थं जैमिनीयसूत्रोदाहरणपूर्वकं दर्शयति—**कथं पुनरिति**। आम्नायस्येति। 'आम्नायस्य क्रियार्थत्वादि'तिसूत्रे यो भागस्साक्षात्क्रियां न प्रतिपादयति मन्त्रार्थवादादिरूपः, तमुदाहृत्य विचारितं—किमयं स्वार्थपरः, उत नेति। तत्र पूर्वः पक्षः—स्वार्थपर एवेति। न च तत्प्रतिपादने प्रयोजनं न लभ्यते। क्वचिच्च 'अग्निर्हिमस्य भेषज'मित्यादौ प्रमाणान्तरसिद्धार्थता। 'स्तेनं मनोऽनृतवादिनी वागि'त्यादौ च प्रमाणान्तरविरुद्धार्थता प्रतीयते। तत् कथं तत्परत्वमिति वाच्यम्। न ह्येतावता प्रतीयमानोऽर्थः परित्यक्तुं शक्यते, निष्फलत्वादिकं प्राप्नोतीति चेत्, तदप्यस्तु। न हि यथा निष्फलत्वादिकं न प्रसज्यते, तथा कृत्स्नोऽपि वेदो व्याख्येय इत्यत्र निर्बन्धे किञ्चिन्नियामकमस्ति। तस्मादर्थवादादयो यथाश्रुतार्था एवेति पूर्वपक्षप्रतिपादकमाम्नायस्येतिसूत्रम्। तथा चायमर्थः—वेदस्य क्रियाप्रयोजनकत्वात् तस्य च प्रयोजनस्य यजेते'ति विधिवाक्येष्वेव सम्भवात् क्रियारूपप्रयोजनरहितानां आनर्थक्यम्। प्रयोजनान्तरस्यासम्भवात्। अतोऽर्थवादादिकमनित्यं लौकिकवाक्यसदृशमिति। सिद्धान्तस्तु भवेदेतदेवम्। यदि प्रयोजनवदबाधितानधिगतार्थत्वमेव वेदस्येत्यत्र किञ्चिन्नियामकं न भवेत्, अस्ति तु नियामकम्। स्वाध्यायस्य ह्युत्सर्गतः प्राप्तप्रामाण्यसंरक्षणे सम्भवति न तत्परित्यागो न्याय्यः। 'अध्येतव्य' इत्यध्ययनविधिश्च प्रयोजनवदर्थपरतां स्वाध्यायस्य बोधयति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिप्रतिपादकयोर्विधिप्रतिषे-

घयोरिष्टप्राप्तिरनिष्टनिवृत्तिश्चार्थान्तरलक्षकतां विनैव लभ्यते । अर्थवादादीनां विधिनिषेधोपयुक्तार्थलक्षकतां विना न लभ्यत इति तत्समभिव्याहृतानां अर्थवादादीनां तदुपयुक्तस्तुत्यादिलक्षकतामुपेत्य प्रयोजनवत्त्वं प्रामाण्यं च समर्थनीयमिति । तथा च सूत्रं 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि'ति विधिग्रहणं निषेधस्याप्युपलक्षणम् । स्तुतिपदं निन्दाया अप्युपलक्षणम् । ततश्च विधिनिषेधयोः तावत्प्ररोचनाद्वेषयोरभावे प्रवृत्तिनिवृत्तिसम्पादकत्वासम्भवात् । प्ररोचनाद्वेषापेक्षयोरर्थवादानां च प्रयोजनसाकाङ्क्षाणां स्तुतिनिन्दालक्षणप्ररोचनाद्वेषसम्पादकत्वसम्भवात् अवगतैकवाक्यतानिर्वाहार्थं यथायथं स्तुतिनिन्दालक्षणां प्राप्ता अर्थवादाः प्रमाणं स्युरिति सूत्रार्थः । एवं मन्त्राणामपि अध्ययनविधिपरिगृहीतानां प्रयोजनमपेक्षमाणानां प्रकरणादिना कर्मसु विनियोगेन कर्मोपकारकत्वेऽवगते किं दृष्टविधया कर्मोपकारकत्वं, उतादृष्टविधयेति सन्दिह्य येनाप्यनुष्ठेयार्थप्रकाशनं दृष्टप्रयोजनमुच्यते, तेनाप्युपायान्तरेण उपदेष्ट्रादिवचनेन सम्भवदप्यनुष्ठेयार्थप्रकाशनं मन्त्रनियमबलाद्व्यावर्त्यनियमांशे अदृष्टं स्वीकर्तव्यम् । ततश्चावश्यकत्वाददृष्टकल्पनस्य किमनुष्ठेयार्थप्रकाशकत्वकल्पनाक्लेशेन । ततश्च प्रयाजादिवन्मन्त्रोच्चारणमप्यदृष्टार्थमिति पूर्वपक्षं कृत्वा भवेदेवम् । यद्यनुष्ठेयार्थप्रकाशनं कल्प्यं स्यात् । न तु तथा । शक्त्या लक्षणया वा लोकत एव तस्य क्लृप्तत्वात् । एवं च यस्मिन्नंशे दृष्टं न सम्भवति, तत्रैव नियमांशे अदृष्टं कल्पनीयम् । न तु सर्वत्र । तथा च मन्त्रविनियोगविधेर्लाघवं भवति । पाक्षिकाप्राप्त्यंशपरिपूरणमात्रफलकत्वात् । अदृष्टार्थत्वे त्वत्यन्ताप्राप्तप्रापकतया गौरवं स्यात् । तस्मादिषेत्वेत्यादीनां छिनद्मीति पदाध्याहारं कृत्वा अनुष्ठेयार्थप्रकाशकतया कर्मोपकारकत्वमास्थेयमिति सिद्धान्तितम् । ततश्च सिद्धवस्तुप्रतिपादकवेदभागस्य क्रियापदशेषतया प्रयोजनवत्त्वं समर्थनीयम् । अपि च सिद्धस्य वस्तुनः प्रमाणान्तरयोग्यतया सापेक्षत्वं प्रसज्यते । क्रियायाश्च धर्मत्वेन प्रमाणान्तरायोग्यत्वात् न तत्परत्वे सापेक्षत्वं प्रसज्यत इति । वेदान्तानां च स्वार्थपरत्वे क्रियापरत्वासम्भवात् क्रियापरत्वसिध्यर्थं क्रिया शेषभूतदेवतादिस्तावकत्वं स्वीकर्तव्यम् । यदि तु कर्मप्रतिपादकविधिभ्यो दूरपठिततया तत्समभिव्याहाराभावात् न कर्मस्तावकत्वमित्युच्येत, तदा वेदान्तपठितोपासनाविध्येकवाक्यतामुपेत्य उपास्यसमर्पकतास्तु । ततश्चान्यपरेभ्यो वेदान्तेभ्यो ब्रह्मसिद्धिर्देवताधिकरणन्यायेन वक्तव्या । न च प्रमाणान्तरविरोधे तन्न्यायप्रवृत्तिरिति तत्त्वमस्यादिवाक्यानां प्रमाणान्तरविरुद्धार्थतया वाचं धेनुमुपासीतेतिवदारोपितजीवब्रह्माभेदमादायैवोपासनाविधिः पर्यवसितो भविष्यतीति न प्रत्यक्षादिबाधकत्वमपि वेदा-

न्तानां भविष्यति । उपासनादिक्रियान्तरविधानार्थत्वं वेत्यन्तं सङ्ग्रहवाक्यम् । नहीत्यारभ्य तद्विवरणम् । परिनिष्ठितं क्रियानन्वितम् । **सोऽरोदीदित्यादीनामिति ।** सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तद्रजतं हिरण्यमभवत्तस्माद्रजतं हिरण्यमदक्षिण्यमश्रुजं हि यो बर्हिषि ददाति पुरास्य संवत्सरात् गृहे रुदन्तीति वाक्यमश्रुप्रभवरजतस्य बर्हिषि निधाने संवत्सरात्पुरा गृहे रोदनं भवतीति प्रतिपादनद्वारा रजतनिन्दायां पर्यवस्यति । तच्च बर्हिषि रजतं न देयमिति निषेधशेषभूतम् । आदिपदेन'वायुर्वै क्षेपिष्ठा देवते'त्यादिवाक्यं संगृह्यते । **स्तावकत्वेनेति ।** निन्दकत्वेनेत्यपि द्रष्टव्यम् । ननु यदि विधिपरत्वमेव वाक्यस्य वक्तव्यमिति निर्बन्धः, तदा वेदान्तानां यथाश्रुतार्थत्वेऽपि न काचिदनुपपत्तिः । सिद्धेऽपि ब्रह्मण्युत्पत्त्यादिविधिसम्भवात् । अज्ञातज्ञापनं ह्युत्पत्तिविधिरित्युच्यत इत्याशङ्क्याह—**न चेति ।** **क्रियाविषयत्वादिति ।** यथा हि प्रयोजनपर्यवसानं भविष्यति । तथा वाक्यार्थो वर्णनीयः । न चाज्ञातस्य वस्तुनो ज्ञापने तस्य ज्ञानस्य प्रवृत्तिपर्यवसानाभावे प्रयोजनं लभ्यते । अतो ज्ञातज्ञापनमपि क्रियाविषयमेव स्वीकर्तव्यम् । यथा अग्निहोत्रं जुहुयादि'ति । तेन हि वाक्येनाग्निहोत्रनामिकायां होमरूपायां क्रियायां बोधितायां तस्य होमस्य 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति वाक्येन स्वर्गसाधनतायां बोधितायां तज्जन्यस्य स्वर्गस्य तत्कर्तृस्वर्गकामपुरुषसम्बन्धे बोधिते 'सायं जुहोति प्रातर्जुहोती'तिवाक्याभ्यामनुष्ठानविशेषे बोधिते तत्र पुरुषः प्रवर्तते । नैवं सिद्धब्रह्मबोधमात्रेण प्रवृत्तिशेषतां विना पुरुषः प्रवर्तते । ततश्च चतूरूपस्य विधेर्यस्मिन् विषये अवकाशस्तत्रैव पुरुषः प्रवर्तते । स च क्रियायामेव । तत्र यद्यप्यग्निहोत्रं जुहुयादित्येव । यथा अग्निहोत्रहोमेन स्वस्येष्टं भवति, तथा होमे व्याप्रियेतेति एकेनैव वाक्येन उत्पत्तिविनियोगाधिकारप्रयोगाश्चत्वारोऽपि प्रकारा लभ्यन्ते । उत्पत्तिरज्ञातज्ञप्तिः । फलसाधनताबोधनं विनियोगः । फलस्य कर्तृसम्बन्धबोधोऽधिकारः । तच्चात्मनेपदेन क्वचित्, सर्वत्र च विधिबलात् । न हि तज्जन्यफलस्य स्वेन सम्बन्धाभावे तत्पुरुषः करोति । अतो विधिना स्वस्य प्रवर्तकता निर्वाहार्थं तदाक्षिप्यते । अनुष्ठेयताबोधनं प्रयोगः । तथापि तत्तद्विशेषबोधनार्थं वाक्यान्तराणामावश्यकतया तेभ्य एव विनियोगादिलाभे'अग्निहोत्रं जुहुयादि'ति वाक्यं उत्पत्तिविधिरित्युच्यते । प्रयोगाद्यंशे वाक्यान्तरप्राप्तार्थानुवादकत्वात्तत्र तात्पर्याभावेन न विनियोगादिविधित्वेन व्यवह्रियते । अतोऽज्ञातज्ञापनरूपस्यापि विधेः फलवत्प्रवृत्तिपर्यवसायिनः क्रियाविषयत्वमेव । न सिद्धवस्तुविषयत्वमिति भावः । तच्छन्दस्सूत्रे प्र-

कृतब्रह्मपरामर्शार्थः । अधिकारादेव ब्रह्मलाभेऽपि जन्मादिसूत्रे यादृशं ब्रह्मनिरूपितं, तादृशे ब्रह्मणि प्रमाणोपन्यासपरः उत्तरसन्दर्भ इति प्रतिपादनार्थं पुनःपरामर्श इति द्योतयन् शास्त्रयोनित्वादिति पदं द्वितीयव्याख्यानानुसारेण प्रथमान्ततया विपरिणम्य तदनुषङ्गेण सूत्रं व्याचष्टे । **तुशब्द इत्यादिना** । पूर्वपक्षिणा क्रियाशेषतया ब्रह्म प्रतिपाद्यत इत्युक्तम् । तद्व्यावृत्त्यर्थस्तुशब्दः । तथा च यज्जगज्जन्मादिकारणं वस्तुतस्त्रिविधपरिच्छेदशून्यं सत्यादिरूपं ब्रह्म, तत् क्रियाशेषतां विनैव शास्त्रयोनिर्वेदान्तादवगम्यते इति प्रतिज्ञा लभ्यते । पूर्वपक्षोक्तयुक्तिं मनसि निधाय शङ्कते—**कथमिति** । **समन्वयादिति** । सौत्रहेतुगतसम्पदलभ्यार्थकथनपूर्वकमुक्तशङ्कां परिहरति—**समन्वयादिति** । संशब्दस्तात्पर्यार्थकः । तात्पर्यं द्विविधम् । अस्माच्छब्दादेतदर्थबोधो भवत्विति वक्तृविवक्षारूपं गुणप्रधानपदार्थसाधारणम् । अपरं तु तत्प्रतीत्युद्देश्यकत्वरूपं प्रधानपदार्थसाधारणम् । यथा कृत्स्नस्य दर्शपूर्णमासप्रकरणस्य 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यप्रतिपाद्यायां भावनायाम् । तेन हि वाक्येन दर्शपूर्णमासनामकैर्यागैर्यथा स्वर्गो भवति, तथा व्याप्रियेतेति प्रतिपादिते यागकरणकस्वर्गभाव्यकव्यापारस्य सामान्येन जातां प्रतीतिं स्वकार्यभूतां प्रवृत्तिं जनयितुं भावनाविशेषमपेक्षमाणामन्यानि वाक्यानि भावनाविशेषरूपं समर्पयन्ति । स्वजन्यावान्तरवाक्यार्थज्ञानद्वारा तामुपकुर्वन्तीति यागकरणकभावनाप्रतीत्युद्देश्यत्वं कृत्स्नस्य वाक्यस्येति द्विविधे तात्पर्ये आद्यस्य तात्पर्यस्यान्वयादित्येव लाभे संशब्दो व्यर्थस्स्यादिति द्वितीयमेव तात्पर्यं संशब्देन विवक्षितम् । प्रतिपाद्यप्रतिपादकभावो हि वाक्यस्यार्थेनान्वयः । यत्र वक्तुर्न विवक्षा, न तत्र वाक्यस्य प्रतिपादकता । तथा च तत्प्रतीत्युद्देशेन प्रतिपादकत्वादिति हेतुभागार्थः । एतादृशतात्पर्यं कथं ब्रह्मणीत्याशङ्क्य 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति अभियुक्तप्रसिद्धतात्पर्यलिङ्गेषु 'गतिसामान्यादि'तिसूत्रोक्तं नानाशाखास्वेकेनैव रूपेण प्रतिपादनात्मकमभ्यासविशेषं दर्शयति । **सदेवेति** । नन्वत्र कथं सूत्रकृता 'समन्वयादि' ति सिद्धवत् परं प्रति हेतुरुपादीयते । यदि तु वक्ष्यमाणैरीक्षत्याद्यधिकरणैस्तत्तद्वाक्योदाहरणपूर्वकं तस्य साधयिष्यमाणत्वादित्यभिप्रायेण, तर्ह्युत्तराधिकरणेषूपक्रमोपसंहारादिकमेव प्रतिपादनीयम् । तेषामेव प्रकृताधिकरणहेतूकृतसमन्वयसाधकत्वात् । न तु श्रुतिलिङ्गादिकम् । तेषां गुणप्रधानपदार्थसाधारणत्वात् । ननु, उपक्रमोपसंहारादयोऽप्युच्यन्ते—'प्राणस्तथानुगमात्, वाक्यान्वयात्, आनन्दमयोऽभ्यासात्, कार्याख्यानादपूर्वम्, तन्निष्ठस्य मोक्षोपदेशात्, अस्मिन्नस्य च तद्योगं शास्ति

स्वाप्ययात्, तद्धेतुव्यपदेशाच्च, ब्रह्मदृष्टिरुत्कर्षात्' इत्यादिषु तत्तत्सूत्रेषु । तर्हि श्रुतिलिङ्गादीनां किमर्थमुपदेश इति चेदुच्यते । यत्प्रतीत्युपयोगिश्रुतिलिङ्गादिकमादावन्ते च दृश्यते यस्मिन् पदनिकुरुम्बे, तद्वाक्यं तदुपक्रमोपसंहारमुच्यते । एवं श्रुत्यादीनां पौनःपुन्यं अभ्यासो नाम । ततश्चोपक्रमादेस्स्वरूपलाभोपयोगितया श्रुतिलिङ्गादिकमपेक्षितमेवेति, तदपि सूत्रकृता निरूप्यते । न चैवमावश्यकत्वाच्छ्रुत्यादिभिरेव उपपत्तावुपक्रमादिकं किमर्थमिति वाच्यम् । अनेकार्थसमावेशे निर्णायकतया तदावश्यकत्वात् । तत्रोपक्रमोपसंहारैकरूप्यमेकं लिङ्गम् । तेन चानेकार्थगोचरश्रुतिलिङ्गादीनामेकस्मिन् सन्दर्भे समाविष्टानामवगतैकवाक्यतानिर्वाहाय किमनुसारेण कस्य नयनं कर्तव्यमिति अपेक्षायां प्रबलानुसारेण दुर्बलस्य नयने स्थिते यद्विषये, उपक्रमोपसंहारैकरूप्यं लिङ्गं दृश्यते, तत् प्रबलमिति निर्धार्यते । एवमभ्यासादिष्वपि द्रष्टव्यम् । न चैवं श्रुतिलिङ्गादीनामुपक्रमोपसंहारादीनां च परस्परापेक्षतया किमपि न सिध्येदिति वाच्यम्। उपक्रमादिभिर्हि स्वरूपलाभार्थं श्रुत्यादिकमपेक्षितम् । श्रुत्यादिभिस्तु प्राबल्यनिर्णयार्थं उपक्रमादिकमपेक्षितमिति द्वारभेदान्नान्योन्याश्रयो दोषावहः । दृश्यते ह्युत्पत्तिप्रतीतिरूपद्वारभेदेन परस्परापेक्षत्वं वह्निधूमयोः । ननु, प्रकरणमहावाक्याभ्यां स्वरूपलाभार्थमेवोपक्रमादिकमपेक्षितम् । प्रकरणं नाम प्रधानाकांक्षा । एकार्थप्रधानकोऽनेकावान्तरवाक्यनिचयः साकांक्षो महावाक्यमित्युच्यते । तत्र च प्राधान्यमुद्देश्यप्रतीतिविषयतारूपं वक्तृतात्पर्यनिर्णायकैरुपक्रमादिभिरवगन्तव्यम् । लोके योऽर्थ उद्दिष्टो भवति, तमेवादावन्ते मध्ये च पुनः पुनः परामृशति । अतः प्राधान्यनिर्णयाधीनत्वात् प्रकरणमहावाक्यनिर्णयस्य कथं तेनोपक्रमादिसमुन्मेष इति चेत्, सत्यम् । अत एव श्रुतिलिङ्गावान्तरवाक्यानामेवोपक्रमादिसमुन्मेषकता कल्प्यते । एवमपूर्वत्वादीनामपि तात्पर्यनिर्णायकत्वम् । एतच्च सर्वमुत्तरेष्वधिकरणेषु स्फुटीभविष्यति । नन्वेवमपि सद्विद्यायाः 'सदेव सोम्येदमिति प्रतीकेन भाष्योदाहृतायाः कथं निर्विशेषे ब्रह्मणि तात्पर्यं निर्धारयितुं शक्यते । उपक्रमोपसंहारयोर्ब्रह्मविषयत्वेन क्रियाप्राधान्याभावेऽपि सविशेषस्य जीवभिन्नस्यैव ब्रह्मणः प्रतिपादनावगमात् । उपक्रमे हि 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति सविशेषमेव ब्रह्म प्रतिपाद्यते। आदेशशब्दो हि शासितृत्वपरः । आङ्पूर्वस्य दिशेश्शासनार्थत्वात्। शासनं च जगन्नियमनानुकूलो व्यापारविशेषः आज्ञादिरूपः । एकविज्ञानेन सर्वविज्ञानं च यद्यपि कार्यस्वरूपविशेषाकारमादाय न शक्यते, वक्तुम् । ज्ञातेऽपि ब्रह्मणि

कार्यं विशेषाकारेण हि न ज्ञायते, तथापि तत्तदवस्थाविशेषविशिष्टं कारण-स्वरूपमेव कार्यमित्यारम्भणाधिकरणे निरूपयिष्यमाणं कार्यकारणानन्यत्वं स्वीकृत्य ब्रह्मणि विदिते उपादानतया कार्यानुप्रविष्टो ब्रह्माकारो ज्ञात एवेति एतदभिप्रायं सत् ब्रह्मण उपादानतापरमिति स्वीकर्तव्यम् । ब्रह्मणश्च उपादानत्वं यद्यपि विवर्तमाश्रित्य वक्तुं शक्यते, तथापि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति दृष्टान्ते परिणाम्युपादानप्रतिपादनात् परिणामितया ब्रह्म विवक्षितम् । अतस्सप्रपञ्चमेवोपादानभूतं निमित्तकारणं च ब्रह्मावगम्यते । तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'त्यत्रापीदंशब्देन जगदुपादानात्तस्य सदेवेत्यनेन सृष्टेःप्रागपि सत्यत्वावधारणात् अग्र इति कालस्य च तस्यां दशायां सत्ताप्रतिपादनात् तदनन्तरं तदैक्षतेति वाक्येन सृष्ट्यनुकूलज्ञानसङ्कल्पकृतीनां प्रतिपादनात् सविशेषपर एवोपक्रमोऽवधार्यते । मध्ये च 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा इति प्रजाशब्दोदितानां जीवानां सच्छब्दोदितात् ब्रह्मणो मूलमूलिभावादीनामेव प्रतिपादनमुपलभ्यते । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति उपसंहारे च इदंशब्दोदितं तच्छब्देन परामृश्य 'तत्सत्यमि'ति सर्वस्य प्रपञ्चस्य सत्यत्वावधारणात् सम्बोध्यसंबोधकभावेन श्वेतकेतूद्दालकयोर्भेदप्रतिपादनेन जीवनानात्वावगमाच्च सप्रपञ्चतैवावगम्यते । अतस्सद्विद्याया उपक्रमोपसंहारपर्यालोचनया परमार्थतस्सप्रपञ्चब्रह्मप्रतिपादनपरत्वावगमात्तदनुसारेण 'तत्त्वमसी'ति वाक्यमपि जीवब्रह्मभेदाविरोधेनैव व्याख्येयम् । तथा हि 'अनृक्षरा ऋजवस्सन्तु पन्था' इति यथा बहुवचनस्य स्वादेशः, यथा वा 'उत यत् सुन्वन्ति सामधेनीस्तदन्वाहे'ति यत्तच्छब्दयोः सप्तम्या लुक् भवति 'सुपां सुलुगि'ति सूत्रेण, यथा वा गायत्रीं छन्दसां मातेत्यत्र विभक्तिव्यत्ययेन प्रथमार्थे द्वितीया, तथा तत्त्वमसीत्यत्रापि चतुर्थ्याः स्वादेशादीनामन्यतमं स्वीकृत्य तस्मै त्वमर्पणीय इत्यर्थस्स्वीकार्यः । 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीते'ति श्रुतेः पञ्चम्या वा स्वादेशादीनामन्यतमं स्वीकृत्य तस्मात्त्वमुत्पन्नोऽसीत्यर्थस्स्वीकर्तव्यः । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । षष्ठ्या वा तत्त्रितयं स्वीकृत्य तस्य त्वमसि तत्स्वामिकोऽसीति यावदिति प्रतिपादनीयम् । 'सकारणं करणाधिपाधिप' इति श्रुतेः । सप्तम्या वा तत्त्रितयमुपेत्य तस्मिंस्त्वमसीत्यर्थो ग्राह्यः । सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा इति श्रुतेः । शरीरशरीरिभावाभिप्रायं वा सामानाधिकरण्यं भविष्यति । मनुष्योऽहमित्यादिवत् 'यस्यात्मा शरी-

रमि'तिश्रुतेः । अघोरापापकाशिनीत्यत्रापापकाशिनीति प्रश्लेषवत् अतत्त्वमसीति वा स आत्मा तत्त्वमसीत्यत्रापि प्रश्लेषो भविष्यति । तस्मात् सद्विद्यायास्सप्रपञ्चजीवभिन्नब्रह्मपरत्वावगमात् कथं प्रत्यगभिन्ननिष्प्रपञ्चब्रह्मपरत्वमिति चेत्, उच्यते—'उत तमादेशमि'त्युपक्रमो न ब्रह्मणश्शासितृत्वं प्रतिपादयति। तथात्वे कर्तरि घञ्ं स्वीकृत्य तत्परत्वं वक्तव्यम् । न च तदुपपद्यते । 'अकर्तरि च कारके संज्ञायामिति कर्तरि तस्य पर्युदासात् । न च करणार्थकस्यैव कर्तर्युपचारो भविष्यतीति सांप्रतम् । तथाक्लेशकल्पनायां मूलाभावादक्लेशेनैवोपपत्तौ तदयोगाच्च । उपदेशेऽपि हि आङ्पूर्वस्य दिशेः प्रचुरः प्रयोग उपलभ्यते—आदित्यो ब्रह्मेत्यादेशः उभयमादिष्टं भवति अध्यात्मं चाधिदैवतं च 'अथात आदेशो नेति नेति' गुह्या एवादेशा मधुकृतः तदादिष्टेन मार्गेणेत्यादौ । यद्यपि उपदेशादेशयोर्भेदेन प्रयोग उपलभ्यते 'एष आदेशः एष उपदेश इति, तथापि आदेशशब्देन उपदेशसामान्ये प्रतिपादिते गोबलीवर्दन्यायेन उपदेशशब्दश्चोदनात्मकोपदेशपरो भविष्यति । 'एषा वेदोपनिषत् एतदनुशासनमि'त्युत्तरत्र तथैव दर्शनात् उपदेशार्थत्वस्वीकारे च कर्मणि घञ्ं स्वीकृत्य उपदेशैकगम्यत्वेन ब्रह्मोपक्रान्तमिति लभ्यते । न च 'अकर्तरि चे'तिसूत्रे संज्ञायामिति ग्रहणात् प्रकृते कर्मणि घञ् न सम्भवतीति वाच्यम् । को भवता दायो दत्तः, को भवता लाभो लब्ध इति प्रयोगोपपत्तये असंज्ञायामिति प्रश्लेषस्याप्युपगमात् । अवश्यं चोपक्रमे उपदेशैकगम्यत्वं वक्तव्यम् । श्वेतकेतुं स्वपुत्रं गुरुकुलात् सर्वान्वेदानधीत्य गृहमागतं स्तब्धं मानिनं प्रति उद्दालकस्य स्तब्धतापनोदनार्थोऽयं प्रश्नः—उत तमादेशमप्राक्ष्य इति । तत्र स्तब्धस्य मानिनः किमत्र प्रष्टव्यं, स्वत एवायमर्थ,ऊहितुं शक्यत इति शङ्का मा भूदिति । एवं च 'आचार्यवान् पुरुषो वेदे'त्युपसंहारस्याप्युपक्रमानुगुण्यं लभ्यते । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विवर्ताभिप्रायेणैव व्याख्येया । न तु परिणामाभिप्रायेण । वाक्यशेषानुसारात् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति विकारानृततापरम् । वाचाया आरम्भणं आलम्बनम् । विकारो घटशरावादिः । तर्हि वाक् च तदालम्बनं च विकार इति द्वयं प्राप्तम् । नेत्याह—नामधेयं घटश्शराव इति नाममात्रम् । न तु तत्र वस्तुसत्तास्तीति द्योत्यते नामधेयपदेन । दृष्टं च नामपदस्याभासताद्योतकत्वं—'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकमि'ति । लोकेऽपि पुत्राभासे पुत्र इति नामधेयं, नात्र पुत्रत्वमस्तीति । कथं तर्हि सन् घट इत्यादिव्यवहार इत्यत आह—मृत्तिकेत्येव सत्यमिति । मृत्तिकात्मनैव घटादिकं सत्यम् ।

न तु स्वरूपेणेत्यभिप्रायः । एवकारार्थप्रधानं चेदं वाक्यं गुडजिह्विकान्यायेन मृदः सत्यत्वानुवादपूर्वकं विकारानृततात्प्रतिपादनाय । एवम् उत्तरेष्वपि लोहादिदृष्टान्तेषु द्रष्टव्यम् । अमुमर्थं दार्ष्टान्तिके दर्शयति एवं सोम्य स आदेशो भवति । एवंशब्देन च वाचारम्भणं विकारो नामधेयम् आदेश एव सत्यमिति प्रतिपादितं भवति । इत्थं तैजसानां पदार्थानां त्रिवृत्करणनिरूपणावसरे स्पष्टमेव प्रतिपादितं—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमिति । अत्रापागादग्नेरग्नित्वमिति स्पष्टमेव विकारोपमर्दो दर्शितः । अतस्स्वरसतो वाचारम्भणश्रुत्या विकारानृतत्वमवधार्यते । इत्थमेव विष्णुपुराणेऽपि प्रतिपादितं—'ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥' इति । ज्ञानस्वरूपस्यैव परमात्मनोऽर्थाकारता भ्रमसिद्धेति हि श्लोकार्थः । तथा 'वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम्॥' इति विकारवर्गे आदिमध्यान्तवर्जितं पारमार्थिकं वस्तु नास्ति । अन्यथा भवतो वस्तुत्वाभावादित्यर्थः । तथा 'मही घटत्वं घटतः कपालं कपालिकाचूर्णरजस्ततोऽणुः । जनैस्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । ' इत्यादीनि प्रपञ्चानृतताप्रतिपादकानि वचनानि दर्शनीयानि । अतो विवर्तमभिप्रेत्यैव एकविज्ञानेन सर्वविज्ञानं प्रतिपादनीयम् । न तु परिणामाभिप्रायेण । मृदादिदृष्टान्ताश्च उपादानस्वरूपे ज्ञाते तदात्मनोपादेयं विज्ञातं भवतीत्येवमभिप्रायाः । न तु परिणामाभिप्रायाः । एवं 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्यत्रापि निष्प्रपञ्चमेवात्मतत्त्वमुपक्षिप्यते । अत्र हि सच्छब्दो न सत्ताश्रयतया इदंशब्दार्थे पर्यवसितः । अपि तु ब्रह्मपरः । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।' इति स्मृतेः तदैक्षतेति तच्छब्देन सत्पदार्थमाकृष्य ईक्षणादिपूर्वकस्रष्टृताप्रतिपादनात् 'सन्मूलास्सोम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा' इति स्पष्टं तेन पदेन ब्रह्मण एव प्रतिपादनाच्च । एकमेवाद्वितीयमिति च सत्पदार्थविशेषणम् । उत्तरत्र ईक्षणादिभिस्तस्यैव विशेषणात् । 'आत्मा वा इदमेक एवाग्र आसीदित्यत्र सच्छब्दस्य स्थाने आत्मपदमुपक्षिप्य एक इति पुल्लिङ्गेन तस्यैव विशेषणाच्च । ततश्च 'अथात आदेशो नेति नेतीत्यादिश्रुतिसिद्धं यदेकमेवाद्वितीयं सकलद्वैतशून्यं सत्तामात्रमात्मरूपं तद्व्यतिरेकेण सृष्टेः प्रागिदं नामरूपात्मकं किमपि नासीदिति एवकारार्थप्रधानेन सदेवेत्यनेन प्रतिपाद्यते । अत्र 'नेति नेतीतिश्रुतिसिद्धार्थकथनपूर्वकं प्रलयनिरूपणं प्रलयकालस्य तदाधे-

यस्य प्रपञ्चसूक्ष्मरूपस्य च। वस्तुतस्सत्तां निराकर्तुं प्रलयोपक्षेपश्च सृष्ट्युपक्षेपवत् प्रपञ्चः कदाचित् सूक्ष्मावस्थः कदाचित् स्थूलावस्थ इत्यनेकविकारात्मको वाचारम्भणश्रुतिप्रतिपादितेन न्यायेनानृत इति प्रतिपादनार्थः। यदाहुः—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा। उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥' इति। तस्मात् उपक्रमे तावदुपदेशैकगम्यं निष्प्रपञ्चमात्मतत्त्वं सोपपत्ति प्रतिपादितम्। मध्येऽपि जीवब्रह्मणोरभेदः परामृश्यते।'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति। यद्यपि च परमात्मनः 'यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तर-इत्यन्तर्यामिरूपेणाप्यनुप्रवेशोऽस्ति, तथापि स नेह विवक्षितः। जीवेनेति विशेषणात्। एवमुपसंहारोऽप्युपक्रमानुगुण एवोपलभ्यते 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति। ऐतदात्म्यमिदं सर्व'मिति हि 'इदं सर्वं यदयमात्मे'ति श्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्र आसीदि'त्युपक्रमानुसाराच्च। एष आत्मा अस्येति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते भावप्रत्ययस्य प्रकारीभूतप्रकृत्यर्थपरत्वात् बहुव्रीह्यर्थविशेषणीभूतात्मपरामर्शकत्वेन एष आत्मा इदं सर्वमिति प्रतिपादयति। एष आत्मा इदं सर्वमित्येव वक्तव्ये सामानाधिकरण्यमात्मात्मीयभावेनौपचारिकमिति शङ्का माभूदिति द्योतनाय बहुव्रीहिभावप्रत्यययोरुपादानम्। तथासति बहुव्रीहिणैव मुख्यया वृत्त्यात्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपयत्नान्तरकरणं व्यर्थं स्यादिति तर्केण सा शङ्कापोदिता भविष्यतीति। तच्च सामानाधिकरण्यं 'मृत् घट' इति परिणामाभिप्रायेण। 'रजतं शुक्तिरि'त्यारोपितबाधाभिप्रायेणेति द्वेधापि सम्भवतीति तन्निवारणार्थं 'तत्सत्य'मिति वाक्यम्। तत्र हि तच्छब्दः प्रकृतमात्मानं परामृशति। तस्यैव तात्पर्यविषयतया अस्मिन् सन्दर्भे प्राधान्यात् स आत्मेतिवाक्ये तस्यैव परामर्शेन तदैकार्थ्यानुसाराच्च। ततश्च तच्छब्देनात्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनमनात्मनोऽनृततां बोधयत् पूर्वोपक्षिप्तं सामानाधिकरण्यं बाधायामेव व्यवस्थापयति। ततश्च तत्त्वमसीति वाक्यं स्वस्वारस्यानुसारेणोपक्रमस्वारस्यानुसारेण च यथाश्रुतमेव। न तु विभक्तिलोपादिना क्लेशेन व्याख्येयम्। अपि च स्वस्वारस्यपरित्यागेन विभक्तिलोपाद्याश्रयणे व्यामोह एव शङ्कावसरप्रदर्शितवचनव्यक्तिभिः। न हीयमेव वचनव्यक्तिस्स्वीकर्तव्या, नेयमिति किञ्चिन्नियामकमस्ति। ननु, शरीरशरीरिभावेन योजनास्वीकारे स्वारस्यापरित्यागात् सैव स्वीकर्तव्येति भेदिपक्षेऽपि निर्धारणं लभ्यत इति चेन्न। शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वस्य प्रागेव निराकृतत्वात्। अपि च शरीरवाचकानां शरीरिपर्यन्तत्वस्वीकारेऽपि न तत्त्वमसी-

ति वाक्यं यथाश्रुतार्थं सम्भवति । न ह्यत्र त्वं शब्दस्येश्वरशरीरभूतजीववाचकस्येश्वरे वृत्तिरभ्युपेयते । त्वंशब्दार्थस्य तच्छब्दार्थे विशेषणत्वाभावात् । किं तु तच्छब्दस्यैव प्रकृतपरमात्मपरामर्शकस्य त्वंशब्दार्थे अभेदसम्बन्धेन विशेषणसमर्पकता । अन्यथा असीति मध्यमपुरुषो न स्यात् । त्वं शब्दार्थस्येतरविशेषणत्वे आकांक्षाभावेनाख्यातसामानाधिकरण्यायोगात् । युष्मच्छब्दस्याख्यातसामानाधिकरण्य एव 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम' इति सूत्रेण मध्यमपुरुषो विधीयते । अतस्त्वंशब्दार्थस्य विशेष्यत्वमभ्युपैतव्यम् । तत्र च परमात्मपरस्य तच्छब्दस्य वृत्तिः शरीरवाचकानां शरीरिपर्यन्तत्वाभ्युपगमेऽपि न सम्भवति । ईश्वरस्य जीवं प्रति शरीरत्वाभावात् अतो मध्यमपुरुषोपपत्तये त्वंशब्दार्थविशेष्यकमेव सामानाधिकरण्यमुपेयम् । एवम् 'अहं ब्रह्मास्मी'ति सामानाधिकरण्यमप्युत्तमपुरुषोपपत्तये जीवविशेष्यकमेव स्वीकर्तव्यम् । दृश्यते हि त्वमहंशब्दार्थयोर्विशेषणविशेष्यभावव्यत्यासे मध्यमोत्तमपुरुषयोर्व्यत्यासः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीति व्यतिहारवाक्ये । तथान्यत्रापि 'यदग्ने स्यामहं त्वं त्वं स्या अहं स्युष्टे सत्या इहाशिष इति । ततश्चासीति पदानुसारेण त्वंशब्दार्थविशेष्यके सामानाधिकरण्ये स्थिते शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वमिति व्युत्पत्त्यभ्युपगमेऽपि स्वारस्यहानेरवर्जनीयतया शङ्कावसरप्रदर्शितवचनव्यक्तिभिर्व्यामोह एव प्राप्नोतीति जीवब्रह्मणोस्स्वरूपाभेदमुपेत्यैव यथाश्रुतार्थोऽभ्युपैतव्यः । ननु, सिद्धान्तेऽपि एकधर्मिपर्यवसिततया त्रयाणां पदानाम् अखण्डार्थत्वाभ्युपगमेन मध्यमपुरुषस्वारस्यं परित्यक्तमेव । क्रियाकारकभावेनान्वयानभ्युपगमात् कृत्स्नवाक्यस्वारस्यमपि परित्यक्तमेव । सर्वेषां पादानां लक्षणोपगमादिति चेत्, न ह्येतावता मध्यमपुरुषप्रयोगोऽसाधुर्भवति । आलम्बनीभूते वाच्यार्थे अभेदसंसर्गेण तत्पदार्थप्रकारकत्वंपदार्थविशेष्यकबोधाभ्युपगमेन मध्यमपुरुषोपपादनसम्भवात् । इत्थमेव हि स्तुतिपर्यवसितेष्वर्थवादेषु मध्यमादिपुरुषाणां गतिः । ननु, च तव कथमभेदेन वाच्यार्थवर्णनं कर्तुं शक्यम् । विरुद्धधर्माक्रान्तयोर्नाहं सर्वज्ञ इति भेदेनावगतयोश्चाभेदबोधनासम्भवात् । यदि च विरुद्धधर्माणां भेदस्य च मिथ्यात्वेन पारमार्थिकाभेदबोधने विरोधो नास्तीत्युच्येत, तदा वाच्यार्थपर्यवसानमस्तु । किमखण्डवस्तुलक्षकत्वेनेति चेत् , न हि वयं वाक्यार्थान्वयानुपपत्त्या अखण्डे वस्तुनि लक्षणां स्वीकुर्मः । किं तु ब्रह्मप्रकरणे सर्वत्र भेदप्रपञ्चनिषेधनिन्दावाक्यैरद्वितीयवस्तुमात्रे वाक्यतात्पर्यस्य पर्यवसिततया तदुपपादनाय । ततश्चालम्बनीभूतेऽर्थे

पदस्वारस्यं न परित्यक्तमेव। पर्यवसितस्तु वाक्यार्थस्तात्पर्यानुसार्येव ग्राह्य इति तदपरित्यागात् न कुत्रापि स्वारस्यहानम्। महावाक्यार्थवर्णनस्य तात्पर्यानुसारेणैव स्वारसिकत्वात्। दर्शपूर्णमासमहावाक्यार्थस्य श्रुतिलिङ्गाद्यनेकप्रमाणानुसारेण तत्तत्पदलक्षणाध्याहारादिभिर्वर्ण्यमानस्यापि न स्वारसिकतापगता भवति। तत् कस्य हेतोः, तात्पर्यानुसारित्वात्। तथा प्रकृतेऽपि भविष्यति। ततश्चोपक्रमोपसंहारपरामर्शैर्गतिसामान्येन च सद्विद्याया निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्वे स्थिते मध्ये यानि सृष्ट्याद्युपयोगिगुणप्रतिपादकानि वाक्यानि, तान्यध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायमनुसृत्य तदुपयोगितयैव व्याख्येयानि। 'सन्मूला इति वाक्यं च न मूलमूलिभावादिना भेदप्रतिपादनपरम्। अपि तु 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे'त्युपक्रमानुसारेण अस्ति सर्वप्रजानामुत्पत्तिस्थितिलयेष्वाधारभूतं सद्वस्त्वित्येतावन्मात्रपरम्। तस्य च सद्वस्तुन 'एकमेवाद्वितीय'मिति प्रागेव स्वरूपं निर्णीतमि'ति तदनुसारेणान्यपरात् वाक्यात् प्रतीयमानो भेदो व्यावहारिको भविष्यतीति न किञ्चिदेतत्। तत्त्वमसीत्यादौ सम्बोध्यसम्बोधकभावेनार्थात् प्रतीयमानो भेदो न शास्त्रार्थः। एवमुपक्रमोपसंहाराद्यनेकप्रमाणसिद्धतात्पर्यानुसारेण सद्विद्यायामद्वैतात्मतत्त्वमेव प्रतिपाद्यत इति मनसि निधाय बादरायणेनापि मोक्षधर्मेषु श्वेतकेतुसुवर्चलोपाख्यानेनाद्वितीयात्मवस्तुपरतया सद्विद्योपबृंहिता। एवं हि तत्रोपाख्यायते—देवकन्या सुवर्चला जन्मान्तरसिद्धसहजब्रह्मात्मतत्त्वानुभावा तादृशं पतिमिच्छन्ती श्वेतकेतुं पितृसमीपतो लब्धात्मतत्त्वावबोधमुपश्रुत्य तं वृतवती। पित्रापि तस्मै निवेदिता। ताभ्यां दम्पतिभ्यां ब्रह्मनिष्ठाभ्यां वैदिककर्मानुष्ठानयुक्तं गार्हस्थ्यमाश्रित्य स्थितमिति। तत्र तयोरित्थं ब्रह्मोद्यकथारूपस्संवादः प्रवृत्तः। 'ततः कदाचित् भर्तारं श्वेतकेतुं सुवर्चला। पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम। तामाह भगवान्वाग्मी त्वया ज्ञातो न संशयः। द्विजोत्तमोऽहं सुभगे सत्यव्रतपरायणः। सा तमाह महात्मानं पृच्छामि त्वदिशायिनम्। तच्छ्रुत्वा प्रत्युवाचैनां सर्वज्ञो मुनिपुङ्गवः। मनसैव समायुक्तमात्मानं मन्यसे यदि। तन्मिथ्यागोत्रसद्भावे वर्तते देहबन्धनः। त्वमप्यहमहं सर्वमहमित्येव वर्तते। नात्र तत्परमार्थं तद्यन्मां त्वमनुपृच्छसि। अत्र सद्विद्यायां तत्त्वमसीत्यसकृत्पित्रोपदिष्टः श्वेतकेतुः कथमात्मानं बुध्यत इति जिज्ञासमानया सुवर्चलया कस्त्वं द्विजोत्तमेति प्रश्नः कृतः, तत्प्रश्नाभिप्रायमवगच्छतापि श्वेतकेतुना क्रमेण सा तमर्थं बोधनीयेति मत्वा तत्रोत्तरमुक्तम्। द्विजोत्तमेति संबोधयन्त्या त्वया ब्राह्मणोऽहमित्यवगतमेव। किमत्र प्रष्टव्यमिति ततस्सुवर्चलया देहोपाधिकत्वे ना-

त्मनि कल्पितं प्रत्यक्षं ब्राह्मण्यं न पृच्छामि । किं तु द्विजोत्तमोऽहमित्यहंश-ब्देन देहाद्विविक्तं यमात्मानं हृदिशायिनं निर्दिशसि, तं प्रच्छामीत्युक्ते तत्रो-त्तरमुक्तं—अहंशब्दो मनश्शबलितात्मस्वरूपे प्रवर्तते । मनश्शबलितात्मस्वरूपं च मिथ्या । ब्राह्मणकुलोत्पन्ने देहोपाधिके आत्मनि ब्राह्मण्यमिव । अतः आत्म-तत्त्वजिज्ञासुभिर्नाहंशब्दार्थः प्रष्टव्यः । अपि चाहंभावस्सर्वसाधारणः प्रत्यक्षसि-द्धः । अतः परमार्थवस्तुजिज्ञासा चेत्, नाहम्भावः प्रश्नार्हः । तदनन्तरं कर्तृत्व-भोक्तृत्वादियुक्तं अहम्भावं यद्यनृतं त्वमवगच्छसि, तर्हि कर्तृत्वपूर्वकं वैदिकं कर्म कथमाचरसीति पृष्टे लोकसङ्ग्रहार्थं वैदिककर्माचरणमित्युक्तम् । तदनन्तरं सर्वैरा-त्मनि प्रयुज्यमानस्याहंशब्दस्य कथं तदर्थता न स्यादिति मनसि निधाय शब्दा-र्थसम्बन्धप्रश्ने कृते न संयोगादिश्शब्दार्थयोस्सम्बन्धः । अपि तु वाच्यवाचकभाव इत्युत्तरमुक्तम् । तदनन्तरं दम्पत्योरियं प्रश्नोत्तरपरम्परा । सुवर्चला । सदाह-ङ्कारशब्दोऽयं व्यक्तमात्मनि संश्रितः । न वाचस्तत्र वर्तन्त इति मिथ्या भविष्य-ति । श्वेतकेतुः—अहंशब्दो ह्यहंभावे नात्मभावे शुभप्रभे । न वर्तन्ते परे चि-न्त्ये वाचस्सगुणलक्षणाः । सुवर्चला । अहम्भावोऽत्र को नाम ह्यात्मभावस्तथैव च । तन्मे ब्रूहि यथान्यायमेवञ्चेन्मुनिसत्तम ॥ श्वेतकेतुः—मृण्मयो हि घटाभासस्तादृग्भा-व इहेष्यते । अहम्भावः परे चिन्त्ये ह्यात्मभावो महान् परः ॥ न वाचस्तत्र वि-द्यन्त इति नैव विरुध्यते । अत्र शब्दार्थयोर्वाच्यवाचकभावसम्बन्धोऽस्ति चेत् कथमहंश-ब्द आत्मवाचको न स्यादिति प्रश्ने कृते अहंशब्दो नात्मनि मुख्यया वृत्त्या प्र-वर्तते । किं तु अहमर्थ इत्युत्तरमुक्तम् । ततः को नामाहमर्थादन्य आत्मेति पृष्टे मृदि घटाभासवदात्मन्यहंभावोऽप्याभास इत्यहमर्थादात्मनो विवेकं दर्शयित्वा कल्पिता-कारोपधानेन प्रवर्तमानश्शब्दो न शुद्धाधिष्ठानपर्यन्तं प्रवर्तते । रजतोपधानेन प्र-वर्तमानश्शुक्तौ रजतशब्द इव । अतः कल्पितोपाधिनिमित्तोऽहंशब्दो न शुद्धात्मनि मुख्यया वृत्त्या प्रवर्तत इति न विरुध्यत इत्युपसंहृतम् । ततोऽहंकाराद्विविक्त आ-त्मैव प्रपञ्चाधिष्ठानं ब्रह्मेति सिद्धवत्कृत्य यथाकाशस्य प्रपञ्चाश्रयत्वेऽपि तदस-ङ्गित्वम् । एवं ब्रह्मणोऽप्यसङ्गित्वे श्वेतकेतुना प्रतिपादिते पुनः प्रश्नोत्तरं, सुव-र्चला । निर्विकारं ह्यमूर्तं च निरंशं सर्वगं तथा । दृश्यते च वियन्नित्यं तादृगा-त्मा न दृश्यते ॥ श्वेतकेतुः—त्वचा स्पृशति वै वायुमाकाशस्थं पुनःपुनः । तत्स्थं गन्धं तथा घ्राति ज्योतिः पश्यति चक्षुषा ॥ तमोरश्मिगणं चैव मेघजालं तथैव च । वर्षतारागणं चैव नाकाशं दृश्यते पुनः ॥ आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् । सदर्थे क-ल्पितं सर्वं तत् सत्यं विष्णुरेव च । यानि नामानि गौणानि ह्युपचारात् परात्मनि । न

चक्षुषा न मनसा न चान्येन परो विभुः । चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते । एतत्प्रपञ्चमखिलं तस्मिन्नेव प्रतिष्ठितम् । इति । अत्राकाशवत् प्रपञ्चाधिष्ठानं ब्रह्म कुतो न दृश्यत इति प्रश्ने आकाशस्थस्य वाय्वादेरेव ग्रहणमस्ति । न तु विविच्याकाशस्य । यदा लौकिकाकाश एवेयं गतिः, तदा कैव कथा परमात्मनि ततोऽपि सूक्ष्मे । ततस्सदर्थे कल्पितं सर्वम् । तच्च सद्रूपं सर्वाधिष्ठानत्वाद्व्यापकम् । तत्रोपाधिमाश्रित्य प्रवर्तमानाश्शब्दाश्शुद्धे साक्षात् न प्रवर्तन्त इत्युत्तरमुक्तम् । अस्यां प्रश्नोत्तरपरम्परायां 'मृण्मयो हि घटाभास इति दृष्टान्तोक्त्या वाचारम्भणश्रुत्यर्थः, सत्स्वरूपमित्यात्मशब्देन प्रकृतस्य जीवस्य सद्रूपत्वोक्त्या तत्त्वमसीति वाक्यार्थः, 'सदर्थे कल्पितं ह्येतत्तत्सत्यं विष्णुरेव चे'त्यनेन 'एतदात्म्यमिदं सर्वं तत् सत्यं स आत्मे'ति श्रुत्यर्थश्च निष्प्रपञ्चप्रत्यगभिन्नब्रह्मप्रतिपत्त्यनुकूलो दर्शितः । तत्सिद्धं सद्विद्यायास्तात्पर्यग्राहकैर्लिङ्गैः क्रियाशेषतां विनैव निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्वम् । **आत्मा वा इदमिति** । यथा चास्य वाक्यस्य निष्प्रपञ्चपरमात्मपरत्वं, 'तथात्मग्रहीति'रित्यधिकरणे स्पष्टं भविष्यति । **तदेतदिति** । मधुब्राह्मणे पृथिव्यादिपर्यायेषु यत् सर्वात्मतया प्रतिपादितं तदेतत् ब्रह्म अपूर्वं कारणरहितम् । अनपरं कार्यरहितम् । किं बहुना । आन्तरबाह्यसर्वद्वैतवर्जितं सर्वानुभवरूपोऽयं आत्मापि ब्रह्मैवेति । यद्विज्ञानात् सर्वविज्ञानं प्रागुपक्षिप्तं, तद्व्यतिरेकेण पुरस्तात् किमपि नास्तीत्याह—**ब्रह्मैवेति** । **निश्चित इति** । निश्चायकैरुपक्रमादिभिरुपेत इत्यर्थः । **श्रुतेति** । श्रुतितात्पर्यविषयीभूतेत्यर्थः । यत्तु, पूर्वपक्षिणोक्तं कर्तृस्तावकता वेदान्तानां भविष्यतीति, तन्न । 'तत् केन कं पश्ये'दित्यादिवाक्यानां कर्तृत्वादिनिषेधकानां तत्स्तावकत्वस्याप्रतीतेरित्याह—**न च तेषामिति** । यत्तु सिद्धवस्तुपराणां प्रमाणान्तरमूलत्वमिति, तन्न । तथासति क्रियाप्रतिपादकानामपि 'तृप्तिकामः पचेदि'ति दृष्टान्तेन प्रमाणान्तरमूलकता किं न स्यात् । यदि त्वलौकिकश्रेयस्साधनताकारस्य प्रमाणान्तरायोग्यतया 'यजेत स्वर्गकाम' इत्यादीनां न प्रमाणान्तरमूलत्वं, तदा प्रकृतेऽपि तुल्यमित्याह—**न च परिनिष्ठितेति** । **हेयोपादेयेति** । हेयत्वोपादेयत्वेत्यर्थः । **सर्वक्लेशप्रहाणादिति** । पूर्वपक्षिणा हि यथा प्रयोजनं लभ्यते, तथा वाक्यार्थो वर्णनीय इत्युक्तम् । तदभ्युपगम्यत एव । परं तु वेदान्तानां कर्मविध्येकवाक्यत्वेन साक्षात्तल्लभ्यते । अपि तु प्रवृत्त्यादिद्वारा प्रत्यगभिन्नब्रह्मपरत्वे तु तज्जनितज्ञानेन सर्वानर्थमूलाया अविद्याया निवृत्तेस्साक्षादेव प्रयोजनं लभ्यत इति भावः । यत्तु पूर्वपक्षिणोपासनाविधिशेषत्वं ब्रह्मप्रतिपादकानां पदानां भविष्यतीति पक्षान्तरमुक्तं,

तत्र यानि दहरशाण्डिल्याद्युपासनाप्रकरणगतानि, तेषामुपासनाविधिशेषता उपगतैव । यानि तु निष्प्रपञ्चात्मप्रकरणगतानि, तेषान्नोपासनाविधिशेषत्वम् । सर्वत्र तदश्रवणात् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति' क्वचिन्निर्विशेषब्रह्मप्रकरणे ध्यानविधिश्रवणेऽपि अहेयोपादेयजीवब्रह्मैक्ये प्रतिपादिते सति तज्ज्ञानमात्रेण क्रियाकारकात्मकस्यानर्थस्य निवृत्तेः प्रयोजनपर्यवसाने सति नोपक्रमाद्यवगतप्राधान्यभङ्गेन ध्यानविधिशेषतया ब्रह्मप्रतिपादनम् । किं तु ब्रह्मप्रतिपत्त्युपयोगितया ब्रह्मशेषतयैव ध्यानादिप्रतिपादनम् । तदपि च ध्यानं भेदवासनानिवृत्तिपर्यन्तमेव । न तु तदनन्तरमपि । ततश्च निवृत्तभेदवासनस्य पुरुषस्योपदेशमात्रेण सकलद्वैतनिवर्तकात्मसाक्षात्कारसिद्धेस्तं प्रति ध्यानविधिर्निरालम्बन एवेत्याह—**देवतादिप्रतिपादनस्येत्यादिना प्रतिपद्येतेत्यन्तेन** । यद्यप्यर्थवादवाक्यानां स्वार्थपरत्वं त्यक्तं विधेयस्तावकतया च विधिपरत्वमभ्युपगतं, तथापि तेषां तत्स्वार्थे प्रयोजनानवाप्तेरुपगतम् । वेदान्तानां तु स्वार्थे प्रयोजनलाभेनार्थवादेषु स्वार्थपरित्यागो द्रष्टव्य इत्येतावता स्वार्थः परित्यक्तुं न शक्यत इत्याह—**यद्यपीति** । ननु, वेदान्तवाक्यं सिद्धब्रह्मप्रमितिजनकमित्यनुमितिर्न सम्भवति । तथाभूतस्य वैदिकवाक्यान्तरस्यादर्शनात् । तादृशानुमित्यभावे च कथं ब्रह्मप्रमाजनकत्वमिति यदि कश्चिच्छङ्केत, तं प्रति तादृशानुमित्यभावेऽप्याकाङ्क्षायोग्यतादिमत्तया ब्रह्मबोधकता सम्भवत्येवेत्याह—**न चेति** । अनुमानगम्यं सच्छास्त्रस्य प्रमाजनकत्वं न सम्भवतीत्यर्थः । एवं वेदान्तानां सिद्धब्रह्मपरत्वे प्रयोजनं न लभ्यत इति लौकिकपदानां कार्यान्विते शक्तौ सत्यामपि क्रियापदैस्सत्यादिपदानामन्वयः स्वीकर्तव्यः । ततश्च सत्यादिरूपस्य ब्रह्मणः प्रत्यगभेदेनोपासनाकरणिका या भावना, तस्यामेव वेदान्तानां तात्पर्यात् प्रत्यक्षादिविरुद्धेऽशे आरोपमादायैवोपासनं सम्पादनीयमिति शङ्का सिद्धवस्तुपरत्वेऽपि प्रयोजनं लभ्यत इति व्युत्पादनेन परिहृता । एकदेशिनस्तु कार्यान्वित एव पदानां शक्तिरन्यपरेभ्योऽपि वाक्येभ्यः ब्रह्मसत्ता च सिध्यतीति वदन्ति । तन्मतमनुवदति—**अत्रापर इति** । तेषामयमाशयः । लौकिकपदार्थव्युत्पत्त्यनुसारेण वेदे वाक्यार्थो वर्णनीयः । लौकिकी च व्युत्पत्तिः पदानां कार्य एव । तत्रैवाद्यव्युत्पत्तिग्रहसम्भवात् । न हि कोशादिभ्य आद्यव्युत्पत्तिग्रहस्सम्भवति । अत्यन्ताव्युत्पन्नस्य कोशाद्यर्थज्ञानासम्भवात् । ततश्च प्रयोज्यप्रयोजकवृद्धव्यवहाराधीन आद्यशक्तिग्रहो वर्णनीयः । स च व्युत्पित्सोरेवं भवति । प्रयोजकवृद्धस्य 'घटमानय, गाम्बधाने'त्यादिशब्दोच्चारणानन्तरं प्रयोज्यवृद्धेन कृतं घटानयनं गोबन्धनं च

पश्यतो घटानयनगोबन्धनयोः कार्यतया स्वीयस्तन्यपानादिदृष्टान्तेन कृतिचिकीर्षयोर्मध्यमवृद्धगतयोरनुमाने सति चिकीर्षायाः कार्यताज्ञानमूलकत्वात् नूनमनेनानयनबन्धनयोः कार्यतावगतेति बुद्धिर्भवति । तस्यां च बुद्धौ शब्दोच्चारणातिरिक्तस्य कारणस्यासम्भवात् प्रयोजकवृद्धोच्चारितश्शब्द एव कारणमिति निर्णये अशक्तस्य कारणतासम्भवादेतादृशश्शब्दः कार्यविशेषे आनयनादौ शक्त इति निर्णयो भवति । ततश्च आवापोद्वापाभ्यां यथायथं कार्यसामान्यं प्रथमावगतमविहायैव तेषु तेषु समभिव्याहारविशेषेषु तत्तत्कार्यविशेषप्रत्ययः । ततश्च कोशादिभ्योऽपि उपजीव्यप्राथमिकव्युत्पत्तिग्रहानुसारेण कार्यान्वित एव तत्तत्पदार्थे शक्तिग्रहः । न तु तदनन्विते । ननु, कार्यान्विते शक्तिरित्यपि नियमो न सम्भवति। देवदत्तो गच्छतीत्यादौ गम्यादेः कार्यान्वितार्थप्रतिपादकत्वासम्भवादिति चेन्न । कार्ये पदानां शक्तिरित्येव नियमः । न तु कार्यान्विते । तच्च कार्यं क्वचित् स्वातन्त्र्येण प्रतिपाद्यते, क्वचिच्च कारकादिसम्बन्धितयेत्येवं स्वीक्रियते । न चायमपि नियमो न सम्भवति । कस्यायं पुरुषो राज्ञ इति कार्यानन्वितार्थप्रतिपादकानामपि समभिव्याहाराणां भूयसामुपलम्भादिति वाच्यम् । तत्रापि स आकारणीय इत्यादिपदाध्याहारेणैव शाब्दबोधजनकता । तदभावे तु पदार्थासंसर्गाग्रह एव । आद्यव्युत्पत्त्यनुरोधात् । ननु, कार्यं विहायापि आद्यव्युत्पत्तिग्रहस्सम्भवति । मात्रादयोऽङ्गुल्या घटादिकं निर्दिश्यायं घट इति यदा शब्दं प्रयुञ्जते । तदा हि बालस्य 'घटशब्दवाच्योऽयमि'ति प्रतीतिर्भवति । न च तदापि कथमेषा प्रतीतिः । अङ्गुलीनिर्देशपूर्वकशब्दोच्चारणं तत्र तत्र विषये शक्तिग्रहार्थमिति बालेन प्रागपरिज्ञानादिति वाच्यम् । यद्यपि बालेनांगुलीनिर्देशेन उच्चारणकालेऽयमर्थो न ज्ञातः एषोऽङ्गुलीनिर्देशश्शब्दोच्चारण सहितश्शक्तिग्रहार्थ इति, तथापि तादृशं निर्देशं बहुधा दृष्ट्वा 'अयं शब्द एतदर्थसहचरित इति' ज्ञातमेव । तेन च सम्बन्धेन 'सम्बन्धिदर्शनात् सम्बध्यन्तरेस्मृतिरि'ति न्यायेन घटशब्दोच्चारणे बालस्य घटबोधो जायते । ततस्तद्बोधनिर्वाहकतया तस्मिन्नर्थे शक्तिं कल्पयतीति चेन्न । बालस्य प्राग्बोधो घटादिविषयकः घटशब्दोच्चारणे साहचर्यसम्बन्धमादाय प्रवृत्तः न तत्रोत्तरभाविशक्तिकल्पनमुपयुज्यते । अर्थज्ञानात् प्रागेव शक्तिज्ञानस्यापेक्षितत्वात् । नाप्युत्तरभावितत्तदर्थज्ञानाय । यथाप्राक्छक्तिग्रहं विनैव साहचर्यज्ञानमात्रेणार्थबोध उपपन्नः। उत्तरत्रापि तथैवोपपादनसम्भवात् । अथापि स्यात्, 'पुत्रस्ते जात' इति वाक्यात् सिद्धेऽप्याद्यव्युत्पत्तिग्रहस्सम्भवति । व्युत्पित्सुर्बालो यदा देवदत्तगृहे पुत्रजन्म दृष्ट्वा वार्ताहारेण सह देवदत्तसमीपमागच्छति, तदा देवदत्त 'पुत्रस्ते जात' इति वा-

तद्दिहारवाक्यश्रवणानन्तरं हर्षपूर्वकं देवदत्तं स्नानं कुर्वाणमुपलभ्य हर्षपूर्वकस्नानकरणे देवदत्तस्य किन्निमित्तमित्यालोचयन् 'मया देवदत्तस्य गृहे दृष्टं यत् पुत्रजन्म, तत् नूनमनेन ज्ञात'मिति निश्चिन्वन् तज्ज्ञाने कारणान्तरस्याभावात् 'पुत्रस्ते जात'इति शब्द एव तज्ज्ञाने कारण'मिति निश्चयवान् भवेदिति । न स्यात् । बालेन दृष्टेषु बहुषु पदार्थेषु सत्सु इतरपदार्थज्ञानमेव कुतो हर्षपूर्वकस्नानकारणत्वेन न कल्प्यते । यदि तेषां हर्षपूर्वकस्नानकारणत्वं तेन न गृहीतमित्युच्यते, तदेदमपि कथं गृहीतमिति वक्तव्यम् । न ह्यत्यन्ताव्युत्पन्नस्य पुत्रजन्म श्रुत्वा हर्षपूर्वकं स्नान्ति । 'पुत्रजन्म च हर्षकारण'मित्युपदेशजानां ज्ञानं सम्भवति । ततश्च केषुचिच्छब्देषु व्यवहारानुसारेण व्युत्पन्नस्याप्तोपदेशेन पुत्रजन्म हर्षकारणं, तच्छ्रुत्वा च स्नान्तीति निश्चयवत एव तथानुमितिपूर्वकं शब्दशक्तिग्रह इति वक्तव्यम् । ततश्चाद्यव्युत्पत्तिग्रहस्य कार्यव्युत्पत्तिस्थल एव वक्तव्यतया तदनुसारेण 'पुत्रस्ते जात' इति वाक्यमपि अतस्स्नानं कर्तव्यमिति अध्याहारसंयुक्तमेव तदर्थप्रतिपादकमित्यपि निश्चिनोति । तत्सिद्धं सर्वेषां पदानां कार्यबोधकतयैव शाब्दज्ञानजनकत्वमिति । अतो लोकव्युत्पत्त्यनुसारेण वेदान्तानामपि कार्यपरत्वमेव । न तु सिद्धब्रह्ममात्रपरत्वम् । ततश्च वैदिकलिङां धात्वर्थातिरिक्तकार्यप्रतिपादकतायाः स्वर्गकामादिपदसमभिव्याहारेण निर्णीततया वेदान्तेष्वप्युपासीतेति लिङा धात्वर्थातिरिक्तमेव कार्यं प्रतिपादनीयम् । कार्यं च कृतिसाध्यम् । कृतिश्च सविषया । सा च साक्षाद्धात्वर्थमेव यागपाकादिकं जनयति । अपूर्वं तु न तथेत्यपूर्वस्य कृतिजन्यतायां मध्ये घटकापेक्षायां कृतेर्विषयापेक्षायां च यथा 'यजेत स्वर्गकाम' इत्यत्र विषयतया घटकतया च याग एवान्वेति, तथा प्रकृतेऽप्युपासीतेत्यत्रोपासनमेव कृतेर्विषयापेक्षायां घटकापेक्षायां चान्वेति । कृतिविषय एव चापूर्वविषय इत्युच्यते । घटक एव च करणमित्युच्यते। यदाहुः—'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये संघटिताकारे करणत्वेन सम्मतः ॥' इति । ततश्चोपासनाविषयके कार्येऽवगते उपासनायाः ज्ञानसन्ततिरूपायास्सविषयतया विषयापेक्षायामात्मा विषयतया 'आत्मेत्येवोपासीते'ति वाक्ये श्रुतस्सम्बध्यते । ततश्चात्मनोऽपूर्वापरपर्याये विधौ परम्परया विषयता । तदिदमुक्तम्—**प्रतिपत्तिविधिविषयतयेति** । ततश्च किंरूप आत्मेत्यपेक्षायां 'सत्यं ज्ञानमनन्त'मित्यादिवाक्यजातं तत्स्वरूपबोधकतयोपयुक्तं भवति । ननु, सत्यादिवाक्यस्योपासनाविध्येकवाक्यतां प्राप्तस्य सत्यादिरूपब्रह्मावबोधकत्वम्, उत तदेकवाक्यतामनापन्नस्य । नाद्यः । उपासनानियोगे हि सत्यादिपदार्थस्य

साक्षात् परम्परया वा विषयत्वेनान्वयो वक्तुं न शक्यते । स्ववाक्यगताभ्यां उपासनात्मभ्यामवरोधात् । न द्वितीयः । कार्यान्वयं विना वाक्यस्याबोधकत्वात् । अतो न सत्यादिरूपब्रह्मस्वरूपलाभ इति चेन्न । उपासनानियोगो हि स्वविषयतयावगतस्यात्मनस्स्वरूपनिर्धारणमपेक्षते । सत्यादिपदार्थाश्च तत्प्रकरणपठिता वाक्यार्थभावमपेक्षमाणाः स्वशेषितयोपासनानियोगेनैवान्वयं प्राप्नुवन्ति । तथा चोभयाकाङ्क्षा निवृत्ता भविष्यति । शेषशेषिभावेनान्वय एव च ग्राहकग्रहणमिति प्राभाकरैर्व्यवह्रियते ! ततश्च यद्यपि सत्यादिपदार्थस्य न साक्षादुपास्यकोटौ निवेशः । तत्कोटेस्समानवाक्योपात्तेनात्मनावरुद्धत्वात्, तथापि स्वान्वितानां सत्यादिपदार्थानां उपास्यस्वरूपापेक्षायामवगतान्वयनिर्वाहार्थमुपासनानियोग एव तेषामात्मविशेषणतामाक्षिपतीत्युपादानापरपर्यायविध्याक्षेपरूपप्रमाणसहकृतो वेदान्तवाक्यनिचयः सत्याद्यात्मकमुपास्यं समर्पयतीति न काचिदनुपपत्तिः । न च नियोगपरेभ्यो वाक्येभ्यः ब्रह्मसिद्धिः देवताधिकरणन्यायेन वक्तव्या । स च प्रमाणान्तरविरुद्धे न प्रवर्तत इति कथं प्रत्यगभिन्नं निष्प्रपञ्चं ब्रह्म एकदेश्यभिमतं शास्त्रेण सिध्येदिति साम्प्रतम् । सप्रपञ्चत्वनिष्प्रपञ्चत्वयोश्शुक्तिरजतन्यायेन एकस्यैव ब्रह्मणो जीवेश्वरात्मना भेदस्यौपाधिकाकाशभेदन्यायेन चोपपादयितुं शक्यतया प्रमाणान्तरविरोधपरिहारसम्भवात् । ततश्च 'यूपे पशुं बध्नाति, यूपमष्टाश्रीकरोति, यूपं तक्षति, खादिरो यूपो भवती'त्यादिवाक्यपर्यालोचनया पशुनियोजनयोग्यः काष्ठविशेषः यूपशब्दार्थः । 'अग्नीनादधीत, नक्तं गार्हपत्यमादधाति, दिवाहवनीय'मित्यादिवाक्यपर्यालोचनया आधानविशेषसंस्कृतोऽग्निराहवनीयादिशब्दार्थ इति च पशुनियोजनादिपरेभ्यो वाक्येभ्योऽवगम्यते । तथा उपासनाविधिपरादेव वाक्यात् ब्रह्म सिध्यति । एतत्सर्वमभिप्रेत्याह—**यद्यपि शास्त्रप्रमाणकमिति । प्रवृत्तिनिवृत्तिपरत्वादिति** । विधिरूपं शास्त्रं प्रवृत्तिप्रयोजनकम् । प्रवृत्तिश्च कार्यताज्ञानाधीनेति प्रवृत्तिसिद्ध्यर्थं 'यजेत स्वर्गकाम' इत्यत्र स्वर्गकामनियोज्यकं यागविषयकं कार्यं प्रतिपाद्यते । निवृत्तिप्रयोजनकं निषेधशास्त्रम् । निवृत्तिश्च तत्तत्क्रियाप्रागभावपरिपालनानुकूलो यत्नविशेषः । सोऽपि कार्यताज्ञानाधीन इति 'न कलञ्जं भक्षये'दित्यत्र कलञ्जभक्षणप्रागभावपरिपालनविषयकं कार्यं प्रतिपादनीयम् । ततश्च सर्वं शास्त्रं कार्यप्रतिपादकमेवेति वेदान्तानामपि कार्यप्रतिपादकत्वं स्वीकृत्य तच्छेषतयैव ब्रह्मप्रतिपादकता आस्थेयेति भावः । शास्त्रतात्पर्यविदां वेदतात्पर्यविदाम् । अनुक्रमणं वेदार्थसङ्ग्राहकवचनजातम् । 'दृष्टोही'ति 'चोदनेती'ति च शबरस्वामिवचनम् । वेदस्य कार्यप्रतिपादनमेव दृष्टं प्रयोजनमिति चोदनासूत्रे चोदनाशब्दः कार्या-

नुकूलप्रवृत्तिजनकशब्दपर इति च वाक्यद्वयस्यार्थः । तस्येत्यारभ्य जैमिनिसूत्रावयवाः । 'कार्यस्य ज्ञानजनको विधिरि'ति। तत्तत्र सिद्धे पदार्थे विद्यमानानां कार्यप्रतिपादकेन पदेन सह समभिव्याहारो द्रष्टव्य इति वेदस्य कार्यपरत्वात् अतत्पराणां आनर्थक्यमिति च सूत्रावयवार्थः । एतद्वचनपर्यालोचनया लिङादिभिः साक्षात्कार्यं प्रतिपाद्यते । अवशिष्टो वेदभागस्तच्छेषभूतः । अन्यथानर्थक्यं स्यादिति स्पष्टमेव प्रतीयते । ननु, नियोगः पुरुषकृतिसाध्यतयावगतः कृतिमपेक्षते । पुरुषकृतिश्च स्वविषये 'मयेदं कर्तव्यमि'ति ज्ञानं विना न भवति । तत् ज्ञानं साश्रयम् । यश्च तादृशज्ञानाश्रयः, स एव नियोज्यः । अतो नियोगो नियोज्यमपेक्षते । पुरुषस्य च भाविनि कार्ये 'कर्तुं शक्यं एतन्मये'ति ज्ञानं तदैव भवति । यदा लोकवेदसिद्धकारणकलापवत्ताज्ञानं स्वस्मिन् भवति । लोकतश्च कार्यमात्रे 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत' इति न्यायेन तत्तत्कार्यजन्यफलकामना कारणमिति इहापि नियोज्यविशेषणतया फलकामनायां लोकतस्सिद्धायां कामनाविषयीभूतं फलमिदमिति विशिष्य निर्धारणं कथं भविष्यतीत्यत आह—सति चेति । नन्वग्निहोत्रादौ स्वर्गादिकामनायां नियोज्यविशेषणतया श्रुतत्वादस्तु तत्र नियोगस्य निराकाङ्क्षता । प्रकृते त्वमृतत्वकामना नियोज्यविशेषणतया न श्रुतेति चेत, सत्यं न श्रुता । किं तु यथा 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यत्र रात्रिसत्रस्य नियोज्यविशेषणतया फलकामनायामपेक्षितायां 'प्रतितिष्ठन्ति ह वा'इत्यर्थवादावगतायाः प्रतिष्ठाया एव'प्रतितिष्ठासन्ती'ति सन्नर्थविपरिणामं यच्छब्दस्य व्यवहितान्वयं चाश्रित्य 'ये प्रतितिष्ठासन्ति, त एता रात्रीरुपेयुरि'ति लिङर्थकल्पनेन फलत्वं स्वीकृत्य प्रतिष्ठाकामना रात्रिसत्रनियोज्यविशेषणतया कल्प्यते । तथा 'येनाहं, नामृता स्यां, किमहं तेन कुर्यां, यदेव भगवान् वेद, तदेव मे ब्रूही'ति अमृतत्वसाधनप्रश्नोपक्रमादेतावदरे खल्वमृतत्वमिति तदुपसंहाराच्च आत्मावा अरे द्रष्टव्य इति विहितोपासनायां योऽमृतत्वकामः, तेनात्मा द्रष्टव्य इति वचनव्यक्त्या अमृतत्वकामना अधिकारिविशेषणं भविष्यति । ननु, वेदान्तेषु यद्यमृतत्वकामस्य ब्रह्मोपासनं विधीयते, तर्ह्यस्मिन्वेदान्तमीमांसाशास्त्रेऽपि तदुपासनमेव प्राधान्येन विचारणीयं स्यात् । ततश्चोपासनस्यापि धर्मत्वाविशेषात् 'अथातो धर्मजिज्ञासे'ति प्रतिज्ञयैव ब्रह्मोपासनाविचारोऽपि प्रतिज्ञातस्स्यात । न च जैमिनिना उपासनारूपं ज्योतिष्टोमादिरूपं च धर्मं विचार्यत्वेन प्रतिज्ञाय उपासना न विचारितेति वक्तुं शक्यम् । अतोऽस्मिञ्च्छास्त्रे प्राधान्येन विचारणीयस्यार्थस्य शास्त्रान्तरेणैव विचारिततयैतच्छास्त्रारम्भो व्यर्थः

प्रसज्येत । अपि च उपासनाजन्यत्वे मोक्षस्य स्वर्गादिवदनित्यता च स्यादिति शङ्कते । **नन्विति । नार्हत्येवमिति** । 'अथातो धर्मजिज्ञासेत्य'त्र धर्मपदं यद्यपि साधारण्येन बाह्यं ज्योतिष्टोमादिकं आन्तरं च उपासनादिकं प्रतिपादयति, तथापि जैमिनिना कृतेऽपि विचारे उपासनाया अनिरूपितत्वादस्मिञ्चशास्त्रे वक्ष्यमाणानां न्यायानां तत्रासूत्रितत्वाच्च । तत्रत्यो धर्मशब्दो नोपासनापरः । किं तु तद्व्यतिरिक्तधर्मपरः । न चोपासनासाध्यत्वेनानित्यता मोक्षस्य । 'यत् कृतकं तदनित्यमि' ति लोकसिद्धन्यायस्य अमृतत्वश्रुतिबलादेव बाधनोपपत्तेरिति भावः । **कार्यविधिप्रयुक्तस्येति** । कार्यरूपो यो विधिः, तदाक्षिप्तस्येत्यर्थः । यद्यपि ब्रह्मणो ब्रह्मादिशब्देभ्य एवावगमात् न विधिप्रयुक्तत्वं, तथापि सत्याद्यात्मना विधिप्रयुक्तत्वं भविष्यतीत्यभिप्रेत्य सङ्ग्रहवाक्यं विवृणोति । **आत्मा वा अरे इत्यादिना** । यथा च सत्याद्यात्मकस्य ब्रह्मणः विधिप्रयुक्तत्वं, तथा प्रागेव व्युत्पादितम् । **सोऽन्वेष्टव्य इति** । अन्वेषणं विचारः । जिज्ञासा तु साक्षात्कारात्मकं यद्विशेषज्ञानं, तदिच्छासाध्यस्साक्षात्कारानुकूलो विचारादन्यो ध्यानरूपो व्यापारः । **आत्मेत्येवोपासीतेति** । अत्रेतिशब्दः 'क्रमादमुं नारद इत्यबोधि स' इत्यत्रेव द्वितीयार्थे । तथा चात्मानमेवोपासीतेत्यर्थः । **आत्मानमेव लोकमिति** । आत्मोपासनासाध्यं फलं, मोक्षोऽप्यात्मस्वरूप इत्यभिप्रेत्य लोकमित्यात्मविशेषणम् । **शास्त्रदृष्टोऽदृष्ट इति** । शास्त्रादवगतः प्रमाणान्तरानवगत इत्यर्थः । एवं कार्यपरत्वाभावे वेदान्तानां बोधकता न स्यादिति निरूप्य तथासति फलवत्त्वं च न स्यादित्याह —**कर्तव्येति** । ब्रह्मस्वरूपज्ञानमात्रेण मोक्षरूपफलादर्शनात् प्रकृते नायं सर्प इतिन्यायो न प्रवर्तत इत्युक्त्वा तावन्मात्रेण फलसिद्धौ श्रवणानन्तरं मनननिदिध्यासनविधिवैयर्थ्यं च स्यादित्याह—**श्रवणादिति** । श्रवणमात्रेणैव ब्रह्मज्ञानस्य सिद्धत्वादिति भावः । एकदेशिना मोक्षस्योपासनासाध्यत्वं वदता उपासनाया मानसधर्मत्वात् मोक्षोऽप्युपासनासाध्यो धर्मफलमित्युक्तं भवेत्, तत्तु न सम्भवति । मोक्षस्य धर्मफलविलक्षणत्वात् । अतस्तदुपपत्तये ज्ञानफलत्वमेव मोक्षस्योपेयमिति प्रतिपादयन्नेकदेशिमतं निराकरोति । **नेति** । सङ्ग्रहवाक्यं विवृणोति । **शारीरमित्यादिना** । जैमिनिना 'अथातो धर्मजिज्ञासे'ति प्रतिज्ञाय 'चोदनालक्षणोऽर्थो' धर्म इति सूत्रेण अलौकिकश्रेयस्साधनं बलवदनिष्टाननुबन्धिधर्मशब्दप्रतिपाद्यमिति यथाश्रुतसूत्रपर्यालोचनया प्रतिपादितमित्यवगम्यते । उत्तरत्राधर्मस्यापि विचारिततया तस्यापि प्रतिज्ञासिद्ध्यर्थं सूत्रद्वयेऽपि अधर्म इति पदच्छेदं

कृत्वा आद्यसूत्रेणाधर्मविचारप्रतिज्ञा । द्वितीयसूत्रे अर्थशब्दस्य विपरीतलक्षणया अनर्थ इत्यर्थं स्वीकृत्य बलवदनिष्टसाधनमधर्मलक्षणं च लम्भनीयम् । धर्मफलं च कृत्स्नं अधर्मफलसहितमेव । न चाहंग्रहोपासनारूपधर्मवशादत्रैव सकलपापक्षयानन्तरं अर्चिरादिमार्गप्राप्त्या ब्राह्मलौकिकसुखानुभवकाले नाधर्मफलगन्धोऽस्तीति कथं कृत्स्नं धर्मफलमधर्मफलसहितम् । ततश्च न हवा इति श्रुतिर्ब्राह्मलौकिकशरीरव्यतिरिक्तविषया व्याख्येयेति वाच्यम् । तत्रापि 'स वै नैव रेमे सोऽबिभेदि'ति वचनपर्यालोचनया हिरण्यगर्भस्यापि दुःखावगमेन तदन्येषां कैमुतिकन्यायसिद्धतया अहंग्रहोपासकानामपि सशरीरताप्रयुक्तं किञ्चित्पापमनुवर्तत एव । अतः कर्माधीनशरीराणां पापफलमप्रियं नियतमेवेति 'न हवा' इति श्रुतिर्यथाश्रुतार्थैव । अयमर्थः ब्रह्मादिस्थावरान्तेषु प्रसिद्ध इत्यन्तेन भाष्येण दर्शितः । धर्माधर्मफलयोस्साहित्येऽपि मनुष्यलोकादारभ्योर्ध्वगतेषु पापफलं स्वल्पम् । पुण्यफलमधिकम् । अधोगतेषु पापफलमधिकम् । पुण्यफलं स्वल्पम् । मनुष्यलोकेषु तूभयफलं समानमित्येवं रूपं तारतम्यम् । धर्मफलेऽपि साधनादितारतम्याद्धर्मतारतम्येन फलतारतम्यम् । न चाहंग्रहोपासकानां सर्वेषां उपासनारूपस्य धर्मस्य क्वचिदुपासने अधिका गुणाः क्वचित् न्यूनाः । येन च बाल्यमारभ्य उपासनं कृतं, येन च मध्यमे वयस्युपासनमारब्धं तेन सर्वेणापि प्रायणपर्यन्तमेव कर्तव्यम् । तथा च कालन्यूनताधिक्ये एवंरूपेण तारतम्ये सत्यपि 'विकल्पोऽविशिष्टफलत्वादि'ति तुल्यफलता निरूपयिष्यते । अतः कथं साधनतारतम्यात् फलतारतम्यम् । न च साधनतारतम्यात् फलतारतम्यमित्यपि नियन्तुं शक्यम् । दुर्बलेन बलवता च क्रियमाणे लौकिककार्ये आयासतारतम्ये सत्यपि बुद्धिमता अबुद्धिमता च क्रियमाणे वेदाध्ययने आयासतारतम्ये सत्यपि वेतनवेदग्रहणयोस्तारतम्यादर्शनात् । अतः कृत्स्नं धर्मफलं साधनतारतम्यात् तरतमभावयुक्तमिति वक्तुमशक्यमिति साम्प्रतम् । साधनतारतम्यात् फलतारतम्यमित्युत्सर्गः । तस्य क्वचिद्दुर्बलबलवत्कृतसाधनस्थले प्रमाणानुसारेणापवादे सत्यपि अहंग्रहोपासकानां सर्वेषामपि साधनतारतम्येऽपि फलतारतम्यं नास्तीत्यत्र प्रमाणविशेषानवतारात् न तत्रापवाद आश्रीयते । तथा च श्रुतिः—अहंग्रहोपासकानामपि 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयती'ति फलतारतम्यं दर्शयति । यस्य ईषदपरिपक्वमुपासनं, तस्य सलोकता । अन्यस्य सायुज्यमिति हि तदर्थः । एवं गुणादितारतम्येऽपि द्रष्टव्यम् । 'विकल्पोऽविशिष्टफलत्वादि'त्यत्र तुल्यताप्रतिपादनं तु ब्रह्मलोकप्राप्तिरूपं सर्वेषामुपासकानां साधारणमित्येवमभिप्रायम् । अत एव 'एवं

मुक्तिफलानियम इत्यत्र भाष्य एव गुणादितारतम्याधीनं ब्राह्मलौकिकफलतारतम्यं निरूपयिष्यते। तत्सिद्धं धर्मफलं तरतमभावयुक्तम् । अमुमर्थं 'मनुष्यलोकादारभ्ये'ति भाष्यं प्रतिपादयति । इष्टं श्रौतं पूर्तं स्मार्तं दत्तं दानम् ।सम्पतत्यनेनास्माल्लोकादमुं लोकमिति सम्पातः पुण्यम् । यावत् पुण्यं वर्तते, तावत् स्वर्गे लोक उषित्वा अनन्तरं निवर्तन्ते । अस्माद्वचनात् पुण्यफलस्य कालकृतं तारतम्यं अवगम्यते । यद्यप्यहंग्रहोपासनानां परमात्मविषयाणां 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानादि'ति सूत्रेण क्रममुक्तिफलकता निरूपयिष्यते, तथापि साधनतारतम्याधीनमवान्तरफले भोगरूपे तारतम्यमस्त्येव श्रुतिस्मृतिन्यायप्रसिद्धमित्युक्तम् । तत्र शरीरावच्छेदेनैवानुभूयमानस्य सुखस्य दुःखसम्पृक्ततायां श्रुतिमुदाहरति—**न हवै सशरीरस्येति** । कर्मफलस्य सशरीरता 'तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यं नवतरं कल्याणतरं रूपं तनुते, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यं नवतरं कल्याणतरं रूपं कुरुते । पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वान्येषां वा भूतानामि'त्यादिश्रुतिप्रसिद्धा । एवं कर्मणा बध्यते जन्तुः, 'आब्रह्मभवनाल्लोकाः पुनरावृत्तिनोऽर्जुने'त्याद्यास्स्मृतयो यथासम्भवमुदाहार्याः । 'यत् कृतकं तदनित्यं, तरतमभावापन्नसाधनायत्तं फलं तरतमभावापन्नमि'त्यादयो न्यायाश्चोदाहर्तव्याः । मोक्षस्य कर्मफलवैलक्षण्यमाह—**अशरीरं वावसन्तमिति** । तथा 'विद्वान्नामरूपाद्विमुक्तः' 'स एषोऽकलोऽमृतो भवती'त्यादिवचनैर्यदशरीरत्वं मोक्षाख्यं प्रसिद्धं, तदेवेह प्रियाप्रियासंस्पर्शप्रयोजकतया उपादीयत इति भावः । ननु, मोक्षस्योपासनारूपधर्मकार्यत्वेऽभ्युपगम्यमाने अन्येषां धर्मकार्याणां शरीरादिसम्बन्धप्रयुक्तत्वदुःखसम्प्रयुक्तत्वतारतम्यानित्यत्वादिदोषदुष्टतया तत्तुल्यता मोक्षेऽपि स्यादित्यापादनं न सम्भवति । 'अशरीरं वाव सन्तमि' त्यादिश्रुतिविरोधादेव । न हि धर्मकार्यत्वमात्रेण सामान्येन अन्यत्र दृष्टं सर्वमापादयितुं शक्यम् । यत्किञ्चित्सामान्यमादाय सर्वत्र सर्वस्यापादयितुं शक्यतया अतिप्रसङ्गापादकत्वात् । न च नित्यस्य मोक्षस्योपासनारूपधर्मसाध्यत्वानुपपत्तिरिति वाच्यम् । मोक्षो हि ध्वंसविशेषः । देवदत्तस्य हि मोक्षो देवदत्तशरीरतत्प्रागभावासमानकालिको देवदत्तशरीरध्वंसः । मरणमात्रस्य मोक्षत्वव्यावर्तनाय देवदत्तशरीरतत्प्रागभावासमानकालिक इति विशेषणम् । देवदत्तशरीरासमानकालिक इत्युक्ते प्रलयकालिकदेवदत्तशरीरध्वंसेऽतिव्याप्तिस्स्यात् । ततः तत्प्रागभावेत्यादिविशेषणम् । तावत्युक्तेऽपि देवदत्तोपान्त्यशरीरध्वंसो यदि कदाचित् चरमशरीरोत्पत्तिकाले तदुत्पत्त्यनन्तरं वा स्यात्,तदा तत्रातिव्याप्तिः, तद्व्यावर्तनाय श-

रीरेति विशेषणम् । अन्यदीयशरीरतत्प्रागभावासमानकालिके देवदत्तशरीरध्वंसेऽतिव्याप्तिवारणाय आद्यं देवदत्तपदम् । देवदत्तमुक्तिकालिकेऽन्यदीयशरीरध्वंसे देवदत्तमोक्षत्ववारणाय द्वितीयं देवदत्तपदम् । स च ध्वंसः कर्मजन्योऽपि नित्यो भविष्यतीत्युपासनाजन्यत्वेऽभ्युपगम्यमाने कोऽपि दोषो नास्तीत्यभिप्रेत्य शङ्कते—**अशरीरत्वमेवेति** । **तस्य स्वाभाविकत्वादिति** । अयमाशयः—मोक्षो हि 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिपर्यालोचनया स्वप्रकाशानन्दस्वरूपब्रह्मात्मकोऽवगम्यते । अतो न शरीरध्वंस एव मोक्षः । सुखस्यैव पुरुषार्थतया ध्वंसस्यापुरुषार्थत्वाच्च । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत इत्यादौ च न शरीरध्वंसो निर्दिश्यते । अपि तु शरीरमिथ्यात्वघटकीभूतो योऽधिष्ठानात्मकोऽत्यन्ताभावः, स एव निर्दिश्यते । न च तस्याप्युपासनारूपधर्मसाध्यता सम्भवति । स्वाभाविकत्वादिति । स्वाभाविकत्वे अशरीरत्वस्य श्रुतिमुदाहरति । **अशरीरमिति**। अत्र शरीरावस्थानकाल एवाशरीरत्वप्रतिपादनात् काल्पनिकं सशरीरत्वं, स्वाभाविकमशरीरत्वमिति, गम्यते । महान्तं परिच्छेदत्रयशून्यम् । विभुं सर्वाधिष्ठानतया सर्वपदार्थसंसृष्टम् । शुभ्रः कलङ्करहितः । ननु, ब्रह्मस्वरूपस्यापि मोक्षस्य कर्मसाध्यता किं न स्यात् । अनादेरपि हि दुःखप्रागभावस्य प्रायश्चित्तसाध्यतादर्शनात् । न च प्रायश्चित्ताभावे अग्रिमक्षणे दुःखरूपः तद्ध्वंसः प्रसक्त इति प्रायश्चित्तपरिपाल्यत्वरूपे तत्साध्यत्वे सत्यपि ब्रह्मणः ध्वंसाप्रसक्तेः । न तादृश्यपि साध्यता सम्भवतीति वाच्यम् । तथासति मोक्षस्य ज्ञानसाध्यतापि न स्यात् । यदि तु ज्ञानाभवे 'ब्रह्मस्वरूपभूत आनन्दो मम नास्ती'ति भ्रमसिद्धं तदसत्त्वं प्रसक्तम् । अतो यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं, यदभावे यस्याभावः, तत्तस्य साध्यमिति ज्ञानाभावे ब्रह्मासत्त्वस्य भ्रमसिद्धस्य प्रसक्तेर्ज्ञानसाध्यत्वमुपपद्यत इत्युच्यते, तर्हि तथैवोपासनात्मकधर्मसाध्यता किं न स्यादिति चेन्न । एवं हि सति यथा दुःखोत्पत्तिप्रतिबन्धकतया प्रायश्चित्तपरिपाल्यत्वं तत्प्रागभावस्य । एवं मोक्षस्याप्यारोपितासत्त्वनिवृत्त्यात्मना साध्यता वक्तव्या । तत्र च न कर्मापेक्षा । आरोपितपदार्थव्यावृत्तेरधिष्ठानसाक्षात्कारमात्रायत्तत्वात्। अमुमर्थं मनसि निधाय उपसंहरति—**अत एवेति** । स्वाभाविकत्वादेवेत्यर्थः । यत्तु, श्रुतिविरोधे सति सामान्यतो दर्शनमात्रेण मोक्षस्य दुःखसंपृक्तत्वाद्यापादनं न सम्भवतीति, तन्न । येन हि वक्ष्यमाणया रीत्या मोक्षस्यापूर्वजन्यत्वे अनेकश्रुतिविरोधे सत्यप्याद्यव्युत्पत्तिग्रहस्य कार्यस्थल एव दर्शनमात्रेणोपासनापूर्वजन्यत्वमुपेयते, तं प्रति तदापादनं सम्भवत्येव । ननु, नित्यस्य ब्रह्मणो मो-

क्षरूपस्योत्पाद्यत्वासम्भवेऽपि प्रकारान्तरेण साध्यता स्यादित्याशङ्कां निराकर्तुं नित्यं वस्तु द्वेधा विभजते—**तत्रेति** । परिणामो नाम उपजनापायशालिन्योऽवस्थाः । **पृथिव्यादीति** । पृथिवी कदाचित्तृणवृक्षाद्यवस्थां प्राप्नोति । पुनस्तृणादिनाशे मृदवस्थाम् । अवस्थाद्वयेऽपि पृथिव्यनुस्यूतैव । अतस्सा परिणामिनित्या । एवं सर्वेषु परिणामिनित्येषु द्रष्टव्यम् । **साङ्ख्यानां गुणा इति** । सत्वरजस्तमांसि गुणाः । ते हि प्रलये साम्यात्मिकां प्रधानावस्थां प्राप्नुवन्ति। सृष्टौ तु गुणप्रधानभावेन सुखदुःखमोहाद्यात्मकतां प्राप्नुवन्ति । अवस्थाद्वयेऽपि गुणा अनुस्यूता एव । **इदं त्विति** । 'निष्कलं निष्क्रियं शान्तं कूटस्थमचलं ध्रुवमि'त्यादि श्रुतिस्मृतिपर्यालोचनया कूटस्थनित्यत्वमिति भावः । ननु, कूटस्थनित्यत्वाभ्युपगमे 'तदात्मानं स्वयमकुरुते'ति श्रुतिविरोध इत्याशङ्क्य 'वाचारम्भणं विकारो नामधेयमि'ति श्रुत्या कार्यवर्गस्यानृततया न पारमार्थिककूटस्थताविरोध इत्यभिप्रेत्योक्तम् । **पारमार्थिकमिति** । कूटस्थनित्यतया न विकार्यतया साध्यत्वमित्याह—**सर्वविक्रियारहितम्** । प्राप्यकर्मतानिवृत्तये—**व्योमवदिति** । ननु, प्रत्यगभिन्ने ब्रह्मणि अशनायादिदोषसम्भवात् दोषापनयनेन संस्कार्यता स्यादित्यत आह—**नित्यतृप्तमिति** । अशनायादिकं परमार्थतो नास्त्येव । आरोपितानां च तेषां निवृत्तिर्नोपासनामपेक्षते । अधिष्ठानसाक्षात्कारमात्रायत्तत्वात् । अथ गुणाधानेन संस्कार्यता स्यात्तत्राह—**निरवयवमिति** । किं प्रकाशाख्यो गुण आधातव्यः, उत ततोऽन्य एव । नाद्यः । स्वयञ्ज्योतिषः स्वतस्सिद्धप्रकाशत्वात् । निरवयवत्वं धर्मरहितत्वम् । ततश्च नान्योऽपि गुण आधातुं शक्यत इति भावः । यत्रेत्यादिना 'अन्यत्र धर्मादि'ति श्रुतिव्याख्याता । धर्मात्तत्कार्याच्च अन्यत् । एवमधर्मात्तत्कार्याच्चान्यत् । तदिदमुक्तम्—**यत्र धर्माधर्मौ सहकार्येणेति** । कृताकृतं वर्तमानम् । भव्यं भविष्यत् । तदिदमुक्तम्—**कालत्रयं चेति** । स्वपक्षे सूत्रस्वारस्यमाह—**अत इति** । यत उपासनासाध्यो मोक्षो न भवति, अतस्सूत्रकृता ब्रह्मैव विचार्यतया प्रतिज्ञातम् । उपासनासाध्यत्वे तु मोक्षस्य तदनुष्ठानोपयोगितया प्राधान्येन तद्विचार एव प्रतिज्ञातस्स्यादिति भावः । एवमुपासनासाध्यत्वे मोक्षस्यानित्यत्वादिदोषजातमापाद्योपासनाविषयकापूर्वसाध्यत्वाभ्युपगमे कालान्तरभाविता मोक्षस्य वक्तव्या । तथा च ज्ञानाव्यवहितोत्तरक्षणे मोक्षप्रतिपादकानि वचनानि विरुध्येरन्नित्याह—**अपि चेति** । परावरे उत्कृष्टनिकृष्टसर्ववस्त्वात्मके । **तदात्मानमेवावेदिति** । ब्रह्मणस्सर्वात्मकत्वं किंविषयकज्ञानादित्यभिप्रायेण 'किमु तद्ब्रह्मावेत्, यस्मात् तत्सर्वमभवदि'ति पृष्टे, तदात्मानमेवावेदित्युत्तरम् । **तद्धैतदिति** । तत् ब्रह्म एतत् प्र-

त्यग्रूपं पश्यन्वामदेवः ऋषिः 'अहं मनुरभवमि'त्यादिसूक्तं सर्वात्मकत्वप्रकाशकं प्रतिपेदे इत्यर्थः । अनेन सूक्तेन वामदेवस्य सर्वात्मकत्वं प्रकाश्यते । ततश्च प्रत्यगभिन्नब्रह्मज्ञानेनाविद्यायां निवृत्तायां स्वस्य सर्वात्मकत्वं साक्षात्कृत्य तत्प्रकाशकं सूक्तं स्मृतवानिति पर्यवसितोऽर्थः । **तिष्ठति गायत्र्योर्मध्ये** । तदर्थयोर्मध्य इत्यर्थः । एवमपूर्वद्वारत्वे मोक्षस्योच्यमाने अव्यवहितफलताप्रतिपादकवचनविरोधमुपन्यस्य अविद्यानिवृत्तिद्वारताप्रतिपादकवचनाविरोधमुपन्यस्यति—**त्वं हि नः पितेति** । भारद्वाजादीनां षण्णामृषीणां ब्रह्मोपदेशानन्तरं गुरुं प्रति प्रार्थनावचनमेतत् । परं पुनरावृत्तिशून्यम् । पारं अविद्याविनिर्मुक्तम् । तारयसि प्रापयसि । अतोऽत्यन्तहितकारितया त्वमेवास्माकं पितेत्यर्थः । **श्रुतं ह्येव म इति** । इदं ब्रह्मविद्यार्थमुपसन्नस्य नारदस्य सनत्कुमारं प्रति प्रार्थनावचनम् उपक्रमगतम् । शोकं शोकनिदानभूतं तम इत्यर्थः । तरति अतिक्रामति नाशयतीत्यर्थः । **शोकस्य पारं तारयत्विति** । शोकातीतमात्मानं प्रापयतु । **तस्मा इति** । तत्रैवेदमुपसंहारवचनम् । मृदितकषायाय निरस्तान्तःकरणदोषाय । मोक्षे अविद्यानिवृत्तिः द्वारभूतेत्यत्र वृद्धसम्मतिमाह—**दुःखजन्मेति** । मिथ्याज्ञानमनात्मसु देहादिष्वात्मत्वज्ञानम् । तस्य कार्यं रागादिर्दोषः । रागादेः पुण्यपापानुकूला प्रवृत्तिः । प्रवृत्तेः कार्यं तासु तासु योनिषु जन्म । तत्कार्यं दुःखम् । अञ्जोत्तरत्वं सूत्रनिर्देशक्रमानुसारेण द्रष्टव्यम् । ततश्च कारणनाशात् कार्यनाशः । मिथ्याज्ञाननिवृत्तिश्चैतत्सूत्रप्रणेतुस्तार्किकवृद्धस्य मते षोडशपदार्थतत्त्वज्ञानात् भवति । सिद्धान्ते तु प्रत्यगभिन्नब्रह्मसाक्षात्कारात् भवतीत्याह—**मिथ्याज्ञानापायश्चेति** । किञ्च येनोपासनमेव मोक्षाय विधीयत इत्युच्यते, तेनेदं वक्तव्यम् । किमिदं जीवब्रह्मणोरभेदेनोपासनं सम्पद्रूपम् । यथा ब्रह्मणो मनसि विश्वेदेवोपासनम् । तस्य सम्पद्रूपता च कर्मसम्बन्धोपासनारूपतया । कर्मसम्बन्धोपासनं हि 'अथ सम्पद' इति श्रुतिव्याख्यानावसरे बृहदारण्यकभाष्ये तद्वार्तिके च वर्णितं सम्पत्त्वेन । अल्पेषु कर्मस्वग्निहोत्रादिषु शास्त्रानुसारेण महतां कर्मणां बुद्ध्या सम्पादनं महतां कर्मणां यत् फलं, तत्कामनया क्रियमाणं सम्पदुपासनम् । अथवा महान्ति अश्वमेधादीनि कर्माणि कार्त्स्न्येनानुष्ठातुमशक्तानां सम्भवदङ्गसाहित्येनानुतिष्ठतां अङ्गलोपकृतवैगुण्यपरिहारार्थं शास्त्रानुसारेण फलसिद्धये तदङ्गाश्रितं क्रियमाणमुपासनं साङ्गस्य कर्मणो यत् फलम्, तत्फलसम्पादकतया सम्पन्नामकं भवतीति । तथा च वार्तिकं—'फलवत्कर्मणां क्वापि किञ्चित् सामान्यसंश्रयात् । सम्पत्तिर्महतां सम्पदल्पीयः कर्मसूच्यते । यदि वा तत्फलस्यैव कि-

ञ्चित्सामान्यसंश्रयात् । सम्पादनं भवेत् सम्पदग्निहोत्रादिकर्मणि । नातिभारोऽस्ति नो बुद्धेश्शास्त्रं चेत, तत्परं भवेत् । विदुषां श्रेयसोऽतोऽध्वा न क्वचिन्प्रतिहन्यते ॥' इति । ततश्च 'यथा याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता वै विश्वेदेवा अनन्तमेव स तेन लोकं जयती'ति वचनेन कर्मगोपनसाधने ब्रह्मणो मनसि विहितमुपासनं यथा सम्पद्रूपं, तथा कर्मकर्तृतया कर्माङ्गभूत आत्मनि 'आत्मा वा अरे द्रष्टव्य' इति वचनेन विधीयमानमुपासनं सम्पद्रूपम् । अथवा अध्यासरूपं कर्मसम्बन्धं विहायैवान्यस्मिन्नन्यदृष्टिरध्यासः । यथा 'मनो ब्रह्मेत्या'दिना विधीयमानमध्यासरूपं, एवं 'तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मी'ति विधीयमानं अध्यासरूपम् । 'आरोप्यप्रधाना सम्पत, अधिष्ठानप्रधानोऽध्यास' इति अध्याससम्पदोर्विभागः कल्पतरौ दर्शितः । अथवा विशिष्टक्रियानिमित्तम् । यथा वायुर्वावसंवर्गः यदा वा अग्निरुद्वायति वायुमेवाप्येती, यदा सूर्योऽस्तमेति वायुमेवाप्येति, यदा चन्द्रोऽस्तमेति वायुमेवाप्येति, यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् । अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणम्मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेष्वि'ति प्रलयविशेषे अग्न्यादिनिवृत्तावपि वायोर्विद्यमानतया स्वापकाले वागादिनिवृत्तावपि प्राणस्य विद्यमानतया तयोः 'वृजीवर्जन' इति धातुनिष्पन्नेन वृङ्क्त इत्यनेन वर्जनापरपर्यायसंहरणक्रियाकर्तृत्वेन संवर्गत्वं निरूप्यते। न रूपेण ध्येयत्वं विवक्ष्यते । तथा 'अहम्ब्रह्मास्मीत्यादिवाक्यैश्शरीरादिबृम्हणरूपया क्रियया जीवस्य ब्रह्मत्वेनोपासनम् । अथवा पत्न्यवेक्षितमाज्यं भवतीत्यादिवाक्यैर्विधीयमानमीक्षणमाज्यसंस्कारतया यथा कर्माङ्गं, तथा आत्मा वा अरे द्रष्टव्य इत्यादिवाक्यैर्विधीयमानमात्मदर्शनं क्रतुकर्तृसंस्कारभूतम् । तत्रानारभ्याधीतस्यात्मज्ञानस्य यथा क्रतुकर्तृसंस्कारकतया क्रत्वङ्गत्वं नास्ति, तथा 'पुरुषार्थोऽतश्शब्दादि' त्यधिकरणे स्पष्टं भविष्यति। सम्पत्पक्षेऽध्यासपक्षे चारोपितो जीवब्रह्मणोरभेदः । विशिष्टक्रियानिमित्तत्वपक्षे च न कथञ्चिदपि जीवस्य परमात्माभेदः । अपि तु यच्छरीरादिपरिणमयितृत्वं जीवस्य, तत्त्वेन उपासनम् । जीवे ब्रह्मपदसामानाधिकरण्यस्य परिणामात्मकबृम्हणक्रियाप्रयोजककर्तृत्वप्रयुक्तत्वात् । तेषु च सर्वेषु गतिसामान्यादिरूपतात्पर्यलिङ्गोपबृम्हितजीवब्रह्माभेदप्रतिपत्तिपरवाक्यविरोधः । तज्ज्ञानाच्चाविद्यानिवृत्तिद्वारा ब्रह्मात्मतावस्थितिरूपफलप्रतिपादकवाक्य-

विरोधश्च स्यादित्याह—**न चेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपमित्यादिना न सामञ्जस्येन उपपद्येरन्नित्यन्तेन । हृदयग्रन्थिरिति** । 'हृदि ह्येष आत्मा तस्यैतदेव निरुक्तं हृद्ययमिति च तस्माद्धृदयमि'ति श्रौतनिर्वचनानुसारेण हृच्छब्दप्रतिपाद्यमनोविशिष्ट आत्मा हृदयशब्दार्थः । ततश्चान्तःकरणैक्याध्यासमापन्न आत्मैव कर्तृत्वादिबन्धापादकतया ग्रन्थिः । **न पुरुषव्यापारतन्त्रेति** । उपासनात्मकं हि ज्ञानं यागादिवत् पुरुषकृतिसाध्यम् । न तु प्रमाणज्ञानम् । अनाहार्यभ्रमवत् तस्य पुरुषकृत्यन्वयव्यतिरेकानुविधानाभावात्। ज्ञानं द्विविधं आहार्यमनाहार्यं च । उभयमपि प्रमाणरूपं अप्रमाणरूपं च । 'योषा वाव गौतमाग्निरि'त्यप्रमाणरूपमाहार्यज्ञानम् । यथावस्थितदेवतास्वरूपध्यानं तु प्रमाणरूपमाहार्यम् । उभयविधमप्याहार्यं पुरुषकृतिसाध्यम् । अनाहार्यभ्रमरूपं तु पुरुषकृत्यसाध्यमपि दोषमात्रायत्तं न वस्तुसत्तामपेक्षत इति न वस्तुतन्त्रम् । घटादिगोचरप्रमाणज्ञानं तु अनाहार्यतया न पुरुषकृतिसाध्यम् । किं तु यादृशमाकारमुल्लिखति, तस्य व्यावहारिकीं सत्तामपेक्षत इति वस्तुतन्त्रमित्युच्यते । एवं ब्रह्मज्ञानमप्यनाहार्यज्ञानकरणत्वेन क्लृप्ताच्छब्दप्रमाणात् जायमानमसति बाधे प्रमाणरूपं यादृशमाकारमुल्लिखति, तस्य सत्तामपेक्षत इति वस्तुतन्त्रमित्युच्यते । अतो न प्रमाणरूपं ब्रह्मज्ञानं विधेयमिति न प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्म समर्प्यत इति शक्यं वक्तुम् । एवं विधेयज्ञानविषयतया शास्त्रेण ब्रह्म समर्प्यत इति यत्पूर्वपक्षिणोक्तं, तत्र प्रमाणज्ञानं विधातुं न शक्यत इत्युक्तम् । ज्ञानविषयत्वमपि यदि वृत्तिप्रतिफलितचैतन्यविषयत्वं, तदा विरोध इति वक्तुं तं पक्षमुपाक्षिप्य निषेधति । **न चेति** । अविदितादधि अविदितादन्यत् । ननु, न प्रमाणज्ञानं विधेयमित्युच्यते । किं तु निदिध्यासितव्य इत्यादिभिर्वाक्यैरुपासनारूपं ज्ञानमेव विधेयम् । तच्छेषतया च ब्रह्म प्रतिपाद्यत इत्याशङ्क्योपक्रमाद्यावधृतब्रह्मप्राधान्यनिर्वाहाय कृत्स्नोपनिषद्वाक्यं ब्रह्मप्रधानमेव । 'निदिध्यासितव्य' इत्यादिवाक्यैस्तु ब्रह्मसाक्षात्कारोपयोगितयैव उपासना विधीयते । तस्य च साक्षात्कारद्वारा ब्रह्मण्येव शेषतया ब्रह्मप्राधान्यविरोधिता नेत्यमुमर्थं मनसि निधायोपासनाविषयत्वमपि यद्युपासनावृत्त्यभिव्यक्तचैतन्यविषयत्वं, तदा श्रुतिविरोधमाह—**तथोपास्तिक्रियेति** । 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः । न विद्मो न विजानीमो यथैतदनुशिष्यादि'ति पूर्ववाक्येनाविषयत्वं ब्रह्मण उपन्यस्य ज्ञानाविषयत्वे शास्त्रप्रमाणकत्वं ब्रह्मणो न स्यात् । शास्त्रजन्यज्ञानविषयत्वं हि शास्त्रप्रमाणकत्वमिति शङ्कते—**अविषयत्व इति** । शास्त्रजन्यवृत्तिप्रतिफलितचैतन्याविषयत्वेऽपि अविद्यानिवृत्त्युपयोगितया शास्त्रजन्यवृत्तिविषय-

त्वमुपेयते । अतो न विरोध इति परिहरति । **न अविद्याकल्पितेति** । **यस्यामतमिति** । अत्र मतत्वामतत्वादीनां विरोधपरिहारार्थं मननवृत्तिप्रतिफलितचैतन्यावि षयत्वममतत्वप्रतिपादनालम्बनम् । मननवृत्तिविषयत्वं मतत्वप्रतिपादनालम्बनं व्या ख्येयम । एवमविज्ञातत्वादावपि । एवं च यत्पूर्वपक्षिणोक्तमुपासनासाध्यस्यापि मोक्षस्यामृतत्वश्रुतिबलादेव नित्यता भविष्यतीति, तन्न । नित्यस्यापि मोक्षस्य कण्ठचामीकरन्यायेन अप्राप्तत्वभ्रमव्युदासेन साध्यत्वोपपत्तौ 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति श्रुतिपरिगृहीतस्य 'यत् कृतकं, तदनित्यमि'ति न्यायस्य बाधं विनैव अमृतत्वश्रुतिनयनोपपत्तौ तद्विरोधस्यानुचितत्वादित्यभिप्रेत्याह—**अत इति** । इदं तु पारमार्थिकमित्यादिना यद्ब्रह्मस्वरूपस्य मोक्षस्य उत्पाद्यादिचतुर्विधद्रव्यविलक्षणत्वमुक्तं, तत्प्रपञ्चयति । **यस्य तूत्पाद्यो मोक्ष इत्यादिना क्रियाया गन्धमात्रस्यापि अनुप्रवेशः इह नोपपद्यते इत्यन्तेन** । **गुणाधानेनेति** । यथा मुखस्य ताम्बूलचर्वणादिना । **दोषापनयनेनेति** । स्नानादिना शरीरादेः । परमार्थगत्या ब्रह्मणि गुणाधानं न सम्भवति । वस्तुतो निर्धर्मत्वादित्याह—**अनाधेयातिशयेति** । परमार्थगत्या ब्रह्मणि दोषाभावात् दोषापनयनमपि न सम्भवति । तदाह—**नित्यशुद्धेति** । ननु, निर्धर्मकस्यापि ब्रह्मणोऽपारमार्थिकदोषापनयनेन स्वरूपाभिव्यक्तिरूपः संस्कारः सम्भवतीति शङ्कते—**स्वात्मधर्म एव सन्निति** । जन्यधर्मानाश्रयत्वेऽपि नित्यो धर्मो मोक्षाख्यो भविष्यतीत्यभिप्रायेण धर्मशब्दः । स्वरूपपरो वा । आरोपितावरणस्य ज्ञानेनैव निवृत्तेः क्रियापेक्षैव नास्ति । अपेक्ष्यमाणापि अविकार्यब्रह्मगता न सम्भवति । अन्याश्रया तु क्रिया अन्यत्र मलनिवृत्तौ नोपयुज्यते । यद्यपीष्टकाचूर्णस्य दर्पणेन संयोगविभागप्रचयानुकूलो व्यापारो हस्तचालनतदनुकूलयत्नादिरूपोऽन्यगतोऽपि भवति, तथापि मलापकर्षणे पुरुषव्यापारस्य द्वारीभूतो यस्संयोगविभागप्रचयः, स दर्पणगतो भवत्येव । नैवं ब्रह्मणि सम्भवतीति परिहरति—**न क्रियाश्रयत्वानुपपत्तेरिति** । देहगतया क्रियया देहिनः संस्कारदर्शनादन्यगतया क्रिययान्यस्य संस्कारो न सम्भवतीति न नियन्तुं शक्यमित्याशङ्क्य तत्राप्यन्तःकरणाध्यासविशिष्टस्यैव स्नानाचमनादिप्रयोजकयत्नाश्रयतया देहैक्याध्यासमापन्नस्य च स्नानाद्याश्रयतया प्रत्यक्षसिद्धतया नोक्तदोष इत्याह—**नन्वित्यादिना** । विशिष्टस्यैव क्रियाजन्यफलभोक्तृत्वे श्रुतिमाह—**तयोरिति** । जीवपरमेश्वरयोर्मध्ये जीवः कर्मफलं पिप्पलशब्दोदितमत्ति । ईश्वरस्तु शुद्धसाक्षिरूपः परमार्थगत्या अभुञ्जान एवाभिचाकशीति । स्वप्रकाशतया वर्तते । **भोक्तेत्याहुरिति** । इतिः द्वितीयार्थे । भोक्तारमाहुरित्यर्थः ।

आत्मेन्द्रियेत्यत्रात्मशब्दः शरीरपरः । **एको देव** इति । यथा आकाशादिनिबिडेषु भित्त्यादिषु अन्तरननुप्रविश्यैव सर्वभूतसंयोगितामात्रेण व्यापको भवति । नैवं परमात्मा । अपि तु सर्वेषां भूतानां अन्तरात्मा । सर्वाधिष्ठानस्यात्मनः अन्तर्बहिः सर्वत्र सम्बन्धोऽस्तीति भावः । सर्वभूताधिवासत्वं सर्वपरिपालकत्वम् । तच्च पुण्यपापात्मककर्मफलव्यवस्थापकतयेति प्रतिपादयितुं—**कर्माध्यक्ष इति** । य एको देवः सर्वव्यापित्वादिधर्मविशिष्टः, स एव जीवरूपेण सर्वेषु भूतेषु गूढ इति योजना । ईश्वररूपेण सर्वव्यापित्वादयो गुणाः प्रसञ्जिताः । तन्निषेधार्थं—**निर्गुण इति** । जीवरूपेण सर्वभूतगूढत्वं सर्वभूताभिमानशालित्वं यत् प्रसक्तं, तद्व्यावृत्त्यर्थं—**साक्षीति** । तस्य व्याख्या—**चेता केवल इति** । अभिमानरहित एव सन् तदवभासक इत्यर्थः । **सपर्यगादिति** । शुक्रमित्यादौ प्रथमार्थे द्वितीया । शुक्राद्यात्मकः स पर्यगात् व्याप्तवानित्यर्थः । शुक्रः स्वप्रकाशः । अस्नाविरं स्नावाः सिराः, तद्रहितम् । अव्रणं अस्नाविरमित्येव कायनिषेधे सिद्धे पुनस्तन्निषेधो लीलाधृतदिव्यविग्रहस्यापि अनृततापतिपादनार्थः । तथा च विश्वरूपधरस्य परमात्मनो वचनं 'मायाह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि ॥' इति शरीरोपादानभूताविद्याराहित्याय । **शुद्धमिति** । तन्निमित्तराहित्याय—**अपापविद्धमिति** । यत् पूर्वमुक्तं—अनाधेयातिशयत्वं निर्विशेषत्वं च ब्रह्मणः, तत्रैतौ मन्त्रौ प्रमाणमित्याह—**इति चैतौ मन्त्राविति** । पूर्वमात्मनो वृत्तिप्रतिफलितचैतन्याविषयत्वेऽपि वृत्तिविषयत्वमुक्तं, तदत्रोपसंहृतम् । **ज्ञानमेकं मुक्त्वेति** । तत्र लब्धावसरो ध्यानान्तर्गतानां मानसवृत्तीनां ज्ञानरूपाणां क्रियात्वेन यथाविधेयता । एवं प्रमाणवृत्तीनामपि किं न स्यात् । ततश्च ज्ञानविधिशेषतयैव ब्रह्मप्रतिपाद्यत इति शङ्कते—**ननु ज्ञानमिति** । यथा हि ध्यानान्तर्गतवृत्तीनां च प्रमाणवृत्तीनां च मानसत्वाविशेषेऽपि एकत्र वस्त्वनपेक्षा । अन्यत्र तदपेक्षा । एवं ध्यानवृत्तीनां पुरुषकृतिसाध्यत्वेन विधेयत्वेऽपि न प्रमाणवृत्तेर्विधेयता । पुरुषकृतिसाध्यत्वादित्याह—**न वैलक्षण्यादिति** । **यत्रेति** । येत्यर्थः । वषट्करिष्यन् होता । किं चिज्ज्ञानं यथावस्थितवस्त्वनुसार्यपि वस्तुनिरपेक्षत्वेऽपि । तदभिप्रायेण यस्यै देवताया इति सन्ध्यां मनसेति चोदाहरणद्वयम् । किञ्चित्पुनर्ध्यानं वस्त्वननुसार्यपि भवति । तदनुसारेण पुरुषो वा वेत्युदाहरणम् । अतो ध्यानस्य वस्त्वनुसारे तदननुसारे च न निर्बन्धः । कृतिसाध्यत्वं तु नियतमेवेति विधेयत्वमुपपद्यते । प्रमाणज्ञानं तु कृत्यसाध्यतया न विधेयमिति तात्पर्यम् । ज्ञानस्याविधेयत्वे 'आत्मा वा अरे द्रष्टव्य इति तव्य प्रत्ययः किमर्थ-

स्स्यादिति चेत् यो हि पुरुषः बाहिर्मुखः प्रवर्तते, तस्यात्मज्ञानानुकूलवेदान्तवाक्यश्रवणादौ त्वदभिलषितं यद्दुःखं विना सुखेनावस्थानं तस्मिन्नात्मदर्शनमेव साधनं न बाह्यवस्तुदर्शनमिति प्रतिपादनायात्मैव दर्शनार्हः नान्यदिति प्रतिपादयन् रुच्यतिशयं सम्पादयतीति अर्हार्थो भविष्यति । अमुमर्थं शङ्कासमाधानाभ्यां व्युत्पादयति । **तद्विषय इति** । आत्मानं चेद्विजानीयादितिलिङ् ज्ञाने श्रूयते । **अनियोज्यविषयत्वादिति** । नियोज्यरहितत्वात् विषयरहितत्वाच्चेत्यर्थः । ममेदं कार्यमित्यवगतिमान्नियोज्यो भवति । कृतिसाध्यश्च विधिविषयो भवति । ज्ञानस्य च कृत्यसाध्यत्वात् नोभयमपि सम्भवतीति भावः । ज्ञानस्याविधेयत्वेऽपि तत्र श्रूयमाणानां लिङादीनां हेतुहेतुमद्भावप्रतिपादकत्वं अर्हार्थत्वं च यथायथं भविष्यति । प्ररोचनायेति व्युत्पाद्य यदेकदेशिनोक्तं—ज्ञानविधिपरत्वाभावे प्रवृत्तिनिवृत्तिप्रयोजनकता वाक्यस्य न स्यादिति, तत्रेष्टापत्तिमाह—**यद्पीत्यादिना** । **शरीरमनुसंज्वरेदिति** । स्थूलसूक्ष्मकारणरूपशरीरत्रयाध्यासमापन्नो बाह्यानि वस्तूनि कामयमानो जन्तुः काम्यमानपदार्थलाभे तापमनुभवति । आत्मैक्यसाक्षात्कारेण तु तदध्यासनिवृत्तौ न तापत्रयमनुभवतीत्यर्थः कार्यविधिप्रयुक्तमेव ब्रह्म प्रतिपाद्यत इति यदेकदेशिनोक्तं, तदनूद्य निराकरोति—**यद्पीति** । **तन्नेति** । विधिशेषतयैव ब्रह्म प्रतिपाद्यत इति किं कार्यान्वित एव पदानां शक्तिरिति नियममनुसृत्योच्यते, उत वेदान्तवाक्यपर्यालोचनयैव कार्यशेषतया ब्रह्मावगम्यते । नाद्यः । कार्यान्विते शक्तिरिति नियमासम्भवात् । तथात्वे सिद्धार्थपराणां काव्यानां बोधकता न स्यात् । न चाद्यव्युत्पत्तिग्रहानुसारेण तत्रापि कार्यवाचकपदाध्याहार एव । तदभावे तु असंसर्गाग्रह एवेति वाच्यम् । आद्यव्युत्पत्तिस्थले बालेन स्वप्रवृत्तिदृष्टान्तेन प्रयोज्यवृद्धे कार्यान्वितपदार्थज्ञानमनुमितमिति तत्रैव शक्तिर्गृह्यत इति वक्तव्यम् । तथा सति स्वस्य यथा कार्यान्वितपदार्थज्ञानं शुद्धपदार्थज्ञानपूर्वकम् । एवं प्रयोज्यवृद्धस्य कार्यान्वितपदार्थज्ञानमपि शुद्धपदार्थज्ञानपूर्वकमित्यनुमितिरपि सम्भवति । ततश्च कार्यान्वितपदार्थज्ञानमूलतया अनुमितं यच्छुद्धपदार्थज्ञानं तत्रैव शक्तिग्रहः बालस्य किं न स्यात् । शक्तिग्रहोपयोगिकार्यान्वितार्थज्ञानानुकुला शुद्धपदार्थोपस्थितिरेव प्राभाकरैः निमित्तावस्थोच्यते। यथोक्तं निबन्धनपञ्चिकायां—'ऋजुविमलायामनन्वितावस्था हि सम्बन्धोपायतां गच्छन्ती वाक्यार्थप्रतिपत्तौ निमित्तम् । एवं हि सम्बन्धग्रहणम् । अयमर्थोऽनेन शब्देनाकाङ्क्षितसन्निहितयोग्यार्थान्तरान्वितस्सन् अभिधीयत इति । अत्रायमर्थ इत्यनन्वितावस्थस्य शुद्धस्य गवादेरुपस्थितिरुक्ता । ननु, या प्रयोज्यवृद्धगता शुद्ध-

पदार्थोपस्थितिरनुमिता, सा यद्यपि शब्दजन्यैव कारणान्तरानिरूपणात्, तथापि न सा साक्षात्प्रवृत्तिकारणम् । किं तु कार्यान्वितपदार्थोपस्थितिरेव । या च निमित्तावस्थारूपा पदार्थोपस्थितिः, सा तु बालस्य प्रत्यक्षरूपैव । अतो नोपस्थितिमात्रं शुद्धपदार्थस्य वर्तत इति कृत्वा तत्र शक्तिर्ग्रहीतुं शक्यते । अतः प्रवृत्तिजनिका-शब्दजन्योपस्थितिः कार्यान्वितविषया या बालेनानुमिता तस्यामेव शब्दस्य शक्ति-र्बालेन कल्प्यत इति चेत्तर्हि ममेदमिदानीं कार्यमित्येव ज्ञानं साक्षात्प्रवृत्तिजनका मिति तत्रैव ज्ञाने वाक्यस्य शक्तिग्रहस्स्यात् । अथोच्येत शब्दादयमर्थः । कार्यं इति ज्ञाने जाते मदंशादिघटितं कार्यताज्ञानं अनुमित्यात्मकं भविष्यतीति न मदंशाद्यन्विते तत्र शक्तिः शब्दस्य कल्प्यत इति, तर्हि शुद्धा एव पदार्थाः पदैरुपस्थाप्यन्ते शक्त्या । कार्यान्वयज्ञानं तु कार्यवाचकपदसमभिव्याहारात् भविष्यतीति न कार्यान्वयेऽपि पदानां शक्तिः कल्पनीया । अपि च कार्यान्विततया बालेन पदार्थज्ञानमनुमितमिति तत्र शक्तिग्रहकल्पने कर्मकारकाद्यन्वितपदार्थज्ञानमपि बालेनानुमितमिति तत्कारकान्वितेऽपि शक्तिस्स्यात् यदि तु तत्तत्कारकान्वयव्यतिरेकेणापि शाब्दबोधदर्शनात् न तत्तदन्वये शक्तिः कल्प्यते । तथा सति कार्यान्वयं विहायापि सिद्धार्थमात्रे वाक्यप्रयोगदर्शनात् । तदन्वयेऽपि शक्तिर्मास्तु । यदि तु आद्यव्युत्पत्तिग्रहस्थले कार्यान्वयो नियत इत्येतावन्मात्रेण तदन्विते शक्तिः कल्प्येत । तथा सति प्रथमव्युत्पत्तिग्रहस्थले प्रमाणान्तरजन्योपस्थितिविषयत्वं नियतमिति प्रमाणान्तरजन्योपस्थितिविषयेष्वेव शक्तिः पदानां स्यात् । यदि तु प्रमाणान्तरजन्योपस्थितिः शक्तिग्रहे निमित्तमात्रं न तु शक्त्यवच्छेदिका, तर्हिकार्यान्वयोऽपि तथास्तु । तस्मात् प्रमाणान्तरोपस्थितिविषयत्वमुपाधीकृत्य यथा लौकिकवैदिकपदार्थसाधारण्येन शक्तिग्रहः तथा कार्यान्वयमुपाधीकृत्य केवलसिद्धार्थप्रतिपादककाव्यादिसाधारण्येन शुद्ध एव पदार्थे शक्तिः । न तु कार्यान्वित इति न सिद्धपदार्थसमभिव्याहारेषु कार्यपदाध्याहारो वा, असंसर्गाग्रहो वा कल्पयितुं शक्यते । वृद्धव्यवहारविरोधात् । अपि च कार्यान्वयं विहायापि आद्यव्युत्पत्तिग्रहो भवतीति आद्यव्युत्पत्तिग्रहे सर्वत्र कार्यान्वयो नियत इत्येतदपि नास्ति । मात्रादिभिरङ्गुल्या निर्दिश्य घटादिशब्दोच्चारणे स्तनन्धयस्य तत्र शक्तिग्रहदर्शनात् । न चाङ्गुलीनिर्देशपूर्वकं शब्दोच्चारणं शक्तिग्रहार्थमिति बालेन प्रागज्ञातमिति कथं शक्तिग्रह इति वाच्यम् । फलबलेन जन्मान्तरीयसंस्कारोद्बोधकल्पनात् । अङ्गुल्या घटादिकं निर्दिश्य शब्दोच्चारणे क्रियमाणे बालानामनन्तरं तत्तच्छब्दस्य तस्मिंस्तस्मिन् अर्थे व्यवहारदर्शनेन अन्यो बालोऽवधारयति । अङ्गुलीनिर्देश-

पूर्वकं शब्दोच्चारणं शक्तिग्रहार्थमिति । स च तत्संस्कारयुक्तो जन्मान्तरं प्राप्य-मात्रादिभिरङ्गुलीनिर्देशपूर्वकं व्युत्पाद्यमानो जन्मान्तरीयसंस्कारस्योद्बोधादयमङ्गुलीनिर्देशपूर्वकं शब्दप्रयोगः शक्तिग्रहार्थ इति स्मृत्वा तत्र शक्तिं गृह्णातीति । प्रवाहानादितया तथा व्युत्पाद्यमानस्य आद्यश्शक्तिग्रहः उक्तप्रकारेण सिद्धार्थेऽपि भवति । एवं पुत्रस्ते जात इति वाक्यप्रयोगकालेऽपि हर्षपूर्वकस्नानाचरणं दृष्ट्वा पुत्रजन्म हर्षपूर्वकस्नानाचरणे निमित्तमिति जन्मान्तर संस्कारोद्बोधात् यस्य स्मृतिर्भवति तेन पुत्रस्ते जात इति वाक्यं पुत्रजन्मप्रतिपादकमिति निर्णीयत एव । अतः प्रथमव्युत्पत्तिग्रहः सिद्धस्थलेऽपि भवतीति न कार्यान्वित एव पदानां शक्तिः । यत्रत्वाख्यातपदान्वयः तत्र परं तत्प्रयुक्तकार्यान्वयो भासत इति अन्यलभ्यत्वादपि न पदानां तत्र शक्तिः कल्पनीया । नन्वेवमन्वितेऽपि पदानां शक्तिर्न-स्यात् अन्यलभ्यत्वाविशेषादिति चेदस्तु को दोषः । अथ कथमन्यलभ्यत्वम् । आख्यातपदवत् कार्यांशे पदान्तरस्यान्वयांशे अभावात् । ननु, मास्तु पदान्तरं पदार्थोपस्थापकैरेव पदैराकांक्षादिसान्निध्यादशक्य एवान्वयः पदार्थानामनुभाव्यते । न च प्रमाणभूतस्य शब्दस्य प्रमेयेनान्वयेन सहासम्बन्धे कथं बोधकतेति वाच्यम् । धूमरूपेणानुमानप्रमाणेन व्याप्तिरूपसम्बन्धाभावेऽपि यथा पक्षसाध्य-संसर्गोऽनुभाव्यते, तथा शब्देनापि शक्तिरूपसम्बन्धाभावेऽपि अन्वयबोधो भविष्यति । यदि तु तत्र पक्षधर्मताबलात् तत्भानमिति तदा प्रकृतेऽप्याकांक्षादिबलादन्वयभानमस्तु ; न च शब्दस्य वृत्तिविषय एव बोधजनकतेति वृत्तिं विना कथमन्वयस्य शाब्दबोधविषयतेति वाच्यम् । भूतले घटो न, भूतलं घटो नेत्यत्यन्ताभावस्थले घटतदभावयोः प्रतियोग्यनुयोगिभावस्यान्योन्याभावस्थलेऽधिकरणाधेयभावस्य प्रतियोग्यनुयोगिभावस्य चाशक्यस्यैव शब्दात्प्रतीतेरिति चेन्न । वृत्त्यविषये शब्दस्याबोधकत्वात् । न च प्रकारतया विशेष्यतया वा यस्योपस्थितिश्शाब्दे तस्यैव वृत्तिविषयत्वम् ! न तु शाब्दविषयस्य सर्वस्यापीति वाच्यम् । गौरवेण प्रकारताद्वेर्नियमशरीरे प्रवेशयितुमशक्यत्वादनुमाने नायं नियम इति न तत्र पक्षसंसर्गांशेऽपि व्याप्तिरपेक्ष्यते । साध्यांश एव हेतोर्व्याप्तिरपेक्ष्यते । नान्यत्र । शब्दे तु विशिष्यस्वप्रमेयवृत्तिरपेक्ष्यत इति नियमः । अत एव पक्षसाध्ययोस्संसर्गबोधने शब्देन क्रियमाणे मतुप्प्रयुज्यते 'पर्वतो वन्हिमानि' ति । न च 'भूतले घटो ने'ति निषेधे प्रतियोग्यनुयोगिभावोऽशक्य एव भासत इति वाच्यम् । अनुयोगितायां नञश्शक्तिस्वीकारात् । अत एवाभावपदे अनुयोगिताया अशक्यतया तत्प्रतिपादनाय घटशब्दानन्तरं तत्र षष्ठीप्रयोगो दृश्यते । ततश्च घटानुयोग्यभाव इ-

ति शाब्दबोधः शक्यविषय एव । एवं भूतले घटो नेति नञा भूतलाधेयो घटानुयोगी भेद इति प्रतिपादनार्थमाधेयतानुयोगितासम्पुटित एव भेदोऽभिधीयते । अन्यथा भूतले घटस्य भेद इति प्रयोग इव षष्ठीसप्तमीप्रयोगः प्रसज्येत । अतश्शाब्दबोधविषयस्य वृत्तिविषयत्वं नियतमिति अन्वयांशे शक्त्यभावे कथं तद्बोधस्स्यादिति चेत्, उच्यते—शक्त्यभावेप्यन्वितस्य लक्षणया बोधो भविष्यति । ततश्च देवदत्तः पचतीत्यत्र पाकानुकूलकृत्याश्रयो देवदत्त इति वा देवदत्तकर्तृकः पाकानुकूलो व्यापार इति वा यथायथं मतभेदेन तत्तद्रूपेण विशिष्टः प्रधानपदार्थो लक्षणीयः । एवं च गुणभूतपदार्थानां तत्तत्संसर्गाणां च भेदेऽपि प्रधानपदार्थैक्याद्वाक्यभेदः । 'अर्थैकत्वादेकं वाक्यमि' त्यत्र प्रधानपदार्थैक्यस्यैवैकवाक्यताप्रयोजकता विवक्षिता । इयं च विशिष्टे वाक्यार्थे लक्षणा प्रधानपदस्यैव । यदि पदस्यैव वृत्तिर्लक्षणेति निर्बन्धः । यदित्वर्थवादवाक्यानुसारेण सर्वेषामपि सम्भूयाप्यर्थलक्षकत्वमुपेयते । तदा सर्वाण्यपि वाक्यान्तर्गतानि पदानि विशिष्टार्थं लक्षयन्तीत्यस्तु । न तत्र निर्बन्धः । ननु, तथा सति लक्ष्यस्यान्वयस्य शक्यैः पदार्थैः सम्बन्धो वक्तव्यः । शक्यसम्बन्धरूपत्वात् लक्षणायाः । न चान्वयेनान्वयान्तरमस्ति । शक्यार्थग्रहणानुपपत्तिश्च लक्षणाबीजम् । ततश्च शक्यानामर्थानां शाब्दे अभानं प्राप्नोति । यथा अर्थवादपदानां प्राशस्त्यलक्षणास्थले । किं च शक्यसम्बन्धोऽपि ज्ञात एव लाक्षणिकपदार्थोपस्थितौ प्रयोजकः । इह तु वाक्यार्थस्यापूर्वत्वात् कथं तदज्ञाने तेन सह वाक्यार्थसम्बन्धज्ञानम् । उच्यते—अन्वयस्यान्वयान्तरं नास्तीत्येतदसङ्गतम् । 'एतस्यानेन पदार्थेन सहायमन्वय' इति प्रतीतिसिद्धोऽस्ति कश्चिदन्वयेन सह पदार्थानां सम्बन्धः । सोऽत्र लक्षणा भविष्यति । लाक्षणिकशाब्दबोधस्थले मुख्यार्थाभानं तु जहल्लक्षणायामेव । न त्वजहल्लक्षणायाम् । मुख्यान्वयानुपपत्तिर्न लक्षणायां सार्वत्रिकं प्रयोजकम् । 'काकेभ्यो दधि रक्ष्यतामि'त्यत्र तदभावात् । अपि तु तात्पर्यानुपपत्तिः । सा च प्रकृतेऽप्यस्ति । विशिष्टवाक्यार्थोद्देशेनैव वाक्यप्रवृत्तेः । अपूर्वस्यापि वाक्यार्थस्य यथा हरिद्रायां नद्यां घोष इत्यत्र नदीपदसामानाधिकरण्येन हरिद्रापदं नदीविशेषनामेति निश्चित्य तत्र घोषाधारतानुपपत्त्यनुसन्धानेन प्रागज्ञातमेव हरिद्रानदीतीरं हरिद्रानदीसम्बन्धित्वेनानुसन्दधाति, तथापूर्वमपि वाक्यार्थमन्वयरूपमाकांक्षादिबलादुपस्थितं पदार्थसम्बन्धित्वेनानुसन्धास्यतीति शाब्दत्वासिद्धये लाक्षणिकत्वाभ्युपगमे न काचिदनुपपत्तिः । अतोऽन्यलभ्यत्वात् नान्वयांशेऽपि शक्तिस्स्वीकर्तुमुचिता । एतेन यत्प्राभाकरैरुच्यते लोके कार्यताप्रतिपादकत्वस्य लिङादिषु निर्धारितत्वात् वेदे स्वर्गकामपदसमभिव्याहारेण कामिका-

यताया अस्थिरे यागे अन्वयायोग्यतानुसन्धाने तदन्वययोग्यमपूर्वमेव लिङादिप्रतिपाद्यमिति, तदपि निरस्तम् । आक्षेपलभ्यस्य तस्य शब्दवाच्यत्वानुपपत्तेः । अपूर्वद्वारा स्वर्गजनकत्वानुसन्धाने कामिकार्यत्वस्य यागेऽपि अन्वयबोधोपपत्तेश्च । अपि च लिङादिश्रवणानन्तरं प्रवृत्तिदर्शनात् यत् ज्ञानं प्रवृत्तिहेतुः, तत्र लिङादेरशक्तिः वक्तव्या । कः पुनः प्रवृत्तिजनकज्ञानविषयः । तत्र केचिदाहुः— 'ज्वरितः पथ्यमश्नीया'दित्यादावाप्तोपदेशे पथ्याशनविषयकमाप्ताभिप्रायमवगम्य- गां बधानेत्यादौ चाज्ञादिरूपमाचार्याभिप्रायमवगम्य पुरुषप्रवृत्तिदर्शनात् आज्ञादिरूपः पुरुषव्यापार एव प्रवर्तकज्ञानविषयः इति स एव प्रेरणात्वेन लिङादिभिः प्रतिपाद्यते । एवं च सति पुरुषाशयविशेषाणां प्रार्थनादीन अनुगतत्वाभावेन लिङादीनामनेकार्थता स्यादित्यपि शङ्का निरस्ता । यद्यपि पथ्यमश्नीयादित्यादौ सुहृदुपदेशे उपदेष्टुरभिसन्धिगोचरस्य फलस्याभावेन तदीयाशयविशेषोऽयं पथ्याशने प्रवर्ततामित्येवंरूपो विधिरित्युच्यते । उपदेष्टुस्स्वप्रयोजनाभिसन्धौ तु उत्कृष्टत्वे तदीयाशयविशेष आज्ञेत्युच्यते । निकृष्टत्वे तु प्रार्थनेत्युच्यते । तथा च विधित्वादिकमननुगतमेव, तथापि तेषु सर्वेषु प्रवर्तनात्वापरपर्यायं प्रेरणात्वमस्तीति तेन रूपेण शक्तेरुपगमात् । सा च प्रेरणा यद्यपि पुरुषाशयविशेषरूपा । वेदे पौरुषेयत्वं वदत ईश्वराशयविशेषरूपा शक्या वक्तुम् । अपौरुषेयत्ववादिनस्तु तथोपपादनं न सम्भवति, तथापि लिङः प्रेरणात्वेन शक्तिग्रहाद्वैदिकैरपि लिङादिभिराकृत्यधिकरणन्यायेन प्रेरणात्वे अभिहिते तदाश्रयाकाङ्क्षायां लिङादिगत एव प्रवर्तनाख्योऽपूर्वो धर्मः कल्प्यते । स च घटादिव्यक्तयोऽपि यथा घटादिशब्दप्रतिपाद्या भवन्ति । घटत्वादिप्रतिपादनद्वारा तथाप्रवर्तनात्वप्रतिपादनद्वारा लिङादिप्रतिपाद्यो भवति । अथवा नापूर्वो व्यापारः प्रवर्तनात्वाश्रयतया कल्पनीयः । किं तु लिङादिषु क्लृप्त एवाभिधाख्ये व्यापारे लिङ्वाच्यत्वं प्रवर्तनात्वाश्रयत्वं च कल्पनीयम् । लाघवादिति सर्वथापि नापूर्वं लिङादिप्रतिपाद्यम् । तज्ज्ञानस्य लोके प्रवृत्तिजनकत्वादर्शनात् । प्रवर्तना च प्रवृत्तिप्रयोजको धर्मः । ततश्च तस्य प्रयोज्यतासंसर्गेण समानपदोपात्तायां भावनायामन्वयः । लिङादिभिर्हि लिङ्त्वादिना प्रवर्तना प्रतिपाद्यते । आख्यातत्वेन भावनापर पर्यायः पुरुषव्यापारः प्रतिपाद्यते । ननु, कथमाख्यातेन व्यापारः प्रतिपाद्यते । यावता पच्यादिधातुभिरेव स प्रतिपादितः । पचिधातुर्हि विक्लित्त्यनुकूलं व्यापारं प्रतिपादयति । एवं गमिधातुरुत्तरदेशसंयोगानुकूलम् । त्यजिधातुः पूर्वदेशविभागानुकूलम् । तत्र च विक्लित्त्यादिकं फलम् । तदनुकूलो व्यापारश्च धातुभिरेव प्रतिपादित इति कथमाख्यातस्य व्यापारप्रतिपादकतेति चेत्, उच्यते—उभयं धातुभिः

प्रतिपाद्यत इति वक्तुमशक्यम् । गौरवात् । तर्हि व्यापार एव प्रतिपाद्यताम् । फलं तु द्वितीयार्थो भविष्यति । न च फलानामननुगतत्वात् द्वितीयार्थता नोपपद्यत इति सर्वनामन्यायेन धातूपात्तव्यापारफलत्वेन क्रोडीकृतानां पच्यादिधातुसमभिव्याहारेण विक्लित्तित्वादिरूपेण प्रतिपादकता भविष्यतीति चेन्न । तथात्वे त्यजिगम्योः पर्यायता स्यात् । एक एव हि व्यापारः पूर्वदेशविभागानुकूल उत्तरदेशसंयोगानुकूलश्च । अतस्तत्र पूर्वोत्तरदेशविभागसंयोगरूपफलप्रतिपादकतयैवापर्यायता वक्तव्या । अतस्तदैकरूप्याय सर्वधातूनां फलप्रतिपादकतैवास्तु । न तु व्यापारप्रतिपादकता । स त्वाख्यातेनैवाभिधीयते । न चैवं द्वितीयाया वैयर्थ्यम् । फलाधारताप्रतिपादकतोपपत्तेः । न च तथासति सप्तमीतो विशेषो द्वितीयाया न स्यात् । आधारताप्रतिपादनतौल्यादिति वाच्यम् । कर्तृकर्मद्वारा क्रियाधारता हि सप्तमीप्रतिपाद्या । फलनिरूपिताधारता तु द्वितीययेति भेदोपपत्तेः । कर्तृतृतीयया तु क्रियानिरूपिताधारता प्रतिपाद्यत इति तस्यापि वैलक्षण्यम् । नन्वेवं धातूपात्तव्यापारव्यधिकरणफलशालित्वं कर्मत्वमिति कर्मत्वलक्षणं वक्तुं न शक्यते । फलस्यैव धात्वर्थत्वेन धातूपात्तव्यापारेत्यंशस्यासम्भवदुक्तिकत्वात् । न च धातूपात्तफलशालित्वमेव तदिति वाच्यम् । तथासति 'देवदत्तश्शेत इति प्रयोगे शीङ्धातूपात्तस्य विशेषविज्ञानाभावरूपस्य फलस्य देवदत्ते सत्त्वेन तस्य कर्मतापत्तेः । न चैकस्य कर्तृत्वकर्मत्वानुपपत्तिः । 'आत्मानमात्मना जानाती'ति प्रयोगदर्शनात् । न च तत्र भेदकल्पनया तथा प्रयोग इति वाच्यम् । प्रकृतेऽपि भेदकल्पनया सकर्मकप्रयोगोपपत्तेः । न चाख्यातोपात्तव्यापारव्यधिकरणफलशालित्वं तदिति वाच्यम् । तथासति यजतीति प्रयोगे स्वर्गस्यापि कर्मता स्यात् । आख्यातोपात्तकर्तृव्यापारजन्योत्पत्तिरूपफलाश्रयत्वात् । शेत इत्यादौ च तज्जन्यसुखस्यापि कर्मता स्यात् । अपि च फलस्यैव धात्वर्थत्वे विक्लित्त्यनुत्पत्तिदशायां पचतीतिप्रयोगश्चासाधुस्स्यात् । पाकस्यावर्तमानत्वादिति चेत्, उच्यते । आख्यातोपात्तव्यापारव्यधिकरणधातूपात्तफलशालित्वेन यद्विवक्षितं तत् कर्मेति । ज्ञाधातूपात्तं तु फलं पुरुषव्यापारव्यधिकरणं घटादौ प्रसिद्धमेव । तदाश्रयतया आत्मनो विवक्षायां कर्मता भवति । शीङ्धातूपात्तं तु फलं विशेषविज्ञानोपरमरूपं, न व्यापारव्यधिकरणं प्रसिद्धमस्तीति न तस्य सकर्मकता । यजिसमभिव्याहारे स्वर्गादेस्तु कर्मता न भवति । धातूपात्तस्वत्वनिवृत्तिरूपफलानाधारत्वात् । 'यागेन स्वर्गं करोतीति निर्देशस्तु भवति । कृञ्धातूपात्तोत्पत्तिरूपफलाधारत्वात् पाकानुत्पत्तिदशायां पचतीतिप्रयोगश्च नासाधुः । न हि तत्र लडर्थवर्तमानत्वं प्रकृत्यर्थे फलेऽन्वेति । अपि त्वाख्यातोपात्ते व्यापारे । तस्य च वर्तमान-

त्वात् नानुपपत्तिः । न चैवमपि पाकानुत्पत्तिदशायां पाको वर्तत इति कथं प्रयोगः स्यात् । पाकसत्ताया अवर्तमानत्वादिति वाच्यम् । तत्र भावार्थककृत्प्रत्ययानां व्यापारवाचकताभ्युपगमेन तदुपपादनसम्भवात् । अवश्यं च भावकृतां व्यापारवाचकताभ्युपगन्तव्या । अन्यथा काष्ठैः पाक इति प्रयोगोऽनुपपन्न एव स्यात् । क्रियां विना कारकविभक्त्यनुपपत्तेः । न चास्मिन्पक्षे व्यापारविशेषाणां प्रतीतिर्न स्यात् । पच्यादिभिर्विक्लित्त्यादिफलस्यैव प्रतिपादनात् । न चाख्यातेनैव विक्लित्त्याद्यनुकूलानामधिश्रयणादिव्यापारविशेषाणां प्रतिपादनमस्तु । तथात्वे आख्यातस्यानेकशक्तिप्रसङ्गात् । अतो व्यापार एव धातुभिः प्रतिपाद्यत इति वाच्यम् येनापि व्यापारप्रतिपादकता स्वीक्रियते, तेनापि फलविशेषाणां प्रतीतिः कथं समर्थनीया। द्वितीयया फलविशेषप्रतिपादनमिति चेत्, तथासति फलस्यैव धात्वर्थत्वमिति पक्षेऽप्याख्यातस्यैव व्यापारविशेषप्रतिपादकता । यथा च सर्वनामन्यायेन धातूपात्तव्यापारफलत्वेन क्रोडीकृतानां नानार्थतापादकता नास्ति, तथा धातूपात्तफलानुकूलव्यापारत्वेन क्रोडीकृतानां व्यापाराणामपि नानार्थतापादकता भविष्यति । यथा च धातुविशेषसमभिव्याहारे योग्यतया फलविशेषप्रतिपादनं, तथा धातुविशेषसमभिव्याहारे व्यापारविशेषप्रतिपादकता भविष्यति । अस्तु वा व्यापारवाचकतैव। न च त्यजिगम्योः पर्यायतापत्तिः । अस्तु, को दोषः। अमुं ग्रामं परित्यज्यामुं ग्रामं गच्छतीतिव्यवहारे यथाश्रुते त्यजिगमिकर्मणोर्व्यत्यासस्तु न भवति । त्यजेः पूर्वदेशविभागद्योतकताभ्युपगमात् । तत्समभिव्याहृतकर्मप्रत्ययेन पूर्वदेशविभाग एव प्रतिपाद्यते । एवं गमावुत्तरदेशसंयोगे द्रष्टव्यम् । यदि तु विनिगमनाविरहात् फलं व्यापारश्चेति द्वयमपि धात्वर्थ इत्युच्यते । तथा न मास्तु न काचिदनुपपत्तिः । अस्मिंश्च पक्षे काष्ठैः पाक इतिप्रयोगस्सूपपाद एव । भावकृतां तु प्रकृत्यर्थप्रतिपादकतैव भविष्यति । प्रातिपदिकार्थमात्रविहितप्रथमावत् । परं तु कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायेन कृत्प्रत्ययेन तस्य प्रकृत्यर्थस्यैव प्रतिपादने लिङ्गसङ्ख्यान्वययोग्यत्वरूपं द्रव्यत्वं भविष्यतीति विशेषः । ननु, धातुप्रतिपाद्यत्वं यदि केवलव्यापारस्य, यदि वा फलविशिष्टव्यापारस्य पक्षद्वयेऽप्याख्यातस्य व्यर्थता स्यात् । न च तदनुकूलः पुरुषप्रयत्न एवाख्यातेन प्रतिपाद्यत इति वाच्यम् । रथो गच्छतीति प्रयोगे व्यापारानुकूलस्य यत्नस्याभावेनासाधुतापत्तेरिति चेत्, उच्यते आख्यातेन धातुप्रतिपाद्यव्यापारातिरिक्त एव व्यापारस्सामान्येन प्रतिपाद्यते । पचतीत्यत्र हि धातुना विक्लित्त्यनुकूलो व्यापारः प्रतिपाद्यते । आख्यातेन तु तदतिरिक्तश्चुल्लीसम्मार्ज-

नादिरूपः स्थाल्यवरोहणान्तो व्यापारनिचयो यः स सर्वोऽपि भावनात्वेन रूपेणाभिधीयते। भावनात्वं च जन्यत्वे सति जनकत्वम् । तच्च यद्यपि घटादावपि वर्तते तथापि यथा धेनुशब्दे धानकर्मत्वं प्रवृत्तिनिमित्तं गोत्वं प्रयोगोपाधिः, तथाख्यातेऽपि जन्यत्वे सति जनकत्वं प्रवृत्तिनिमित्तं पूर्वापरीभूतक्रियात्वं च प्रयोगोपाधिः। पूर्वापरीभूतत्वं च एकस्मिन् क्षणे अपर्यवसितस्वरूपत्वम् । तच्च प्रत्येकं क्रियाणां न सम्भवति । तत्तत्क्षणे पर्यवसितत्वात् प्रत्येकं क्रियाणाम् । किं तु सन्तन्यमानव्यापारनिचय एव । अतः स एव भावनात्वेनाकारेणाभिधीयते । भावनाशब्देन तु यद्यपि पूर्वापरीभूतमेव वस्तु प्रतिपाद्यते, तथापि तस्मिन् शब्दे जनकत्वापरपर्यायं भावनानुकूलत्वमेव प्रवृत्तिनिमित्तम् । न तु साध्यत्वापरपर्यायं जन्यत्वमपि। तावन्मात्रेण चाख्यातभावनाशब्दयोरदूरविप्रकर्षाभिधानमभियुक्तानाम् । तत्सिद्धं समानपदोपात्तायां भावनायां प्रवर्तनायाः प्रयोज्यप्रयोजकभावेनान्वय इति । प्रवर्तनायाः प्रवृत्तिप्रयोजकत्वं च तत्र इष्टसाधनताक्षेपद्वारा । अत्रेदं वक्तव्यम्—यदि प्रवर्तनायामभिहितायामपि प्रवृत्तिजननार्थमिष्टसाधनताक्षेपोऽभ्युपगम्यते, तदा तस्या एव लिङर्थत्वमस्तु । प्रवर्तनाज्ञानस्यापीष्टसाधनताक्षेपकत्वेनाभ्युपगततया इष्टसाधनताज्ञानस्यैव प्रवर्तकताभ्युपगमात् , अन्यथा सिद्धस्य तस्य प्रवर्तकत्वानुपपत्तेश्च । न च प्रवर्तनया स्वस्य प्रवृत्तिजननार्थमेवेष्टसाधनत्वस्याक्षिप्ततया कथं द्वारभूतेन तेन नान्यथासिद्धत्वम्। अन्यथा अपूर्वेणान्यथासिद्धस्य यागादेरपि स्वर्गजनकता न स्यादिति वाच्यम् । युक्तमपूर्वेण यागादेरन्यथासिद्धिर्न भवतीति । यत्कारणं यागस्वर्गयोस्साध्यसाधनभावज्ञानमुपजीव्यैवापूर्वस्य तद्द्वारतयैव स्वर्गसाधनता कल्प्यते । तत्र च यदि यागस्य स्वर्गसाधनता न स्यात् । कस्य निर्वाहायापूर्वं स्वर्गसाधनं भवेत् । नैवमिष्टसाधनताज्ञानम् । तस्य प्रत्यक्षाधीनप्रवृत्तिस्थले स्वत एव प्रवृत्तिजनकतायास्सिद्धत्वात्ततश्च प्रत्यक्षाधीनप्रवृत्तिस्थले क्लृप्तकारणताकस्येष्टसाधनत्वस्यैव शब्दानन्तरभाविप्रवृत्तिजनकत्वोपपत्तौ तत्रैव लिङादीनां शक्तिरस्तु । किं तदाक्षेपिकया प्रवर्तनया । अतः प्रवर्तनावादिनापि अवश्यापेक्षितव्यमिष्टसाधनत्वमेव विध्यर्थः तावन्मात्रज्ञानं च न प्रवृत्तिहेतुः । मधुविषसंपृक्तान्नभोजनादाविष्टसाधनताज्ञाने सत्यपि बलवदनिष्टानुबन्धित्वज्ञानेन प्रवृत्तिप्रतिबन्ध्यदर्शनात् । अतो बलवदनिष्टाननुबन्धित्वमपि विध्यर्थः । एवं तर्हि कृत्यसाध्यताज्ञानेऽपि प्रवृत्तिप्रतिबन्धात् कृतिसाध्यत्वमपि लिङर्थोऽस्त्विति चेत् , न । यद्यपि , कृतिसाध्यताज्ञानं प्रवृत्तिजनकं भवति, तथापि तस्य प्रत्यक्षादिनावगन्तुं शक्यतया न विध्यर्थता । न चैवमिष्टसाधनतादेरपि लोके प्रत्यक्षादिना अवगन्तुं शक्यतया

विध्यर्थता न स्यादिति वाच्यम् । तस्य लोके प्रत्यक्षादिना अवगन्तुं शक्यत्वेऽपि वेदे तदसम्भवात् । कृतिसाध्यत्वं तु वेदेऽपि यागादौ प्रमाणान्तरावगम्यमेव । ततश्चास्तु नाम प्रवृत्तिजनकज्ञानविषयतया कृतिसाध्यत्वमपि विध्यर्थः, तथापि वेदे प्रमाणान्तरसिद्धतया तस्मिन्नंशेऽनुवादकतैव । अतो वेदे विधिप्रत्ययस्य कार्यतायां तात्पर्यमेव नास्ति । प्रमाणान्तरसिद्धत्वात् । अपि तु अज्ञाते बलवदनिष्टाननुबन्धीष्टसाधनत्व एव । ननु, प्रत्यक्षादिसिद्धमपि कृतिसाध्यत्वं शब्देन बोध्यत एव । न च निष्प्रयोजनत्वं तत्प्रतिपादनस्य । तस्मिन् हि बोधिते स्वर्गकामिकृतिसाध्य एव यागादिः स्वर्गकामस्येष्टसाधनमिति बोधो भवति । तेन चान्यकृत एव यागः स्वस्येष्टसाधनमिति शङ्का अपोदिता भवति । तद्बोधनाभावे हि स्वफलसिद्धयेऽन्यमपि पुरुषं प्रार्थनादिना यागादौ प्रवर्तयेत् । न चेयमपि शङ्का फलस्य कर्तृगामिताबोधकेनात्मनेपदेन निवारितेति वाच्यम् । एवमपि 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम'इत्यादावात्मनेपदाभावेन शङ्कानिवारणालाभात् । नन्वग्नीनादधीतेति आत्मनेपदेन आधानस्य कर्तृगामिफलकत्वं बोध्यते । तच्च साक्षादाधानफलमग्निसंस्कारमादाय न सम्भवति । संस्कारस्याग्निगतत्वेनात्मगतत्वाभावात् । अतोऽग्निसाध्यक्रतुफलमादायैव तद्वचनं निर्वहणीयम् । ततश्चाधानकर्तुरेवाग्निसाध्यकर्मफलमिति फलस्य नान्यकृतकर्मसाध्यता वक्तुं शक्यत इति चेत्, एवमपि यान्यनग्निसाध्यानि जपहोमादीनि तेषां नाधानगतात्मनेपदेन कर्तृगामिता सिध्यति । अग्निसाध्यानामपि कर्तृगामिफलकत्वं न प्राप्नोत्येतावदेव हि तेन सिध्यति अग्निसाध्यानां कर्मणां फलमाधानकर्तुरेवेति । तावतापि स्वकृताधानसम्पादितेषु अग्निष्वन्येनकर्मानुष्ठाने कृतेऽपि स्वफलसिद्धिर्भवत्येवेति न यागादेः स्वर्गकामिकर्तृकता नियमेन प्राप्नोति । अतस्तत्सिध्यर्थं कृतिसाध्यत्वमपि प्रतिपादनीयमिति चेन्न । एवमपि स्वर्गकामिकृतिसाध्य एव यागः स्वर्गजनक इति सिध्यति । ततश्च योऽन्यार्थं स्वर्गं कामयते, सोऽपि स्वर्गकाम इत्यन्यदीयस्वर्गार्थिमन्यस्यापि अनुष्ठानं प्राप्नोति । तत्र यद्युच्येत अन्यदीयस्वर्गकामनया तदैव पुरुषः प्रवर्तते । यदि स्वर्गितया अन्य इष्टो भवति । ततश्च स्वर्गिपुरुषकत्वमेव तस्य फलं भवति । न चैतन्न्याय्यम् । स्वर्गकामिकृतिसाध्यो यागः स्वर्गकामस्येष्ट साधनमित्युक्तेस्स्वारसिकी स्वर्गकामाना स्वार्थस्स्वर्ग एव प्रतीयते । परं तु विधिश्रुत्युपात्तस्य फलस्य यत्र परम्पराग्राहकं प्रमाणमवतरति यथा श्राद्धवैश्वानरेष्ट्यादौ तत्र परं स्वरसतः प्रतीयमानोऽर्थः परित्यज्यते । तृप्तिविशेषशालिपितृकत्वं पूतत्वादिमत्पुत्रकत्वं च फलमुपेयते । प्रकृते तु तथाङ्गीकारे

प्रमाणाभावात् स्वार्थं स्वर्ग एव स्वर्गकामशब्दोपात्तो भवतीति यः स्वार्थं स्वर्गं कामयते, तत्कृतिसाध्यो यागः, तस्य फलसाधनमित्युक्ते अन्यकृतिसाध्य एव यागः स्वार्थं स्वर्गकामस्य फलं प्रयच्छतीति शङ्का निराकृता भवति । अतः कृतिसाध्यत्वमपि प्रतिपादनीयमिति चेन्न । यदि हि स्वर्गकामशब्देन स्वार्थस्वर्गकाम एव प्रतिपाद्यते, तदा आख्यातोपात्ते व्यापारे तस्य कर्तृतयान्वयात् यः स्वार्थं स्वर्गं कामयते, 'तत्कर्तृको व्यापारस्तस्येष्टसाधनमि'ति बोधे सत्यन्यकर्तृकस्य यागस्य स्वफलजनकत्वमितिशङ्कानिराकरणं सुकरमेव । तस्मिद्धं वेदे तात्पर्यगत्या लिङादिभिरिष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं च प्रतिपादनीयम् । न तु कार्यत्वम् । नापि तेन रूपेणापूर्वमिति । 'श्येनेनाभिचरन्यजेते'त्यत्र तु वाक्यान्तरेण नरकसाधनतावगमात् न बलवदनिष्टाननुबन्धित्वांशो बोध्यते । अपि तु इष्टसाधनत्वमात्रम् । ननु, विधिनैव बलवदनिष्टाननुबन्धित्वे बोधिते अर्थवादा व्यर्थास्स्युरिति चेन्न । बलवदनिष्टाननुबन्धित्वे अवगतेऽपि स्वर्गादितुल्यमनिष्टं नास्तीति न निर्णीतम् । ततश्च सुखदुःखयोस्तुल्यताशङ्कया पुरुषस्य नाभिरुचिस्स्यात् । अतोऽर्थवादैः फलतुल्यमनिष्टं नास्तीति बोधनीयम् । अतो नार्थवादानां व्यर्थता । अतः न विधीनामपूर्ववाचकत्वम् । नापि कार्यान्वित एव पदानां शक्तिः । अतो न कार्यशेषतया व्युत्पत्त्यनुरोधेन वेदान्तैः ब्रह्म प्रतिपादनीयमिति दूषणं मनसि निधाय वेदान्तवाक्यस्वरसादेव कार्यशेषतया ब्रह्मावगम्यत इत्यत्र दूषणमाह—**औपनिषदस्य पुरुषस्येति** । सङ्ग्रहवाक्यं विवृणोति—**योसावुपनिषत्स्विति** । उपनिषच्छब्दो ब्रह्मविद्याप्रतिपादकः । 'ब्राह्मीं वाव त उपनिषदं ब्रूमेति तस्यै तपो दमः कर्मे'ति प्रयोगात् । तपआदौ शेषिभूता ब्रह्मसंबन्धिनी च ब्रह्मविद्यैव हि भवति । ततश्च 'उपेतिशब्दः सामीप्ये निशब्दो निर्णयार्थकः । सदेर्विशरणार्थत्वमित्येषोपनिषत् भवेत् ॥' परमात्मानं सामीप्येन प्रत्यगभेदेन विषयीकृत्य निर्णयरूपा अविद्यां शृणाति नाशयतीति निर्वचनं उपनिषच्छब्दे द्रष्टव्यम् । ततश्च ब्रह्मविद्याप्रतिपादकेनोपनिषच्छब्देन प्रकृतभाष्ये तज्जनको वेदान्तभागः प्रतिपाद्यते निरूढलक्षणया । कार्यशेषता कार्यसम्बन्धित्वम् । तत्किं कर्तृतया, उत प्रयाजादिवदितिकर्तव्यतारूपतया उत, व्रीह्यादिवदवहननादौ उपासनाशेषितया इति विकल्पं मनसि निधाय निराकरोति असंसारीति कर्तृताया उत्पाद्यादीति शेषिताया स्वप्रकरणस्थ इतीतिकर्तव्यताया निराकरणं द्रष्टव्यम् । अनन्यशेष इति फलितार्थकथनम् । नासाविति कार्यान्विते शक्तेर्निराकरणात् नाधिगम्यत इति न शक्यते वक्तुम् । ननु, अथात आदेशो नेतिनेतीति प्रपञ्चेन सहात्मनोऽपि

निराकरणात् नास्तीति कथं न शक्यते वक्तुमित्यत आह—**स एष नेतिनेतीति**। स एष इति वाक्यं बृहदारण्यकपञ्चमाध्यायगतं कस्मिंस्त्वं चात्मा च प्रतिष्ठितौ स्थ इत्यादिना प्राणापानव्यानोदानसमानानामुत्तरोत्तरप्रतिष्ठितत्वं कस्मिन्व्यानः प्रतिष्ठितः समान इत्यन्तेन निरूप्याम्नातं अथात आदेशो नेतिनेतीति चतुर्थाध्यायगतं तत्रैव। ततश्चायमर्थः यश्चतुर्थाध्याये 'नेति नेती'ति प्रतिपादितः, स एष आत्मा यः प्राणादौ समानान्ते जीवरूपेण प्रतिष्ठितः ततश्चाथात आदेश इति श्रुतिवाक्यस्यात्मपरिशेषतायां पर्यवसानस्य कृतत्वात् न तेनात्मापि निषिध्यत इति भावः। निराकरणसाक्षित्वादप्यात्मा निराकर्तुं न शक्यत इत्याह—**आत्मनश्चेति**। असाक्षिकस्य निराकरणस्यैवासम्भवादिति भावः। यदि उपनिषदां प्रत्यगभिन्नब्रह्मपरत्वं, तर्हि कथं प्रामाण्यम्। अनधिगतविषयालाभात्। प्रतीचोऽहमिति प्रत्यक्षसिद्धत्वादिति शङ्कते—**नन्विति**। शुद्धस्य साक्षिणः प्रत्यक्षेण निर्णयान्नोक्तदोष इति परिहरति। **नेति**। वेदान्तप्रतिपाद्यस्यात्मनोऽहंप्रत्ययविषयकर्त्रादिसाक्षित्वेनोक्तशङ्कायाः प्रत्युक्तत्वादित्यर्थः। न केवलं वेदान्तप्रतिपाद्यस्वरूपस्य प्रत्यक्षानधिगतिः। तार्किकैरपि तस्य स्वरूपं ज्ञातुमशक्यमित्याह—**नह्यहं प्रत्ययेति**। 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनाश्यन्तं यः पश्यति स पश्यति॥' इति वचनमभिप्रेत्य सर्वभूतस्थः सम इत्युक्तम्। ततश्च क्षणिकमनित्यं विज्ञानमात्मेति सौगतमतानधिगतिः शरीरपरिणाम इति दिगम्बरमतानधिगतिश्चोक्ता। 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थित' इति वचनमभिप्रेत्यैकइत्युक्तम्। ततश्च नानात्मवादितार्किकमीमांसमतानाधिगतिरुक्ता। 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यत' इति वचनमनुसृत्य कूटस्थनित्य इत्युक्तम्। ततश्च जीवोत्पत्तिवादिमतानधिगतिरुक्ता। सर्वस्यात्मा सर्वस्य पारमार्थिकस्वरूपम्। विधिशेषत्वं विधेयत्वं निषेध्यत्वं चेत्यर्थः। उपाधेयत्वं कृतिसाध्यत्वं, तदभावात् न विधेयः। निवृत्तिविषयत्वं हेयत्वं, तदभावात् न निषेध्यः। सर्वबाधावधित्वात् सर्वस्य परमार्थिकं स्वरूपं आत्मेत्याह—**सर्वं हि विकारजातमिति**। **तस्मादिति**। यस्मात् सर्वविक्रियारहितो मुक्तस्वभाव आत्मा' तस्मात् 'पुरुषान्नपरं किञ्चिदि'तिवाक्यं परागतिरितिशब्देन परमप्राप्यत्वं प्रतिपादयदुपपद्यत इत्यर्थः। 'औपानिषदस्येति'यदुक्तं तत्र प्रमाणमाह — **तंत्वौपनिषदमिति**। एकदेशिना यत्संप्रदायविद्वचनमुदाहृतम्। तत्राह — **यदपीति**। यद्यपि तस्य वचनस्य जैमिनिमतानुरोधित्वात्तद्विरोधो न परिहर्तव्य एव। अपि तु न्यायविरोधे तदप्रमाणमित्येव वक्तु-

मुचितं, तथापि तद्वचनश्रद्धाजडान्प्रति तथोक्तिः । 'आम्नायस्य क्रियार्थत्वा'दित्यत्र किमर्थशब्दः अभिधेयवाची उत प्रयोजनवाची । नाद्य इत्याह—अपि चेति। ननु भूतोपदेशानामपि नानर्थक्यम् । तेषां विशेषणतया क्रियाप्रतिपादकत्वादित्यत आह—प्रवृत्तिनिवृत्तिव्यतिरेकेणेति । नोपदिशतीति । क्रियां विनैवेति शेषः । को हेतुरिति । साक्षाद्विशेषणतया वा कार्य एव पदानां शक्तिरित्यस्य नियमस्य निर्मूलत्वादिति भावः । न हीति । कस्यैष इति प्रश्ने राज्ञोऽयमित्युत्तरे च उपदिश्यमानोऽर्थः न क्रिया, नापि तदन्वित इत्यर्थः । नन्वस्तु सिद्धेऽपि पदानां व्युत्पत्तिः । अथापि वेदस्य प्रयोजनवदर्थाभिधायकत्वात् तन्निर्वाहाय क्रियाप्रतिपादकता स्वीकर्तव्या । ततश्च सूत्रेऽप्यर्थशब्दः प्रयोजनपर इति द्वितीयं शङ्कते—अक्रियात्वेऽपीति । अपि च गुरुमते 'सोमेन यजेते'त्यादिषु वाक्येषु लिङा कार्यं प्रतिपाद्यते । तस्य च विषयापेक्षायां प्रकृत्युपात्तो याग एव विषयत्वेनान्वेति । न तु सोमादिरूपपदोपात्तः कृतिविषयो हि कार्यविषय इत्युच्यते । कृतेश्च द्विविधो विषयः । उद्देश्यो जन्यश्चेति । तत्र उद्देश्यो गुणद्रव्यादिसाधारणः । अत एव 'घटं करोती'ति घटस्योद्देश्यतया विषयत्वमस्तीति यत्नरूपा कृतिरेव कृञ्धात्वर्थ इति मते द्वितीयानिर्देश उपपद्यते । जानाति इच्छति करोतीत्यादिसमभिव्याहारे द्वितीयायाः विषयतायां निरूढत्वाभ्युपगमात् । जन्यस्तु क्रियारूप एव । प्रकृते च कृतिविषयः कृतिकार्ययोः साध्यसाधनभावघटकोऽपेक्षितः । उद्देश्यविषयस्यापूर्वस्य स्वपदेनैव समर्पितत्वात् घटकश्च कृतिजन्य एव भवति। तत्र यदि सोमादीनां कृतिविषयत्वं स्वीक्रियते, तदा तेषामपि कृतिजन्यतासिद्ध्यर्थं व्यापारान्तरमपेक्षितं स्यात् । अतः साक्षात् कृतिसाध्यो यागादिरेव विषयतयान्वेति । ततश्च यत्र लिङा कार्यं निर्दिश्यते, तत्र क्रियारूपो विषयोऽपेक्षितः । अन्यथा कृतिसाध्यत्वेनावगतस्यापूर्वस्य निर्वाहो न भवतीति । एवं सति तत्प्रक्रियायां स्वीक्रियमाणायां 'ब्राह्मणो न हन्तव्य इत्येवमादिनिषेधवाक्येषु कार्यप्रत्ययो न निर्वहति । क्रियारूपविषयालाभादित्याह—अपि चेति । तन्मते हि ब्राह्मणो न हन्तव्य इत्यत्र नञर्थोऽभावः । स च हननरूपधात्वर्थे विशेष्यतयान्वेति । ततश्च हननाभाव इत्यर्थः । हन्तिसमभिव्याहृतेन नञा प्रतिपाद्यते अभाव एव निवृत्तिरित्युच्यते । लिङादिना च कार्यं प्रतिपाद्यते । ततश्च हननाभावविषयकं कार्यमिति वाक्यार्थं वर्णयन्ति । तदेतद्दुर्घटम् । अभावस्य क्रियात्वाभावेन घटकीभूतविषयतयान्वयासम्भवात् । ततश्च घटकीभूतविषयालाभेन 'ब्राह्मणो न हन्तव्य' इति कार्यताप्रत्ययो निर्व्यूढ एव न भवतीति भावः । ननु यत एवं नञा प्रतिपादितस्याभावस्य कृतिं प्रति घटकीभूतविषयत्वासम्भवः-

अत एव नञोऽभावपरिपालने लक्षणोपेयते। यदि तु हननप्रागभावस्य नञा प्रतिपादितस्य परिपालनं नामोत्तरकालसम्बन्धित्वमेव, तदपि न साक्षात् कृतिसाध्यम्। तर्हि परिपालनानुकूलः वाङ्मनःकायानां निरोधाख्यो व्यापर एव लक्ष्यतामित्याशङ्क्याह—**न चेति**। अनुरागोऽन्वयः, निवृत्तिरेवौदासिन्यं निवृत्त्यौदासीन्यं तद्व्यतिरेकेणेत्यर्थः। अयमाशयः—निरोधाख्ये व्यापारे विषयतया निरूप्यमाणे लक्षणैव दोषः। न चेष्टापत्तिः। तथासति षाष्ठं प्रतिषेधाधिकरणं विरुध्येत। तत्र ह्ययमर्थो निरूपितः—'न कलञ्जं भक्षयेत्। 'न सुरां पिबेदि'त्यादिवाक्यं किं निषेधार्थकमेव, उत 'तस्य व्रत'मित्युपक्रम्याम्नातं 'नेक्षेतोद्यन्तमिति वाक्यं यथा पर्युदासार्थकम्, एवमिदमपीति सन्दिह्य यथा 'नेक्षेतोद्यन्तमादित्य'मित्यत्र नञीक्षतिभ्यामीक्षणप्रागभावानुकूलस्सङ्कल्पो नेक्षइत्येवं रूपः प्रतिपाद्यते, तथा 'न हन्तव्य इत्यत्रापि नञ् हन्तिभ्यां हननप्रागभावानुकूलः सङ्कल्प एव प्रतिपाद्यते। ततश्च स एव नियोगविषयो भवतीति पूर्वपक्षं कृत्वा तथासति लक्षणा स्यात्। नेक्षेतेत्यत्र तु सा समाश्रिता। तस्य व्रतमित्युपक्रमात्। अतो न सङ्कल्पलक्षणेति सिद्धान्तितम्—**तद्विरुद्ध्येतेति**। अपि चाभावकार्यताज्ञानं न निवृत्तौ प्रयोजकम्। अनर्थसाधनताज्ञानं विना पुरुषस्य निवृत्तेरसम्भवात्। अतः लिङाद्यर्थभूतं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वमेव नञा निषिध्यते। तन्निषेधे हि कलञ्जभक्षणं दृष्टसुखापेक्षया तीव्रं चिरकालानुभाव्यं च दुःखं सम्पादयतीत्यर्थः लभ्यते कथम्। लिङर्थनिविष्टं बलवत्त्वं हि अनिष्टस्येष्टापेक्षया तीव्रत्वं चिरकालानुभाव्यत्वं च उभयविधानिष्टाननुबन्धित्वं बलवदनिष्टाननुबन्धित्वम्। न चैवं तीव्रानिष्टचिरकालानिष्टयोर्मध्ये एकैकानिष्टाननुबन्धिन्यपि उभयविधानिष्टाननुबन्धित्वं वर्तत इति तद्व्यावृत्तिः कथं स्यादिति वाच्यम्। अन्यतरत्वेन क्रोडीकृत्योभयविधानिष्टाननुबन्धित्वबोधने तद्व्यावृत्तेरपि लाभसम्भवात्। ततश्चाख्यातेन कलञ्जभक्षणभावनागतं बलवदनिष्टाननुबन्धित्वविशिष्टमिष्टसाधनत्वमिति बोधिते नञा च तदन्वयिना विशिष्टाभावे बोधिते इष्टसाधनत्वांशस्य प्रत्यक्षसिद्धस्य निषेद्धुमशक्यतया बलवदनिष्टाननुबन्धित्वाभाव एव पर्यवसानमर्थवादैर्लभ्यते। निन्दार्थवादैः बलवदनिष्टानुबन्धित्वमेव लक्ष्यते। यत्र तु निन्दार्थवादो न लभ्यते, तत्र विशिष्टाभावबोधकेन नञा इष्टसाधनत्वांशनिषेधबाधसहकृतेन बलवदनिष्टानुबन्धित्वाभावमादायैव पर्यवसानं स्वीक्रियते। न चैवं निन्दार्थवादं विनैव सामर्थ्यात् निषेधस्य बलवदनिष्टाननुबन्धित्वपर्यवसानसिद्धौ अर्थवादवैयर्थ्यमेव स्यादिति वाच्यम्। निन्दार्थवादाम्नानस्थले स्वाध्यायविधिबलेन निन्दार्थवादैरेव पर्यवसानं लम्भनीयम्। न तु सामर्थ्यालोचनसहकृतेन निषे-

धेनेति नियमोपपत्तेः । नन्वेवमप्यतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति विधिनिषेधयोः समानविषयत्वे का गतिः । न हि तत्रोक्तगतिस्सम्भवति । बलवदनिष्टाननुबन्धित्वस्यापि विधिसिद्धत्वादिति चेत्, उच्यते विधिबाधं विना हि निषेधस्य नावकाशो लभ्यते, तत्र परमल्पबाधोपपत्तौ सर्वबाधो न न्याय्यः । तत्र चेष्टसाधनत्वान्तर्गतं नियतत्वमेव बाध्यते । इष्टसाधनत्वं हि इष्टनियतपूर्ववर्तित्वम् । तत्र पूर्ववर्तित्वांशबाधे सर्वात्मना वचनं बाधितं स्यात् । नियतत्वांशबाधे तु पाक्षिकानुष्ठानसम्पादकतया वचनं चरितार्थं भवति । ततश्च यथा 'व्रीहिभिर्यजेत यवैर्यजेत' इति वचनद्वयविरोधे उभयोरपि पूर्ववर्तितामात्रबोधकतास्थीयते । तद्वत् 'अतिरात्रे षोडशिनं गृह्णाती'ति वचनम् पूर्ववर्तितामात्रबोधकं भविष्यति । परं तु व्रीहियवस्थले वचनद्वयसार्थक्याय शास्त्रीयद्रव्यप्रयुक्त एवानियमः सह्यते । न तु लौकिकद्रव्यप्रयुक्तोऽपि तथात्वे वचनं विनैव व्रीहियवयोः प्राप्तत्वेन नियमपरवाक्यवैयर्थ्यापत्तेः । ततश्च 'नातिरात्रे षोडशिनं गृह्णाती'ति विशिष्टनिषेधो नियमांशविशेषणनिषेधमादाय पर्यवसितो भवति । नन्वतिरात्रे षोडशिनं गृह्णाती'तिविधिः नियमांशे निषेधवाक्यस्य पर्यवसानेऽपि बाधितो भवति । ततश्च 'न कलञ्जं भक्षयेदि'ति वाक्यैकरूप्याय बलवदनिष्टाननुबन्धित्वनिषेधेनैव निषेधवाक्यस्य पर्यवसानं कुतो न स्वीक्रियते । न च तथासत्यनिष्टसाधनतावगमात् षोडशिग्रहे कस्यापि प्रवृत्तिर्न स्यादिति वाच्यम् । यथा हि श्येने अनिष्टसाधनतावगमेऽप्यभिचारे उत्कटरागवशात् प्रवर्तते, तथा क्रतुफले उत्कटरागवशात् प्रवृत्तिर्भविष्यति । यथा च श्येनादिविधीनामिष्टसाधनतामात्रबोधेन पर्यवसानमेवं षोडशिग्रहविधेरपि भविष्यतीति चेत्, उच्यते । एवं हि सति षोडशिग्रहवाक्यस्य नरकं स्वीकृत्यापि क्रतूपकारार्थं पुरुषप्रवर्तकता वक्तव्या । तच्चासमञ्जसम् । विधेः प्रवृत्तिगौरवापत्तेः । श्येनादौ त्वैहिकफले पुरुषस्योत्कटो रागः सर्वलोकसिद्ध इतिन तत्र विधेः प्रवृत्तिगौरवम् । अपि च तत्र नरकप्रतिपादकस्पष्टवाक्यान्तरसद्भावात् तथा भवतुनाम । प्रकृते तु निषेधमात्रं तच्च नियमांशनिषेधमादायापि चरितार्थमिति न तेन षोडशिग्रहस्य नरकसाधनतापि कल्पनीया । एवं च शिष्टाविगानमपि समञ्जसं भवति षोडशिग्रहानुष्ठाने । अन्यथा श्येनादिवत्तस्यापि निन्दितता स्यात् । न चैवं षोडशिग्रहाभावेऽपि क्रतूपकारो भवतीत्यर्थपर्यवसाने षोडशिग्रहे कस्यापि प्रवृत्तिर्नस्यात् श्रमवैफल्यानुसन्धानात् । न च यस्य तदनुसन्धानं नास्ति, स प्रवर्ततामिति वाच्यम् । तथाप्याप्तोपदेशेनेयं गतिर्दृष्टा । स्वाध्यायविधिश्च षोडशिग्रहांशे प्रयोजनवदर्थावबोधफलको न स्यादिति साम्प्र-

तम । अत एव हि वत्र षोडशिग्रहतदभावयोर्मुख्यामुख्यकल्पत्वं स्वीकर्तव्यम् । ततश्च शक्ताशक्तविषयतया व्यवस्थितविकल्पो भविष्यति । अथवा षोडशिग्रहानुष्ठाने फलभूयस्त्वकल्पनया व्यवस्थितविकल्पो भविष्यतीति न किञ्चित्सङ्कटम् । अतो निषेधवाक्येषु 'न कलञ्जं भक्षयेदि'त्यादिषु लिङाद्यर्थभूतबलवदनिष्टाननुबन्धीष्टसाधनत्वनिषेधे बलवदनिष्टसाधनतापर्यवसानं भवति । नान्यथा । अतोऽपि न निषेधवाक्येषु कार्यबोध इत्येतदभिप्रेत्याह—**नञश्चैष स्वभाव इति**। चशब्दो गुरुमताद्विशेषद्योतनार्थः । **स्वसम्बन्धिन इति**। लिङादिप्रतिपाद्यबलवदनिष्टाननुबन्धीष्टसाधनत्वस्य । तस्यैव व्युत्पत्त्यनुसारेणाकांक्षिततया अर्थद्वारा नञा सम्बन्धित्वात् । विशिष्टनञर्थनिषेधस्य विशेषणमादाय पर्यवसानेन निवृत्त्युपयोगमभिप्रेत्याह—**अभावबुद्धिश्चेति**। ननु, निवृत्तिरूपे औदासीन्ये यदि बलवदनिष्टाननुबन्धित्वाभावबुद्धिः परिपालकतयोपयुज्यते । निवृत्तेः प्रवृत्तिप्रागभावरूपाया अनादितयोत्पत्तावनुपयोगात्, तदा राज्यपरिपालने राजेव तत्परिपालनपर्यन्तमनुवर्तेत । तथा च तस्योत्तरत्र सार्वदिकत्वात् सर्वदैवाभावबुद्धिरनुवृत्ता स्यादित्यत आह—**सा चेति** । प्रवृत्तिप्रागभावस्य नाशो हि प्रवृत्तिरेव । ततश्च प्रवृत्तिसामग्रीनिवृत्तेरुत्तरकालसम्बन्धं व्यावर्तयति । प्रवृत्तिसामग्र्यन्तर्गतं च बलवदनिष्टाननुबन्धित्वज्ञानं तद्विघटकतया तद्विषयीभूताभावज्ञानं निवृत्तावुपयुज्यते । तद्विघटकता तदुत्पत्तिप्रतिबन्धो वा उत्पन्ने तदप्रामाण्यापादकता वा ततश्च सकृदुदितेनैव बलवदनिष्टाननुबन्धित्वाभावज्ञानेन बलवदनिष्टाननुबन्धित्वज्ञानविघटनोपपत्तेः । न यावन्निवृत्ति तस्यानुवर्तनप्रसक्तिः । ततश्च यथा कृषिप्रतिबन्धकं काष्ठादिकं क्षेत्रपतितं दग्धुं प्रयुक्तोऽग्निः प्रतिबन्धकनिरासेनोपशान्तः पुनर्नापेक्ष्यते, तथा इहापि भविष्यति । राज्ञस्तु तत्तद्देशकालोचितव्यवस्थाप्रयोजकतया परिपालकत्वात् युक्तं यावद्राष्ट्रमनुवर्तनमिति भावः । नञश्चैष स्वभाव इत्यारभ्य उपशाम्यतीत्यन्तेन स्वमते निषेधार्थं निरूप्य पुनः प्राभाकरमतेनैव हननाभावविषयकं कार्यमित्यर्थे निषेधवाक्येषु योग्यविषयालाभेन कार्यप्रतीत्यपर्यवसानं आपादयितुमुपसम्हरति । **तस्मादिति** । **निवृत्त्यौदासीन्यमेवेति** । न त्वप्राप्तक्रियापरम् । **अन्यत्र प्रजापतिव्रतादिभ्य इति** । 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचने'त्यादिवाक्यविहिता धर्माः प्रजापतिव्रतशब्दप्रतिपाद्याः । **नावगतब्रह्मात्मभावस्येति**। श्रुतब्रह्मणो हि यच्छ्रवणोपस्कृतं वेदान्तवाक्यजनितं ज्ञानं न तदविद्यानिवृत्तिद्वारा परमपुरुषार्थं सहसैव सम्पादयति अप्रामाण्यशङ्काकलङ्कितस्यानभ्यासदशापन्नजलादिज्ञानस्येव निष्कम्पप्रवृत्तौ भेदवासनाप्रतिबद्धस्य वेदान्तजन्यज्ञानस्याविद्यानि-

वृत्तावसामर्थ्यात् । यथा च समीपोपसर्पणादिना संवादेनाप्रामाण्यशङ्कायां निवर्तितायां तत्कालोत्पन्नचाक्षुषज्ञानं निष्कम्पप्रवृत्तावुपयुज्यते, तथा ध्यानेन भेदवासनायां अपोदितायां तत्कालोत्पन्नवेदान्तवाक्यार्थज्ञानम् अविद्यां निवर्तयति । परं तु यावत्प्रारब्धं विक्षेपांशोऽनुवर्तते । अविद्याया अंशद्वयाभ्युपगमात् । स्वप्रकाशेऽपि आत्मनि 'नास्ति न प्रकाशते' इति व्यवहारजनक एकोंऽशः । स एवावरणशक्तिरित्युच्यते । कर्तृत्वाद्यनर्थप्रतिभासम्पादकोऽपरोंऽशः । स एव विक्षेपशक्तिरित्युच्यते ततश्च ध्यानपरिपाकनिवृत्तभेदवासनानामपि वेदान्तजनितेन प्रत्यग्ब्रह्मापरोक्ष्येणावरणशक्त्यंशे निवर्तितेऽपि आवरणशक्तिनिवृत्तिमात्रेण यथापूर्वं कर्तृत्वाद्यभिनिवेशयुक्ततया संसारित्वानुवर्तनाभावेऽपि प्रारब्धदोषेण विक्षेपशक्त्यंशे ज्ञानं निवर्तकं न भवति । तत्र प्रारब्धस्य प्रतिबन्धकत्वाभ्युपगमात् । विक्षेपांशानुवृत्त्या चाभिमानशून्यानामपि ब्रह्मविदां यथाकथञ्चित् कर्तृत्वादिप्रतिभासोऽनुवर्तते । सा चेयं व्यवस्था जीवन्मुक्तिशास्त्रलब्धा विद्वदनुभवसिद्धा च । अशरीरमित्यत्र शरीराभिमानाभाव एव प्रियाप्रियासंस्पर्शप्रयोजको विवक्षितः तत्र शङ्कते—**शरीरे पतित इति।** आत्मनो हि सशरीरत्वम् आध्यासिकमिति पूर्ववाक्यपर्यालोचनया अवगम्यते 'अशरीरं वाव सन्त'मिति अतश्चेदं पूर्ववाक्यं 'मघवन्मर्त्यं वा इदं शरीरम् आत्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति । अत्र चाशरीर इति निषेधपूर्वकमेवात्मनोऽधिष्ठानमिति शरीरसम्बन्धः प्रतिपाद्यते । अतस्स मिथ्याभूत इति वक्तव्यम् । तादृशं सशरीरत्वं प्रियाप्रियसंस्पर्शप्रयोजकम् । आत्तो वै सशरीर इत्यनेन प्रतिपाद्यते । आरोपिताश्च रजतसर्पादयोऽवगते मिथ्यात्वे दोषविशेषेण भासमाना अपि न यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजका भवन्ति । तथा च जीवतोऽपि सशरीरतायां मिथ्यात्वनिर्णयेन यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजकता भविष्यतीति । आत्तो वा इति वाक्यार्थप्रतिद्वन्द्विप्रतिपादकेन अशरीरं वावेति वाक्येनापि शरीराभिमानराहित्यमेव प्रियाप्रियासंस्पर्शप्रयोजकतया प्रतिपाद्यत इत्याह—**सशरीरत्वस्येति** । एवं सशरीरत्वस्यारोपितस्य तत्त्वज्ञानदशायां प्रतिभासतोऽनुवर्तमानस्यापि न यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजकत्वमित्युक्तं, तन्न सम्भवति । तस्य जीवकृतधर्माधर्मनिमित्तत्वेनानृततानुपपत्तेरिति कश्चिच्छङ्कते—**तत्कृतधर्माधर्मनिमित्तमिति** । यद्यपि स्वप्नगतशरीरवदनृतत्वं धर्माधर्मनिमित्तत्वेऽपि न विरुध्यते, तथापि तावन्मात्रेण सत्यमिति शङ्कितुरभिमानः । श्रुतिविरोधे सत्येव दूषणान्तरमाह—**शरीरसम्बन्धस्येति** शरीरावच्छेदेन ह्यात्मनः कर्तृत्वं अतः शरीरसम्बन्धं विना धर्माधर्मकर्तृत्वानुप-

पत्तिरित्यर्थः । ततश्च धर्माधर्मनिमित्तकत्वे शरीरसम्बन्धस्याभ्युपगम्यमाने परस्पराश्रय इत्याह—**शरीरसम्बन्धस्येति** । बीजांकुरवदत्र नान्योन्याश्रयः । येन बीजेन योऽकुरो जन्यते, तद्बीजं स्वजनितांकुरादन्येनैवांकुरेण स्वस्मात् प्राचीनेन जन्यते । स्वजनितश्चांकुरस्स्वस्मात् अन्यदेव बीजं जनयति । एवं येन शरीरेण या धर्मव्यक्तिर्जन्यते, तच्छरीरं स्वजनिताभ्यां धर्माधर्माभ्यां अन्याभ्यामेव धर्माधर्माभ्यां स्वस्मात् प्राचीनाभ्यां जायते । स्वजनितौ च धर्माधर्मौ अन्यस्यैव शरीरस्य प्रयोजकौ । एवं प्रवाहानादित्वात् नान्योन्याश्रय इति चेत् । तत्राह—**अन्धपरम्पराचैषेति** । वर्तमानयोर्हि बीजांकुरयोः जन्यजनकभावः प्रत्यक्षसिद्ध इति पूर्वमपि तथैवेति शक्यमनुमातुम् । शरीरस्य तु धर्माधर्मजत्वं न लौकिकप्रमाणायत्तम् । श्रुत्या तत्सिद्धिस्स्वीक्रियते चेत् तत एव मिथ्यात्वमपि प्राप्नोति । अतस्सत्यत्ववादिना श्रुतिं परित्यज्यैव वक्तव्यम् । ततश्च मूलप्रमाणाभावे धर्माधर्मजन्यत्वस्य शरीरे असिद्धेर्निर्मूलेयं कल्पना अन्धपरम्पराप्राप्ता अङ्गारशौक्ल्यज्ञानवदित्यर्थः । तस्य त्विति । यद्यप्यग्रहीतभेदस्य पुरुषस्य यः प्रत्ययः अन्यत्रान्यशब्दप्रत्ययावितिपदेन सङ्गृहीतः, स भ्रम एव । न भ्रान्तिनिमित्तः तथापिभ्रान्तिपदेन भ्रान्तिजनिका सामग्री विवक्षिता । भ्रान्तिपदस्य यथाश्रुतार्थत्वे तु प्रत्ययशब्देन भ्रमानन्तरभाविशब्दजन्यः प्रत्ययो विवक्षितः । **अकस्माद्रजतमिति** । ननु, भ्रान्तेरुचितकारणजन्यत्वात् कथमकस्मादिति कारणं विनैव जातत्वमुच्यते । रजतैकपक्षपातिन्या भ्रमसामग्र्यादृष्टरूपाया असम्भवात् अदृष्टापेक्षत्वमकस्माच्छब्देन विवक्षितम् । तथा हि पुरोवस्थिते द्रव्ये शुक्तित्वस्य विद्यमानतया चक्षुस्सन्निकर्षस्य लौकिकस्य विद्यमानत्वाद्रजतभ्रात् प्राक् शुक्तित्वनिश्चय एव कस्मान्न भवति । न हि तस्यां दशायां 'शुक्तित्वं नास्ती'ति व्यतिरेकनिश्चयो वर्तते । न च शुक्तित्वोद्बोधकं तत्र नास्ति । तथा च विशेषणोपस्थितेरभावात् विशिष्टज्ञानमिति वाच्यम् । संस्कारोद्बोधकाभावेन विशेषणस्मृत्यसम्भवेऽपि सन्निकर्षस्य विद्यमानतया विशेषणांशे निर्विकल्पकानुभवसम्भवात् । अपि च यदेव रजतत्वे संस्कारोद्बोधकं शुक्लभास्वरत्वादिकं, तदेव शुक्तित्वांशेऽपि संस्कारोद्बोधकम् । तस्योभयसाधारणत्वात् । यदि तु दोषोऽप्यत्र विद्यते । तथा च न शुक्तित्वप्रमा । दोषस्य प्रतिबन्धकत्वात् प्रमायाम् । तदा तत्संशयोऽस्तु। तत्सामग्र्याः प्रकृते सम्भवात् । संशयसामग्री हि अक्षपादेन त्रिप्रकारा निरूपिता । 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शस्संशय' इति । समानो धर्मः साधारणा

धर्मः। अनेकस्माद्व्यावृत्तो धर्मः अनेकधर्म इति शाकपार्थिवादित्वात् समासः । सजातीयाद्विजातीयाच्चानेकस्माद्व्यावृत्तो धर्मः असाधारणो धर्म इत्यर्थः । ततश्च साधारणधर्मदर्शनमसाधारणधर्मदर्शनं विप्रतिपत्तिश्चेति कारणत्रयं संशये दर्शितं भवति । इदं च कारणत्रयं साधकबाधकप्रमाणानवतारदशायामेव प्रयोजकमित्याह— **उपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति** । उपलब्धिरेकस्यां कोटौ साधकं प्रमाणम्। अनुपलब्धिरन्यस्यां कोटौ बाधकं प्रमाणं तदभाव इत्यर्थः । यदा हि दीर्घत्वादिसाधारणधर्मदर्शनात् 'अयं स्थाणुर्वा पुरुषो वेति संशयो भवति, तदा यद्युत्तरक्षणे स्थाणुत्वकोटौ वक्रकोटरादिमत्त्वं स्थाणुत्वव्याप्यं गृह्यते । यदि वा पुरुषत्वबाधकं निश्चेष्टत्वादिकं गृह्यते, तदा न संशयः पुनरुद्भवति । विशेषापेक्ष इत्यनेन स्वयमवधारणापेक्ष इत्युक्तम् । ततश्च निष्कम्पप्रवृत्तिजनने अवधारणापेक्षत्वोक्त्या स्वस्यावधारणात्मत्वं नास्तीति द्योतितम् । ततश्चानवधारणात्मकं ज्ञानं संशय इत्युक्तं भवति । तत्त्वं च स्वरूपविशेषसम्बन्धेन जायमानज्ञानत्वं यथा अयं घट इति विशिष्टज्ञानस्य 'घटघटत्वसंसर्गा' इति समूहालम्बनतो विषयकृतविशेषाभावेऽपि विषयज्ञानयोस्स्वरूपसम्बन्धमादायैव समूहालम्बनात् भेदो वक्तव्यः, तथा निश्चयाद्व्यावृत्तस्वरूपसम्बन्धविशेष एव संशयत्वघटको भविष्यति । ततश्च 'इदं रजतमि'ति भ्रमस्थले चाकचक्यादिसाधारणधर्मदर्शनस्योभयकोटिसंशयप्रयोजकता भविष्यतीति कथं रजतमित्येककोटिक एव भ्रमः । न च रागाख्यदोषवशाद्रजतमित्येव भ्रमः स्यात् । रागस्य रजतविषयकस्य रजतभ्रम एव दोषत्वादिति वाच्यम् । वीतरागाणामपि रजतभ्रमदर्शनात् । ततश्च रजतकोट्येकपक्षपातिनः दृष्टकारणस्य निरूपयितुमशक्यतया अदृष्टमेव तदसाधारणं कारणं कल्प्यते । अदृष्टस्य कार्यैकोन्नेयतया यथाकार्यमेव तत् कल्प्यत इति न तत्राप्यव्यवस्थाशङ्कासमुन्मेष इति । निश्चितौ विषयस्य निश्चितत्वापादकौ । आत्मानात्मविवेकिनामिति । परोक्षनिश्चयस्यापरोक्षभ्रमविरोधित्वाभावादिति भावः । तद्यथेति । अहिनिर्ल्वयनी अहित्वक् । अत्र वल्मीकग्रहणेन दार्ष्टान्तिके शरीरसम्बन्धो द्योत्यते । वल्मीकपतिताहिनिर्ल्वयनी अहिना संयुक्तापि तदभिमानरहिता यथा भवति, तथा जीवन्मुक्तस्य प्रारब्धवशात् आत्मना सम्बद्धमपि शरीरं न यथापूर्वमभिमानमयं भवति । प्राण एव प्राणन्नेवेत्यर्थः । 'प्राणन्नेव प्राणो नाम भवती'ति श्रुतेः । सचक्षुरचक्षुरिवेति । अत्र इवशब्दैरभिमानराहित्यं द्योत्यते । स्थितप्रज्ञलक्षणानि जीवन्मुक्तलक्षणानि । यस्य त्विति । श्रुतब्रह्मणोऽपि मनननिदिध्यासनपरिपाकविकलस्येति शेषः । **श्रवणवदवगत्यर्थत्वान्मनननिदिध्यासनयोरिति** । यद्धि शास्त्रं यत्प्रतीतिमुद्दिश्य प्रवर्तते, तच्छास्त्रं, तत्प्रधानकम् । सत्यादिवाक्यं च यथा ब्रह्मप्रतीति-

मुद्दिश्य प्रवृत्तत्वात् ब्रह्मप्रधानकं, तथा श्रवणादिशास्त्रमपि तदुद्देशेनैव प्रवृत्तत्वात् ब्रह्मप्रधानकम् । यदि त्ववगतं ब्रह्मान्यत्र विनियुज्येत, तदा यत्र विनियुज्यते ब्रह्म स एवार्थो ब्रह्मोपसर्जनकप्रतिपाद्यस्स्यात् । ततश्च कृत्स्नं वेदान्तवाक्यजातं तत्प्रतीत्युद्देशेन प्रवृत्तमिति स एवार्थः प्रधानं स्यात् । न त्वेतदस्तीत्याह—**यदि ह्यवगतमिति । प्रतिपत्तिविधिपरत्वे हीति** । ननु, वेदान्तानां प्रतिपत्तिविधिपरत्वेऽपि पृथग्वेदान्तशास्त्रारम्भे कानुपपत्तिः । ननु, तथा सति 'अथातो धर्मजिज्ञासे'ति सूत्रे धर्मशब्देन वेदान्तार्थोऽपि संगृहीतस्स्यात् । अस्तु -को दोषः । एष दोषः वेदान्तार्थविचारोऽपि तत्रैव प्रतिज्ञातो भवतीति प्रतिज्ञातश्चार्थः कात्स्न्र्येन महर्षिणा जैमिनिना निरूपणीयः । ततश्च जैमिनिनैव धर्मस्य कर्मोपासनात्मनो निरूपणप्राप्तेः पृथक्छास्त्रारम्भे व्यर्थतेति चेत् , न तावता वेदाध्ययनानन्तरं कर्मोपासनारूपो धर्मो विचारणीय इत्येतावन्मात्रं लभ्यते । न तु जैमिनिनैव तद्विचारविषयीभूता न्याया ग्रथनीया इति प्राप्नोति । स्वयं तद्ग्रथनस्याप्रतिज्ञातत्वादिति चेत्, उच्यते । इदं हि सूत्रं स्वग्रन्थस्य योऽर्थः, तत्राधिकार्यादिनिरूपणपरमिति तावदविवादम् । तन्निरूपणं च तस्मिन् ग्रन्थे त्वध्येतॄणां प्रवृत्तिसिद्ध्यर्थम् । तत्र यद्यपि मुखतो वेदाध्ययनानन्तरं धर्मविचारः कर्तव्य इत्येतावदेव प्रतिपाद्यते, तथापि स्वग्रन्थे अधीतवेद एवाधिकारी धर्मज्ञानोपयोगिनो न्याया एव विषयीभूता इत्यादिकमर्थात् सिद्ध्यति । मुखतोऽर्थान्तरप्रतिपादनद्वारा स्वग्रन्थाधिकार्यादिप्रतिपादनं तु ग्रन्थकृतां शैली । ततश्च स्वेन क्रियमाणस्य सूत्रसन्दर्भस्य प्रतिपाद्यं धर्मजिज्ञासापदेन उपात्तमिति धर्मज्ञानोपयोगिन्यायजातमस्मिञ्छास्त्रे निबध्यत इत्यर्थात् सिध्यति । ततश्च वेदान्तानामुपासनापरत्वे तदुपयोगिन्यायजातमस्मिन्नेव शास्त्रे ग्रथितमिति पृथक्छास्त्रारम्भो व्यर्थ एव प्राप्नोति । सिद्धब्रह्मपरत्वे तु नायं दोषः । धर्मशब्देन ब्रह्मणो सङ्गृहीततया तदुपयोगिनां न्यायानां तत्रनिरूपणाप्रसक्तेः । ननु, तत्रत्यधर्मशब्देन वेदान्तार्थसङ्ग्रहेऽपि वेदान्तार्थोपासनोपयोगिनां न्यायानां तत्राग्रथनात् कथं बादरायणकृतस्य निबन्धनस्योपासनोपयोगिन्यायनिरूपणोपयोगिनस्तेन गतार्थतोच्यते । न च तावता जैमिनेरज्ञता प्राप्ता भवति यावता साकल्येन प्रतिज्ञातार्थानिर्वहणमिति वाच्यम् । समयविशेषपूर्वकमेकस्यामेव प्रतिज्ञायामुभाभ्यां व्यवस्थया न्यायविशेषनिबन्धनमिति कल्पनोपपत्तेरित्याशङ्क्य तथासति कृत्स्नशास्त्रार्थप्रतिज्ञायाः प्रागेव जातत्वादवशिष्टार्थस्य प्रतिज्ञेयं स्यात् । ततश्च यथाश्रुतासङ्गतिरित्याह—**अथातःपरिशिष्टेति** । ननु, ब्र-

ह्मपदस्य सूत्रगतस्य ब्रह्मोपासनापरत्वात् प्रकृतसूत्रेणैव सोऽर्थो लभ्यत इत्याशङ्क्य तथासति सूत्रस्थब्रह्मपदस्वारस्यभङ्ग इति मनसि निधाय स्वमते सूत्राञ्जस्यं वदन्नुपसंहरति—**ब्रह्मात्मैक्यावगतिस्त्विति** । ब्रह्मप्रतीतिमुद्दिश्य शास्त्रस्य प्रवृत्तत्वात् । ब्रह्मैव प्रधानमित्यमुमर्थं ब्रह्मप्रतीतेरुद्देश्यतासिद्ध्यर्थं तस्याः परमप्रयोजनोपयोगितां प्रतिपादयन्नुपसंहरति—**तस्मात् अहं ब्रह्मास्मीत्येतदवसाना** इति । एतदवगतिपर्यन्ता इत्यर्थः । तावतैव कृतकृत्यत्वादिति भावः । न केवलं प्रत्यगभिन्नब्रह्मसाक्षात्कारे सति लौकिकवैदिकप्रमाणव्यापारो व्यर्थः । अपि तु विरोधान्नैवोन्मिषिष्यतीत्याह—**न हीति** । बाधितानुवृत्त्या प्रवर्तमानान्यपि न यथापूर्वं प्रवर्तन्त इत्यर्थः । उक्तेऽर्थे वृद्धसम्मतिमाह—**अपि चाहुरिति** । 'सद्ब्रह्मात्माहमि'त्येवं बोधे पुत्रदेहादिबाधनात् तद्विषयकममाहमित्यभिमाननिरासात् गौणात्मा पुत्रादिः मिथ्यात्मा देहादिः, तयोरसत्त्वे तद्विषयकरागासत्त्वे कार्यं लौकिकं वैदिकं वा कथं भवेत् । सर्वस्यापि कार्यस्य प्रमातृपूर्वकत्वेन ब्रह्मज्ञानानन्तरं तदभावादित्याह—**अन्वेष्टव्यात्मविज्ञानादिति** । ननु, पाप्मदोषादिमतोऽपहतपाप्मना परमेश्वरेण सहैक्यं नोपपद्यते । ततश्च कथं 'सद्ब्रह्मात्माह'मिति ज्ञानमित्यत आह—**अन्विष्टस्स्यादिति** । प्रमाता विचारितश्चेत् वस्तुगत्या पाप्मादिदोषरहित इत्यर्थः । ननु, लौकिकवैदिकपदार्थानामनृतत्वे तज्ज्ञाने कथं प्रामाण्यबुद्धिरित्यत आह—**देहात्मप्रत्यय इति** । देहात्मज्ञानवदेव तत्र प्रामाण्यबुद्धिः । न तु वस्तुगत्या । सा च आत्मनिश्चयात्मकबोधपर्यन्तमनुवर्तत इत्यर्थः ॥

रामानन्दपदाम्भोजं प्लवं कृत्वा मनोहरम् ।
चत्वारोऽप्यर्णवा एते समुत्तीर्णा यथासुखम् ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

॥ समाप्ता चतुस्सूत्रिका ॥

---

## ईक्षतेर्नाशब्दम् ।५।

वृत्तानुवादपूर्वकं सङ्गतिमाह—**एवमिति** । पर्यवसानमुक्तमित्यन्तश्शास्त्रयोनित्वसमन्वयसूत्रार्थानुवादः । इत्युक्तमित्यन्तः जन्मादिसूत्रार्थानुवादः । ततश्च त्रिसूत्र्या जगत्कारणं सर्वज्ञं परमप्रयोजनरूपं वेदान्तप्रतिपाद्यमित्युक्तं, तन्न सम्भवति । जडस्य स्वप्रकाशानन्दपरमपुरुषार्थात्मकपरब्रह्मणस्सकाशात् भिन्नस्य प्रधानस्यैव वेदान्तप्रतिपाद्यत्वावगमादिति साङ्ख्यमतमाश्रित्य पूर्वपक्षप्रवर्तनादाक्षेपिकी सङ्गतिः ।

अत्र विप्रतिपत्तेस्संशयः । साङ्ख्या हि सत्वरजस्तमोगुणात्मकं प्रधानमेव जगत्कारणं, न कश्चिदधिष्ठातापेक्षित इति वदन्ति। तार्किकास्त्वीश्वराधिष्ठितान् परमाणून् मूलोपादानभूतान्मन्यन्ते । योगास्तु सेश्वरं प्रधानमिति । असदेवोपादानमित्यन्ये । अविद्योपाधिकं सत्यज्ञानानन्दात्मकं ब्रह्मैव निमित्तमुपादानं चेति औपनिषदास्सिद्धान्तिनः । अस्मिंश्चाधिकरणे साङ्ख्यपक्षः सद्विद्यामवलम्ब्य प्रवृत्तो निराक्रियते। अन्येषां तु पक्षाणां तदुपन्यस्तवाक्ययुक्त्योराभासताप्रतिपादनपूर्वकं निराकरणं 'एतेन सर्वे व्याख्याता' इत्येवमादिषु भविष्यति । साङ्ख्यस्यापि पुनश्श्रुत्यन्तरावष्टम्भेन युक्त्यन्तरावष्टम्भेन च प्रवृत्तस्य निराकरणमुत्तरत्र भविष्यति । तत्र साङ्ख्या मन्यन्ते—प्रधानं ह्यनुमानगम्यम् । सृष्ट्याद्यं कार्यं स्वसदृशप्रकृतिकम् । कार्यत्वात् सम्मतवदिति अनुमानसम्भवात् । तत्र सदादिपदानां शक्तिग्रहस्सम्भवति । अतो वेदान्तानां तत्परत्वमेव । न तु ब्रह्मपरत्वम् । तस्य प्रमाणान्तरागम्यत्वेन तत्र पदानां शक्तिग्रहासम्भवात तदाह—**साङ्ख्यादय इति** । अपि च तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे'ति श्रुत्या कार्यानुसारेण कारणमनुमेयमिति, तच्च तत्पक्षानुगुणम् । अनुमानसिद्धकारणानुवादित्वाभ्युपगमात् । न तु वेदान्तिनः । 'शास्त्रयोनित्वाभ्युपगमा'दिति । तदाह—**सर्वेष्वेवेति** । इदं च युक्तिद्वयं नातीव प्रयोजकम् । यूपादिशब्दवदलौकिके ब्रह्मादिशब्दानां सङ्गतिग्रहोपपत्तेः । लोकत एव गृहीतशक्तिकानां वाक्यार्थविधया ब्रह्मप्रतिपादकतोपपत्तेश्च । कथमन्यथा स्वर्गयागादिसाध्यसाधनभावः सिध्येत् । नापि 'अन्नेन सोम्य शुङ्गेने'ति वचनविरोधः । वेदान्तैकगम्य एव ब्रह्मणि वेदान्तानां तत्र तत्र तात्पर्यद्योतनाय लोकसिद्धाया एव तस्या अनुवादात् । अतस्सर्वज्ञत्वस्य ब्रह्मण्यपि मुख्यत्वासम्भवेन गौणत्वे आवश्यके प्रायपाठानुसारेणेक्षणस्य सद्विद्यागतस्य प्रधान एव योजनीयत्वात्तदनुसारेण सर्वज्ञत्वमपि प्रधान एव योजनीयमिति मनसि निधाय सर्वज्ञत्वानुपपत्तिमेव पूर्वपक्षयुक्तितया दर्शयति—**यानीत्यारभ्य कस्यचिदुपपन्नेत्यन्तेन** । सर्वज्ञत्वानुपपत्तौ च न ब्रह्मणो जगत्कर्तृत्वमुपपद्यत इति सिध्यति । अपि चानेकात्मकस्येत्यनेन तु पूर्वपक्षावसानवाक्येन निरवयवस्य ब्रह्मणः परिणामासम्भवादुपादानत्वं तावन्न सम्भवतीति दर्शयिष्यते । ननु, सर्वज्ञत्वस्योभयत्र मुख्यत्वाभावे तुल्ये प्रधानगतमेव तत् ग्राह्यमित्यत्र 'गौणश्चेदि'ति सूत्रे वक्ष्यमाणा या शङ्कावसरे युक्तिः, सैव नियामिका तत्र चेक्षणं ब्रह्मणि मुख्यं न सम्भवतीति व्युत्पादयिष्यते । तेनैव च सर्वज्ञत्वस्यापि ब्रह्मणि गौणत्वं प्राप्नोति । किमर्थमत्र पृथक् तन्निरूप्यते। परिणामासम्भवेऽपि विवर्तमादाय ब्रह्मण उपादानत्वं समर्थयिष्यते कृत्स्नप्रसक्त्यधिकरणे । अत ईक्षति-

सूत्रनिवर्तनीयत्वेनेदं शङ्काद्वयं कथमुपक्षिप्यते, उच्यते 'गौणश्चेदिति सूत्रे वक्ष्यमाणे-वास्मिन्नधिकरणे निवर्तनीया शङ्का । परं तु 'पुरुषार्थोऽतश्शब्दादि'त्यधिकरणवत् सिद्धान्तोपक्षेपपूर्वकमिदमधिकरणम् । अत आद्यसूत्रावतरणार्थं सूत्रान्तरनिवर्तनीया शङ्कात्रापि लिखिता । **प्रधानकारणपक्षेऽपीति** । प्रधानमेव कारणमिति पक्षेऽपीत्यर्थः । असम्भवो ह्यत्र जगत्कारणत्वलक्षणस्य ब्रह्मणि शङ्क्यते । न त्वतिव्याप्तिः । प्रधाने जगत्कारणत्वस्य यथा त्वया सर्वज्ञत्वादिकं क्लेशेन व्याख्येयं ब्रह्मणि, तथा मया प्रधानेऽपि तच्छक्यते व्याख्यातुमित्यपेरर्थः । **सर्वशक्तित्वं तावदिति** । कार्यस्य सूक्ष्मावस्था शक्तिरित्युच्यते । प्रधानस्य तदाश्रयतया सर्वशक्तित्वं सम्भवतीत्यर्थः । ज्ञानं नित्यं पुरुषस्वरूपं जन्यं वृत्तिरूपम् । तत्र वृत्तिरूपं ज्ञानं प्रधानपरिणामभूतान्तःकरणसत्त्वांशधर्मः । ततश्चान्तःकरणद्वारा प्रधानस्य सर्वविषयकज्ञानाश्रयत्वं सम्भवतीत्याह—**एवं सर्वज्ञत्वमिति** । योगिनामपि सर्वज्ञत्वव्यपदेशः सत्वगुणाविवेकादित्याह—**तेन चेति** । कार्यकरणवन्तः शरीरेन्द्रियवन्तः । सत्त्वस्य च सर्वविषयकज्ञानाकारपरिणामो निरतिशयतादशायाम् । यदाहुः—'निरतिशयं सर्वज्ञताबीज'मिति । सत्त्वस्य निरतिशयता च रजस्तमोभ्यामनभिभवः । ब्रह्मणस्तु सर्वज्ञत्वं नित्यज्ञानमादाय वक्तुं न शक्यम् । नित्यज्ञानस्वरूपत्वेनाभ्युपगतस्य तदाश्रयत्वायोगात् । नापि जन्यज्ञानमादाय । केवलस्य निर्धर्मकस्य तदयोगात् । न च प्रलयदशायां ज्ञानजननोपयोगिनी देहेन्द्रियादिसामग्र्यपि विद्यते । ततश्च ब्रह्मणः सृष्ट्यारम्भकाले किञ्चिज्ज्ञत्वमपि न सम्भवति । दूरे सर्वज्ञत्वमित्याह—**न केवलस्येति** । ननु, सृष्ट्यारम्भकालेऽन्तःकरणादिपरिणामाभावेन प्रधानेऽपि कथं सर्वज्ञत्वव्यपदेश इत्याशंक्य तदाप्यन्तःकरणसूक्ष्मावस्थामादाय सर्वज्ञानजननशक्तिर्वर्तत इति तामादाय सर्वज्ञत्वव्यपदेशो भविष्यतीत्याह—**सर्वज्ञानकारणभूतमिति** । ननु, शक्त्यात्मना विद्यमानं सर्वज्ञत्वं न कर्तृत्वोपयोगि । अभिव्यक्तस्यैव तस्य कर्तृत्वोपयोगित्वादित्याशंक्य न कर्तृत्वोपयोगि सर्वज्ञत्वं प्रधानेऽस्तीत्युच्यते । अपि तु सर्वज्ञत्वश्रुतेर्गतिरुच्यते । त्वयापि हि तथैव वक्तव्यमित्याह—**अवश्यं चेति** । त्वया किं नित्यज्ञानमादाय सर्वज्ञत्वव्यपदेशोऽभिव्यक्तसर्वज्ञत्वमादाय व्याख्यायते, उत वृत्तिज्ञानमादाय । नाद्यः । सर्वज्ञ इत्यत्र कृत्प्रत्ययेन स्वातन्त्र्यं प्रतिपाद्यते । स्वातन्त्र्यं च क्रियाश्रयत्वम् । कारकत्वं क्रियाजनकत्वम् । गच्छतीत्यादौ च यन्मते भावनापि धात्वर्थः, तन्मते धातूपात्तक्रियां प्रतीति विशेषणीयं आश्रयत्वे जनकत्वेच । इदं च वैयाकरणमतम् । तन्मते चाख्यातेनैव आश्रयत्वं जनकत्वं च

धर्मिणा सहाभिधीयते । प्रथमान्तपदार्थेन तु सह तस्याभेद एव । एवं कृत्प्रत्ययेऽपि द्रष्टव्यम् । मीमांसकादीनां तु मते आख्यातेन भावनाभिधीयते । जनकत्वे सत्याश्रयत्वं प्रथमान्तपदार्थेन सहाख्यातार्थस्य संसर्गविधया भासते । कृत्प्रत्ययेन तु तन्मतेऽपि तदुभयाश्रयोऽभिधीयत एव । अभेदान्वयानुरोधात् । तन्मते च प्रत्ययोपात्तक्रियाश्रयत्वे सति जनकत्वमिति कर्तृत्वनिर्वचनं द्रष्टव्यम् । जानातीत्यादौ तु क्रियाया अभावात् मुख्यस्य कर्तृत्वस्याभावेऽपि लोके आश्रयत्वं जनकत्वं च ज्ञानादिनिरूपितं बोध्यत एव । अतस्सर्वज्ञ इत्यत्र लौकिकव्युत्पत्त्यनुसारेण ज्ञानजनकत्वे सति ज्ञानाश्रयत्वं प्रतीयते । तदुभयं वेदान्तिना सर्वज्ञ इत्यत्र प्रकृतिभूतज्ञाधातुना नित्यज्ञानाभ्युपगमे वक्तुं न शक्यते । ब्रह्मण एव नित्यज्ञानस्वरूपत्वाभ्युपगमेन तदाश्रयत्वायोगात् नित्यं प्रति जनकत्वायोगाच्च । तदाह—**ज्ञाननित्यत्व इति** । सर्वज्ञ इत्यत्र ज्ञाधातुना न नित्यं ज्ञानं प्रतिपाद्यत इत्युच्यते । अपि तु वृत्तिरूपं ज्ञानम् । तर्हि सृष्ट्यारम्भकाले वृत्तिज्ञानसामग्र्या अभावात् तत्कालावच्छेदेन सार्वज्ञ्यं न स्यादित्याह—**अथानिष्टं तदिति** । ज्ञाधातुप्रतिपाद्यत्वेन नित्यं ज्ञानमनिष्टमित्यर्थः । उक्तस्यैवार्थस्य विवरणम्—**अपि चेति** । तथाहीत्यर्थे अपिचेति । अथवा पूर्ववाक्येन नित्यसार्वज्ञ्यं न सम्भवतीत्युक्तम् । तत्र चेद्वेदान्ती इष्टापत्तिं वदेत्, काल्पनिकानां सर्वज्ञत्वादीनां नित्यत्वानुपगमात् । तदापि सृष्ट्यारम्भकाले कर्तृत्वोपयोगिसार्वज्ञ्यं त्वयोद्भूतं स्वीकर्तव्यम् । तच्च तवापि न सम्भवतीत्याह—**अपि चेति** । लोके सावयवानामेव उपादानत्वदर्शनात् त्रिगुणात्मना सावयवस्य प्रधानस्य उपादानत्वं सम्भवति । न तु ब्रह्मणः । निरवयवत्वादित्याह—**अपि चेति** । अतो जगत्कारणतया वेदान्तेषु प्रतिपाद्यमानं प्रधानमेव । न ब्रह्मेति पूर्वः पक्ष इत्याह—**एवं प्राप्त इति** । 'तत्तु समन्वया'दिति सूत्रे तच्छब्दः जन्मादिसूत्रे यादृशं ब्रह्म निरूपितं तादृशब्रह्मप्रतिपादकः । ततश्च जगत्करणताप्रतिपादकोऽपि भवत्येव । तावन्मात्रार्थतया इहानुषज्यते । प्रधानमिति पदमध्याह्रियते । अध्याहारोऽपीक्षतेरित्यनेन सूचितः । एतेन हीक्षणानुपपत्तिः सूच्यते । साचाचेतने प्रधान इति । ततश्च प्रधानं न जगत्कारणमि'ति प्रतिज्ञा लभ्यते । तदाह—**न साङ्ख्यपरिकल्पितमिति** । सौत्रं अशब्दमितिपदं हेतुसमर्पकमित्याह—**अशब्दं हीति** । अशब्दत्वसाधकतया ईक्षतेरितिपदं योजयति—**कथमिति** । ततश्चायमर्थः—साङ्ख्यपरिकल्पितं प्रधानं न जगत्कारणम् । कारणत्वधर्मिनिर्देशकसदादिपदाप्रतिपाद्यत्वात् । तदप्रतिपाद्यत्वं च सदादिशब्दार्थस्य ईक्षणकर्तृत्वाम्नानादिति । इदं च

श्रुतिपर्यालोचनया प्रधानस्य जगत्कारणत्वं न सम्भवतीत्यनेन तात्पर्येण क्वचिच्च षोडशकलं पुरुषमिति इहैवान्तश्शरीरे सोम्य स पुरुषो यस्मिन्नेताष्षोडशकलाः प्रभवन्तीति पूर्ववाक्येन षोडशानां प्राणादीनां कलानां कर्तारं प्रस्तुत्य। ईक्षतेरिति धात्वर्थनिर्देश इति । 'इक्श्तिपौ धातुनिर्देश' इत्यनेन धातुनिर्देशे श्तिपो विधानात् श्तिबन्तेन सौत्रेण ईक्षतेरितिपदेन यद्यपि मुख्यया वृत्त्या ईक्षतिधातुरेव प्रतीयते, तथापि अत्र लक्षणया ईक्षतेरिति पदं धात्वर्थपरं भविष्यति । ननु, किमर्थं लक्षणयार्थपर्यन्तता कल्प्यते । ईक्षतेरिति धातुरपि तत्र मुख्यया वृत्त्या सङ्गतः । तत्कारणतानिराकरण उपयुक्त एवेति चेदुच्यते । अर्थानुसन्धानं विना धातुमात्रं न प्रधानकारणतानिराकरण उपयुज्यते । अतः अर्थपर्यन्तत्वमाश्रितम् । यजतेरितिवदिति । 'इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वमि'ति जैमिनिसूत्रावयवोऽयम् । तत्र यजतेरिति श्तिबन्तो यजिधात्वर्थलक्षकः । अयं तस्य सूत्रस्यार्थः । 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यादौ फलाय करणं निर्दिश्यते । न तु कृत्स्नेतिकर्तव्यता । यथा दर्शपूर्णमासादावितिकर्तव्यतायाश्च कार्त्स्न्यं दृष्टादृष्टाङ्गानां सर्वेषां निर्देशेऽवगन्तुं शक्यते। तत्र यद्यप्यदृष्टार्थानां अङ्गानां साकल्यं शास्त्रेण यावन्ति तानि निर्दिष्टानि तावद्भिरेव कल्पयितुं शक्यम् । दृष्टार्थानां तु तथा न सम्भवति । ततश्च दृष्टार्थान्यङ्गानि अपेक्षितानि सर्वाणि तत्र निर्दिष्टानि । सौर्यादौ न तानि तथा निर्दिष्टानि । यद्यपि क्रतुस्वरूपसम्पादकानि देवतादीनि निर्दिष्टान्येव, तथापि चरूत्पत्तिप्रकारो न निर्दिष्टः । ततश्च 'सौर्ययागेन ब्रह्मवर्चसं भावये'दित्युक्ते कथं भावयेदित्याकांक्षा भवति। ननु, नायं नियमः करणनिर्देश इतिकर्तव्यताकांक्षा भवतीति । भोजनेन तृप्तिं कुर्यादित्यादौ तददर्शनादिति चेन्न। तत्र भोजनेतिकर्तव्यतायाः पात्रासादनादिरूपायाः लोकनिरूढत्वेन तत्रापेक्षायाः प्रसिद्धत्वाभावेऽपि 'पाकेन मण्डकान् कुर्या'दित्यादौ तत्प्रकारानभिज्ञस्य भवत्येवाकांक्षा कथं पाकेन मण्डकाः कर्तव्याः इति, तद्वत् सौर्ययागेन ब्रह्मवर्चसं भावयेदित्यत्र प्रकारस्यानिर्ज्ञातत्वात् भवत्येवाकांक्षा कथं भावयेदिति । तदिदमुक्तमितिकर्तव्यताया अविधेर्विधानाभावाद्यजतेः पूर्ववत्त्वं सौर्यादियागस्य यत्रेतिकर्तव्यता कृत्स्ना वर्तते, तत्पूर्वकत्वम् । लोकेऽपि हि पूर्वमोदनपाकं व्युत्पाद्यानन्तरदिने वैशेषिकाङ्गमात्रनिर्देशपूर्वकं कृसरं पचेति वदति, तदा बोध्यस्येत्थं बुद्धिर्भवति अवशिष्टेतिकर्तव्यता ओदनपाके या पूर्वं निर्दिष्टा, सैव भविष्यति । ततश्च जैमिनिसूत्रे यथा यजतिशब्दः सौर्यादियागपरः, तथात्रापि ईक्षतिशब्दः तदर्थपरो भविष्यति । एवं च यद्यपीक्षणा-

दित्येव वक्तव्यं, तथापि शब्दगतिपर्यालोचनया प्रधानकारणवादो निराक्रियत इति द्योतनाय शब्दप्राधान्येन निर्देशः । **यस्सर्वज्ञ इति** । सामान्यतो विशेषतश्च सर्वविषयकज्ञाननिरूपणार्थं पदद्वयं सर्वज्ञः सर्वविदिति । **ज्ञानमयमिति** । स्वार्थे मयट् । 'तपसा चीयते ब्रह्मे'ति पूर्ववाक्ये निर्दिष्टं तपो यस्य ज्ञानरूपं इदं तपो रूपं ज्ञानं वृत्तिरूपम । पूर्वमन्त्रे तपश्शब्दार्थस्य उपचयकारणताप्रतिपादनात् । न हि स्वरूपभूतेन ज्ञानेनोपचयस्सम्भवति । सृष्टिकाले च मायामयीवृत्तिर्ब्रह्मणः सम्भवत्येव । 'एतद्धिरण्यगर्भाख्यं ब्रह्म जायत' इति लिङ्गात् । नामरूपं भौतिकविषयम् । हिरण्यगर्भसृष्ट्यनन्तरं निर्देशात् । **ज्ञानप्रतिबन्धशक्तिमाश्रित्येति** । साङ्ख्यमते त्रयाणां गुणानां मध्ये सत्वं लघु प्रकाशकार्थं चलो रजोगुणः प्रवृत्तिकार्यश्च गुरुस्तमोगुणः नियमनकार्यश्च । तत्र सत्वगुणस्य प्रकाशकत्वेऽपि चलस्वभावत्वाभावात् न ज्ञानाकारेण परिणमते । स्वतः रजोगुणेन चलस्वभावेन प्रेरितः ज्ञानाकारेण परिणमते । स च परिणामः चलस्वभावेन रजसा यावत् सर्वत्र चालयितुमारभ्यते, तावदेव तमसा प्रतिबध्यत इति भोगप्रयोजककर्मानुसारेण विषयव्यवस्था भवति । ततश्च प्रतिबन्धशक्तेस्तम एव यद्यप्याश्रयो भवति, तथापि प्रतिबन्धशक्त्या विषयतया रजोऽप्यपेक्षितमिति रजस्तमोव्यपाश्रयामित्युक्तम् । न च तमोव्यपाश्रयां प्रतिबन्धशक्तिमाश्रित्य किञ्चिज्ज्ञत्वव्यपदेशोऽस्तु नाम तथापि सत्वव्यपाश्रये सर्वज्ञत्वनिर्देशे कानुपपत्तिरिति वाच्यम् । लोके हि जीवानां सर्वज्ञत्वशक्तावपि न सर्वज्ञत्वेन व्यवहारः । तत्प्रतिबन्धोपयोगिनस्तमसस्तत्र विद्यमानत्वात् । एवं तमस्विनि प्रधाने शक्त्यापि सर्वज्ञत्वनिर्देशोऽनुपपन्न एव । अपि च यस्मिन् सति घटः प्रकाशते, घटोऽस्तीत्येवमादिव्यवहारो दृश्यते । तादृशोऽर्थो जानात्यादिना प्रतिपाद्यत इति सर्वसम्प्रतिपन्नम् । सचार्थस्तार्किकादिमते आत्मविशेषगुण इति । स तु पक्षः आत्मनः कूटस्थत्वप्रतिपादकवचनविरुद्धः । कूटस्थत्वं हि निर्विकारत्वम् । उपजनापायशाली धर्म एव च विकार इत्युच्यते । इदं च साङ्ख्येनापि स्वीकृतमेव । सिद्धान्ते तु तादृशव्यवहारोपयोगिजानात्यर्थो वृत्तिप्रतिफलितचैतन्यस्वरूपम् । तथाच श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति विषयप्रकाशोपयोगितां नित्यस्वरूपचैतन्यस्य प्रतिपादयति । 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति विषयप्रकाशकं ज्ञानं प्रस्तुत्य तत्र 'गन्धाय घ्राणं दर्शनाय चक्षुरि'त्यादिनेन्द्रियाणामपि विनियोगं वदति । प्रत्यक्षेण च 'घटमहं जानामी'त्येकरूपेणैव विषयप्रकाश उपलभ्यते । ततश्च साक्ष्युपरक्ता वृत्तिः ज्ञाधात्वर्थ इति सिध्यति । साङ्ख्यस्याप्येतन् सम्मतमेव ।

तदाह—**अपि चेति**। एतादृशं च ज्ञानं अन्तःकरणाविद्यादितादात्म्यापन्नस्य चेतनस्यैव। न तु केवलप्रधानस्येत्याह—**न चाचेतनस्य प्रधानस्येति**। तथा च तच्छक्तिरपि विशिष्टस्य चेतनस्यैव भविष्यतीति भावः। ननु, योगिनाम्मते ईश्वरोऽस्ति। तथा च सृष्टिकाले प्रधाने सर्वविषया काचित् सात्विकी वृत्तिर्जायते। तत्रेश्वरज्ञानप्रतिफलनात् प्रधानस्यैव सर्वज्ञत्वं भविष्यतीति दृष्टान्तपूर्वकं शङ्कते—**अथ पुनस्साक्षिनिमित्तमिति**। तथा सति सृष्ट्यारम्भे जायमानां सात्विकीं वृत्तिं प्रति ब्रह्मणस्सिद्धान्तेऽप्यधिष्ठानतया तद्वृत्त्युपाधिकं सर्वज्ञत्वं भविष्यतीत्यभिप्रेत्य परिहरति—**तथा च सतीति**। **यन्निमित्तमिति**। जडस्य स्वसत्तायां स्फूर्त्तौ च ब्रह्मैव श्रुतिस्मृतिपर्यालोचनया प्रयोजकमिति भावः। पूर्वपक्ष्युक्तमनुवदति—**यत्तु पुनरुक्तमिति**। सर्वज्ञ इत्यत्र किं प्रकृत्यर्थस्य मुख्यत्वं सिद्धान्ते अनुपपन्नमित्युच्यते, प्रत्ययार्थस्य वेति विकल्प्याद्यं निराकरोति—**कथमित्यादिना दोषोऽस्तीत्यन्तेन**। द्वितीयं शङ्कते—**ज्ञाननित्यत्व इति**। **स्वातन्त्र्यव्यपदेश इति**। स्वातन्त्र्यं च जनकतया आश्रयत्वम्। नित्यज्ञानस्वरूपे ब्रह्मण्युभयमपि न सम्भवतीति भावः। यद्यपि वृत्तिज्ञानोपाधिकं सम्भवतीति प्रागेवोक्तं, तथापि स्वरूपज्ञानमादाय शङ्का। तत्र नित्यस्याप्यौपाधिको जन्यत्वव्यपदेश इति सदृष्टान्तमुपपादयति—**प्रततेति**। धर्मिणादित्येन सहैव सदा सन्ततत्वं प्रततत्वम्। **दहति प्रकाशयतीति**। ननु, 'दहति, प्रकाशयती'त्यत्रादित्यसम्बन्धिन औष्ण्यस्य प्रकाशस्य च न जन्यत्वं विषयोपाधिकं प्रतिपाद्यते। दहतिर्हि भस्मतानुकूलं व्यापारं प्रतिपादयति। भस्मतारूपरसान्तरापत्तिर्विक्लित्तिवत्। तत्र च सूर्यकान्तादिद्वारा आदित्यरश्मिसंयोगः प्रयोजकः। ततश्च दहतीति भस्मतानुकूलसंयोगवानिति प्रतिपादयति। एवं प्रकाशयतीत्यत्रापि णिच्प्रकृत्या तमोनिवृत्तिः प्रतिपाद्यते। न त्वादित्यप्रकाशः। तस्य घटादिगतत्वाभावेन तेषां कर्मता न स्यात्। णिचा चादित्यरश्मिसंयोगः। ततश्च प्रकाशयतीत्यत्रापि तमोनिवृत्त्यनुकूलसंयोगवानिति प्रतिपाद्यते। अतः कथमेतदादित्यसहजसिद्धयोरप्यौष्ण्यप्रकाशयोरादित्यजन्यतायामुदाहरणमिति चेत्, उच्यते। निदाघतप्तस्य पान्थस्यादित्यकिरणगतमूष्माणं स्वशरीरानुप्रविष्टादित्यकिरणभेदाग्रहात् स्वगतमनुभवतः अतिशयिततापविवक्षया यो दहतीति प्रयोगः यश्चादित्यप्रभासम्पर्केण घटादिगतां भास्वरताम् अविवेकात् साक्षात्सम्बन्धेन घटादिगतामनुभवतां प्रयोग 'आदित्यो मां दहती'ति आदित्यो घटं प्रकाशयतीति स इहोदाहरणम्। तत्र च स्वगतोष्मानुकूलसंयोगवानित्यर्थे पथिकस्य तात्पर्यं, 'घटादि गतभास्वररूपतानुकूल

व्यापारवानिति च घटादिदर्शिनां तात्पर्यम् । अतस्तादृशस्थले सहसिद्धयोरप्यौ-ष्ण्यप्रकाशयोरुपाधिसम्पर्ककृतं नित्यत्वमारोप्य यथा दहति प्रकाशयतीति व्य-पदेशः, एवं नित्यज्ञानस्यापि दृश्यावच्छेदकृतमनित्यत्वमारोप्य सर्वज्ञ इति व्यप-देशो भवतीति भावः । न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति । यद्य-प्युत्पत्तेः प्रागपि सूक्ष्मावस्थवस्तुयोग आध्यासिको ब्रह्मणोप्यस्ति, तथापि यथा आगन्तुको घटादिसंयोगः सहसिद्धस्यापि प्रकाशस्य जन्यतानिर्देशप्रयोजको वि-द्यते। नैवं ब्रह्मस्वरूपभूतज्ञानस्य सूक्ष्मतापन्नवस्तुसंयोगः सृष्ट्यव्यवहितप्राक्काले आ-गन्तुकोऽस्ति । येन तस्यां दशायां ज्ञानजन्यतानिर्देशप्रयोजको भवेदिति भावः। मास्तु तस्यां दशायां ज्ञानजन्यतोपयोगी सूक्ष्मवस्तुसंसर्गः । ज्ञानाधेयत्वनिर्देशप्र-योजकस्तु भविष्यति । सूक्ष्मवस्तुनोऽपि ब्रह्माधिष्ठितत्वेन तच्छुरितस्वरूपज्ञान-स्यापि तदाधेयत्वनिर्देशोपपत्तेः । दृश्यते च कर्तृप्रत्ययस्य जनकतांशं विहायाधार-तामात्रे प्रयोग इत्यभिप्रेत्याह—**नासत्यपीति** । **प्रकाशत इति** । अयं च प्र-योग आदित्यमण्डलगतं भास्वररूपम् अभिप्रेत्य । न च तस्य विषयसम्पर्कोऽस्ति। तत्प्रभाया एव विषयसम्पृक्तत्वात् । अतो विषयोपाधिकजन्यताभावेऽपि प्रकृत्य-र्थप्रकाशाश्रयतामात्रेण कर्तृव्यपदेशः । तथा सर्वज्ञ इत्यत्रापि भविष्यति । **कर्मा-पेक्षायां त्विति** । सूक्ष्मावस्थस्य वस्तुनस्तस्यां दशायां साक्षाद्ब्रह्मात्मकप्रकाशेन सम्बन्धस्यागन्तुकत्वाभावेऽपि वृत्तिद्वारकस्तत्सम्बन्ध आगन्तुको भवत्येव । तथा च वृत्तिद्वारा तत्सम्बन्धकर्मापेक्षायां त्वित्यर्थः । **सुतरामिति** । जनकतया ईक्ष-णाश्रयब्रह्मप्रतिपादकत्वादिति भावः । **योगशास्त्रविद इति** । 'ततः प्रत्यक्चेत-नाधिगमोऽन्तरायाभावश्च' इति हि पातञ्जलं सूत्रम् । तत ईश्वरप्रणिधानात् प्र-त्यगात्माधिगमो रागद्वेषाद्यन्तरायाभावश्च भवतीति सूत्रार्थः । ननु, नित्ये स्वरू-पभूते ज्ञाने शरीरापेक्षाभावेऽपि वृत्तिरूपज्ञाने तदपेक्षा स्यादित्यत आह—**अ-पि चेति** । शरीराद्यभावेऽपि मायामयी वृत्तिर्भविष्यतीति भावः । न च तादृशवृ-त्त्यभावेन ब्रह्मणः प्रलयदशायां सर्वज्ञत्वं न स्यादिति वाच्यम् । प्रलयदशायां सर्वज्ञत्वाभावेऽपि सृष्टिप्राक्काले सर्वज्ञत्वे न काचिदनुपपत्तिः । तावन्मात्रेण च 'यस्सर्वज्ञ' इति श्रुतिरुपपन्ना। कार्यं शरीरम् । करणम् इन्द्रियजातम् । स्वाभाविकी स्वशक्त्यधीना । ज्ञानबलक्रिया ज्ञानबलाभ्यां सहिता क्रिया । जवनो ग्रहीता सर्वाधिष्ठानतया सर्वसम्बद्धः । पश्यतीत्यादिना सर्वावभासकत्वं दर्शितम् । तदा-ह—**स वेत्ति वेद्यमिति** ॥९॥

उत्तरसूत्रमवतारयति — **अत्राहेति** । अयं भावः यदि तदैक्षत यस्सर्वज्ञ इत्यादौ प्रकृत्या नित्यमेव ज्ञानं विवक्ष्यते, तदा 'सविता प्रकाश-

त' इतिवत् आश्रयत्वमात्रं प्रत्ययार्थ इति वक्तव्यम् । तदपि दृश्यभेदोपाधिकम् । यदि तु वृत्त्यभिव्यक्तं चैतन्यं प्रकृत्यर्थः । तदा जनकत्वमपि प्रत्ययेन वृत्त्युपाधिकं प्रतिपादयितुं शक्यम् । पक्षद्वये प्रत्ययेन प्रतिपाद्योऽर्थो ब्रह्मण्यौपाधिक एव प्रतिपादनीयः । एवं सति यथाकथञ्चित् । सर्वज्ञादिवचनं साङ्ख्येनापि व्याख्यातुं शक्यते । योऽहि कार्यमालोचयति 'मयेदानीमिदं कर्तव्यमिति सोऽनन्तरमेव तत्कार्यं निर्वर्तयतीति कार्यालोचनकर्तरि प्रत्यासन्नकार्यत्वगुणोऽस्ति । प्रधानेऽपि प्रत्यासन्नकार्यत्वमस्ति । अतस्तं गुणमादायैक्षतेत्यादि प्रधाने योजयितुं शक्यम् । ततश्चैक्षतेत्यस्य प्रत्यासन्नकार्यताश्रय इत्यर्थः पर्यवस्यति । ननु, तथासति ईक्षतिधातुः प्रत्यासन्नकार्यतायां गौणः स्यादिति चेत्, तत्रापि प्रत्ययऔपचारिकस्स्यादिति तुल्यमेव । न च तथासति प्रकृतिप्रत्यययोर्मध्ये किं गौणं स्वीकर्तव्यमित्यत्र विनिगमनाविरहः । 'तत्तेज ऐक्षते' त्युत्तरत्राचेतने तेजआदौ प्रकृत्यर्थगौणताया उभयसम्प्रतिपन्नत्वेन गौणेक्षतिप्रायपाठानुसारेण सतोऽपीक्षणं गौणमेवेति वक्तुं युक्तम् । अतो नेक्षणानुसारेण सच्छब्दार्थः प्रधानं न भवतीति वक्तुं शक्यत इति इमां शङ्काम् उद्भाव्य निराकर्तुं सूत्रम्—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

तत्र शङ्काभागः अवतारप्रबन्धेन व्याख्यातः । परिहारभागं व्याचष्टे—**तन्नेत्यादिना** । अनेन जीवेनात्मनानुप्रविश्येत्यनेन देवतापदनिर्दिष्टस्य सतः स्वरूपभूतो जीव इति प्रतीयते । न चाचेतनस्य प्रधानस्य जीवः स्वरूपभूत इति वक्तुं शक्यम् । ततश्च न सच्छब्दार्थः प्रधानम् । किं तु ब्रह्म । अस्मिंश्च पक्षे सूत्रे आत्मशब्दः स्वरूपपरः धर्मपर्यन्तः सच्छब्दार्थं प्रति जीवस्य स्वरूपत्वप्रतिपादकाच्छब्दादिति तदर्थः । तदिदमाह—**सदेव सोम्येदमग्र आसीदित्युपक्रम्येत्यादिना प्रयोग उपपद्यत इत्यन्तेन** । **प्रसिद्धेरिति** । जीवशब्दस्य चेतने प्राणधारके रूढत्वादित्यर्थः । निर्वचनाच्च जीवप्राणधारणइत्यस्माद्धातोः कर्त्रर्थकृत्प्रत्ययेन योगादपि चेतनविशेषे वृत्तिरित्यर्थः । अपि च 'स आत्मे' त्यत्र तच्छब्देन प्रकृतं सत्पदार्थं परामृश्य तस्यात्मशब्देन चेतनत्वं प्रतिपाद्यत इति न सत्पदार्थस्य प्रधानत्वम् । अस्मिंश्चार्थे आत्मशब्दादिति सौत्रहेतुः स्पष्ट एव । तच्छब्देन प्रकृतं सत् परामृश्य तत्रात्मशब्दप्रयोगादिति । 'तत्त्वमसी'त्यनेन च त्वंशब्दनिर्दिष्टं जीवं प्रति तच्छब्दपरामृष्टस्य सतः स्वरूपत्वप्रतिपाद-

नात् । न ह्यचेतनं प्रधानं जीवस्य स्वरूपं भवति । अस्मिंश्चार्थे जीवं प्रति सतः स्वरूपत्वप्रतिपादकशब्दादिति सौत्रहेतुयोजना द्रष्टव्या । तदिदमाह—**तथेत्यादिनोपदिशतीत्यन्तेन** । तथा चोक्तगत्या सत्पदार्थस्य चेतनत्वनिर्णयात्, तत्र च मुख्यस्येक्षणस्य सम्भवाच्चरमश्रुतसापेक्षार्थप्रत्ययानुसारेण प्रथमश्रुतनिरपेक्षार्थप्रकृत्यर्थमुख्यत्वपरित्यागस्यानुचितत्वात् । लोके च 'देवदत्तो जानाती'त्यादौ औपाधिकाश्रयतामादायैव कर्तृप्रत्ययस्य व्यवस्थितत्वाच्च न प्रत्ययार्थमुख्यत्वाय प्रकृतेर्लक्षणाश्रयणीयेति परिहाराभिप्रायः । तेजआदिशब्दानां केवलजडप्रतिपादकतामाश्रित्य तत्र गौणमीक्षणमित्युक्तम् । इदानीं तु तत्रापि तज्ज आद्यवच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति तत्रापीक्षणं मुख्यमेवेत्याह—**तयोरपीति** । उत्तरसूत्रमवतारयति—**अथोच्येतेति** । **भवत्यात्मशब्द इति** । गौण्या वृत्त्या वर्तितुं योग्यो भवतीत्यर्थः । 'तत्त्वमसी'त्यत्र हि जीवस्यात्मा सच्छब्दार्थ इत्युच्यते । तच्च प्रधानस्य सच्छब्दार्थत्वेऽप्युपपद्यते । जीवोपकारके प्रधाने तदात्मत्वोपचारात् । एवमनेन जीवेनेत्यत्रापि प्रधानोपकारकत्वाज्जीवस्य प्रधानं प्रत्येवोपचारेणात्मत्वं शक्यं वक्तुम् । अन्धपङ्गुन्यायेन प्रधानजीवयोः परस्परमुपकार्योपकारकभावावगमात् । स आत्मेत्यत्र तु आत्मशब्दः प्रधाने 'भूतात्मा चेन्द्रियात्मा चेति न्यायेन स्वभाववचनो भविष्यती'ति शङ्कार्थः । 'वसन्ते वसन्ते ज्योतिषा यजेते'ति क्रतुविषयो ज्योतिश्शब्दो द्रष्टव्यः —

## तन्निष्ठस्य मोक्षोपदेशात् ।७।

तत्त्वमसीत्यत्र हि योऽर्थः प्रतिपाद्यते, तन्निष्ठस्य मोक्ष उपदिश्यते । तदर्थज्ञानं प्रस्तुत्य तस्य तावदेव चिरं यावन्नविमोक्ष्य इति वचनात् । यावत् प्रारब्धात् न विमोक्ष्यते । तावानेव तन्निष्ठस्य मोक्षे विलम्ब इति हि तदर्थः । यदि च 'तत्त्वमसी'ति वाक्यं प्रधानजीवयोः तादात्म्यं प्रतिपादयेत्, तन्निष्ठैव मोक्षकारणं स्यात्, न चैतदुपपद्यते । परमात्मनिष्ठाया एव श्रुतिषु स्मृतिषु च मोक्षहेतुत्वप्रतिपादनात् । साङ्ख्यैरपि प्रकृतिविविक्तपुरुषज्ञानस्य मोक्षहेतुत्वस्वीकारात् प्रकृतिपुरुषतादात्म्यज्ञानस्य तदस्वीकाराच्च । अतो न 'तत्त्वमसी'ति प्रधानतादात्म्योपदेशः । मुख्यया वृत्त्या तादात्म्योपदेशसम्भवे गौण्या तदसम्भवाच्चेति परिहारार्थः । **अन्धगोलाङ्गूलन्यायेनेति** । कश्चिद्वञ्चकः कञ्चनान्धं ग्रामप्राप्त्युपायं पृच्छन्तं पथि पतितमुपदिशति समीपस्थमनड्वाहं हस्ते गृहीत्वा

अस्य पुच्छं गृहीत्वा तिष्ठ।अयं नेष्यतीति। स तथैवाचरन्ननर्थमेव प्राप्नोति। न तु स्वाभिलषितम् । तथैतत्स्यात् । **अनर्थं चर्च्छेदिति** । वा ऋच्छेत् इति-प्राप्नुयादित्यर्थः । **एवं च सति तप्तपरशुग्रहणेति**। चोरत्वसन्देहे निर्णयार्थं तादृशसन्देहविषयं पुरुषमुद्दिश्य परशुमग्नौ प्रक्षिपन्ति । स चेदनृतं वदति 'नाहं चोर' इति तादृशपरशुग्रहणे दह्यते । यस्तु सत्यं वदति नाहं चोर इति। स तादृशपरशुग्रहणेऽपि न दह्यते। तत्र दाहाभावप्रयोजको नाहं चोर इति वाक्यस्य विषयो यथा सत्यः तादृशमेतदिति 'पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति। तत एवानृतमात्मानं कुरुते । सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते अथ हन्यते । अथ यदि तस्याकर्ता भवति। तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते अथ मुच्यते। स यथा तत्र नादह्येतैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वचनेन सदृष्टान्तं प्रतिपाद्यते । तथा च नायं गौण उपदेशः । **अहमुक्थमस्मीति** । उक्थं शस्त्रविशेषः । तत्र स्वाभेददृष्टेरनित्यं फलं यथा भवति, तथा प्रधानात्माभेदध्यानमपि क्रियात्वादनित्यफलमेव स्यादिति । **अर्थवादकल्पितेनेति** । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति वाक्ये ज्योतिष्टोमशब्दः क्रतुनाम । तत्रार्थवादेन ज्योतिष्टोमपदस्य क्रतौ प्रवृत्तिनिमित्तं दर्शितम् । 'एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा' इति अनेन हि स्तोत्रसाधनीभूतऋक्सङ्ख्याविषयाणां त्रिवृदादीनां यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयतीति वाक्यसिद्धम्। प्रकृतावनुष्ठानेन स्वभ्यस्ता विकृतौ प्राप्तास्तां विकृतिं सम्यक्प्रकाशयन्तीति दीपकत्वगुणमादाय ज्योतिश्शब्दप्रतिपाद्यास्त्रिवृदाद्यास्तोमास्स्तोत्रीया ऋक्सङ्ख्या अस्येति बहुव्रीहिणा ज्योतिष्टोमशब्दो व्युत्पादितः । तदेकदेशो वसन्ते वसन्ते ज्योतिषा यजेते'ति वाक्ये क्रतौ प्रयुक्तः । 'गौणश्चेन्नात्मशब्दा' दिति सूत्रमीक्षतेर्गौणत्वाशङ्कानिराकरणपरमिति व्याख्यातम् । आत्मशब्दस्य गौणत्वाशङ्कानिराकरणपरतया 'तन्निष्ठस्य मोक्षोपदेशा' दिति सूत्रं व्याख्यातम् । इदानीं तु प्रधानसाध्य एव स्वतन्त्रं प्रधानं न जगत्कारणमित्यत्र हेतुभवनक्षमो मोक्षोपदेश इत्यभिप्रेत्य तथैव 'तन्निष्ठस्ये' ति सूत्रं व्याचष्ट—**अथ वेति** ॥ ७ ॥

ननु, यदि सच्छब्देन प्रधानं प्रतिपाद्येत तदा 'तत्त्वमसी'त्यत्रापि तच्छब्देन तस्यैव परामर्शस्स्यात् । तथा च मुमुक्षोः प्रधाननिष्ठतैवोक्ता स्यादिति दोषो न प्राप्नोति।यद्यप्यात्मनिष्ठैव साक्षात् मोक्षसाधनम्। न प्रधाननिष्ठा, तथापि स्थूलारुन्ध-

तीन्यायेनात्मनिष्ठाद्वारा प्रधाननिष्ठाऽपि मोक्षोपयोगिनीति तदुपदेशे न कोऽपि दोष इति शङ्का । तन्निवृत्त्यर्थं सूत्रं—

## हेयत्वावचनाच्च ।८। इति

तदवतारयति—**कुतश्चन प्रधानमिति** । **सत्यपि हेयत्ववचन इति** । अपि-शब्दोऽभ्युपगमवादद्योतनार्थः । वस्तुतो नास्त्येव हेयत्ववचनमिति भावः । **अप्रधानविकारत्वाद्भोक्तृवर्गस्येति** । यद्यपि सिद्धान्तेऽपि न सच्छब्दवाच्यब्रह्मविकारो भोक्तृवर्गः, तथापि स्वरूपाभेदाभ्युपगमात् ब्रह्मणि विदिते विदित एव भवति भोक्तृवर्गः । परमते न विकारो भोक्तृवर्गः प्रधानस्य नापि स्वरूपमिति तज्ज्ञानेन भोक्तृवर्गज्ञानं दुर्घटमेव ॥ ८ ॥

## स्वाप्ययात् ।९।

**यत्रैतदिति** । यस्यां दशायां पुरुषस्य स्वपितीत्येतन्नाम भवति, तदा सता सम्पन्नो भवति स्वस्मिन् लीनः स्वमपीतः । अत्र स्वपितिपदं स्वशब्दापिशब्देतिशब्दघटिततया श्रुतौ व्याख्यातम् । स्वपितीत्यत्र च यद्यपि न व्याकरणानुसारेण तावन्तोऽवयवा विद्यन्ते, तथाप्यक्षरसादृश्यमादाय निर्वचनं द्रष्टव्यम् । अमुमर्थं हृदयादिशब्दनिर्वचनदृष्टान्तेनोत्तरत्र स्फुटीकरिष्यति । नन्वेतन्नामनिर्वचनानुसारेण जीवस्य स्वस्मिन् लयः सुषुप्तौ प्रतीयते । तावता सच्छब्दं प्रधानं न भवतीति कथं वक्तुं शक्यते । उच्यते । एतन्नामनिर्वचनोपक्रमोपसंहारमध्ये 'सता सोम्य तदा सम्पन्नो भवती' तिवाक्यमाम्नायते । तेन च स्वशब्दार्थसच्छब्दार्थयोरैक्यं लभ्यते । न च नामनिर्वचनोपक्रमोपसंहारमध्यगतत्वमात्रेण स्वशब्दसच्छब्दयोस्सामानाधिकरण्याभावे कथमेकार्थतावगन्तुं शक्यत इति वाच्यम् । सता सोम्ये तदा सम्पन्नो भवतीति हि वाक्यं नामनिर्वचनमध्ये किमर्थमाम्नातमिति प्रयोजनगवेषणायां सद्विद्यायां स्वपितिनामनिर्वचनस्य का प्रसक्तिरिति शङ्कानिवृत्तिरेव प्रयोजनम् । तत्प्रयोजनं च सत्सम्पत्तिरेव स्वाप्यय इति प्रतिपादने लभ्यते । सत्प्रकरणे स्वपितिनामनिर्वचनस्य ह्येतत्प्रयोजनं यल्लोकप्रसिद्धं सुषुप्तौ जीवस्य स्वपितीति नाम, तन्निरुक्तिपर्यालोचनया जीवस्य सुषुप्तौ सदर्थ आधारः । ततश्च यथा तेजआदिकार्यपर्यालोचनया सत्पदार्थसिद्धिः, तथा स्वपितिनामपर्यालोचनयापीति । एतत्प्रयोजनसिद्ध्यर्थं सता सम्पन्नो भवतीत्यनेन यत् प्रतिपाद्यते तदेव स्वमपीतोभवतीत्यनेन प्रतिपाद्यत इत्युभयोरपि वाक्ययोरैक्यार्थद्योतनाय नामनिर्वचनोपक्रमोपसंहारान्तर्गततया सता सोम्येति वाक्यमाम्नातम् । अतस्तत्र स्वशब्दसच्छब्दयोरैकार्थ्यं वक्तव्यम् । स्वशब्दस्य च जीवपर-

त्वात्तदभिन्नस्सच्छब्दार्थो न प्रधानमिति लभ्यते। तदिदमाह—**स्वशब्देनेहात्मोच्यते यः प्रकृतः सच्छब्दवाच्य इति**। ननु, स्वशब्दोऽपि प्रधानपरोऽस्तु। ततश्च स्वशब्दसच्छब्दयोरैकार्थ्येऽपि न दोषः। न च स्वशब्दस्यात्मवचनस्य कथं प्रधानपरत्वम्। आत्मीयवचनत्वोपपत्तेः। ततश्च 'यत्रैतत्पुरुषः स्वपिति नामे'तिपूर्ववाक्ये प्रस्तुतस्य पुरुषस्य लोकसिद्धस्वपितिनामकत्वेनानुवादात्तन्नामप्रतिपाद्यत्वस्य च सुषुप्तिदशायां जीवे प्रसिद्धेः पुरुषो जीवः सुषुप्तिदशायामात्मीये सच्छब्दप्रतिपाद्ये प्रधाने लीनो भवतीति पर्यवस्यति। न च नित्यस्य जीवस्य प्रधाने कथं लयः। तव वा कथमस्य ब्रह्मणि लयः। यदि तु जीवोपकरणानां ब्रह्मणि लये तदुपाधिको जीवोऽपि ब्रह्मणि लीनो भवतीत्युच्येत तन्ममापि तुल्यमित्याशङ्क्याह **मनःप्रचारोपाधिविशेषसम्बन्धादिति**। अयमाशयः। लयो हि अभेदाभिव्यक्तिरेव। घटो हि नाम अवस्थाविशेषापन्नं मृद्द्रव्यमेव। तत्र घटावस्थोपाधिविशेषात् कारणस्य मृद्द्रव्यस्य घटद्रव्यात् भेदव्यवहारो यथाकथञ्चित् प्रातिभासिकं भेदमादाय। तदुपाधिनाशे स्वाभाविकोऽभेदः परिशिष्यते। तथा च लयदशायाम् उपाधिनाशपूर्वकमवस्थाश्रयस्य द्रव्यस्याभेद एवाम्नातः पुराणे—'प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका। ततश्चापो द्रुतरसा ज्योतिष्ट्वं प्राप्नुवन्ति हि॥' इत्यादिना सुषुप्तिदशायामपि 'सता सोम्य तदा सम्पन्नो भवती'त्यस्य स्थाने कौषीतकीशाखायां 'अथास्मिन् प्राण एवैकधा भवती'त्येकीभाव आम्नातः। सुषुप्तिदशायां च जीवस्य स्वाप्नजागरोपाधिलये तत्तदुपाध्यवच्छिन्नस्यांशस्याधिष्ठानात्मकशुद्धचैतन्येन सहाभेदाभिव्यक्तिस्सम्भवत्येव। सुषुप्तिदशानुस्यूततमोरूपोपाधेर्विद्यमानतया तावन्मात्रावच्छिन्नस्यांशस्य तस्यां दशायामभेदाभिव्यक्तिर्नास्तीति मुक्तिदशातो वैलक्षण्यं प्राज्ञेनात्मना सम्परिष्वक्तस्सति सम्पद्य न विदुरिति भेदव्यवहारश्च सङ्गच्छते। न च तदवस्थाप्रहाण्या प्रधाने जीवस्वरूपाभेदोऽभिव्यज्यत इति शक्यं वक्तुम्। प्रधानजीवयोस्स्वाभाविकाभेदासम्भवादिति मनःप्रचारोपाधिविशेषसम्बन्धादित्यनेन इन्द्रियप्रणालिकया घटादिषु प्रचारो वृत्तिरूपो भवति। तादृशोपाधिविशेषसम्बद्धो जीवो जाग्रदवस्थापन्न इत्युच्यते। तादृशवृत्तिवासनोपाधिको जीवो मनोमात्रप्रधानत्वान्मनश्शब्दोदितः स्वप्नावस्थ इत्युच्यत इति प्रतिपादितम्। **प्रलीन इवेति**। सुषुप्तौ पूर्वावस्थाद्वयोपाधिविलयनेन तत्तदवच्छिन्नस्याभेदाभिव्यक्तौ स्थितायामपि तमोरूपोपाधेर्विद्यमानतया नातीवाभेदाभिव्यक्तिरितीवशब्देन द्योत्यते। अक्षरसामान्येन स्वपितीति नामनिर्वचनं व्याकरणमुल्लङ्घ्यापि प्रवृत्तमित्यत्र उदाहरणान्तरमाह—**यथा हृदयशब्दनिर्वचनमिति**। तस्य हृदयशब्दस्य। अशना

**योदन्याशब्दप्रवृत्तिमूलमिति** । अप्तेजसोरिति शेषः । नयन्ते द्रवतां सम्पाद्य जीर्णतां नयते शोषम् । अत्र हृदि अयमिति विग्रहेण हृदयशब्द आत्मनि व्युत्पाद्यते । न चायमर्थो लोकप्रसिद्धः । रूढ्या हृदयशब्दस्य शरीरावयवविशेषवाचकत्वात् 'हृदयस्याग्रेऽवद्यती'त्यादौ च तथैवार्थवर्णनात् । अशं नयतीत्यशनाया आपः उदं नयत इति उदन्या तेज इति गोनायाश्वनायादिशब्ददृष्टान्तेन व्युत्पादनं क्रियते । न चैतद्व्याकरणानुगुणम् । 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेष्वि'ति सूत्रेणार्थान्तर एव निपातनात् । 'योऽशनायापिपासे' इति श्रुतावपि तथैव स्वीकाराच्च, तथापि तत्र यथा शब्दप्रक्रियातदर्थयोर्लोकव्याकरणविरोधेऽप्यक्षरसामान्येन निर्वचनम्, एवमत्र लौकिकार्थमपरित्यज्यैव शब्दप्रक्रियामात्रमवयवार्थविशेषलाभार्थमाश्रितमिति द्रष्टव्यम् । तथा च पुरुषशब्दोदितस्य जीवस्य प्रधाने लयासम्भवात् स्वशब्देन नात्मीयं प्रधानमुच्यते । किं तु पुरुषशब्दोदितो जीव एव । एवं च सति 'यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवती'ति स्वशब्दस्य सर्वनाम्नः पूर्वप्रकृतप्रधानभूतपुरुषपरत्वमबाधितं भवति। अचेतनप्रधानपरत्वे तु तदपि बाधितं स्यात् । स्वशब्दोदितस्य च जीवस्य सत्पदार्थैक्यावश्यंभावे प्रधानपरत्वमपगतमेव भवतीति सिद्धं स्वाप्ययहेतोः प्रधानव्यावर्तकत्वम् ॥ ९ ॥

## गतिसामान्यात् । १० ।

**समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिरिति** । यथा चैतत्, तथा आनन्दमयाधिकरणमारभ्य स्पष्टं भविष्यति । विशिष्य च 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते'रिति सूत्रेण भिन्नभिन्नकारणावगतिमाशङ्क्य निराकरिष्यते । **सर्वे प्राणा इति** । सर्वाणीन्द्रियाणि यथायतनं यथागोलकं सुप्तौ यस्माद्यस्माद्गोलकाद्यदिन्द्रियं हृदयस्थ आत्मनि लीनं, तत्तदिन्द्रियं जाग्रदारम्भे तस्मिंस्तस्मिन् गोलके आत्मनस्सकाशात् अभिव्यक्तिं प्राप्नोति । प्राणेभ्योऽनन्तरं देवास्तत्रोपकर्तुमभिव्यक्ता भवन्ति । लोका विषयाः देवेषूपकुर्वत्सु अभिव्यक्ता भवन्ति ॥ १० ॥

## श्रुतत्वाच्च । ११ ।

पूर्वसूत्रेषु आत्मादिशब्दैश्चेतनस्य कारणत्वमवगम्यत इत्युक्तम् । इह तु साक्षादीश्वरवाचकैरेव शब्दैश्चेतनमीश्वरं प्रस्तुत्य जगत्कारणत्वं निरूप्यते । न तु चेतनसामान्यप्रतिपादकात्मादिशब्दैरेवेत्याह—**स्वशब्देनैवेति** । 'तमीशानं वरदं देव-

मीड्यं निचाय्येमां शान्तिमत्यन्तमेती'ति परमात्मनि योगरूढेनेशानशब्देन परमात्मा प्रस्तुतः 'ज्ञः कालकालो गुणी सर्वविद्य' इति सर्वज्ञश्च प्रस्तुतः । ततश्च स कारण मिति मन्त्रगतेन स इति सर्वनाम्ना ईशानशब्दोदितः परामृश्यत इति स्वशब्देनैव सर्वज्ञेश्वरस्य जगत्कारणत्वं सिध्यति । ईशानशब्दश्च यथा परमेश्वरं समुदायशक्त्या प्रतिपादयति, तथा 'शब्दादेव प्रमित' इत्यत्र स्फुटं भविष्यति ॥ ११ ॥

॥ इतीक्षत्यधिकरणम् ॥ ९ ॥

## आनन्दमयोऽभ्यासात् । १२ ।

ननूत्तरसूत्रारम्भः किं वेदान्तानां ब्रह्मणि प्रामाण्यप्रतिष्ठापनार्थः, उत प्रमाणान्तराणां ब्रह्मविषयाणां निरूपणाय, उत ब्रह्मणि प्रमाणान्तरविरोधपरिहाराय । नाद्यः । जन्माद्सूत्रमारभ्य श्रुतत्वाच्चेत्येवमन्तैस्सिद्धत्वात् । न द्वितीयः । औपनिषदस्य ब्रह्मणः प्रमाणान्तरायोग्यत्वात् । न तृतीयः । न ह्येतादृशं किञ्चित् प्रमाणम् । यद्वेदान्तवेद्यं ब्रह्म नास्तीति विषयीकरोति । वेदान्तव्यतिरिक्तप्रमाणस्य ब्रह्मण्ययोग्यतया तदभावनिर्धारणसामर्थ्याभावात् । योग्यानुपलब्ध्या ह्यभावनिर्धारणं भवेत् । न च प्रमाणान्तरायोग्ये योग्यानुपलब्धिरवतरति । सत्यपि प्रमाणान्तरे तदयोग्यतया अनुपलब्ध्युपपत्तेः । न हि चक्षुषा शब्दाभावो निर्धार्यते । अतः किमुत्थानमुत्तरग्रन्थस्येति वृत्तानुवादपूर्वकमाक्षिपति—**जन्माद्यस्य यत इति** । सविशेषवाक्यानां निर्विशेषवाक्यानां विरोधे प्रसक्ते तत्परिहारार्थम् आविद्यकरूपप्रतिपादकानि सविशेषवाक्यानि परमार्थरूपप्रतिपादकानि निर्विशेषवाक्यानीति प्रतिपादनाय 'न स्थानतोऽपी'त्यधिकरणमारम्भणीयमित्याह—**द्विरूपं हीत्यादिना द्विरूपतां प्रतिपादयन्ति वेदान्तवाक्यानीत्यन्तेन** । विचित्य कृत्वा । यत् यः । अमृतस्य मोक्षस्य । प्रापकेषु मध्ये परम् उत्कृष्टं प्रापकम् । दग्धेन्धनम् अनलम् अङ्गारावशेषमिव । निरञ्जनम् अविद्यात्मकमलरहितम् । न्यूनमन्यत् सविशेषम् । सम्पूर्णमन्यत् निर्विशेषम् । यद्यपि वेदान्तवेद्ये परब्रह्मणि मानान्तरस्याप्रवेशात्तद्विरोधपरिहारार्थं विचारो नापेक्षितः, तथापि तत्त्वंपदार्थशोधकवाक्यैः प्रपञ्चस्यानृतताप्रतिपादनपूर्वकं पदार्थः शोध्यते । तत्र च प्रपञ्चसत्यताप्रतिपादकसाङ्ख्यादिस्मृतिविरोधः प्रत्यक्षादिप्रमाणविरोधश्च । ततश्चाविरोधसमर्थनार्थं द्वितीयोऽध्याय आरम्भणीयः । तत्र च साङ्ख्यादिस्मृतीनामनपेक्षत्वमेव व्यवस्थापयिष्यते । प्रत्यक्षादिव्यवहारस्त्वाविद्यकत्वेऽपि व्यावहारिकत्वमादाय भविष्यतीति । तदाह—**तत्राविद्यावस्थायामिति** । तृतीयचतुर्थाध्यायाभ्यां च ससाधनं फलं निरूपयिष्यत इत्या-

ह—**तत्रेति**। अभ्युदयार्थानि मनो ब्रह्मेत्येवमादीनि प्रतीकोपासनानि विद्युल्लोकप-र्यन्ततत्तल्लोकप्राप्त्यर्थानि। न तु विद्युल्लोकादुपरिभूमिकासु प्रापकाणि। तत्तल्लोके अनुभूयमानं सुखमभ्युदयः। एतच्चाप्रतीकालम्बनान्नयतीत्यत्र स्फुटं भविष्यति। कर्म-फलसमृद्ध्यर्थानि 'स एष परोवरीयानुद्गीथ' इत्यादिना कर्माङ्गेषु उद्गीथादिषु ब्रह्मदृ-ष्टिरूपाणि यान्युपासनानि विहितानि, तेषामप्रतिबन्धेन कर्मफलोपयोगित्वं 'तन्नि-र्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फल'मित्यधिकरणे व्यवस्थापयिष्यते। दहरा दिविद्यानां स्वतन्त्राणां अहङ्ग्रहरूपाणां क्रममुक्तिफलकत्वं 'कार्यात्यये तदध्यक्षेण सहातःपरमभिधाना'दित्यत्र व्यवस्थापयिष्यते। तदाह—**कानिचित्क्रममुक्त्य-र्थानीति**। ननु, सर्वास्वप्युपासनासु परब्रह्मण उपास्यस्यैकत्वादुपास्याभेदे उपास-नाभेदानुपपत्तेः कथं फलभेद इत्याशङ्क्य परमात्मन एकत्वेऽपि परमात्मगुणानां व्य वस्थिततया तासु तासूपासनासूपास्यकोटौ निवेशात् तद्गुणोपाधिना परमात्मन औपा धिकभेदभिन्नस्यैव तासु तासूपासनासु व्यवस्थितत्वात् उपासनाभेदो 'नानाशब्दादि-भेदा'दित्यत्र व्यवस्थापयिष्यते। ततो व्यवस्थितफलतोपपत्तिरित्याह—**तेषां गुण-विशेषोपाधिभेदेन भेद इति**। सङ्ग्रहवाक्यं विवृणोति—**एक एव त्विति**। गु-णानुसारेण फलव्यवस्थायां प्रमाणमाह—**तं यथेति**। 'तं यथा यथे'ति वाक्येनैव-कारार्थप्रधानेनोपास्यकोटावनिविष्टस्य फलता नास्तीति प्रतिपाद्यते। न च तत्प्रति-पादनं व्यर्थम्। अनुपास्यस्य फलत्वाप्रसक्तेः। यथा क्रतुन्यायेनोपास्यस्य गु-णस्य फलत्वमित्येतावन्मात्रस्यैव प्राप्तेरिति वाच्यम्। यस्मिन्वाक्ये फलकोटावेव निविष्टाः केचन गुणा आम्नायन्ते, तेषामप्येतद्वाक्यपर्यालोचनया उपासनाकोटौ नि वेशः सिध्यति। **यथा क्रतुरिति**। न चेदमपि न सङ्गतम्। जगत्कारणत्वादीना-मुपास्यकोटौ निविष्टानाम् उपासकप्राप्यत्वाभावात्। तथा च वक्ष्यति 'जगद्व्यापा-रवर्जं प्रकरणा'दिति। अन्यथा 'एको बहूनां यो विदधाति कामा'नित्येकत्वावधा-रणं विरुध्येतेति वाच्यम्। उत्सर्गस्य तत्क्रतुन्यायस्य सति बाधके सङ्कोचोपपत्तेः एकस्यैव चैतन्यस्य जीवेश्वरात्मत्वात् कथमुपास्योपासकभावः कथं वोत्कर्षापकर्षावि-ति शङ्कायां व्यवस्था वक्तव्या। सा च 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ' देहयोगाद्वा सोऽपी'त्युत्कर्षापकर्षोपाधिवशाद्वक्ष्यते। तदाह शङ्कासमाधा-नाभ्यां—**यद्यपीत्यादिना**। एवमुपनिषत्सु किं वाक्यमाम्नातगुणविवक्षापूर्वकमुपा-स्यब्रह्मपरं, किं वा तद्विवक्षाया विशुद्धब्रह्मपरमिति। व्यवस्था च वक्तव्या। तदर्थ-मुत्तरो ग्रन्थ आरम्भणीय इत्याह—**एवं सद्योमुक्तिकारणमपीति**। नन्वस्मिञ्छा-स्त्रे सगुणब्रह्मतदुपासनादिविचारः किमर्थः। न च वेदान्तविचारात्मकत्वादस्य शा-

स्त्रस्य तस्यापि वेदान्तान्तर्गततया विचार्यत्वमिति वाच्यम् । न हि वेदान्ता इत्येवास्मिञ्छास्त्रे विचार्यन्ते । किं तु जिज्ञास्यनिर्विशेषब्रह्मप्रमाणत्वात् । ततश्च निर्विशेषवाक्यविचार एव प्राप्नोतीति चेत्, सत्यं तथापि सविशेषविचारोऽपि अपवादसङ्गत्या भविष्यतीत्युपासनानामपि चित्तैकाग्र्यसम्पादनद्वारा निर्विशेषज्ञानोपयोगोऽस्ति । सविशेषवाक्यमुदाहृत्य प्रतिपादितो न्यायो निर्विशेषवाक्येऽप्युपयुक्तो भवतीत्यादिभिस्सङ्गतिभिः सोऽपि विचारोऽस्मिञ्छास्त्रे युक्तः । पूर्वं गौणेक्षणप्रायपाठस्येक्षणश्रुतिलक्षकत्वापादकता नास्तीत्युक्तम् । तत्र माभूद्दुर्बलस्य प्रायपाठस्य प्रबलश्रुतिलाक्षणिकतापादकता । अनेकार्थसन्देहे प्रायपाठस्य निर्णायकता तु भविष्यति । ततश्च आनन्दमयशब्दस्य विकारे प्राचुर्ये च मयटः सम्भवादुभयथा सन्दिह्यमानस्य प्रायपाठानुसारेण विकारार्थता भविष्यतीत्यन्नमयादिशब्दानां विकारार्थमयडन्तत्वादिति सङ्गतिं मनसि निधाय वृत्तिकारमतेन प्रथममधिकरणमारचयति—**तत्र संशय इति** । ननु, 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्नि'ति मन्त्रे यत् ब्रह्मणः सर्वान्तरत्वं गुहानिहितत्वरूपमुक्तं, तस्य अन्योऽन्तर आत्मानन्दमय इति वाक्येन आनन्दमय एव पर्यवसानस्य कृतत्वात् सर्वान्तरमुपक्रान्तं ब्रह्मानन्दमय इत्यवगम्यते । न च तस्यान्नमयादिप्रायपाठेन बाधो न्याय्यः । सन्देहे हि प्रायपाठो नियामकः । इह तु यथेक्षणं श्रुत्या मुख्यमेव विवक्षितम् सद्विद्यायाम् । न तु तेजआदिगतगौणेक्षणप्रायपाठात् सद्विषयमपीक्षणं गौणं स्वीकृतं, तथा सर्वान्तरत्वलिङ्गानुसारेण ब्रह्मपरत्वमेवानन्दमयपदस्य स्वीकर्तव्यम् । ततश्च प्राचुर्यार्थ एव मयट् भविष्यति न तु विकारार्थः । ननु, सद्विद्यायां श्रुत्यर्थत्यागो माभूदिति प्रायपाठो नादृतः । इह तु नानन्दमयस्य ब्रह्मत्वश्रुतिरास्ति । अतः कथं प्रायपाठत्यागः । न च प्रायपाठो नाम आम्नानसादेश्यरूपः स्थानविशेषः । सर्वान्तरत्वं तु लिङ्गम् । लिङ्गेन च स्थानबाधो वेधाद्यधिकरणे स्वीकृतः । 'सर्वं प्रविध्ये'त्यादिमन्त्राणामाभिचारोपयुक्तार्थप्रकाशनसामर्थ्याल्लिङ्गाद्विद्यासन्निधावाम्नातानामपि विद्यासु विनियोगमस्वीकृत्याभिचारिके कर्मणि विनियोगस्य वक्ष्यमाणत्वात् । तथा च सर्वान्तरत्वेनान्नमयादिप्रायपाठस्य बाधो भविष्यतीति वाच्यम् । यत्र हि लिङ्गस्थानयोर्विनियोगे शेषशेषिभावाख्ये विरोधः प्रसक्तो भवति, तत्र लिङ्गेन स्थानस्य बाधोऽस्तु नाम । येनापि वेधादिमन्त्राणां विद्यासु विनियोगः स्थानप्रमाणेनाश्रयणीयः, तेनापि विद्योपयुक्तार्थप्रकाशकतामादायैव तथा वक्तव्यम् । अनुष्ठेयार्थप्रकाशकत्वान्मन्त्राणाम्। न च विद्याप्रकाशकता वेधादिमन्त्राणामस्तीति लक्षणादिना साकल्पनीया । तत्र च क्लृप्तेनैवाभिचारोपयुक्तार्थप्रकाशनेन झटिति तत्र विनियोगाव-

गमात् विलम्बितप्रवृत्तिकं स्थानं बाध्यते। इह तु आनन्दमयशब्दस्य ब्रह्मप्रतिपादकता उतार्थान्तरप्रतिपादकतेति सन्देहे अर्थविशेषनिर्धारकतायां सर्वान्तरत्वप्रायपाठयोर्विरोधः । न तु शेषशेषिभावे श्रुतिलिङ्गादिसूत्रस्यापि जैमिनीयस्य प्राबल्यदौर्बल्यनिरूपकताविनियोगप्रमाणविषयैव । न त्वर्थसामान्यनिर्धारणोपयुक्तप्रमाणविषया । अत एव विनियोगातिरिक्तविषयं स्थानं वा लिङ्गं वा अन्यार्थदर्शनमित्येव मीमांसकव्यवहारः । न तु श्रुतिलिङ्गान्तर्गतं प्रमाणमिति । ततश्च सर्वान्तरत्वप्रायपाठयोरन्यार्थदर्शनलिङ्गत्वाविशेषात् किमनुसारेण कस्य नयनमिति चेत् उच्यते । विनियोगप्रमाणानामपि श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्याधीन एव बाध्यबाधकभावः प्राबल्यदौर्बल्यनिर्णायकं च शीघ्रविलम्बितप्रवृत्तिकत्वम् । एवं प्रकृतेऽपि यत्र प्राबल्यनिर्णायकं भविष्यति तेन दुर्बलस्य बाधे कानुपपत्तिः । भवति चान्नमयादिप्रायपाठमपेक्ष्य सर्वान्तरत्वं प्रबलम् । उपक्रमे हि सर्वान्तरत्वं ब्रह्मगतमाम्नातम् । तस्य च पर्यवसानमानन्दमये दृश्यते । तत्रानन्दमयस्य ब्रह्मत्वाभावे उपक्रान्तं सर्वान्तरत्वमपर्यवसितं स्यादिति तर्कसचिवं सर्वान्तरत्वम् । नैवं प्रायपाठपरित्यागे किञ्चिद्बाधकमस्ति, प्रत्युत सर्वान्तरवस्तुप्रतिपत्त्युपयोगितयैव अन्नमयादय आम्नाता इति स्वप्रयोजनसिद्ध्यर्थमपि अन्नमयादय आनन्दमयस्य ब्रह्मत्वमुपहरन्ति । ततश्चोपक्रान्तं ब्रह्म सर्वान्तरत्वमपर्यवसितं स्यादन्नमयाद्यनुक्रमणं च व्यर्थं स्यादिति तर्कोपेतं सर्वान्तरत्वं प्रायपाठात् बलवदिति । अपि च प्रायपाठस्सजातीयानामेवेति नास्ति नियमः । अपि तु प्रायिकं सहचारमात्रम् । तेन च सति सन्देहे कोट्यन्तरस्योत्कटतामात्रमापाद्यते । परं तु बाधकाभावानुसन्धाने तत्कोटिनिर्णयसामर्थ्यम् । सर्वान्तरत्वं तु ब्रह्माव्यभिचरितम् । तच्च स्वत एव निर्णयसमर्थम् । ततश्च कोट्यन्तरनिर्णये शीघ्रप्रवृत्तत्वादपि प्रायपाठापेक्षया प्रबलत्वम् । ततश्च उभयोरप्यर्थविशेषनिर्णयोपयुक्तत्वेऽपि प्रायपाठस्य सहचारमात्रयुक्तनयास्मिञ्छास्त्रे प्रायपाठः स्थानाख्यं प्रमाणमिति व्यवह्रियते । सर्वान्तरत्वादिकं तु तत्तत्कोटिनियतं लिङ्गमित्युच्यते । एवं सर्वान्तरत्वस्य प्राबल्यं मनसि निधाय शङ्कते—**सर्वान्तरत्वादिति** । तर्हि जीवत्वे लिङ्गद्वयमस्तीत्याह—**प्रियाद्यवयवयोगादिति**। सङ्ग्रहवाक्यं विवृणोति—**मुख्यश्चेति । इत्यादि श्रूयत इति** । आदिशब्देन 'मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा ।, इति गृह्यते। इष्टवस्तुदर्शनतत्प्राप्तितदुपभोगज्ञानि सुखानि प्रियमोदप्रमोदशब्दप्रतिपाद्यानि । सुखसामान्यमानन्दशब्दार्थः। **तस्य पूर्वस्य विज्ञानमयस्येति** । यद्यपि तस्यानन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य विज्ञानमयस्येति यथाश्रुतयोजनया प्रतीयते । न चास्यां यथाश्रु-

तयोजनायामानन्दमयस्य शारीरत्वं सिध्यति। तथापि येनानन्दमयस्य ब्रह्मत्वमुच्यते तेन यथाश्रुतयोजना वक्तुं न शक्यते । तथा सत्यानन्दमयस्याप्यन्य आत्मास्तीति प्राप्नोति । तस्य उपक्रान्तं सर्वान्तरत्वं तत्रैव पर्यवसितं भवेदिति नानन्दमयो ब्रह्म स्यात् । अतः सिद्धान्तिना वृत्तिकृता तथा क्लिष्टयोजना स्वीकृता । तथाप्यानन्दमयस्य शारीरत्वं प्राप्नोति।शारीरशब्दश्च शरीरसम्बन्धमादाय प्रवृत्तो भवति। आनन्दमयस्याब्रह्मत्वापादकः शारीरत्वेन चाप्रियसम्बन्धोऽप्यनुमीयत इत्याह—**न च सशरीरस्य स्त इति** । न च सशरीरस्याप्रियसम्बन्धो नियत इति वक्तुं न शक्यते। अन्तस्तद्धर्माधिकरणे ईश्वरस्यापि दिव्यशरीराभ्युपगमादिति शङ्क्यम् । निर्णीते हि ईश्वरत्वे-अकर्मनिमित्तं दिव्यं शरीरमिति कल्पना प्रसरति। इह तु नाद्यापीश्वरत्वं निर्णीतमिति उत्सर्गतः कर्मनिमित्त एव शरीरसम्बन्धः । तत्प्रयुक्तश्चौत्सर्गिकोऽप्रियसम्बन्धः केन वारयितुं शक्यते । ततश्च प्रियाप्रियसम्बन्धसशरीरत्वोपेतः प्रायपाठो भवति आनन्दमयस्याब्रह्मत्वनिर्णायकः। न च उपक्रान्तसर्वान्तरत्वापर्यवसानं दोषः । न ह्युपक्रान्ते सर्वान्तरत्वं प्रस्तुतम् । अपि तु गुहानिहितत्वम् । तच्च जीवेऽपि सम्भवति । जीवस्यापि विज्ञानमयान्तगुहानिहितत्वोपपत्तेः । पूर्वपक्षमुपसंहरति—**तस्मादिति । परस्मिन्नेव ह्यात्मनि आनन्दमयशब्दो बहुकृत्वोऽभ्यस्यत इति** । नन्वत्र परस्मिन्नित्यनेन ब्रह्म पुच्छं प्रतिष्ठेति वाक्यगतं ब्रह्म विवक्षितम्, उतानन्दमयः । नाद्यः । तथा सत्यानन्दमयस्य ब्रह्मत्वासिद्धिः । यदि त्वानन्दमयः, तथाप्यानन्दशब्दाभ्यासमात्रेण कथं ब्रह्मत्वासिद्धिः । आनन्दस्वरूपस्य जीवब्रह्मसाधारणत्वात् । न चानन्दमात्रस्य साधारणत्वेऽपि 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति प्रकृत आनन्दो जगत्प्राणनादिहेतुत्वेन 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती'ति मुमुक्षुज्ञेयत्वेन च प्रतिपाद्यते । अतः स ब्रह्मासाधारणो भविष्यति। तथा चानन्दमयस्य ब्रह्मत्वमिति वाच्यम् । तावतानन्दमयस्य कथं ब्रह्मत्वम् । न हि जगत्प्राणनादिहेतुत्वेन निरूप्यमाण आनन्द आनन्दमय एवेति निर्णायकं विना आनन्दमयस्याभ्यास इति वक्तुं शक्यते।न च 'रसो वै स' इति वाक्ये सशब्देनानन्दमयस्य परामर्शात् आनन्दाभ्यास आनन्दमयविषय इति शङ्क्यम् । सोऽकामयतेति जगत्कारणवस्तुनिरूपणानन्तरं तदप्येष श्लोको भवतीति प्रक्रम्य प्रवृत्तं रसो वै स इति वाक्यं तदेकार्थमिति वक्तव्यम् । सोऽकामयतेति च वाक्यं तस्यैष एव शारीर आत्मेति वाक्यनिर्दिष्टमात्मानं परामृशति । न च तदपि वाक्यं पूर्वपक्षावसरे दर्शितयोजनया आनन्दमयात्मपरमेवेति वाच्यम् । तादृशक्लिष्टयोजनाकल्पने नियामकाभा-

वात् । ततश्च यथाश्रुतयोजनया तस्यैष एवेति वाक्यं तस्यानन्दमयस्यैष एव शारीर आत्मा यः पूर्वस्य विज्ञानमयस्येति आनन्दमयादन्यमेव ततोऽभ्यन्तरं आत्मानं दर्शयति । तादृशश्चात्मा यत्सत्त्वासत्त्वज्ञानात् सत्त्वासत्त्वे जीवस्य भवत इति प्रतिपादितमसन्नेव स भवतीति मन्त्रेण स एव पर्यवस्यति । ततश्चोत्तरसन्दर्भस्यानन्दमयभिन्ने सर्वान्तरे ब्रह्मण्येव पर्यवसानात् कथमानन्दमयस्याभ्यासानुसारेण ब्रह्मत्वमिति चेत्, उच्यते । तस्यैष एव शारीर आत्मेत्ययं मन्त्रः प्रथममन्नमयपर्याये नाम्नातः प्राणमयपर्यायमारभ्य समाम्नायते । तत्र यः पूर्वस्यान्नमयस्य शारीर आत्मा एष एव तस्य प्राणमयस्यात्मेति वक्तुं न शक्यते । अन्नमयस्य प्राणमयादन्यत्वेनात्मनोऽनाम्नानात् । 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमय' इति प्राणमयस्यैव तं प्रत्य[ात्]मत्वेनाम्नानात् । अतस्तत्र तस्य पूर्वस्यान्नमयस्यैष एव शारीर आत्मा य एष प्राणमय इति अर्थो वर्णनीयः । ततश्च तदैकरूप्यायोत्तरेष्वपि पर्यायेषु तथैवार्थः स्वीकर्तव्यः । ततश्चानन्दमयपर्यायाम्नातस्तस्यैष एवेति मन्त्रः पूर्वपक्षावसरदर्शितयोजनया आनन्दमयपर एवेति सोऽकामयतेति वाक्यमपि तस्यैव सर्वनाम परामर्शेन जगत्कारणत्वं व्युत्पादयति । ततश्च जगत्कारणत्वादिविशिष्टानन्दत्वेनाभ्यस्यमान आनन्दमयो ब्रह्मैवेति सिध्यति । यद्यपि आनन्दमयस्तल्लिङ्गादित्येव वक्तुमुचितम् । तथापि उत्तरत्रानन्दपदाभ्यासात्तस्य चानन्दस्य प्रकरणपर्यालोचनया 'आनन्दो ब्रह्मेति व्यजाना'दित्यौपसंहारिकब्रह्मपदसामानाधिकरण्येन श्रुत्यन्तरगतेन च विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्येन ब्रह्मस्वरूपत्वावगमात् । तस्यानन्दमयविषयत्वे आनन्दमयस्य तेनापि ब्रह्मत्वं सिध्यतीति तावत्पर्यन्तधावनम् । रसो वै सः रसनीयः काम्यमानः सुखरूप इति यावत् । तादृशब्रह्मात्मरससद्भावे प्रमाणमाह—**रसं ह्येवायमिति** । अयं जीवः । तस्यह्यानन्दित्वं वृत्त्यभिव्यक्तानन्दस्वरूपमादाय वक्तव्यम् । ततश्च जीवस्य पुण्यमयवृत्तौ यत्स्वरूपं प्रतिफलति, तादृशं बिम्बभूतं आनन्दस्वरूपं किञ्चिदस्तीति हिशब्देन द्योत्यते । अन्यात् चेष्टासामान्यं कुर्यात् । प्राण्यात् श्वासोच्छ्वासादिव्यापारं कुर्यात् । ततश्च जगच्चेष्टादिहेतुभूतः कश्चिदानन्दोऽस्ति । **आनन्दमयस्य सर्वान्तरत्वादिति** । ननु, नात्र सर्वान्तरत्वमुक्तम् । पर्यवसानगत्याऽपि उपक्रान्तं गुहानिहितत्वमेव लभ्यते । तदपि नानन्दमयस्य ब्रह्मत्वसाधकम् । जीवस्यापि गुहानिहितत्वसम्भवादिति चेत्, उपक्रान्तं गुहानिहितत्वं ब्रह्मण एव । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति पूर्वार्धप्रतिपादितस्य ब्रह्मण एव 'यो वेद निहितं गुहायामि'ति विशेष्यतयान्वयात् । न च ब्रह्मण एव जीवरूपेणापि गुहानिहितत्वमस्ति । 'अनेन जीवेनात्मनानुप्रविश्य स एष इह

प्रविष्ट आनखाग्रेभ्यः स प्राणन्नेव प्राणो नाम भवती'त्यादिश्रुतेरिति वाच्यम् । अन्तर्यामिरूपेणापि तस्यानुप्रवेशोऽस्त्येव । 'यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तर' इति श्रुतेः । ततश्च प्रकृते जीवरूपेणेति विशिष्य नियामकाभावेन उत्तरसन्दर्भे आनन्दमयं प्रस्तुत्य ब्रह्मधर्माम्नानेन अनुप्रविष्टस्य 'सच्च त्यच्चाभव'दिति सर्वात्मकत्वाम्नानेन च अन्तर्यामिरूपेणैव गुहानुप्रवेश इति स्वीकर्तव्यम् । ततश्च गुहानिहितत्वरूपसर्वान्तरत्वस्य परमात्मधर्मत्वेन उपक्रान्तस्य आनन्दमयान्तरत्वेन अन्यानाम्नानावगतानन्दमयपर्यवसानस्य भवत्येवानन्दमयब्रह्मत्वसाधकता । अयं मान्त्रवर्णिकसूत्रार्थ इहैव भाष्ये संगृहीतः । अतीतानन्तरोपाधिजनितेति । विज्ञानमयकोशस्य जीवरूपस्य बुद्धिरूपस्य वा प्रियादियोगसम्भवात् तदनुप्रवेशोपाधिकप्रियाद्यवयवकल्पना । दृश्यते चान्यत्रापि परमात्मनो जीवधर्मैरुपासना मनोमयः प्राणशरीर इत्यादौ । ततश्चानन्यथासिद्धब्रह्मलिङ्गानुसारेण जीवलिङ्गस्यान्यथानयनं भवतीति भावः ॥ १२ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् । १३ ।

आनन्दमयशब्दस्य विकारार्थकमयडन्तत्वात् कथं ब्रह्मणि वृत्तिरिति शङ्कासमाधानार्थमिदं सूत्रम् । ननु, 'तत्प्रकृतवचने मय'डिति प्रचुरतायां मयट् स्मर्यते । स इह भविष्यति तत् कथं मयडन्तस्य विकारार्थतामादाय ब्रह्मण्यनुपपत्तिराशङ्क्यत इति चेन्न । तत्प्रकृतवचने मयडिति सूत्रं वैयाकरणैरित्थं व्याख्यातम् । प्रथमासमर्थात् प्रातिपदिकात् प्रकृतस्य वचने प्रतिपादने विवक्षिते मयट् भवति । अत्र प्रकृत इत्येव सिद्धे वचनग्रहणाल्लोके मयडन्तैश्शब्दैः यादृशस्य प्रकृत्यर्थस्य प्रतिपादनं प्रसिद्धं, तत्त्वेन प्रकृत्यर्थस्य प्रतिपादने विवक्षिते मयट् भवतीति लभ्यते । लोके च प्राचुर्येण प्रस्तुते प्रकृत्यर्थे विवक्षित एव मयडन्तप्रयोगदर्शनात् प्राचुर्येण प्रस्तुतत्वं वचनग्रहणाल्लभ्यते । अस्मिंश्च पक्षे प्राचुर्येण प्रस्तुतत्वं प्रकृत्यर्थः । मयट् स्वार्थिक एव तदर्थद्योतकः । तस्य चोदाहरणं अपूपमयाः पर्वाणि प्राचुर्येण प्रस्तुताः अपूपा इत्यर्थः । अस्तु वा प्राचुर्येण प्रस्तुतत्वं प्रत्ययार्थः । तथापि स विभक्त्यर्थसङ्ख्यावत् प्रकृत्यर्थविशेषणमेव व्युत्पत्तिवैचित्र्यात् । अपरस्तु प्रथमासमर्थात् प्रस्तुतत्वविशिष्टप्रकृत्यर्थसम्बन्धित्वेनान्यस्मिन्नर्थे गम्यमाने मयट् भवति । अस्मिंश्च पक्षे उच्यते अस्मिन्निति वचनमित्यधिकरणार्थल्युडन्तं वचनशब्दं स्वीकृत्यान्यपदार्थलम्भनं द्रष्टव्यम् । अन्नमयो यज्ञ इति तदुदाहरणम् । प्रस्तुतान्नाधिकरणीभूतो यज्ञ इति तदर्थः । अस्मिंश्च पक्षे न प्राचुर्यं प्रत्ययार्थः । अत्र पक्षद्वयेऽपि प्राचुर्ये-

ण प्रस्तुतः आनन्दः आनन्दमयः, प्रस्तुतः अस्मिन्नानन्द आनन्दमय इति वा प्रस्तुतत्वगर्भमानन्दं स्वीकृत्यैवानन्दमयपदं व्याख्येयम् । शाब्दे चोत्सर्गतः शाब्दमेव प्रस्तुतत्वं वक्तव्यम् । न चात्र पूर्वस्मिन् ग्रन्थे आनन्दः प्रस्तुत इति कथं 'तत्प्रकृतवचन' इति सूत्रेण मयट् भविष्यति । अतो विकारार्थ एव मयडित्याह—**तस्मादन्नमयादिशब्दवद्विकारविषय एवायमानन्दमयशब्द इति** । नन्वानशब्दाद्विकारार्थको मयण्ण प्राप्नोति । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो'रिति सूत्रेण विकारावयवयोरर्थयोर्भाषायामेव मयड्विधानात् 'नित्यं वृद्धशरादिभ्य' इति सूत्रेण तदनन्तरपठितेन वृद्धेभ्यः शरादिभ्यश्च शरदर्भमृत्कुटीतृणसोमबल्बजेत्येवंरूपेभ्यः भाषायामेव तयोरर्थयोर्नित्यं विधानात् । ततश्च द्व्यचच्छन्दसीति सूत्रेण प्राणमनश्शब्दयोरेव विकारार्थे मयड्भविष्यति । न तु अन्नरसविज्ञानानन्दशब्देभ्यः । ततश्चान्नमयादिशब्दवदित्येतदनुपपन्नमिति चेत्, उच्यते । 'नित्यं वृद्धशरादिभ्य' इति सूत्रे नित्यग्रहणाच्छन्दसि विकारावयवयोरर्थयोर्मयट् भविष्यति । तद्धि न वृद्धेभ्यः शरादिभ्यश्च नित्यत्वसिद्ध्यर्थम् । पुनर्विधानबलादेव नित्यत्वसिद्धेः । न च 'नित्यमेकाच' इति व्याकरणान्तरम् । स्त्रच्मयमित्यादि तदुदाहरणम् । योगविभागेन तदर्थसङ्ग्रहार्थमिह नित्यग्रहणमिति वाच्यम् । तथा सति शरादिगणे मृद्ग्रहणमनर्थकं स्यात् । ततस्तदेव व्याकरणान्तरानुसारेण सर्वेषामेकाचां उपलक्षणं सत् शरादित्वादेवैकाज्भ्यो मयट् नित्यं सम्पादयिष्यति । अतोऽतिरिच्यमानं नित्यग्रहणं भाषायां नित्यमेव । छन्दसि तूदाहरणानुसारेण यथासम्भवं विकल्पेन मयट् भवतीति ज्ञापयति । नन्वेवमपि वृद्धेभ्यः शरादिभ्यश्च छन्दसि मयटो ज्ञापकं भविष्यति । ततश्चानन्दशब्दस्य वृद्धत्वात् ततोऽस्तु नाम । विज्ञानशब्दे तु कथमिति चेत्, उच्यते । अन्नरसमयशब्दे तावद्विकारार्थ एव मयडवश्यं स्वीकर्तव्यः । 'अन्नात्पुरुष' इति पूर्ववाक्यनिर्दिष्टान्नप्रभवत्वं रसद्वारकमिति व्युत्पादनार्थं हि 'स वा एष पुरुषोऽन्नरसमय' इति वाक्यम् । तत्र च नित्यग्रहणबलादेव मयट् सम्पादनीयः । अतस्तत् सामान्यापेक्षं ज्ञापकं भविष्यति-छन्दसि वृद्धेभ्यश्चावृद्धेभ्यश्च व्यवस्थितविकल्पेन मयट् भविष्यतीति । ततश्च विज्ञानमयेऽपि नित्यग्रहणेनैव मयट् भविष्यति । अथवा 'तत आगत' इत्यधिकारे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति सूत्राद्धेतुग्रहणेऽनुवर्तमाने मयट् चेति सूत्रम् । ततश्चायमर्थः । अपादानपञ्चम्यन्ताद्वस्तुगत्या हेतुप्रतिपादकाच्छब्दादागत इत्यर्थे मयट् भवति । ततश्चान्नरसाद्धेतोरागतोऽन्नरसमय इति । एवं विज्ञानानन्दशब्दाभ्यामपि मयट् द्रष्टव्यः । न चान्नमय इत्यादौ भृगुवल्ल्युक्तानामाधिदैविकानां को-

शानां अन्नप्राणमनोविज्ञानानन्दशब्दैः प्रत्यभिज्ञानात्तद्विकारत्वं स्वीकृत्यान्नाद्धेतोरागत इति तद्धितविग्रहे 'जनिकर्तुः प्रकृति'रिति सूत्रेण पञ्चमीं स्वीकृत्य मयडन्तता वक्तव्या । ततश्चागत इत्यस्योत्पन्न इत्यर्थः पर्यवस्यति । न च तदुत्पन्नस्तस्मान्मुख्यया वृत्त्या आगत इति वक्तुं शक्यत इति वाच्यम् । पाणिनिसूत्रे आगतत्वादिकं लोकबुद्ध्यनुसारेण गौणमुख्यसाधारणं विवक्षितम् । अत एव 'ध्रुवमपायेऽपादानमि'ति सूत्रे प्रागनभिव्यक्तं कार्यं व्यक्तीभवत् कारणाद्विश्लिष्यत इवेति चोरादिभ्यः चोत्पद्यमानं भयं तेभ्यो विश्लिष्टमिव भवतीति लोकबुद्ध्यनुसारेण 'ध्रुवमपायेऽपादनमि'ति सूत्रेणैव तेभ्योऽपायं वैवक्षिकमादाय चोरादीनामपादानसंज्ञा भवतीति 'भीत्रार्थानां भयहेतुरि'त्यादिसूत्राणि महाभाष्ये प्रत्याख्यातानि । कारणाच्च कार्यस्यागतत्वं लोकप्रसिद्धमेव । श्रुतावपि कुतो जात इत्यर्थे कुत एतदागादिति प्रश्नो दृश्यते । ततश्च स्वोपजनभूतात् सुघ्नादेरेव यदा मुख्यमागमनं विवक्षितं, तदैव सुघ्नात् स्वोपजनभूतादागतः सुघ्नमय इत्यादावेव 'तत आगत' इत्यधिकारपठितेन मयट् चेतिसूत्रेण मयट्प्रत्ययः । नतूपादानभूतादुत्पत्तौ विकारस्य विवक्षितायां मयडिति निर्बन्धो निर्मूल एव । अत एव कवयः प्रयुञ्जते— 'पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधदि'ति । अत्र हि 'तत आगत' इत्यधिकारपठितेन 'पितुर्यच्चे'ति सूत्रेण पित्र्यमिति । न हि अत्र मुख्यमागमनमुपवीतस्य विवक्षितम् । असम्भवात् । अपि तु पितृब्राह्मण्यप्रयुक्तत्वमात्रम् । एवं मातृकमित्यत्रापि अगताधिकारीयेण ऋतष्ठञिति सूत्रेण छञ्प्रत्ययो द्रष्टव्यः । अयं श्लोको जामदग्न्यविषयः । ततश्च 'मयट्चेति सूत्रेणापि अन्नरसमयविज्ञानमयानन्दमयशब्दा विकारार्थपर्यवसिताः । प्राणमयमनोमयशब्दयोस्तु विकारार्थत्वे न काचिदनुपपत्तिः । ततश्च विकारप्रतिपादकस्यानन्दमयशब्दस्य कथं ब्रह्मप्रतिपादकत्वमिति शङ्कार्थः । **अन्नमयो यज्ञ इत्यन्नप्रचुर उच्यत इति** । ननु, यस्मिन् पक्षे प्राचुर्येण प्रस्तुतत्वं, न तत्र प्रकृत्यर्थभिन्नधर्मिपर्यन्तत्वम् । यस्मिंश्च प्रकृत्यर्थभिन्नपर्यन्तत्वं, न तत्र प्राचुर्यविशिष्टप्रस्तुतत्वम । तत् कथमन्नप्रचुरो यज्ञ इति चेन्न । यथा वचनग्रहणात् प्राचुर्येण प्रस्तुतत्वं लभ्यते, तथा प्राचुर्येण प्रस्तुतमस्मिन्नित्यर्थोऽपि वर्णयितुं शक्यते । लोकप्रसिद्ध्यनुसारात् । यद्यपि लोकप्रसिद्ध्यनुसारेणाऽपि वृत्तिकारादिभिः'तत्प्रकृतवचन' इत्यस्य प्राचुर्येण प्रस्तुते प्रकृत्यर्थे विवक्षित इत्येवार्थो दर्शितः । न तु तादृशप्रकृत्यर्थधर्मिपर्यन्तः, तथापि सम्भवदर्थान्तरमुदाहरणानुसारात् अस्त्वित्यभिप्रायः । एवमानन्दप्रचुरं ब्रह्म आनन्दमयमुच्यत इति । न चानन्दस्य प्रस्तुतत्वासम्भवः । 'सोऽश्नुते सर्वान् कामा'निति ब्रह्मानन्द-

स्य प्रस्तुतत्वात् । न च तत्र मुक्तस्य सर्वकामावाप्तिरुच्यते । न तु तत्र ब्रह्मानन्दावाप्तिरुच्यत इति शंक्यम् । मुक्तस्य सर्वकामावाप्तिरपि ब्रह्मानन्दानुभवरूपैव । न त्वन्यादृशी । न हि मुक्तेन तत्तत्पुरुषव्यवस्थिताः सर्वेऽपि असाधारण्येन सुखलवा अनुभूयन्त इति शक्यं वक्तुम् । अपि तु आनन्दावरणापगमे ब्रह्मानन्दस्स्वरूपभूतो मुक्तेनानुभूयते । सर्वे च लौकिकानन्दा वृत्त्यभिव्यक्तितारतम्योपेतब्रह्मानन्दस्वरूपा एव । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । ततश्च यथा ब्रह्मस्वरूपे अवगते तदात्मना स्वमवगतमिति एकविज्ञानेन सर्वविज्ञानमुपपाद्यते, तथा समस्तलौकिकानन्दानुस्यूते ब्रह्मस्वरूपेऽनुभूयमाने तदात्मना सर्वे आनन्दाः अनुभूता एव भवन्तीत्येवं सर्वकामावाप्तिर्मुक्तस्य वर्णनीया । ततश्चायमर्थः—ब्रह्मात्मनावस्थितो मुक्तः युगपत् सर्वान् कामान् काम्यन्त इति कामा आनन्दाः, तानश्नुते अनुभवति । अत एव वाक्यशेषे मानुषानन्दमारभ्य हिरण्यगर्भान्तस्यानन्दस्य प्रतिपर्यायमाम्नातेन 'श्रोत्रियस्य चाकामहतस्ये'ति वाक्येन मुक्तप्राप्यत्वं निरूप्य तत् कथमित्यपेक्षायां 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एक' इत्याद्यन्तपर्यायसङ्कलनया सर्वस्यानन्दस्य एकत्वमवधारितम् । एकत्वं च सर्वेषामानन्दानां ब्रह्मात्मना । ततश्च ब्रह्मानन्दमनुभवता मुक्तेन सर्वेऽप्यानन्दास्तदभिन्नतया अनुभूता एव भवन्तीति उपक्रान्ता सर्वकामावाप्तिरुपपादिता भवति । ततश्च लौकिकसर्वकामानुस्यूततया ब्रह्मानन्दस्य प्रस्तुतत्वात् प्राचुर्येण प्रस्तुतत्वं लभ्यते । प्राचुर्यं व्याप्त्या संश्लेष एव । न तु महत्त्वमुत्कर्षो वा, अनेकत्वं वा । महान् घट उत्कृष्टो घट इति विवक्षिते प्रचुरो घट इत्यप्रयोगात् सङ्ख्यया अनेकत्वाभावेऽपि व्याप्त्यभिप्रायेणैव यवागूमयी लवणमयमन्नं इति प्रयोगाच्च । ततश्चानन्दमयपदस्योभयथा सम्भवे प्रायपाठं बाधित्वोपक्रान्तसर्वान्तरत्वानुसारेणौपसंहारिकाभ्यासानुसारेण च प्राचुर्यार्थतैवाश्रयणीया ॥१३॥

## तद्धेतुव्यपदेशाच्च ।१४।

'आनन्दमयोऽभ्यासादि'ति सूत्रादानन्दपदमनुवृत्तं पूर्वसूत्रे प्राचुर्यादित्यत्र षष्ठ्यन्ततया विपरिणतं प्राचुर्यसम्बन्धिसमर्पकम् । तदर्थ इह सूत्रे तच्छब्देन परामृश्यत इत्याह—**आनन्दहेतुत्वमिति** । ननु, जीवं प्रति आनन्दहेतुत्वात् प्रचुरानन्दं ब्रह्मेति कथं सिध्यति । यथा हि प्रचुरधनोऽन्यान् धनवतः करोति, तथा निर्धनोऽपि तपस्वी अनुग्रहेणान्यान् धनवतः करोत्येवेति प्रकारद्वये लोक-

प्रतिपन्ने कथं धनिकदृष्टान्तेनानन्दहेतुत्वात् प्रचुरानन्दं ब्रह्मेत्याशङ्क्यानन्दमयशब्देन प्राचुर्यकोटेरवगमात् तत्र निर्णयापेक्षायां उत्तरवाक्यप्रवृत्तेर्निर्धनपुरुषानुग्रहलभ्यदृष्टान्तेनानुपस्थितार्थपरत्वकल्पनस्यान्याय्यत्वात् को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यादिति व्यापकानन्दस्यैव पूर्ववाक्ये निर्देशाच्च धनिकदृष्टान्तेनैवानन्दयातीतिवाक्यार्थो वर्णनीय इत्यभिप्रेत्य उपसंहरति — तस्मादिति ॥ १४ ॥

## मान्त्रवर्णिकमेव च गीयते ।१५।

ननु, सूत्रे 'सत्यं ज्ञानमि'ति मन्त्रे निर्दिष्टो गुहानिहित एवात्मा आनन्दमय इत्युक्तम्। तद्व्याख्यानावसरे 'सत्यं ज्ञान'मिति मन्त्र एवोदाहर्तव्यः। किमर्थं ब्रह्मविदाप्नोतीति परमोक्रमः। यस्मादाकाशादी'ति वाक्येन मन्त्रानन्तराम्नातं 'तस्माद्वा एतस्मादि'ति वा किमर्थं संगृहीतम्। यच्च भूतानि सृष्ट्वेति 'सोऽकामयते'त्याद्यौपसंहारिकार्थग्रहणं वा किमर्थं कृतम्। किमर्थं च यस्य विज्ञानाय 'अन्योन्तर आत्मे'ति कोशवाक्यार्थसङ्ग्रहः। उच्यते—परमोपक्रमोपन्यासः तस्यार्थान्तरपरत्वे 'तदेषाभ्युक्ते'ति तस्मिन्नर्थे उदाहृतस्य मन्त्रस्यापि अर्थान्तरपरता भवेदिति शङ्कानिवारणार्थः। मन्त्राम्नातमेवात्मस्वरूपमानन्दमयवाक्ये गृह्यत इति कथं सृष्टिवाक्यैःभूयोभिर्व्यवधानादिति शङ्कायामसम्बन्धिपदव्यवधानमेवानुवृत्तिविघातकम्। सृष्टिवाक्यं तु न तथा। मन्त्रगतानन्तपदव्याख्यानार्थत्वात्। आनन्त्यं हि वस्तुपरिच्छेदराहित्येन निर्वहणीयम्। ततश्च वियदादेर्वस्तुनो विद्यमानत्वात्तत्परिच्छेदे कथं ब्रह्मण आनन्त्यमिति शङ्कायां वियदादेर्ब्रह्मविवर्तत्वात् न परिच्छेदो वस्तुतोऽस्तीति प्रतिपादयितुं वियदादिसृष्टिराम्नातेति नासम्बन्धिपदव्यवधानमिति सृष्टिवाक्योपन्यासेन दर्शितम्। एवं कोशवाक्यमपि उपक्रान्तगुहानिहितत्वव्युत्पादनार्थमिति न तदप्यसम्बन्धिपदमिति न तेन व्यवधानं दोषः। यथा प्रागनुपक्रान्तमेव 'सोऽकामयते'त्यादिना प्रतिपाद्यते, तथानन्दमयवाक्येनापि कुतो न प्रतिपाद्यत इति शङ्कायां तेनाप्यानन्त्यनिरूपणार्थं प्राक्सङ्ग्रहेण 'तस्माद्वा एतस्मादि'त्यनेन प्रतिपादिता या सृष्टिः सैवेह विस्तरेण प्रतिपाद्यत इति द्योतनाय 'सोऽकामयते'त्यादिवाक्यसङ्ग्रहः। तथा च सर्वापीयं वल्ली 'ब्रह्मविदाप्नोति पर'मिति सङ्ग्रहवाक्यस्य व्याख्यानभूतं 'सत्यं ज्ञान'मित्यादिमन्त्रं व्याख्यातुं प्रवृत्ता। सङ्ग्रहे हि ब्रह्मविदाप्नोति परमिति वेद्यवेदनफलेषु संगृहीतेषु सत्यं ज्ञानमित्यनेन वेद्यं, तदेव गुहानिहितं यो वेदेति वेदनं, 'सोऽश्नुते सर्वान्कामानिति च फलं प्रतिपाद्यते मन्त्रे-

ण। तत्र मन्त्राम्नातगुहानिहितस्य चानन्दमये पर्यवसानात् स एव ब्रह्मेति पर्यवस्यति। ततश्चानन्दमयस्य ब्रह्मत्वाभावे कोशवाक्यमनर्थकमेव स्यात् । तदाह—अन्यथेति । मान्त्रवर्णिकमेव चेत्यत्र चशब्दार्थमाह—एतन्निष्ठैव चेति । तत्र चोपक्रान्तस्याधीहि भगवो ब्रह्मेत्यस्यानन्दो ब्रह्मेति व्यजानादिति पञ्चमे पर्याये पर्यवसानस्य दर्शितत्वादिहापि पञ्चमपर्यायाम्नात आनन्दमयो ब्रह्मेति सिध्यतीति भावः ॥१५॥

नन्वानन्दमयस्याभ्यासात् ब्रह्मत्वमुक्तमसङ्गतम् । सोऽकामयतेत्युत्तरसन्दर्भस्य ब्रह्मपुच्छं प्रतिष्ठेत्यनेनैव सम्बन्धोपपत्तेः वक्ष्यमाणगुणविशिष्टब्रह्मपुच्छकत्वेन जीवस्यानन्दमयस्यैव उपासनसम्भवात् । अस्तु वा स्रष्टृत्वादेरानन्दमय एवान्वयः । तस्य जीवत्वेऽप्यदृष्टद्वारा तत्सम्भवात्। निरतिशयानन्दत्वादिकमपि शास्त्रदृष्ट्या तूपदेशो वामदेववदिति भविष्यति । तन्निवारणार्थं—

## नेतरोऽनुपपत्तेः । १६ । इति सूत्रम् ।

**आनन्दमयं हि प्रकृत्येति** । ततश्च सोऽकामयतेत्यादिपुल्लिङ्गयुक्तसर्वनाम्ना ब्रह्मणः परामर्शासम्भवात् तथा निर्दिष्टानन्दमय एव परामृश्यते । न च तस्यापि अदृष्टद्वारा कारणत्वं भवतीति शङ्क्यम् । कामनापूर्वकस्रष्टृत्वाम्नानात् तदाह—**प्राक्छरीराद्युत्पत्तेरभिध्यानमिति** । सृज्यविषयकामनाभिध्यानम् । न च शास्त्रदृष्ट्या तत्सर्वं जीव एव सम्भवतीति शङ्कनीयम् । तथा सत्यानन्दमयशब्दोऽपि शास्त्रीयं यज्जीवस्य ब्रह्मात्मकं स्वरूपं, तत्पर एवास्तु । न जीवपर इति भावः॥ १६॥

## भेदव्यपदेशाच्च । १७ ।

रसं ह्येवायं लब्ध्वानन्दी भवतीत्यतः पूर्ववाक्ये स इति सर्वनाम्ना आनन्दमयं परामृश्य तस्य रसत्वोक्तेरिहानन्दमय एव रसशब्देन प्रतिपाद्यते । अयमित्यनेन च लब्धृत्वेन प्रतीयमानो जीव इति जीवभिन्नत्वेनावगत आनन्दमयो ब्रह्मैवेति सिध्यति । सूत्रद्वयेनावगतो भेदः जीवब्रह्मणोर्न पारमार्थिकः । किन्त्वाविद्यक इति शङ्का समाधानाभ्यां प्रतिपादयति—**कथं तर्ह्यात्मान्वेष्टव्य इत्यादिना । प्रतिषिध्यत एव तु परमार्थत इति** । ननु, नान्योऽतोऽस्ति द्रष्टेत्यादिवाक्यं न जीवेशयोर्भेदनिषेधकम् । य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेदेत्यादिना एष त आत्मेति च नियन्तृनियन्तव्यत्वादिना भेदप्रतीतेः । अतः तत्सन्निधावाम्नातमिदमपि वाक्यं जीवब्रह्मणोर्भेदमादायैव व्याख्येयम् । तथा चातोऽन्तर्यामिणस्सकाशात्तत्सजातीयो ऽन्यो द्रष्टा नास्तीति वाक्यार्थः । न च तत्सजातीय इति पूरणं मध्येऽसङ्गतम् ।

द्रष्ट्रादिशब्दानां चाक्षुषज्ञानाश्रयवाचिनां कथमन्तर्यामिसजातीयान्तर्यामिरूपद्रष्ट्रपरत्वम् । यद्भेदो निषिध्येत इति वाच्यम् । सजातीय इति व्युत्पत्तिसिद्धम् । 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति'रिति हि व्युत्पत्तिः । यथा इवशब्दयुक्तं सिंह इवायमिति वाक्यं सिंहान्यत् सिंहसदृशं वस्तु बोधयति, तथा नञ्युक्तमपि वाक्यमनश्वमानयेत्यादि अश्वसदृशमश्वभिन्नं वस्तु बोधयति । तथा ह्यनश्वमित्यादिवाक्यादर्थोऽवगम्यते । इदं च नञ्वदन्यशब्दस्यापि उपलक्षणम् । लौकिकव्युत्पत्तेः तत्रापि तुल्यत्वात् । न हि ब्राह्मणादन्यमानयेत्युक्ते घटादिरानीयते । अपि तु ब्राह्मणसदृशः क्षत्रियादिरेवानीयते।तथा च नान्योऽतोऽस्ति द्रष्टेत्यत्रापि अतोऽन्तर्यामिणोऽन्यस्तत्सदृश इत्येवावगम्यते । न च द्रष्ट्रादिशब्दविरोधः । न हि द्रष्ट्रादिशब्दाश्चाक्षुषादिज्ञानपराः । 'पश्यत्यचक्षुस्स शृणोत्यकर्ण' इति प्रयोगात् । किं तु रूपसाक्षात्कारादिवाचका दृश्यादिधातव इति द्रष्ट्रादिशब्दास्तदाश्रयपराः । तथा च नान्योऽतोऽस्ति द्रष्टेत्युक्ते अन्तर्यामिणः सकाशात् भिन्नस्तज्जातीयो रूपालोचनवान् नास्तीत्यर्थोऽवगम्यते । ततश्चान्तर्यामिभेदनिषेध एव पर्यवस्यति । न तु जीवस्यान्तर्यामिभेदनिषेधः । तस्य तत्सजातीयत्वाभावादिति चेत्, उच्यते । न सर्वत्र नञिवेति न्यायः प्रवर्तते । अपीतं घटमानयेत्यादौ तदप्रवृत्तेः । किं त्वनश्वमानयेत्यादौ विशेष्यस्यानिर्देशात् किं तदश्वभिन्नमित्याकांक्षायां प्रतियोगिसमर्पकेण पदेन तत्सदृशस्योपस्थित्या तदेवान्यत्वेन निर्णीयते । न तु यत्र विशेष्यनिर्देशेन निराकांक्षता । प्रकृते च नान्योऽतोऽस्ति द्रष्टेत्यादौ द्रष्ट्रादिपदैर्विशेष्यस्य दर्शितत्वात् न तदाकांक्षेति न श्रुतिसङ्कोचकतया स न्यायः कुलधर्म इत्येवाश्रयितुं युक्तः । न च द्रष्ट्रादिपदानां जीवेश्वरसाधारणत्वम् । रूपसाक्षात्कारमात्रप्रवृत्तिनिमित्तकत्वात् । येन तत्रापि विशेष्यापेक्षायां नञिवेति न्यायप्रवृत्त्या ईश्वरे व्यवस्थापनं भविष्यति तेषां पदानाम् । दृश्यादिधातुषु हि चक्षुर्जन्यतावच्छेदकजातिविशेष एव प्रयोजकः । न च रूपसाक्षात्कारत्वादिरूप उपाधिः । गौरवात् रूपं पश्यतीतिप्रयोगासामञ्जस्याच्च । न हि इन्द्र इन्द्राणीपतिरिति पृथक् प्रयुज्यते । तत् कस्य हेतोरिन्द्रपदेन विनैव इन्द्राणीपतिरित्येतावतैव तल्लाभे पृथक्प्रयोगवैयर्थ्यात् । तद्वत् प्रकृतेऽपि पश्यतीत्येतावतैव रूपविषयकत्वे लब्धे रूपमिति पृथक्प्रयोगो व्यर्थ एव स्यात् । घटं पश्यतीतिप्रयोगोऽप्यसमञ्जस एव । न हि घटदर्शनं पटविषयमिति वक्तारो भवन्ति सत्यपि सम्भवे । तत् कस्य हेतोः घटदर्शनमित्युक्ते नियमावगमात् तद्वत् प्रकृतेऽपि स्यात् । श्रुतिरपि 'दर्शनाय चक्षुः चक्षुश्च द्रष्टव्यं चेत्ये'वमादिरूपा चक्षुस्सम्बन्धितयैव दर्शनादिकं वदति । न हि वयं चक्षुर्जन्यत्वरूपोपाधिमेव प्रवृत्तिनिमित्तं वर्णयामः ।

येनेन्द्राणीन्यायेन पृथक् चक्षुरादिप्रयोगोऽनुपपन्नस्स्यात् । किं तु तज्जन्यतावच्छेदिकां जातिम् । अतस्तादृशप्रवृत्तिनिमित्ताभिव्यञ्जकतया 'दर्शनाय चक्षुश्श्रवणाय श्रोत्रमित्यादिप्रयोग उपोद्बलक एव । न च पश्यत्यचक्षुस्स शृणोत्यकर्ण इति विरोधः । 'अपाणिपादो जवनो ग्रहीते'त्युपक्रमे जवनशब्दस्य तत्तत्पदार्थप्राप्तिमात्रपरत्वेन लाक्षणिकतया दर्शनादीनामपि गौणत्वोपपत्तेः । चक्षुरभावेऽपि दर्शनमित्यद्भुतमिव वक्तुं प्रवृत्ताया एतच्छ्रुतेरेव चाक्षुषत्वादिकमेव प्रवृत्तिनिमित्तमित्यत्रैव तात्पर्याच्च । द्रष्ट्रादिशब्दानां चाक्षुषादिधर्मिजीवासाधारणत्वमेव । ईश्वरस्य ज्ञानं नित्यमेव जन्यमपि तदीयं स्वशक्तिपरिणामात्मकमेव । न तु चाक्षुषादिरूपम् । अपि च अत्र आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतिप्रतिपादितानामात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित'मिति श्रुतिप्रतिपादितानां वा ग्रहणं न्याय्यम् । शब्दक्रमसङ्ख्याप्रत्यभिज्ञानात् । ते च जीवधर्मा एवेति द्रष्ट्रादिशब्दैः जीवस्यैव विशेष्यस्य समर्पितत्वात् प्रकृतादन्तर्यामिणः सकाशाद्द्रष्ट्रादिरूपो जीवोऽन्यो नास्तीत्येव प्रतीयते । यदि तु कुलधर्मता नञिवयुक्तन्यायस्यापि प्रकृते प्रवृत्तिर्वर्णनीयेत्याग्रहः, तदा जीवोऽपि परमात्मना सदृश एवेति द्रष्ट्रादिशब्दैः उपस्थिते जीव एवान्तर्यामिभेदो निषिध्यत इति श्लिष्यते । न चैष त आत्मेति भेदनिर्देशः । घटस्य स्वरूपं ममात्मा दृष्ट इत्यभेदेऽपि तथा प्रचुरव्यवहारदर्शनात् । अपि च नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योतोऽस्ति मन्ता नान्योतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोन्यदार्तमिति च वाक्यशैली जीवान्तर्यामिभेदनिषेधपरैवावगम्यते । पूर्ववाक्येनोक्तगत्या भेदे निषिद्धे भेदाभेदयोस्साधारणस्य एषत आत्मेतिवाक्यस्यान्वयमुखेन भेदनिषेधनिगमनरूपतैवावगम्यते । अपि च एषत इति वाक्येन प्रसिद्धजीवमेतच्छब्देनानूद्य तस्यान्तर्याम्यभेद एव स्पष्टं प्रतिपाद्यत इति प्रतीयते । य आत्मनीत्यादौ च भेदनिर्देशे प्रकृतभाष्यमेव उत्तरम् । न चात्रापि शुद्ध एवात्मोच्यते । एतत्स्थाने शाखान्तरे 'यो विज्ञाने तिष्ठ'न्नित्याम्नानेनान्तःकरणचतुष्टयान्तर्गतविज्ञानोपाधिकस्यैवाभिधानोपगमात् । तत्सिद्धं 'नान्योऽतोऽस्ति द्रष्टे'त्यादिवाक्यं जीवान्तर्यामिभेदनिषेधपरमिति । ननु, जीवब्रह्मणोरौपाधिकभेदे मायाविदृष्टान्तोऽसमञ्जसः । तत्र द्वितीयस्य शुक्तिरजतादिवत् काल्पनिकत्वात् जीवस्य च पारमार्थिकब्रह्मसदृशत्वादतः कल्पितभेदयोस्समानसत्ताकत्वं यत्र प्रसिद्धं तादृशदृष्टान्तमाह—**यथा वा घटाकाशादीति** ॥ १७ ॥

## कामाच्च नानुमानापेक्षा । १८ ।

सूत्रे अनुमीयत इत्यनुमानमिति कर्मव्युत्पत्तिर्द्रष्टव्या ॥ १८ ॥

## अस्मिन्नस्य च तद्योगं शास्ति । १९ ।

अनेन सूत्रेणानन्दमयज्ञानान्मुक्तिप्रतिपादनात्तस्य ब्रह्मत्वं निर्धार्यते । न हि ब्रह्मविज्ञानादन्यतो मुक्तिः सम्भवति । 'तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेः । ननु, 'सोऽश्नुते सर्वान् कामान् सहे'त्युपक्रमगतं वाक्यमनुदाहृत्य किमर्थं यदा ह्येवेत्युपसंहारवाक्यमुदाहृतम् । उच्यते—उपक्रमे मुक्तिप्रतिपादकवाक्ये शङ्काविशेषं प्राप्तं परिहर्तुं तद्वाक्यं समर्थमित्यभिप्रायेण । अस्मिन्वर्णके हि प्रियमोदादिविशिष्टानन्दमयजीवोपासना पूर्वपक्षे । सिद्धान्ते तु ब्रह्मोपासना । न तु निर्विशेषवस्तुप्रतिपादकं वाक्यं सिद्धान्तेऽपि । ततश्चानन्दमयसगुणब्रह्मोपासनात् कथं मुक्तिस्स्यादिति शङ्का । तन्निराकरणं तूपासनानन्तरं ब्रह्मलोकं गतस्यादृश्याद्यात्मकनिर्गुणब्रह्मसाक्षात्कारे मुक्तिर्भविष्यतीति क्रममुक्त्यभिप्रायं सर्वकामावाप्तिवचनमिति । **यदा ह्येवैष इति** । 'सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवदि'ति पूर्ववाक्ये अध्यारोपितस्य प्रपञ्चजातस्य निषेधार्थमिदं वाक्यम् । तत्र यद्यपि अदृश्य इत्येव सर्वारोपितनिषेधः सिध्यति, तथापि पूर्ववाक्योपात्तानामेवायं निषेध इति विधिनिषेधयोस्समानविषयताद्योतनार्थं आरोपान्तर्गतप्रतियोगिसमर्पकपदप्रत्यभिज्ञापूर्वकं गोबलीवर्दन्यायेन पुनर्निषेधः केषां चित् । आत्म्यं शरीरं आत्मीयमिति यावत्, तद्रहिते । निरुक्तम् इदमित्थमिति निर्वचनयोग्यं, तद्रहिते । निलयनं नितरां लयस्थानं, तद्रहिते । प्रतिष्ठां साक्षात्काररूपं तज्ज्ञानम् । 'आनन्दं ब्रह्मणो विद्वान् न बिभेती'त्यभयहेतुत्वेनोत्तरत्र ज्ञानस्य कीर्तनात । इहापि अभयहेतुत्वेन तत्प्रत्यभिज्ञानात्तदेव प्रतिष्ठाशब्दार्थ इति निर्णीयते । **उदरमन्तरं कुरुतेऽथ तस्य भयं भवतीति** । अत्र भयहेतुत्वेन कीर्त्यमानं अभयहेतुविरुद्धमित्यवगम्यते । निर्विशेषात्मज्ञानस्याभयहेतुत्वोपपादनात् सविशेषात्मज्ञानं भयहेतुरित्यवगम्यते । ततोऽत्र वाक्येऽन्तरशब्दो भेदपरः । कुरुत इति क्रियासामान्यवाचकस्य क्रियाविशेषे ज्ञाने वृत्तिराश्रीयते । उदरमित्यत्र उत् अरमिति पदच्छेदः । अरमित्यल्पार्थे, उदित्यप्यर्थे । न ह्येतस्य वाक्यस्य पूर्वापरपर्यालोचनां विहायार्थविशेषो निर्धारयितुं शक्यः । 'ऋतं पिबन्ता'विति मन्त्रे ऋतादिपदाना-

मिवोदरं कुरुत इत्यंशस्य यथाश्रुतस्य प्रक्रमाननुगुणत्वात् । एतत्सर्वमभिप्रेत्याह—**एतदुक्तं भवतीति** । एवमेकदेशिमतेनानन्दमयस्य ब्रह्मत्वं तदुपासनापरे च सत्दर्भे निर्विशेषवस्तुप्रतिपादनं क्रममुक्त्यभिप्रायमिति प्रतिपादनपरतया सूत्राणि व्याख्यायानन्दमयो जीव एव, कृत्स्नमपि वाक्यं निर्विशेषब्रह्मपरमेवेति प्रतिपादनपरतया सूत्राणि व्याचिख्यासुः प्रथममानन्दमयो न ब्रह्मेत्याह—**इदं त्विह वक्तव्यमिति । विकारार्थमयट्प्रवाहे सतीति** । सर्वान्तरत्वं तु नानन्दमये प्रायपाठबाधकं लिङ्गमस्तीति गूढोऽभिसन्धिः । गूढमभिसन्धिमनवगाह्य शङ्कते—**मान्त्रवर्णिकेति** । मान्त्रवर्णिकब्रह्मप्रत्यभिज्ञानादित्यनेन किमुपक्रान्तश्रुतात्मादिपदसामानाधिकरण्यमात्रं विवक्षितं, उत सर्वान्तरत्वमपि । नाद्यः । तथा-सत्यन्नमयादिष्वपि 'स वा एष पुरुषोऽन्नरसमयः । तस्माद्वा एतस्मादन्नरसमयात् । येऽन्नं ब्रह्मोपासत' इत्यात्मपदब्रह्मपदसामानाधिकरण्यमस्ति । तस्मादेतस्मादिति सर्वनाम्नी 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इति पूर्ववाक्यगतसर्वनामसमानार्थके आत्मपरे । एवं प्राणमयादिष्वपि प्रतिपर्यायं स्पष्टमेवात्मपदसामानाधिकरण्यम् । विज्ञानमयकोशे तु 'विज्ञानं देवास्सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत' इति ब्रह्मपदाभ्यासः, उपक्रान्तसर्वकामावाप्तिरूपं फलं च प्रत्यभिज्ञायते । तथा च तेषामप्युपक्रान्तब्रह्मात्मत्वापत्तिः । न चास्तु तेषामपि ब्रह्मत्वम् । तथासति ब्रह्मानेकत्वप्रसङ्गेन सर्वश्रुतिषु ब्रह्मैकत्वनिर्धारणं विरुध्येत । न च तस्यैकत्वेऽपि उपाधिभेदभिन्नस्योपासनापराणि कोशवाक्यानि भविष्यन्ति । प्रक्रान्तब्रह्मोपासनस्य प्रधानस्यानेकत्वे वाक्यभेदापत्तेः । न चान्नमयादिकोशेषु गुणभूतान्युपासनानि विधीयन्ते । आनन्दमयवाक्ये तु प्रधानोपासनम् । अतो न वाक्यभेद इति वाच्यम् । तथात्वे विनिगमनाविरहात् उपक्रान्तस्य ब्रह्मणस्तत्र सर्वत्र प्रत्यभिज्ञानादिति मनसि निधायाह—**अन्नमयादीनामपीति** । द्वितीयं शङ्कते । **अत्राहेति । यद्यप्यन्नमयादिभ्य इवेति** । अभ्युपगमवादोऽयम् । वस्तुतस्तु ततोऽप्यान्तरो वाक्यगतिपर्यालोचनया अवगम्यत एवेति द्योतनाय—**यद्यपीति** । तथा ह्यानन्दमयस्य हि सर्वान्तरत्वं न साक्षादवगम्यते । अपि तु ततोऽन्तरस्यान्यस्यानाम्नानादिति वक्तव्यम् । तदास्याप्यात्मान्तराम्नानेन स एव ततोऽप्यन्तरोऽवगतो भविष्यति । आनन्दमयपर्यायोत्तरं हीदं वाक्यं समाम्नायते । तस्यैष एष शारीर आत्मा । यः पूर्वस्येति । न चात्रैकदेश्युक्तरीत्या क्लिष्टार्थो ग्राह्यः । यथाश्रुतार्थग्रहणे अनुपपत्त्यभावात् । न च प्राणमये तस्यैष इत्यस्य यथा-

श्रुतार्थग्रहणं न सम्भवति । अन्नरसमयात्मानुक्तेरिति वाच्यम् । यस्मादन्नरसमय उत्पन्नः, स एव मूलकारणीभूतः तस्यात्मा भविष्यतीति 'तस्यैष एव शारीर आत्मा । यः पूर्वस्येत्यनुवादबलादवगन्तुं शक्यत्वात् । स च मूलकारणतया तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत इति निर्दिष्ट एव । ततश्च यः पूर्वस्येति षष्ठी जन्यजनकभावे । तथा च तस्य प्राणमयस्य एष एव शारीर आत्मेत्यत्रापि जन्यजनकभावे षष्ठी । शारीरपदं च तस्य जीवाभेदसूचकम् । अयं च जन्यजनकभाव उपादानोपादेयभावरूपेणापि भवतीति स वा एष पुरुषोऽन्नरसमय इति अन्योऽन्तर आत्मा प्राणमय इति आत्मपदसामानाधिकरण्यं च उपपद्यते । ततश्च यदुपक्रमे सर्ववस्त्वनुस्यूततया सर्वान्तरत्वं परिपूर्णत्वमनन्तपदेन सूचितम् । यच्च तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत इत्यादिना विवृतं, तदानन्दमयादन्यस्यैवावगम्यते । गुहानिहितत्वरूपमान्तरत्वं यदि ब्राह्मेणैव रूपेण वक्तव्यं, तदाप्यानन्दमयस्य य आत्मावगतस्तत्रैव तत्पर्यवसानं कल्पनीयम् । तथा च तस्मादन्योऽन्तर आत्मेत्यश्रवणमात्रेण नानन्दमयस्य मान्त्रवर्णिकब्रह्मत्वं वक्तुं शक्यम् । वस्तुतस्तु उपक्रमे यत् गुहानिहितत्वमुक्तं, तज्जैवेन रूपेण । तस्य चानन्दमये पर्यवसानं जीवत्व एव लिङ्गम् । द्विप्रकारेण हि ब्रह्मणो गुहानिहितत्वं पारमेश्वरेण रूपेण जैवेन च । तत्राद्यस्य परमे व्योमन्निति प्रतिपादनात् परमव्योमाश्रितं गुहानिहितं जैवमेव रूपं सिध्यति । अत्र हि परमव्योमशब्दः परमेश्वरपरः । भृगुवल्ल्यां सप्रपञ्चं ब्रह्मस्वरूपं निरूप्य 'सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते'ति मन्त्रवाक्यगतपरमव्योमशब्दव्याख्यानत्वेन तस्यास्सङ्क्रमितत्वात् । तदेव चानन्दमयपर्याये गुहानिहितं भविष्यति । अत्रापि हि ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्माश्रितत्वमवगम्यते । आधाराधेयभावेन चानन्दमयस्य ब्रह्मभेदोऽवगम्यते । ततश्च प्रियादिसम्बन्ध आनन्दमयेऽक्लेशेनैव वर्णयितुं शक्यते । आनन्दमयस्य ब्रह्मत्वे तु तदपि क्लेशेनैव वर्णनीयं स्यात् । तदाह—**यत आनन्दमयं प्रकृत्येति** । न च पूर्वेषु पर्यायेषु अन्नमयाद्यभिन्नत्वं तत्तदवयवानामवगतं इहाप्यानन्दमयपुच्छत्वेन निर्दिष्टं ब्रह्मानन्दमय एव भविष्यतीति वाच्यम् । 'आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठे'ति प्राणमये तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्ष'इत्यादि मनोमयपर्याये च तत्तत्कोशभिन्नानामेवावयवानां प्रतिपादनात् सर्वथाप्यवयवावयविभावस्य भेदगर्भतया, तदप्रत्याख्यानाच्च । न च पूर्वेषु पर्यायेषु श्लोकानामवयविविषयत्वं दृष्टम् अन्नाद्वै प्रजाः प्रजायन्त इत्यन्नमयपर्याये, प्राणं देवा अनुप्राणन्तीति प्राणमयपर्याये, विज्ञानं यज्ञं तनुत इति विज्ञानमयपर्याये । एवं प्रकृतेऽपि भविष्यति । ततश्चासन्नेव स भवतीत्यानन्दमयपर्यायस्थस्य श्लोकस्य ब्रह्मपद-

घटितत्वात्तस्यानन्दमयविषयत्वे आनन्दमयस्य ब्रह्मत्वमिति वाच्यम् । मनोमयपर्यायगतस्य यतो वाचो निवर्तन्त इत्यस्य ब्रह्मविषयत्वेन तादृशनियमासिद्धेः । न च तत्रापि ब्रह्मविषयकाप्राप्त्याश्रयतया मनः प्रतिपादितमेवेति यथाकथञ्चिन्मनोविषयतया श्लोकस्य न नियमासिद्धिरिति वाच्यम् । तथासति प्रकृतेऽपि असन्नेव स भवतीति स इति शब्दपरामृष्टस्यानन्दमयस्य ब्रह्मविषयकसदसद्वेदनाभ्यां सदसत्त्वयोः प्रतिपादनमस्तीति श्लोकस्य यथाकथञ्चिदानन्दमयविषयत्वमस्त्येव । परं तु तदब्रह्मत्वसाधकमेव । न च विज्ञानमयकोश एव जीवरूपो निर्दिष्टः । ततोऽपि भिन्नत्वेनाम्नातस्यानन्दमयस्य कथं जीवत्वमिति वाच्यम् । बुद्ध्युपाधिको जीवो विज्ञानमयपर्याये उक्तः । अज्ञानोपाधिकस्त्वानन्दमय इति विवक्षोपपत्तेः । यथा हि विज्ञानमयशब्दो जीवविषयो योऽयं विज्ञानमयः प्राणेष्वित्यादौ, तथानन्दमयशब्दोऽपि जीवपरो द्रष्टव्यः सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुगिति । अत्र च सुषुप्तिलिङ्गाज्जीव एवानन्दमयः । एष सर्वेश्वर इत्युत्तरत्र सर्वेश्वरत्वाद्याम्नानं तु जीवस्यैव सत आनन्दमयस्य तदभेददृष्टयभिप्रायम् । एवं अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योति'रिति जीवपर आनन्दमयशब्दः । शुद्धिर्हि प्रागशुद्धस्य सतोऽवगम्यते । अतः शुध्यन्तामित्युक्त्या अशुद्धेर्द्योतनादानन्दमयो जीव एवेति निर्धार्यते । अथवा विज्ञानमयशब्दो बुद्धिपर एव । बुद्धेरप्याधिदैविकविज्ञानविकारतया विज्ञानमयशब्दोपपत्तेः । एवं च सति जीवोपकरणीभूतमनोमयादिप्रायपाठो विज्ञानशब्देन तत्पर्यायाम्नातश्लोके तदभ्यासश्चोपपद्यते । विज्ञानशब्दो हि बुद्धावेव प्रायः श्रुतिषु प्रसिद्धः । बुद्धिं तु सारथिं विद्धीत्युक्त्वा विज्ञानसारथिर्यस्त्विति पुनस्तदनुकीर्तनात् । कथं तर्हि विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि चेति तस्य यज्ञादिकर्तृत्वप्रतिपादनम् । गुहाधिकरणोदाहरिष्यमाणपैङ्गिब्राह्मणवत् जीवस्य तदुपाधिककर्तृत्वबोधनोपयोगितया तच्छिरसि निक्षेपोपपत्तेः । अतो न विज्ञानमयकोशान्तरत्वमात्रेणानन्दमयस्य जीवभिन्नत्वं ब्रह्मत्वं वावगन्तुं शक्यते ननूपक्रान्तं ब्रह्मविदाप्नोति परमिति वेद्यं ब्रह्म पुच्छं प्रतिष्ठेत्यत्र प्रतिपाद्यते । तन्निरूपणायैव । पञ्च कोशा अवतारिता इत्युक्तम् । तथासति यदेवोपक्रमे प्रधानतयावगतं, तदेव कथं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रानन्दमयशेषतया निर्दिश्यते । प्राधान्याप्राधान्ययोर्विरोधादित्यभिप्रायेण शङ्कते—**नन्वानन्दमयस्यावयवत्वेनेति**। उपक्रमावगतप्राधान्यानुसारेण अप्राधान्यद्योतकं पुच्छपदं तदानुगुण्येन व्याख्येयमित्यभिप्रायेण परिहरति—**प्रकृतत्वादिति** । ननूपक्रान्तं ब्रह्म आनन्दमय एवास्तु । ततश्च न पुच्छपदं यथाकथञ्चिद्व्याख्येयमित्यभिप्रायेण शङ्कते—**नन्वान्दमयावयवत्वेनेति** । एवं वदतापि ब्रह्मपुच्छं प्र-

तिष्ठेति वाक्यस्वारस्येन यदानन्दमयस्याब्रह्मत्वमवगम्यते, तत् बाधितमेव स्यात् । ततश्च पुच्छशब्दानुसारेण यदप्राधान्यमवगतं वर्तते, तदेव बाधनीयम् । तत्र च ब्रह्मशब्दानुसारेण प्रकृतब्रह्मप्रत्यभिज्ञानमनुकूलमित्याह—**तथासतीति** । एवमुपक्रमानुसारेण पुच्छशब्दावगतमप्राधान्यं बाध्यत इत्युक्तम् । इदानीमुपसंहारगतप्राधान्यद्योतकानेकप्रमाणानुसारेणापि तत बाधनीयमित्याह—**अपि चेति** । असन्नेवेति मन्त्रो ब्रह्मपुच्छं प्रतिष्ठेति वाक्यनिर्दिष्टब्रह्मपरः । न त्वानन्दमयपरः । तदप्रत्यभिज्ञानात् । पूर्ववाक्यस्वारस्येन ब्रह्मभिन्नतयावगते तस्मिन् ब्रह्मपदलक्षणाप्रसङ्गात् प्रियादिविशिष्टस्याहमिति प्रतीयमानस्यासत्त्वशङ्कानास्पदतया तच्छङ्कानिवारणार्थं प्रवृत्तस्य मन्त्रस्य तद्विषयत्वे आनर्थक्यं च स्यात् । ततश्चायं मन्त्रो ब्रह्मप्रधानः । तत्स्तुतिलिङ्गात् । न च पुच्छपदानुसारेणानन्दमयपुच्छस्तुतिरानन्दमये पर्यवसितेति वक्तुं शक्यम् । एकं पुच्छपदमनुसृत्य ब्रह्मपदाभ्यासस्य ब्रह्मसत्त्वासत्त्वयोर्गुणदोषाभिधानस्य चानेकस्य ब्रह्मप्राधान्यलिङ्गस्य स्वारस्यभङ्गायोगात् । अपि चैतस्य मन्त्रस्य पुच्छपदानन्दमयविषयत्वे स एवैतन्मन्त्रे प्राधान्येन वेद्य इत्यसन्नेव भवतीति वेदनकर्तृत्वेन सर्वनाम्ना तस्य परामर्शोऽप्यसङ्गतस्स्यात् । वेदितृत्वस्य वेद्यत्वविरुद्धत्वात् । अस्मिन्मन्त्रे हि स इति पुल्लिङ्गं पूर्ववाक्यनिर्दिष्टानन्दमयपरामर्शकमेव । इदमपि च जीवत्वलिङ्गमिति ब्रह्मप्रधानेऽस्मिन् प्रकरणे जीवत्वमवगतं प्राधान्यं विहन्तीति नानन्दमयप्रधानोऽयं श्लोकः । ततश्चतन्मन्त्रात् पूर्वपठितमपि पुच्छपदं ब्रह्माप्राधान्यद्योतकम् । उत्तरभाविभिरपि बहुभिः प्राधान्यद्योतकैः अन्यथाक्रियते । उपक्रमन्यायापेक्षयापि भूयोऽनुग्रहन्यायस्य प्रबलत्वात् । समसङ्ख्याकत्व एव हि उपक्रमोपसंहारयोरुपक्रमप्राबल्यम् । पुच्छपदस्य गतिं वक्तुं शङ्कते—**कथं पुनरिति** । पुच्छपदमाधारत्वगुणयोगात् उपपद्यते । न च तथासति पुच्छपदेनैवाधारत्वस्य लब्धतया प्रतिष्ठापदं व्यर्थमेव स्यादिति वाच्यम् । स्थितिहेतुत्वं प्रतिष्ठापदार्थः । न च स्थितिहेतुत्वेनैवाधारत्वं लब्धमिति पुनःपुच्छपदेन किमर्थं तल्लक्षणेति वाच्यम् । 'कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी'ति जीवरूपेण प्रविष्टस्य ब्रह्मणः स्थितिहेतुत्वेनाम्नातेऽपि प्राणे ब्रह्माधारत्वाभावात् । एवमाधारभूतानामपि पीठादिनामन्नादीवज्जीवनहेतुत्वादर्शनात् पुच्छपदेनाधारे प्रतिपादितेऽपि प्रतिष्ठापदेन 'कोऽह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्या'दिति वाक्यावगतास्थितिहेतुत्वप्रतिपादने न काचिदनुपपत्तिः । तदाह—**नैष दोष इति** । प्रतिष्ठापदं व्याचष्टे । **परायणमि-**

ति । पदद्वयरम्यमर्थं कथयति—**एकनीडमिति** । एकनीडत्वं प्रकृते आनन्दमयोपादानत्वे सति तत्प्राणनादिहेतुत्वम् । एवमन्योऽन्तर आत्मानन्दमय इत्यत्र प्रकृतब्रह्मपर्यवसानमस्वीकृत्य ब्रह्मपुच्छं प्रतिष्ठेत्यत्र तदङ्गीकारे पुच्छपदावगतमप्राधान्यमनुपपन्नं स्यादिति स्वपक्षदोषं परिहृत्य पुनरप्यानन्दमयस्य ब्रह्मत्वाभ्युपगमे दूषणमाह—**अपि चेति** । ननु, सविशेषब्रह्मपरमेवेदं प्रकरणम् । न तु निर्विशेषब्रह्मपरम् । 'यथाह्यथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे'त्यादौ हृदयपुण्डरीकान्तर्गततया ब्रह्म ध्येयमिति विवक्ष्यते, एवमिहापि विज्ञानमयान्तकोशरूपगुहान्तर्गततया ब्रह्मोपासनं विवक्षितम् । वेदेत्यस्य विधित्वपरिणामोपपत्तेः। तत्र च सत्यत्वादयो गुणा विवक्षिताः । ये च 'सोऽश्नुते सर्वान् कामानि'ति प्राप्यत्वेन कामा निर्दिश्यन्ते । तेऽप्युपास्यगुणा एव भविष्यन्ति । तत्क्रतुन्यायात् । एवं 'सोऽकामयते' त्यादयो गुणा मध्येऽपि परामृश्यन्ते । यथा भीषास्माद्वातः पवते । आनन्दं ब्रह्मणो विद्वान् । न बिभेतीत्यादयो भूयांस उपसंहारेऽपि गुणा आम्नायन्ते । तद्विरोधे च 'यतो वाचो निवर्तन्त' इति वाक्यं यथाकथञ्चित् ब्रह्मानन्दोऽपरिमित इत्येवमभिप्रायं सत् ब्रह्मानन्देयत्तापरिच्छेदकवाचां मनसा सह निवृत्तिप्रतिपादकं भविष्यति । अतः सविशेषपरत्वापादनं न दोष इत्यत आह—**निर्विशेषमिति**। अयमाशयः । यतो वाचो निवर्तन्त इति वाक्यं न ब्रह्मानन्देयत्तापरिच्छेदकवाङ्निवृत्तिप्रतिपादनद्वारा ब्रह्मानन्दस्यापरिमितत्वं प्रतिपादयति । तथासति वाच इति ब्रह्मानन्देयत्ताप्रतिपादकवाग्विषयकं सत् संकुचितार्थं स्यात् । निवर्तन्त इति च पदस्वारस्येन प्रवृत्तिरप्यवगम्यते । प्रवृत्तस्य हि निवृत्तिरियत्तापरिच्छेदिकानां च वाचां प्रवृत्तिर्नास्तीति तदपि पदमसङ्गतमेव स्यात् । ततश्च वाच इत्यसङ्कोचेन सर्ववाग्विषयम् । न च तथापि सगुणानां वाचां शबलितस्वरूपपर्यन्तं प्रवृत्तानां विशुद्धस्वरूपपर्यन्तमप्राप्य निवृत्तिर्मनसा सगुणवस्त्ववगाहिज्ञानाश्रयेण सहेति वक्तुं शक्यत्वेऽपि निर्गुणप्रतिपादकवाचां तादृशमनसा सह प्रवृत्तानां निवृत्तिर्नास्तीति सगुणवाग्विषयतया वाच इति संकुचितार्थं वक्तव्यमेवेति वाच्यम्। निर्गुणप्रतिपादकवचनजातस्य गुणानप्रतिपाद्य विशुद्धस्वरूपमात्रप्रतिपादकत्वे सत्यपि निर्गुणवाक्यार्थगोचरसाक्षात्कारपर्यन्तमौपाधिकगुणजातस्य विद्यमानतया तस्यां दशायां अधिष्ठानमात्रपरिशेषेण विशुद्धस्वरूपाभावात् तासामपि वाचां मुक्तिदशाभिव्यङ्ग्यं यादृशं विशुद्धं स्वरूपं, ततो निवृत्तिरस्त्येवेति न वाच इत्यस्य सङ्कोचः । न वा निवृत्तिपदस्वारस्यपरित्यागः । न च प्रकरणाधीतानेकसगुणवाक्यानुसारेण 'यतो वाच' इत्यस्य एकस्य यथाकथञ्चित्

व्याख्याने न दोष इति वाच्यम् । तात्पर्यग्राहकलिङ्गवर्तकेनैवानेकबाधोपपत्तेः । इदं वाक्यमस्मिन् प्रकरणे द्विरभ्यस्यते मनोमयपर्याये ब्रह्मवल्ल्यन्ते च । तत्र कथमेकरूपेण द्विरभ्यस्यमानस्य वाक्यस्यान्यथानयनम् । उपक्रमे चानन्त्यं प्रतिज्ञातम् । तदुपपादकतया सृष्टिवाक्यप्रवृत्तिः । तत्र सृष्टितदुपयोगिगुणमात्रप्रतिपादने वस्तुपरिच्छेदस्य प्रसक्तेरानन्त्यमप्रतिपादितमेव भवेदित्यस्मिन् प्रकरणे सृष्टिवाक्यजातमपवादमपेक्षमाणमेव भवतीति 'यतोवाच' इति वाक्यं तदनुगुणमेव । न तु तत्प्रतिकूलम् । तदुद्देश्यसिद्ध्युपयोगित्वात् । तथा चोपक्रमोपसंहारैकरूप्यमपि तात्पर्यग्राहकं लिङ्गं यतो वाच इत्यस्य । मध्येऽपि चादृश्येऽनात्म्य' इत्यादिरपवाद उपलभ्यते 'उदरमन्तरं कुरुते' इति च भेदनिन्दा । अतो निर्गुणप्रकरणेऽस्मिन् आनन्दमये सगुणे उपक्रान्तब्रह्मपर्यवसानं कर्तुमशक्यम् । आनन्दं ब्रह्मण इति षष्ठी च निर्गुणप्रकणानुरोधात् 'यदेष आकाश आनन्दो न स्यादित्यानन्दो ब्रह्मेति व्यजानात् इति च पूर्वोत्तरवाक्यपर्यालोचनया च घटस्य स्वरूपमित्यादिवदभेदसम्बन्धपरैव व्याख्येया । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेत्यत्रापि न सहार्थे तृतीया । सहेत्यस्य हि न ब्रह्मेत्यनेनान्वयः । वैदिकसम्प्रदायागतः सहेत्यत्र विरामो हि ब्रह्मणेत्यनेनानन्वयं द्योतयति । ततश्च सहेत्येतत्सर्वान् कामानित्यनेनान्वेति । तथा च सहेति यौगपद्ये । ब्रह्मणेतीत्थंभावे तृतीया । तादात्म्येन च ब्रह्माऽश्नुवानस्य लक्षणम् । तथा च ब्रह्मात्मना सर्वान् कामान्युगपदश्नुत इति प्रतिपादने प्रकरणानुगुण्यम् । ब्रह्मणा सहेति प्रतिपादने तु निर्गुणप्रकणविरोधोऽपि स्यात् । उपक्रमोपसंहारैकरूप्यावधृतं निर्गुणप्रकरणं च प्रबलम् । 'ब्रह्मविदाप्नोति पर'मिति प्राप्यप्रापकभावेन भेदनिर्देशस्त्वापाततः । आप्नोतीत्यस्य भवत्यर्थकत्वात् । 'ब्रह्म वेद ब्रह्मैव भवती'ति हि श्रुत्यन्तरम् । अपि च 'असतोमासद्गमय, तमसोमा ज्योतिर्गमय, मृत्योर्मामृतं गमये'ति मन्त्राः । तेषां च ब्राह्मणं—'स यदाहासतोमासद्गमयेति मृत्युर्वा असत् सदमृतं मृत्योर्मामृतं गमय अमृतं माकुर्वित्येवैतदाह—तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमय अमृतं माकुर्वित्येवैतदाह—मृत्योर्मामृतं गमयेति नात्र किञ्चन तिरोहितमिवास्तीति । अत्र मन्त्रद्वये गमयेत्यस्य कुर्वित्यर्थप्रदर्शनेन तृतीयमन्त्रे मृत्व्यादिपदानामव्याख्येयत्वेऽपि गमयेत्यस्य कुर्वित्यर्थपरतया व्याख्येयत्वमस्तीति द्योतयितुं नात्र तिरोहितमिवेतीवशब्दः प्रयुक्तः । परं तु पूर्ववदेव गमयेत्येतद्व्याख्यातुं शक्यत इति स्पष्टतया न व्याख्यातम् । क्वचिद्व्युत्पत्तेर्दर्शितायाः सर्वत्रोहितुं शक्यत्वात् । एतत्पर्यालोचनया मोक्षप्रकरणे प्राप्त्यर्थ-

कानि पदानि तद्भावापत्तिपराणीत्यवगम्यते अतो 'ब्रह्मविदाप्नोति परमि'त्यादिः सन्दर्भः सर्वोऽपि निर्विशेषब्रह्मपर एवेति । ननु, आनन्दमय इत्यत्रविकारार्थमयडन्तत्वे प्रायपाठः प्रयोजक इत्युक्तं, तन्न सम्भवति । अन्नरसमय इत्यत्र नित्यशब्दस्य नित्यं वृद्धशरादिभ्य इति सूत्रगतस्य सामान्यापेक्षज्ञापकाश्रयणेन मयड्विकारार्थ इत्यस्तु । अन्नात् पुरुष इति वाक्यानुसारात् 'तत आगत' इत्यधिकारगतेन 'मयट् चे'ति सूत्रेण वा भवतु । विकार एवागतत्वोपचाराश्रयणात् । विज्ञानमये तु किमर्थं एतादृशक्लेशानुसारेण विकारार्थमयडन्तता स्वीकर्तव्या । ततस्तत्र प्राचुर्यार्थ एव मयडस्तु । तथा च न विकारप्रायपाठ इत्यपि कश्चिद्वदेत् । तत्र यद्यपीत्थमपि वक्तुं शक्यम् । येनापि प्राचुर्ये मयट् स्वीकर्तव्यः तस्यापि क्लेशस्तदवस्थ एव । तथा हि यदि विज्ञानमयशब्दो जीवपरः, तदापि प्रचुरं विज्ञानं जीव इति वक्तुं न शक्यते । जीवोऽणुरिति मते व्याप्त्यात्मकस्य प्राचुर्यस्यासम्भवात् । प्रचुरं विज्ञानमस्मिन्नित्यपि वक्तुं न शक्यम् । जीवविज्ञानस्य संकुचितत्वात् । सिद्धान्तेऽप्यन्तःकरणोपाधिकस्य जीवस्य न प्रचुरविज्ञानरूपता । तस्य सामान्यतः शरीरमात्रपरिमाणत्वात् । विशेषतश्चान्तःकरणगोलकहृदयमात्रव्यापित्वात् । विज्ञानमयशब्देन च सिद्धान्ते बुद्ध्युपाधिकस्यैव जीवस्य ग्रहणात् बुद्धिरूपः कोशस्तु परमते विज्ञानशब्दे ग्रहीतुमिष्ट एव न भवति । सिद्धान्ते तु यद्यपि तद्ग्रहणमिष्टं, तथापि न तत्प्रचुरता । गोलकमात्रवृत्तित्वात् । इन्द्रियप्रणालिकयापि विषयेष्वेव व्याप्तिः । न तु सर्वत्र । एवं प्रचुरविज्ञानाश्रयत्वमपि नास्ति । प्रस्तुतत्वं तु न जीवतद्बुद्धितज्ज्ञानानां सम्भवति । प्रस्तुतत्वं हि प्रकृतत्वम् । इह च ब्रह्मैव प्रकृतम् । न त्वन्यत् । प्रस्तुतत्वगर्भमेव च प्राचुर्यं मयडर्थः । ततश्च क्लेशस्य प्राचुर्यपक्षेऽपि तुल्यतया प्रायपाठानुरोधी विकारार्थ एव मयट् विज्ञानशब्दे भविष्यति । सामान्यापेक्षं च ज्ञापकमिह प्रकरणे अन्नरसमयकोशे लब्धवृत्तिकम् । तथा चोपस्थितत्वात् 'नित्यं वृद्धशरादिभ्य इत्यनेन मयड्ग्रहणे न क्लेशः । एवं 'तत आगत इति मयड्ग्रहणेऽपि न क्लेशः । न हि विज्ञानमय इत्यत्रैवागतत्वेन विकार उपचर्यते । किं तु तत आगत इत्यत्रैव गौणमुख्यागतत्वं विवक्षितम् । 'ध्रुवमपायेऽपादान'मिति सूत्र इवापायपदं गौणमुख्यापायपरम् । अतो विज्ञानमय इत्यत्रापि विकार एव मयट् । अथापि कश्चित् प्राचुर्य एव मयडिति निर्बध्नीयात् । तत्र च विज्ञानं प्रचुरमस्मिन्नित्यर्थं वदेत्, तदनुसारेणानन्दमय इत्यत्रापि तत्समानार्थतां वदेत्, तथापि न ब्रह्मपरत्वमित्याह— **अपि चानन्दप्रचुर इत्युक्ते दुःखास्तित्वं गम्यत** इति । अयं भावः । प्राचुर्य

ह्याधिक्येन व्याप्तिः । आधिक्यं च किञ्चिदवध्यपेक्षम्। यश्चावधिस्तस्याल्पत्वं द्योत्यते । तत्र विज्ञानमय इत्यत्र स्वसमानाधिकरणविजातीयाल्पत्वमादाय पर्यवसानं प्राचुर्यस्य वक्तव्यम् । लोके ह्येषां ग्रामाणां मध्ये ब्राह्मणप्रचुरः को ग्राम इत्यत्र ग्रामान्तरगतब्राह्मणाल्पत्वं निरूपकमाधिक्यस्य प्रतीयते । तथैव प्रश्नतात्पर्यात् तदुत्तरेऽपि ब्राह्मणप्रचुरोऽयं ग्राम इति व्यधिकरणसमानजातीयाल्पत्वमेव निरूपकम् । एवं ब्राह्मणप्रचुरोऽयं ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वमपि वर्णितं भवति । तथा च तात्पर्यानुसारेण क्वचिद्व्यधिकरणसजातीयाल्पत्वनिरूपितं प्राचुर्यं, क्वचित् समानाधिकरणविजातीयाल्पत्वनिरूपितमिति द्वेधा सम्भवेऽपि विज्ञानमयशब्दस्य परमते जीवपरत्वान्न तत्र व्यधिकरणसजातीयाल्पत्वमादाय पर्यवसानमाधिक्यस्य । जीवभिन्नेश्वरगतज्ञानस्यैवाधिकत्वात् । अतः समानाधिकरणेच्छादिवृत्तीनामल्पत्वमादाय पर्यवसानं वक्तव्यम् । ततश्च विज्ञानमय इत्यत्र समानाधिकरणविजातीयाल्पत्वमादाय पर्यवसानस्य कृतत्वात्तत्प्राये पठितानन्दमयशब्दस्य प्राचुर्यार्थत्वपक्षे समानाधिकरणविजातीयाल्पत्वमादाय प्राचुर्यस्य पर्ययवसानमायातीति नायं परमेश्वर इति।**उपसंक्रमितव्यानामिति**। तादात्म्यबुद्ध्युपगृहीतानां तत्परित्यागेनातिक्रमणीयानाम्। **तस्माद्वा एतस्मादित्यत्र पुल्लिङ्गेनात्मशब्देनेति**।उपलक्षणमेतत्। तस्यैष एव शारीर आत्मेति आनन्दमयपर्यायपठितेन श्लोकेनानन्दमयं प्रत्यात्मत्वेन ब्रह्मणः प्रस्तुतत्वात्। न चात्मशब्दो न ब्रह्मासाधारणः सर्वेष्वपि कोशेषु। तथा च न ब्रह्मणः पुल्लिङ्गेन स्वासाधारणशब्देन सन्निधानमिति वाच्यम्।'असन्नेव स भवती'ति मन्त्राम्नातस्य ब्रह्मपरत्वसिद्धौ ब्रह्मशब्दसमभिव्याहृतस्य तस्य ब्रह्मासाधारणत्वोपपत्तेः। न च तथासति 'असन्नेव स भवती'ति मन्त्रे वेदनक्रियाविशेषणस्य ब्रह्मणो न शाब्दं प्राधान्यं सम्भवतीति वाच्यम् ।वेद्यत्वेनैवार्थप्राधान्योपपत्तेः । वेद्यत्वनिर्देशे हि कृत्स्नं प्रकरणं तद्वेदनोद्देशेन प्रवृत्तमित्युद्देश्यज्ञानविषयत्वरूपं प्राधान्यं प्राप्नोति। 'तस्यैष एव शारीर आत्मे'ति मन्त्रेषु विशेष्यत्वेन निर्देशरूपमपि प्राधान्यमस्तीति सर्वनाम्ना परामर्शे न काचिदनुपपत्तिः । आनन्दमयपरामर्शवादिनापि आत्मशब्दोऽनुसर्तव्यः ! आनन्दमयपदस्य यौगिकतया तत्रात्मशब्दस्यैवान्योऽन्तर आत्मानन्दमय इति पठितस्य विशेष्यसमर्पकत्वात् । अतो नोत्तरसन्दर्भपर्यालोचनयाप्यानन्दमयस्य ब्रह्मत्वम् । एवमन्योऽन्तर आत्मानन्दमय इति वाक्यमुदाहृत्यानन्दमयपदं ब्रह्मपरमिति वृत्तिकारमताधिकरणपर्यवसानं कृतं, तन्निरस्तम् । इदानीं स्वयं ब्रह्म पुच्छं प्रतिष्ठेति वाक्यमुदाहृत्य तद्वाक्यपर्यालोचनया ब्रह्मण आनन्दमयशेषत्वं न प्राप्नोतीत्येवमर्थपरतया सूत्रैरधिकरणमारचयति—**सूत्राणि त्विति**। अस्मिन् प्रकरणे

हि कोशवाक्येषु तत्तत्कोशानां पक्षित्वेनोपासनं विवक्षितम् । भूमविद्यायां नाम ब्रह्मेत्युपासीतेत्यादौ यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं, तत्रास्य यथाकामचारो भवतीति फलनिर्देशाख्यातयोस्सत्त्वेनोपासनाविवक्षावदिहापि 'सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासत इत्येतयोः सत्त्वेनोपासनाविवक्षोपपत्तेः । तत्र च पुच्छशब्दः अन्नमयादिषु तत्तत्कोशैकदेशेषु पुच्छत्वदृष्ट्यभिप्रायः । नन्वन्नमयादयः पक्षित्वेन निरूपिताः । पक्षिणां च पुच्छं नास्ति । पश्ववयवविशेषवाची हि पुच्छशब्दः । 'पुच्छोऽस्त्री लोम लांगूल'मिति लांगूलापरपर्यायतया कोशकाराभिधानात् । तस्माद्वयांसि पुच्छेनैव प्रतितिष्ठन्तीत्यादिस्तु 'अकच्छः पुच्छकच्छश्चेत्या'दिवल्लम्बमानपश्चादवयवत्वेन गौणः प्रयोगः । अतः कथमिदं पुच्छं प्रतिष्ठेत्यादिभिर्वाक्यैः पुच्छत्वेनावयवविशेषनिरूपणामिति चेत, तर्हि प्रकृतेऽपि पश्चाल्लम्बमानावयवत्वेनैवावयवविशेषाणां निरूपणं पक्षित्वोपासनाङ्गं भविष्यति । तथा च प्रायपाठानुसारेण पक्षित्वेन निरूपिते आनन्दमये ब्रह्मपुच्छं प्रतिष्ठेति वाक्यं पश्चाल्लम्बमानावयवदृष्टिविधायकं सत् आनन्दमयगुणतयैव ब्रह्म प्रतिपादयतीति प्रतीयते, उपक्रमोपसंहारैकरूप्यावधृतप्राधान्यस्य ब्रह्मणः ब्रह्मपदेन प्रत्यभिज्ञानात् स्वप्राधान्येनैव ब्रह्म प्रतिपादयतीत्यपि प्रतीयते । ततश्च संशय इत्याह—**किमानन्दमयस्यावयवत्वेनेति** । 'ईक्षतेर्नाशब्दमित्यत्र प्रायपाठानुसारेणेक्षतिर्गौणो न भवति । श्रुत्यपेक्षया प्रायपाठस्य दुर्बलत्वादित्युक्तम् । इह तु सिद्धान्तेऽपि पुच्छशब्देनाधारत्वलक्षणात् प्रायपाठानुसारेण पश्चाल्लम्बमानावयवत्वविवक्षायां न श्रुतिविरोध इति सङ्गतिः । 'आनन्दमयोऽभ्यासा'दित्यत्रानन्दमयपदं ब्रह्मपुच्छं प्रतिष्ठेति वाक्यं लक्षयति । प्राधान्येन ब्रह्मप्रतिपादकमिति साध्याध्याहारः । इदं च साध्यमभ्यासादिति हेतुबलादेव लभ्यते । तात्पर्यलिङ्गान्तर्गतस्याभ्यासस्य प्राधान्यसाधन एव स्वारस्यात् । आनन्दमयस्य ब्रह्मत्वसाधनपरतया सूत्रव्याख्याने चाभ्यासादिति हेतोः स्वारस्यं न लभ्यते। जैवानन्दविलक्षणत्वस्यापि ब्रह्मलिङ्गत्वेन तल्लिङ्गादित्येव निर्देशे तत्सङ्ग्रहोपपत्तेः । तदभ्यासपर्यन्तधावनस्य निष्फलत्वात् । प्राधान्यरूपे च साध्ये आनन्दमयस्यानन्वयात् । तेन पदेन ब्रह्मपुच्छं प्रतिष्ठेतिवाक्यलक्षणायां न काचिदनुपपत्तिः । न हि यथाश्रुतसूत्रार्थो ग्राह्य इत्येतावन्मात्रमुत्सर्गमवलम्ब्य श्रुतिविरुद्धमपि आनन्दमयस्य स्वप्रधानत्वं वक्तुं शक्यम् । ब्रह्मपुच्छमभ्यासादित्येव वक्तुमुचितत्वेऽपि लाक्षणिकानन्दमयपदप्रयोगोऽर्थान्तरग्रहणेन शङ्काविशेषो निराकर्तव्य इति द्योतनार्थः । ब्रह्मपुछं प्रतिष्ठेत्यनेन स्वप्राधान्येन ब्रह्म प्रतिपाद्यते । न त्वानन्दमयशेषत्वेन । 'असन्नेव स भवती'ति मन्त्रे अभ्यासानुसारेण ब्रह्मणः प्राधान्यावगमात् । इहापि तस्यैव

प्रत्यभिज्ञानात् स्वप्रधानमेव ब्रह्म भविष्यतीत्युक्ते प्रायपाठसहकृतोपक्रमस्थपुच्छशब्दस्वारस्यानुसारेण 'असन्नेव स भवती'तिमन्त्रे ब्रह्मपदमानन्दमयलक्षकमस्तु । ततश्चासिद्धो हेतुरिति शङ्कायां आनन्दमयो न निगमश्लोकप्रतिपाद्य इति साध्याध्याहारेण सूत्रयोजना । तत्र चाभ्यासादित्यनेन निगमश्लोके ब्रह्मपदाभ्यासात् तत्रैव स इत्येनमितिपदेनानन्दमयस्य ब्रह्मपदार्थगोचरसदसत्त्वज्ञानाधीनसदसत्त्वाश्रयतयाभ्यासाच्च नैकमुपक्रमस्थपुच्छपदमनुसृत्यानेकपदबाधनेन निगमश्लोकस्यानन्दमयविषयत्वं कल्पनीयम् । भूयोऽनुग्रहन्यायादिति प्रतिपाद्यते । पुच्छशब्दस्य गतिं वक्तुम्—**विकारशब्दान्नेति चेन्न प्राचुर्यात्** । इति सूत्रम् । तत्र विकारपदमवयवपरतया व्याचष्टे—**विकारशब्द इति** । अवयवशब्दादित्येव वक्तव्ये विकारपदप्रयोगः सूत्रे शङ्कान्तरद्योतनार्थः । इत्थं हि सिद्धान्ती वदति—ब्रह्म पुच्छं प्रतिष्ठेत्यत्र पुच्छपदमाधारलक्षकम् । तत्रेदं शङ्कान्तरं तथासति पुच्छपदस्याधारे निरर्थिका लक्षणा स्यात् । प्रयोजनं विना लक्षणाश्रयणं दोष इति आलङ्कारिका मन्यन्ते । अस्मिन्नर्थे विकारशब्दो दोषपरः । विपूर्वस्य कृञो विकृताननेत्यादौ दोषपरोऽपि प्रयोगो दृश्यते । प्राचुर्यादित्युत्तरम् । निरर्थिका लक्षणा न भवति । पूर्ववदानन्दमयेऽपि पक्षित्वेन निरूपिते किञ्चित् पुच्छं वक्तव्यमि'ति तत्सामान्यायात्रपुच्छपदप्रयोगः । तावताप्याधारो लक्षयितुं शक्यत इति । ननु,पूर्वत्रावयवपरः पुच्छशब्दः । इह त्वाधारतापर इति कथमर्थभेदे साम्यमवगम्यते । इहापि साम्यसिध्यर्थमवयवलक्षणैवाश्रयणीयेति चेदिति पुनरपि शङ्का । विवक्षितार्थानुसारेण समानशब्दप्रयोगमात्रेण साम्यापादनसम्भवेऽपि विवक्षितविरुद्धार्थग्रहणेन साम्यापादनस्यानुचितत्वात् अर्थभेदेऽपि शब्दैक्यमात्रेण साम्यस्य प्राचुर्यादिति परिहारार्थः । अत्र हि ब्रह्मपुच्छं प्रतिष्ठेति पुच्छपदं न केवलं पूर्वपर्यायसाम्यमात्रार्थं प्रयुक्तम् । अपि तु शङ्काविशेषनिवृत्तयेऽपि । तथा ह्युपक्रमे ब्रह्मण आनन्त्ये प्रतिज्ञाते जडवर्गस्य तद्विवर्ततया वस्तुपरिच्छेदकत्वं नास्तीति सृष्टिवाक्यादवगमेऽपि जीवस्य ब्रह्मविवर्तत्वासम्भवेन तेन वस्तुपरिच्छेदशङ्कायां तस्यैव ब्रह्मणो गुहानिहितत्वं जीवरूपेणोक्तम् । तत्रापि ब्रह्मण एव गुहानिहितत्वोक्त्या जीवब्रह्मणोस्स्वरूपैक्यं कथं निर्धार्यते । उपक्रमे प्राप्यप्राप्तृभावेन निर्दिष्टयोर्जीवब्रह्मणोर्भेदावश्यंभावात् । अशनायाद्यूर्मियुक्तस्य जीवस्य ब्रह्मणा स्वरूपैक्यासम्भवाच्चेति शङ्काद्वयं प्रसक्तम् । तत्रोपक्रमे प्राप्तिर्नगरादेरप्राप्तस्येव न ब्रह्मणोऽप्राप्तस्यैव विवक्षिता । अपि तु कण्ठचामीकरन्यायेन प्राप्तस्यैवाप्राप्तत्वभ्रमापोहेनेति द्योतयितुं 'परमे व्योमन्नि'ति जीवाधारतया गुहा-

यामेव ब्रह्मसन्निधानमुक्तम्।अशनायादयश्चोर्मयो न जीवस्य स्वाभाविकाः । अपि त्वन्नमयादिविज्ञानमयान्तकोशोपाधिका इति दर्शयितुं विज्ञानमयान्तान् कोशान्निरूप्य तच्छिरस्येव विज्ञानं यज्ञं तनुतइति कर्तृत्वं निक्षिप्तम् । ततश्चायमर्थो भवति । अन्नमयादिकोशविशिष्टं चैतन्यं जीव इत्युच्यते योऽहमिति प्रतीयते । तत्र च विशेष्यस्वरूपभूतं चैतन्यं ब्रह्मैवेति विशुद्धचैतन्यांशमादाय स्वरूपैक्ये न काचिदनुपपत्तिः । तत्रेयं शङ्कोन्मिषति । एवं तर्हि विशिष्टजीवस्वरूपान्तर्गतमेव ब्रह्म । ततश्च कथं जीवस्स्वान्तर्गते ब्रह्मणि परमव्योमशब्दिते विद्यत इति वक्तुं शक्यते । यावता आसनादीनामाधाराणां स्वानन्तर्गतत्वदर्शनात् । तन्निवृत्तिश्चानन्दमयस्य जीवस्य पक्षित्वकल्पनया ब्रह्मणश्च पुच्छत्वकल्पनया निर्वर्त्यते । पक्षिणो हि शिरःपक्षाद्यवयवावच्छिन्नस्य पुच्छं स्वान्तर्गतमेवाधारः । 'तस्माद्वयांसि पुच्छेनैव प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति । प्रतिष्ठा हि पुच्छमि'ति श्रुतेः । इदं च ब्रह्म पुच्छं प्रतिष्ठेत्यत्र पुच्छशब्देनाधारलक्षणायां प्रयोजनम् । पक्षिणः स्वान्तर्गतपुच्छ इव जीवस्य स्वान्तर्गते ब्रह्मणि स्थितिरित्यर्थद्योतनात् । एतादृशशङ्कानिवारणार्थं आनन्दमयस्य पक्षित्वनिरूपणप्रसक्तौ तद्दृढीकरणाय पूर्वेषां कोशानां पक्षित्वं निरूप्य तदाश्रितं प्रसङ्गात् किञ्चिदुपासनमपि दर्शितम् । ततश्च पूर्वेषु पर्यायेषु पुच्छपदस्यावयवविशेषपरत्वेपीहाधारतैव पुच्छपदस्याश्रयणीया । दृश्येते चार्थभेदेऽपि शब्दसाम्येन प्रायपाठनिर्वाहः प्राचुर्येण । तद्यथा 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्रेन्द्रियादीनामव्यक्तपर्यन्तानां परत्वं पूर्वपूर्वमपेक्ष्यानुमानिकाधिकरणे वक्ष्यमाणया रीत्या अन्यदेव अव्यक्तात् पुरुषः पर इत्यत्र तु पुरुषस्याव्यक्तात् परत्वं 'सा काष्ठा सा परा गति'रिति वाक्यशेषानुसारेण परमपुरुषार्थरूपत्वम् । एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्येति वाक्यशेषानुसारेण सर्वं प्रत्यात्मभूतत्वम्।अग्र्यबुद्धिग्राह्यत्वरूपं सूक्ष्मत्वम् । 'अव्यक्तात्तु परः पुरुषो व्यापको लिङ्ग एवचे'ति वाक्यपर्यालोचनया व्यापकत्वरूपमेतत्सर्वमव्यक्तात् पुरुषः पर इत्यत्रोत्कर्षपरेण परशब्देन विवक्षितम् । ततश्च तस्य सन्दर्भस्य सोपानारोहणन्यायेन पूर्वस्मात् पूर्वस्मादुत्तरोत्तरस्य परत्वबोधनपूर्वकं सर्वतः ब्रह्मेति परं ब्रह्मेति बोधयितुं प्रवृत्तस्यार्थभेदे सत्यपि परशब्दसाम्यमात्रेण प्रायपाठो निर्वहणीयः । एवं गार्गिब्राह्मणे ओतप्रोतप्रक्रियायां एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति ब्रह्मणि सर्वपदार्थाश्रयस्याव्याकृताकाशस्यान्यदेव ब्रह्माधीनसत्तास्फूर्तिमत्त्वरूपमोतप्रोतत्वमबादिब्रह्मलोकान्तानामुत्तरोत्तरमन्यदेवोतप्रोतत्वम् । ततश्चार्थभेदे सत्यपि ओतप्रोतशब्दैक्यमात्रेण प्रायपाठो निर्वहणीयः । तद्वत् प-

कृतेऽपि भविष्यति । **तद्धेतुव्यपदेशाच्च । सर्वस्य विकारजातस्येति** । अयं भावः । अन्नमयादिपर्यायेषु पुच्छशब्देनावयवलक्षणादिहापि ब्रह्मणः पुच्छशब्देनावयवत्वं कल्पनीयं साम्यसिध्यर्थमिति यो वदति, तस्य वैषम्यान्तरं दुरुत्तरं प्राप्नोति । पूर्वेषु पर्यायेषु हि इदं पुच्छं प्रतिष्ठेति वाक्यैस्तत्तत्कोशैकदेश एव पुच्छत्वं निबद्धम् । न च मनोमयपर्याये 'तस्य यजुरेव शिर' इत्यादिनानवयवेष्वेव शिर आदिपुच्छान्तदृष्टयस्सम्पादिताः । प्राणमयकोशे चाकाश आत्मा । पृथिवीपुच्छं प्रतिष्ठेत्यनवयव एवावयवात्मपुच्छत्वे सम्पादिते इति वाच्यम् । तत्रापि यजुरादिवृत्तिलक्षणोपपत्तेः । ब्रह्मणश्च नानन्दमयैकदेशत्वम् । तं प्रत्यपि कारणत्वाम्नानात् । ततश्च ब्रह्मपुच्छं प्रतिष्ठेत्यत्रानेकदेशेऽपि ब्रह्मण्यानन्दमयपुच्छत्वाभ्युपगमे पूर्वपर्यायवैषम्यं प्राप्तमेव । तदाधारतालक्षणाप्रयुक्तं वैषम्यं कुतो न सह्यते । यदि मनोमयप्राणमयपर्याययोर्यजुरादिशब्दा यथा श्रुता एव । तथासति क्वचिदनेकदेश एव शिरआदिदृष्टिः, क्वचिदेकदेश इति वैषम्यवत् क्वचित् पुच्छशब्दः अवयवविशेषलक्षकः । क्वचिदाधारतालक्षक इत्यपि वैषम्यमस्तु । एतद्द्योतनार्थः सूत्रे च शब्दः । ततश्चोपसंहारिकैः प्राधान्यलिङ्गैः एकं पुच्छपदमप्राधान्यद्योतकं तदानुगुण्येनान्यथाव्याख्येयमित्युक्तम् । इदानीमुपक्रमानुसारेणाप्यन्यथा व्याख्येयमित्याह—सूत्रकारः । **मान्त्रवर्णिकमेव च गीयते** । मन्त्रवर्णे हि ब्रह्म स्वप्रधानमवगम्यते । तदेव च ब्रह्मपुच्छं प्रतिष्ठेत्यत्र ब्रह्मपदेन प्रत्यभिज्ञायते । अतश्चरमश्रुतं पुच्छपदं ब्रह्मपदानुसारेणाधारलक्षकं भविष्यति । नन्वानन्दमयं प्रति ब्रह्मणः पुच्छत्वेनावयवत्वाविवक्षायामानन्दमयोपासनं निरङ्गं स्यात् । पूर्वपर्यायेषूपासनाङ्गतया गौणलांगूलत्वविवक्षादर्शनादित्यत आह—**नेतरोऽनुपपत्तेः** । आनन्दमय इह पर्याये उपास्यो न भवति । उपक्रमोपसंहारावधृतज्ञेयब्रह्मतात्पर्यके प्रकरणे उपासनाविवक्षानुपपत्तेरिति । ननु यथा ब्रह्मप्रकरणेऽप्यन्नमयादिकोशेष्ववान्तरोपासनानि विवक्षितानि, तद्वत् प्रकृतेऽपि किं न स्यादित्यत आह — **भेदव्यपदेशाच्च** । भेदो वैलक्षण्यम् । पूर्वेषु पर्यायेषु फलनिर्देशः । इह तु नास्तीति वैलक्षण्यम् । ततश्च फलनिर्देशान्यथानुपपत्त्या तत्रोपासनाविवक्षायामपि आनन्दमयस्य फलनिर्देशं विनैव व्यपदेशान्नेहोपासनाविवक्षा । **कामाच्च नानुमानापेक्षा** । पूर्ववत् सोऽकामयतेति कारणप्रतिपादकवाक्यस्य प्रधानपरत्वनिराकरणार्थत्वेन व्याख्येयम् । ननु, आनन्दमयपर्याये फलनिर्देशो नास्तीत्यसङ्गतम् । सर्वकामावाप्तिरूपमेवोपक्रान्तं फलं तत्र भविष्यति । न च तत् ब्रह्मविद्याफलम् । नानन्दमयविज्ञानफलमि-

ति वाच्यम् । आनन्दमयपुच्छांशमादायानन्दमयोपासनाया अपि ब्रह्मविद्यात्वसम्भवात् । न चोपक्रमगतं मोक्षाख्यं फलं नानन्दमयोपासनातः सम्भवतीति वाच्यम् । मनोमयविज्ञानमयपर्याययोरपि यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचने'ति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत'इति च मोक्षफलस्याम्नानात् । तत्र चेच्चित्तशुद्ध्यादिद्वारा तत्फलकता, तर्हि प्रकृतेऽपि तथास्तु । तत्राह—**अस्मिन्नस्य च तद्योगं शास्ति** । उपक्रान्तं हि सर्वकामावाप्तिफलं ब्रह्मभावापत्तिरूपम् । तन्निर्विशेषं स्वतन्त्रं यत् ब्रह्म तद्विज्ञानादेव । नानन्दमयशेषभूतब्रह्मविज्ञानात् । उपक्रमोपसंहारैकरूप्येण ब्रह्मविद्यायाःस्वातन्त्र्यावगमात् । उपक्रमे हि 'ब्रह्मविदाप्नोति परमि'ति स्वातन्त्र्यमवगतम् । उपसंहारेऽपि 'यतो वाचो निवर्तन्त' इति मन्त्रे स्वातन्त्र्यमवगम्यते । कथमेतस्य ब्रह्मप्रधानस्य पूर्वोत्तरसन्दर्भस्यानन्दमयपुच्छविषयत्वं वक्तुं शक्यम् । न च मोक्षाख्यं फलमानन्दमयोपासनातः सम्भवति । न च मनोमयविज्ञानमयकोशप्रतिबन्दी । मनोमयपर्याये हि तस्य श्लोकस्याम्नानात् श्लोके च 'आनन्दं ब्रह्मणो विद्वान् । न बिभेती'ति च दर्शनात् मनोमयोपासनं ब्रह्मविद्यासाधकमिति स्वीक्रियते । एवं विज्ञानमयकोशेऽपि 'शरीरे पाप्मनो । हित्वा सर्वान् कामान् समश्नुत' इति वचनात् ब्रह्मविद्याप्रतिबन्धकीभूतकल्मषनिवृत्तिस्तत्फलमिति स्वीक्रियते । नैवमानन्दमये स्पष्टं फलमाम्नातम् । अतो नानन्दमयपर्याय उपासनाविवक्षा । सूत्रयोजना पूर्ववदेव । परं तु तत्रानन्दमय इति स्थाने ब्रह्मणीति द्रष्टव्यम् । यद्यपि च प्रधाननिराकरणोपयोगिपूर्वसूत्रमेतदनन्तरं पठनीयम्, तथाप्येतत्सूत्रोक्तं मोक्षाख्यं फलं प्रधाननिराकरणेऽपि उपयुज्यत इत्येतस्मात्पूर्वं कृतम् । एतदधिकरणपूर्वपक्षे उपक्रमोपसंहाराम्नाततत्तद्गुणविशिष्टब्रह्मपुच्छकानन्दमयोपासना, तत एव च मोक्षाख्यं फलमिति सिध्यति । सिद्धान्ते तु निर्विशेषब्रह्मपरमेव कृत्स्नं प्रकरणम् । तद्विज्ञानादेव मोक्ष इति सिध्यति ॥ १९॥

॥ इत्यानन्दमयाधिकरणम् ॥६॥

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

पृथिव्यन्तरिक्षद्युनक्षत्रादित्यशुक्लभारूपामृचमग्निवाय्वादित्यचन्द्रम आदित्यगतनीलभारूपं साम च प्रस्तुत्याम्नातं 'अथ य एषोऽन्तरादित्ये हिरण्मय' इत्यादि, 'य एवं वेदे'त्यन्तम् । तदनन्तरं च 'तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथः तस्मात् त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाञ्चेत्यधिदैवत' मिति समाम्नातम् । 'अथाध्यात्म'मिति पुनः प्रस्तुत्य वाक्चक्षु-

श्श्रोत्राक्षिगतशुक्लभारूपामृचं प्राणचक्षुर्गतच्छायापुरुषमनश्चक्षुर्गतनीलभारूपं साम च निरूप्याथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्चेति तद्य इमे वीणायां गायन्त्येतन्त्वेव ते गायन्ति तस्मात्ते धनसनयोऽथ य एवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एषः ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्चे'ति समाम्नायते । आप्रणखात् प्रणखो नखाग्रं, तदभिव्याप्य 'तस्य यथा कप्यासं पुण्डरीक'मिति कपेर्मर्कटस्य आस्ते उपविशत्यनेनेति आसः पश्चाद्भागः । तत्सदृशं रक्तवर्णमिति पर्य्यवसितोर्थः । पुण्यरीकं पद्मं यथा एवं तस्य मण्डलान्तर्वर्तमानस्य पुरुषस्याक्षिणी । कं जलं पिबतीति कपिः सूर्यः तेनासितं विकसितं कप्यासम् । कं पिबतीति कपिः पद्मनालः, तत्रास्त इति कप्यासम् । कं पिबतीति कपाः तस्मिन् कपि । सप्तम्या अलुक् समासे कप्यासम् । के अप्यास्त इति कप्यासं 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति लुप्ताकारापिपूर्वक आसिः । एवं पुण्डरीकविशेषणे कप्यासशब्दे वाक्यकारेण बह्वयो व्युत्पत्तयो दर्शिताः । छान्दोग्यविवरणे भगवत्पादैः कपेर्मर्कटस्यास इत्येव व्युत्पत्तिः स्वीकृता । तथा व्युत्पादितेन च कप्यासशब्देन सादृश्यपरेण रक्तत्वं पुण्डरीकविशेषणं लभ्यत इति स्वीकृतम् । तत्र कपेर्मर्कटस्येति व्युत्पादने को गुणोऽभिमतः । अन्यासु च व्युत्पत्तिषु को दोषः । यतस्ताः परित्यक्ताः । प्रत्युत कपिशब्दस्य मर्कटपरत्व एवादित्यान्तर्वर्तिपुरुषाक्षिदृष्टान्तभूते पुण्डरीके मर्कटगुदभाग उपमानत्वेन स्वीकृत इति हीनोपमा स्यात् । 'पुण्डरीकं सिताम्भोज'मिति कोशविरुद्धञ्च पुण्डरीकविशेषणं रक्तत्वं भवेत् इति चेदुच्यते । कपिशब्दस्य रूढ्यर्थग्रहणसम्भवे तत्रापि योगाश्रयणं न न्याय्यम् । आसशब्दश्च सर्वेष्वपि पक्षेषु यौगिक एव । यद्यपि कपिशब्दरूढ्यर्थपक्षे कप्यासशब्दस्तत्सदृशपरः, तथापि रूढिपूर्वकलक्षणापेक्षया योगार्थग्रहणं न न्याय्यम् । योगमपेक्ष्य रूढेः शीघ्रोपस्थितिकत्वेन तन्मूलाया लक्षणाया अपि शीघ्रोपस्थितिकत्वात् । अपि चादित्यपरत्वे कपिशब्दस्य योगोऽप्यतिक्लिष्टः । आदित्यकिरणसम्पर्कात् जलं शुष्यती'त्येतावन्मात्रमवलम्ब्यादित्यकिरणानां जलग्रहीतृत्वमुपचरणीयम् । जलग्राहकस्याङ्गारागस्येवादित्यकिरणानां जलादर्शनप्रयोजकत्वसामान्यात् । तस्मिंश्चौपचारिके ग्रहणे अयःपीताम्बुन्यायेन पानत्वमारोप्य किरणकर्तृके आदित्यकर्तृकता शुण्डा-

कर्तृके जलग्रहणे गजकर्तृकतेवाद्यसनीया। एवं कपिशब्देनादित्यं क्लिष्टया गत्या व्युत्पाद्य तद्विकसितत्वं पद्मानां क्लेशेनैव वक्तव्यम्। न हि रात्रौ मुकुलीभूतानि पद्मानि पुनः प्रातस्सूर्यो विकासयति। किन्तु किञ्चित्कालं मुकुलितानि विकासकावस्थां प्राप्तानि। न पुनर्मुकुलितानि भवन्ति फलितानीव पुनः पुष्पताम्। अत एव काननमात्रे सिम्हशार्दूलशरभादि, नदीमात्रे हंसचक्रवाकादि, नगरमात्रे अत्युन्नतगोपुरप्रासादादि, कीर्तौ धावल्यं, प्रतापे लौहित्यं, रात्रौ चन्द्रोदयमात्रे कुमुदविकासः, दिवा सूर्यकृतः पद्मविकास इति कविसमय इत्यालङ्कारिकाः। रात्रौ मुकुलता दिवा विकासः पद्मानामिति नियमोपगमेऽपि कालकृतोऽसौ, न सूर्यकृतः। अत एव रामायणे—कविप्रौढोक्तिसिद्धं दिवा गाढान्धकारं प्रस्तुत्य 'निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥' इति कालकृतावेव पद्मसङ्कोचविकासौ प्रतिपादिताविति। तथा विकसितत्वमपि आसशब्दतः क्लेशेन लम्भनीयम्। एवमाद्ययोगोऽतिक्लिष्टः। द्वितीयतृतीययोस्तु नालस्य जलग्रहणकर्तृतास्त्येव। ग्रहणे पानत्वमात्रमुपचरणीयम्। आसशब्दे च न क्लेश इति नातिक्लिष्टावेतौ। के जले अप्यास्त इति तुरीययोगस्त्वक्लिष्ट एव। सर्वेष्वेतेषु योगेषु कशब्देनाप्रसिद्धमेव जलं ग्राह्यमिति निहतार्थत्वं तावदापतति। आद्येषु त्रिषु कपिशब्देन सूर्यो वा नालो वा ग्राह्य इति पुनरपि निहतार्थता। श्लेषयमकादिप्रयोजनं विना अप्रसिद्धार्थग्रहणं निहतार्थत्वम्। तदेव चावाचकत्वमित्यपि व्यवह्रियते। अपि चाद्ययोगे भगवदाश्रयभूतादित्ये कपिशब्दः प्रयुक्त इत्यश्लीलत्वम्। द्वितीयतृतीययोस्तु योगयोर्नेत्रदृष्टान्तभूतपुण्डरीकाश्रये कपिशब्दः प्रयुक्त इत्यश्लीलता। अविवक्षितामङ्गलव्रीलादाद्यर्थप्रत्यायकत्वं पदस्याश्लीलत्वम्। यथा ब्रह्मोपासनं कुर्विति वक्तव्ये ब्रह्महत्यां कुर्विति प्रयोगे निहतार्थत्वमश्लीलत्वं च। यथा वा 'दाशगोघ्नौ सम्प्रदाने' इति गोघ्नशब्दस्य सम्प्रदाने अनुशिष्टत्वेऽपि मधुपर्काद्यर्हेषु आचार्यादिषु प्रयोगे। काव्यपद्धतावेवैषां दोषत्वं, न वैदिकपद्धतावित्यभ्युपगमे तु रूढिमाश्रित्यैव कपिशब्दे कप्यासपदं व्याख्यातुमुचितम्। अपि च नास्मिन्पक्षे हीनोपमा। चक्षुरुपमानभूतपुण्डरीकोपमानत्वमात्रेण चक्षुषि हीनोपमानत्वाप्रसक्तेः। कवयो हि वर्ण्यमान एव हीनोपमानं प्रयुञ्जते। यथा 'महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषस्सविष्टरे। श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम्॥' अत्र इन्दूदयाश्रयाचलाभिमुखः सायङ्कालः वर्ण्यमानस्य श्रीकृष्णस्योपमानत्वेन निबद्धः। ननु, सायङ्कालस्य तमस्वित्वेऽपि न हीनत्वम्। अनादि

कविभिस्स्वीकृतत्वादिति चेत्तर्हि अनादिवेदस्वीकृतत्वान्मर्कटपश्चाद्भागस्यापि न हीनत्वम् । अपि च कप्यासशब्देन रक्तिम्नः पुण्डरीकविशेषणत्वसिद्धौ तादृशपुण्डरीकोपमितं चक्षुररुणमिति सिध्यति । तच्चादित्यान्तर्वर्तिपुरुषस्य, 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात् सगावृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनात्वि'ति मन्त्रानुमतम् । न च पुण्डरीकशब्दस्य न पद्ममात्रपरत्वम् । अपि तु सिताम्भोजपरत्वम् । 'पुण्डरीकं सिताम्भोजमि'ति कोशानुसारादित्युक्तं साधु । अनेकवृद्धव्यवहारविरुद्धस्य कोशवचनस्याप्रमाणत्वात् । शाबरे हि भाष्ये 'सौद्रं चरुं निर्वपेच्छ्रियै श्रीकाम' इति वाक्यविहितायामिष्टौ पौण्डरीकाणि बर्हींषि भवन्तीति बर्हिस्स्थाने पुण्डरीकाणां विधानेन तत्र प्रकृतितः प्राप्ते 'दर्भैस्तृणीत हरितै'रिति मन्त्रे दर्भपदस्थाने पुण्डरीकपदवत् रक्तपदोहः कर्तव्य इत्युक्तं नवमे । पार्थसारथिप्रभृतीनामपि तथैव सम्मतम् । वाक्यकारेणापि कप्यासपदं रक्तिमविशेषणपरतयाऽपि व्याख्यातम् । 'आकाशवारीसितपुण्डरीकमि'ति 'चिरलुप्ततपोधनाग्निमत्ता पुनरुत्तारणपादपुण्डरीक' इति च महाकविप्रयोगे पद्मत्वसामान्यमादायैव पुण्डरीकशब्दः प्रयुक्तः । अन्यथा सितेति विशेषणवैयर्थ्यात् महापुरुषपादोपमानत्वानुपपत्तेश्च । पाणिपादतलनखनेत्रान्तताल्जिह्वाधराणां सप्तानां रक्तिमा हि महापुरुषलक्षणत्वेन सामुद्रिकाशास्त्रे परिगणितः । अतः उपजीव्यप्रयोगविरोधे कोशवचनमप्रमाणमेवेति युक्तम् । अनेनाभिप्रायेण छान्दोग्यविवरणे भगवत्पादैर्वाक्यकारेण बहुष्वर्थेषु प्रदर्शितेष्वपि कप्यासशब्दे रूढिपूर्वकलक्षणया 'य उदगादि'ति मन्त्रानुसारी कपेर्मर्कटस्यास इत्येवार्थः स्वीकृतः । न त्वन्ये । बहूनां दोषाणां तत्रोक्तत्वात् । तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः तस्मात्त्वेवोद्गातैतस्य हि गातेत्यस्यायमर्थः । गेष्णशब्दो हि सामगानामौक्थिक्याख्ये ग्रन्थे सामावच्छेदभूतप्रस्तावादिपर्ववाचकतया प्रसिद्ध इह ऋक्सामयोः प्रयुक्तः । गुणिनिष्ठगुणाभिधानात्मकस्तोत्राख्यगानसाधनत्वयोगात् उपपादनीयः । तत्तत्स्तोत्रान्तर्गततया समाम्नातानामृचां साक्षात्स्तुतिसाधनत्ववत् साम्ना स्तुवीतेति वचनानुसारेण साम्नामपि ऋगक्षराभिव्यक्तिद्वारा स्तोत्राख्यगीतिसाधनत्वं प्रस्तावादिसामभागानामपि सामान्तर्गततयेति स्तोत्रसाधनत्वगुणस्त्रयाणामपि साधारणः । ततश्च प्रकृतस्य पुरुषस्योन्नामकस्य तत्तत्क्रतुगतेन्द्रादिस्तोत्रप्रकाश्यत्वं गुणस्सिध्यति । तत एव चोद्गीथशब्दोऽप्युत्कर्मकगानसाधनत्वं प्रवृत्तिनिमित्तीकृत्य सामभक्तिविशेषे प्रयुज्यमान उपपद्यते । उद्गातृशब्दश्चोत्कर्मकगानकर्तृत्वं प्रवृत्तिनिमित्तीकृत्य ऋत्विग्विशेषे प्रयुज्यमान उपपद्यत इति प्रकृतोन्नामकपुरुषे

ऋक्सामगेष्णत्वगुणविधौ हेत्वर्थवादः तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गातेति । सोऽमुनैवेत्यत्रामुनेति तृतीयेत्थंभावलक्षणे, तादात्म्येन च लक्षणत्वं विवक्षितमिति वक्तुं स एष इति पदद्वयं श्रुतौ । तथा चोपास्यदेवताभावं प्राप्त इति फलितम् । अथवा स एष इत्यस्याथानेनैवेत्यत्रान्वयो द्रष्टव्यः । धनसनयः धनलाभवन्तः । तत्र रूपवत्त्वादीनामनैश्वरधर्माणां सर्वपाप्मोदितत्वादीनां ऐश्वरधर्माणां बलाबलानवधारणात् संशयः । पूर्वत्र बहुभिः प्राधान्यलिङ्गैरेकस्याप्राधान्यद्योतकस्य पुच्छशब्दस्येव बहुभिरनैश्वरधर्मैः सर्वपाप्मोदितत्वं यथाकथञ्चिद्व्याख्येयमित्यभिप्रेत्य पूर्वपक्षयति—**संसारीतीति** । ननु, स्वमहिमप्रतिष्ठस्य महिमैवाधार इति कथं 'स्वे महिम्नी'तिश्रुत्या निराधारत्वं सिध्यतीत्याशङ्क्य उदाहरिष्यमाणश्रुतिगतं स्वमहिमपदं न महिम्न आधारत्वप्रतिपादकम् । किं तु महिमातिरिक्ताधारराहित्यपरम् । स्वाश्रितस्य महिम्नस्स्वाधारत्वासम्भवादित्यभिप्रेत्याह—**न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्येति** । श्रुत्यन्तरमभिप्रेत्य सर्वव्यापिन इत्युक्तं संगृहीतं श्रुतिद्वयमुदाहरति— **स भगव इत्यादिना** । सर्वव्यापित्वं सर्वगतत्वं, तदपि सर्वाधिष्ठानतया सर्ववस्तुसंसृष्टत्वं स्वकार्याण्याकाशोऽपि व्याप्नोतीत्याकाशवदिति दृष्टान्तः । सर्वाधिष्ठानस्य परमात्मनो न कोऽप्याधारस्सम्भवतीति फलितोऽर्थः । सूत्रे अन्तरितिशब्दः आदित्येऽक्षिण चान्तर्विद्यमानपुरुषोपस्थापक इत्यभिप्रेत्याधिकारिकब्रह्मपदसम्बन्धेन प्रतिज्ञां दर्शयति—**य एषोऽन्तरादित्य इत्यादिना** । नन्वत्र सिद्धान्ते सर्वपाप्मोदितत्वं सैवेति श्रुत्या सः अक्षिपुरुषः विधेयाभिप्रायेण स्त्रीलिङ्गं ब्रह्म वेदाः गोबलीवर्दन्यायेन पौनरुक्त्यपरिहारो द्रष्टव्य इत्येवं व्याख्येयया सर्ववेदात्मकत्वं ऋक्सामगीयमानेन्द्राद्यात्मतया ऋक्सामगीयमानत्वपर्यवसितऋक्सामगेष्णत्वलभ्यमिन्द्राद्यात्मत्वं वैणिकगीयमानराजाद्यात्मतया तद्य इमे वीणायां गायन्तीति श्रुतिसिद्धं वीणागीतिविषयत्वं निरंकुशैश्वर्यं चेत्येतानि पारमेश्वरलिङ्गानि उपन्यस्य रूपवत्त्वादीनि उपासनाभिप्रायेण यथाकथञ्चिद्योज्यानीत्युक्तम् । तत्र सर्वपाप्मोदितत्वादीनां प्राबल्ये किं नियामकम् । सर्वपाप्मोदितत्वमादित्यमण्डलाभिमानिजीवेऽपि हि वक्तुं शक्यमेव । देवानां पुण्यसम्बन्धे सत्यपि 'न ह वै देवान् पापं गच्छती'ति श्रुतिपर्यालोचनया पापासम्बन्धस्य वक्तुं शक्यत्वात् । पाप्मशब्दो यद्यपि मुमुक्षुं प्रति पुण्यफलस्यापि अनिष्टत्वेनानिष्टसाधनतागुणयोगात् पुण्यसाधारणः क्वचित् प्रयुक्तः । दहरविद्यायां न सुकृतं न दुष्कृतमिति वाक्येन सुकृतदुष्कृताद्युत्तीर्णत्वं प्रतिपाद्य तस्यैवार्थस्य सङ्ग्रहेण कथनावसरे सर्वे पाप्मानोऽतो निवर्तन्त इत्युक्तत्वात्, तथापि प्रकृते लाक्षणिकार्थग्र-

हणे मानाभावात् पाप्मशब्दो यथाश्रुत एव । ननु, तत्तदर्थवादपुराणेतिहासपर्यालोचनया देवानामपि पापं तत्फलं दुःखं चास्त्येवेति प्रतीयते । अतो 'न हवा' इति श्रुतिः पापफलमल्पं देवानामित्यभिप्राया व्याख्येयेति चेत्तर्हि सर्वपाप्मोदितत्वश्रुतिरप्येवमेव व्याख्येया । न च प्रकृते आदित्यमण्डलवर्तिनः पुरुषस्य जीवत्वमुपेत्य सर्वपाप्मोदितत्वश्रुतेः किमर्थं यथाकथञ्चिद्व्याख्यानमाश्रीयते । अपि च तात्पर्यलिङ्गान्तर्गतं फलवचनं 'उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति सर्वपाप्मोदयगुणे श्रूयते । ततश्च सर्वपापोदयस्य निरंकुशस्य फलतया प्रतिपादनात् तत्क्रतुन्यायेन गुणभूतं सर्वपाप्मोदितत्वमपि निरंकुशं भविष्यति । ततश्च तात्पर्यलिङ्गोपबृंहितस्य न यथाकथञ्चित् नयनमुचितम् । अत आदित्यान्तर्वर्तिपुरुषोऽक्ष्यन्तर्गतपुरुषश्च परमेश्वर एवेति वाच्यम् । आदित्यमण्डलान्तर्वर्त्तीश्वर इति पक्षेऽपि हिरण्यश्मश्रुहिरण्यकेशत्वादिविशिष्टशरीरसम्बन्धविरोधात् 'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'तिवचनपर्यालोचनया शरीरमात्रस्य पुण्यपापप्रियाप्रियसम्बन्धापादकत्वावगमात् । न च तात्पर्योपेतसर्वपापोदितत्वश्रुतिपर्यालोचनया परमेश्वरत्वसिद्धौ तस्य शरीरित्वावगमे 'न ह वै सशरीरस्ये'त्यादिवचनं जीवविषयं भविष्यतीति वाच्यम् । तथासति हि जीवत्वे सति सशरीरत्वं प्रियाप्रियसम्बन्धप्रयोजकमित्यापतेत्, तदपेक्षया सशरीरत्वमेव लघु । ततश्च न हवा इत्यादिश्रुतिरपि लाघवरूपोपपत्तियुक्ता यथाश्रुतार्थैव वक्तव्या । तथा च रूपवत्त्वं कथमन्यथा नेतुं शक्यम् । एवं 'ये चामुष्मात् पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानां च ये चामुष्मादर्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानाञ्चे'ति समर्यादैश्वर्यप्रतिपादनमपि व्यवस्थितनिर्देशरूपोपपत्तियुक्तं सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्चाथानेनैव ये चैतस्मात् अर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्चे'ति तत्क्रतुन्यायेन व्यवस्थितफलनिर्देशयुक्तं तात्पर्योपेतं कथमिवेश्वरे व्याख्यातुं शक्यम् । ततश्च प्रबलानेकजीवलिङ्गानुसारेण सर्वपापोदय एव यथा कथञ्चिद्व्याख्येयः । अपि च 'उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'तिफलवचनानुसारेणैव सर्वपापोदयः संकुचितोऽवगम्यते । फलवाक्ये हि जीवगत एव सर्वपापोदयः प्रतिपाद्यते । न च जीवे निरंकुशः सर्वपापोदयस्सम्भवति । अपि चादित्यमण्डलाभिमानिन्या देवताया जीवन्मुक्तायाः प्रारब्धमात्रावशेषायाः न पापं विद्यते। ज्ञानाग्निदग्धत्वात् सर्वपाप्मनाम् । प्रारब्धं त्वधिकारोपयोगिपुण्यरूपमेव । तथा च निरंकुशोऽपि

सर्वपापोदयः तत्र वर्णयितुं शक्यत इति न सर्वपापोदयलिङ्गानुसारेण परमेश्वर इति निर्णयः सम्भवति । नापि सर्ववेदात्मत्वमृक्सामगीयमानेन्द्राद्यात्मत्वं वीणागीयमानाधानिकपुरुषात्मत्वं च ब्रह्मलिङ्गमिति शक्यं वदितुं सर्वोपादानतया सर्वात्मके हि ब्रह्मणि विशिष्य ऋगाद्यात्मना सर्ववेदात्मत्वमुपासनार्थमुक्तमिति वक्तव्यम् । तच्चादित्यमण्डलस्येव तदभिमानिपुरुषस्यापि वक्तुं शक्यम् । मण्डलस्य हि सैषा त्रय्येव विद्या तपतीत्यृगाद्यात्मकत्वं तैत्तिरीयके समाम्नातं—'आदित्यो वा एष एतन्मण्डलं तपती'त्युपक्रम्य हि मण्डलतदर्चिस्तदन्तर्वर्तिपुरुषाणामृगाद्यात्मत्वं क्रमेण निरूप्य सैषा त्रय्येव विद्या तपतीत्युपसंहृतम् । इन्द्राद्यात्मत्वं तु परमेश्वरपक्षेऽपि न पारमेश्वरेण रूपेण सम्भवति । 'अधिकं तु भेदनिर्देशादि'तिन्यायेन परमेश्वरत्वावच्छेदेन व्यावहारिकभेदस्य स्वीकृतत्वात् । शुद्धचैतन्यात्मना अभेदस्तु देवतापक्षेऽपि वक्तुं शक्य एव । निरंकुशैश्वर्यं तु न श्रुतमेवेति कथमत्रेश्वरत्वनिर्णय इति चेदत्रोच्यते—जीवन्मुक्तेऽप्यादित्येन सर्वपापोदयो निरंकुशः । कर्मजन्यशरीराणां न ह वा इति श्रुतिपर्यालोचनया अप्रियसम्बन्धसम्भवात् । न च कर्मजन्येत्यपि विशेषणं 'न ह वा' इति श्रुतौ न विवक्षणीयम् । लाघवरूपोपपत्त्या शरीरमात्रस्यैव तत्प्रयोजकत्वावगमादिति उक्तमिति वाच्यम् । फलवचनरूपतात्पर्यलिङ्गोपेतया निरंकुशसर्वपापोदयप्रतिपादिकया सर्वेभ्यः पाप्मभ्यः उदित इति श्रुत्या सर्वपापविरहस्य 'य आत्मापहतपाप्मे'ति श्रुतावीश्वरधर्मत्वेन प्रसिद्धस्येहावगमादीश्वरत्वे निर्णीते हिरण्यश्मश्रुत्वादिविशिष्टशरीरश्रवणेन कर्मजन्येति शरीरविशेषणस्य तस्यां श्रुतौ अवश्यं वक्तव्यत्वात् लाघवरूपस्य तात्पर्यलिङ्गस्य लौकिकोपपत्तितया वैदिकेन फलवचनेन तात्पर्यलिङ्गेन बाधसम्भवात् । एवं रमणीयचरणा इति श्रुतिरपि जीवविषयैव व्याख्येया । अपि च श्रुतिपुराणादिषु परमेश्वरप्रकरण एव विग्रहाः समाम्नाताः । न च तेषां देवताधिकरणन्यायेन व्यावहारिकाणां सम्भवेऽपि वाय्वेनुतादात्म्यवदत्यन्तासत्त्वं न ह वा इति श्रुतिमेकां यथाश्रुतामवलम्ब्य वक्तुं शक्यम् । अतो न सशरीरत्वमात्रं परमेश्वरत्वविरोधि । अपि तु स्वीयधर्माधर्मनिमित्तकमेव । न च फलवचनानुसारेणैव सर्वपापोदयः संकुचितः स्वीकर्तव्य इत्युक्तम् । अतः कथं निरंकुशस्सर्वपापोदय उपास्यगुणत्वेन लभ्यत इति वाच्यम् । यतः फलकोटौ जीवगतं संकुचितमपि पापोदयं सर्वपापोदयत्वेन श्रुतिरनुवध्नाति । ततोऽवगच्छाम उपास्यगुणभूते सर्वपापोदये श्रुतेस्तात्पर्यातिशय इति कथं तस्यापि संकुचितत्वं वक्तुं शक्यम् । अपि चैतदुपासनाफलभूतस्य पापो-

दयस्यापि निरंकुशत्वं क्रममुक्तिमादाय वक्तुं शक्यमिति तत्रापि सङ्कोचो नाश्रयणीयः । वृक्षापादानकं शकुन्तोद्गमनमिव पापापादानकं जीवोदयनं तु पूर्वपक्षिणोऽपि वक्तुमशक्यम् । वृक्षस्येव पापस्यामूर्तस्य विश्लेषावधित्वासम्भवात् । ततश्च यथा वृक्षोद्गतः पक्षी सर्वात्मना वृक्षासंस्पृष्टो भवति, तथा जीवोऽपीत्येव पूर्वपक्षिणा वक्तव्यम् । तत्तु वक्तुं न शक्यते । यत्किञ्चित्पापसम्बन्धस्य जीवे सम्भवात् । सिद्धान्तिना तु तच्छक्यं वक्तुम् । ऐश्वर्यं व्यवस्थया निर्दिष्टमपि सर्वाधिपत्य एव पर्यवस्यति । पूर्वपक्षिमते ह्यादित्यमण्डलाभिमानी जीव उपास्य इत्युपगमेऽपि तस्य चाक्षुषपुरुषाभेद एव । "आदित्यश्चक्षुर्भूत्वा प्राविशदि'ति श्रुतेः । ततश्च परागर्वाग्लोकदेवमनुष्यकामेश्वरत्वमेकस्यैव प्राप्तम् । विभज्य निर्देश उपासनार्थ इत्येव वक्तव्यम् । तत् सिद्धान्तेऽपि तुल्यम् । आदित्ये चक्षुषि चैकस्यान्तर्यामिणः 'य आदित्ये तिष्ठन् यश्चक्षुषि तिष्ठन् इत्यादिश्रुतिसिद्धत्वात् । परं तु 'भीषास्मात् वातः पवते । भीषोदेति सूर्यः । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इति वचनपर्यालोचनया सांकुशमन्यायत्तत्वात् आदित्यादिदेवानामैश्वर्यमनन्यायत्तत्वान्न निरंकुशं परमेश्वरस्य । न च प्रकृते सांकुशैश्वर्यग्रहणे प्रमाणमस्ति । लोककामेश्वरत्वमपि पारमेश्वरमेव पर्यवस्यति । सोऽमुनैवेत्यादिना फलनिर्देशोऽपि आर्थवादिकान्यवयवगतानि फलानि अवयविन्येवेति रात्रिसत्रनयेन सिद्धौ सर्वाधिपत्य एव पर्यवस्यतीति सोऽपि परमेश्वरग्रहण एव लिङ्गं, तत्क्रतुन्यायात् । अतो निरंकुशैश्वर्यं न श्रुतमेवेत्यसिद्धम् । ऋक्सामस्तूयमानेन्द्राद्यात्मत्वं वैणिकगायमानधनिकपुरुषात्मत्वमपि बिम्बभूतस्येश्वरस्यैव । उपादानोपादेयभावोपपत्तेः । जीवस्य वस्तुगत्या अनुपादेयत्वेऽपि विशिष्टरूपेण तदुपपत्तेः । न तु जीवस्य जीवान्तरं प्रत्युपादानोपादेयभाव उपपद्यते । ततश्च यद्यपि शुद्धचैतन्यात्मना स्वरूपैक्यं सर्वसाधारणम्, तथापि तादात्म्यरूपस्वरूपसम्बन्धो न जीवस्य जीवान्तरेण । अपित्वीश्वरस्यैवेति । ऋक्सामगेष्णत्वादिकमपि पारमेश्वररूपमेव । अपिचेह ऋक्सामगेष्णत्ववीणागायमानत्वोक्त्या विभूतिमत्पुरुषात्मत्वस्य विशिष्य प्रतिपादने श्रुतेस्तात्पर्यविशेषोऽवगम्यते । इन्द्रादिषु हि विभूतिमत्त्वोपयोगितया पारमेश्वरांशोऽनुप्रविष्टोऽस्ति । ततश्च विभूतिमतां स्तुत्यत्वे पारमेश्वरांश एव प्रयोजकः । इन्द्रादिस्तुतिश्च परमेश्वरस्तुतिरेव । तदंशप्रयुक्तत्वात् राजभटस्तुतिरिव राजस्तुतिः । अनेनाभिप्रायेण भाष्ये यद्यद्विभूतिमदितिवचनमुदाहृतम् । इदं च जीवपक्षे न सम्भवति । सर्वात्मके ब्रह्मणि ऋक्सामात्मत्वमपि सदेवोपासनार्थं नि-

दिष्टमिति वक्तुं शक्यम् । जीवे तदप्यसदेव । अत आदित्येऽक्ष्णि चोपास्यः परमेश्वर एवेति सिद्धम् ॥ २० ॥

॥ इत्यन्तरधिकरणम् ॥ ७ ॥

# आकाशस्तल्लिंगात् । २१ ।

शालावत्यदाल्भ्यजैवलयस्त्रयो होद्गीथे कुशला बभूवुः । ते होचुः उद्गीथे वै कुशलास्मो हन्तोद्गीथे कथां वदाम इत्युपक्रम्य दाल्भ्यं प्रति शालावत्यप्रश्नमवतार्य का साम्नो गतिः कारणं स्वर इत्युत्तरिते तादृश्येव प्राणान्नाप्स्वर्गपर्यन्ता प्रश्नोत्तरपरंपरा । ततश्च प्रवृत्ता दाल्भ्यनिरूपिता सामगतिविश्रान्तिभूमिः स्वर्गलोकरूपा शालावत्येन दूषिता अप्रतिष्ठितं वै किल ते दाल्भ्य सामेति । ततश्शालावत्यं प्रति शिष्यभावं उपगतस्य दाल्भ्यस्य प्रश्नः अमुष्य लोकस्य का गतिरिति अयं लोक इति होवाचेत्युत्तरम् । शालावत्येन सामगतिविश्रान्तिभूमित्वेन प्रतिष्ठात्वेन च निरूपिते पृथिवीलोके अन्तवद्वै किल शालावत्यसामेति जैवलिना दूषिते शिष्यभावमुपगतस्य शालावत्यस्य जैवलिं प्रति प्रश्नः अस्य लोकस्य कागतिरिति आकाश इति होवाचेति उत्तरं तदुदाहरति—**इदमामनन्तीति** । स एष परोवरीयानुद्गीथः स एषोऽनन्त इतिउपसंहारो भाष्य इतिशब्देन संगृहीतः । पूर्वं तात्पर्यलिङ्गोपेततयानन्यथासिद्धेन सर्वपाप्मोदितत्वादिना ब्रह्मलिङ्गेन रूपवत्त्वादीन्यब्रह्मलिङ्गानि अन्यथासिद्धानि ब्रह्मण्येव व्याख्यातानि । इह त्वाकाशश्रुतेर्लिङ्गानुसारेणान्यथानयनं न सम्भवति । लिङ्गापेक्षया श्रुतेर्बलीयस्त्वादिति प्रत्युदाहरणसङ्गत्या पूर्वपक्षमाह—**न च मुख्यसम्भव इति** । ननु अन्तवद्वै किल ते शालावत्य सामेति शालावत्यपक्षे अन्तवत्त्वदोषमुद्भाव्य जैवलिना आकाशः परिगृहीतः । अतस्सोनन्तरूप एव वक्तव्यः । तथैवचान्ते उपसंहृतं स एष परोवरीयानुद्गीथस्स एषोऽनन्त इति । अस्य लोकस्य का गतिरिति शालावत्यप्रश्नस्यापि सर्वलोककारणविषयत्वमेव वक्तव्यम् । पृथिवीकारणस्याब्रूपस्य प्रसिद्धत्वेन प्रश्नायोगात् । अत एवोत्तरेऽपि सर्वलोककारणमेव निरूप्यते । सर्वाणि हवा इमानि भूतानीति । न च भूताकाशपरिग्रहे सर्वमेतदुपपद्यते । तस्यान्तवत्त्वात् सर्वलोककारणत्वाभावाच्च । न चाकाशादेवेत्यवधारणमपि तत्र सम्भवति । आकाशस्य वाय्वादिजनने कालादृष्टादेरपेक्षितत्वात् भूयांसि च ब्रह्मलिङ्गानि उत्तरत्र श्रूयन्ते—सर्वभूतानि प्रति आकाशादेव समुत्पद्यन्त इति उत्पत्तिकारणत्वं, आकाशं प्रत्यस्तं यन्तीति लयकारणत्वं, परायणमिति स्थितिकारणत्वं ज्यायस्त्वम् । अतो भूयोऽनुग्रहन्यायेनैकस्य आकाशश्रुतेर्ब्रह्मलक्षकत्वे कानुपपत्ति-

रितिदिक्प्रदर्शनन्यायेन शङ्कते—**ननु भूताकाशपरिग्रह इति । नैष दोष इति ।** अयमाशयः । सर्वभूतोत्पत्त्यादिलिङ्गैर्वाक्यशेषपठितैर्नाकाशश्रुतेरन्यथानयनं सम्भवति । सा हि तेभ्यः प्रथमं पठिता अभ्यासरूपलिङ्गोपेता प्रश्नोत्तरपरंपराविश्रान्त्यवगमितप्रधानस्थाननिविष्टा च । सर्वकारणत्वादीनि च न तात्पर्यलिङ्गोपेतानि चरमपठितानि चाकाशपदार्थधर्मतया तत्र गुणभूतानि । न च भूयोभिरपि अप्रधानैः प्रधानस्यान्यथानयनमेकस्याप्युचितम् । 'त्यजेदेकं कुलस्यार्थे' इति लौकिको भूयोनुग्रहन्यायः । स तुल्यानामेव । न तु गुणप्रधानभावापन्नानाम् । आत्मार्थे पृथिवीं त्यजेदिति विशेषन्यायात् । अनन्तत्वन्त्वापेक्षिकमेव भविष्यति । यथा हि शालावत्येनाप्रतिष्ठितं वै किल ते दाल्भ्य सामेत्यप्रतिष्ठितत्वदोषेण दाल्भ्यपक्षं दूषितवताऽपि स्वयं पृथिवीलोक आपेक्षिकप्रतिष्ठाशाल्येव निरूपितः । न हि पृथिवीलोको निरंकुशप्रतिष्ठाशाली । तत्प्रतिष्ठाभूतानामन्येषामपि जलादीनां विद्यमानत्वात् । तद्वदनन्तत्वमपि आकाशगतं वाय्वाद्यपेक्षं भविष्यति । तदपेक्ष्य चिरस्थायित्वात् । अस्य लोकस्य का गतिरिति शालावत्यप्रश्नस्तु पृथिवीमात्रकारणविषयः । शिष्यभावमुपगतेन हि दाल्भ्येन पूर्वममुष्य लोकस्य का गतिरिति पृष्टे अयं लोक इति होवाच इतिशालावत्येनोत्तरिते पुनरप्यस्य लोकस्य का गतिरिति दाल्भ्यप्रश्नो दृश्यते । अत्रादःशब्दस्स्वर्गपरः । न स्वर्गं लोकं अतिनयेदित्यादिवाक्यशेषात्तत्कारणतयोपदिश्यमानोऽयं लोकः पृथिव्येवेतः प्रदानं देवा उपजीवन्ती'ति श्रुतेः श्रुतावदइदंशब्दयोस्समभिव्याहारे तयोस्स्वर्गपृथिवीपरत्वप्रसिद्धेश्च । ततश्च यथा पूर्वमयं लोकोऽस्य लोकस्येत्यत्रेदंशब्दः पृथिवीपरः, तथा अस्मिन्नपि वाक्ये पृथिवीपर एव तदैकरूप्योपपत्तेः । न च पृथिवीकारणस्यापां प्रसिद्धत्वात् प्रश्नानुपपत्तिः । 'अस्य लोकस्य का गति'रिति दाल्भ्यप्रश्नस्य पृथिवीमात्रकारणविषयस्य दर्शनात् अप्रतिष्ठितत्वदोषमुद्भावितवान् शालावत्यः । प्रतिष्ठितं पृथिव्यम्ब्वतिरिक्तमपि पृथिव्याः कारणं वदेदित्यभिप्रायेण स प्रश्न इति चेत्, तर्हि अन्तवत्त्वदोषमुद्भावितवान् जैवलिरबतिरिक्तमनन्तं किञ्चित् पृथिवीकारणं वदेदित्यभिप्रायेण पृथिवीकारणविषय एव शालावत्यप्रश्नोऽस्तु । अतोऽस्य लोकस्य का गतिरिति प्रश्नानुसारेणापि नाकाशश्रुतिरन्यथा नेया । 'सर्वाणि हवा इमानी'ति वाक्यशेषस्त्वाकाशश्रुत्यनुसारेणैव नेयः । अतो नाकाशपदं ब्रह्मपरमिति । **अपि चान्तवत्त्वदोषेण शालावत्यपक्षं निन्दित्वेति ।** यत्तु,स्वर्गे अप्रतिष्ठितत्वदोषोद्भावनपूर्वकमुक्तं पृथिवीलोकप्रतिष्ठितत्वम् । इदमपि यथाकथञ्चिदाकाश एव व्याख्येयमित्युक्तं तन्न साधु । उद्गीथे कुशला बभूवुः उद्गीथे वै कुशलास्स्म उद्गीथे कथां वदाम इत्यु-

पक्रम्य स्वरादिपृथिव्यन्तं तेन तेन दोषेण निराकृत्यानन्तं वस्तूपक्षिप्य स एष परोवरीयानुद्गीथस्स एषोऽनन्त इति पर्यवसानकरणात् कृत्स्नोऽयं सन्दर्भो उद्गीथे-अनन्तवस्तुध्याननिरूपणपर इत्यवगम्यते पृथिव्यन्तवस्तुपरम्परा । तत्र दोषश्च न हि निन्दान्यायेन अनन्तवस्तुस्तुतिपर एव । ततश्चान्तवत्त्वदोषोद्भावनार्थमुपक्षिप्तस्य पृथिवीप्रतिष्ठितत्वस्य यथाकथञ्चिद्व्याख्यानेऽपि नानन्तत्वं यथाकथञ्चिद्व्याख्येयम् । तत्र दोषानुद्भावनात् कृत्स्नसन्दर्भस्य तत्रैव पर्यवसानाच्च । अपि च पृथिवीप्रतिष्ठितत्व न स्वर्गं प्रत्युपजीव्यत्वं, येन तदापेक्षिकं स्यात् । पृथिव्युपजीव्यानामन्नादीनां विद्यमानत्वान् सर्वोपजीव्यत्वानुपपत्तेः। किं तु स्थितत्वरूपम । अन्यथा अप्रतिष्ठितं वै किल ते दाल्भ्य सामेति वचनेन स्वर्गस्याप्रतिष्ठितत्वोक्तिर्न प्रतिष्ठां लोकमतिनयेदि'ति पृथिव्याः प्रतिष्ठितत्वोक्तिश्चासङ्गता स्यात् । स्वर्गपृथिव्योरुपजीव्योपजीवकभावस्येतः 'प्रदानं देवा उपजीवन्ति अमुतः प्रदानं मनुष्या उपजीवन्ति' इति परस्परं प्रतिपादनात् । तथा च पृथिव्याः प्रतिष्ठितत्वोक्त्या निश्चलत्वे विवक्षिते स्वर्गस्याप्रतिष्ठितत्वं चलद्रूपत्वं पर्यवस्यति । तच्च ज्योतिश्चक्रान्तर्गतस्य स्वर्गस्योपपद्यते । आर्यभटोक्तो भूभ्रमणवादो मत्स्यजिघृक्षुपक्षिवत् भुवो नित्यमधःपतनवादो यवनपरिकल्पितः जलान्तर्गतशुष्कालाबूवज्जैनपरिकल्पितभूप्लवनवादश्च पुराणविरोधादेतत्प्रतिष्ठितत्वोक्तिविरोधाच्च हेयः । त्रिष्वेतेषु पक्षेषूर्ध्वनिक्षिप्तकन्तुकादेर्हस्तप्राप्तिर्न स्यात् । अतश्च पृथिवीलोकप्रतिष्ठितत्ववदनन्तत्वमपि आपेक्षिकमित्यसङ्गतम् । एवमुपक्रान्तसर्वलोककारणत्वानमारणाप्याकाशो ब्रह्मेति सिध्यति । यथाह्यन्तवत्त्वदोषोद्भावनादस्य लोकस्य का गतिरिति प्रश्नस्यानन्तवस्तुविषयकत्वं कल्प्यते, तथा सर्वकारणत्वाभावेऽनन्तत्वमपि न स्यादित्यपि प्रष्टुरभिप्रायो भवत्येवेति तन्निर्वाहाय काकेभ्यो दधि रक्ष्यतामित्यादिवदजहल्लक्षणया सर्वकारणवस्तुविषयकत्वमपि प्रश्नस्य कल्प्यते । अत उपक्रान्तानन्तसर्वलोककारणत्वानुसारेणाकाशशब्दो न यथाश्रुतार्थः । अपि च उपक्रान्तमानन्त्यं त्रिविधपरिच्छेदनिरसनेनोत्तरत्र व्युत्पाद्यते । तत्र कारणवाक्यैः वस्तुपरिच्छेदो ब्रह्मण उपादानत्वमुपाहरद्भिर्निराक्रियते । आकाशादेवेत्यवधारणं च ब्रह्मपक्षे मूलकारणीभूतनिमित्तान्तरव्यवच्छेदकत्वात् उपपद्यते । अवधारणस्य सजातीयव्यावर्तकत्वं हि व्युत्पत्तिसिद्धं मूलकारणस्य च ब्रह्मणस्तादृशमेव कारणं सजातीयं, न त्ववान्तरं कालादृष्टादि । अतस्तद्व्यावर्तनेऽपि नैवकारास्वारस्यम् । भूताकाशपक्षे तु तस्यावान्तरकारणत्वात्तादृशमेव व्यवच्छेद्यम् । न च तत्सम्भवति । कालादेर्विद्यमानत्वात् । ततश्चैवकारोऽपि निमित्तान्तरमादाय प्राप्तं वस्तुपरिच्छेदं निराकुर्वन् आनन्त्यमेवोपपादयति सर्वभूतकारणत्वोक्त्या च सृष्ट्याद्या-

वपि विद्यमानताप्रतिपादनेनानादित्वसूचनादनादिभावस्य ध्वंसायोगात्कालतोऽपि परिच्छेदोऽशक्तो भवति । ज्यायस्त्वोक्त्या च देशतः परिच्छेदः । एवं च सर्वाणि ह वा इमानि भूतानीत्यादिवाक्यप्रतिपाद्यमपि सर्वकारणत्वादिकं निरंकुशमेव व्याख्येयम् । आपेक्षिकस्य तस्य ग्रहणे उपक्रान्तमनन्तत्वं व्युत्पादितं न स्यात् । स एषोऽनन्त इत्युदर्केऽपि ह्यानन्त्यं श्रुतम् । ततश्चानन्त्यमुपक्रमोपसंहारैकरूप्यकारणत्वाद्युपपत्तिरूपतात्पर्यलिङ्गोपेतं नान्यथा नेतुं शक्यम् । यद्यप्याकाशश्रुतिरभ्यस्ता, तथापि निरूढ्या ब्रह्मण्यपि व्याख्यातुं युक्ता । साचाकाशवत्सर्वगतश्च नित्य इति श्रुतिप्रसिद्धं सर्वगतत्वं गुणमादाय ब्रह्मपरा सत्युपक्रान्तमानन्त्यमेवोपोद्बलयिष्यतीति नानन्त्यं यथाकथञ्चित् नेतुं शक्यम् । उपक्रान्तान्तवत्त्वदोषनिरासालाभात् । न चाकाशशब्दप्रतिपाद्यं यत्, तत् प्रधानमिति प्रकृतसन्दर्भे निर्णये सत्यपि भूताकाशमेव प्रधानमिति द्रागित्येव निर्णयो भवति । परन्त्वाकाशपदस्य भूताकाशे शक्तत्वात् भूताकाश एव उत्सर्गतस्तेन प्रतिपाद्यते इति मतिः प्राप्ता यावत् भवति, तावदेव भूयसीर्ब्रह्मलिङ्गप्रतिपादिकाश्श्रुतीरुपलभ्य सा मतिः कुण्ठिता भवति । तथा च भूयोऽनुग्रहन्यायानुसरणेन प्रधानविरोध आपादयितुं शक्यः । अपि तु प्रधानप्रतिपादकपदस्य लक्षणामात्रम् । तच्च नानुपपन्नम् । अग्निर्वा नेऽनुवाकमिति दर्शनात् । अत आकाशपदं ब्रह्मैव प्रतिपादयति । ततश्च तदेवेह प्रधानमिति सिद्धम् । ऋचो अक्षर इति । यस्मिन् सर्वे देवा अधिनिषेदुः तस्मिन् परमाकाशे ऋचः प्रतिष्ठिताः तदेव ऋक्प्रतिपाद्यमित्यर्थः । परमे व्योमन्नित्यत्र सप्तम्या लुग्द्रष्टव्यः । ओं खं ब्रह्म खं पुराणमिति । अत्रोङ्कारो ब्रह्मप्रतीकत्वेन विवक्षितः तद्वाचकत्वेन वेति सामानाधिकरण्यं ब्रह्मपदेन तस्य । खमिति तु विशेषणं ब्रह्मपदार्थस्य । तत्र खशब्दो न भूताकाशपर इत्याह श्रुतिः—खं पुराणमिति । चिरन्तनं वस्तु खशब्देनेह विवक्षितम् । तथा चाकाशवत् सर्वगतश्च नित्य इति श्रुतिप्रसिद्धं नित्यत्वगुणमादाय खशब्दो ब्रह्मविशेषणम् ॥ २१ ॥

इत्याकाशाधिकरणम् ॥ ८ ॥

## अत एव प्राणः ॥ २२ ॥

उद्गीथाध्याये धनायया कस्यचिद्राज्ञो यज्ञशालां प्रविष्टेन चाक्रायणेन ऋषिणा स्वज्ञानख्यापनाय प्रस्तावोद्गीथप्रतिहाररूपसामभक्तिदेवताविज्ञानरहितानां भवतां मम विदुषः सन्निधावार्त्विज्यं कुर्वतां मूर्धपातो भविष्यतीति शपतैव तत्तद्देवताविज्ञानं परीक्षितुं पृष्टानां प्रस्तोत्रुद्गातृप्रतिहर्तृणां तत्तद्देवताविज्ञानरहितत्वात् भीतानां

तं प्रति शिष्यभावमुपगतानां कतमा सा देवतेत्येवं त्रयाणामपि प्रश्नमुपक्षिप्य प्रस्तावदेवता प्राणरूपा प्रतिपादिता प्राण इति होवाचेत्यादिना। आदित्य इति होवाच सर्वाणि हवा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्तीत्युद्गीथदेवता अन्नमिति होवाच सर्वाणि हवा इमानि भूतानि अन्नमेव प्रतिहरमाणानि जीवन्तीति प्रतिहारदेवता च । तत्र प्राणवाक्यं विषयः । पूर्वाधिकरणातिदेशत्वात् सङ्गतिः । पूर्वाधिकरणार्थमतिदिशति—तत्रेत्यादिना । अतिदेशस्य विशेषशङ्कानिराकरणार्थत्वात् तामाह—मुख्येऽपि प्राण इत्यादिना । ननु संवर्गविद्यागतेन वाक्येन वागादीनामेव प्राणे लयो निरूप्यते । न सर्वभूतानाम् । सोऽपि न मुख्यः । अपि तु प्राणवृत्तौ विद्यमानायां वागादिवृत्त्यभिभवमात्रेणौपचारिकः । प्रत्यक्षसंवादोऽपि तावत्येव । सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्तीत्यत्र तु सर्वभूतलयः । अत्र भूतशब्दो यदि प्राणिवर्गपरः, यदि वा आकाशादिपञ्चमहाभूतपरः 'जगद्वाचित्वादि'त्यधिकरणे वक्ष्यमाणेन 'रूढ्योः परस्परं कलहे योगो जागर्ती'तिन्यायेन भवन्तीति भूतानीति व्युत्पत्त्या कार्यमात्रपरो वा सर्वथा सुषुप्तिमादाय प्राणपरतया वाक्यशेषो न सङ्गच्छते । इन्द्रियाणां भूतसारत्वं च प्राणिवर्गव्यवहारोपयोगित्वम् । न च तावन्मात्रमादाय सुषुप्ताविन्द्रियवृत्त्यभावात् प्राणिनां व्यवहारो नास्तीति सर्वभूतलयवचनं प्राणे यथाकथञ्चित् योजयितुं शक्यम् । तादृशक्लेशकल्पनायां प्रमाणाभावात् । न च प्राणश्रुत्यनुसारेण लिङ्गान्यथानयनम् । देवतोपक्रमानुसारेण प्राणपदस्य चेतनवस्तुपरत्वावश्यंभावेन प्राणश्रुतेर्मुख्यार्थत्वस्य वक्तुमशक्यत्वात् । न चादित्यान्नरूपाब्रह्मप्रायपाठात् प्राणपदस्याब्रह्मपरत्वं युक्तम् । येन वाक्यशेषो यथाकथञ्चित् योजनीयस्स्यात् । लिङ्गविरोधिनः प्रायपाठस्येक्षत्यधिकरण एव निरस्तत्वात् । अतोऽपिचेत्यादिना दर्शिता विशेषाशङ्कापि न युक्तेतिचेदुच्यते—सर्वभूतसंवेशनोद्गमनादिकं हि चरमपठितं लिङ्गं कथं प्रथमपठितप्राणश्रुतेरन्यथानयने समर्थं स्यात् । आदित्यान्नरूपाब्रह्मप्रायपाठश्च प्राणस्याब्रह्मत्वे लिङ्गम् । न चात्रेक्षणप्रायपाठवदप्रयोजकता । स हीक्षतिमुख्यार्थत्वविरोधी । एवं तेजआद्यब्रह्मप्रायपाठोऽपि । ततश्च सत्पर्यायगतेक्षतिश्रुतिमुख्यार्थताभञ्जकयोर्गौणेक्षणतेजआद्यब्रह्मप्रायपाठयोरनिर्णायकत्वेऽपि नादित्यान्नाब्रह्मप्रायपाठस्य प्रकृते निर्णायकता नास्तीति शक्यं वक्तुम् । ततश्च प्राणश्रुतिमुख्यार्थतानिर्वाहाय 'सर्वाणि हवा इमानि भूतानी'त्येतदपि प्राणाधिकरणकसंवेशनतदपादानकोद्गमनान्वययोग्यसर्वभूताभिप्रायमेव व्याख्येयम् । आदित्यान्नपर्याययोरपि हि तदुभयकर्मकगानप्रतिहरणक्रियान्वययोग्यपर

एव । सर्वभूतशब्दो यथायथं व्याख्यातव्यः । 'सर्वाणि ह्वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्तीत्यत्र हि आदित्यकर्मकं गानं प्रतीयते । तत्र चादित्यशब्दो मण्डलपर एव । उच्चैस्सन्तमिति तल्लिङ्गात् श्रुतिभञ्जकब्रह्मलिङ्गाभावाच्च । एवं सर्वाणि ह्वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्तीत्यत्राप्यन्नशब्द ओदनपर एव । 'भिस्सास्त्रीभक्तमन्धोऽन्नमि'ति निघण्टुवचनात् प्रतिहरणशब्दोदितस्य भक्षणस्य ब्रह्मण्यनन्वयाच्च । तत्र च सर्वभूतशब्दो यत्किञ्चित्प्राणिपरः । न हि सर्वे प्राणिन आदित्यं गायन्ति न वौदनमभ्यवहरन्ति । वृक्षादिष्वदर्शनात् । अतस्तत्र यथादित्यान्नशब्दावब्रह्मपरौ, सर्वभूतशब्दश्च समभिव्याहृतक्रियान्वयिनि संकुचद्वृत्तिः, तथा प्राणशब्दोऽप्यब्रह्मपर एव श्रुत्या भवति । सर्वभूतशब्दश्च समभिव्याहृतक्रियान्वयिनि संकुचद्वृत्तिरस्तु । ततश्च कीदृग्विधः प्राणाधिकरणकः संवेशः, कीदृग्विधश्चोद्गमः तदन्वयीनि कानि सर्वभूतानीत्यपेक्षायां संवर्गविद्यावाक्यं प्रत्यक्षं चोदाहृतं भाष्ये । ततश्च प्राणश्रुत्यनुरोधेन सर्वभूतसंवेशनोद्गमनादिकं श्रुत्यन्तरपर्यालोचनया वाक्यशेषपर्यालोचनया च प्रकृते सौषुप्तं जाग्रदारम्भप्रयुक्तं च पर्यवस्यति । एतेन सर्वाणि ह्वा इमानि भूतानि प्राणमेवाभिसंविशन्तीत्यवधारणं सुषुप्तिमादाय वक्तुं न शक्यते । सुषुप्तिदशायां ब्रह्मणोऽपि संवेशाधारतयान्ययोगव्यवच्छेदार्थकस्यैवकारस्यानुपपत्तेरिति शङ्कापि परास्ता । सर्वाणि ह्वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्तीति वाक्यशेषगतो ह्येवकारो नान्ययोगव्यवच्छेदार्थः । अन्नातिरिक्तानामपूपादीनामपि जीवनोपयोगितयाभ्यवहरणीयानां विद्यमानत्वात् । अतस्तस्यायोगव्यवच्छेदार्थत्वमुपगम्य जीवन्त्येवेत्यन्वयो वक्तव्यः । तद्वत् प्रकृतेऽपि प्राणमभिसंविशन्त्येवेत्यन्वयेनायोगव्यवच्छेदार्थत्वे न काचिदनुपपत्तिः । न चायोगव्यवच्छेदार्थकैवकारप्रायपाठेनान्ययोगव्यवच्छेदार्थत्वं स्वरसतः प्रतीयमानं प्राणमेवाभिसंविशन्तीति वाक्यगतस्यैवकारस्य कथं परित्यज्यत इति शङ्कनीयम् । प्रबलप्राणश्रुत्यनुसारेणान्यथानयने आवश्यके प्रायपाठस्यार्थविशेषव्यवस्थापकत्वोपपत्तेः । न च देवतापदस्य चेतनपरत्वान्मुख्ये प्राणे तदर्थान्वयासम्भवात् प्राणश्रुतिमपेक्ष्यापि पूर्वपठितया देवताश्रुत्याभ्यस्तया प्राणश्रुतेर्लक्षणायां वक्तव्यायां वाक्यशेषस्वारस्यानुसारेण ब्रह्मपर एव प्राणशब्दोऽस्त्विति वाच्यम् । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता' इत्यादौ तेजोबन्नेष्वचेतनेष्वपि देवताशब्दप्रयोगेण तस्य चेतनमात्रनैयत्याभावात् । अतो मुख्यप्राण एव प्रस्तावदेवतेति शङ्कितुरभिप्रायः । अत्रायं सिद्धान्ताभिप्रायः । देवताशब्दो हि चेतनवाचक एव । तस्य क्वचिदचेतने प्रयोगस्तु लाक्षणिकः । न च प्रकृते चरमपठितेन प्राणशब्देन तस्य लाक्षणिकत्वं स्वीकर्तुं

युक्तम् । नन्वन्नादित्यपर्याययोरपि देवताशब्दः पठ्यते । तस्य च न चेतनपरत्वम् । अपित्वादित्यमण्डलपरत्वमोदनपरत्वं च वक्तव्यम् । न च तत्रापि प्रथमश्रुतदेवतापदानुसारेणान्नादित्यपदयोरेव तदभिमानिदेवतापरत्वं कुतो नाभ्युपेयत इति शङ्क्यम् । सर्वभूतगानस्य प्रसिद्धे मण्डल एव सम्भवात् देवताया लोकाप्रसिद्धत्वेन सर्वभूतगानकर्मत्वानुपपत्तेः । एवं सर्वभूताभ्यवहरणीयत्वमपि न देवतायां सम्भवति । ततस्तत्र देवताशब्दो लाक्षणिक एव तत्प्रायपाठात् प्रकृतेऽपि लाक्षणिको भविष्यतीति चेन्न । तत्र वाक्यशेषस्य सर्वात्मना चेतनेऽनुपपत्त्या प्रथमश्रुतस्य देवतापदस्य लाक्षणिकत्वाभ्युपगमेऽपि प्रकृते देवतापदस्य चेतनब्रह्मपरत्वे वाक्यशेषस्य स्वारस्येनैवान्वयोपपत्तौ इहापि न देवतापदस्य लाक्षणिकत्वमुपेयम् । ततश्च वाक्यान्तरगतप्रायपाठरूपस्थानप्रमाणानुरोधिन्याश्चरमपठितायाः प्राणश्रुतेः स्ववाक्यगतलिङ्गरूपप्रमाणानुरोधिन्या प्रथमपठितया देवताश्रुत्या ब्रह्मपरत्वमेव निरूढ्या स्वीकर्तव्यमिति । **स्वापप्रबोधयोरिन्द्रियाणामेव केवलानामिति** । नात्र 'रूढ्योः परस्परं कलहे योगो जागर्ती'ति न्यायः प्रवर्तते । आदित्यान्नवाक्यशेषे भूतशब्दस्य प्राणिनिकायपरत्वेनेहापि तत्परत्वस्यैव प्राप्तेः । न च स्ववाक्यावगतप्राणशब्देन प्राणकारणीभूतमहाभूतान्तर्गतवायुस्मरणात् महाभूतानामेव ग्रहणं प्राप्नोति । ततश्च पुनरपि कलह एवेति वाच्यम् । प्राणशब्देन प्राणिनामेव झटिति स्मरणसम्भवेन तस्य महाभूतकोटिपक्षपातित्वासम्भवात् । ततश्चेह प्राणिनामेव ग्रहणमिति यदि वदेत्, तदापि सर्वशब्दो मुख्यप्राणपरिग्रहपक्षे न व्यक्तिसाकल्यमादाय वक्तुं शक्यते । पूर्वपक्षोक्तरीत्या सुषुप्तिदशायामेकस्मिन् प्राणे सर्वप्राणिलयस्य गौणस्याप्यभावात् अतस्तत्तत्प्राणे तत्तत्प्राणिलयो वक्तव्यः । तत्र च सर्वशब्दोऽवयवसाकल्यमादाय व्याख्येयः सर्वः पटो रक्त इतिवत् । तदपि वक्तुं न शक्यते । शरीरमारभ्य चेतनपर्यन्तस्यावयविनः प्राणित्वाद्वृत्तिलयमादायाचेतनेन्द्रियलये यथाकथञ्चिद्व्याख्यातुं शक्येऽपि शरीरांशे वृत्तिलयस्याप्यभावेनावयवसाकल्येन लयासम्भवादित्याशयः । यदापि भूतश्रुतिर्महाभूतविषयेति । अयमाशयः । नात्र भूतशब्दः प्राणिपरः । चेतनानां नित्यतया मुख्यसंवेशनोद्गमनासम्भवादतोऽत्र संवेशनोद्गमनश्रुतिस्वारस्येन महाभूतरूढिरेवोन्मिषति । श्रुतिस्वारस्यलाभे च प्राणिपरसर्वभूतप्रायपाठस्याप्रयोजकत्वादिति । तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैवेत्युपक्रमोपसंहारावधृतब्रह्मप्रकरणानुसारात् प्राणशब्दो ब्रह्मपर एव । सुषुप्तौ तत्र सर्वगलप्रतिपादनं तु प्रपञ्चस्य दृष्टिमात्रजीवितत्वद्योतनेनातितुच्छत्वप्रतिपादनाय । 'प्राणबन्धनं हि सोम्य मन' इति मनश्शब्दोदितस्य जीवस्य सुषु-

प्तौ प्राणशब्दोदितं ब्रह्मैव बध्यतेऽस्मिन्निति बन्धनं सम्बन्धाश्रय इति ॥ २२ ॥

इति प्राणाधिकरणम् ॥ ९ ॥

## ज्योतिश्चरणाभिधानात् ।२३।

अथ यदतः परो दिवो ज्योतिरिति । विश्वतः पृष्ठेष्विति पदं न संकुचद्वृत्तीति द्योतनाय—सर्वत इति । सर्वोत्तरेष्विति पर्यवसितोऽर्थः । अनुत्तमेष्वित्यत्र न विद्यते उत्तमोऽन्यो यस्मादिति बहुव्रीहिः विवक्षित इति द्योतनायोत्तमेष्विति । पर इति छान्दसं पुल्लिङ्गं ज्योतिर्विशेषणे । दिवः परं सर्वोत्तरेषूत्तमेषु लोकेषु यज्ज्योतिर्दीप्यते इदमेव तद्यदिदं पुरुषेऽन्तर्विद्यमानं जाठररूपं ज्योतिः । इतिशब्देन 'तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिधाय निनदमिव नदथुरिवाग्नेर्ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतञ्चेत्युपासीत चक्षुष्यश्श्रुतो भवति य एवं वेदे'ति संगृहीतम् । यत्रशब्दौ यदित्यर्थौ । नदथुरिति द्वितीयान्तम् । अस्मिञ्छरीरे हस्तादिसंस्पर्शेन यदुष्णिमज्ञानं एषा तस्य जाठरस्य दृष्टिः । कर्णौ पिधायांगुलीभ्यां निनदमृषभकूजितमिव ज्वलतोऽग्नेऽर्नदथुं शब्दमिव यदेतच्छृणोत्येषा तस्य श्रुतिरत्र तदुष्णिमस्पर्शज्ञानमेव तद्दृष्टित्वेनोपचरितं तच्छब्दश्रवणमेव च तदीयत्वेनोपचरितम् । उपचारफलं च जाठरस्य दृष्टत्वश्रुतत्वरूपगुणद्वयलाभः । सङ्गतिमाह—**अर्थान्तरप्रसिद्धस्येति** । ननु 'तद्देवा ज्योतिषां ज्योतिः आत्मैवास्य ज्योतिः वागेवास्य ज्योतिः मनो ज्योति'रित्यादिप्रयोगाज्ज्योतिश्शब्दोऽग्न्यादिवाचक एवेति कथं नियन्तुं शक्यत इत्याशङ्क्य लोके शार्वरतमःप्रतिद्वन्द्विन्येव ज्योतिश्शब्दस्य प्रचुरप्रयोगात् तत्प्रतिद्वन्द्वित्वस्याग्न्यादिष्वेव सम्भवात् तेष्वेव ज्योतिश्शब्दः शक्तः । आत्मादिषु प्रयोगस्तु लाक्षणिको भविष्यतीत्याह—**तमोज्योतिरिति हीमाविति** । चक्षुर्वृत्तिनिरोधकं चाक्षुषज्ञानप्रागभावपालनोपयुक्तमित्यर्थः । **न हि रूपादिहीन मिति** । भास्वररूपमेव दीप्तिशब्दार्थ इति भावः । **प्रयोजनान्तरप्रयुक्तस्यैवेति**। प्राणिकर्मनिमित्तायाः सृष्टेः तद्भोगोपयुक्तपदार्थविषयत्वात् सर्वदाप्यत्रिवृत्कृतस्य च तद्भोगानुपयुक्तत्वात् वाग्धेनूपासनावत् उपास्याभावेऽप्युपासनायास्सम्भवात् उपासनार्थेनैव न तादृशपदार्थसृष्टिरपेक्षितेति भावः । **तस्य भूरिति शिर इति** । आदित्यमण्डलान्तर्गतस्य हिरण्यगर्भस्योपासनं प्रस्तुत्य तस्य व्याहृतिशरीरतासम्पादनाय प्रथमव्याहृतेः शिरस्त्वं निरूपयितुमिदं वाक्यम् । तत्र व्याहृतिरूपाक्षरस्य शिरसश्चैकत्वं सादृश्यम् । नन्वत्र यत्पदं सर्वनाम । सर्वनाम्नां च बुद्धिस्थत्व

मुपाधीकृत्य अर्थाभिधायकत्वम् ।वेदे चाध्ययनक्रमानुसारेण यस्य बुद्धिस्थता सम्भाविता तत्परामर्शित्वं सर्वनाम्नां वक्तव्यम् । तदपि प्रधानमपेक्षितम् । ततश्च वेदे यत्पूर्ववाक्ये प्रधानतया प्रतिपाद्यते, तत्परामर्शित्वं सर्वनाम्नां व्युत्पत्तिबलादायाति । प्रकृते च गायत्रीवाक्ये ब्रह्मणः पूर्वं प्रतिपादनात् तदेवेह यत्पदेन परामर्शनीयम् । ततश्च 'अथ यदतः पर' इतिवाक्यं यत्पदश्रुतिबलादेव ब्रह्मपरं भविष्यतीत्याशंक्याह—**न च पूर्वस्मिन्निति**। एतच्च 'छन्दोऽभिधानादि'ति उत्तरसूत्रशङ्काभागविवरणावसरे स्पष्टं भविष्यति । **अथापि कथञ्चिदिति**। छन्दोऽभिधानादिति सूत्रगतपरिहारांशाभिप्रायेण।**एवमपीति**। व्यपदेशभेदादितिसूत्रगतशङ्काभागानुसारेण । वस्तुतस्तु सर्वनाम्नां बुद्धिस्थपरामर्शकत्वमेव व्युत्पत्तिसिद्धम् । बुद्धिस्थत्वं च बुद्धिविषयत्वम् । तच्च पूर्ववाक्यैरेवापेक्षितमिति कुतो लभ्यते । ततश्च गायत्रीवाक्यमपेक्ष्यापि सन्निहितेन ज्योतिःपदेन स्ववाक्यगतेन विषयीकृतस्य प्रसिद्धस्य ज्योतिष एव यत्पदेन परामर्शे न काचिदनुपपत्तिरिति न यत्पदपर्यालोचनयाप्यस्य ब्रह्मपरत्वं सम्भवतीत्यभिप्रेत्य उपसंहरति—**तस्मादिति । तावानस्य महिमेति** । सैषा चतुष्पदा षड्विधा गायत्रीति पूर्ववाक्ये यत्प्रपञ्चजातमुक्तं , स सर्वोऽप्यस्य महिमा विभूतिः । अतो महिम्नः पुरुषो गायत्रीद्वारा निरूपितः । परमात्मा ज्यायानुत्कृष्टः । ज्यायस्त्वं व्युत्पादयति—**पादोऽस्येति** । सर्वाणि भूतान्यस्यैकदेशः यथा चतुष्पादयुक्तात् पदार्थात् तदेकपादपरिमितं वस्तु तस्मादल्पं भवति तद्वत् प्रपञ्चोऽप्यल्प इति द्योतनाय पादत्वकल्पनम् । अस्य परमात्मनो दिवि सत्यलोकोपरिभागे त्रिपात् ब्रह्मविष्णुशिवात्मना अभिव्यक्तं स्वरूपं अमृतात्मकमस्तीति मन्त्रार्थः । **तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायत इत्यादि** । अयमाशयः । सर्वनाम्ना हि स्वाभिधानकाले यत् बुद्ध्यारूढं , तदेव प्रतिपाद्यते । तदपि शब्देनैव यत् बुध्यारूढं , तदेव । न तु प्रमाणान्तरेणेत्युत्सर्गः । प्रबलबाधकोपनिपाते तु प्रमाणान्तरारूढं बुद्धावारोक्ष्यमाणं वा यथाकथञ्चित् क्लेशेन परामृश्यते । अत एव प्रकृतपरामर्शासम्भव एव प्रकरिष्यमाणपरामर्शकत्वमिति नीतिविदः । प्रसिद्धश्चैतत् लोके देवदत्तोऽस्ति , तमानय यज्ञदत्तो गच्छतीत्यादौ । अत्र पूर्वप्रस्तुतो देवदत्त एव सर्वनाम्नाभिधीयते । न तु प्रस्तोष्यमाणो यज्ञदत्तः । विशिष्य च यत्पदघटितवाक्यस्यानुवादकता यो ब्राह्मणो वेदवित् , तस्मै देयमित्यादौ प्रसिद्धा । प्रकृते यत्पदस्य सर्वनामतया प्रकृतवस्त्वपेक्षायां तद्घटितवाक्यस्य चानुवादकतया पुरोवादापेक्षायां द्युसम्बन्धप्रत्यभिज्ञातः पुरुष एव प्रकृतः सर्वनामाकांक्षां तद्घटितवाक्यस्य पुरोवादाकांक्षां च स्वप्र-

तिपादकमन्त्रद्वारा पूरयतीति स एवेह यत्पदेन परामृश्यते । तत्र स्ववाक्यगतं ज्योतिस्सन्निहितमपि अप्रयोजकम् । आकांक्षाशामकत्वाभावात् । ततश्च प्रकृतपुरुषपरामर्शकपूर्वपठितयत्पदस्वारस्यमनुरुध्य ज्योतिःपदमेव निरूढ्या पुरुषपरं भविष्यतीति । सन्दंशमाह—न केवलं ज्योतिर्वाक्य इति । शाण्डिल्यविद्यायाश्च ब्रह्मविषयत्वं 'सर्वत्र प्रसिद्धोपदेशादि'त्यधिकरणे स्पष्टं भविष्यति । नन्वत्र, पूर्वं गायत्रीविद्या, तदनन्तरं ज्योतिर्विद्या, तदनन्तरं शाण्डिल्यविद्या । ततश्च मध्यपठितायाः ज्योतिर्विद्यायाः सन्दंशात्मकः प्रायपाठो ब्रह्मणेति सिद्धावपि तावन्मात्रेण कथं ज्योतिश्श्रुतिभङ्गः । श्रुतिविरोधिनः प्रायपाठस्यानियामकत्वात् । न चेह प्रयाजादौ अभिक्रमणन्यायेन सन्दंशपाठोऽवान्तरप्रकरणसम्पादकः । ततश्च ब्रह्मप्रकरणे प्राकृतज्योतिःप्रतिपादनं व्यर्थं स्यादिति व्यर्थतापरिहाराय प्रकरणानुसारेण ज्योतिश्श्रुतेः ब्रह्मपरता भविष्यतीति वाच्यम् । प्रयाजाभिक्रमणे हि उभयतः प्रयाजाङ्गसन्दंशमात्रेण नावान्तरप्रकरणोन्मेषः । किंतु प्रयाजानामङ्गाकांक्षा अभिक्रमणस्य च 'अभिक्रामं जुहोती'ति वाक्येन होमान्वये अवगतेऽपि कोऽसौ होमविशेष इत्यपेक्षा । ततश्चोभयाकांक्षारूपं प्रकरणमस्त्येव । परन्तु प्रधानाकांक्षया अङ्गाकांक्षाया अभिभूतत्वात् उद्भूतया प्रधानाकांक्षया जुहोतिपदस्य प्रधानहोमपरत्वप्रसक्त्या प्रयाजप्रकरणस्य जुहोतिपदार्थानियामकत्वप्रसक्तौ श्रुत्यादिप्रमाणप्राप्ताङ्गसंदंशेन विद्यमानस्यैव प्रकरणस्योद्भवः सम्पाद्यते । नेह तथा । तिसृणामपि विद्यानां भिन्नत्वेन परस्परमपेक्षाभावात् । सत्यपि प्रकरणे ब्रह्मोपासनाङ्गतया प्राकृतज्योतिरुपासनविधानसम्भवाच्चेति चेत्, उच्यते—सर्वं खल्विदं ब्रह्मे'ति शाण्डिल्यविद्यागतोपक्रमवाक्ये इदंशब्दः पठ्यते । नासौ सर्वपदार्थविशेषणम् । अपि तु ब्रह्मविशेषणम् । एतच्च शाण्डिल्यविद्याधिकरणे स्पष्टीभविष्यति । इदंशब्दश्च सर्वनाम तदैव ब्रह्मविशेषणं भवेत् । यदि पूर्वसन्दर्भे ब्रह्म प्रस्तुतम् । ततश्च गायत्रीवाक्यस्य ब्रह्मपरत्वेऽपि ज्योतिर्वाक्यस्यान्यपरत्वेन व्यवहितस्य गायत्रीवाक्यस्थस्य ब्रह्मणः सर्वनाम्ना परामर्शो न सम्भवतीति इदंशब्दो ज्योतिर्वाक्यगतब्रह्मसन्निधानमपेक्षते । अत इदंशब्दयुक्तसन्दंशादपि ज्योतिर्वाक्ये ब्रह्म सिध्यति । **प्रकरणादिति** । प्रकृतपरामर्शकयच्छ्रुतिबलादित्यर्थः । **तस्माद्यत् कस्य चित् अवभासकमिति** । ज्योतिश्शब्देन द्रव्यविभाजको यस्तेजस्त्वरूपजातिविशेषः, स एव प्रवृत्तिनिमित्तम् । अपि तु व्यवहारप्रयोजकत्वमेव । न चात्र लाघवेन जातिरेव प्रवृत्तिनिमित्तमिति न्यायोऽवतरति । आत्मैवास्य ज्योतिर्भवतीत्यन्ते सन्द-

र्भे प्रतिपर्यायमादित्यचन्द्राग्निवागात्मनां ज्योतिष्ट्वमुपन्यस्य पल्ययते कर्म कुरुते विपल्येतीति ज्योतिःपदप्रयोगे व्यवहारजनकत्वस्यैव निमित्तस्य दर्शितत्वात् प्रसिद्धाग्न्यादिप्रयोगस्य तावतापि निर्वाहात् श्रुतिविरोधे न्यायस्यानादरणीयत्वात्। न च व्यवहारप्रयोजकेषु सर्वेषु प्रयोगाभावमात्रेण श्रुतिप्राप्तस्य प्रवृत्तिनिमित्तस्य परित्यागः सम्भवति । बर्हिराज्यादिशब्देषु संस्कृतमात्रे प्रयुज्यमानेष्वपि न्यायप्राप्तायाः संस्कृतासंकृतसाधारणायाः जातेरेव प्रवृत्तिनिमित्तत्वाभ्युपगमात्। ततश्चोक्तेन प्रवृत्तिनिमित्तेन ब्रह्मणि ज्योतिश्शब्दः शक्त एव । एवं च यदतः परो ज्योतिरिति ज्योतिषः परत्वविशेषणेनापि ब्रह्मरूतपा सिद्धा भवति । यद्यपि दिवो मर्यादात्वप्रतिपादनान्नायं परशब्द उत्कर्षपरः । अपि तु उपरिभावार्थकः, तथापि परंज्योतिरुपसम्पद्येत्यादौ परशब्दसमभिव्याहृतस्य ज्योतिषो ब्रह्मरूपतादर्शनादिहापि तदैकरूप्याय ब्रह्मरूपतेति। अन्नाद इति । अन्नमत्तीत्यन्नादः दीप्ताग्निः वसु दीयमानमस्य वसुदानः द्रव्यदातेति यावत् । **तथापि पूर्वस्मिन्वाक्ये दृश्यमानमिति** । तावानस्येतिमन्त्रे द्युसम्बन्धित्वं ब्रह्मणो दृष्टम् । प्रकृतवाक्ये च ज्योतिषो द्युसम्बन्धोऽवगतः। ततश्च यत्पदेन ज्योतिर्वाक्यस्यानुवादकत्वे सिद्धेऽनुवादस्य सन्निहितगामित्वाद्द्युसम्बन्धप्रत्यभिज्ञानाच्च ऋचि द्युसम्बन्धितया सन्निहितं त्रिपादमृतं ब्रह्मैव ज्योतिरिति सिध्यति । अयमर्थः पादशब्दापरपर्यायं चरणशब्दं प्रयुञ्जानेन सूत्रकृता दर्शितो भवति । प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातां प्रकरणादिति च यत् पूर्वं सङ्ग्रहेणोक्तं. तदेव शङ्कापूर्वकं विवृणोति—कथं पुनरिति । अर्थात् गायत्रीवाक्यनिर्दिष्टब्रह्मपरामर्शकयत्पदसामानाधिकरण्यसामर्थ्यात् ॥२३॥

## छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥२४॥

गायत्री वा इदं सर्वमिति । **गायत्रीमुपक्रम्येत्यादि** । एवं हि श्रूयते—'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च या वै सा गायत्री इयं वाव सा येयं पृथिवी अस्यां हीदं भूतं प्रतिष्ठितमेतामेव नातिशीयते या वै सा पृथिवी इयमेव सा यदिदमस्मिन् पुरुषे शरीरं अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते यद्वैतत् पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन् पुरुषे हृदयं अस्मिन्हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तमिति । अत्र सर्वभूतात्मत्वं मुख्यं यद्यपि मन्त्ररूपायाः गायत्र्याः न सम्भवति, तथापि गौणं

सम्भवत्येव उपासनार्थम् । इह च गौणमेव ग्राह्यं। ग्रामव्यवहर्तरि ग्रामरक्षके पुरुषे अयमेव सर्वो ग्राम इतिवत् सर्वभूतहिंसां माकुरु नरको हिंसकस्य भविष्यतीत्येवंरूपेण गानेन सर्वभूतत्राणहेतुत्वात् वागेव सर्वं भूतमिति वाचो यथाकथञ्चित् सर्वभूतात्मत्वोपपादनेन तदभिन्नाया गायत्र्या अपि सर्वभूतत्वं निरूप्यते । अतो वाक्यशेषानुसारेण सर्वभूतात्मत्वं गायत्र्या गौणं पर्यवस्यति । पृथिव्यात्मत्वमपि भूतप्रतिष्ठात्वसामान्येन व्युत्पाद्यते, शरीरहृदयात्मत्वमपि भूतैकदेशप्राणप्रतिष्ठात्वसामान्यात् । तच्च गौणसर्वभूतात्मत्वेन सर्वभूतप्रतिष्ठात्वमपि अर्थसिद्धं तादृशं भवतीत्येतदभिप्रायम् । अतो वाक्यशेषानुसारेणैव भूताद्यात्मत्वस्य गौणस्यैव प्राप्तेः नेदं गायत्र्या ब्रह्मत्वे लिङ्गम । सैषा चतुष्पदेति तु ऋग्ग्रहण एव स्वरसम् । टाबृचीति ऋचि वाच्यायामेव विशिष्य टापो विधानात् । न च त्रिपदायाः गायत्र्याः चतुष्पादत्वमनुपपन्नं पङ्क्तिधेतिपदेन चतुर्विंशत्यक्षरायाः षड्भिष्षड्भिरक्षरैः चतुरंशान् प्रकल्प्य चतुष्पदात्वसमर्थनस्य दर्शितत्वात् । न च सैषेति वचनानुसारेण प्रकृतानामेव भूतादीनां पादत्वं प्रतीयत इति वाच्यम् । तथासात वाचा सह पञ्चपदात्वमपि प्राप्नोतीति चतुष्पदेति निर्देशोऽनुपपन्न एव स्यात् । **कथमकस्मादिति** । न च पुरुषसूक्ते ब्रह्मपरतयावगतस्य सर्वात्मताप्रकाशकस्यास्य मन्त्रस्य कथं छन्दोभिधायकत्वमिति वाच्यम् । उपक्रमेऽभ्यस्ताया गायत्रीश्रुतेः अन्यथानेतुमशक्यत्वेन छन्दःपरत्वे पूर्वत्र निर्णीते सति पुरुषसूक्ते ब्रह्मपरस्यापि तदेतदृचाभ्यनूक्तमिति वचनेनैव गायत्रीप्रतिपादकतया विनियुक्तस्यार्थान्तरत्वकल्पनोपपत्तेः । दृश्यते हि विनियोगभेदेन मन्त्राणामर्थभेदः । मन्त्रप्रतिपाद्यं सर्वभूतात्मत्वमपि पूर्ववदेवोपासनार्थं भविष्यति। पुरुषत्वं तु पूर्णत्वात् । त्रिपादस्यामृतं दिवीत्येतत्तु बाह्यशरीरहृदयाकाशान्तरत्वाभिप्रायं व्याख्येयम्। गायत्र्यामेव ऋगुदाहरणानन्तरं हीदं वाक्यं पठ्यते—'यद्वैतत् ब्रह्मेदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो योऽयं बहिर्धा पुरुषादाकाशोऽयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशोऽयं वाव सयोऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदयआकाशस्तदेतत् पूर्णमप्रवृत्ती'ति । अत्र हि वाक्ये ब्रह्मशब्दो वेदैकदेशभूतायां गायत्र्यामुपपन्न एव । तस्या एव च गायत्र्याश्शरीरबाह्यशरीरान्तराकाशहृदयाकाशाभेदस्य ध्यानार्थं प्रतिपादनात् द्युशब्दस्य चाकाशपरत्वेऽप्युपपत्तेः तदभिप्रायं त्रिपादमृतन्दिवीत्युपपन्नम् । तस्यामेवोपासनार्थं पूर्णत्वगुणविधानात् पूर्णत्वात् पुरुष इति निरुक्तानुसारेण पुरुषत्वमुपपन्नम् । गायत्र्युपहितेन रूपेण ब्रह्मध्यानोपदेशादित्यभिप्रायः । तथा चेतोर्पणनिगदादितिसूत्रांशं व्याचष्टे—**तथेत्यादिना** ।

परिहारभागगतसौत्रनत्रर्थमाह—**न ह्यक्षरेति** । न च वाक्यशेषानुसारेण तस्य गौणत्वम् । यथाश्रुतार्थस्वीकारेऽपि वाक्यशेषस्य गायत्र्यवच्छिन्नब्रह्मस्तावकत्वेन ब्रह्मोपाधिभूतायाः गायत्र्या वा वागात्मत्वस्योपासनार्थं प्रतिपादकत्वेनोपपन्नस्य गौणताप्रतिपादनपरत्वस्य कल्पयितुमशक्यत्वात् । न च गायत्र्यवच्छिन्नस्य ब्रह्मणस्सर्वात्मत्वं अनुपपन्नमिति वाच्यम् । न हि गायत्रीसम्बन्धावच्छेदेनैव सर्वात्मत्वं विवक्षितम् । अपि तु यस्मिन् ब्रह्मणि गायत्रीसम्बन्धो विद्यते, तस्य सर्वात्मत्वमिति । ततश्चात्राजहल्लक्षणया गायत्रीछन्दसोपहितं ब्रह्म गायत्रीपदेन लक्ष्यते। तथा हि दर्शनमित्यमुमंशं व्याचष्टे—**तथान्यत्रापीति** । तथा चेतोऽर्पणनिगदादिति सौत्रांशं गायत्रीछन्दस्सादृश्येन लक्षिते ब्रह्मणि ध्यानोपदेशादित्यर्थपरतया मतान्तरेण व्याचष्टे—**अपर आहेति** । पूर्वस्मिन्व्याख्याने अजहल्लक्षणास्वीकाराच्छन्दसोऽप्युपास्यकोटौ उपाधितया निवेशोऽस्ति । इह तु व्याख्याने गौण्या वृत्तेः स्वीकारात् गायत्रीपदमुख्यार्थगतो यश्चतुष्पात्त्वगुणः, तद्विशिष्टतया ब्रह्म बोध्यते इति छन्दसो नोपास्यकोटौ निवेश इति वैलक्षण्यं द्योतयितुं साक्षादित्युक्तम् । विकारविनिर्मुक्तमेव ब्रह्म गायत्रीपदेन प्रतिपाद्यत इत्यन्वयः । **तथा ब्रह्म चतुष्पादिति** । तावानस्य महिमेति ऋक्पर्यालोचनयेति भावः । अस्मिन्व्याख्याने तथाहीति सूत्रांशं योजयति—**तथान्यत्रापीति** । **ते वा एत इति** । अधिदैवतं वायुस्तत्र लीयमानाग्न्यादयश्चत्वार इति पञ्चाध्यात्मं प्राणस्तत्र लीयमाना वागादयश्चत्वारः तेषां च परस्परमन्यत्वं ते दश । **तत्कृतमिति** । द्यूतं द्विविधम् । एकद्वित्रिचतुर्बिन्दुयुक्तपार्श्वचतुष्टयविशिष्टैकाक्षनिपातनं बह्वक्षनिपातनं च। तत्रैकोऽक्षो यत्र चतुर्बिन्दुयुक्तपार्श्वोपरिभावेन पतति यत्र वा न्युप्तेषु बहुष्वक्षेषु चतुष्कशो विभज्यमानेषु अन्तिमो भागः चतुस्सङ्ख्यो गिशिष्यते तदुभयमपि द्यूतं कृत कृतसंज्ञमिति द्यूतशास्त्रमर्यादा । चतुस्सङ्ख्यायुतं च कृतं दशसङ्ख्यमित्यपि वक्तुं शक्यते । चतुर्षु हि त्रयोऽन्तर्भवन्ति, एवं सप्त, त्रिषु द्वावेवं नव, द्वयोरेकः एवं दश । वाय्वादयः प्राणादयश्च दशेति सङ्ख्यासाम्यात् कृतत्वोपचारः । यद्यपि चतुर्षु न मुख्यं दशत्वं, तथापि यथा दशस्वेकद्वित्रिचतुस्सङ्ख्यावटितत्वम् , एवं चतुर्ष्वप्येकद्वित्रिचतुस्सङ्ख्याघटितत्वमस्तीति दशत्वरूपं गुणमपि गौणमादाय कृतत्वोपचारो द्रष्टव्यः । वाय्वादीनां दशत्वात् विराट्त्वं कृतं हि 'दशाक्षरा विराडन्नं विराडि'ति श्रुतेर्दशत्वसङ्ख्यामन्तर्भावयदन्नमत्तीव । अतस्तत्त्वेनोपचरिता वाय्वादयोऽप्यन्नादिन इति । प्रकृते च वाय्वादिषु दशत्वसङ्ख्यासाम्यात् प्रयुक्तश्छन्दोवाचको विराट्च्छब्दो दृष्टान्तः । पूर्वं साक्षात्पदेन

उपक्षिप्तमर्थं स्पष्टयति—**अस्मिन् पक्ष इति** । अत्रापर आहेत्यस्वरसोद्भावनम् । तस्यायमाशयः । अजहल्लक्षणया मुख्यार्थस्यापि वाक्यार्थकोटौ विवक्षायां सम्भवन्त्यां तत्परित्यागेन गौणार्थग्रहणमन्याय्यम् । अपि चोद्भूतेन गुणेन सादृश्यं वक्तव्यम् । न च गायत्र्याश्चतुष्पदात्वमुद्भूतम् । न चाक्षरगणनया क्लिष्टगत्या सम्पादितस्य सादृश्यस्य गौणवृत्तिनिर्वाहकता व्युत्पन्ना । तथासति वराहशब्दस्य वायसार्थकत्वशङ्कानिरासपूर्वकं सूकरार्थत्वसाधनं यववराहाधिकरणोदाहृतेन 'वराहं गावोऽनुधावन्ती'ति वाक्यशेषेण कृतमसङ्गतं स्यात् । तत्र हि गावोऽनुधावन्तीति शब्दविवक्षितचतुष्पात्त्वसादृश्यं वायसे नान्वेतीति गोसदृशश्चतुष्पात् सूकर एव वराहशब्दार्थः । न तु द्विपाद्वायसः । क्लिष्टगत्या तु सादृश्यं गोनिरूपितं वायसेऽप्यस्तीति वक्तुं शक्यम् । एकैकस्मिन् भागे विद्यमानयोः पादयोः एकपादत्वविवक्षया द्विपात्त्वस्यापि सम्भवात् । एतेन इन्द्रश्शचीपतिर्बलेन पीडितः दुश्च्यवनो वृषा समत्सुसासहिरिति क्वचित् गायत्री षड्भिरक्षरैश्चतुष्पदापि स्तुत एवास्ति । तामादाय गायत्रीशब्दश्चतुष्पात्त्वेन ब्रह्मणि गौणो भविष्यतीत्यपि शङ्का परास्ता । तस्याप्रसिद्धत्वेन तामादाय सादृश्यस्यानिर्वाहात् । न ह्यौत्पातिकी काचिद्द्विपदी गौर्जातेति तामादाय सादृश्यं निर्वाह्य वराहशब्दो वायसवाचक इति स्वीकृतम् । न च सैषा चतुष्पदा षड्विधा गायत्रीति वाक्यशेषेणैवास्मिन् प्रकरणे गायत्र्याश्चतुष्पात्त्वकल्पनात्तदनुसारेण काल्पनिकं सादृश्यमादायापि गायत्रीपदस्य ब्रह्मणि वर्तनं भविष्यतीति वाच्यम् । 'भूतादिपादव्यपदेशोपपत्तेश्चैवमि'ति सूत्रे तस्य वाक्यस्य ब्रह्मण्येव चतुष्पात्त्वकल्पनपरत्वस्य वक्ष्यमाणत्वेन ऋचि चतुष्पात्त्वकल्पनालाभात् । इदं तु स्यात् । गायत्रीशब्दश्चतुष्पात्त्वगुणेन ब्रह्मणि न वर्तत इत्युच्यते । अपि तु त्रिपात्त्वेन । स च गुणो गायत्र्यामृचि प्रसिद्ध एव । ब्रह्मणि तु त्रिपादस्यामृतन्दिवीति वाक्यशेषानुसारेण सम्पादितः । न चास्मिन्पक्षे क्लिष्टगत्या सादृश्यकल्पनाभावेपि गायत्र्युपहितब्रह्मलक्षणायां मुख्यार्थापरित्यागात् प्रसिद्धार्थानुसारिणी सा लक्षणा । त्रिपात्त्वगुणेन ब्रह्मणि गायत्रीपदस्य गौणवृत्तिकल्पने तु प्रसिद्धार्थत्यागात् प्रसिद्ध्यननुसारित्वम् । तच्च न युक्तमिति वाच्यम् । 'अत्ता चराचरग्रहणा'दित्यधिकरणे वक्ष्यमाणेन प्रसिद्धिवाक्यशेषानुसारिण्योर्लक्षणयोर्मध्ये वाक्यशेषानुसारिण्येव लक्षणा ज्यायसी, न प्रसिद्ध्यनुसारिणी'ति न्यायेन तस्यादोषत्वात् । इह च ब्रह्मणि त्रिपात्त्वकल्पनस्य गायत्रीशब्दो ब्रह्मणि कथं गौण इति शङ्कानिरास एव प्रयोजनमिति । न स्यात् । बहुषूपाधिषु सत्सु गायत्रीऋच एव उपाधित्वकल्पनं किमर्थमिति शङ्कानिरासार्थं

तस्मिन्नपि पक्षे वाक्यशेषगतत्रिपात्त्वकल्पनस्य उपपन्नत्वेन वाक्यशेषस्य गौणवृत्त्यैकपक्षपातित्वाभावात् । तस्य भूरिति शिर इति अभेदानुसन्धान इव तदुपहितानुसन्धानेऽपि साहश्योक्तेस्सम्भवात् । अस्तु वा अपर आहेत्यादिना उक्तः पक्षः । तस्मिन्नपि पक्षे न गायत्रीपदे ब्रह्मपरता हीयते इत्याह—**सर्वथापीति** ॥२९॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥

**न हि ब्रह्मानाश्रयण इति** । न च प्रकृते भूतादय एव पादा ग्राह्या इत्यत्र नियामकाभावः । 'गायत्री वा इदमि'तिपूर्ववाक्ये सर्वभूताद्यात्मतया निरूपिताया गायत्र्याः सैषेतिपदपरामर्शाच्चतुष्पदेति पूर्वोक्तप्रकारस्यैव निगमनमेतदित्यवगम्यते । न च तथासति वागात्मतयापि गायत्र्या निरूपितत्वात् पञ्चपदेति वक्तव्यम् । 'वाग्वा इदं सर्वं भूतमि'ति वाक्यस्य हेतुवन्निगदार्थवादन्यायेन सर्वभूतात्मकत्वोपपादकतया अस्यां हीदं भूतं प्रतिष्ठितमिति वाक्यवत् भिन्नकक्ष्यारूढत्वेन तदर्थस्य षड्विधेतिपदेन सङ्ग्रहोपपत्तेः । षड्विधेत्यनेन हि वागात्मना यद्गानत्राणहेतुत्वरूपं प्रकारद्वयमुक्तं, यच्च पृथिव्यात्मना भूतप्रतिष्ठात्वभूतानतिक्रमणीयत्वरूपं प्रकारद्वयं, यच्च शरीरहृदयात्मना प्राणप्रतिष्ठात्वप्राणानतिक्रमणीयत्वरूपं प्रकारद्वयं, तदुच्यते । अतो न चतुष्पदेत्यस्य ब्रह्मणि प्रकृतसर्वात्मत्वनिगमनाभिप्रायत्वे न काचिदनुपपत्तिः । 'टावृचीत्यनुशासनविरोधश्च नास्ति । आध्यासिकेनाभेदेन ऋगुपहिते ब्रह्मणि गायत्रीपदप्रयोगवत् ऋगनुशिष्टस्य टापोऽपि प्रयोगे अनुपपत्तेरभावात् । सौत्रचशब्दार्थमाह—**अपि चेत्यादिना** । न च गायत्रीपदमुख्यार्थानुरोधेन तावानिति मन्त्र एव ऋक्परोऽस्त्वित्युक्तं साधु । तावानिति मन्त्रस्य वा गायत्रीपदस्य वा स्वारस्यं भञ्जनीयमिति विशये अन्यत्र निर्णीतार्थस्य प्रकृते सम्मतित्वेन उदाहृतत्वात् । अभ्यस्तस्यापि गायत्रीपदस्यानिर्णीतार्थतया तदनुसारेणैव नयनोपपत्तेः । न च पुरुषसूक्ते सहस्रशीर्षत्वादिमहिमा प्रस्तुतः । इह तु सर्वभूतात्मत्वादिरिति कथं पुरुषसूक्ते मन्त्रस्य योऽर्थः स एवेह सङ्ग्रहीतुं शक्यत इति वाच्यम् । उभयत्रापि प्रपञ्चात्मतानिरूपणेन तावन्मात्रमेव ब्रह्मस्वरूपमिति शङ्कानिरासाय सर्वोऽप्ययं प्रपञ्चः तस्य विभूतिभूतः तदेकदेश इव । परमात्मा तु त्रिपादमृतात्मकस्ततो ज्यायानित्यर्थस्याविशेषात् । **यद्वैतद्ब्रह्मेति चेति** । अत्र यत्पदेन प्रकृतं गायत्रीपदप्रतिपाद्यमाकृष्य ब्रह्मत्वसम्बन्धानुवादात् अवगम्यते गायत्रीशब्दो ब्रह्मपर इति । न च ब्रह्मपदस्य वेदपरत्वं मुख्यार्थत्यागप्रसङ्गादिति भावः । अपि च प्रकृतस्य गायत्रीपदप्रतिपाद्यस्य हृदयाद्याकाशा-

भेदेनोपासनं विधाय हृदयस्य प्रागादिषु चतसृषु दिक्षूर्ध्वं च पञ्च यानि छिद्राणि तेषु प्राणव्यानापानसमानोदानानादित्यचन्द्राग्निपर्जन्याकाशदेवताभिश्चक्षुश्श्रोत्रवाङ्मनोवायुसम्बन्धिनीभिः अधिष्ठितानानुक्रम्य 'ते वा एते पञ्च ब्रह्मपुरुषास्स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गलोकस्य द्वारपान् वेदास्य कुले वीरो जायते' इत्येवमाम्नायते । अत्र गायत्रीपदार्थं प्रति वेश्मत्वेन कल्पिते हृदये पञ्चसु छिद्रेषु द्वारत्वेन कल्पितेषु विद्यमानान् द्वारपालत्वेन ध्येयान् प्राणादीन् प्रति ब्रह्मपुरुषत्वाध्यासो गायत्र्या ब्रह्मताङ्गमयति । तदाह—**ते वा एते पञ्च ब्रह्म पुरुषा इतीति** । सुषिः छिद्रं । **ब्रह्मसम्बन्धितायां विवक्षितायामिति** । तद्विवक्षा च गायत्र्या अब्रह्मत्वे नोपपद्यत इति भावः ॥ २६ ॥

# उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।२७।

**तस्मान्न प्रत्यभिज्ञानमस्तीति** । न च यत्पदेनानुवादत्वे निर्णीते द्युसम्बन्धात् प्रत्यभिज्ञानं सम्भवतीति वक्तुं युक्तम् । प्रधानभूतविभक्त्यर्थवैलक्षण्येन भेदावगमे सति प्रत्यभिज्ञाया अप्रधानप्रकृत्यर्थसम्पन्नाया अप्रयोजकत्वात् । न च विभक्त्यर्थसंख्यावदपादानत्वाधिकरणत्वादिकारकरूपोऽपि विभक्त्यर्थः प्रकृत्यर्थविशेषणमिति वाच्यम् । प्रत्ययार्थः प्रधानमितिव्युत्पत्तेः 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वादि'तिपाणिनिसूत्रेणानुमोदितायास्संख्यादिषु सङ्कोचमात्रेण सर्वत्र सङ्कोचायोगात् कारकार्थप्राधान्येनैव शाब्दप्रत्ययाच्च । ततश्च विभक्त्यर्थस्वारस्येन पूर्वत्र त्रिपादस्यामृतं दिवी'त्यत्र द्युलोकाधिकरणकं तदन्तर्गतमवगम्यते । इह तु परो दिव'इति द्युलोकानन्तर्गतं ततः परमवगम्यते पञ्चमीस्वारस्येन । अपि च पूर्वं त्रिपादमृतमितिशब्देन निर्दिष्टम् । इह तु ज्योतिश्शब्देन । अतः शब्दभेदादप्यर्थभेदोऽवगम्यते । अपि च 'अथ यदत' इत्यत्राथशब्दोऽधिकारार्थः । न च पूर्वं निरूपितस्यैव निरूपणमारभ्यत इति शक्यं वक्तुम् । न च यत्पदावगतं अनुवादत्वं प्रकृते निर्वोढुं शक्यते । अथ यदतः पर इति वाक्यप्रतिपाद्यस्य सर्वोत्तरलोकवर्तनादेः पूर्ववाक्येनाप्राप्ततया तदनुवादकत्वासम्भवात् । ततश्चोक्तेन प्रकारेणाथयदत इतिवाक्यस्य प्रकृतार्थपरत्वासम्भवे यच्छब्दोऽपि उत्सर्गप्राप्तं प्रकृतार्थपरामर्शित्वं विहाय प्रकरिष्यमाणार्थपरामर्शी भविष्यति । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इतिवत् । **उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं विरुध्यत इत्यादि** । अयं भावः—अत्र यत्पदेनावगतं यत् प्रकृतत्वं ज्योतिषः, यच्च तद्वाक्यस्यानुवादकत्वं द्युसम्बन्धोपोद्बलितं न तदथशब्दा-

दिभिरन्यथा कर्तुं शक्यते । अथशब्दो ह्यनेकार्थः । स च प्रकृते आनन्तर्यार्थ इत्यपि वक्तुं शक्यम् । अथशब्दं विनाऽप्यवगम्यमानस्य चानन्तर्यस्य पुनर्निर्देशो विशिष्टानन्तर्यद्योतनार्थः । तच्च वैशिष्ट्यं गायत्रीवाक्यसन्दर्भस्य ज्योतिर्वाक्यार्थोपयोगितायां पर्यवस्यत् यत्पदस्य प्रकृतार्थपरतामेव द्रढयति । यद्यपि विभक्त्यर्थः कारकं प्रधानं, तथापि न प्रकृत्यर्थावगतमैक्यं विरुणद्धि । सप्तम्युक्तस्याधिकरणत्वस्यैव व्यवस्थापकः पञ्चमीप्रयोग इत्युपपत्तेः । यथा वृक्षाग्रे निर्दिष्टश्श्येनो वृक्षात् पर इति निर्दिश्यमानोऽपि नाभेदबुद्धिं विरुणद्धि। सप्तम्यन्तत्वनिर्देशेन हि वृक्षाग्रगतेषु पल्लवेषु निलीनोऽपि पक्षी प्रतिपादयितुं शक्यः । पल्लवानामग्रभागे स्थितः तैरनावृतोऽपि शक्यो निर्देष्टुं । ततस्साधारणः सप्तमीनिर्देशो भवति । पञ्चमीनिर्देशे तु वृक्षाग्रमध्यवर्ती श्येनो न प्रतिपादयितुं शक्यते । वृक्षाग्रमध्यवर्तिनो वृक्षाग्रात् पर इति निर्देशानुपपत्तेः । अतो वृक्षाग्रात् पर इति निर्देशे वृक्षाग्रान्त्यावयवभूताः ये पल्लवाः तदुपरिभावो लभ्यते । तत्र च यद्यपि वृक्षात् परभावो वृक्षासंलग्नस्यापि सम्भवति, तथापि सप्तमीबलेन वृक्षाग्रसंश्लेषस्यावगमितत्वात् पञ्चम्या वृक्षाग्रोपरिसंलग्न एव पर्यवसानं भवति । ततश्च केवलसप्तमीनिर्देशे वृक्षाग्रमध्यस्थितिरपि लभ्यते । केवलपञ्चमीनिर्देशे वृक्षाग्रासंलग्नस्थितिरपि गम्यते । उभयनिर्देशे तु मध्यभागासंलग्नस्थितिव्यावर्तनेन अग्रोपरिभागे संलग्न एव श्येनोऽवगम्यत इति सप्तमीपञ्चम्योः परस्परार्थनियामकतया न विरोधः । तथा दिवि दिव इति निर्देशेऽपि न विरोधः । द्युलोके हि द्वेधा भूर्भुवस्सुवर्महर्जनस्तपरसत्यमिति सप्तलोकीपक्षे पृथिवी भूलोकः पृथिव्यादित्ययोर्मध्ये भुवर्लोकः आदित्यादुपरि ध्रुवलोकान्तस्त्रिदशनिवासो द्युलोकः। स एव स्वरिति व्यवह्रियते । तदुपरि महरादिलोका इत्येकः प्रकारः। भूर्भुवस्सुवरिति त्रिलोकीपक्षे आद्यौ पूर्ववदेव । स्वर्लोकस्तु सूर्यमण्डलमारभ्य सत्यलोकान्तः। द्युशब्दार्थोऽपि स एव। त्रिपादस्यामृतं दिवीत्यत्र तु कः पक्षः विवक्षित इति विशये दिवः पर इति उत्तरवाक्यपर्यालोचनया लोकत्रयपक्ष एव विवक्षित इति निर्णीयते । सप्तलोकपक्षमादाय द्युलोकग्रहणे विश्वतः पृष्ठेष्वित्याद्यनुपपत्तेः। ततोऽप्युपरि विश्वान्तर्गतानां महरादीनां विद्यमानत्वात् । लोकत्रयपक्षमादाय सत्यलोकान्तद्युलोकविवक्षया तदग्रभागावच्छेदेन विद्यमानताप्रतिपादको दिवीति निर्देशोऽभ्युपगम्यते चेद्विश्वतः पृष्ठेष्वित्यादि समञ्जसं भवति। ततश्च द्युसम्बन्धरूपप्रत्यभिज्ञापकसचिवयत्पदेनास्य वाक्यस्य गायत्रीवाक्यस्य च उपासनांशमादाय भिन्नार्थकस्याप्युपास्यांशे समानार्थतायां सम्पादितायां दिवी-

त्यत्र ज्योतिर्वाक्यप्रतिपाद्यो विश्वतः पृष्ठेष्वित्यादिसर्वोऽप्यर्थः संगृहीतः इहानुवादव्याजेन विवृत इति सिध्यति । अतश्चानुवादत्वमप्यस्य सङ्गतं भवति। दृश्यते च पुरोवादेन संगृहीतोऽर्थोऽनुवादेन विव्रियमाणः । राजपुरुषस्समागतोऽस्तीति पुरोवादे पुरुषसामान्यमवगतं यो राजामात्यः पुरुषधौरेयः समागतोऽस्ति, तस्योपसर्पणं कुर्वित्युपसर्पणविधिपरे वाक्ये पुरोवादगतस्य पुरुषपदस्यामात्यत्वादिना अनुवादेन विवरणात् । अतो न द्युशब्दसचिवयत्पदस्वारस्यं प्रकृते हातव्यम् । भाष्ये परत इति प्रथमार्थे तसिः । एवं द्युलोकसंश्लिष्टमेव ब्रह्म दिवः परमिति निर्दिश्यत इति प्रतिपादितम् । केचित्तु द्युलोकासंश्लिष्टमेव दिवः परमिति निर्दिश्यते । दिवीति सप्तमी उदुम्बरे वसतीतिवत् सामीप्ये इति वदन्ति, तन्मतमाह—अपर आहेति । अत्रेदमनभिमतिबीजम् । आधाराधेयभावो यत्र तत्रैवाधिकरणसप्तमी मुख्या । सामीप्यं च नाधाराधेयभावप्रयोजकम् । परन्तूदम्बरे वसतीत्यादावाधारतारोपेण सप्तमीप्रयोगः । न चेह तथारोपे किञ्चन प्रमाणमस्ति । अपि चेह लोकत्रयपक्षे सर्वतः पृष्ठेषु विद्यमानस्यापि न द्युलोकासंश्लेषः । अतोऽसंश्लेषवादिना लोकसप्तकपक्षमादाय ध्रुवलोकान्तो द्युलोको वक्तव्यः । सत्यलोकाग्रभागे उत्तमेषु लोकेषु विद्यमानं च तेनासंस्पृष्टमिति वक्तव्यम् । अस्मिन्पक्षे सामीपिकाधारविद्यमानतापि न सम्भवति । ध्रुवलोकानन्तरं महराद्यनेकलोकव्यवहितसत्यलोकाग्रभागावच्छेदेन विद्यमानस्य ध्रुवलोकसमीपवर्तित्वानुपपत्तेः । न च पूर्वस्मिन्व्याख्यानेऽपि दिवः परमिति निर्देशः क्लिष्ट इति वाच्यम् । अव्यवहितानन्तर्येऽपि नद्याः परं पारमिति प्रयोगात् । वृक्षाग्रासंलग्नश्येने तु वृक्षाग्रे श्येन इति निर्देशो गौणसामीपिकाधारविवक्षया । पूर्वं त्रिपादमृतशब्दः । इह तु ज्योतिश्शब्द इति शब्दभेदादर्थभेद इति शङ्कामुपसंहारव्याजेन निराकरोति । तस्मादस्तीति । ऐकार्थ्ये निर्णीते उभयोश्शब्दयोरेकस्मिन्नर्थे पर्यवसानं भवति । यथा गोदोहनदर्शपूर्णमासयोरेकपुरुषकार्यत्वे निरूपिते स्वर्गकामपशुकामपदयोरेकपुरुषपरत्वम् । ज्योतिश्शब्दस्य ब्रह्मवाचकत्वमपि प्राग्दर्शितमेव ॥ २७ ॥

॥ इति ज्योतिरधिकरणम् ॥ १०॥

## प्राणस्तथानुगमात् ॥ २८ ॥

पूर्वं द्युसम्बन्धित्वं ब्रह्मलिङ्गं दीप्त्यादिरूपात् प्राकृतज्योतिर्लिङ्गात् बलवत् यच्छ्रुत्यनुगृहीतत्वादिति निरूपितम् । प्रकृते तु ब्रह्मलिङ्गस्य न तादृशं प्राबल्यप्रयोजकमस्तीति कथं ब्रह्मपरत्वमिति पूर्वपक्षोत्थानात् सङ्गतिः । देवता-

त्मा इन्द्र इत्यर्थः । **तत्र प्रसिद्धेर्वायुः प्राण इतीति** । ननु, बहुलिङ्गसमावेशे अनेकपरत्वमित्येव पूर्वपक्षयितुं युक्तम् । कथं प्राण इत्येव पूर्वपक्ष इति चेत् सोऽपि पूर्वपक्षोऽस्त्येव । परं तु 'जीवमुख्यप्राणलिङ्गादि'तिसूत्रविवरणावसरे स प्रदर्शयिष्यत इति नेह प्रदर्शितः । अनेन तु सूत्रेण प्राणपूर्वपक्ष एव निराचिकीर्षित इति स एवात्र प्रदर्श्यते । ननु, तेन सूत्रेण उपक्रमोपसंहारैकरूप्यात्मकतात्पर्यलिङ्गोपोद्बलितेन वाक्येन इतरलिङ्गानि ब्रह्मपरतयैव व्याख्येयानीति सिद्धान्तयिष्यते । एवं सति कथं प्राणपूर्वपक्षोऽवतरति । इत्थमुपक्रमोपसंहारैकरूप्येण एकवाक्यत्वसिद्ध्यर्थं ब्रह्मपरत्वमिति न सिध्यति । प्राणेऽप्युपक्रमोपसंहारैकरूप्यावगमात् । उपक्रमे हि प्राणोऽस्मि प्रज्ञात्मेति श्रुतम् । उपसंहारेऽपि स एष प्राण एव प्रज्ञात्मेति । न च ब्रह्मण्यप्युपक्रमोपसंहारैकरूप्यमस्तीति वाच्यम् । उपक्रमोपसंहारयोर्ब्रह्मविषयतामात्रेण तदैकरूप्यस्याभावात् । उपक्रमे हि हिततमत्वं श्रुतम् । तच्च मोक्षाख्यं ब्रह्मलिङ्गम् । उपसंहारे तु 'आनन्दोऽजरोऽमृत' इति अन्यदेव ब्रह्मलिङ्गम् । अतः उपक्रमोपसंहारयोर्ब्रह्मसम्बन्धितामात्रेण कथं तदैकरूप्यम् । प्राणे तु शब्दतोऽर्थतश्चोपक्रमोपसंहारयोरैकरूप्यं प्रत्यभिज्ञायते । अतः प्राणविषयकावेव उपक्रमोपसंहारौ प्रबलौ । ननु, तावता ब्रह्मोपक्रमोपसंहारावपेक्ष्य कथं प्राबल्यं प्राणविषययोः तयोर्भवति । एवमुपक्रमोपसंहारसंस्पर्शित्वं एकं तात्पर्यलिङ्गम् । तच्च यद्यपि प्राणब्रह्मसाधारणम् । उभयप्रमाणस्याप्युपक्रमोपसंहारसंस्पर्शित्वात् । प्राणप्रमाणे तूपक्रमोपसंहारयोरैकरूप्यात् । अभ्यासोऽप्यपरं तात्पर्यलिङ्गं भवति । अतस्तात्पर्यलिङ्गद्वयसमावेशात् प्राणश्रुतेः प्राबल्यमिति प्राणपूर्वपक्षाभिप्रायः । तथानुगमादिति सौत्रं पदमुपक्रमोपसंहारसम्बन्धित्वेनानुगमादित्यर्थपरतया व्याचष्टे— **तथा हि पौर्वापर्येणेत्यादिना** । न च तावता ब्रह्मपरत्वं नायाति । प्राण एव परं तयोरैकरूप्यमिति स एव प्रतिपाद्यः पर्यवस्यतीत्युक्तं युक्तम् । एवं हि सति जीव एव प्रतिपाद्यः किं न स्यात् । प्रज्ञाशब्दो हि जीववाचकोऽस्मिन्प्रकरणेऽवधार्यते । अथ यथास्यै प्रज्ञाया इति प्रज्ञाशब्दोदितमुपक्रम्य वागादिसम्बन्धित्वस्य 'वागेवास्या एकमङ्गमदूदुहत्' इत्यादिना प्रतिपादनात् । ततश्चोपक्रमोपसंहारैकरूप्यं जीवप्राणविषयं परस्परकलहग्रहगृहीतं नैकवाक्यतापादनक्षमम् । तत्र चेदेवमुच्यते—प्रज्ञाशब्दः प्राणशब्दानुसारेणान्यथा नेतव्यः । प्राणशब्दस्य प्रथमपठितत्वान्मुख्यार्थावश्यंभावे प्रज्ञाशब्दस्तद्दृष्टिविधानाभिप्रायः तत्र गौणो भविष्यति । जीवलिङ्गानि च प्राणाध्यसनीये जीव एव योज्यानीति । तथासति अ-

भ्यस्तां प्राणश्रुतिमपेक्ष्यापि ब्रह्मलिङ्गस्य प्राबल्यं प्राप्नोति । उपक्रमोपसंहारयोः प्राणश्रुतेः प्रागेव ब्रह्मलिङ्गावगमात् । उपक्रमे हि मोक्षाख्यं हिततमत्वं प्राणश्रुतिमपेक्ष्य प्रथमपठितं प्रश्नप्रतिवचनरूपतात्पर्यलिङ्गोपोद्बलितं च । उपसंहारेऽपि 'नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः । 'स एष प्राण एव प्रज्ञात्मे' ति सर्ववस्तुनिषेधपूर्वकं सर्वप्रपञ्चविवर्ताधिष्ठानत्वरूपं ब्रह्मलिङ्गं प्राणश्रुतिमपेक्ष्य प्रथमपठितम् । अतस्तदनुसारेण प्राणश्रुतिरेवान्यथा व्याख्येया । अपि च कृत्स्नस्य प्रकरणस्य प्राणपरत्वे जीवलिङ्गस्य वागादिसम्बन्धित्वस्य ब्रह्मलिङ्गस्यानन्दत्वादेर्मनोब्रह्मेत्यादिवत् जीवब्रह्मदृष्टिविधानाभिप्रायेण नयनं वक्तव्यम् । ततश्चात्यन्तं क्लेशः । ब्रह्मपक्षे तु ब्रह्मण्यपि प्राणश्रुत्यादयो योजयितुं शक्याः । यथा हि शुक्तौ रजतभ्रमदशायां प्रयुज्यमानः इदं रजतमितीदंपदसामानाधिकरण्येन रजतशब्दोऽसत्यरजततादात्म्यापन्नशुक्तिपर्यन्तः । अन्यथा सामानाधिकरण्यायोगात् । एवं व्यवहारदशायां प्रयुज्यमाना घटादिशब्दा अपि न केवलं जडांशपर्यवसिताः । अपि त्वसत्यघटाद्युपहितब्रह्मपर्यन्ताः । अन्यथा सन् घट इति सामानाधिकरण्यायोगात् । अत एव 'प्रतिबोधविदितमि'तिश्रुत्यनुसारिभिर्वृद्धैः सर्वप्रमाणवेद्यत्वं ब्रह्मणोऽभ्युपगतम् । ततश्च यद्यपि प्राणादिशब्दा ब्रह्मवाचका एव भवन्ति, तथापि यथा ब्रह्मेश्वरादिशब्दा ब्राह्मेण रूपेण तत्प्रतिपादकाः नैवमेते । किन्त्ववच्छिन्नं घटादिसमानयोगक्षेमं ब्रह्म प्रतिपादयन्तीति न ब्रह्मणि ते स्वारस्येन वर्तन्त इति जडविनिर्मुक्तचैतन्ये भागत्यागलक्षणाश्रीयते । इयं च लक्षणा नातीव क्लिष्टा । शक्तिविषयादन्यत्रागमनात् । प्राणादिलिङ्गानि तु सर्वानुस्यूते ब्रह्मणि विद्यन्त एवेति न तत्रातिक्लेशः । तस्मादुपक्रमोपसंहाराभ्यां ब्रह्मपरत्वमेव वाक्यस्येत्युपसंहरति—तस्मात् प्राणो ब्रह्मेति ॥२८॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥२९॥

हिततमत्वरूपे वरे प्रतर्दनेन प्रार्थिते इन्द्रवचनं मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यं मां विजानीया इति अत्रोपक्रमे हिततमत्वेनेन्द्रविज्ञानमेवावगम्यते । न च मोक्षरूपं हिततमं नेन्द्रविज्ञानसाध्यमिति वाच्यम् । विजानीयादिति वाक्ये स्वमुपक्षिप्य मामेवेत्यवधारणेन इन्द्रादन्यत्र वाक्य-

स्य नेतुमशक्यतयोत्तरत्रेन्द्रेण स्वस्य सर्वपापास्पृष्टत्वं त्रिशीर्षाणं त्वाष्ट्रमहनमित्यादिना निरूप्य तत्क्रतुन्यायावलम्बनेन स यो मां विजानीयात् न ह वै तस्य केन च कर्मणा लोको मीयत इत्युपासकस्यापि सर्वपापास्पृष्टत्वस्य प्रतिपादिततया चोपक्रान्ताहिततमत्वमपि सर्वतापरहितत्वमेव भवतीत्यवगम्यते । तदाह— **वक्ताहीन्द्रोनाम कश्चिद्विग्रहवान् देवताविशेष इत्यादिना । अरुन्मुखान्यतीनिति** । रौति यथार्थं वक्तीति रुत् वेदान्तवाक्यं, तन्मुखे येषां तेऽरुन्मुखाः स्वाश्रमोचितवेदान्तार्थश्रवणमनननिदिध्यासननिरताः । तद्भिन्ना अरुन्मुखाः ब्रह्मनिष्ठाविरोधिव्यापारासक्ताः । अरुन्मुखा इत्यस्यायमर्थः छन्दोगब्राह्मणपर्यालोचनयावगम्यते । एवं हि तत्र श्रूयते—'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तेषां त्रय उदशिष्यन्त पृथुरश्मिबृहद्गिरिरायोवाजस्तेऽब्रुवन् को न इमान् पुत्रान् भरिष्यतीति अहमितीन्द्रोऽब्रवीदिति । अत्र को न इमान् पुत्रान् भरिष्यतीति वाक्यशेषपर्यालोचनया अयमर्थोऽवगम्यते । पुत्राद्यासक्तेषु बहुषु यतिषु इन्द्रेण सालावृकेभ्यः दत्तेष्ववशिष्टास्त्रयोऽस्माभिरपि पुत्राद्यासक्तिस्सम्पादिता चेत् अस्मानपि सालावृकेभ्य इन्द्रो दास्यति पुत्राद्यासक्त्यसम्पादने तेषां जीवनं कथं स्यादिति व्यग्रचित्ता इन्द्रमपृच्छन् को न इमान् भरिष्यतीति पुत्रभरणग्रहणं च वेदान्तनिष्ठाविरुद्धलौकिकव्यापारमात्रोपलक्षकम् । निषिद्धत्वाविशेषात् । अतश्छन्दोगवाक्यैकार्थ्यायारुन्मुखानित्यत्रापि ब्रह्मनिष्ठताराहित्यमेव विवक्षितम् । प्राणजीवलिङ्गानि 'इन्द्रो यो जयति प्राणत्वं चेन्द्रस्ये'त्यादिना । प्राणकार्यबलाभिमानिदेवतात्वात् प्राणलिङ्गानीन्द्रे उपपद्यन्ते । वक्तृत्वादीनि जीवसामान्यलिङ्गान्यपि जीवविशेषे इन्द्रे उपपद्यन्ते । अरनाभिनिदर्शनपूर्वकं सर्वाधारत्वं अमृतत्वं साध्वसाधुकर्मकारयितृत्वं सर्वेश्वरत्वमित्येवमादीनि ब्रह्मलिङ्गानि तु उपसंहारगतत्वादुपक्रान्तेन्द्रस्तुत्यभिप्रायाण्येव योजनीयानि। स म आत्मेति विद्यादिति भेदनिर्देशोऽपि राहोश्शिरइतिवद्योजनीय इत्याह—**निश्चितेचैवन्देवतात्मोपदेश इति** । अध्यात्मसम्बन्धः प्रत्यगात्मसम्बन्ध इति प्रश्नप्रतिवचनाभ्यां प्रतिपिपादयिषितस्य हिततमत्वस्य न पापाभावमात्रतया व्याख्यानमुचितम् । उत्तरत्रेन्द्रस्य पापासंश्लेषप्रतिपादनं तु हिततमशब्दोदितमोक्षसाधनज्ञानस्तुत्यर्थमिति 'तस्य मे तत्र न लोम च मीयत' इति वाक्ये तस्येतिशब्देन प्रजापतिविद्याप्रसिद्धब्रह्मवित्त्वस्य उपक्षेपादवगम्यत इत्युत्तरसूत्रे भाष्य एव स्पुटं भविष्यति । अत उपक्रमो ब्रह्मपर एव । उपसंहारोऽपि स्वरसतो ब्रह्मपरो नेन्द्रस्तुत्यर्थतया योजयितुं उचितः । प्राणकार्ये बले इन्द्रस्य देवतात्वेन प्राणलिङ्गानां तत्र नयनमतिक्लिष्टम् । जीवसामान्यलिङ्गानां

जीवविशेषे इन्द्रे सङ्कोचोऽप्यतिक्लिष्टः । स म आत्मेतिवाक्यमपीन्द्रे क्लिष्टम् । तस्मादिह नेन्द्रः प्रतिपाद्यत इति परिहाराभिप्रायः । अस्तित्वे च प्राणानां निश्रेयसमिति प्राणानामिन्द्रियाणां निश्रेयसं शरीरे स्थितिर्मुख्यस्य प्राणस्यास्तित्वे विद्यमानत्वे भवति । तद्यथा रथस्येति । रथचक्रस्यारेषु नेमिनाभिमध्यगतासु तिर्यक्प्रोतशलाकासु नेमिः चक्रप्रान्ते विद्यमानं वर्तुलं काष्ठम् । नाभिः मध्यगतं शलाकाधारभूतं काष्ठम् । 'एता वागेवास्याः एकमङ्गमदूदुहत्तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रे'त्यादिनोक्तानामाद्या दश भूतमात्राः । प्रज्ञामात्रासु वागाद्यवच्छिन्नप्रज्ञात्मकजीवांशेषु दोहनपर्यायैर्निरूपितेषु। प्राणे प्रकरणिनि परमात्मनि । मामेव विजानीहीति वाक्यगतिनिरूपणपरमुत्तरसूत्रमवतारयति—कथन्तर्हि वक्तुरिति ॥२९॥

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।३०।

इन्द्रो हि कृतब्रह्माभेदसाक्षात्कार आत्मानमेवोपदिशति स्म । यथा वामदेवस्तत्त्वसाक्षात्कारवान् अस्मच्छब्दोल्लेखेनैव सर्वात्मत्वं व्यवहृतवान् । अतो मामेव विजानीहीति वाक्यगतस्य मामित्येतस्य विशुद्धप्रत्यङ्मात्रपर्यवसितत्वादेवकारोऽपि प्रत्यगात्मविषयज्ञानादन्यगोचरं ज्ञानं वारयति । ततश्चेन्द्र एवेह प्रतिपाद्यत इति न सिध्यति। तदाह—इन्द्रो नामेति । तद्यो यो देवानामिति । तत् प्रत्यगभिन्नपरमात्मस्वरूपम् । देवादीनां मध्ये य एव साक्षात्कृतवान् स एव तदभवत् ब्रह्माभवत् । तथा च ब्रह्मसाक्षात्कारात् ब्रह्मीभूतस्येन्द्रस्यास्मच्छब्दोल्लेखेन ब्रह्मोपदेशो न विरुध्यत इति भावः ॥३०॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।३१।

**तान्वरिष्ठः प्राण उवाचेति**। एतत् इत्थं परिदृश्यमानप्राणापानाद्यात्मना बाणं शरीरं अवष्टभ्य यथा शिथिलता गात्राणां न भवति, तथा तस्मिन्नात्मानं संयोज्य विधारयामि व्यवहारयोग्यं करोमि । द्वितीयमेतत्पदं शरीरविशेषणम् । 'अथ खलु प्राण एवे'ति कौषीतकिवाक्ये इदंशब्दस्थाने इमं शब्दं पठन्ति । तत्रेदंशब्दवच्छरीरविशेषणत्वं वक्तुमशक्यम् । विभिन्नलिङ्गत्वादित्यभिप्रेत्य तं पाठं व्याचष्टे । ये त्विमं शरीरमिति । तस्माज्जीवमुख्यप्राणयोरन्य-

तर उभौ वा प्रतीयेयाताम् । न ब्रह्मेतीति । नन्वत्रोपक्रमोपसंहारयोर्ब्रह्मसम्बन्धाद्ब्रह्मवाक्यत्वे निर्धारिते तदनुसारेण प्राणादिविषयश्रुतिलिङ्गादिकं नेतव्यमिति यत्त्रिसूत्र्या व्यवस्थापितं, तदाक्षिप्यते । तत्राक्षेपस्यायमभिप्रायः—आदावन्ते च यस्य पदार्थस्य प्रतिपादकं श्रुतिलिङ्गादिकमुपलभ्यते, तादृशसन्दर्भे मध्यगतानां पदानां समभिव्याहारविशेषमहिम्नोपक्रमोपसंहारसंस्पर्शिपदार्थप्रतिपादकतावसीयते । सम्भूयोच्चारितानां पदानां सहार्थप्रतिपादकत्वमिति व्युत्पत्तेः । यद्यपि मध्यगतो यः पदार्थः, तत्प्रतिपादकत्वेऽपि सर्वेषां पदानां स्वीक्रियमाणे सहार्थप्रतिपादकता निर्व्यूढा भवति, तथाप्यादावन्ते च यस्य पदार्थस्य संस्पर्शो वर्तते, तत्प्रतिपादकतयैव सम्भूयार्थप्रतिपादकतेत्यत्रोपक्रमोपसंहाररूपसमभिव्याहारविशेष एव नियामकः व्युत्पत्तेः । यथा पर्वतो वह्निमानित्यत्रोद्देश्यविधेयभावे पूर्वोत्तरपदत्वादिकम् । बहूनां च पदानां तत्तदर्थप्रतिपादकानां एकार्थप्रतिपादकत्वं एकस्यार्थस्य प्राधान्यम् । इतरेषां तदुपकारकत्वमिति विवक्षया निर्वहणीयम् । ततश्चोपक्रमोपसंहाराभ्यां एकार्थप्रतिपादकत्वरूपमेकवाक्यत्वं सिध्यदुपक्रमोपसंहारसंस्पर्शिपदार्थस्य प्राधान्यमुपक्षिप्यैव सिध्यति । ततश्च प्रकरणोत्थापकतापि तयोस्सिद्धा भवति । प्रधानाकांक्षा हि प्रकरणमित्युच्यते । उपक्रमोपसंहारसंस्पृष्टस्य प्राधान्यसिद्धौ सहार्थप्रतिपादकत्वानुसारेण समभिव्याहृतपदेषु मध्ये यस्य कस्यापि अनुसन्धानाभावे विवक्षितशाब्दबोधाजनकत्वात् प्रधानस्य सर्वैः पदैराकांक्षासत्त्वात् प्रकरणसिद्धिः । ततश्चोपक्रमोपसंहारयोः एकपदार्थसंस्पर्शेन प्रकरणं वाक्यं च तादृशैकपदार्थगोचरं सम्पन्नं भवति । एवमुपक्रमोपसंहारोन्नीतवाक्यप्रकरणाभ्यां प्राणादिगोचरश्रुतिलिङ्गानां कथमन्यथानयनम् । दुर्बलेन प्रबलस्यान्यथानयनायोगादिति । ततश्चोपक्रमोपसंहारावगतैकवाक्यतापरित्यागमभ्युपगम्य पूर्वपक्षे क्रियमाणे यावन्तोऽस्मिन् सन्दर्भे प्रतिपाद्याः ते सर्वेऽपि विवक्षिता इति स्वीकर्तव्यम् । ततश्चान्यतर इति पक्षस्य कथमुत्थानम् । नन्वत एवास्वरसात्तं पक्षं परित्यज्योभौ जीवप्राणौ विवक्षिताविति द्वितीयपक्ष आश्रीयत इतिचेत्, सोऽप्ययुक्तः । उपासात्रैविध्यादिति सूत्रभागे पूर्वपक्षिणं प्रति त्रिविधोपासनाप्रसञ्जनात् ब्रह्मापि पूर्वपक्ष्यभिमतमिति प्रतीयते । ननु, तदपि भाष्ये विवक्षितमेव । पूर्वपक्षमुखेन तदनुक्तिस्तु तस्मिन्नंशे सिद्धान्तिनो विप्रतिपत्त्यभावात् । न ब्रह्मेति भाष्यन्तु न ब्रह्मैवेत्येतदर्थकम् । एवं तर्हीन्द्रोऽपि विवक्षितोऽस्तु । तथा च पूर्वपक्षश्चतुष्टयविषयोऽस्तु । वाक्यभेदमभ्युपेत्य पूर्वपक्षावसरे इन्द्रपरित्यागकारणाभावात् । ततश्च यन्मां विजा-

नीयादिति वा 'प्राणोऽस्मि प्रज्ञात्मा तम्मामायुरमृतमित्युपास्स्वे'ति वेन्द्रोपासनाविधिः। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति, तस्मादेतदेवोक्थमुपासीते'ति प्राणोपासनाविधिः। 'न वाचं विजिज्ञासीत वक्तारं विद्यादि'त्येवमादौ जीवोपासनाविधिः। स म आत्मेतिविद्यादि'ति ब्रह्मोपासनाविधिः। यथा च स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत' इति वाक्ये ब्रह्मलिङ्गात् प्राणप्रज्ञात्मशब्दयोर्ब्रह्मपरत्वम्। एवं 'प्राणोऽस्मि प्रज्ञात्मे'ति वाक्येऽप्युत्तमपुरुषप्रयोगेण वक्तृलिङ्गेनेन्द्रपरत्वेऽपि प्राणप्रज्ञात्मशब्दयोर्नानुपपत्तिः। इन्द्रपरत्वे सन्दर्भस्याभ्युपगम्यमाने अध्यात्मसम्बन्धानुपपत्तिः। योक्ता, सास्मिन् पक्षे न प्राप्नोति। अध्यात्मसम्बन्धस्य यथायोग्यं प्राणजीवब्रह्मविषयत्वोपपत्तेः। तस्मात् उपासनात्रयमिति पक्षो न सम्भवतीतिचेत्, उच्यते–वाक्यभेदाभ्युपगमेऽपि इन्द्रोपासनाविषयकः पूर्वपक्षो नावतरति। 'यन्मां विजानीया'दितिवाक्यस्यैतदेवाहं मनुष्याय हिततमं मन्य इति पूर्ववाक्यानुसारेण मोक्षफलकोपासनाविधिपरत्वावगमेन 'स म आत्मेति विद्यादि'ति प्रकरणान्तश्रुतवाक्यसमानविषयत्वेन ब्रह्मपरत्वात्तम्मामायुरमृतामित्युपास्स्वेति वाक्यानन्तरं आयुः प्राणः प्राणो वा आयुः प्राण उत अमृतं यावद्ध्यस्मिन् शरीरे प्राणो वसति, तावदायुरिति आयुःप्रदत्वं सङ्ग्रहेण कीर्तितं प्राणस्य। तदनन्तरं च प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पमिति प्राणप्रज्ञापदार्थयोः व्यवस्थितफलसम्बन्धो दर्शितः। अनन्तरसन्दर्भे च यत् प्राणस्य आयुःप्रदत्वमुक्तं पूर्वं, तदेव प्राणे सति शरीरास्थितिः, तदुत्क्रमणे पतनं शरीरस्येत्यन्वयव्यतिरेकप्रदर्शनेन स्पष्टीकृत्योपसंहृतम् 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति। तदनन्तरं च यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति, तद्व्याख्यास्याम इत्युपक्रम्य सप्रपञ्चं वक्तृत्वादयो जीवधर्मा निरूपिताः 'न वाचं विजिज्ञासीत वक्तारं विद्या'दित्येवंप्रकारेण। ततश्च प्राणोऽस्मीति वाक्यस्य तदेकविषयकोत्तरसन्दर्भपर्यालोचनया प्राणजीवविषयकोपासनाद्वयविधिपरत्वमभ्युपेयम्। एवंसति व्यवस्थितफलनिर्देशोऽप्युपपन्नो भविष्यति। एतदेवोक्थमुपासीतेति तु तत्रैव गुणविधायकं भविष्यति। वक्तारं विद्यादित्येतदपि गुणविधिरेव एकेनोक्थशब्देन उदितः शरीरोत्थापकत्वगुणः प्राणे विधीयते, अन्येन जीवे वक्तृत्वादिगुणः। प्राणजीवोपासनापरेऽपि वाक्ये अस्मिन्नुत्तमपुरुषनिर्देशस्तु शास्त्रदृष्ट्या सर्वात्मत्वमस्तीति व्याख्येयः। अतो मां विजानीयादीत्यत्र प्राणोऽस्मीत्यत्र च नेन्द्रोपासनाविधिः सम्भवति। न च वाक्यान्तरं तदुपासनाविधायि विद्यते। अतो

वाक्यभेदपक्षे त्रीण्युपासनानीत्येव पूर्वपक्षः पर्यवसितः । उपासात्रैविध्यादिति सौत्रहेतुमुपासनात्रैविध्यप्रसङ्गादित्यर्थपरतया व्याचष्टे । **त्रिविधमुपासनं प्रसज्येतेति** । ननूपासात्रैविध्यवादिनं पूर्वपक्षिणं प्रति तदिष्टमेवेत्याशङ्क्य वाक्यभेदापादने तस्य पर्यवसानं करोति । **न चैतदेकस्मिन्निति** । नन्वेकवाक्यतया कृत्स्नस्य सन्दर्भस्य ब्रह्मपरत्वेऽभ्युपगते प्राणादिशब्दा ब्रह्मणि लाक्षणिका भवेयुः । ततश्च प्राणप्रज्ञाशब्दयोरैकार्थ्यं च स्यात् । एवं च प्राणप्रज्ञात्मानावुपक्रम्य समाम्नातेन 'सह ह्येतावस्मिञ्छरीरे वसतस्सहोत्क्रामत' इति वाक्येन तयोर्द्विवचनावगतं द्वित्वं साहित्यं चानुपपन्नं स्यात् । ततश्च सहवासादिलिङ्गसहकृतद्विवचनप्राणादिश्रुतिविरोधादुपक्रमोपसंहारैकरूप्यावगतं वाक्यं प्रकरणं च बाधनीयम् । प्रबलेन दुर्बलबाधस्यैव न्याय्यत्वात् । पदार्थान् प्रति वाक्यार्थस्योद्देश्यतया प्राधान्यात् तदनुरोधेन पदार्था एव व्याख्येया इति चेत्, सत्यम् । न तु तदेकत्वानुरोधेन पदार्थानां लाक्षणिकतोपेया । प्राणादिपदानां यथाश्रुतत्वाभ्युपगमेन समभिव्याहारविशेषावगतस्यैकवाक्यत्वस्य बाधेऽपि वाक्यार्थाभावस्याबाधात् । 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले ॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥' इति न्यायस्य वाक्यार्थत्रयवादिमतेऽप्यक्षतेः । अतो न कृत्स्नस्य सन्दर्भस्य ब्रह्मपरत्वमिति चेत्, तात्पर्यानुसारिणी शाब्दी गतिरिति लोके व्युत्पन्नम् । अत एव गङ्गायां घोष इत्यस्य श्रुत्यर्थानुसारेण गङ्गायां मत्स्यः तीरे घोष इति व्याख्यातुं शक्यत्वेऽपि समभिव्याहारावगतैकवाक्यत्वे वक्तुस्तात्पर्यात् एकवाक्यतासंरक्षणाय गङ्गापदे लक्षणाश्रिता । लोके च तात्पर्यग्राहकं वक्तृदेशकालादिकमुपक्रमोपसंहारैकरूप्यादिकं च प्रसिद्धम् । अत एव लौकिकेषु काव्यादिप्रबन्धेषु प्राधान्येन प्रतिपाद्यस्य वस्तुनः आदावन्ते मध्ये चोपक्षेपो भवति । प्रकृते च ब्रह्मविषययोर्वाक्यप्रकरणयोरुपक्रमोपसंहारसंस्पर्शित्वात् एतत्सन्दर्भगतं सर्वपदापेक्षत्वं ब्रह्मबोधकपदानां यत् ब्रह्मप्रकरणं यच्च ब्रह्मरूपैकार्थप्रतिपादकत्वं ब्रह्मवाक्यत्वं, तद्द्वयमपि तात्पर्यलिङ्गोपगृहीतत्वात् प्रबलम् । तच्चानुसारेण श्रुत्यादेरप्यन्यथानयने समर्थं भवत्येव । यत्र च तात्पर्यलिङ्गरहिततोत्तरप्रमाणस्य, तत्रैवौत्सर्गिकं पूर्वप्रमाणप्राबल्यं, तद्विषय एव च श्रुतिलिङ्गादिनयः । तन् सिद्धं प्रबलतात्पर्यलिङ्गोपगृहीतत्वात् ब्रह्मप्रमाणानुसारेण प्राणादिश्रुतीनामन्यथानयनमिति । **एकरूपावुपक्रमोपसंहाराविति** । ननु, प्राणप्रज्ञात्मशब्दावादायोपक्रमोपसंहारयोरैकरूप्यं ब्रह्मणि वक्तुं न शक्यते । पूर्वपक्षिणा औपसंहारिकयोः प्राणप्रज्ञात्मशब्दयोर्ब्रह्मलिङ्गानुसारेण ब्रह्मपरत्वाभ्युपगमेऽपि उपक्रमगतयोस्तयोः प्राणजीवपर-

त्वस्यैवाभ्युपगमात् । न चोपक्रमे हिततमत्वं ब्रह्मलिङ्गं उपसंहारे चानन्दत्वादिकमित्येतावतैकरूप्यं भवति । उच्यते—उपक्रमे ब्रह्मलिङ्गमुपसंहारेऽपि ब्रह्मलिङ्गमित्युपक्रमोपसंहारगतयोरेकपदार्थसम्बन्धितयैकरूप्यं विवक्षितम् । आश्रितत्वादिति सौत्रपदं व्याचष्टे–**आश्रितत्वाच्चान्यत्रेति** । 'कतमा सा देवता प्राण इति होवाचेत्यत्र । **यद्वाचानभ्युदितमिति** । यत् स्वप्रकाशं साक्षिस्वरूपं वाचा जडया न प्रकाशितम् । वागेव परं साक्षिभास्या । तत्साक्षिरूपमेव ब्रह्मेत्यर्थः । **ज्ञानक्रियाशक्तिद्वयाश्रययोरिति** । ज्ञानशक्त्याश्रयो बुद्धिः । वृत्तिज्ञानानां तत्परिणामित्वात् क्रियाशक्त्याश्रयः प्राणः । शरीरव्यापारस्य तदधीनत्वात् । **उपाधिभूतयोरिति** । ततश्च विशेषणांशभेदेन विशेष्येऽपि प्रत्यगात्मनि भेदाध्यासात् प्रत्यगात्मपर्यन्तयोरपि प्राणप्रज्ञाशब्दयोर्द्विवचनान्तता न विरुध्यते । ननु, सह ह्येताविति वाक्यस्यौपाधिकभेदाभिप्रायत्वं कुतोऽवगम्यत इत्याशङ्क्य या वै प्रज्ञेति पूर्ववाक्ये व्यतिहारेण पदार्थद्वयाभेदप्रतिपादनादित्याह—**उपाधिद्वयोपाहितस्येति** । एवं स्वमतेन सूत्रं व्याख्याय मतान्तरेण सूत्रं व्याख्यातुमारभते—**अथवेति** । पूर्वस्मिन् व्याख्याने निर्विशेषज्ञेयवस्तुपरं प्रकरणम् । अस्मिन्व्याख्याने एकवाक्यतासंरक्षणाय पूर्ववदेव यद्यपि ब्रह्मप्रधानं प्रकरणं, तथापि सविशेषोपास्यब्रह्मपरम् । जीवमुख्यप्राणस्वधर्मविशिष्टब्रह्मोपासनापरत्वात् । **अथ यथास्यै प्रज्ञाया इति** । प्राणनिरूपणानन्तरं प्राणोऽस्मि प्रज्ञात्मेति वाक्यनिर्दिष्टायाः प्रज्ञायाः सम्बन्धीनि भूतानि यथा परस्पराश्रयग्रस्ततया मिथ्याभूतानि परमार्थब्रह्मात्मना यथैकं भवन्ति तद्व्याख्यास्यामः— **वागेवास्या इति** । अस्याः जीवरूपायाः प्रज्ञाया एकमङ्गमदूदुहत् वाक् स्वावच्छिन्नमेकं जीवांशं सम्पादितवती । तस्यै वाचः नाम शब्दात्मकम् । भूतमात्रा भूतैकदेशः । प्रतिविहिता तत्सम्बन्धमापादिता । अनेन वाक्येन सङ्ग्रहवाक्ये जीवसम्बन्धो यो भूतानां प्रतिपादितः, तत्र वाग्द्वारा नामसम्बन्धो निरूपितः । एवं पुनरपि नव दोहनपर्यायाः प्रतिविधानपर्यायाश्च समाम्नाताः । तत्र घ्राणचक्षुश्श्रोत्रजिह्वाहस्तपादशरीरोपस्थप्रज्ञा दोग्ध्र्यः । गन्धो रूपं शब्दः रसः कर्म सुखदुःखे आनन्दरतिप्रजातय इत्या विज्ञातव्यकामौ प्रतिविधेया भूतमात्राः । अत्र सङ्ग्रहवाक्यगतः प्रज्ञाशब्दो जीवपरः । दोहनान्तिमपर्याये प्रज्ञाशब्दो धीवाचकः । तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रेति तत्पर्याये प्रतिविधानवाक्यशेषात् । अनेन सङ्ग्रहवाक्यगतो भूतशब्दो नामादिपरतया व्याख्यातो भवति । अनन्तरं च प्रज्ञया वाचं समारुह्य सर्वाणि नामानि आप्नोतीत्यादीनां प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामांश्चाप्नोतीत्यन्तेन शुद्धस्य साक्षिणः प्रज्ञाशब्दोदितविशिष्टजीवद्वारा वागादिबु-

ष्वन्तकरणसमारोहणपूर्वकं नामादिविज्ञातव्यकामान्तभूतमात्रावाप्तिरध्यासरूपा निरूपिता । तत्रादिमपर्यायं दर्शयति —**प्रज्ञयेति** । आदिशब्देनावशिष्टा दोहनप्रतिविधानसमारोहणपर्याया गृह्यन्ते । अनन्तरं च 'न हि प्रज्ञापेता वाङ्नाम । किं च प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्रज्ञासिषमित्यादिना । न हि प्रज्ञापेता धीः काचन सिध्येत् न प्रज्ञातव्यं प्रज्ञापयेते'त्यन्तेन पर्यायदशकेन प्रज्ञामनःशब्दोदितस्य जीवस्य व्यासङ्गे सति कस्यापि सिद्धिर्नास्तीत्युक्त्वा यः पूर्वं वागादिभिः प्रज्ञादोह उक्तः, स दृढीकृतः । तथा च दोहनप्रतिविधानव्यासङ्गपर्यायैर्भूतानां प्रज्ञासम्बन्धो दृढीकृतः । समारोहणाप्तिपर्यायैः सङ्ग्रहवाक्योक्तैकत्वोपयोगितया विशुद्धचैतन्ये भूतानामध्यासो निरूपितः । अनन्तरं च न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिना न मनो विजिज्ञासीत मन्तारं विद्यादित्यन्तेन पर्यायदशकेन वागादिविनिर्मुक्तस्य विशुद्धजीवस्वरूपस्यैव विज्ञेयत्वं निरूपितम् । एतावत्पर्यन्तं जीवनिरूपणम् । ता वा एता दशैव भूतमात्रा इति वागाद्यवच्छिन्नानां प्रज्ञामात्राणां अभावे भूतमात्रासिद्धिर्न भवति । मानाधीनत्वान्मेयसिद्धेः । भूतमात्राणां चाभावे वागाद्यवच्छिन्नानां प्रज्ञामात्राणां सिद्धिर्नास्ति । नामादिज्ञानानुमेयत्वात् । अतः परस्पराश्रयग्रस्ततया द्वैतजातं नानाभूतं किमपि नास्तीति सर्वाधिष्ठानभूतः प्राणशब्दोदितः परमात्मैवानन्दामृतात्मको विज्ञेय इत्यर्थः । नन्वत्र प्राणोऽस्मि प्रज्ञात्मेत्यादिप्राणोपासनाविधायकं वाक्यं दर्शितम् । अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्तीत्यादि जीववाक्यम् । ता वा एता इत्यादि ब्रह्मवाक्यम् । तैश्च त्रिभिर्वाक्यैः प्राणजीवब्रह्मविषयाणि त्रिण्युपासनानि प्रतिपाद्यन्ते । न च त्रिण्युपासनानीति कथम् । प्राणविषयकं ह्यायुरादिगुणकं प्राणोऽस्मीत्यादिवाक्येनैकमुपासनम् । तस्मादेतदेवोक्थमुपासीतेत्युक्थत्वगुणकमपरमुपासनामति । जीवविषयकन्तु न वाचं विजिज्ञासीतेत्यादिभिर्वाक्यैरुपासनादशकं प्राप्नोति । ब्रह्मविषयकन्तु स म आत्मेति विद्यादित्येकमुपासनम् । ततश्च त्रिभ्योऽप्यधिकानि प्राप्नुवन्तीति वाच्यम् । प्राणोऽस्मि प्रज्ञात्मेति हि वाक्यमायुरमृतत्वगुणविशिष्टं प्राणोपासनं प्रज्ञात्वगुणविशिष्टं च जीवोपासनं विधत्त इति उपासनाद्वयपरमेतद्वाक्यमिति प्रागेवोक्तम् । तत्र च प्राण उक्थत्वगुणविधायकमेतदेवोक्थमुपासीतेतिवाक्यम् । वक्तारं विद्यादित्यादीनि तु वाक्यानि प्रज्ञोपासनायां वक्तृत्वादिगुणविधायकानि । तथाचोपासनावादिमते स्वधर्मविशिष्टजीवप्राणविषयकमुपासनाद्वयं स्वधर्मविशिष्टब्रह्मोपासनं स म आत्मेतिविद्यादिति वाक्यविधेयमेकमिति त्रिण्युपासनानि प्राप्नुवन्ति । न तु जीवप्राणधर्मविशिष्टं स्वधर्मविशिष्टं च ब्रह्मविषयकमेकमेवो-

पासनं प्राप्नोतीति कथं न वाक्यभेद इति चेत्, प्राणोऽस्मीतिवाक्ये जीवमुख्यप्राण-स्वधर्मविशिष्टमुपासनं विधीयते । तत्र मामिति प्रज्ञात्मेति च जीवविशेषेन्द्रजीवसामा-न्यविशिष्टं, प्राण इति प्राणविशिष्टं, अमृतमिति स्वधर्मविशिष्टम् । ततश्चेन्द्रधर्माणां त्वाष्ट्रवधादीनां जीवसामान्यधर्माणां वक्तृत्वादीनां प्राणधर्माणां आयुरादीनां ब्र-ह्मधर्माणामानन्दादीनां यथायथमेतद्वाक्यविहितायामेवोपासनायामन्वयः । अतो नो-पक्रमोपसंहारावगतैकवाक्यत्वानुपपत्तिः । उपाश्रिद्वयधर्मेणेति । यद्यपीन्द्रः जीव-सामान्यं प्राणश्चेत्युपाधित्रयमस्ति, तथापीन्द्रमपि जीवत्वेनैकीकृत्योपाधिद्वयेत्युक्तम्। आश्रितत्वादिति सूत्रांशमस्मिन्मते योजयति—**अन्यत्रापीत्यादिना** ।अयं पक्षो ना-तीव साधुः । प्राणोऽस्मीति वाक्ये स्वधर्मविशिष्टोपासनालाभायोगात् । अमृतमिति । नास्मिन्वाक्ये ब्रह्मणः स्वधर्मनिर्देशस्सम्भवति । प्राणो वा अमृतं प्राणेन ह्येवामुष्मि-न् लोके अमृतत्वमाप्नोतीति प्राणधर्मत्वेन तस्य निरूपणात् । प्राणस्यापि मृत्यभाव-प्रयोजकतया अमृतत्वसम्भवाच्च । यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरित्या-दिसन्निहितवाक्यानुरोधेन प्राणधर्मस्यैवामृतत्वस्य प्रकृते ग्रहीतुमुचितत्वाच्च । अत-स्स्वधर्मविशिष्टं ब्रह्मोपासनं 'स म आत्मेति विद्या'दित्यत्रैव विधेयम् । तथा च कथम-वाक्यभेदः । न च 'स म आत्मेति विद्या'दिति वाक्योपदिष्टायामेवोपासनायां प्राणो-ऽस्मीति वाक्यं गुणविधायकमस्त्विति वाच्यम् । तत्रानेकगुणश्रवणेन उपासना-न्तरविधिपरत्वावश्यम्भावात् । न चेदमेवौपसंहारिकं ब्रह्मवाक्यं प्राणोऽस्मीति वा-क्यविहितायामुपासनायां गुणविधायकम् । अत्राप्यनेकगुणश्रवणेनोपासनान्तरवि-धिपरत्वावश्यम्भावात् । प्राणोऽस्मीति वाक्ये ब्रह्मप्रतिपादकपदाभावेन प्राणादिप-दानां ब्रह्मपरत्वाप्रसक्त्या प्राणाद्यन्वितायामुपासनायामौपसंहारिकाणां ब्रह्मधर्मा-णामनन्वयाच्च । ननूपक्रमोपसंहारावगतैकवाक्यतानुरोधेन ब्रह्मोपासनमेकमेव प्रधा-नमस्तु । तदङ्गतया प्राणोपासनविधानमस्तु । दृश्यते ह्युपकोसलविद्यायां अग्न्या-द्युपासनानामङ्गतया विधीयमानानामुपक्रमोपसंहारावगतैकवाक्यताविरोधित्वाभावः। यदि तु सविशेषब्रह्मविद्यायामुपकोसलविद्यायामग्न्याद्युपासनानामुपकारकता सम्भ-वति । सविशेषविद्यायां परमापूर्वस्य सम्भवात् । इह तु निर्विशेषं ब्रह्मोपक्रमोप-संहारस्वारस्यादवगम्यते । उपक्रान्तस्य हिततमत्वस्य प्रश्नप्रतिवचनलिङ्गानुसा-रेण प्रतिपिपादयिषितस्य निरतिशयानन्दब्रह्मस्वरूपतत्साक्षात्काराभ्यां विनान्य-त्रासम्भवात् । सविशेषब्रह्मतत्साक्षाकारौ हि न निरङ्कुशहिततमत्वेन निरूपयितुं शक्यौ ।'अथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यद्विजानाति तदल्पं नाल्पे सुखमस्ती'-ति निन्दादर्शनात् । अत उपक्रमस्तावन्निर्विशेषविषयोऽवगम्यते । उपसंहारोऽप्य-

न्योन्याश्रयप्रदर्शनपूर्वकं 'नो एतन्नाने'ति सर्वद्वैतजालनिषेधप्रतिपादनान्निर्विशेषविषय एव प्रतिष्ठितो भवति । एवमुपक्रमोपसंहारैकरूप्येण निर्विशेषविद्यात्वे अवधृते तस्यां दृष्टविधया मोक्षसम्पादिकायां परमापूर्वस्याभावात् कथमङ्गोपासनाविधानमित्युच्यते । तर्हि भूमविद्यायां निर्विशेषविषयायामेव यथा प्रसङ्गान्नामाद्युपासनं विधीयते, एवं प्रकृतेऽपि प्राणाद्युपासनाविधिरस्तु । तथा च 'प्राणोऽस्मि प्रज्ञात्मे'ति वाक्यगतयोः प्राणप्रज्ञात्मशब्दयोर्यथाश्रुतत्वे विरोधाभावात् किमर्थं प्रथमसूत्रेण प्राणशब्दस्य ब्रह्मपरत्वं प्रसाधितमिति चेत्, उच्यते—भूमविद्यायां हि नामाद्युपासनोपयोगिफलश्रवणादवान्तरवाक्यभेदमालम्ब्य प्रसङ्गान्नामाद्युपासनाविधिराश्रितः । इह तु यद्यपि प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पमिति फलमवगम्यते प्राणप्रज्ञाशब्दार्थसम्बन्धित्वेन, तथापि तस्य मोक्षरूपस्य न प्राणाद्युपासनयोगित्वं सम्भवति । अतस्स्वोचितफलाश्रवणाद्ध्यानाधिकरणन्यायेन ब्रह्मप्रतिपत्तिपर्यवसितत्वमेव स्वीकर्तव्यम् । न तूपासनापरत्वम् । ततश्च यथोपक्रमे मामिति पदं यथा चोपसंहारगतं स एष प्राण एव प्रज्ञात्मेत्यादिकं सर्वात्मत्वाभिप्रायं, तथा प्राणोऽस्मीति वाक्यमप्युत्तमपुरुषप्राणादिसङ्कीर्तनेनोपक्रमोपसंहारैकार्थ्यप्रत्यभिज्ञानात् सर्वात्मत्वाभिप्रायमित्येव वक्तव्यम् । उपास्वेत्येतत्तु यथा निर्विशेषप्रकरणे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादयस्तत्साक्षात्कार उपायविधयः, तथा प्राणप्रज्ञात्मोपलक्षितचैतन्यमात्रगोचरतत्साक्षात्कारोपायविधिर्भविष्यति । अथवा 'गोसदृशं गवयं विद्धि, आत्मानं रथिनं विद्धी'त्यादिलौकिकवैदिकप्रयोगवदिहापि प्रत्ययोऽभिमुखीकरणार्थः । उपास्वेत्यत्र प्रकृतिस्तु निरतिशयानन्दात्मनो ब्रह्मणः स्वतस्सुन्दरतया विदुषामर्थप्राप्तज्ञानधारानुवादिनी भविष्यतीति वाक्यस्य निर्विशेषवस्तुपरत्वं सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीचरणानुग्रह-
लब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयति-
कुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दानिर्गतशारीरक-
सूत्रभाष्यार्थस्वर्धुनीप्रवाहानिमज्जनमुदितस्य
श्रीमदद्वैतानन्दस्य कृतौ शारीरक-
भाष्यव्याख्यायां ब्रह्मविद्याभर-
णाख्यायां प्रथमाध्यायस्य
प्रथमः पादः ।

ॐ

अथ

## द्वितीयः पादः ।

ॐम्

मुग्धं मामनुगृह्य यः करुणया तुर्योङ्कृतिप्रस्फुर-
द्धासां वेदवतीं विकल्पगलितां विद्यां ददौ चिन्मयीम् ।
भूमानन्दपदस्थितो गुरुरसौ पूज्याधिपूज्यस्सदा
चेतो मे कुरुतादलंकृतमतिस्वच्छैः स्वपादाम्बुजैः ॥

वृत्तं सङ्कीर्तयन् पादयोः पूर्वापरभावोपयोगितया तदर्थं दर्शयति—**प्रथमे पाद इत्यादिना** । जिज्ञासासूत्रस्योपोद्धातप्रवृत्ततया जन्मादिसूत्रग्रहणेनैव तदपि गृहीतं भवति । वेदान्तानां निर्विशेषब्रह्मपरता नास्तीत्याक्षेपे जगज्जन्मादिकारणत्वतदुपयोगिगुणप्रतिपादकानां सर्वेषां निर्विशेषे ब्रह्मण्येव पर्यवसानमिति प्रतिपत्त्युपयोगिन्यायजातं पूर्वपादप्रतिपाद्यम् । अन्तस्तद्धर्मोपदेशादित्यादिविचारस्तु तदपवादसङ्गत्या कृतः । आनन्दमयविचारः प्रतर्दनविचारश्च तदपवादसङ्गत्या कृतः । तदाह अर्थान्तरप्रसिद्धानामिति । आकाशप्राणज्योतिर्गायत्रीपदानां प्रतिपादनेन ब्रह्मपरतया निर्णीतानीत्यन्वयः । अस्मिंस्तु पादे यत् पूर्वं जगज्जन्मादिकारणत्वं, तदुपयोगिसर्वज्ञत्वादिकं च निरूपितम् । ब्रह्मणि ताटस्थ्येन तत् सिद्धवत्कृत्य जीवादिपरतया सन्दिह्यमानानि कानिचिद्वाक्यानि ब्रह्मपरत्वेन निर्णीयन्ते । तथा च पूर्वपादप्रतिपादितैः सर्वज्ञत्वजगत्कारणत्वादिभिरिह सिद्धान्तकरणात् उपजीव्योपजीवकभावापन्नयोः प्रथमद्वितीयपादयोः पूर्वापरभावः सङ्गतिश्च । ननु, यदि सर्वज्ञत्वादिलिङ्गेन केषाञ्चित् प्रातिस्विकरूपेण ब्रह्मपरत्वव्यवस्थापनमेतत्पादार्थः, तर्ह्याकाशाद्यधिकरणमप्यत्रैव कर्तव्यं स्यादित्याशंक्याह—**अस्पष्टब्रह्मलिङ्गानीति** । लिङ्गानामस्पष्टता च जीवादिविषयकत्वसम्भाव्यमानस्वारस्यालिङ्गाभिभूतत्वम् । अन्तस्तद्धर्माधिकरणे यद्यपि जीवलिङ्गतया शरीरित्वमाशङ्कितं, तथापि तत्स्वारस्यं ब्रह्मविषयत्वेऽपि न हीयते । आकाशप्रस्ताववाक्ययोश्च न लिङ्गेन पूर्वपक्षः, अपि तु श्रुत्या । ततश्च ब्रह्मविषयकलिङ्गानामन्यगोचरश्रुत्यभिभूतत्वेऽपि न लिङ्गाभिभूतता । प्रतर्दनवाक्ये तु उपक्रमोपसंहारावधृतवाक्यप्राबल्येनैव निर्णयः कृतः, न तु लिङ्गप्राबल्येन । ज्योतिर्वाक्येऽपि श्रुतिबलादेव निर्णयः । द्युसम्बन्धित्वं त्वस्पष्टं ब्रह्मलिङ्गं तदुपोद्बलकमेव । अतोऽस्पष्टब्रह्मलिङ्गैर्ब्रह्मपरत्वनिरूपणपरे पादे न तेषां सङ्गतिरिति भावः । द्वितीयतृतीयपादयोस्तु यद्यप्यस्पष्टब्रह्मलिङ्गत्वमविशिष्टं, तथापि सविशेषप्रायत्वं द्वितीयस्य, निर्विशेषप्रायत्वं तृतीयस्येति भेदः ॥

# सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

भारूप इत्यादीति । आदिपदेन सत्यसङ्कल्प आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायान् अन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतत् ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीत्यन्तं संगृह्यते । तस्य हि कार्यकरणाधिपतेरित्यादि । ननु, मनोमयत्वं प्राणशरीरत्वं च जीवेऽपि न सम्यगवकल्पते । न हि जीवो मनोविकारः । न च प्राणो जीवस्य शरीरम् । यदि तु यथाश्रुतार्थानुपपत्तेः मनस्सम्बन्धित्वं प्राणसम्बन्धित्वं च ताभ्यां पदाभ्यां विवक्षितं, तर्हि ब्रह्मण्यपि नानुपपत्तिः । कार्यकारणभावसम्बन्धस्य मनःप्राणाभ्यां ब्रह्मणोऽपि सम्भवात् । न चैवमप्राण इत्यादिश्रुतिविरोधः । तस्या उपकरणोपकरणिभावनिषेधपरत्वादिति चेत्, उच्यते—यथा हि धनवानयं चित्रगुरित्यादौ धनगोपदोपस्थापितस्यार्थस्य स्वत्वेन प्रसिद्धत्वात् स्वस्वामिभावसम्बन्ध एव शीघ्रमुपस्थितो भवति । नायं धनवान् न चित्रगुरिति निषेधोऽपि स्वस्वामिभावविषयक एव भवति । प्रतियोगितावच्छेदकतया स्वस्वामिभावस्यैव शीघ्रोपस्थितत्वात् । तथा मनःप्राणयोर्भोगोपकरणत्वेन प्रसिद्धतया उपकरणोपकरणिभाव एव सम्बन्धः शीघ्रमुपस्थितो भवतीति मनोमयप्राणशरीरपदयोर्जीव एव स्वारस्यं, न ब्रह्मणि । नेदं वाक्यं ब्रह्मोपासनाविधिपरं, किं तर्हि शमविधिपरमिति । ननु, नेदं वाक्यं शम विधिपरम् । ‘तपश्श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः सूर्यद्वारेण ते विरजाः प्रयान्ती’त्यादिभिर्वाक्यैः ब्रह्मोपासनायां शमस्य प्राप्तत्वात् । कथमन्यथा अन्यासु ब्रह्मविद्यासु शमादिप्राप्तिस्स्यात् । तस्मादिदमेव वाक्यमुपासनाविधायकमस्तु । क्रतुवाक्यविहितायामुपासनायां ब्रह्मगुणविधायकं वास्तु । अत एवाग्निरहस्ये शाण्डिल्यविद्योपक्रमे सत्यं ब्रह्मेत्युपासीतेत्येव श्रूयते, न तु शमोऽपि । अतः कथं मनोमयत्वादिविशिष्टो जीव इति चेत्, स क्रतुं कुर्वीतेत्यस्य हि वाक्यस्य उपासनाविधिपरत्वमवश्यं वक्तव्यम् । तत्र हि मनोमयत्वादयो बहवो गुणाः श्रूयन्ते । न च प्राप्तकर्मानुवादेनानेकगुणविधिस्सम्भवति । तत्र च मनोमयत्वादिगुणस्वारस्येन जीव एव उपास्यः । न च तत्राप्येतद्ब्रह्मेति ब्रह्मपदम-

स्तीति कथं जीव एवोपास्यो भवेदिति वाच्यम् । उपक्रमश्रुतमनोमयपदादिस्वारस्येन ब्रह्मपदस्य जीवविषयत्वकल्पनात् । जीवेऽपि हीदं ब्रह्मायातीदमागच्छतीति ब्रह्मपदप्रयोगो दृश्यते । तथा च क्रतुवाक्येनैवोपासनायाःसिद्धत्वात् 'सर्वं खल्वि'ति वाक्यं नोपासनाविधिपरम् । नापि प्राप्तकर्मानुवादेन ब्रह्मरूपोपास्यगुणसमर्पकम् । उत्पत्तिविशिष्टजीवावरुद्धायामुपासनायां तद्विरुद्धस्योपास्यान्तरस्यान्वयासम्भवात् । तस्मादिदं वाक्यं यद्यपि प्राप्तत्वाच्छमविधिपरं न भवति, तथापि शम एवोपायान्तरनियमपरम् । शमो हि रागद्वेषादिविषयेषु दोषगुणानुसन्धानेनापि सम्पादयितुं शक्यः । तदा सर्वत्र ब्रह्मानुसन्धानं तदुपायभूतं पाक्षिकत्वात् कदाचित् न भवेत् । अतः प्रकृतोपासनायां शमोपायनियमोऽयम् । अग्निरहस्यगतं तु वाक्यं 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमि'त्याद्युत्तरवाक्यविधेयायामेतस्यामेव उपासनायां सत्यत्वगुणविधायकम् । ब्रह्मपदं तु जीवपरमेव । यदि तु मनोमयादिवाक्येऽपि नानेकगुणविधानश्रवणमस्ति । 'मनोमयः प्राणशरीर' इत्यादिप्रथमान्तपदानां हि न क्रतुं कुर्वीतेत्यनेनान्वयः । तथासति षष्ठ्यन्ततया विपरिणामापत्तेः । कस्य क्रतुमिति ह तत्रापेक्षा । किन्तु 'इति यस्य स्यादद्धा न विचिकित्सास्तीत्यत्रत्येनेतिपदेनान्वयः । तथा चायमर्थः—एतमितःप्रेत्याभिसम्भवितास्मीत्यन्तः प्रकारो यस्य निश्चितस्स्यात् श्रवणादिसाधनैः, स क्रतुं कुर्वीतेति । तथा च प्रकृतोपासनायामुक्तप्रकारेण श्रवणादिमतोऽधिकारबोधनात् तस्य प्रकारस्योपासनान्वय आर्थिक इत्युच्यते । तथाप्युपासनोपयोगिनो विचारस्यार्थसिद्धतया प्राप्ताप्राप्तविवेकेन मनोमयादिगुणेष्वेव तात्पर्यमिति अनेकगुणतात्पर्यकत्वप्रयुक्तवाक्यभेदपरिहारायात्रैव उपासनाविधिराश्रयणीयः । अग्निरहस्ये च 'स आत्मानमुपासीत मनोमयं प्राणशरीरमि'ति मनोमयत्वादिकं द्वितीयान्तपदोपात्तमुपासीतेत्यत्रैवान्वेतीत्यनेकगुणविधानप्रयुक्तवाक्यभेदपरिहाराय स आत्मानमुपासीतेत्यत्रैव विधिराश्रयणीयः । तदैकरूप्याय छान्दोग्येऽपि 'स क्रतुं कुर्वीते'त्यत्रैवोपासनाविधिरस्तु । तथा च सर्वं खल्विति वाक्यं प्राप्तोपासनानुवादेन शमोपायतया सर्वात्मत्वानुसन्धानपरमेव । तदाह—**एतदुक्तं भवतीति** । तज्जलानित्यस्यार्थमाह—**तज्जत्वादिति** । जायत इति जम् । लीयत इति लम् । 'अन्येभ्योऽपि दृश्यत' इति विहितडप्रत्ययान्तमिदं पदद्वयम् । अनितीत्यन् । क्विप्रत्ययान्तम् । जलानिति विशेषणानामपि बहुलग्रहणात् कर्मधारयः । तस्मिन् जलानिति सप्तमीविग्रह इति भावः । **क्रतुस्सङ्कल्प इति** । क्रतुरध्वरसङ्कल्पाविति निघण्टुः । **पर्यायेणेति** । बहुषु शरीरेषु पुण्यपापानुसारेण क्रमेण गृह्यमाणेषु क्रमेण सर्वकर्मत्वादिकं

सम्भाविष्यतीत्यर्थः । **ज्यायस्त्वं तु ब्रह्मभावापेक्षयेति** । उपलक्षणमेतत् अवाक्यानादर इत्यादेः । वाकीशब्दप्रतिपाद्यवागिन्द्रियोपलक्षितसर्वेन्द्रियराहित्यमवाकित्वं, अनादरत्वं विषयेषूत्कर्षप्रयुक्तरागादिराहितत्वं हि पारमेश्वरमेव । **एवं च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यत इति**। ननु, नेदं ब्रह्मप्रकरणम् । उपक्रान्तस्य ब्रह्मणः शमविध्युपयुक्ततया प्रधानत्वाभावादिति चेत्, उच्यते—उपक्रमे हि ब्रह्म स्वप्राधान्येनैव निर्दिश्यते । न तु शमविधिशेषतया । 'सर्वं खल्विदं ब्रह्मे'ति वाक्ये हि इदंशब्दो न सर्वपदार्थविशेषणम् । व्यर्थत्वात् । अपि तु ब्रह्मविशेषणम् । तस्य सर्वनामतया प्रकृतपरामर्शितावश्यम्भावात् । गायत्रीवाक्यनिर्दिष्टस्य ब्रह्मण इहानुवृत्तिः सम्पादिता भवतीति प्रयत्नेन ब्रह्मानुवृत्तिसम्पादनं ब्रह्मप्राधान्यद्योतनाय। तथा चेदं ब्रह्मेति इदंशब्दबलात् ब्रह्मणः प्राधान्येऽवधारिते प्रकरणसिद्धिः। न च ब्रह्मणोऽस्मिन्वाक्ये प्राधान्येऽभ्युपगते तेन सर्वपदार्थविशेषणासम्भवात् सर्वपदार्थो ब्रह्मविशेषणं स्यात्। एवं च ब्रह्मणः सर्वात्मकत्वमधिष्ठानतया प्राप्नोति, न तु सर्वस्य ब्रह्मविवर्ततया ब्रह्मात्मकतेति कथमितीह शान्त उपासीते'तिवाक्यगतेनेतिना सर्वस्य ब्रह्मात्मकत्वं शमं प्रति हेतुतयोपह्रियत इति वाच्यम् । ब्रह्मणः सर्वात्मकत्वप्रतिपत्त्यावर्थात् सर्वस्य ब्रह्मात्मकता सम्पद्यत इतीतिना शमोपयोगितया तत्परामर्शोपपत्तेः । प्रयत्नेन च ब्रह्मप्रकरणसम्पादनस्येदमेव प्रयोजनम् । यत् 'स क्रतुं कुर्वीते'तिवाक्यविहितायामुपासनायां ब्रह्मण एवोपास्यते'ति । ननु नेदंशब्दबलात् ब्रह्मप्रकरणसिद्धिः । यथा ह्यात्मैवेदं सर्वमित्यादिषु वाक्येष्विदंपदं सर्वविशेषणम्, एवं प्रकृतेऽपि सर्वविशेषणमस्तु । तत्र च यथेदम्पदेन दृश्यतोपक्षेपद्वारा मिथ्यात्वमुपक्षिप्य सर्वपदार्थस्य विवर्ताभिप्रायोपहरणेन आत्मनो निर्विकारस्य तत्सामानाधिकरण्यं व्युत्पाद्यते, एवं प्रकृतेऽप्यस्तु । ऐकरूप्यसम्भवे वैरूप्यकल्पनानुपपत्तेः । तथा च न ब्रह्मप्राधान्यसिद्धिरित्यभिप्रायेण शङ्कते—**ननु वाक्योपक्रमे शमविधिविवक्षयेति**। प्रौढ्याभ्युपगम्य परिहरति—**अत्रोच्यते यद्यपीति** । यद्यपीत्यस्यायमभिप्रायः—वस्तुतः स्वप्रधानमेव पूर्वोक्तगत्या सर्वं खल्विति वाक्ये ब्रह्म। निर्विशेषप्रकरणगतेषु वाक्येष्विदम्पदस्य मिथ्यात्वद्योतकतया सार्थकत्वेऽपि सविशेषप्रकरणे तद्द्योतनस्य निष्प्रयोजनत्वात् प्रत्युत श्रद्धाविघातकतया विरोधिता । तथा चेदम्पदं प्राधान्यमेव ब्रह्मणो द्योतयति। **ब्रह्म सन्निहितं भवतीति**। प्राणशरीर इत्यादीनि बहुव्रीहिरूपाणि। बहुव्रीहिश्च विग्रहवाक्यानुसारेण सर्वनामार्थकः । सर्वनाम्नां च प्रकृतपरामर्शकता वक्तव्या । ततश्चान्यार्थसन्निहितमपि सर्वनामसमानार्थकैः प्राणशरीरादिपदैः परामृश्येत प्रकृतं ब्रह्म । न च मनोमयपदानिर्दिष्टो जीव

एव कुतो न परामृश्यते । समासान्तर्गतप्राणादिपदस्वारस्यानुसारेण वा प्रक्रियमाणजीवपरामर्शकता किं न स्यादिति वाच्यम् । मनोमयपदं हि न झटिति जीवमुपस्थापयति । अपि तु न्यायानुसन्धानपूर्वकम् । ततश्च स्वशक्त्या शीघ्रोपस्थापकब्रह्मपदनिर्दिष्टब्रह्मपरामर्शकता। बहुव्रीहिपदानां समासान्तर्गतप्राणादिपदोपस्थापितजीवपरामर्शकत्वेऽपि पूर्वोक्तदोषस्तदवस्थः । प्रक्रियमाणपरामर्शकतापत्त्या प्रकृतपरामर्शकता चास्मिन् पक्षे हीयते । न चाप्रधानसमासान्तर्गतपदार्थानुसारेण प्रधानसमासार्थो बाधितुमुचितः । ननु, स क्रतुं कुर्वीतेति वाक्ये स इति पदं न कर्तृनिर्देशार्थम् । आक्षेपादेव तत्सिद्धेः । तथा च सर्वनामसमानार्थकानां प्राणशरीरादिपदानां जीवपरतासम्पादनार्थ इत्येव वक्तव्यम् । अतस्सन्निहितानन्यार्थतत्पदार्थं जीवं विहाय कथं दूरस्थान्यार्थब्रह्मपरामर्शकतेति चेत, उच्यते । अनन्यार्थ इति तावदसिद्धम् । 'यस्य स्यादद्धा न विचिकित्सास्ती'ति वाक्यगतयत्पदार्थप्रतिनिर्देशको हि यस्य विचिकित्सा नास्ति, स क्रतुं कुर्वीतेति प्रकारेण स इति शब्दः । अतो ब्रह्मपदमपेक्ष्य सन्निहितत्वमात्रमवशिष्यते । नैतावता तत्परामर्शकता प्राणशरीरादिपदानां वक्तुमुचिता । सर्वनाम्नां हि न सन्निहितमात्रपरामर्शकता । अपि तु योग्यसन्निहितपरामर्शकता । न च सत्यसङ्कल्पादयो जीवे योग्याः । नाप्येतद्ब्रह्मेति ब्रह्मपदम् । न चोपक्रमगतत्वेऽपि मनोमयप्राणशरीरपदद्वयानुसारेण बहूनां सत्यसङ्कल्पादिपदानां अन्यथानयनमुचितम् । ततश्च ब्रह्मश्रुतिसत्यसङ्कल्पत्वाद्यनेकब्रह्मलिङ्गस्वारस्यानुरोधेन शमवाक्यगतब्रह्मपरामर्शकतैवोचितेति भावः ॥ १ ॥

ननु, मनोमयत्वं प्राणशरीरत्वमणीयस्त्वमित्येते जीवधर्मा एव । तेषां च ब्रह्मविषयता ब्रह्मणः सर्वात्मकतया वक्तव्या । तथासति सत्यसङ्कल्पत्वादीनामपि ब्रह्माभेदविवक्षया जीवविषयतापि वक्तुं शक्या । दृश्यते हि मैत्रेयीब्राह्मणे जीवमुपक्रम्य ब्रह्मधर्माम्नानम् । तथा च 'स क्रतुं कुर्वीते'ति वाक्यनिर्दिष्टजीवपरामर्शे न काचिदनुपपत्तिरिति । तत्राह—

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

यद्यप्यपौरुषेय इति । नन्वपौरुषेयेऽपि वेदे अनादीश्वरविवक्षा सम्भवत्येवेति शास्त्रयोनित्वसूत्रे सूचितम् । सत्यं, सा विवक्षा पूर्वपूर्वविवक्षानुसारिणीति न लौकिकपुरुषविवक्षावत् स्वतन्त्रा । ततस्तदभिप्रायेयं शङ्का । परतन्त्रविवक्षामादाय परिहारे वक्तुं शक्येऽपि प्रकारान्तरेण परिहारमाह—**तथापीति** । यद्वि

विवक्षितं, तस्य पर्यवसितवाक्यार्थान्वयित्वाख्यमुपादेयत्वमस्तीति गौण्या वृत्त्या तदेवेह विवक्षितपदेन प्रतिपाद्यते । अयमर्थ इह पर्यवसितशाब्दबोधविषय इत्येतत्तु तात्पर्याख्यवाक्यबोधकतारूपशक्तिपर्यालोचनयावगम्यते । तादृशशक्तिनिर्णयश्च श्रुतिलिङ्गादिभिरुपक्रमादिभिश्चेति । **ते परस्मिन् ब्रह्मणि उपपद्यन्त इति** । अयं भावः, यथा हि मैत्रेयीब्राह्मणे जीवं प्रस्तुत्य ब्रह्मधर्माख्यानं, न तथेह वक्तुं शक्यम् । निर्विशेषप्रकरणे हि उपात्तजीवेश्वरधर्मोपमर्देन केवलं वस्तुस्वरूपमेव बोध्यमिति न तत्र गुणविवक्षा । इह तु गुणा उपात्ताः स्वरूपेण विवक्षिताः । तद्यत्र स्वरूपोपमर्दं विनैव गुणानामन्वयो भविष्यति, तत्परता वाक्यस्योपेयते । जीवे ब्रह्मधर्मान्वयविवक्षायां तु परिच्छिन्नतयावगते तस्मिन् नापरिच्छिन्नब्रह्मधर्मान्वयः । परिच्छेदोपमर्दं विना वक्तुं शक्यते । ब्रह्मणि तु सर्वोपादाने परिच्छिन्नो जीवोऽप्यन्तर्भूत इति समुद्रे तरङ्गधर्माणामिवोपात्तस्वरूपानुपमर्देनैव जीवधर्माणामन्वयः। तथा चानन्यथासिद्धब्रह्मधर्मानुसारेण जीवधर्मा एव ब्रह्मणि व्याख्येयाः । ननु, अत्र पूर्वसूत्रे सर्वनामार्थबहुव्रीह्यनुसारेण ब्रह्मनिर्णयो दर्शितः, स ज्योतिरधिकरणेन पुनरुक्तः । अस्मिन् सूत्रे ब्रह्मधर्माणामनन्यथासिद्धत्वमुक्तं, तदन्तरादित्यप्रतर्दनाधिकरणाभ्यां गतम् । उच्यते—इह स इति पदेन जीवस्यातिसन्निहिततया न ब्रह्मपरामर्शकतेत्यधिकाशङ्का । सा न हि तन्मात्रपरामर्शकता सर्वनाम्नः, अपि तु योग्यसन्निहितपरामर्शकतेति विवक्षया परिहर्तव्या । योग्यत्वं च सत्यकामादिगुणपर्यालोचनया ब्रह्मण एवेति पादसङ्गतिरपि । अनन्यथासिद्धत्वं तु ब्रह्मधर्माणां तात्पर्यलिङ्गोपेततया 'अन्तस्तद्धर्मोपदेशादि'त्यत्र व्युत्पाद्यं, 'प्राणस्तथानुगमा' दित्यत्र तु व्यावृत्त्यनुवृत्तिभ्यां, 'विवक्षितगुणोपपत्तेश्चे'त्यत्र तु उपमर्दानुपमर्दाभ्यामिति, अनन्यथासिद्धिप्रकारभेदादपुनरुक्तता । **त्वं जीर्ण इति**। स्थविरस्सन् दण्डमवलम्ब्य त्वमेव गच्छसि ॥ २ ॥

स्यादेतत्—इह समाम्नाताः सत्यसङ्कल्पत्वादयः स्वप्रकरणोपन्यस्ततत्क्रतुन्यायेन जीवप्राप्या एव व्याख्येयाः । ते च ब्रह्मलोकगतेन जीवस्वरूपेणान्वयिनः । तथा हि सत्यसङ्कल्पत्वं सङ्कल्पानुसारिभोग्यभोगोपकरणप्राप्तिशालित्वम् । सत्यकामत्वं भोगसमर्थमानसपित्रादिसम्पन्नत्वम् । आकाशात्मत्वं दुःखादिलेपरहितत्वम् । एवं सर्वकामत्वादयोऽपि ब्राह्मलौकिकपदार्थकार्त्स्न्याभिप्राया एव द्रष्टव्याः । ततश्च तत्क्रतुन्यायानुसारेण व्याख्येयानां गुणानां जीवस्वरू-

पानुमर्देनैव अन्वयसम्भवात् कथं विवक्षितगुणोपपत्तये ब्रह्मैवेह ग्राह्यमित्यत आह—

## अनुपपत्तेस्तु न शारीरः ॥३॥

**तुशब्दोऽवधारणार्थ** इति। इहाधिकारिकं ब्रह्मपदं सम्बध्यते। तथा च 'विवक्षितगुणोपपत्तेः ब्रह्मैव ग्राह्यं, न शारीरः। विवक्षितगुणानुपपत्तेरि'ति सूत्रार्थो दर्शितो भवति। येन हि तत्क्रतुन्यायेन सत्यसङ्कल्पादौ विवक्षाविशेष उपेयते, तेन मनोमयत्वादावपि स उपेय एव। मनोमयत्वं प्राणशरीरत्वं च मनस्सम्बन्धित्वं प्राणसम्बन्धित्वं लाक्षणिकमुपेयत इति चेन्न। लौकिकमनःप्राणसम्बन्धित्वं प्रकृते उपास्यं, तस्य हेयतया फलत्वाभावेन तत्क्रतुन्यायपर्यालोचनया उपास्यत्वानुपपत्तेः। किं तु 'तद्वै दैवं मनो येनानन्द्येव भवति। स वै दैवः प्राणो यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽतो नरिष्यतीत्यादिवचनप्रसिद्धब्राह्मलौकिकदिव्यमनःप्राणसम्बन्धित्वमेव वक्तव्यम्। तस्यैव फलतया तत्क्रतुन्यायेनोपास्यत्वात्। दिव्यमनःप्राणसम्बन्धपरत्वे च मनोमयप्राणशरीरशब्दयोर्जीव एव स्वारस्यमिति नियन्तुमशक्यम्। 'सत्यात्मप्राणारामं मनआनन्दमि'त्यादिवचनैः सविशेषब्रह्मणोऽपि दिव्यमनःप्राणसम्बन्धित्वावगमात्। ननु, एवमपि गुणानां जीवब्रह्मसाधारण्ये ब्रह्मैव ग्राह्यमित्यत्र किं नियामकमिति चेत्, प्रकृतोपन्यस्तस्तत्क्रतुन्याय एव। ब्राह्मलौकिकसत्यसङ्कल्पादिविभूतिप्राप्तिर्हि ब्रह्म प्राप्तस्यैवेति दहरपर्यङ्कविद्याम्नातवचनपर्यालोचनयावगम्यते। दहरविद्यायां हि 'त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये चास्येह प्रेता ये च जीवा यच्चान्यदिच्छन्न रमते सर्वं तत्र गत्वा विन्दत इति एष सम्प्रसादोऽस्माच्छारीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति च ब्रह्म प्राप्तस्यैव फलप्राप्तिर्दर्शिता। पर्यङ्कविद्यायामपि तमित्थंवित् पादेनैवाग्र आरोहतीति ब्रह्मपर्यङ्कारोहणं प्रस्तुत्याम्नायते तमाह—आपो खलु मे ह्यसावयं ते लोक इति सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयते तां व्युष्टिं व्यश्नुते य एवं वेदेति। तथा च सत्यसङ्कल्पादिविभूतिप्राप्त्युपयोगितया ब्रह्मप्राप्तेरपि वक्तव्यत्वात् जीवोपासनातो ब्रह्मप्राप्तेस्तत्क्रतुन्यायविरोधित्वादिह प्रकरणे विशिष्य तत्क्रतुन्यायाम्नानेन पञ्चाग्निविद्यायामिव तत्परित्यागायोगात् प्रबलेन प्रमाणेन जीवस्योपास्यत्वानिर्णयाच्च ब्रह्मैवेहोपास्यमिति विनिगमकं द्रष्टव्यम्। अयमर्थो ब्रह्मैवेत्यवधारणेन सूचितः। अपिचेह तत्क्रतुन्यायेन सत्यसङ्कल्पादयो न सङ्कोचयुक्ता ग्राह्याः। निरङ्कुशानां ब्रह्मासाधारणानां ग्रहणे बाधकाभावात्। तेऽपि हि क्रममुक्तिमादायोपासकेन प्राप्या एव। अन्यथा 'अवाक्यनादर' इत्याद-

योऽप्युपास्या न स्युः । न हि ते ब्रह्मलोके फलभोगदशायां सम्भवन्ति । सेन्द्रियस्य ब्राह्मलौकिकफलभोगासक्तस्यावाक्यनादरशब्दोदितनिरिन्द्रियत्वविगतस्पृहत्वबाधात् । न च तेऽनुपास्या एव । तथाकल्पनस्यानुचितत्वात् । अस्मिन् प्रकरणे केषाञ्चित् त्रिः पाठस्य केषाञ्चित् द्विः पाठस्य च यथाम्नानं तत्तत्स्थाने तेन क्रमेणावृत्त्यानुसन्धानोपयोगितयैषामपि द्विः पाठस्य तादर्थ्योपपादनायावश्यमुपास्यत्वस्य वक्तव्यत्वाच्च । ततश्च सत्यकामाद्यनुपपत्तेः न शारीरो ग्राह्यः । तदिदमाह—**न शारीरो जीवो मनोमयत्वादिगुण इति** ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥४॥

नन्वत्र प्राप्यप्रापकत्वेनोपास्योपासकत्वेन च द्वेधा कर्मकर्तृत्वव्यपदेशो जीवपक्षे नोपपद्यत इति उक्तं, तदयुक्तम् । जीवोऽपि पञ्चाग्निविद्यायामुपास्योऽङ्गीकृतः । तत्र चेदुपास्यगुणविशिष्टतयोपास्यत्वं, स्वरूपेणोपासकत्वमिति कर्मकर्तृविरोधः परिह्रियते, तथासति प्रकृतेऽपि सत्यकामगुणविशिष्टतयोपास्यत्वं प्राप्यत्वं च, स्वरूपेण तूपासकत्वं प्रापकत्वं चेति विरोधपरिहारोऽस्त्विति चेन्न । यत्र हि प्रबलेन प्रमाणेन जीवस्योपास्यत्वं प्राप्नोति, तत्र क्लेशोपगमेऽपि प्रकृते तथा क्लेशकल्पनस्य निर्मूलत्वादिति, तदिदमाह—**न च सत्यां गताविति** ॥४॥

## शब्दविशेषात् ॥५॥

**समानप्रकरण इति** । इदमुपलक्षणं स्वप्रकरणेऽपि च्छान्दोग्ये एष म आत्मेति षष्ठीप्रथमारूपस्य शब्दविशेषस्य । ननु, षष्ठीप्रथमारूपशब्दविशेषः सप्तमीप्रथमारूपश्च 'राहोः शिरः' 'स्वे महिम्नि प्रतिष्ठित' इतिवत् उपपादयितुं एकस्मिन्नपि शक्य एवेति शङ्कायामपि पूर्वोक्तमेवोत्तरं न च सत्यां गतावित्यादि द्रष्टव्यम् ॥५॥

## स्मृतेश्च ॥६॥

'एष म आत्मान्तर्हृदय' इति श्रुतेः हृद्देश इति पदेन स्मृतौ प्रत्यभिज्ञानात् स्मृतौ चेश्वरपदप्रयोगेणादिपदसंगृहीत 'तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वत'मिति वचनेन मुमुक्षुशरण्यत्वपरमशान्तिशाश्वतस्थानहेतुप्रसादशालित्वपारमेश्वरधर्मप्रतिपादनेन च ब्रह्मपरत्वस्यावधृत-

त्वात् उपबृंहणानुसारेणापि ब्रह्मैवेह विवक्षितम् ॥६॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥

**न सर्वतःपरमात्मेति** । न च सर्वगतस्यापि अयोध्याधिपतिन्यायेन हृदयसम्बन्धितामात्रेणान्तर्हृदय इति व्यपदेश उपपद्यत इति वाच्यम् । तावता हृदयाधिकरणत्वनिर्देशोपपत्तावपि हृदयान्तर्गतत्वनिर्देशानुपपत्तेः । न च तदौपचारिकं यथाकथञ्चित् व्याख्येयम् । अणीयस्त्वनिर्देशोपपत्तिरूपतात्पर्यलिङ्गोपेतस्य यथाकथञ्चिद्व्याख्यानानुपपत्तेः । तथा चोपक्रमगताणीयस्त्वनिर्देशोपोद्बलितान्तर्वर्तित्वविरोधे ज्यायस्त्वमेवौपसंहारिकमुपासनाभिप्रायं व्याख्येयमिति शङ्कितुर्हृदयम् । **न तावत्परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेश इति** । यथा हृदयान्तर्वर्तितोपपादनार्थमणीयस्त्वनिर्देश इति परेणोच्यते, एवमणीयस्त्वमौपाधिकं सत् उपासनार्थं निर्दिश्यत इति द्योतयितुमन्तर्हृदय इत्युपासनास्थानरूपोपाधिनिर्देशोऽयमिति सिद्धान्तिनापि वक्तुं शक्यम् । ततश्चोपक्रमस्योभयथापि सम्भवात् ज्यायान् पृथिव्या इत्यादिभिर्वाक्यैः ब्रह्मासाधारणस्य ज्यायस्त्वस्य प्रतिपादनात् घटाकाशन्यायेनाणीयस्त्वव्यपदेश औपाधिक उपासनार्थ इति निर्णीयते ॥७॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥

चतुर्वर्णादित्वात स्वार्थिकः सूत्रे ष्यञित्यभिसन्धाय व्याचष्टे—**विशेषो हि भवतीति । एकः कर्ता भोक्तेति** । न च जीवब्रह्मणोरेकत्वाभ्युपगमे कथमियं व्यवस्थेति वाच्यम् । प्रबलानेकश्रुतिपर्यालोचनया जीवब्रह्मणोः परमार्थत एकत्वेऽवधारिते बिम्बप्रतिबिम्बन्यायेन काल्पनिकानादिभेदाभ्युपगमाद्धर्मव्यवस्थोपपत्तेः । **सर्वगतानेकात्मवादिनामिति** । अयं वादस्तार्किकाणाम् । तथा च तन्मते सर्वात्मनां सर्वशरीरसम्बन्धात् सुखदुःखव्यतिकरस्स्यात् । तत्र चेददृष्टादिना व्यवस्थास्थीयते, तथासतीश्वरस्य हृदयसम्बन्धित्वेऽपि तुल्यम् । अस्मिन् सूत्रे हृदयसम्बन्धित्वादीश्वरस्य सुखदुःखानुभवाख्यसम्भोगप्राप्तिराशंक्यते, भोक्त्रापत्तेरित्यत्र तु सर्वात्मतयेति भेदः । **यदपीत्यादि** । जीवब्रह्माभेदप्रयुक्तशङ्कापरिहारादिकं भोक्त्रापत्तिसूत्रगतमेवेहापि दर्शितम् । अत्र सत्यसङ्कल्पसत्यकामत्वादीनां ज्यायस्त्वस्य चोपक्रमगतप्राणशरीरमनोमयत्वाभ्यामणीयस्त्वेन चाभिभूततयास्पष्टता ॥८॥

इति सर्वत्र प्रसिद्धाधिकरणम् ॥१॥

# अत्ता चराचरग्रहणात् ॥९॥

यस्येति । ब्रह्म ब्राह्मणः । क्षत्रं क्षत्रियः । उपसेचनं मिश्रणद्रव्यम् । स ओदनप्रतिसम्बन्धी यत्र वर्तते, तदधिष्ठानं इत्था इत्थं को वेद । अत्ता प्रतीयत इति । ओदनप्रतिसम्बन्धी प्रतीयत इत्यर्थः । अत्रानोदनयोर्ब्रह्मक्षत्रयोरोदनत्वं गुणयोगाद्व्यक्तव्यम् । तत्र यदि 'विशोऽन्नं राज्ञां पशवोऽन्नं विशां एष सोमो राजा तद्देवानामन्न'मित्यादौ यथान्नशब्दो भोग्यत्वगुणयोगात्, एवमोदनशब्दोऽपि यदि भोग्यत्वगुणमादाय वर्तते, तदा तत्प्रतिसम्बन्धी भोक्ता पर्यवस्यति । यदि तु प्राणोपासनाप्रकरणे किं मेऽन्नमिति प्रश्ने 'यदिदं किञ्च आश्वभ्य आशकुनिभ्यस्तत्तेऽन्न'मित्यत्र श्वशकुनीनां यदन्नं, तत्प्राणस्यान्नमिति रूपणेऽन्नपदं भोज्यत्वगुणेन वर्तते, तत्प्रतिसम्बन्धी भक्षकः प्रतीयते, तथा प्रकृतेऽप्योदनपदस्य भोज्यत्वप्रतिपादकत्वे तत्प्रतिसम्बन्धी भक्षकः सिध्यति । यदि तु 'यदिदं सर्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नं अग्निर्वै मृत्युस्सोऽपामन्न'मित्यत्र नाश्यत्वगुणयोगादन्नशब्दप्रवृत्तेः तत्प्रतिसम्बन्धी नाशकस्संहर्ता प्रतीयते । एवमत्राप्योदनपदस्य नाश्यत्वगुणेन वृत्तौ तत्प्रतिसम्बन्धी नाशकस्सिध्यति । यद्यपि सर्वं प्राणस्यान्नमित्यत्र प्रतिसम्बन्धिनः प्राणस्य भोक्तृत्वभक्षकत्वनाशकत्वानां मध्ये न किञ्चिदपि विद्यते । परं तु भक्षकत्वेनोपासनामात्रं, तथापि तत्रागत्या तथास्वीकारेऽपि सति सम्भवे प्रतीतस्यासत्त्वकल्पना न न्याय्येति तत्र भोग्यत्वभोज्यत्वगुणाभ्युपगमे जीव एव तत्प्रतिसम्बन्धी प्राप्नोति । न त्वग्निपरमेश्वरौ । अग्नेस्तदसम्भवस्य लोकसिद्धत्वात् । सम्भोगप्राप्तिसूत्रे परमात्मनोऽपि भोगनिरासात् संहार्यत्वपक्षे अग्निपरमात्मानावपि । तत्र प्रसिद्ध्यनुसारिण्या वृत्तेः स्वीकरणीयत्वात् लोके च भोज्यत्वेन वा भोग्यत्वेन वौदनस्यातिप्रसिद्धत्वादोदनपदानुसारेणाद्यौ गुणौ पर्यवस्यतः । तथा च जीव इति पूर्वः पक्षः, न परमात्मा । पूर्वसूत्रे भोक्तृत्वनिरासात् । अत एव सङ्गतिः । व्याघ्रादिजीवविशेषस्य च ब्रह्मक्षत्रे भोज्ये प्रसिद्धे एव । भोग्यत्वं तु स्त्रीपुत्रादिरूपेण जीवविशेषं प्रति द्रष्टव्यम् । अथ मृत्योरुपसेचनत्ववर्णनात् परमेश्वर इति प्राप्नोति । दध्यादि मिश्रणद्रव्यं उपसेचनमित्युच्यते । तच्चान्नादिभोजनोपकारकं सत् स्वयमपि भुज्यमानं भवति । न च प्रकृते ब्रह्मक्षत्रादिभोगसाधनत्वे सति तैस्सह भुज्यमानता मृत्योर्जीवनिरूपिता । परं तु भोगकाले मृत्युरबाधको भवति । अबाधकगुणश्च यद्यपि भोजने विषये दध्यादेर्वर्तते, तथापि नासौ भुज्यमानत्वे सति भोगसाधनत्वगुणवदतिप्रसिद्धः । संहार्यत्वपक्षे तु परमेश्वरकर्तृके संहारे मृत्योर्विषय-

त्वात् तत्सावनत्वाच्चोपसेचननिरूपणं सम्भवति । यत्क्रियाविषयत्वमोदनस्य, तत्क्रियोपकारकत्वे सति तत्क्रियाविषयत्वमादाय दध्यादिवत् मृत्योरप्युपसेचनत्वनिरूपणत्वसम्भवात् । तथा च मृत्यूपसेचनरूपणेन परमेश्वरे प्रतीयमाने कथं जीव एवेति नियन्तुं शक्यम् । प्रथमोपस्थितौदनरूपणानुसारेण चरमोपस्थितमृत्यूपसेचनरूपणस्य नेयत्वादिति जीवपूर्वपक्षाभिप्रायः । ननु, भोग्यत्वभोज्यत्वगुणविवक्षायामग्निर्न प्राप्नोत्येव । संहार्यत्वविवक्षायामपि स न प्राप्नोति । इह हि संहार्यत्वगुणयोगश्चरमश्रुतमृत्यूपसेचनरूपणप्राबल्योन्मेषणपूर्वकं सिद्धान्ते व्यवस्थापनीयः। स च समृत्युककृत्स्नजगत्संहारके परमात्मन्येव गृहीते समञ्जस इति कथमग्निरिति पूर्वपक्षस्योन्मेष इति चेत्, सम्भवमात्रेणायं पूर्वपक्ष इति न तत्राग्रहः कर्तव्यः । अपि च मृत्यूपसेचनरूपणान्यथानुपपत्त्या समृत्युककृत्स्नप्रपञ्चसंहर्ता परमात्मैहौदनप्रतिसम्बन्धी विवक्षितः स्यात् । तथासति ब्रह्मक्षत्रादिकतिपयपदार्थग्रहणं निरभिप्रायमेव स्यात् । अतोऽपि नेह परमेश्वर इति पूर्वपक्षाभिप्रायः । **मृत्यूपसेचनमिति ।** अयं भावः—यद्यपि भोग्यत्वभोज्यत्वगुणावोदनगतौ लोके प्रसिद्धौ । प्रसिद्धेनैव गुणेन गौणवृत्तिर्नाप्रसिद्धेनेत्यत्र नियामकं तु प्रसिद्धगुणः शीघ्रमुपस्थितो भवतीत्येव। एवं सतीह ब्रह्मक्षत्रयोर्मृत्योश्च नाश्यनाशकभावस्य शास्त्रे प्रसिद्धतया ब्रह्मक्षत्रमृत्युपदानां समभिव्याहारेण शास्त्रीयत्वप्रत्यासत्त्या स एव शीघ्रमुपस्थितो भवतीति प्रकृते लोकप्रसिद्ध्यनुसन्धानापेक्षभोज्यत्वादिगुण एव विलम्बितोपस्थितिकः । तथा च वेदे लोकप्रसिद्ध्यनुसारिलक्षणापेक्षया वैदिकपदसमभिव्याहारावगतैव लक्षणादिवृत्तिः प्रबलेति सिध्यति । अत एव लोकेऽनतिप्रसिद्धाप्युपक्रमोपसंहाराद्यनुसारिणी सत्यादिवाक्येष्वखण्डार्थवृत्तिरेव स्वीक्रियते, न तु लोके अतिप्रसिद्धापि विशिष्टवाक्यार्थवृत्तिः । एवं सत्युपसेचनरूपणमपि समञ्जसं भवति । **ब्रह्मक्षत्रयोश्च प्राधान्यादिति ।** ननु, किमर्थं प्रदर्शनार्थतोपेयते । यथाश्रुतमेवास्तु ब्रह्मक्षत्रयोः मृत्युना सह संहर्ता परमेश्वर एवेति । यथाश्रुतत्वेऽपि सिद्धान्तसिद्ध्यविरोधात् का च मुख्यार्थेअनुपपत्तिः । उच्यते—मृत्यूपसेचनत्वेन परमेश्वरपरत्वे अवश्यं वक्तव्ये सर्वसंहर्तरि परमेश्वरे ब्रह्मक्षत्रग्रहणं निरभिप्रायमिति यथाश्रुतानुपपत्तिपरिहाराय ब्रह्मक्षत्रपदयोः प्रधानकार्यप्रतिपादकयोः सर्वप्रपञ्चलक्षकतोपपादनेन सर्वसंहर्तृता प्रकृते विवक्षितेति द्योतनाय 'चराचरग्रहणादि'ति सूत्रकारनिर्देशः । तथा च यस्येति यत्पदानुसारेणानुवादकतया प्रतीतस्यास्य वाक्यस्य यत्प्रयन्त्यभिसंविशन्तीत्यादिपुरोवादसमानार्थकतापि सिद्धा भवति । न चैवं सिद्धान्ते ब्रह्मक्षत्रपदयोर्लाक्षणिकत्वापत्तिरेव दोष इति वाच्यम् । पूर्वपक्षेऽपि हि ब्रह्मक्षत्रे एव कस्यचिज्जीवस्य भोज्ये भोग्ये वा निय-

न्तुमशक्ये इति जीवस्य भोज्यं भोग्यं वा यावत् किञ्चिदस्ति, तत्परताया यथाश्रुते निरभिप्रायतानिवृत्त्यर्थं वक्तव्यत्वात् ॥ ९ ॥

## प्रकरणाच्च ॥१०॥

नन्वत्र भाष्ये प्रकरणं चशब्दोदितं दुर्विज्ञेयत्वलिङ्गं च अत्तुः परमेश्वरत्वसाधकतयोपन्यस्तं, तदसङ्गतमिव । न हीदं प्रकरणमत्तुः । अपि तु यत्र स इत्यत्तुराधारतया निर्दिष्टं यद्विशुद्धचैतन्यं, तस्येदं प्रकरणम् । यथा चेदं निर्विशेषप्रकरणं, तथा 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'ति सूत्रभाष्य एव स्पष्टं भविष्यति । 'क इत्था वेद यत्र स' इति दुर्विज्ञेयत्वलिङ्गं चात्तुराधार एवान्वेतीति चेत्, उच्यते—अत्रेयं शङ्का—अत्तुराधारो जीवः । न जायत इति मन्त्रप्रतिपाद्यजननमरणप्रतिषेधस्य जननमरणप्रसक्तिमति जीव एवान्वयात् । तत्रैव 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती'ति प्रतिपाद्यं दुर्विज्ञेयत्वमप्यन्वेति । 'आसीनो दूरं व्रजति शयानो याति सर्वत' इति पूर्वार्धे आसीनत्वशयानत्वादीनां जीवधर्माणां प्रतिपादनात् । तथा च प्रकरणानुसारेण 'क इत्था वेदे'ति दुर्विज्ञेयत्वलिङ्गानुसारेण चात्तुरधिकरणं जीव एवेति कथं तदाधेयोऽत्ता परमेश्वरस्स्यात् । इयं च शङ्का प्राकरणिकेषु बहुषु मन्त्रेषु सत्स्वपि विशिष्य न जायत इति मन्त्रोदाहरणेन सूचिता । एतादृशशङ्कानिरासद्वारात्तुः परमेश्वरत्वसाधकमिदं सूत्रम् । अयं च परिहाराभिप्रायः । एतस्य प्रकरणस्य प्रत्यगभिन्ननिर्विशेषवस्तुपरता 'त्रयाणामेव चे'ति सूत्रे प्रदर्शयिष्यते । तथा च प्रत्यगभिन्ने परमात्मनि जननमरणादयो जीवधर्माः प्रसक्ता इति न जायत इति मन्त्रस्य न परमात्मप्रकरणविरोधिता । आसीनो दूरं व्रजतीत्यादयश्च निर्देशाः सर्वात्मत्वाभिप्रायाः । दुर्विज्ञानत्वं च निर्विशेषरूपस्योपपन्नमेवेति प्रकरणलिङ्गाभ्यामत्तुरधिकरणं निर्विशेषपरमात्मस्वरूपमेवेत्यत्तुः परमात्मत्वे न विरोधः । अत्र पूर्वपक्षे अत्तुः परमेश्वरत्वाभावादेतन्मन्त्रपर्यालोचनया तदाधारस्य कारणीभूतपरमेश्वरातीतत्वं न सिध्यति । सिद्धान्ते त्वत्तुः परमेश्वरत्वाद्यत्र स इति निर्दिश्यमानमधिकरणं कारणातीतं सिध्यतीति फलभेदो द्रष्टव्यः ॥ १० ॥

॥ इति अत्त्रधिकरणम् ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

ऋतं पिबन्तौ अवश्यं भोक्तव्यं कर्मफलमनुभवन्तौ सुकृतस्य लोके शरीरे या गुहा हृदयपुण्डरीकरूपा, तस्यां यत् परमं उत्कृष्टं परस्यार्ध्यं स्थानम् । 'राज्ञोऽर्ध्य-

मेयाये'ति अन्यत्र प्रयोगात् । स्वार्थे यत् । हृदयाकाशरूपम् । तत्र प्रविष्टौ विद्यमानौ छायातपाविव परस्परविलक्षणौ । ये ब्रह्मविदः ये च पञ्चाग्नयः, त्रिर्नाचिकेतोऽग्निः चितो यैस्ते च वदन्ति । त्रीन्वरान्वृणीष्वेति मृत्युनोक्तस्य नचिकेतसः पितृसौमनस्यमग्निविद्येति वरद्वयप्राप्त्यनन्तरं तृतीयवरप्रार्थनेयं–प्रेते मनुष्ये मृते प्राणिनि लौकिकानां यतः विचिकित्सा–एतच्छरीरभागी परलोकेहलोकानुयायी कश्चिदस्तीति केचन वदन्ति । केचन नास्तीति वदन्ति । एतादृशविप्रतिपत्तिप्रयुक्ता प्रसिद्धा । अतोऽहं त्वदनुशिष्टस्संशयनिवृत्त्यर्थं एतदात्मतत्त्वविद्यां त्वदुपदेशजन्यमात्मतत्त्वनिर्णयमिच्छामि । एष उपदेश एव तृतीयो मे वरः प्रार्थनाविषयः । पिबन्ताविति पदं पक्षद्वयेऽपि योजयितुं शङ्कते—**अत्राहेति** । **कर्मफलभोग इति** । तथा च जीवस्तावत् निर्विवाद इति भावः । **छत्रित्वोपचारदर्शनादिति** । उपचारालम्बनं च छत्रिघटितसमुदायान्तर्गतिः । उपचारे च अच्छत्रिणामपि च्छत्रित्वप्रकारेणैव बोधः । उपचार आहार्यारोपः । **पाचयितर्यपीति** । अनेकसूदाधिकारिणि नियोजकेऽपि अयं राज्ञः पक्तेति प्रयोगात् । पाणिनिनापि हि 'तत्प्रयोजको हेतुश्चे'ति सूत्रेण प्रयोजकस्य हेतुसंज्ञा चकारेण कर्तृसंज्ञा च दर्शिता । तथा च यदाख्यातेन प्रयोजककर्ताभिधीयते, तदा पिबन्तिति परमेश्वरपक्षे समञ्जसमेव । **एधांसि पचन्तीति प्रयोगदर्शनादिति** । धातूनां नानार्थकतया यदा पचनं विक्लित्त्यनुकूलः काष्ठगतो ज्वलनादिव्यापारो विवक्ष्यते, तदायं प्रयोगः । एवं भोगानुकूलो बुद्धेर्यो व्यापारोऽस्ति, तद्विवक्षायां धातुना पिबन्तिति बुद्धावपि प्रयोगः समञ्जस एव । **करणे कर्तृत्वोपचारादिति** । उपचारपदं विवक्षापरम् । न तु पिबन्तावित्यस्य भुञ्जानावित्यर्थं स्वीकृत्य जीवः सिद्धवत्कृतः । तस्य द्वितीयः परं बुद्धिः परमेश्वरो वेति कलह इत्युच्यते, तदनुपपन्नम् । पिबन्तावित्यस्य भोगकर्तृप्रतिपादकत्वाभावादित्याशङ्क्याध्यात्माधिकाराद्यथाश्रुतार्थग्रहणासम्भवेन पिबन्तावित्यस्य भोगपरत्वमुपेयम् । तथा च जीवे लब्धे द्विवचनोपपत्तये बुद्धिपरमेश्वरयोर्मध्ये अन्यतर एव सन्देहविषयो भवति, तथापि तत्प्रवेशो न सम्भवति । प्रवेशो हि साकल्येन तदन्तर्गतिः । सा कथं सर्वव्यापकस्य हृदयादिषु स्यात् । जीवस्यान्तःकरणपरिच्छिन्नस्य सम्भवति । बुद्धेरपि सम्भवत्येव । परिच्छिन्नत्वात् । अतो गुहाप्रवेशानुसारेण बुद्धिरेव ग्राह्या । अपि च 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धी'ति वाक्ये रथत्वेन निरूपिते शरीरे बुद्धिजीवयो रथिसारथिभावेन कल्पितयोः शरीरप्रवेशप्रतिपादनमपेक्षितम् । तदप्रविष्टयो रथिसारथित्वानुपपत्तेः । तथा चोत्तरवाक्याकाङ्क्षानुसारेणापि इह बुद्धिरेव द्वितीया प्र-

तिपाद्या । बुद्धिविविक्तं जीवस्वरूपं ब्रह्मविदोऽपि निरूपयन्त्येवेति ब्रह्मविदो वदन्तीतिवाक्यगतं ब्रह्मविद्वचनविषयत्वमपि बुद्धिजीवयोरुपपद्यत एव । अन्यानि विशेषणानि तु न बुद्धिसाहित्यपक्षं व्यासेधन्ति । न च द्वित्वादिसङ्ख्यानिर्देशः सजातीयद्वित्वादिधर्मविषयक एव लोके दृष्ट इति जीवसजातीयश्चेतनः परमात्मैव प्रकृते ग्राह्यः, न तु जीवविजातीया जडा बुद्धिरिति वाच्यम् । गुहाप्रवेशप्रतिपादकवाक्यशेषविरोधे लौकिकन्यायस्यानादरणीयत्वात् । लौकिकन्यायानादरणेन वाक्यशेषानुगुण एवार्थो ग्राह्य इति हि पूर्वाधिकरणे निरूपितम् । अत एव सङ्गतिरपि । ननु, 'समानस्वभावयोरेव सङ्ख्यानिवेश' इति न्यायेन द्वितीयः परमेश्वरो ग्राह्य इत्येतदसङ्गतम् । लौकिकन्यायापेक्षया वाक्यशेषस्य प्रबलत्वात् । तथा च गुहाप्रवेशानुपपत्त्या न परमेश्वरो ग्राह्यः । अपि तु जीव एवेत्यभिप्रायेण शङ्कते—**नन्वक्तमिति । गुहानिहितत्वदर्शनादिति** । ननु, गुहानिहितत्वादेव परमात्मा प्रत्येतव्य इति विरुद्धम् । श्रुतिषु स्मृतिषु च गुहानिहितत्वश्रवणस्य जीवस्वरूपाभिप्रायत्वात् । तथा च यत्र यत्र परमात्मप्रकरणे गुहानिहितत्वमवगम्यते, तज्जीवेनैव रूपेण भविष्यति, न तु स्वरूपेणेत्यत आह—**सर्वगतस्यापि परमात्मन इति** । अयं भावः—जीवस्यापि कथं गुहानिहितत्वम् । परमात्माभिन्नस्य जीवस्यापि विभुत्वेन स्वतो गुहाप्रवेशासम्भवात् । यदि सोपाध्यन्तःकरणावच्छेदेन गुहाप्रवेशो जीवस्योपेयते, तथासति परमात्मनोऽपि स्वनियन्तव्यान्तःकरणाद्यवच्छेदेन गुहाप्रवेश उपपद्यत एव । तथा च दहरशाण्डिल्यविद्यादिषु हृदयाकाशान्तर्वर्तित्वं पारमेश्वरेणैव रूपेणावगम्यते । तथा 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराण'मित्यादिषु दुर्दर्शत्वादिधर्मकीर्तनात् ब्राह्मेणैव रूपेण गुहाप्रवेश उपगन्तव्यः । **सुकृतलोकवर्तित्वं तु छत्रित्ववदिति** । इदं च सुकृतस्य लोके विद्यमानाविति पृथग्विशेषणमित्यभिप्रेत्य । तदपि सुकृतपदेन सुकृताधीनत्वमवगम्यत इत्यभिप्रेत्य । वस्तुतस्तु सुकृतलोके विद्यमानता यथा जीवस्य भोगार्था, एवं परमात्मनो जीवनियमार्था सेति विवक्षायां न काचिदनुपपत्तिः । **संसारित्वासंसारित्वयोरिति** । युक्तं च संसारित्वासंसारित्वाभ्यामेव छायातपत्वोपपादनं, न तु जडत्वाजडत्वाभ्याम् । पिबन्तावित्यनेनैकस्य भोक्तृत्वमपरस्य भोजयितृत्वमित्युक्ते उभयोश्चेतनत्वाविशेषे कथमयं नियमः. उभावपि भोक्तारौ किं न स्यातां, व्यत्यासो वा कुतो नास्तीत्याशङ्किते अविद्यादिदोषोपघातानुपघाताभ्यां तदुपपादनार्थत्वात् । ननु, 'समानस्वभावेन सङ्ख्यापूरण'मिति न्यायानुसरणे पारतन्त्र्यादिना बुद्धेरपि सजातीयत्वात्तया कुतो न सङ्ख्यापूरणमित्याशङ्क्य चेतनत्वस्वरूपेणैव साजात्यं विवक्षणीयम् । पारतन्त्र्यापे-

क्षया तस्यान्तरङ्गत्वात् । पिबन्ताविति चेतनधर्मप्रतिपादकेनैवोपस्थितत्वाच्चेति परिहारमभिप्रेत्योपसंहरति—तस्माद्विज्ञानात्मपरमात्मानाविति ॥ ११ ॥

## विशेषणाच्च ॥ १२ ॥

**परमात्मानं गन्तव्यं कल्पयतीति** । एतेन रूपकवाक्ये सारथितया बुद्धेः कल्पितत्वात्तदाकाङ्क्षानुसारेण द्वितीया बुद्धिरेव ग्राह्येति शङ्का निरस्ता । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति अध्वनः पारस्य प्राप्यतया समाम्नातस्य 'अत्र ब्रह्म समश्नुत' इति वाक्ये अत्रैव प्राप्यतया समाम्नानं कथमित्याकाङ्क्षायां गुहानिहितत्वं परमात्मनः प्रतिपाद्यते । ततश्चायमर्थो लभ्यते । गुहानिहितं ब्रह्मात्रैव लभ्यते । कण्ठचामीकरन्यायेन अध्वपदेन च देहेन्द्रियादिपर्वविशेषा एव विवक्षिताः । पारपदेन च तद्विविक्ततैव विवक्षिता । नन्वेवमपि रूपकवाक्येनात्र ब्रह्म समश्नुत इति प्राप्तिवाक्येन च गुहाप्रवेशप्रतिपादने यथायथं बुद्धिपरमेश्वरयोरपेक्षिते प्राप्तवाक्यापेक्षित एव गुहावाक्यार्थो ग्राह्य इत्यत्र किं नियामकमिति चेत्, प्रधानत्वादिति वदामः । रूपकवाक्यं हि 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' इत्यादिवाक्यपर्यालोचनया यथा वशीकृताः रथसारथिहयादयः अभीप्सितं देशं प्रापयन्ति , तथा बुद्धीन्द्रियादयो यस्य वशीकृताः प्रशस्ता भवन्ति, स विष्णोः परमं पदं प्राप्नोतीति ब्रह्मप्राप्त्युपयोगिवशीकरणविधिशेषभूतम् । तथा च रूपकवाक्यमपेक्ष्य प्राप्तिवाक्यस्य प्रधानत्वात् तदपेक्षित एवार्थो ग्राह्यः । अपि च यदा जीवस्य प्रवेशः प्रतिपादितः, तदा बुद्धेः पृथक्प्रवेशो न प्रतिपादनीयः । व्यापकस्य जीवस्य स्वतः प्रवेशासम्भवेन बुद्धितादात्म्येनैव प्रवेशस्य वक्तव्यतया जीवप्रवेशप्रतिपादनेनैव बुद्धिप्रवेशस्य प्रतिपादनासिद्धेः । तं दुर्दर्शमिति । दुर्दर्शत्वे हेतुः गूढमिति । स्वप्रकाशस्य कथमावृतता । तत्राह—अनुप्रविष्टमिति । बुद्धिमनुसृत्य प्रविष्टम् । कुत्रेत्यत आह—गुहाहितं हृदयपुण्डरीकगुहानिहितम् । न च सा गुहा सुगमेत्याह—गह्वरेष्ठं बाह्यविषयासङ्गरूपानेककण्टकितवृक्षयुतम् । अध्यात्मयोगः अध्यात्मशास्त्रोदितो यः श्रवणमनननिदिध्यासनात्मकः । मत्वा साक्षात्कृत्य । धीरो विषयासङ्गरूपकण्टकनिरसनसमर्थः । ननु, पञ्चाग्न्यादिवदनविषयत्वं ब्रह्मणो न सम्भवति । कर्मठानां जीवातिरिक्तब्रह्मवचनासम्भवादित्याशङ्क्य केवलकर्मजडानां तदसम्भवेऽपि ब्रह्मविविदिषोपयोगिकर्मानुतिष्ठतां ब्रह्मवचनं सम्भवत्येवेत्यभिप्रेत्योपसंहरति—**तस्मादिति । एष एव न्याय इति** । न्यायपदेन पैङ्गिवाक्यानालोचनदशा ध्व-

नता । इत्येवमादिष्विति । 'समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीती'ति मन्त्रशेषः । द्वासुपर्णौ वृक्षवाससामान्यात् । सयुजा नियन्तृनियन्तव्यभावेन युक्तौ । सखाया उपासनतत्फलप्रदानाभ्यां परस्परं प्रीणयन्तौ । समानं एकं वृक्षं शरीरम् । शरीरस्य वृक्षत्वेन रूपणे जलादिभिः प्ररोहशालित्वादिकमालम्बनं द्रष्टव्यम । परिषस्वजाते परिष्वङ्गः सम्बन्धः । पिप्पलं कर्मफलम् । अभिचाकशीति प्रकाशते । विशेषणाच्चेति सूत्रमतिदिशति—**अनन्तरे च मन्त्र इति** । पुरुषो जीवः देहैक्याध्यासेन ततो विविक्ततया अगृह्यमाणः । अनीशया अनैश्वर्येण दीनभावेन । जुष्टं नानाविधैर्योगैः सेवितं विषयीकृतम् । व्यवहारदशायामन्यं सन्तं यदा स्वात्मतया पश्यति तदास्येशस्य महिमानं इति प्राप्नोति । छान्दसो गुणाभावः । मनुः स्वायम्भुवोऽब्रवीदितिवत् । अत्र द्रष्टुः परमेश्वरमहिमप्राप्त्युक्तेरन्यस्यान्यमहिमप्राप्तेरसम्भवात् वस्तुगत्या जीवब्रह्मणोरभेदसूचनात् अन्यमित्युक्तिर्व्यवहारदृष्ट्येत्यर्थात् सिध्यति । 'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवती'ति सर्वात्मतारूपमहिमप्राप्तेरैक्यज्ञानसाध्यतावगमादिहापीशसाक्षात्कार ऐक्यविषय एव पर्यवस्यति । कृत्वा चिन्तामुद्धाटयति । **अपर आहेति** । सिद्धान्तं जीवेश्वरपरत्वम् । **अन्यथेति** । बुद्धिविशुद्धसाक्षिपरतया । ननु, 'समाने वृक्ष' इत्युत्तरमन्त्रे जीवेश्वरयोः प्रतिपाद्यमानतया अस्य मन्त्रस्यापि तदेकरूप्याय जीवेश्वरपरतोपेया । न च तथासति 'तावेतौ सत्त्वक्षेत्रज्ञावि'ति ब्राह्मणवाक्यविरोधः । 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेतत्स्यात्त्रिभिर्गुणैः ॥' इत्यत्र देवेष्विति पदसमभिव्याहारेण सत्त्वपदस्य जीवपरताया दृष्टत्वादिहापि सत्त्वपदं जीवपरं भविष्यति । 'यस्त्वात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि सर्वभूतात्मेति चोच्यत '॥ इति क्षेत्रज्ञपदस्य परमात्मविषयतायाः दृष्टत्वात् इहापि तथास्त्विति शङ्कते—**सत्त्वशब्दो जीव इति** । 'मनसस्तु परा बुद्धि' रिति स्थाने 'मनसः सत्त्वमुत्तममि'ति दर्शनात् सत्त्वशब्दो बुद्धावपि प्रसिद्धः । 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इति क्षेत्रज्ञपदं जीवेऽपि दृश्यत इत्यभिप्रेत्य परिहरति—**तन्न सत्त्वक्षेत्रज्ञशब्दयोरिति** । ननु, प्रयोगस्य तुल्यत्वे जीवपरयोरेव ग्रहणं किं न स्यात् । उत्तरमन्त्रानुसारादित्यत आह—**तत्रैव चेति** । तावेतौ सत्त्वक्षेत्रज्ञाविति पूर्ववाक्यस्य श्रुत्यैवोत्तरवाक्ये बुद्धिजीवपरतया व्याख्यातत्वात् नार्थान्तरग्रहणमिति भावः । न च येन स्वप्नं पश्यति तत्सत्यमित्यत्र येनेतीत्थंभावे तृतीया । तथा च यदुपहितः परमात्मा स्वप्नं पश्यतीत्यर्थलाभे सति जीवोपहितस्य परमात्मनः स्वप्नद्रष्टृतया तत्सत्त्वमिति वाक्येन परमात्मनः स्वप्नदर्शनोपाधिभूतो जीव एव तत्पदपरामृष्टः स-

त्वमिति निरुच्यते । अथ योऽयमित्यत्रापि शारीरपदेन परमात्मैवोच्यत इतीदमपि वाक्यं जीवेश्वरपरमेवेति वाच्यम् । येनेत्यस्य करणार्थत्वेन कारकविभक्तित्वसम्भवे इत्थंभावार्थकविभक्तित्वस्य 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायविरुद्धत्वात् यः स्वप्नं पश्यतीति ऋजुनिर्देशेनैव जीवलाभसम्भवे येनेति निर्देशस्य निरर्थकक्लिष्टतापत्तेश्च । शारीरपदं च नेश्वरपरम् । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते । अनुपपत्तेस्तु न शारीरः ॥' इत्याद्यभियुक्तव्यवहारे जीव एव तत्प्रयोगात्। सत्त्वे भोक्तृत्वमध्यारोपयतीति । सत्त्वे भोक्तृत्वप्रक्षेपश्च तदुपाधिकमेव जीवस्य भोक्तृत्वम् । स्वतस्तु जीवोऽसङ्ग एवेति द्योतनायेति तदाह—इदं हीति । अयं चार्थः समाने वृक्ष इत्युत्तरमन्त्रे स्पष्टीकृतः । तत्र निमग्नपदेन वृक्षाख्यशरीरतादात्म्यमुपक्षिप्य तन्मूलकतया अनैश्वर्यशोकमोहात्मकसङ्गप्रतिपादनात् । न चैवमप्युत्तरमन्त्रे जीवेश्वरावपीह बुद्धिविशुद्धसाक्षिणौ प्रतिपाद्येते इति उभयोर्मन्त्रयोरनाकाङ्क्षता स्यादिति वाच्यम् । उत्तरमन्त्रे 'अस्य महिमानमि'ति जीवब्रह्मणोरभेदसूचनात्तदुपयोगितयैव तस्य मन्त्रस्य त्वंपदार्थशोधकत्वोपपत्तेः । वस्तुतस्तूत्तरमन्त्रे जुष्टं यदा पश्यत्यन्यमीशमिति वाक्ये कस्मादन्यमित्यपेक्षिते शरीरादन्यं स्वात्मानमित्यर्थोपगम एव युक्तः । पूर्ववाक्ये निमग्नपदेन शोकहेतुतया शरीरतादात्म्यस्योक्तत्वेनेह वीतशोकताहेतुतया प्रतिपाद्यमानस्य दर्शनस्य शोकहेतुदर्शनविरोधिताया वक्तव्यत्वात् । देहतादात्म्यभ्रमविरोधी च देहान्यताज्ञानमेव । यदि तु स्वस्मादन्यमीशं परमेश्वरं पश्यतीत्यर्थो विवक्ष्येत, तदा पूर्वार्धे देहनिमग्नतादिप्रतिपादनं व्यर्थमेव स्यात् । उत्तरवाक्यानुपयोगात् । न हि स्वभिन्नेश्वरज्ञानं विशोकहेतुरित्यत्र देहतादात्म्यभ्रमः शोकहेतुरित्यस्य सामञ्जस्येन उपयोगो वर्णयितुं शक्यते । देहविविक्तात्मज्ञानं विशोकहेतुरित्युपगमे तु उपपत्तितया पूर्वार्धं उपयुज्यते । यतो देहात्मत्वभ्रमः शोकहेतुः, अतः तद्विरोधिभूतं देहाद्विविक्तात्मज्ञानं विशोकहेतुर्भवतीति । तथा च यत् पूर्वं 'द्वासुपर्णे'ति मन्त्रे विशुद्धात्मस्वरूपं प्रतिपादितं, तत् ज्ञानस्य सोपपत्तिकम् । फलप्रतिपादको द्वितीयो मन्त्रः समाने वृक्ष इत्यादिः । अयञ्चार्थः 'न हवा एवंविदि किञ्चन रज आध्वंसत' इति पैङ्गिब्राह्मणवाक्यशेषेण दर्शितः । अयमंशो हि न द्वासुपर्णेति मन्त्रनिविष्टार्थस्फुटीकरणार्थः । तत्र विद्याफलाप्रतिपादनात् । अपि तु पूर्वोत्तरमन्त्रयोर्विद्याविषयफलप्रतिपादकयोरेकवाक्यतासम्पादनार्थः । तथा चैवंविदित्येवम्पदेन पूर्वोक्तार्थस्यैव उत्तरमन्त्रगतदृशिधात्वर्थविषयताप्रतिपादनात् पैङ्गिब्राह्मणानुसारेणापि समाने वृक्ष इति मन्त्रे देहविविक्तमेवात्मतत्त्वं विवक्षित'मि-

त्यवगम्यते । यथापूर्वाधिकरणं मृत्यूपसेचनोपस्थितसर्वजगत्संहर्तृत्वलिङ्गस्य पारमेश्वरस्य प्रथमपठितौदनपदोपस्थापितभोक्तृत्वाख्यजीवलिङ्गाभिभूतत्वादस्पष्टब्रह्मलिङ्गम् , एवमिदमपि पिबन्ताविति पदेन द्वित्वाश्रयतयोपस्थितस्य चेतनत्वस्य पारमेश्वरलिङ्गस्य गुहाप्रविष्टत्वरूपजीवलिङ्गाभिभूततया अस्पष्टब्रह्मलिङ्गम् ॥१२॥

॥ इति गुहाधिकरणम् ॥ ३ ॥

# अन्तर उपपत्तेः ॥ १३ ॥

'वर्त्मनि प्रान्ते पुरुषप्रतिरूप' इति वाक्येन पुरुषाकारत्वात् प्रतिबिम्बस्य तस्मिन् पुरुषश्रुतिरुपपादिता भवति । ननु, छायात्मेति पूर्वपक्षोऽसङ्गतः । पुरुषादिश्रुतीनां तत्र लाक्षणिकत्वापातात् । एवं जीवदेवतापूर्वपक्षोऽप्यसङ्गतः । तत्र पुरुषात्मपदयोरुपपत्तावपि अमृताभयब्रह्मपदानामसाङ्गत्यापातात् । न च जीवदेवतयोर्नित्यतयामृतत्वं, ब्राह्मणतया ब्रह्मत्वं, मोक्षदशाभिप्रायेणाभयत्वमुपपद्यत इति वाच्यम् । अमृतपदं हि वेदान्तेषु नित्यमुक्तत्वाभिप्रायं प्रयुज्यते, न तु मरणाभावमात्राभिप्रायम् । आत्मादिपदैरेव तस्यार्थसिद्धत्वात् । तादृशं चामृतत्वं न जीवदेवतयोरुपपद्यते । ब्राह्मणत्वाभिप्रायेणानीश्वरे ब्रह्मपदं तु काचित्कम् । ततश्चातिप्रसिद्धपरमात्मग्रहणे सम्भवति न ब्रह्मपदेनानीश्वरग्रहणं न्याय्यम् । न च परमेश्वरपक्षेऽपि 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्युपक्रमगतमाक्षिरूपाल्याधारत्वं चाक्षुषज्ञानविषयत्वं च दृशिपदोक्तं न सङ्गच्छत इति वाच्यम् । एतादृशशङ्काया अन्तस्तद्धर्माधिकरण एवोपासनार्थस्थानविशेषनिर्देशो दृश्यत इत्युपासकसाक्षात्काराभिप्रायमित्येवंप्रतिपादनेन निरस्तत्वात् । उत्तरत्र च बहवो वामनीत्वादयो ब्रह्मासाधारणधर्माश्श्रूयन्ते । तस्मादसङ्गतोऽयं पूर्वपक्ष इति तथा चान्तस्तद्धर्माद्यधिकरणैरेव गतार्थमधिकरणमिति चेत्, उच्यते—'य एषोऽक्षिणि पुरुषो दृश्यत' इति यथाश्रुतं प्रतिबिम्ब एव स्वरसम् । अन्तरादित्यादिवाक्ये तु न प्रतिबिम्बपूर्वपक्षस्सम्भवति । आदित्ये प्रतिबिम्बदर्शनस्यासिद्धत्वात् । तथा च प्रथमोपस्थितप्रतिबिम्बानुसारेण आत्मादिश्रुतयस्तत्रैव यथाकथञ्चिद्व्याख्येयाः । नन्वेवमप्यन्तरादित्यविद्यान्तर्गताक्षिवाक्ये 'य एषोऽक्षिणि पुरुषो दृश्यते सैव ऋगित्यत्रापि प्रतिबिम्बसम्भवात् परमेश्वरानिर्णयो न स्यादिति चेत्, मास्त्वेतदधिकरणे । तस्यापि विषयत्वोपपत्तेः । ननु, प्रथमश्रुताया अपि गायत्रीश्रुतेरुत्तरभाविभिरपि सर्वभूतपादत्वादिभिर्ब्रह्मपरता स्थिता । भूयोऽनुग्रहन्यायात् । एवं प्रकृतेऽपि किं न स्यात् । भवेदेवं 'य एषोऽक्षिणि पुरुषो दृश्यते सैव ऋगि'त्यत्र । तत्र ह्युत्तरत्र ऋगाद्यात्मत्वं ब्रह्मलिङ्गं समाम्नायते । न तु प्रकृते सम्भवति । अत्र आत्मादिश्रुतयः 'एष आ-

त्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेतीतिपदशिरस्काः । तथा च 'नाम ब्रह्मेत्युपासीते' त्यत्रैव न स्वार्थसत्तापेक्षिण्यः । तादृशदृष्टिविधानार्थत्वात् । यद्यपि चोत्तरत्रैष उ-एव वामनीरित्यादावितिशब्दो न श्रूयते, तथापि पूर्वत्र श्रुतस्य तत्राप्यनुषङ्गो भवि-ष्यति । दृष्टिविधानप्रायपाठात्तेषामपि तादृशदृष्टिविधानार्थत्वेनोपक्षेपोपपत्तेः । एवं सति जीवदेवतापूर्वपक्षस्य कथमुत्थानम् । तत्रोपक्रमस्य 'य एषोऽक्षिणि पुरुषो दृश्यत इत्यस्य स्वारस्यासम्भवान्न कथमपि तादृशपूर्वपक्षस्य वैभवप्रदर्शनमात्रार्थत्वात् । ननु, प्रतिबिम्बपूर्वपक्षे पुरुषश्रुतिरितिपदरहिता बाधिका भविष्यति, न । अक्षिणि दृश्यत इति पदयोः प्रतिबिम्बे स्वरसयोर्मध्यपतितायास्तस्यास्तदपेक्षया दुर्बलतया प्रतिबि-म्ब एव नयनोपपत्तेः । नन्वेवमपि पूर्ववाक्यानुसारेणास्य ब्रह्मपरता भविष्यति । एवं हि पूर्ववाक्य उपाख्यायते—उपकोसलः सत्यकामे ब्रह्मचर्यमुवास तं चोपकोसलं सत्य-काम आचार्यो अग्निशुश्रूषायामत्यन्तमवहितमपि असमावृत्यैवान्यान् ब्रह्मचारिणः समावृत्य प्रोवास । ततोऽखिन्न उपकोसलोऽग्निशुश्रूषानिरत एवाशनं न कृतवान् । स चाचार्यजायया भोजनार्थमुपलालितोऽपि तामुवाच बहव इमे पुरुषे कामाः नाना-त्ययाः व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीति तमतिखिन्नमुपलभ्योपचारतोषिता अग्नयः सम्भूयोपदिदिशुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति स होवाच विजानाम्यहं प्राणो ब्रह्मेति कञ्च तु खं च न विजानामीति ते होचुः यद्वाव कं, तदेव खं, यदेव खं त-देव कमिति । प्राणञ्च हास्मैतदाकाशञ्चोचुः, अथ हैनं गार्हपत्यान्वाहार्यपचनाहवनी-याः प्रत्येकं 'य एष आदित्ये पुरुषो दृश्यते, सोऽहमस्मि स एवाहमस्मीति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति य एष विद्युति पुरुषो दृ-श्यते सोऽहमस्मि स एवाहमस्मी'ति च यथाक्रममुपदिश्य स्वविद्याफलं च स य एतदे-वं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यापरपु-रुषाः क्षीयन्त उपवसन्तः भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्चेत्युपसञ्जह्रुः । एषा सोम्य ते-ऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेति आजगाम हाचार्यस्तमाचार्योऽभ्युवादोप-कोसल ३ ' इति भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति कोनु त्वा-नुशशासेति कोनु मानुशिष्यादित्युपकोसलेऽपह्नुवाने निर्बन्धेन चाचार्चभयेन कम्प-मानानग्नीन् पुरस्स्थितान् दर्शयति समानाग्निभिरुपदिष्टमिति आचार्यो निर्धार्य किं नु सोम्य किल तेऽवोचन्निति पप्रच्छ अग्नीनां यथोपदेशमुपकोसलेन नि-वेदितः लोकान्वा किल तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त, एवमेवंविदि पापं कर्म न श्लिष्यत इति प्रतिज्ञायोवाच य एषोऽक्षिणि पुरुषो दृश्यत' इत्यादि । तथा च पूर्ववाक्ये ब्रह्मणः प्रस्तुतत्वात्

य एष इति सर्वनाम्नः प्रकृतपरामर्शितास्वारस्येन ब्रह्मपरतावश्यम्भावात् अक्षिपुरुषो ब्रह्मैवेति सिद्धावक्षिणि दृश्यत इति तत्रैव शास्त्रीयदृष्ट्यभिप्रायं कथञ्चिद्योजनीयमिति चेन्न । कं ब्रह्मेत्यादिवाक्ये हि न ब्रह्मोपासनं विवक्षितम् । अपि तु नामादिषु यथा ब्रह्मदृष्टिः, तथा वैषयिकसुखे कशब्दोदिते आकाशे च खशब्दोदिते ब्रह्मदृष्टिर्विवक्षिता । सिद्धान्तिनापि हि 'प्राणो ब्रह्मे'ति वाक्ये प्राणे ब्रह्मदृष्टिरित्येव स्वीकृतम् । तत् कस्य हेतोः प्राणञ्च हास्मै तदाकाशञ्चोचुरिति प्राणप्राधान्येनोपसंहारदर्शनात् । एवंसति कं ब्रह्मेत्यादिवाक्यार्थस्यापि आकाशञ्चोचुरिति आकाशप्राधान्येनोपसंहारात्तत्रापि प्रतीकविवक्षैव भविष्यति । आकाशपदस्य कखशब्दोदितोभयलक्षकत्वात् । यदि तु 'कं ब्रह्मे'त्यादिवाक्ये ब्रह्मैव प्राधान्येन विवक्षितमिति निर्बन्धः, तथापि अग्निविद्याव्यवधानात् न य एष इति सर्वनाम्नोस्तत्परामर्शकता । तथा च परामर्शयोग्यस्य प्रकृतस्याभावात् प्रकरिष्यमाणप्रतिबिम्बपरामर्शकतैवास्थेयेति पूर्वपक्षाभिप्रायः । ततश्च यथा पूर्वाधिकरणे पिबन्तावित्युपक्रम एव द्वित्वाधारतया सजातीयस्येश्वरस्यावगतत्वेन गुहानिहितत्वादिकमुत्तरभाविपरमेश्वर एव व्याख्यातम् । एवमत्राप्युपक्रमावगतप्रतिबिम्बानुसारेणैवोत्तरभाविनामात्मत्वादीनां पूर्वपक्षे नयनमिति सङ्गतिरुपपद्यते । **परमेश्वरे गुणजातमिहोपदिश्यमानमिति** । अयं भावः—मनोब्रह्मेत्यादावितिशब्दस्योपासीतेतिपदसमभिव्याहारेणोपासनाकारसमर्पकतया स्वार्थविवक्षानिर्बन्धविघातकत्वेऽपि नेहेतिशब्दस्तद्विघातकः । प्रत्युतोपाध्यायवचनसमभिव्याहाराद्वेदाः प्रमाणमिति प्रामाणिका आहुरित्यादिपदेषु आत्मेति होवाच प्रकृत आचार्य इति इतिपदेन तस्यातीवप्रामाणिकतैव ध्वन्यते । तथा चोत्तरभावित्वेऽपि भूयस्त्वादात्मत्वाद्यनुसारेणैवोपक्रमगतं दृश्यतेऽक्षिणीत्येतदेव शास्त्रीयदृष्ट्यभिप्रायं व्याख्येयमिति । संयद्वामत्वं प्राप्तसकलकामत्वम् । वामनीत्वं भक्तान् प्रति कामप्रापकत्वम् । भामिनीत्वं सर्वप्रसिद्धत्वम् । न चैतेऽन्यथा नेतुं शक्याः । सर्वाण्येवैनं वामान्यभिसंयन्तीत्यादिना, तत्क्रतुन्यायेन तात्पर्यलिङ्गस्य फलस्य कीर्तनात् । एवममृताभयत्वशब्दोपदर्शितं सकलहेयविनिर्मुक्तत्वमपि नान्यथा नेतुं शक्यम् । पुष्करपलाशवाक्येन उपासकेऽपि पापोपलक्षितसकलहेयसम्बन्धाभावरूपफलाम्नानात्, लोकप्रसिद्धस्यापि घृताद्यलिप्तत्वस्याक्ष्णः प्रकृतपुरुषस्थानत्वप्रयुक्तताप्रतिपादकात्तद्यद्यप्यस्मिन् सर्पिर्वोदकं वेत्यर्थवादाच्च ॥१३॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

एतदप्युक्तमेवेति । निचाय्यत्वादेवमित्यत्रेति भावः । न च तर्हि तेनोक्तत्वादिदं व्यर्थमेव स्यादिति वाच्यम् । आदिपदेन नामरूपादिग्रहणात् यथा नामरूपरहितमपि तत्सम्बन्धितया उपासनार्थमुपदिश्यते, एवं व्यापकमप्युपासनार्थं अक्ष्यादिगततया निर्दिश्यत इति श्रौतदृष्टान्तकथनेन तस्यैवार्थस्य दृढीकरणार्थत्वात् ॥१४॥

एवं ब्रह्मणः प्रकृतत्वाभावं पूर्वपक्ष्युक्तमभ्युपगम्यैव उपपत्त्या अक्षिवाक्यस्य ब्रह्मपरत्वमुपपादितम् । इदानीं ब्रह्मणः प्रकृतत्वं साधयति—

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

'कं ब्रह्म खं ब्रह्मे'ति वाक्यं ब्रह्मोपासनापरमेवेति कथं पुनरित्यादिनोपपादयिष्यते । अस्तु ब्रह्मप्रधानकमग्निवाक्यम् । अथापि नाचार्यवाक्यगतेन यत्पदेन तस्य परामर्शः । भिन्नवक्तृकतया यत्पदेन परामर्शासम्भवादित्याशङ्क्याह — आचार्यस्तु ते गतिं वक्तेति चेति । इदं ह्यग्नीनां वाक्यमाचार्येण वक्ष्यमाणस्यार्थस्य स्वोपदिष्टार्थसम्बन्धिताप्रतिपादनार्थम् । तथा चान्यत्र वक्त्रन्तरप्रयुक्तवाक्यार्थस्य सर्वनाम्ना परामर्शासम्भवेऽपीह वचनेनैकवाक्यताघटनात् सम्भवति परामर्श इति भावः । ननु, तावताप्याचार्येण वक्ष्यमाणाया एव गतेरग्न्युपदिष्टार्थसम्बन्धो भविष्यति, न तु स्थानादेः । स्थानादिकमाचार्योपदिष्टायामन्यस्यामेवोपासनायामन्वितमस्तु । न च यद्याचार्येणोपासनान्तरमुच्यते, तथासत्याचार्योपदिष्टायामुपासनायामन्वितायाः गतेरग्न्युपदिष्टोपासनान्वयासम्भवात् आचार्यस्तु ते गतिमित्यादिवाक्यमनर्थकमेव स्यादिति वाच्यम् । आचार्य उपासनान्तरं वर्णयिष्यति । तत्रायं गतिं वर्णयिष्यति । सैवास्मदादिष्टोपासनायां द्रष्टव्येति अग्न्यभिप्रायकल्पनोपपत्तेः । अथोच्येत अग्निभिर्ब्रह्मोपासना किञ्चिद्गुणयुक्ता वर्णिता । तत्र आचार्यो गतिं वक्ष्यतीत्याचार्यवक्तव्यतया गतिरविशेषिता । आचार्यस्तु स्वयमन्यान् कांश्चित् गुणान् पूरयित्वा अग्न्यवशेषितां गतिमपि वदतीत्येव कुतो न कल्प्यते । एवं हि सति यत्पदस्य प्रकृतपरामर्शकतोपासनाद्वयकल्पनप्रयुक्तगौरवाभावश्चेति अनुकूलं भविष्यतीति, नैवं सम्भवति । एषा सोम्य तेऽस्मद्विद्यात्मविद्या चेति साकल्येन स्वोक्तां ब्रह्मविद्यामुपसंहृत्य गतिमात्रस्य परिशेषिततया आचार्येण तत्रापि केचन गुणा उच्यन्त इति कल्पने अग्निवाक्यस्य बाधितार्थत्वापत्तेः । अतो न सर्वनामपदानुसारेणाक्षि-

पुरुषस्य ब्रह्मत्वसिद्धिरिति चेत् , उच्यते—अस्त्वग्निवाक्यं अस्यामुपासनायां गत्यतिरिक्तं वक्तव्यं नास्तीत्यस्मिन्नंशे बाधितार्थम् । लोकान्वाव किल ते सोम्यावोचन् अहं तु ते तद्वक्ष्यामीत्याचार्येणापहते पापकृत्यां लोकीभवतीत्यादिवाक्यैः केचन लोकाः प्रतिपादिताः न तु साकल्येन ब्रह्मप्रतिपादितमग्निभिरित्यग्निवाक्यनिन्दापूर्वकमेवाहं तदग्निभिरुक्तमेव केनचिद्विशेषेणोपेतं वक्ष्यामीति प्रतिज्ञानात् । वस्तुतस्त्वग्नीनामप्याचार्यो विशेषसहितामेव गतिं वक्ष्यतीत्यभिप्रायः । यतोऽग्निवाक्ये आचार्यस्तु ते गतिं वक्ष्यतीति तुशब्दो दृश्यते, स हि विशेषार्थः । न च तस्य विशेषार्थत्वेऽपि यथा यज्ञदत्तो निर्धनः, देवदत्तस्तु धनवानिति वाक्ये धनवत्तारूपोपात्तविशेषार्थकतैव , न त्वनुपात्तो धनगतः कश्चिद्विशेषस्तदर्थः । स तु तत्रैव प्रतीयते । यत्र देवदत्तो धनवान् भवति, यज्ञदत्तस्तु धनवानित्युपात्तोऽर्थो विशिष्टो भवति । प्रकृते तूपात्तस्य गतिवक्तृत्वरूपस्य विशेषस्याग्निष्वभावेनोपात्तविशेषमादायैव तुशब्दचारितार्थ्येन गतिसम्बन्ध्यन्यः कश्चिद्विशेषः आचार्यस्तु ते गतिं वक्तेति वाक्यानुपात्तोऽप्यग्नीनामाभिप्रायिक इति कथं सम्भवतीति वाच्यम् । 'आचार्यस्तु ते गतिं वक्ते'ति वाक्यं हि न गतेर्वक्तव्यताभिप्रायम् । तथासति यथा षोडशकलविद्यादिष्वनुक्तापीयं पञ्चाग्निविद्यायां 'ये चेमेऽरण्य' इत्यादिवचनाम्नानसिद्धैव 'अनियमस्सर्वेषा'मिति न्यायेन प्राप्नोति, एवमुपकोसलविद्यायामपि प्राप्तिसम्भवाद्वचनवैयर्थ्यापत्तेः । किं तु तुशब्दार्थभूतगतिसम्बन्धिविशेषस्यैव वक्तव्यताभिप्रायम् । स च विशेष आचार्येण यो वक्ष्यते, स सर्वोऽपि तुशब्देन परिगृहीत एव भवति । अतो नाचार्यवाक्यमुपास्यान्तरनिर्देशेनान्योपासनापरम् । अपि त्वग्न्युपदिष्ट एव ब्रह्मोपासने किञ्चिद्विशेषाभिधानपरम् । अत एवाहं तु ते तद्वक्ष्यामीत्यत्र तत्पदमपि समञ्जसं भवति । अस्मिन् पक्षे लोकान्वाव किल ते सोम्यावोचन्नित्याचार्यवाक्यमप्यग्निवाक्यस्य न्यूनताभिप्रायेण निन्दापरं न भवति । अपि 'त्वाचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदि'ति वचनानुसारेण अग्नयः किल तुभ्यं लोकानवोचन् तावता न तवोपासनं सफलं भविष्यतीत्यतोऽग्निभिरुक्तमेवान्यवशेषितविशेषसहितमहमेव वक्ष्यामि सफलताया इति प्रतिपादनपरम् । भाष्ये गतिमात्राभिधानादित्यत्र मात्रपदं उपासनान्तरव्यावृत्त्यर्थम् । न तु गतिसम्बन्धिनां विशेषाणामपि । 'कं ब्रह्म खं ब्रह्मेत्येतदग्निवचनमित्याद्युपकोसलप्रश्नस्य विजानाम्यहमित्यादेरयमभिप्रायः—विजानाम्यहं प्राणस्य ब्रह्मत्वदृष्टिविधानार्थमेतत् प्राणो ब्रह्मेति वाक्यमिति । कं ब्रह्म खं ब्रह्मेति तु किं प्रतीकाभिप्रायं, उत सगुणध्यानाभिप्रायमिति न जानामीति । उत्तरं च सगुणं ब्रह्मैवास्माभिर्विव-

क्षितमित्यभिप्रायम् । कथमेतदवगम्यते, उच्यते—उत्तरत्र हि कंखंशब्दौ व्यापकसुखस्वरूपसुखस्वरूपव्यापकाभिप्रायौ अग्निभिर्व्याख्यातौ । ततश्च सुखत्वे सति व्यापकत्वं, व्यापकत्वे सति सुखत्वं ब्रह्मधर्मौ सम्भवत इति किमर्थमारोपविषयकोपासना समाश्रयणीया । अपि चारोपेण प्रतीकाभिप्रायत्वे समाश्रयणीये तथोपासीतेत्येवाग्नीनामुत्तरं स्यात् । न तु ब्रह्मणि सम्भवद्धर्मपरतया । एवंसति एषा सोम्य-तेऽस्मद्विद्यात्मविद्या चेति उपसंहारेऽप्यात्मविद्याशब्द उपपन्नो भवति । न चैवंसति 'प्राणं च हास्मै तदाकाशञ्चोचु'रिति अवान्तरोपसंहारे आकाशपदमसमञ्जसं स्यात् । तवाप्यसमञ्जसं स्यात् । आकाशं सुखं चोचुरिति हि तदा स्यात्, न चाकाशपदमेव सुखलक्षकमपीति । तथासत्यौपसंहारिकात्मपदानुसारेण निरूढ्या ब्रह्मपरमेवाकाशपदमस्तु । अपि चोपक्रमे ब्रह्मचर्यमुवासेति श्रुतम् । न चेदं ब्रह्मचर्यं वेदग्रहणार्थम् । उत्तरत्र वेदाध्ययनस्य उपकोसलेऽदर्शनात् । अतो यथा प्रजापतिविद्यायामेकशतं हवै नर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासेति ब्रह्मविद्याग्रहणोपयोगिगुरुकुलवासाभिधायि, एवमिदमपि तत्परमेव भविष्यति । अत एव च चिरकालं गुरुकुले क्लिष्टाय ब्रह्मविद्या वक्तव्येति मनसि निधायान्यान् माणवकान् समावर्त्यैनमसमावर्त्यैवाचार्यः प्रोवासेति श्रूयते । उपकोसलस्य च लौकिकेषु कामेषु व्याधित्वप्रतिपादनं आत्मविद्यार्थितां सूचयति । अतः कं ब्रह्मेति वाक्यमात्मविद्यामेव विधत्त इति श्लिष्यते । न चैवमपि अग्निविद्याव्यवधानात् कथं यत्पदस्य ब्रह्मपरामर्शकतेति वाच्यम् । अग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन व्यवधायकत्वाभावात् असम्बन्धिपदव्यवधानस्यैव सर्वनामपरामर्शविघटकत्वात् । न च ब्रह्मप्राप्तिरूपं फलं गतिवाक्यावगतम् । गतिश्चैषा सोम्य तेऽस्मद्विद्या आत्मविद्या चेत्युक्ता । आचार्यस्तु ते गतिं वक्तेति विद्याद्वयसन्निधौ निर्दिष्टा । तथा चोभयोरपि फलवत्त्वे कथमङ्गप्रधानभावव्यवस्थेति वाच्यम् । गतेर्ब्रह्मप्रापिकायास्तत्क्रतुन्यायेन ब्रह्मोपासनायामेवान्वययोग्यतया वचनं विना पञ्चाग्निविद्यायामिव प्रकृताग्निविद्यायामन्वयासम्भवात् । अतो ब्रह्मप्राप्तिरूपस्य फलस्य ब्रह्मविद्यान्वयितया प्राधान्येनाग्निविद्या तदङ्गभूतैव । न च वाच्यं ब्रह्मप्राप्तिरूपस्य फलस्याभावेऽपि अपहते पापकृत्यामित्यादिवाक्यसमाम्नातं फलमग्निविद्यायामस्तीति कथमङ्गता स्यादिति । तस्य फलस्य प्राकरणिकब्रह्मविद्याङ्गत्वानुकूलत्वेन तद्विघटकताभावात् । अग्निविद्यानां कथं ब्रह्मोपासनोपकारकतेत्यपेक्षायाम् 'अपहते पापकृत्यामि'ति पापनिवृत्तिद्वारा प्रतिपाद्यते । 'लोकीभवती'त्यनेनाग्न्युपासनया झटित्यर्चिरादिमार्गप्रथमपर्वभूतस्वर्लोकप्राप्तिः । अत एवास्यामुपासनायां 'यदुचैवास्मिञ्छव्यं कुर्वन्ति यदु च न

तेऽर्चिषमेवाभिसम्भवन्ती'ति झटित्यन्तकर्मनियमानपेक्षयैवार्चिर्लोकप्राप्तिरवगम्यते । सर्वमायुरेतीत्यादिभिश्चायुस्साकल्यं प्रसिद्धतया जीवनसन्ततेरभिवृद्धिरिहलोकपरलोकयोरग्निपरिपाल्यत्वं चेति यानि फलानि प्रतिपाद्यन्ते, तान्युपासनोपकारकाण्येव । आयुस्साकल्यमुपासनाया दीर्घकालानुष्ठान उपयुज्यते, प्रसिद्धिः सुखेनान्नादिप्राप्तिद्वारा चित्तविक्षेपाभावे । सन्ततेरभिवृद्धिस्त्ववशिष्टकर्मपूरणेन अग्निपरिपालनमिहलोके रोगादिनिवृत्तिद्वारा परलोके अर्चिरादिप्रापकतयेति युक्तमेवाग्निविद्यायाः परब्रह्मविद्याङ्गत्वम् । तत्सिद्धं पूर्ववाक्ये ब्रह्मण एव प्राधान्यात् तस्याक्षिवाक्ये सर्वनामपरामर्शादुपास्यत्वमिति ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इदं सूत्रमक्षिपुरुषस्य परमेश्वरत्वे लिङ्गदर्शनपरतया व्याचष्टे—**इतश्चाक्षिस्थानः परमेश्वर इति । अथोत्तरेणेति** । आत्मानम् आदित्यमण्डलान्तर्वर्तिहिरण्यगर्भान्तर्यामिभूतं सर्वस्यात्मानम् । अन्विष्य ध्यात्वा । आदित्यम् आत्मशब्दोदितम् । अभिजयन्ते प्राप्नुवन्ति । प्राणानां व्यष्टिभूतानाम् । आयतनं समष्टिरूपतया सर्वप्राणनियामकम् । एतस्मान्न पुनरावर्तन्त इति क्रममुक्त्यभिप्रायम् । **अग्निर्ज्योतिरिति** । अग्निरर्चिर्देवता । ज्योतिः सूर्यः । यद्यपि श्रुतौ संवत्सरानन्तरं सूर्य आम्नातः, तथापीह क्रमो न विवक्षितः । यदु यदि । शव्यम् अन्त्येष्ट्याख्यं प्रेतकर्म । **तत्पुरुष इति** । अमानवः मनुना सृष्टो न भवति, अपि तु ब्रह्मणा सृष्टः । ब्रह्मलोकादवतीर्य विद्युल्लोकपर्यन्तं गतानेतानुपासकान् ब्रह्मलोकं प्रापयति । एष अर्चिरादिः । देवपथः देवैः रक्षितत्वात् । ब्रह्मपथः ब्रह्मप्रापकत्वात् । एतेन मार्गेण गच्छन्त इमं यस्मिन् मानवे गतास्तं मानवं आवर्तं पुनःपुनरावृत्तिस्थानभूतं संसाराख्यं प्रति नावर्तन्त इति । यद्यपि पञ्चाग्निविद्यायामब्रह्मविषयायामप्यर्चिरादिमार्ग उपलभ्यते । अतो नायं विद्याया ब्रह्मविषयतानियतः, तथापि ब्रह्मप्रापकस्यार्चिरादिमार्गस्य ब्रह्मविद्यासम्बन्धः औत्सर्गिकः । पञ्चाग्निविद्यायां तु वचनबलादुत्सर्गः परित्यज्यते ॥ १६ ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥१७॥

**स्वे चक्षुषीति** । तथा च दृश्यत इत्येतदपि न पूर्वपक्षे स्वरसम् । सन्निधानादुपासकेन दृश्यत इति प्रतीयते । न च स्वचक्षुषि विद्यमानः पुरुष उपासकेन दृश्यत इति वक्तुं शक्यते । **न चेति** । तथा च कल्पनागौरवम् । न च

पुरुषमसन्निधाप्यैवोपासनमस्त्विति वाच्यम् । तथासति प्रतिबिम्बासम्भवेनोपासनाया असद्विषयतापातात् । देवतात्मनः चक्षुरभिमानिनः सूर्यस्य । **आत्मत्वं तावदिति** । सन्निधानादुपासकं प्रत्यात्मत्वं प्रतीयते । तद्देवताया न सम्भवतीति भावः । अत्राक्षिणि दृश्यत इति प्रतिबिम्बे स्वरसेनेतिपदसहकृतेनात्मत्वादीनां ब्रह्मलिङ्गानामभिभूतत्वादस्पष्टता ॥ १७ ॥　　इत्यन्तराधिकरणम् ॥४॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥१८॥

अन्तर्यामिब्राह्मणं काण्वशाखागतं माध्यन्दिनशाखागतं च । तदिह विषयः। तच्च 'अथ हैनमुद्दालक आरुणिः पप्रच्छे'त्युपक्रम्य तत्र क्वचिद्देशविशेषे उद्दालकादिष्वधीयानेषु तान् प्रति कश्चिद्गन्धर्वः पतञ्जलभार्यामाविष्टः पप्रच्छ—'येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तत्सूत्रं, य इमं च लोकं परं च लोकं सर्वाणि च भूतानि अन्तरो यमयति तमन्तर्यामिणं च किं यूयं विदेति, न वयं विद्म इति प्रतिवचने तान्प्रति गन्धर्ववचनं 'यो वै तत्सूत्रं विद्यात्तञ्चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववि'दिति स च गन्धर्वस्तेभ्यस्तमर्थमब्रवीत् । तत्र गन्धर्ववचनात् तमुद्दालको ज्ञात्वा याज्ञवल्क्यं प्रति पप्रच्छेत्युपाख्यायते । तत्र 'वायुर्वाव गौतम सूत्रमिति प्रथमप्रश्नस्योत्तरं हिरण्यगर्भविषयं, द्वितीयप्रश्नस्योत्तरं यः पृथिव्यामित्यादि पृथिव्यनन्तरं योऽप्सु योऽग्नौ योऽन्तरिक्षे यो वायौ यो दिवि य आदित्ये यो दिक्षु यश्चन्द्रतारके य आकाशे यस्तमसि यस्तेजसीत्येतान् पर्यायानुक्त्वा उपसंहृतमित्यधिदैवतमिति । 'अथाधिभूत'मित्युपक्रम्य यस्सर्वेषु भूतेषु यः प्राणे यो वाचि यश्चक्षुषि यश्श्रोत्रे यो मनसि यस्त्वचि यो विज्ञाने यो रेतसीति पर्यायानुक्त्वा प्रतिपर्यायमेषत आत्मान्तर्याम्यामृत इत्युक्तम् । अनन्तरं च अदृष्टो द्रष्टा अश्रुतश्श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योतोऽस्ति द्रष्टा नान्योतोऽस्ति श्रोता नान्योऽतोस्ति मन्ता नान्योतोऽस्ति विज्ञातैषत आत्मा अन्तर्याम्यमृतोऽतोन्यदार्तमित्युपसंहृतं काण्वशाखायाम् । माध्यन्दिनशाखायां 'यस्सर्वेषु लोकेषु यस्सर्वेषु वेदेषु यस्सर्वेषु यज्ञेषु' इत्यादयः केचन पर्यायाः समाम्नाताः । अन्यत् प्रायशस्तुल्यम् । पूर्वाधिकरणे चक्षुरादिस्थानत्वं परमात्मनोऽन्तर्यामिब्राह्मणपर्यालोचनयोक्तम् । तदन्तर्यामिब्राह्मणस्यान्यपरत्वशङ्कया आक्षिप्तं भवतीति सङ्गतिः । पृथिव्येव **यस्यायतनमिति** । आयतनं शरीरम् । अग्निर्लोकः चक्षुरादित्यस्थानापन्नः । मनोज्योतिः तृतीयभूतम् । ननु, य इमं च लोकमित्युपक्रमे सर्वनियन्तृत्वमेकस्य प्रतीयते । पृथिव्यादिदेवतानां च

तत्तद्भूतनियन्तृत्वमेव । यं पृथिवी न वेदेत्यादिना तत्तद्देवताव्यतिरेकोऽप्यन्तर्यामिणः प्रतीयते । अतः न देवतापूर्वपक्षस्समञ्जस इत्यत आह—**योगिनो वेति** । दहरशाण्डिल्याद्युपासनासिद्धस्य विश्वामित्रादेरिव नियमनसामर्थ्यसम्भवादिति भावः । **अकार्यकरणवत्त्वादिति** । देहेन्द्रियरहितत्वादित्यर्थः । ननु, जन्मादिसूत्रे उत्पत्तिस्थितिलयकारणत्वं सर्वज्ञस्य परमात्मन एवेति व्यवस्थापितम् । 'विकरणत्वान्नेति चेत्तदुक्तमि'त्यत्र अशरीरस्यापि तत्सम्भवत्येवेति व्यवस्थापयिष्यते । ततः कथमयं पूर्वपक्ष इति चेदुच्यते । उपादानत्वं सृष्ट्यारम्भकाले अधिष्ठातृत्वं च परमात्मनोऽशरीरस्यैवास्तु । तदानीं शरीरवतो जीवस्याभावेनाधिष्ठातृतायाः परमात्मन एवोचितत्वात् । सर्वलोकनियन्तृत्वं तु सर्वकर्मफलप्रदानादिना स्थितिहेतुत्वम् । तच्च सृष्ट्यनन्तरमपि विद्यते । तस्यां दशायां शरीरिणः सम्भवात् । यो यो नियन्ता, स शरीरीति वा स्यादिति नियन्तरि तक्षणि दृष्टा व्याप्तिः न हातव्येति जीव एव नियन्तेति पूर्वपक्षिणोऽभिमानः । न चोद्दालकं प्रति 'एषत आत्मे'ति प्रतिपादनमसङ्गतं स्यात् । अन्यस्य जीवस्योद्दालकं प्रति आत्मत्वासम्भवादिति वाच्यम् । शास्त्रदृष्ट्या तदुपपत्तेः । अमृतत्वं तु जीवन्मुक्तत्वादेवेति न कोऽपि विरोधः । **यान्नियच्छतीति** । पृथिव्यादीनां नियन्तव्यानामेव यस्य पृथिवी शरीरमिति परमात्मानं प्रति शरीरत्वश्रवणादिति भावः । एतेन नियन्तव्यातिरिक्तमेव शरीरं नियमेन उपयुज्यत इति शङ्का परास्ता । स्थूलसूक्ष्मशरीरनियामके तक्षणि नियन्तव्यातिरिक्तशरीरादर्शनाच्च । ननु, तत्रापि अज्ञानाख्यं कारणशरीरमस्ति, तर्हि परमात्मनोऽप्यविद्याख्यं शरीरमस्ति । अपि च येन योगसिद्धोऽन्तर्यामीत्युच्यते, तस्याप्यन्यः फलप्रदानादिना नियामकोऽभ्युपगम्यते वा, न वा । न चेत्, न तस्योपासनासिद्धमन्तर्यामित्वम् । उपासनासिद्धस्य कृत्रिमस्यान्यायत्तत्वावश्यम्भावात् । तथा च स्वतस्सिद्धोऽसौ भवतोपेयः । तथा च न विवादः । यस्स्वतस्सिद्धोऽन्तर्यामी पुण्यपापादिरहितः, स एवेश्वर इत्युपगमात् । यदि तु अन्योऽभ्युपगम्यते, तथासति तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्था स्यात् । न च बीजाङ्कुरन्यायेन नेयं दोषावहेति वाच्यम् । सृष्ट्यारम्भकालेऽन्यस्य शरीरिणोऽभावेन सर्वनियन्त्रभावप्रसङ्गात् । यदि तु तस्यां दशायामीश्वर एव स्वतस्सिद्धो नियन्तोपेयते, तथा पृथिव्यादिनियामकोऽपि स एव ग्राह्यः । स्वतस्सिद्धनियन्तृसम्भवे कृत्रिमनियन्तृग्रहणानौचित्यात् । तस्य चैकत्वात् नानवस्थादोषाशङ्का सिद्धान्ते पूर्वपक्षवत् प्रसरतीत्याह—**तस्याप्यन्यो नियन्तेति** । **भेदे हीति** । कृत्रिमाणां बहूनामभ्युपगम इत्यर्थः ॥१८॥

# न च स्मार्तमतद्धर्माभिलापात् ॥१९॥

'यस्य पृथिवी शरीर'मित्यादिव्यपदेशो हि द्वेधा लोकदर्शनानुसारेण व्युत्पादनीयः । देवदत्तस्य शरीरं यज्ञदत्तस्य शरीरमित्यादिवत् भोगायतनत्वेन वा, पूर्वपक्षस्य शरीरं सिद्धान्तस्य शरीरमित्यादिवत् स्वरूपाभिप्रायेण वा । नोभयथापि परमात्मपक्षे सम्भवति । तस्य भोगायतनासम्भवात् जडाजडयोस्स्वरूपैक्यासम्भवाच्च । प्रधानस्य तु जडतया स्वरूपैक्याभिप्रायेण तदुपपद्यते । 'एषत आत्मे'ति च प्रधानपक्षेऽपि ममात्मा भद्रसेन इतिवदुपपद्यते । अमृतत्वं मोक्षोपकारकत्वात् । द्रष्टृादिशब्दाश्च चाक्षुषज्ञानाश्रयवाचकाः ब्रह्मवादिनोऽपि गौणा इति प्रधानपक्षेऽपि कथञ्चिद्व्युत्पादयितुं शक्याः । अतः प्रधानमेवान्तर्यामीति शङ्कते— **स्यादेतदिति** । अप्रतर्क्यं तर्कागोचरम् । अविज्ञेयं प्रमाणाविषयः । **प्रसुप्तमिव सर्वत इति** । सर्वात्मना जाड्याभिप्रायम् । **तस्यापि नियन्तृत्वमिति** । नियन्तृत्वं स्थितिहेतुत्वम् । तच्च उपादानस्यापि सम्भवत्येवेति भावः । **न द्रष्टृत्वादिव्यपदेशस्सम्भवतीति** । परमात्मनि तु प्रत्यगभिन्ने मुख्य एवेति भावः । **आत्मत्वमपीति** । भद्रसेनन्यायस्तु गौणत्वापादकत्वान्नादरणीयः । 'यस्य पृथिवी शरीर'मित्यादिनिर्देशस्तु प्रधानेऽपि न सम्भवति । भोक्तृभोग्यभावसम्बन्धविवक्षायामेव तादृशसमभिव्याहारस्य मुख्यत्वात् । पूर्वपक्षशरीरमित्यादिव्यपदेशोऽपि लोके भोक्तारं प्रति शरीरस्य स्वरूपतया भ्रमगृहीतत्वात् भ्रान्तिसिद्धं स्वरूपत्वगुणमादाय ॥१९॥

स्यादेतत्—'यस्य पृथिवी शरीर'मित्यादिकं परमात्मपक्षेऽपि गौणमेव नियन्तृनियन्तव्यत्वाभिप्रायं वक्तव्यम् । न च परमात्मपरत्वे प्रबलप्रमाणसिद्धे 'यस्य पृथिवी शरीर'मित्यादिनिर्देशानां मुख्यतायै शरीरपदे नियन्तव्यत्वविशेष एव प्रवृत्तिनिमित्तम् । न तु भोगायतनत्वम् । यस्येति च षष्ठी नियम्यनियामकभावाभिप्रायेति वाच्यम् । अवच्छेदकतया भोगाश्रय एव वृद्धव्यवहारानुसारेण शरीरपदस्य रूढत्वात् वैदिकनिर्देशमात्रेण वृद्धव्यवहारावगतं प्रवृत्तिनिमित्तं परित्यज्य प्रवृत्तिनिमित्तान्तरकल्पने तस्यैतस्यवाचः पृथिवीशरीरं अथैतस्य मनसो द्यौश्शरीरं अथैतस्य प्राणस्यापश्शरीरमित्यादिप्रयोगसिद्ध्यर्थं नियम्यत्वापेक्षयान्यदपि प्रवृत्तिनिमित्तं कल्पनीयं स्यात् । अग्निर्मूर्धेत्यादिषु वाक्येषु परमात्मानं प्रति अग्न्यादीनां मूर्धत्वव्यपदेशान्मूर्धादिपदानामप्यग्न्यादिसाधारणं प्रवृत्तिनिमित्तं कल्पनीयं स्यात् । तस्माल्लौकिकप्रयोगानुसारेण भोगायतनत्वमेव प्रवृत्ति

निमित्तम् । ततश्च ‘यस्य प्रथिवी शरीर’ मित्यादिनिर्देशः परमात्मपक्षे गौण एव । एवं च योगसिद्धः कश्चिज्जीव एव नियन्ता प्रकृतवाक्यप्रतिपाद्यो भवतु । द्रष्ट्रादिपदानां तत्रैव स्वारस्यात् । यद्यत्र दर्शनादिकं आत्मा वा अरे द्रष्टव्य इत्यादिवाक्यप्रतिपाद्यं शब्दक्रमप्रत्यभिज्ञानाद्वैदिकश्रवणमननविज्ञानं, तस्मिन् पक्षे ‘अदृष्टो द्रष्टे’त्यादि जीव एव स्वरसं, न तु वैदिकदर्शनादिविषये तदनाश्रये च परमात्मनि । यदि वा चाक्षुषादिज्ञानरूपं, तदापि परमात्मनश्चाक्षुषज्ञानाद्यनाश्रयत्वाज्जीव एव स्वरसमिति यस्य पृथिवी शरीरमित्यादयो जीव एव गौणा भवन्तु । न च सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ न त्वं काप्येति अन्तर्यामिणि सूत्रे च गन्धर्वेण पृष्टे याज्ञिकैस्सहितस्य पतञ्चलस्य ‘नाहं तद्भगवन् वेदे’ति अज्ञानोद्भावनमसङ्गतं स्यात् । सूत्रस्य कर्मानुपयुक्तस्याज्ञानसम्भवेऽपि शरीरातिरिक्तस्यात्मनो यज्ञविद्याविशारदैरवश्यं ज्ञेयतया जीवरूपेऽन्तर्यामिणि तदज्ञानवचनानुपपत्तेः । एवं सर्वविदिति अन्तर्यामिविज्ञानात् सर्वविज्ञानोपक्षेपश्चासङ्गतस्स्यादिति वाच्यम् । विश्वामित्रादिसदृशस्य योगसिद्धस्य जीवस्य यज्ञविद्याविशारदैरपि अवश्यं ज्ञेयत्वाभावेनाज्ञानोद्भावनस्योपपन्नत्वात् । यथा च सूत्रविज्ञानेन सर्ववित्त्वं सूत्रस्तुत्यर्थम्, एवमन्तर्यामिविज्ञानेनापि सर्ववित्त्वं स्तुत्यर्थमन्तर्यामिणो भवति । न हि एकपदोपात्तस्य सर्ववित्त्वस्य सूत्रांशे स्तुत्यर्थतान्तर्याम्यंशे तात्त्विकतेति वक्तुं शक्यम् । तस्माज्जीव एवान्तर्यामीति शङ्का ।

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० इति

परिहारसूत्रं व्याचष्टे—नेति पूर्वसूत्रादिति । उपलक्षणमेतत् अतद्धर्माभिलापादिति हेतोरपि । पूर्वसूत्रादनुवृत्तमतद्धर्माभिलापादितिहेतुं व्याचष्टे—यद्यपीत्यादिना । पृथिव्यां तिष्ठन्नित्यनेन न पृथिव्यधिकरणत्वमेवोच्यते । पृथिव्या अन्तर इत्येव सिद्धेः । किन्तु बहिरपि पृथिव्यां व्याप्तिः । तथा च यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर इति पदद्वयेनान्तर्बहिर्व्याप्तिर्लभ्यते । तथा च सर्वप्रपञ्चमन्तर्बहिर्व्याप्य नियामकत्वमिह प्रतिपाद्यमानं नानुपादानस्य जीवस्य सम्भवति । अपि तु सर्वप्रपञ्चोपादानस्य ब्रह्मण एव । एवं सर्वविदित्यादि । तद्विज्ञानात् सर्वविज्ञानमपि जीवपक्षे न समञ्जसम् । न चेह सूत्रविज्ञानात् स्वातन्त्र्येण सर्ववित्त्वमुच्यते । यो वै तत् काप्य सूत्रं विद्यात् तं चान्तर्यामिणं सर्वविदिति सूत्रसमुच्चितान्तर्यामिविज्ञानादेव सर्ववेदनप्रतिपादनात् । यद्यपि केवला-

न्तर्यामिविज्ञानादेव सर्ववेदनं सम्भवति, तथापि 'यः पचेद्यश्च भुञ्जीत स तृप्तो भवेदि'तिवदुपायोपेयभावेनेह सूत्रान्तर्यामिविज्ञानयोः समुच्चयो व्याख्येयः । एतत्सूत्रोपात्तं भेदेनेति हेतुं व्याचष्टे—अपि चोभयेऽपीति । यस्सर्वेषु भूतेषु तिष्ठन्नितिपर्याये चेतननियामकत्वमेव विवक्षितम् । पृथिव्यादिषु प्राणिषु च रूढस्य भूतपदस्य पृथिव्यादीनां प्रागेव ग्रहणेन प्राणिविषयरूढेरेव समुन्मेषात् । तथा च सर्वभूतपर्यायेणैव चेतनमात्रनियामकत्वसिद्धौ पुनरात्मनीति पर्यायो ब्राह्मणा आगता वसिष्ठोऽप्यागत इतिवत् उत्कृष्टचेतनाभिप्रायः । तथा च येऽप्युत्कृष्टा योगसिद्धा नियन्तृत्वेन सम्भाविताः, तान् प्रत्यपि नियन्तृत्वस्यानेन प्रतिपादनाद्योगिनोऽपि विलक्षण एवान्तर्यामी परमेश्वर इति सिध्यति । द्रष्टृत्वादिव्यपदेशस्तु परमात्मनि प्रत्यगभेदाभिप्रायः शास्त्रीयादिदर्शनादिपक्षे अदृष्टत्वादिव्यपदेशः तत्तद्वृत्त्यभिव्यक्तचैतन्याविषयाभिप्रायः । द्रष्टृत्वादिजीवलिङ्गाभिभूतत्वात् अन्तर्यामीत्यस्यास्पष्टता ॥ २० ॥

॥ इति अन्तर्याम्यधिकरणम् ॥ ९ ॥

# अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

यथोर्णनाभिरिति । सृजते उत्पादयति । गृह्णते ग्रसते । तत्र यः परोऽक्षराच्छ्रुत इत्यादि । अयमाशयः—न हीदं प्रकरणं सर्वमपि प्रधानपरमेवेति पूर्वपक्षी मन्यते । अपि तु भूतयोनिसन्दर्भः प्रधानपरः । अन्यो ब्रह्मपरः । ततश्चास्मिन् प्रकरणे यानि ब्रह्मश्रुतिलिङ्गादीनि, तानि ब्रह्मसन्दर्भान्तर्गतानि भविष्यन्तीति न तद्विरोधः । 'यत्तदद्रेश्यमग्राह्यमित्यादि तथाक्षरात् सम्भवतीह विश्वमि'त्यन्तं मन्त्रद्वयं भूतयोनिवाक्यं प्रथमखण्डे प्रधानपरम् । अचेतनदृष्टान्तोपादनात् असाधारणब्रह्मलिङ्गाभावाच्च । द्वितीयखण्डे यथा सुदीप्तादिति मन्त्रोऽपि प्रधानपर एव । सरूपकार्यजनकत्वलिङ्गात् । ननु सब्रह्मविद्यामित्युपक्रमात्तेषामेवैतां ब्रह्मविद्यां वदेतेत्युपसंहाराच्च ब्रह्मपरत्वेनावगते प्रकरणे कथं प्रधानप्रतिपादनं सङ्गच्छते, कथं वा ब्रह्मप्रकरणे सृष्टिप्रतिपादनं सङ्गच्छते । यदि त्वेकविज्ञानेन सर्वविज्ञानस्य 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'त्युपक्षेपात तदुपपादनार्थं सृष्टिराम्नायते, तर्हि निर्विकारस्य ब्रह्मणः विकारोपादानत्वासम्भवशङ्कानिरासाय विकारिप्रधानाधिष्ठानत्वेन उपादानत्वं व्यवस्थापयितुं प्रधानस्योपादानत्वं प्रतिपाद्य तस्यैवाक्षरपदनिर्दिष्टस्य ब्रह्माधिष्ठितत्वं प्र-

तिपाद्यते—**अक्षरात् परतः पर इति** । तथा च भूतयोनिवाक्येन सरूपप्रभववाक्येन च कारणत्वेन प्रतिपन्नस्याक्षरस्य प्रधानस्य पुरुषपदोदितब्रह्मगतपरत्वावधित्वेन निर्दिष्टे अक्षरेऽन्वयः । तथा चाक्षरात्सम्भवतीह विश्वं तथाक्षराद्विविधास्सोम्य भावाः अक्षरात् परतः पर इति पञ्चम्यन्ताक्षरपदकृतं प्रत्यभिज्ञानमपि समञ्जसं भवति । अक्षरपदं च अश्नुते व्याप्नोति स्वविकारानिति व्युत्पत्त्या प्रधानपरं द्रष्टव्यम् ।**तदा शारीरोऽपीति** । अस्मिन् पक्षे अक्षरात् परतः पर इत्यत्राक्षरपदं जीवपरमेव द्रष्टव्यं न क्षरतीति व्युत्पत्त्या। दृष्टश्चान्यत्रापि अक्षरपदस्य जीवे प्रयोगः 'क्षरं प्रधानममृताक्षरं हरः । क्षरात्मानावीशते देव एकः। अत्राक्षरपदं जीवपरमेव क्षरात्मानावित्युत्तरत्रात्मपदस्य तत्र प्रयोगात् ईशितव्यताप्रतिपादनाच्च । अयं पूर्वपक्षो नातीव क्षोदक्षमः । योनिशब्दस्योर्णनाभ्यादिदृष्टान्तेनोपादानपरत्वावधारणात् कार्यसारूप्यप्रतिपादनाच्च जीवस्य ब्रह्मोपादनताघटकत्वाभावेन प्रकृतसन्दर्भाननुगुणत्वाच्चेति द्रष्टव्यम्।**प्रकृतस्यैवाक्षरस्य भूतयोनेरिति** । यस्सर्वज्ञ इत्यत्र सर्वनामयत्पदं प्रकृतपरामर्शकम् । न च 'तत्तपसा चीयते ब्रह्मे'ति अव्यवहितपूर्वमन्त्रनिर्दिष्टब्रह्मण एव परामर्शकम् । न तु व्यवहितपूर्वमन्त्रनिर्दिष्टस्य भूतयोनेरिति वाच्यम् । यस्सर्वज्ञ इत्यत्र पुंल्लिङ्गयत्पदस्याव्यवहितनपुंसकब्रह्मपरामर्शकत्वासम्भवेन व्यवहितस्यापि भूतयोनेरेव समानलिङ्गतया परामर्शकतोपगमात् । ननु, यस्सर्वज्ञ इति मन्त्रो न स्वातन्त्र्येण प्रवृत्तः। अपि तु तपसा चीयत इति मन्त्रव्याख्यानाय यस्य ज्ञानमयं तप इति लिङ्गात् । ततश्च भिन्नलिङ्गत्वेऽपि स्वव्याख्येयाव्यवहितमन्त्रगतार्थपरामर्श एवोचित इति चेत्, तथासति परस्परप्रत्यभिज्ञानानुसारेण 'यत्तदद्रेश्यमग्राह्य'मित्यादयः चत्वारोऽपि मन्त्राः पूर्वपूर्वव्याख्यानाय प्रवृत्ता इत्येव स्वीकर्तुमुचितम् । पूर्वमन्त्रो हि भूतयोनिमितिपदेनारोपितस्य दृश्यत्वादेरदृश्यमित्यादिना अपवादात् अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थः । तत्र भूतयोनिता न निमित्ततैव । अपि तूपादानतेति प्रतिपादयितुं यथोर्णनाभिरिति द्वितीयो मन्त्रः । तत्र केवलोपादानत्वमेव परमात्मनः प्राप्नोति, न कर्तृत्वमिति भ्रमनिरासेन तस्यैव भूतयोनेरक्षरस्य निमित्ततामपि प्रतिपादयितुं तपसा चीयत इति मन्त्रः । यथा हि 'यया तदक्षरमधिगम्यत'इति प्रकृताक्षरपरामर्शकयत्पदघटितस्य 'यत्तदद्रेश्यमि'ति मन्त्रस्य 'अक्षरात् सम्भवतीह विश्वमि'ति द्वितीयमन्त्रस्याक्षरविषयतयैकार्थता उपेयते । एवं तृतीयमन्त्रस्यापि ततोऽन्नमभिजायत इतिपदेन अक्षरात् सम्भवतीह विश्वमिति द्वितीयमन्त्रगतस्य उपादानत्वस्य पञ्चम्या प्रत्यभिज्ञानात् एकार्थता अवसीयते । चतुर्थमन्त्रस्य द्वितीयमन्त्रगततपःपदव्या-

ख्यानरूपस्य तदेकार्थत्वं निर्विवादमेव । तथा च चतुर्णां मन्त्राणामाकाङ्क्षासमभिव्याहारप्रत्यभिज्ञापकलिङ्गैरेकब्रह्मार्थप्रतिपादकत्वसम्भवे मन्त्रद्वयं प्रधानपरं, मन्त्रद्वयं ब्रह्मपरमिति वैरूप्यमयुक्तमेव । तथा च ब्रह्मश्रुतिसर्वज्ञत्वलिङ्गाभ्यां भूतयोनिः ब्रह्मेति सिध्यति । नन्वक्षरस्य ब्रह्मत्वे 'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात् परतः परः ॥' इतिमन्त्रे पुरुषपदोदितब्रह्मगतपरत्वावधित्वेनाक्षरपदार्थस्य निरूपणमनुपपन्नं स्यात् इत्याशङ्क्य भूतयोन्यक्षरमन्यत्, परत्वावधिभूतमक्षरमन्यदिति परिहरति—**अक्षरात् परत इत्यत्रेति** । ननु, भूतयोन्यक्षरस्य परत्वावध्यक्षरस्य चान्यत्वोपगमो न युज्यते । 'अक्षरात् सम्भवतीह विश्वम्' 'अक्षरात् परतः पर' इतिशब्दैक्येन प्रत्यभिज्ञानात् । न चैवं शब्दैक्यमात्रम् । अर्थस्त्वन्य एव । अत्रावध्यर्थिका पञ्चमी । अक्षरात् सम्भवतीत्यत्र उपादानार्थिका । तथा च 'अक्षरात् सम्भवतीह विश्व'मित्यस्य ततोऽन्नमभिजायते तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायत इत्यत्र शब्दतोऽर्थतश्च पञ्चम्याः प्रत्यभिज्ञानं प्रबलमिति वाच्यम् । विभक्तिमात्रप्रत्यभिज्ञानापेक्षया पञ्चम्यन्तकृत्स्नपदप्रत्यभिज्ञानस्य प्रबलत्वात् । अर्थप्रत्यभिज्ञानमपेक्ष्य प्रथमोपजातशब्दप्रत्यभिज्ञानस्य प्रबलत्वाच्चेत्यभिप्रेत्य शङ्कते—**कथमेतदवगम्यत इति** । अत्र यद्यपि यदि प्रथमोपजातत्वेन शब्दप्रत्यभिज्ञानमर्थप्रत्यभिज्ञानात् बलवदित्युच्यते, तथासति प्रकृते अर्थप्रत्यभिज्ञानमेव प्रबलम् । अक्षरात् परतः पर इत्यतोऽपि ततोऽन्नमभिजायते तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते' इत्यस्य प्रागेव पठितत्वेनार्थप्रत्यभिज्ञानस्यैव प्रथमोपजननसम्भवात् भूतयोनिपरामर्शकयत्पदसचिवत्वात् आकाङ्क्षानुसाराच्चेति वक्तुं शक्यम् । तथापि तत् प्रागेव 'अत्रोच्यते नैवं सम्भवती'त्यादिग्रन्थेन निरूपितमिति शब्दतोऽपि प्रत्यभिज्ञानं भूतयोन्यक्षरस्य ब्रह्मणि दर्शयति—**येनाक्षरमिति** । उपक्रमे हि 'अथ परा यया तदक्षरमधिगम्यत' इति भूतयोनिर्निर्दिष्टः । इह चाक्षरमित्येव ब्रह्म निर्दिश्यत इति शब्दतोऽपि प्रत्यभिज्ञानमस्त्येव । प्रत्युत ब्रह्मविद्यात्मकपरविद्याविषयत्वेन उपक्रमे अक्षरं श्रुतम् । इहापि येन ययाक्षरं वेद विपर्यीकुर्यात्, तां ब्रह्मविद्यां वदेत्' इति ब्रह्मविद्याविषयत्वमवगम्यत इत्यर्थतोऽपि प्रत्यभिज्ञानम् । 'अक्षरात् परतः पर' इत्यतः प्रागस्य मन्त्रस्य पठितत्वेन प्रथमोपजातत्वमपीति प्रबलमिदम् । अतः भूतयोन्यक्षरमपेक्ष्य परत्वावधिभूतमक्षरमन्यदेवाभ्युदयनिश्श्रेयसफलतयेति उत्कृष्टा हि विद्या परेत्युच्यते । स च उत्कर्षो मोक्षजनकतैव । यथा पुराणे— 'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्यान्या शिल्प-

नैपुणम् ।' इति अत्र प्रशंसान्यायेन सा विद्येत्यस्योत्कृष्टविद्येत्यर्थः । अपि च परापरविभागं विद्ययोरुपक्षिप्य परविद्याप्रतिद्वन्द्विभूतायामपरविद्यायां 'जरामृत्युं ते पुनरेवापि यन्ती'त्यनेन संसारफलकताप्रतिपादनात् परविद्यायाः संसारप्रतिद्वन्द्विमोक्ष एव फलमित्यवगम्यत इति भावः । **प्लवा ह्येत इति** । यज्ञेन प्रवृत्तिनिमित्तेन रूप्यन्ते शाब्दज्ञानविषयीक्रियन्त इति यज्ञरूपाः यजमानपत्नीऋत्विजः अष्टादश प्लवाः प्लवसदृशाः । सादृश्यमाह अदृढाः । अथवा अदृढत्वं प्लवविशेषणम् । अदृढप्लवसदृशाः । यज्ञरूपत्वं व्युत्पादयितुं 'येष्ववरं कर्मोक्तमिति । अदृढत्वं व्युत्पादयितुं 'एतच्छ्रेयो येऽभिनन्दन्तीत्यादि । **परीक्ष्य लोकानिति** । कृतेन कर्मणा अकृतो मोक्षो नास्ति । अपि तु हिरण्यगर्भलोकान्तं सांसारिकफलमेव । तच्च सर्वमनित्यमिति परीक्ष्य 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति प्रतिपादितन्यायेन निश्चित्य यो ब्राह्मणो निर्वेदं वैराग्यं प्राप्नुयात्, स समित्पाणिस्सन् श्रोत्रियम् अधीतसाङ्गस्वाध्यायं ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तं गुरुमेवार्थज्ञानार्थमुपेयात् । न तु स्वयमेव विचारयेदात्मतत्त्वम् ॥ २१ ॥

ननु, 'यथा सुदीप्तादि'ति मन्त्रो भूतयोनिविषय एवेत्युभयोरविवादम् । परं तु सिद्धान्ते सुदीप्तात् पावकाद्विस्फुलिङ्गा अग्निसरूपा एव उत्पद्यन्ते यथा, तथा अक्षरात् भावाः सरूपा जीवरूपा उत्पद्यन्त इत्यर्थो ग्राह्यः । जडवर्गस्य सरूपत्वाभावेन भावपदस्य चेतनपरत्वात् । पूर्वपक्षे तु प्रधानकार्यवियदादिकमेव भावपदार्थ इति विशेषः । तथा च 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति । 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतःपर'इति मन्त्रद्वयसमभिव्याहारात् सरूपकार्यप्रभवत्वेन यदक्षरमुक्तं, तदेव परत्वावधित्वेनोच्यत इति प्रतीयते । तथा च भूतयोनिर्न ब्रह्मेति शङ्कायामुत्तरं—

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥

**विशिनष्टि** हि प्रकृतं भूतयोनिमिति । ननु, दिव्यत्वादिविशेषणं पुरुषस्य । न तु भूतयोनेः । अस्मिन् मन्त्रे दिव्यत्वादिविशेषणानि प्रति विशेष्यतया भूतयोनेरनुपादानादिति चेन्न । 'स बाह्याभ्यन्तरो ह्यज इत्यत्र स इति पृथक्पदम् । न तु बाह्याभ्यन्तरसहित इत्येवमर्थमेकं पदम् । बाह्याभ्यन्तर इत्येव सामानाधिकरण्येन बाह्याभ्यन्तरवस्तुतादात्म्यरूपसाहित्यसिद्धेः सकारवैयर्थ्यापत्तेः । तथा च प्रकृतपरामर्शिना स इति पदेन सरूपकार्यप्रभवस्य पूर्वमन्त्रनिर्दिष्टस्य परामर्शात् भूतयोनेः पुरु-

षत्वं सिध्यतीति दिव्यत्वादिविशेषणं भूतयोनेरेव भेदेन व्यपदिशतीति भूतयोन्यक्षरस्य पुरुषत्वासिद्धौ तद्गतपरत्वावधित्वेन परत्वेन च प्रतीयमानमक्षरात् परतः पर इत्यत्र अक्षरं प्रधानमेव पर्यवस्यतीति भूतयोनेः प्रधानात् भेदस्य सिद्धिः । ननु, ब्रह्मावरत्वेन निर्दिश्यमानमक्षरं न साङ्ख्यीयम् । तैर्ब्रह्मानभ्युपगमेन तदवरत्वस्यासम्भवादित्याशङ्क्य सिद्धान्ताभिमता माया सेत्याह—**अक्षरमव्याकृतमित्यादिना।** नामरूपबीजं ब्रह्म । तस्य शक्तिभूतम् । अनेन निर्विकारस्य ब्रह्मणः विकारसंसर्गघटनार्थं मायाशक्तिरपेक्षितेति दर्शितम् । ननु, कार्यसूक्ष्मावस्था शक्तिरित्युच्यते। अतः कथं मायायाः शक्तित्वम् । तत्राह—**भूतसूक्ष्ममिति ।** भवतीति भूतं कार्यं सूक्ष्मं कार्यमित्यर्थः । यद्यपि सूक्ष्मावस्थाश्रयो माया, तथापि तदभेदोपचारात् सा शक्तिरित्युच्यते । ननु, सूक्ष्मावस्थाकार्यात्मत्वे मायैवोपादानं स्यात् । 'अवस्थाश्रयो ह्युपादानमिति' सिद्धान्तः । तावता कथं ब्रह्मोपदानत्वसिद्धान्तनिर्वाहः । तत्राह—**ईश्वराश्रयमिति** । तथा च विकाराश्रयमायाधिष्ठानत्वं ब्रह्मण उपादानत्वमिति भावः । तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति । ननु, 'तदात्मनं स्वयमकुरुत सच्चत्यच्चाभवदि'त्यादिवचनस्वारस्येन ब्रह्मणः साक्षादवस्थाभिः सम्बन्धोऽवगम्यते । तत् परम्परापक्षे न निर्वहतीत्यत आह—**तस्यैवोपाधिभूतमिति** । स्वधर्मभूता अवस्था ब्रह्मण्यासञ्जयतीति मायोपाधिरित्युच्यते । तथा च श्रुतिद्वयस्वारस्येन माया ब्रह्म चेत्युपादानद्वयं प्रपञ्चे । साक्षात् उपादानत्वेऽपि ब्रह्मणो निर्विकारश्रुतिविरोधस्तु न भवति । मायिककार्यस्य स्वभावविरोधित्वाभावादिति भावः । अत्र भाष्ये दिव्यत्वादिविशेषणं जीवव्यावर्तकं, भेदव्यपदेशः प्रधानव्यावर्तक इति व्याख्यातं, तदुपलक्षणं दिव्यत्वादिविशेषणं प्रधानव्यावर्तकमपि भवत्येव । अचेतनस्य प्रधानस्य दिव्यपुरुषत्वासम्भवात् । भेदव्यपदेशो जीवव्यावर्तकोऽपि भवति । 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि'ति प्रकृतस्य भूतयोनेः वेद्यत्वं, मुमुक्षुजीवस्य वेदितृत्वमिति भेदव्यपदेशस्य जीवेऽपि सम्भवात् । न च 'अप्राणो ह्यमना' इत्यादिनिषेधानां ब्रह्मण्यप्रसक्तप्रतिषेधापत्तिरिति वाच्यम् । प्रत्यग्रूपेण ब्रह्मणि प्राणादीनामपि प्रसक्ततया प्रत्यगभेदद्योतनफलत्वोपपत्तेः ॥ २२ ॥

## रूपोपन्यासाच्च ॥ २३ ॥

रूपोपन्यासस्य भूतयोनिविषयतां दर्शयितुं तदनुगतिमाह—**अक्षरात्परतः पर**

इति । सरूपप्रभववाक्ये अक्षरपदेन भूतयोन्यक्षरं प्रत्यभिज्ञातम् । तदनन्तरं स बाह्याभ्यन्तर इति तत्पदेनानुवृत्तमेतस्माज्जायत इति मन्त्रे एतत्पदाकृष्टं तदनन्तराम्नाते 'अग्निर्मूर्धेति मन्त्रे अस्यैष इति पदाभ्यां तदेवानुकृष्यत इति भावः । अग्निर्द्युलोकः । 'तस्मादग्निस्समिधो यस्य सूर्य' इत्युत्तरमन्त्रे सूर्यसमित्कस्याग्नेस्तज्जन्यतया प्रतिपादनात् । 'असौ वाव लोको गौतमाग्निः तस्यादित्य एव समि'दिति श्रुतौ द्युलोकात्मकसाम्पादिकाग्नेरेव सूर्यसमित्कत्वात् । अन्ये पुनर्मन्यन्त इति परकीयत्वद्योतनम् । न्यायविरुद्धत्वात् । वैश्वानराधिकरणे हि द्युमूर्धत्वादिकं सर्वात्मके परमात्मन्येव कल्पयितुं युक्तमिति वक्ष्यते । श्रुतावपि द्युमूर्धत्वादिकल्पनायाः एष सर्वभूतान्तरात्मेत्यालम्बनं प्रतिपाद्यते । सर्वभूतान्तरात्मत्वं च यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तर इत्यादावन्तर्यामिण ईश्वरस्यैवासाधारण्येन निर्दिश्यते । न च श्रुतिप्रकरणाभ्यां परमात्मपरत्वे सम्भवति सन्निधानमात्रेण हिरण्यगर्भपरतास्थातुं शक्यते । 'एष इत्यस्येति च श्रुतिः परमात्मविषयेति भाष्य एव पूर्वं दर्शितम् । परमात्मप्रकरणमेतदिति सूत्रकार एव प्रकरणादिति वक्ष्यति । ननु, महाप्रकरणस्य परमात्मसम्बन्धित्वेऽपि सृष्टेरवान्तरप्रकरणमस्तु । नैतावता तत्र महाप्रकरणप्राप्तस्य परमात्मनः सम्बन्धो विरुध्यते । स्रष्टृतया सृष्ट्यवान्तरप्रकरणेऽपि परमात्मसम्बन्धावश्यम्भावात् । अपि च हिरण्यगर्भपक्षे 'एष सर्वभूतान्तरात्मा' इत्यत्रैतस्माज्जायत इत्यस्यानुषङ्गोऽपि कल्पनीयः । परमेश्वरपक्षे तु यथाश्रुतमेव । ननु, सर्वात्मत्वविवक्षया परमात्मनि योजनायां 'पुरुष एवेदं विश्व'मित्यनेन पौनरुक्त्यं स्यात् 'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति मन्त्रेणैवापरब्रह्मणो हिरण्यगर्भस्य जन्मोक्तमिति तत्पक्षेऽपि पौनरुक्त्यस्य तुल्यत्वात् । यत्किञ्चिद्विशेषविवक्षया पौनरुक्त्यपरिहारस्तु पक्षद्वयेऽपि समानः । ननु, ब्रह्मपक्षे मूर्धादिश्रुतीनां मुख्यता न लभ्यते । उच्यते— इह किं मूर्धादिकमुद्दिश्य द्युलोकत्वादिकमुच्यते । अथवा द्युलोकादिकमुद्दिश्य मूर्धत्वादिकं विधीयते । आद्ये हिरण्यगर्भपक्षेऽप्यग्न्यादिपदानां मूर्धादिषु वृत्तेः स्वार्थत्यागः प्राप्त एव । स परमात्मपक्षेऽपि तुल्यः । द्वितीये तु मूर्धादिपदानां द्युलोकादिषु वृत्तेः स्वार्थत्यागः पक्षद्वयेऽपि समानः । परं तु द्वितीयपक्ष एव समीचीनः । स्तुतिप्रकर्षलाभात् । यथा हि 'सुतलं चरणद्वन्द्वं पृथ्वी जघनमण्डली । यत्कीर्तेर्मध्यमाकाशं सुमनोवासभूश्शिरः ॥, इत्यादौ पातालादिषु चरणत्वादिरूपणात् त्रैलोक्यसंबन्धिता कीर्तेः प्रतीयत, एवं द्युलोकादिषु मूर्धत्वादिरूपणेन त्रैलोक्यव्याप्तिर्लभ्यते इति स्तुतिप्रकर्षसिद्धिः । मूर्धादिषु द्युलोकादित्वविधौ तु यत्किञ्चित्सादृश्यमादाय द्युशब्दादीनां मूर्धादिष्वेव वृत्तेः न सर्वव्याप्तिरि-

ति न स्तुतिप्रकर्षलाभः । इदं हि वाक्यं पक्षद्वयेऽपि स्तुत्यर्थमेव । न ह्यत्र हिरण्यगर्भोपासना विधीयत इति वक्तुं शक्यते । निर्विशेषप्रकरणे फलकीर्तनं विना प्रासङ्गिकोपासनाया अन्याय्यत्वात् । ततश्च हिरण्यगर्भपक्षेऽपि स्तुत्यर्थतैव प्राप्नोति । परं तु ब्रह्मप्रकरणेत्यस्य स्तुतिरसङ्गतेति तादृशोऽपि हिरण्यगर्भो यस्माज्जायत इति प्रकृतविषयता क्लेशेन सम्पादनीया । अपि च परमात्मपरत्वे न स्तुतिमात्र एवोपयुज्यते रूपकम् । अपि तु अन्यत्रापि यथा सृष्ट्यादिप्रतिपादनं निर्विशेषप्रकरणे अध्यारोपापवादाभ्यां निष्प्रपञ्चवस्तुप्रतिपत्त्यर्थं सविशेषोपासनायामुपास्यस्वरूपप्रसिद्ध्यर्थं च, एवं द्युमूर्धत्वादिना मूर्तिप्रतिपादनमपि । दृश्यते हि तस्याः अत्रैव निषेधः 'दिव्यो ह्यमूर्तः पुरुष' इति । वैश्वानरोपासनायां च एषैव मूर्तिरुपास्या । अतस्सर्वोपादानं सर्वनियन्तारं परमात्मानं प्रत्येव दिवादीनां तदध्यस्तानां तन्नियम्यानां मूर्धत्वादिकल्पना उचितेत्यतो नायं हिरण्यगर्भरूपोपन्यास इति । अत्र च सर्वज्ञत्वादिकं भूतयोनावस्पष्टं लिङ्गम् । ऊर्णनाभ्यादिदृष्टान्तेन प्रधाने स्वरसेन विषयान्तरकल्पनात् । अत्र पूर्वपक्षे अदृश्यत्वादिपदानां प्रधानविषयत्वात् एतत्प्रकरणे प्रतिपाद्यमानस्य परमात्मनो निर्विशेषता न सिध्यति । सिद्धान्ते तु परमात्मविषयतया निर्विशेषतासिद्धिः । सविशेषप्रश्नेऽप्यत्र पादे निर्विशेषवाक्यविचारः सङ्गतिविशेषात् कृतः । सा च सङ्गतिरपि पूर्वत्रादृष्टत्वाद्यभिलापसम्भवेऽपीत्यादिवाक्येन भाष्य एव पूर्वपक्षावसरे दर्शिता ॥ २३ ॥

॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥ ६ ॥

## वैश्वानरस्साधारणशब्दविशेषात् ॥२४॥

छान्दोग्य उपाख्यायते—'प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकबुडिलाः पञ्चर्षयः को न आत्मा इति ब्रह्मरूप आत्मा अस्माकं क इति जिज्ञासयोद्दालकसमीपं गताः तेनापि नाहं वैश्वानरमात्मानं, सम्यक् जानामीति निश्चित्य केकयेऽश्वपतौ तदभिज्ञे निर्दिष्टे सर्वेऽपि मिलित्वोद्दालकषष्ठाः तं प्रति पप्रच्छुः । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही'ति ततो राजा एतैरविदितोंऽशः अस्माभिर्वक्तव्य इति मनसि निधाय भवद्भिर्वैश्वानरे विषये यावत् ज्ञायते, तावत प्रथमतो वक्तव्य'मिति पृष्टे राजानं प्रति यथाक्रमं द्युसूर्यवाय्वाकाशवारिपृथिवीनां मध्ये एकैकमर्थं वैश्वानरमुपास्मह इति प्रत्युत्तरिते दिवादीनां सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वरूपान् गुणान् क्रमेणोपदिश्य दिवादय एव वैश्वानररूपाः प्रत्येकमिति युष्माभिः क्रियमाणमुपासनमसदि'ति निन्दित्वा दि-

वादीनां मूर्धचक्षुःप्राणदेहमध्यबस्तिपादभावमुपदिश्याम्नायते— 'यस्त्वेतमेवं प्रादेशमात्र'मित्यादि । पूर्वस्मिन्नधिकरणे द्युमूर्धत्वादिरूपं परमात्मलिङ्गतयोपन्यस्तं, तदसङ्गतम् । तादृशस्य रूपस्यान्यत्रापि दर्शनादित्याक्षिप्यत इति सङ्गतिः । **विश्वस्मा इति** । देवाः विश्वस्मै भुवनाय वैश्वानरमग्निं सूर्यरूपेण अह्नां केतुं चिह्नम् अकृण्वन् वैश्वानरस्य सुमतौ शोभनायां प्रसादरूपायां बुद्धौ स्याम । स हि वैश्वानरो भुवनानां राजा । कं सुखं अभिमुखा श्रीश्च । अतः तत्प्रसादः आवश्यक इत्यर्थः । **तस्मान्नेश्वरो वैश्वानर इति** । अत्र पूर्वपक्षे जाठरतृतीयभूतनदभिमानिदेवताजीवेष्वनिर्धारणमेव । वैश्वानरः परमात्मा न भवतीत्यंशे निर्धारणम् । **कारणस्य हि सर्वाभिः कार्यगताभिरिति** । अयं भावः— यद्यपि दिवादीनां मूर्धादिभावो न मुख्यया वृत्त्या परमात्मन्यपि सम्भवति । दिवादिषु मूर्धत्वाद्यभिव्यञ्जकसंस्थानाभावात् । अपि तु मूर्धत्वादिना रूपणमात्रम् । तच्च रूपणं ब्रह्मण्यपि कर्तुं शक्यम् । तथापि सालम्बने रूपणे सम्भवति न निरालम्बनं तदाश्रयणीयम् । लोके च 'अस्यायं मूर्धेति' व्यपदेशे तत्तदवयवानां अन्तरात्मैव तत्सम्बन्धी निर्दिश्यते । अन्तरात्मा च स उच्यते, यश्चेतनतादात्म्येन तं तमर्थं नियच्छति । तथा च सर्वोपादानतया नियन्तारं परमात्मानं प्रत्येवेदं रूपणं सालम्बनं, न तु जाठरभूतदेवताजीवात्मनः प्रति । अतो द्युमूर्धत्वादिलिङ्गात् परमात्मैव वैश्वानरः । कार्यं द्युलोकाद्यात्मना भासमानं ब्रह्मैव । कार्यकारणानन्यत्वात । तद्गतावस्थाः द्युलोकादिस्वरूपाः । अपि च पूर्वपक्षिमते अग्निवैश्वानरात्मशब्दानां साधारणत्वादनिर्धारितस्य वेदार्थस्याभ्युपेतुमशक्यत्वाच्च ब्रह्मासाधारणेन द्युमूर्धत्वादिना ब्रह्मपरत्वमेवास्थेयम् ॥ २४ ॥

ननु, द्युमूर्धत्वादिकमपि न परमेश्वरासाधारणम् । पुराणादिषु हिरण्यगर्भेऽपि त्रैलोक्यशरीरतायाः प्रतिपादनादित्याशङ्क्याह—

## स्मर्यमाणमनुमानं स्यादिति ॥२५॥

**मूलभूतां श्रुतिमनुमापयदिति** । इयं स्मृतिः परमात्मप्रकरणपठिता । अतस्तस्याः परमात्मविषयता वक्तव्या । सा च द्युमूर्धत्वादिकं परमात्मनः प्रतिपादयन्ती मूलभूतां स्वसमानार्थिकां श्रुतिमपेक्षते । सा च स्वमूलत्वेनैव वैश्वानरवाक्यं स्वीकुर्वती वैश्वानरपदस्यान्यविषयत्वेऽनुपपद्यमाना तस्य परमेश्वरपरतां दर्शयतीत्युपबृंहणविधया वैश्वानरस्य परमेश्वरपरतां सम्पादयतीत्यतो वैश्वानरपदाभिधेयः परमात्मेत्यर्थः । नन्वेतस्याः स्मृतेः मूलभूतेयं श्रुतिर्मास्तु । 'अग्निर्मूर्धे'ति श्रुतिरेवैत-

त्स्मृतिसमानविषयनिर्णीतपरमात्मतात्पर्यमूलं स्यात् । अवश्यं च 'चन्द्रसूर्यौ च नेत्रे' इत्यस्मिन्नंशे आथर्वणश्रुतिरेव मूलत्वेनेष्टव्या । न च पद्भ्यां पृथिवीत्यंशे आथर्वण-श्रुतेर्मूलता वक्तुं न शक्यते । स्मृतौ 'चरणौ क्षितिः विद्धि पादौ क्षितिं च'ति सामानाधिकरण्यश्रवणादिति वाच्यम् । पद्भ्यां पृथिव्युत्पत्तिप्रतिपादनेन पादौ पृथिवीति सामानाधिकरण्यस्यापि दर्शितत्वात् । दृश्यते हि पुरुषसूक्ते 'मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते' इति सामानाधिकरण्येनोपक्रम्य 'पद्भ्यां शूद्रो अजायत । पद्भ्यां भूमिरि'ति निगमनम् । तथा च यस्याग्निरास्यमित्यंशे 'मुखादिन्द्रश्चाग्निश्चे'ति श्रुतिः मूलत्वेनेष्टव्या । अत्र च परमात्मपादत्वेन पृथिव्यादिजनकत्वेन निर्दिष्टाः परमात्मनि विद्यमानाः सूक्ष्मपृथिव्यादय एव । अतः कथं स्मृत्यन्यथानुपपत्त्या वैश्वानरवाक्यस्य परमात्मविषयत्वमिति चेदस्तु. तदपि वाक्यद्वयमस्यास्स्मृतेर्मूलभूतम् । एतावदेवात्र विवक्षितं—अनया स्मृत्यैषा श्रुतिः परमात्मपरत्वेनोपबृंहितेति न त्वियमेव श्रुतिः तस्याः मूलमिति । ततश्च श्रुतिस्मृतिन्यायपर्यालोचनया अस्या मूर्तेः पारमेश्वरत्वे सिद्धे यत् क्वचित्तादृशं रूपं हिरण्यगर्भसम्बन्धितया पुराणादिषु पठितं तत् 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उह्येव सर्वे देवा' इत्यत्र यथा सर्वदेवात्मत्वं ब्रह्मस्वरूपाभिव्यक्त्यभिप्रायम् । 'शास्त्रदृष्ट्या तूपदेशो वामदेववदि'तिन्यायात्, तथा द्रष्टव्यं, हिरण्यगर्भस्य द्युलोकादिष्ववान्तरनियन्तृतया तदालम्बनं वा द्रष्टव्यम् । न चात्र निरङ्कुशे नियन्तरि सर्वोपादाने परमेश्वरे सम्भवति अवान्तरनियन्तृग्रहणमुपपद्यते ॥२५॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥२६॥

इदं सूत्रं जाठर एव वैश्वानर इति प्रतिपादनार्थम् । तत्राग्निर्वैश्वानर इत्यादौ गार्हपत्यादिकल्पनं परमेश्वरव्यावृत्तावुपयुक्तम् । पुरुषेऽन्तःप्रतिष्ठितत्वं भूतदेवताव्यावृत्तौ । तदिदमुक्तं 'एतेभ्यो हेतुभ्यो जाठरो वैश्वानर इति, तच्च जाठरे सम्भवतीति च । 'अथवा तच्छरीराया देवताया इति, अथवा भूताग्नेरि'ति यत् पक्षद्वयमुक्तमस्मिन्सूत्रे स्थित्वा, तदुत्तरसूत्रे निवर्त्यमिति द्रष्टव्यम् । **यदप्युक्तं—मूर्धैव सुतेजा इत्यादेरिति** । आदिपदेन प्रथमसूत्रोक्तानि यानि ब्रह्मसाधकानि भाष्ये दर्शितानि,

तानि सर्वाणि संगृहीतानि । **कुतो ह्येष निर्णय इति** । अत्र ब्रह्मजाठरश्रुतिलिङ्गानां समबलतया अनिर्णय इत्येव न विवक्षितम् । अपि तु जाठरगोचराणां प्राबल्यमपि विवक्षितम् । तथा हि--ब्रह्मणि 'को न आत्मा किं ब्रह्मे'ति श्रुत्युपक्रमे यद्यपि विद्येते, तथापि न तयोर्वैश्वानरश्रुत्यन्यथाकरणसामर्थ्यमस्ति । तयोरात्मब्रह्मदृष्टिविषयद्युलोकादिष्वौपचारिकत्वात् । इदं हि प्राचीनशालादीनां मीमांसावाक्यम्। तैश्चैतस्य वाक्यस्य स्वाभिप्रेतोऽर्थः उत्तरत्र स्फुटीकृतः । उपचारेणैव 'औपमन्यव कं त्वमात्मानमुपास्स' इत्यादिना प्राचीनशालादीन् प्रति राजप्रश्ने दिवमेव भगवो राजन्निति होवाच आदित्यमेव भगवो राजन्निति होवाचेति प्रत्युत्तरितत्वात् । अतो वैश्वानरशब्दिते जाठर एव तयोरौपचारिकत्वं भविष्यति । द्युमूर्धत्वादिकल्पनं तु उपचार एव । वेदिरित्याद्यग्निसम्बन्धिरूपकेण प्रतिरुद्धम् उरआदीनां वेदित्वादिकल्पनं हि जाठराग्नावेवोचितम् । वेद्यादीनामग्निसम्बन्धित्वस्यैव स्फुटत्वात् । हृदयादीनां च जाठरसम्बन्धात् । न च द्युमूर्धत्वादेर्जाठरे सम्बन्धो न सम्भवतीत्याशङ्कनीयम् । इयं हि द्युमूर्धत्वादिकल्पना न शरीरात् बहिर्विवक्षिता । अपि तु उपासकमूर्धचुबुकान्तराले उपासकमूर्धादेरेव हि वैश्वानरमूर्धत्वादिना द्युलोकत्वादिना चोपास्य इति 'सम्पत्तेरिति जैमिनिरि'तिसूत्रे स्पष्टं भविष्यति । उपासकमूर्धादिभिश्चास्ति जाठरसम्बन्धः । तस्योष्मणा सर्वशरीरव्यापित्वात् । तथा च श्रुतिः 'सन्तापयति स्वन्देहमापादतलमस्तकमि'ति । स 'सर्वेषु लोकेष्वि'त्यादिना श्रुतं सर्वेषु लोकेषु भूतेषु आत्मसु चान्नादनं फलं ब्रह्मोपासनयैव सम्भवति । न ह्यत्र सर्वात्मा सन् सर्वमत्तीति विवक्षितम् । सगुणोपासनया सर्वात्मप्राप्तेरभावात् । अपि तु सङ्कल्पेन सर्वेषु लोकेषु तत्तद्भूतोत्पादनेन देवतिर्यङ्मनुष्याद्यात्मना स्थितो भोग्यमत्तीति विवक्षणीयम् । तदा ब्रह्मोपासनातो वचनबलात् सत्यसङ्कल्पाद्यभिव्यक्त्या भविष्यति । एवं सर्वपाप्मप्रदाहोऽपि । वस्तुतस्तु सर्वत्रान्नादनं पाप्मप्रदाहो नोपासनाफलम् । अपि तु प्राणाग्निहोत्रफलम् । स य एतदेवं विद्वानग्निहोत्रं जुहोती'त्युपक्रम्य तदाम्नानात् । तथा जाठराग्न्यपरित्यागेनेति सङ्ग्रहवाक्यं तत्प्रतीकाभिप्रायेण प्रथमतो व्याचष्टे—**परमेश्वरदृष्टिर्हीति**। तथा च 'स एषोऽग्निर्वैश्वानर इति वाक्ये वैश्वानरोद्देशेन पुरुषपदोदितं ब्रह्मत्वं विधीयत इति भावः । **अथवेति** । अस्मिन् पक्षे वैश्वानरादिपदं तदुपाधिकपरमात्मपर्यन्तं द्रष्टव्यम् । **ततो मूर्धैव सुतेजा इत्यादीति** । यद्यप्युपासकमूर्धादिषु वैश्वानरमूर्धादिकं सम्पादनीयं, तथापि न जाठरेऽग्नौ सम्भवः। अत्र हि प्रथमं वैश्वानरस्य मूर्धत्वादिना द्युलोकादयो ध्येयाः, तथा देवतात्मसम्ब-

न्धितया मूर्धादीन् ध्यात्वा तेषां पुनस्स्वमूर्धचुबुकान्तराले ध्यानम् । न तु प्रथमत एव स्वमूर्धादिषु वैश्वानरमूर्धत्वं द्युलोकत्वं च ध्यातव्यम् । तथा चाधिदैवतद्युमूर्धत्वादिध्यानं वैश्वानरस्य परमात्मपक्ष एव समञ्जसम् । एवमात्मशब्दब्रह्मशब्दाभ्यामुपक्रमोऽपि वैश्वानरस्य परमात्मविषय एव समञ्जसः । उपक्रमो हि नात्मब्रह्मदृष्टिविषयक इत्यभिप्रायः । उद्दालकादिभिरात्मब्रह्मदृष्टिविषयतयोपास्यत्वेन निर्णीतानां द्युलोकादीनां तन्मीमांसाविषयत्वासम्भवात् । ननु, निर्णीतत्वेऽपि परस्परमन्यान्यदृष्टिविषयदर्शनेन वैमत्ये सति मीमांसा सम्भवतीति चेन्न । मनो ब्रह्म आदित्यो ब्रह्मेत्यादौ ब्रह्मदृष्टिविषयाणां बहूनां दर्शनेन विरोधाप्रसक्त्या मीमांसानवतारप्रसङ्गात् । परं तु तेषां द्युलोकादिरेव ब्रह्मेति भ्रमः । दृश्यते ह्यद्यत्वेऽपि पामराणामर्चायामेव परमात्मेति विभ्रमः अन्यान्यायतनेषु भ्रमवतां विमतिश्च । ततश्च यथेदं रजतमिति भ्रमदशायां रजतपदं प्रयुज्यमानं न दृष्टिलक्षकम्, एवमिदमप्यात्मपदं ब्रह्मपदं च न दृष्टिलक्षकम् । ततश्चोपक्रमे आत्मब्रह्मपदप्रतिपाद्यस्य परमात्मनः मीमांसामवतार्य तन्निर्णयार्थं राजसमीपं गतानामात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहीति वाक्येऽप्यात्मपदसामानाधिकरण्येन श्रुतं वैश्वानरपदं तदुपाधिकपरमात्मपरमेव । अत एव भाष्ये दृष्टिपक्षं परित्यज्य उपाधिपक्षः परिगृहीतः । परं तु वाजसनेयके 'वैश्वानरं ह वै भगवन् सम्प्रति वेद तमेव नो ब्रूही'त्येव उपक्रमे श्रवणेनात्मब्रह्मशब्दयोः तत्रोपक्रमे श्रवणाभावात् छान्दोग्यगतस्तथोपक्रमोऽपि जाठर एव । 'आत्मानं रथिनं विद्धि शरीरं रथमेव'त्वित्यादिवत् द्युमूर्धत्वादिकल्पनं जाठर एवास्तु । ततश्च साम्पादिकस्य द्युमूर्धादेः जाठरे सम्भवेन आत्मशब्दस्तत्र शारीरत्वसादृश्यात् आथर्वणे द्युमूर्धत्वादेः परमात्मनिष्ठत्वेन तत्सादृश्यात् ब्रह्मशब्दोऽपि गौणः । ततश्च न कथञ्चिदस्यामुपासनायां ब्रह्मसंस्पर्श इति यदि कश्चित् शङ्केत, तन्निराकरणं दृष्टिपक्षोपक्षेपेणापि भवतीत्येतावता तदुपक्षेपः । तन्निराकरणप्रकारस्तु न वाजसनेयके अश्रवणात् छान्दोग्ये श्रुतस्य परित्यागस्सम्भवति । विद्यैकत्वेनाश्रुतस्थले श्रुतोपसंहारसम्भवात् । परं तु वैश्वानरश्रुत्यनुग्रहाय आत्मब्रह्मशब्दौ तद्दृष्टिविषयौ द्युमूर्धत्वादिकल्पनं च वैश्वानरप्रतीकतया ध्येये परमात्मन्येव सालम्बनमिति । अयं तु पक्षः उपक्रमाद्यनेकलिङ्गसन्दब्धब्रह्मादिश्रुतिगौणतापादकतया परित्यक्तव्य इति उपाधिपक्षः परिगृहीतः । **पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यादित्यादि** । ननु, यथा पुरुषेऽन्तःप्रतिष्ठितत्वं जाठरस्योदरे शरीरावयवेऽन्तर्गतत्वात् पुरुषपदं शरीरपरं स्वीकृत्योपपादनीयम् , एवं पुरुषत्वमप्युपपादयितुं शक्यमेव । पुरुषपदस्य शरीरसादृश्यपरत्वात् । तत्प-

रत्वं च पुरुषविधमित्युत्तरपदानुसाराडुपपन्नमेवेति चेन्न । एवंसति शरीरसादृश्यस्य पुरुषविधपदेनैव लब्धतया पुरुषपदं व्यर्थमेव स्यात् । अतः पुरुषपदं चेतनपरमेव । ततश्च तदेकरूप्याय पुरुषेऽन्तःप्रतिष्ठितमित्यत्रापि पुरुषपदं जीवरूपचेतनपरमेव । तदन्तःप्रतिष्ठितत्वं चान्तर्यामिणो 'य आत्मनि तिष्ठन्नित्यादिश्रुतिसिद्धमिति नानुपपत्तिः । पुरुषविधत्वमपि मूर्धादिकल्पनया जीवसादृश्यमेव । ततश्च त्रयाणां पुरुषपदानामैकरूप्यायमुख्यार्थत्वाय च यो वस्तुगत्या जीवरूपः, यश्च तत्र प्रतिष्ठितः, तत्सदृशश्च स एव पुरुषमित्यादिपदत्रयप्रतिपाद्यः । स चात्मैवेति सिध्यति । **प्रसिद्धं मूर्धत्वादिचुबुकप्रतिष्ठितत्वान्तमिति** । इदमपि व्याप्तिमात्रेणैव जाठरे कल्पनीयम् । तदपेक्षया नियन्तरि परमात्मन्येव समञ्जसम् । तथा दृष्ट्युपदेशे च जाठरस्यापरित्यागात् उर एव वेदिरित्यादिकं जाठरांशमादायोपपद्यते॥२६॥

## अत एव न देवता भूतं च ॥२७॥

इदं जाठरनिराकरणन्यायं भूतदेवतयोरतिदेष्टुम् । तत्रातिदेशनिवर्त्यं जाठरापेक्षया भूतदेवतयोर्विशेषमाह—**यत्पुनरुक्तमित्यादिना । अकारणत्वादिति।** तादात्म्येन नियन्तारं प्रति मूर्धादिकल्पनमुचितं, न त्वतथाभूतदेवतां प्रतीति भावः। **परमेश्वराधीनेति** । अन्तर्याम्यधिकरणे हि 'अनन्यायत्तनियन्तृत्वग्रहणसम्भवे न अन्यायत्तं तद्ग्राह्यमि'ति प्रतिपादितम् । देवतायाश्च परमेश्वरतन्त्रैश्वर्याया न स्वातन्त्र्येण नियन्तृत्वमिति भावः । **आत्मशब्दासम्भवश्चेति** । देवतायाश्चेतनत्वेऽपि 'को न आत्मे'त्युपक्रमस्वारस्येनावगम्यमानं यदुपासकं प्रत्यात्मत्वं, तन्न सम्भवतीति भावः ॥२७॥

## साक्षादप्यविरोधं जैमिनिः ॥२८॥

**यथा वृक्षे शाखां प्रतिष्ठितां पश्यति तद्वदिति** । ततश्च **यथा** शाखास्थः पक्षी वृक्षे प्रतिष्ठित इत्युच्यते तद्वच्छरीरावयवे मूर्धादिचुबुकान्ते प्रतिष्ठितः परमात्मा शरीरे प्रतिष्ठित इति शक्यं निर्देष्टुं साक्षिरूपम् । विशुद्धजीवस्वरूपपरमात्मन एव हि तेन रूपेण 'अनेन जीवेनात्मनानुप्रविश्ये' ति वाक्यपर्यालोचनया प्रवेशोऽवगम्यत इति भावः । इदं च पक्षद्वयं पुरुषपदस्य शरीरपरतामुपेत्योक्तम् । जीवपरत्वे त्वन्तर्याम्यभिप्रायेण तद्वक्तुं शक्यत इति प्राक् प्रतिपादितम् । विश्वश्चायं नरश्चेत्यादिना सर्वात्मत्वं सर्वनेतृत्वं सर्वनियन्तृत्वं चेत्यर्थत्रयं दर्शितं वैश्वानरप्रकृत्यंशस्य । **तद्धितोऽनन्यार्थ इति** । तथा च

निरुक्तं—वैश्वानरः कस्मात् 'विश्वनर एव वैश्वानरः । राक्षसो वायस इतिवत् । रक्ष एव राक्षस' इति । अग्रणीत्वादीति । अग्रमुत्कृष्टं फलं नयतीत्यग्रणीः । तथा च निरुक्तम्—'अग्निः कस्मात् अग्रं नयती'ति । महाभारते च—'यस्माच्चायं नयत्यग्र्यां गतिं विप्रान् प्रपूजितः । तस्माच्च नयनाद्राजन् वेदेष्वग्निः प्रकीर्तितः ॥' इति । ननु, पूर्वं रूढ्यपरित्यागेन पक्षद्वयं 'तथा दृष्ट्युपदेशादि'ति दर्शितम् । तत्र वैश्वानरे परमात्मदृष्टिपक्षे यथाश्रुत एव वैश्वानरशब्दः । उपाधिपक्षे तु रूढिपूर्विका लक्षणेति । अधुना कथं वैश्वानरादिपदं योगानुसारेण व्याख्यायते । रूढितो वा तत्पूर्वकलक्षणातो वा योगस्य दुर्बलत्वात् । अपि च योगपक्षे वैश्वानरपदे कथं दीर्घः । 'नरे संज्ञायामि' ति सूत्रेण संज्ञायामेव नरशब्दे परतो विश्वशब्दस्य दीर्घविधानादिति चेदुच्यते । निरुक्तपर्यालोचनया प्रकृते वैश्वानरादिपदे योग एवाश्रयणीयः । अन्यथा निरुक्तस्य निरवकाशतापत्तेः । प्रसिद्धाग्निविषये तदनपेक्षणात् रूढ्यैव प्रयोगोपपत्तेः । फलदातृत्वादिना निरुक्तस्य परमात्मन्येव स्वारस्याच्चावश्यं रूढिवादिनापि अग्निशब्दस्य यौगिकतैवाश्रयणीया । पर्यायाणां सहप्रयोगासम्भवात् । सा वैश्वानरपदेऽपि निरुक्तबलादस्तु । दीर्घस्तु 'अन्येष्वपि दृश्यत' इति केशाकेशीत्यादिवत् भविष्यति । न चास्मिन् पक्षे 'उर एव वेदिरि' त्यादिना वेद्यादिकल्पनं 'आत्मनि हैवास्य तद्वैश्वानरे हुतं स्यादि' त्यादिकं चानुपपन्नम् । अग्नावेव हि तत् स्वरसमित्याशङ्कनीयम् । तस्य हवा एतस्यात्मनो वैश्वानरस्येति' वाक्यं हि उर एव वेदिरित्यत्रापि अनुवृत्तमेव । ततश्च मूर्धादिसाधारण्येन अन्वितस्य वैश्वानरस्येति पदस्य षष्ठ्यन्तस्य वेद्यादिष्वपि शेषितासमर्पकतया वेद्यादीनां तदुद्देश्यकतावगम्यते । एवं च गार्हपत्यादिपदमपि न गार्हपत्याद्यायतनरूपणपरम् । अपि तु तत्तदग्नित्वरूपणपरमेव । गार्हपत्यादिपदानां अग्निविशेषेष्वेव रूढत्वात् । हृदयगार्हपत्यादीनां तदुद्देश्यकता च 'प्राणाय स्वाहेत्यादि मन्त्रैः कर्तव्याहुत्याधारतया । न च तेषां होमानां प्राणादिदेवताकत्वात् कथं वैश्वानरपदप्रतिपाद्यपरमात्मोद्देश्यकतेति वाच्यम् । उपक्रम एव वेद्यादिरूपणस्य वैश्वानरपदप्रतिपाद्यपरमात्मोद्देश्यकतावगमेन तदाधाराहुतीनामन्योद्देश्यकतायामन्तर्गतवेद्यादिगतपरमात्मोद्देश्यकताया अनिर्वाहात्तदनुसारेण 'प्राणाय स्वाहे' तिमन्त्रगतानां प्राणादिपदानां परमात्मपरत्वकल्पनात् । दृश्यते हि प्रश्नोपनिषदि प्राणपदस्य वैश्वानरपदोदितपरमात्मसामानाधिकरण्यं— 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत' इति । अत्र हि प्राणशब्दो वैश्वानरपदोदितसूर्यान्तर्वर्तिसमष्टिप्राणाभिमानिहिरण्यगर्भान्तर्यामिपरः । 'ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेष-

माणा एष ह वै तत्सर्वं वक्ष्यती'ति परब्रह्मान्वेषणायोपक्रमस्य प्रवृत्तत्वात् 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणानामायतनं एतदमृतमभयमेतत्परायणं एतस्मान्न पुनरावर्तन्त' इति उत्तरत्र अर्चिरादिमार्गापुनरावृत्त्योः श्रवणाच्च । एवं च यत् मध्ये 'स एष' इति वाक्यात् पूर्वं 'प्रजाकामो वै प्रजापतिः स मिथुनमुत्पादयते रयिञ्च प्राणञ्चे'ति प्राणशब्दोदितस्योत्पत्तिप्रतिपादनं, तत्प्राणोपाध्यभिप्रायम् । यच्च तदनन्तरं 'तदेतदृचाभ्युक्तं विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिश्शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्य इति स एष' इति वाक्यार्थ एव सौरमन्त्रोदाहरणं, तदपि सूर्योपाध्यभिप्रायं द्रष्टव्यम् । एवं च 'आत्मनि हैवास्य तद्वैश्वानरे हुतं भवती'त्यत्रापि सप्तम्युद्देश्यताभिप्राया । 'अपि यश्चण्डालायोच्छिष्टं प्रयच्छती'त्युपक्रमात् । तत्र ह्ययमर्थः प्रतीयते—चण्डालायोच्छिष्टमपि यो दद्यादात्मन एव वैश्वानराय तद्दद्यात् सर्वात्मत्वादिति । दृश्यते चास्मिन्नेव प्रकरणे उद्देश्यतायां सप्तमी—'स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्चित् द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यत्येवमादिना होमतर्पणीयत्वेन प्रस्तुते जगति 'अथ य एवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवती'ति सप्तमीप्रयोगस्य उद्देश्यतार्थकत्वात् । दृश्यते च लोकेऽपि 'सममब्राह्मणे दानमि'त्यादौ तदर्थता । एतेन प्राणाहुतीनामग्निप्रतिसम्बन्धिकत्वात् तदभावे कथं स यां प्रथमामाहुतिं जुहुयादि'त्यादिवाक्यानामुपपत्तिः, कथं वा वेद्यादिरूपणस्य साकल्यमिति शङ्कापि निरस्ता । 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीय' इति साम्पादिकानामग्नीनां सत्त्वात् । भाष्ये तु हृदयं गार्हपत्य इत्यादयश्शब्दास्तत्तदग्न्यायतनपरा एव । तत्प्रतिसम्बन्धी वैश्वानरः परमात्मैव । यद्यपि तादृशायतनप्रतिसम्बन्धित्वमग्नेरेवोचितं, तथापि सर्वात्मके परमात्मन्यग्निधर्मः प्रतिपादयितुं शक्य इत्यभिप्रायेणोक्तम् । **गार्हपत्यादिकल्पनमित्यादि** । एवंसति यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते इत्युपक्रम्याम्नातं सर्वलोकभूतात्मवर्तिभोग्यप्राप्तिरूपं फलं य एतदेवं विद्वानग्निहोत्रं जुहोतीत्यादिवाक्यं सन्निधाप्य श्रुतं सर्वपाप्मप्रदाहरूपं च फलं सम्यगुपपद्यते । उपासनाग्निहोत्रयोरुभयोरपि परमात्मोद्देश्यकत्वात् । वस्तुतस्तु नात्राग्निहोत्रं स्वतन्त्रं कर्म । अपि तु प्रकृतोपासनाङ्गम् । 'य एवं विद्वानाग्निहोत्रं जुहोती'ति विद्यासंयोगात् । ततश्चावयवेषु श्रुतं सर्वं रात्रिसत्रन्यायेन प्रधानोपासनागतमेव कल्प्यते ।

सर्वपाप्मप्रदाहादिकं च ब्रह्मविद्याफलत्वेनैव क्लृप्तमिति ततो वैश्वानरो ब्रह्मेति । न चोपासनाप्रधानं अग्निहोत्रमङ्गमित्यत्र नियामकं नास्तीति शङ्कनीयम् । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि । तमेव नो ब्रूही'ति प्रश्नानुसारात् । तत्र हि अध्येषीति पदं स्मरसीत्यर्थकम् । स्मरणं च उपासनारूपमेव पर्यवस्यति । ॥२८॥

## अभिव्यक्तेरित्याश्मरथ्यः ॥२९॥

## अनुस्मृतेर्बादरिः ॥३०॥

इति सूत्रद्वयोपक्षिप्तं पक्षद्वयं नाभिमतम् । प्रादेशमात्रश्रुतिमुख्यार्थत्वालाभात् श्रुत्यन्तराननुगुणत्वाच्चेति तादृशदोषद्वयरहितं पक्षमाह—

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३१॥

**प्रादेशमात्रमिह वा इति** । देवाः सूर्यादयः प्रादेशतामभिसम्पन्ना उपासनया प्रापिता यदा भवन्ति, तदा ते विदिता भवन्ति । एनान् सूर्यादीन् । अत्रातिष्ठादिपदैस्तत्तद्गुणका द्युलोकादयो गृह्यन्ते । इदमौपमन्यवादीन् प्रति राज्ञः केकयस्य वचनम् । **नैतावतेति** । अतिष्ठात्वविशेषमात्रेण विद्याभेदो न भवतीत्यर्थः । **प्रादेशमात्रश्रुतेरविशेषादिति** । ननु, च्छान्दोग्ये 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमि'त्येवंपदेन पूर्वोक्तद्युमूर्धत्वादिप्रकारं परामृश्य तत्र प्रादेशमात्रतायाः प्रतिपादनात् प्रादेशा द्युलोकादयस्तत्सम्बन्धिनी मात्रा प्रमाणमस्येति प्रकारेण द्युलोकादिवैशिष्ट्यपर एव प्रादेशमात्रशब्दो व्याख्येयः । ततो न वाजसनेयकगतप्रादेशमात्रताप्रत्यभिज्ञानं प्रकृत इति चेन्न । एवं द्युमूर्धत्वादिविशिष्टं सन्तं यः प्रादेशमात्रं वाजसनेयोक्तप्रकारेणोपास्त इत्यन्वयेन प्रादेशमात्रश्रुतिमुख्यार्थताश्रुत्यन्तरैकार्थ्ययोस्सम्भवे तद्विरुद्धकल्पनायाः अन्याय्यत्वात् । ॥३१॥

नन्वतिमात्रस्य परमात्मान कथं मूर्धचुबुकान्तरालवर्तितया प्रादेशमात्रतां सम्पाद्य ध्यानमित्याशङ्क्य इतोऽपि सूक्ष्मस्थाने परमात्मनो ध्यानं निरूप्यत इति प्रतिपादयति—

## आमनन्ति चैनमस्मिन् ॥३२॥

य एषोऽनन्तोऽव्यक्त आत्मेति । अनेन वाक्यसन्दर्भेण भ्रुवोर्घ्राणस्य च सन्धिं द्युलोकस्य परशब्दोदितद्युलोकोपरि विद्यमानस्य च सन्धित्वेन ध्यात्वा भ्रुवोर्घ्राणस्य च पापवारकत्वनाशकत्वगुणयोगात् वरणा नासीति नामद्वयं ज्ञात्वा-तत्सन्धौ अविमुक्तपदोदीरितं जीवं तस्याप्यन्तःप्रतिष्ठितं परमात्मानं चोपासीतेति प्रतिपाद्यते । इमामेव वरणां नासिकां च वरणा नासीति निरुच्येत्यत्र द्वितीयान्तो वरणाशब्दो भ्रूप्रतिपादकः । इमामेव नासिकामिति पाठे तु नासिका-शब्द एव भ्रूसहितनासिकापरः । अत्र द्युमूर्धत्वादिलिङ्गस्य वेद्याद्यग्निलिङ्गाभिभूततत्वादस्पष्टता ॥३२॥

॥ इति वैश्वानराधिकरणम् ॥७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीचरणानु-
ग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचि-
तयतिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गत-
शारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जन-
सुहितस्य श्रीमदद्वैतानन्दस्य कृ-
तौ शारीरकभाष्यव्याख्यायां
प्रथमस्याध्यायस्य
द्वितीयः पादः ।
ओं

श्रीः

प्रथमाध्यायस्य

## तृतीयः पादः ॥

महागणपतिं वन्दे तं शक्त्या परया युतम् ।
सद्रत्नैः पूरितं कुम्भं कराग्रेण बिभर्ति यः ॥

# द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

अमृतस्यैष सेतुरिति । ननु, 'परमतस्सेतून्मानसम्बन्धे'त्यधिकरणे सेतुपदस्य ब्रह्मण्येव गौणतेति व्यवस्थापयिष्यते । ततस्तेन गतार्थमिति चेत्, उच्यते— गौणत्वेऽपि ब्रह्मणि सेतुशब्दो न भवति। अपि तु प्रधानादाविति पुनरिहाक्षिप्यते। एतानि हवा अमृतस्य नामधेयानीत्यन्यत्र इहाप्यानन्दरूपममृतं यद्विभातीत्यादावमृतपदस्य ब्रह्मणि प्रयोगात् षष्ठीनिर्देशेनामृतात् सेतोर्भेदः प्रतीयते । ततः कथं सेतुपदस्य ब्रह्मणि वृत्तिः स्यात् । अपि च सेतुपदं मुख्यया वृत्त्या तीरद्वयसम्बन्धित्वे सति जलगतिनिरोधकत्वेन प्रवृत्तिनिमित्तेन मृद्दार्वादिनिचयं प्रतिपादयति। अध्यात्माधिकारे च तदसम्भवेन यस्य कस्य चित् प्रतिपादनमपेक्षितम् । ततश्च प्रधानप्रतिपादनमेवास्तु । तत्र परिच्छिन्नत्वगुणसम्भवात् । ननु, स्थितिहेतुत्वं प्रापकत्वं वा असाधारणो गुणः । तेन ब्रह्मणि गौणता किं न स्यात् । न स्यात्। न हि तावन्मात्रं सेतोरसाधारणम् । अपि तु जलस्थितिविशेषहेतुत्वं परतीरप्राप्तिविशेषहेतुत्वं च । न च सर्वकारणे ब्रह्मणि तावन्मात्रप्रतिपादनेन किञ्चित् प्रयोजनमस्ति । अतः स्थितिसामान्यहेतुत्वं प्राप्तिसामान्यहेतुत्वं च प्रतिपादनीयम् । न च तदसाधारणमिति परिच्छिन्नत्वमेव तेन लक्षणीयम् । न च सर्वेषां साधारण्ये केन विनिगमकेन परिच्छिन्नत्वं लक्षणीयम् । प्रत्युत तथात्वे आत्मपदं विरुध्यते । 'तमेवैकं जानथात्मानमि'ति च श्रूयते । तथा चात्त्वधिकरणे वाक्यशेषानुसारिण्याः लक्षणाया एव निरूपितत्वात् प्रापकत्वमेव लक्षणीयम् । एवं च सति अमृतस्येति पदेनापि सेतुशब्दार्थस्यान्वयो लभ्यते । कस्य प्रापक इत्युत्थिताकाङ्क्षत्वात् । न तु परिच्छिन्नत्वपक्षे कस्य परिच्छिन्न इत्यपेक्षास्ति । ततश्चामृतस्येति षष्ठ्यन्तान्वयालाभात् आत्मपदानुपपत्तेश्च न परिच्छिन्नत्वगुणयोगेन प्रधानं लक्षणीयम् । अपि तूभयस्वारस्यात् प्रापकत्वगुणयोगेन ब्रह्मैव लक्षणीयमिति वाच्यम् । एवं हि मन्यते—यस्मिन् द्यौः पृथिवीचान्तरिक्षमोतमित्ययमंशोऽनुवादः। तस्य पुरोवादापेक्षा-

यां साङ्ख्यस्मृतिः पुरोवादो भविष्यति । तदिदमुक्तं—**स्मृतिप्रसिद्धमिति** । यदि तु तस्याः स्मृतेर्निर्मूलत्वाच्छ्रुतिरेव पुरोवादत्वेनापेक्षितेत्युच्यते, तदाप्योतशब्दप्रत्यभिज्ञापितं यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यत् भूतं भवच्च भविष्यच्चेत्याचक्षते । कस्मिंस्तदोतं च प्रोतञ्चेति प्रश्ने आकाश एव तदोतं च प्रोतञ्चेत्युत्तरितमव्याकृतं वास्तु । ततश्च उपक्रमस्वारस्यानुसारेणाव्याकृते स्थिते सेतुशब्दः परिच्छिन्नत्वगुणयोगात्तत्रैव भविष्यति । प्रापकत्वापेक्षया परिच्छिन्नत्वगुणोऽन्तरङ्गः । सेतौ सहजत्वात् । प्रापकत्वं तु कादाचित्कत्वात् बहिरङ्गम् । ततश्चोपक्रमोपसंहारस्वारस्यानुसारेण मन्त्रस्याव्याकृतपरत्वे निर्णीते आत्मपदं भावमात्रलक्षकं भविष्यति । इतरवाग्विमोकपूर्वकं ज्ञेयत्ववचनं तु स्तुत्यभिप्रायं भविष्यति । एतदुक्तं भवति—अव्याकृतात्मक एवैकः पदार्थः ब्रह्मणः उपादानत्वादिनिर्वाहको ज्ञातव्यः । तथाविधोऽन्योऽपि पदार्थोऽस्तीति वचनं तु त्यक्तव्यमेवेति । न च ब्रह्मणः उपादानत्वनिर्वाहक इत्यध्याहारो दोषः । अमृतस्यैष इति वाक्यशेषलब्धत्वात् । तस्य ह्ययमर्थः—एषः द्युभ्वाद्याधारः अमृतस्य ब्रह्मणस्सम्बधी तदुपादानत्वादिनिर्वाहक इति यावत् । एवं च सेतुरित्यस्य अमृतस्येत्यत्रान्वयाभावोऽपि न दोषः । पारवानित्यादौ परिच्छिन्नतापरः पारशब्दः । ब्रह्मणस्त्रिविधपरिच्छेदशून्यत्वं अनन्तमपारमित्यादिश्रुतिप्रसिद्धम्। **श्रुतिप्रसिद्धो वा वायुस्स्यादिति** । वायुर्वाव गौतम तत्सूत्रमित्यादिश्रुतिप्रसिद्धः । तत्र च देवतायामात्मश्रुतिरुपपन्नैव । अमृतस्यैष सेतुरिति चापेक्षिकामृतप्रापकत्वाभिप्रायमुपपद्यते । हिरण्यगर्भोपासनायाः ब्रह्मलोकप्रापकत्वात् 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथे'ति तदुपासकाभिप्रायम् । **शारीरो वा स्यादिति** । मनस्सह प्राणैश्च सर्वैरिति मनआद्याधारत्वं जीवस्यैव स्वारस्येन प्रतीयते । तमेवैकं जानथ आत्मानमिति तु अहमिति प्रतीयमानेषु शरीरादिषु मध्य इति व्याख्येयम् । अमृतस्यैष सेतुरिति चामृतस्याविद्यानिवृत्तिरूपस्य मोक्षस्य सेतुर्धारक इति । 'एष सेतुर्विधरण' इत्यादौ धारकत्वगुणेनैव सेतुशब्दप्रसिद्धेः । **आत्मशब्दो हि भवतीति** । न तु उपक्रम एव ओतशब्देन अव्याकृतं प्रत्यभिजातमिति तदनुसारेण आत्मश्रुतिरन्यथा नेयेत्युक्तम् । दुरुक्तं तु तत् । सर्वाधारस्याप्यव्याकृताकाशस्य 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति वाक्येन स्वाधेयैः सर्वैस्सह तस्य ब्रह्मण्योतत्वप्रतिपादनात् । ततश्च स्वतन्त्र आधारो ब्रह्मैव । अन्यत्तु ब्रह्माश्रितं सदाधारः । तथा चान्तर्याम्यधिकरणन्यायेन उपक्रमोऽपि ब्रह्मण्येव स्वरसः । यद्यप्यात्मशब्दो रूढ्या जीवसाधारणोऽपि

भवति, तथापि योगेन ब्रह्मासाधारण एव। तथा च व्यापकत्वरूपयोगेन रूढ्या च परमेश्वरे स्वरसस्य न रूढिमात्राश्रयणेन जीवसाधारण्यं कल्पयितुं युक्तम् । स्वशब्दादित्यस्यार्थान्तरमाह— **क्वचिच्च ब्रह्मण इति** । विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादीत्युपक्रमानुसारेण मन्त्रस्य ब्रह्मपरत्वे निर्णीते सेतुपदं तत्रैव गौण्या वृत्त्या व्याख्येयम् । तथा चामृतस्येतिषष्ठ्यन्तेन प्रतीयमानः सेतुशब्दार्थान्वयोऽपि सङ्गतो भविष्यति । न चामृतपदेन ब्रह्मण एव प्रतिपादनेन सेतुशब्दार्थोऽपि ब्रह्मैव चेत् कथं धार्यधारकभावः । तस्य भेदगर्भत्वादिति वाच्यम् । निवृत्ताविद्यावस्थं ब्रह्म अमृतपदार्थः, द्युभ्वाद्यायतनावस्थं सेतुपदार्थ इति वैवक्षिकभेदमादाय तादात्म्येन धार्यधारकभावसम्भवात । **सेतुशब्दार्थोऽपीत्यादि** । ननु, विधारणत्वमेव तत्र प्रवृत्तिनिमित्तं चेत् पीठादीनामपि सेतुपदप्रतिपाद्यता स्यात् । अपि च योगेन तदर्थग्रहणं वक्तव्यम् । स च रूढौ तत्पूर्वकलक्षणायां वा सम्भवन्त्यामयुक्तः । अपि च योगपक्षेऽपि धारणं न सम्भवति सेतुपदार्थः, अपि तु बन्धनम् । न च धारणबन्धयोरभेदः । जलगतिविच्छेदो हि बन्धनम् । धारणं तु विच्छिन्नगतिकस्य जलस्य स्थितिरिति चेत्, उच्यते—विधारणत्वमात्रमित्यादिनायमर्थो विवक्षितः । परिच्छिन्नत्वं सेतुशब्दार्थकोटौ न निवेशनीयम् । न च जलगतिविच्छेदकत्वमात्रं सेतुशब्दार्थश्चेत् घटोदरनिस्सृतजलबन्धनसाधने मधूच्छिष्टलाक्षादावतिप्रसक्तिः । परिच्छिन्नत्वविशेषणेऽपि तदवारणात् । अतस्तद्वारणार्थं परागर्वाक्तीरसम्बन्धित्वमेव विवक्षणीयम् । न चात्र योगरूढ्योर्विरोधः । येन योगस्य दुर्बलत्वं स्यात् । योगार्थगर्भितस्यैव रूढ्यर्थस्य स्वीकारात् । धारणं स्थितिः । न च सा गतिविच्छेदरूपात बन्धनात् भिद्यते। गतिनिवृत्तिरेव हि स्थितिः । तथा च परिच्छिन्नत्वमपहाय धारणमेव सेतुपदप्रतिपाद्यं प्रकृते विवक्षणीयम् । तस्य शब्दार्थैकदेशत्वादिति तात्पर्यम् । ननु, एष सेतुर्विधरण एषां लोकानामसम्भेदायेत्यादाविव सेतुशब्दार्थकोटौ निविष्टं बन्धनापरपर्यायधारणं प्रकृते वक्तुं न शक्यते। तत्र हि जगन्मर्यादानामतिक्रमनिरोधो बन्धरूपो भवति । 'एषां लोकानामसम्भेदाये'तिवाक्यशेषात । अमृतपदोदितस्य तु मोक्षस्य लब्धात्मकस्य चलनं न प्रसक्तमिति कथं सेतुपदेन बन्धक इत्यर्थः प्रतिपादनीयः। न ह्यमृतस्य चलननिवर्तक इत्यन्वयः सम्भवति । परं तु भूतले घटस्तिष्ठतीत्यादाविव सत्तापरपर्यायस्थितिरूपं धारणं प्रकृते विवक्षणीयम् । तच्च न सेतुपदार्थकोटौ निविष्टम् । अपि तु तन्निविष्टबन्धनफलम् । निरुद्धगतिकं हि जलं प्रभूततया सत्तां लभत' इति चेत्, उच्यते—प्रकृते सत्तापरपर्यायं धारणमेव विवक्षितम् ।

तथा च 'अमृतस्य सेतुरि'त्यस्य मोक्षसत्ताहेतुरित्यर्थः पर्यवस्यति । स च गौण एव । अत एव भाष्ये विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्षितमिति विवक्षापरपर्यायामुख्यवृत्तिविषयत्वं प्रागुक्तम् । सेतुशब्दार्थोऽपीत्यादिवाक्यं तु एष सेतुर्विधरण इत्यादिवाक्यविषयं प्रकृते दृष्टान्तार्थम् । अपर आहेति । नन्वस्मिन् पक्षे साधनत्वगुणयोगात् सेतुशब्दो ज्ञाने वाग्विमोकपूर्वके प्रवर्ततां नाम । सेतोरपि प्रभूतजलसाधनतास्त्येवेति सेतुज्ञानयोः साधनत्वगुणसम्भवात् । तथाप्येतत्पदेनाद्रव्यस्य लिङ्गसङ्ख्यानन्वयिनो ज्ञानस्य जानथेत्याख्यातेन उपात्तस्य परामर्शो न सम्भवति । सर्वनाम्नां द्रव्यपरामर्शकताया एव व्युत्पत्तिसिद्धत्वात् । अपि च तदेतत् सत्यन्तदमृतं तद्वेद्धव्यं सोम्य विद्धी'त्यादौ पूर्वत्रोत्तरत्र च 'स एषोऽन्तश्चरते बहुधा जायमान' इत्यादावेतत्पदस्य परमात्मपरत्वं दृष्टम् । कथमिह ज्ञानपरत्वं विवक्ष्यते, उच्यते—अद्रव्यपरामर्शकता सर्वनाम्नां व्युत्पत्तिविरुद्धेति न । दुष्टो राजा नश्यती'ति यत् स देशस्य गुण एव अपोऽश्नाति तन्नेवाशितं नेवानशितमित्यादौ लोकवेदयोरद्रव्यपरामर्शकताया अपि दर्शनात् । पूर्वोत्तरमन्त्रयोरात्मन एव योग्यतया प्रस्तुतत्वेन ज्ञानस्य चाप्रस्तुतत्वेनात्मपरामर्शकताभ्युपगमेऽपि अस्मिन् मन्त्रे पूर्वं विधेयतया प्राधान्येन प्रस्तुतस्य वाग्विमोकपूर्वकज्ञानस्य परामर्शसम्भवे नाप्रधानस्यात्मनः परामर्शो युक्तः ॥१॥

## मुक्तोपसृप्यव्यपदेशात् ॥२॥

ननु, मुक्तानां ब्रह्मात्मनावस्थानेन प्राप्यान्तराभावात् कथं मुक्तोपसृप्यं ब्रह्म इत्याशङ्क्य सूत्रे मुक्तपदं जीवन्मुक्तपरमित्यभिप्रेत्य व्याचष्टे—देहाद्विदिति । जीवन्मुक्तानामावरणशक्तिमदज्ञानराहित्येऽपि विक्षेपांशानुवृत्त्या मात्रया ब्रह्माप्राप्तिरस्ति। अतस्सम्भवति मुक्तोपसृप्यत्वं ब्रह्मणः । जीवन्मुक्तप्राप्यत्वं ब्रह्मणः प्रतिपादयद्वाक्यमुदाहरति—भिद्यत इति । 'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती'ति पूर्वमन्त्रे आनन्दांशावरणनिवृत्त्युपयोगि यज्ज्ञानमुक्तं, तदेवेह तस्मिन्दृष्ट इत्यनेनानूद्य तस्य संशयादिप्रयोजकहृदयग्रन्थिशब्दिताहंममाध्यासनिवृत्तिरवान्तरफलत्वेन प्रतिपाद्यते । 'तथा विद्वानि'त्यनेन तु तदेव ज्ञानमनूद्य तस्य निरवशेषविक्षेपांशनिवृत्तिपूर्वकं ब्रह्मप्राप्तिः प्रतिपाद्यत इति भावः । **यदा सर्व इति** । अत्र मन्त्रे अथ मर्त्योऽमृतो भवतीत्यन्तेन जीवन्मुक्तिः, अत्र ब्रह्म समश्नुत इति परममुक्तिः प्रतिपाद्यते । मुक्तैर्वाग्वि-

मोक्षयुक्तैः उपास्यं ज्ञेयमित्येवं प्रकारेण सूत्रस्यार्थान्तरं दर्शयति । अपि चेति । तं परमात्मानं विज्ञाय श्रवणमननाभ्यां निश्चित्य प्रज्ञां ध्यानं कुर्वीत । बहून् अनात्मगोचरान् साकल्येनात्मगोचरानपि ध्यानसाधनप्रणवादिव्यतिरिक्तान् नानुध्यायात् न स्मरेत् । तत्स्मरणं हि उच्चारणद्वारा वाचश्श्रमहेतुः ।

## नानुमानमतच्छब्दात् ॥३॥

ननु, 'यस्मिन् द्यौरि'तिमन्त्रे अनुवाद्यतया यत्पदेन प्रतीयमानं द्युभ्वाद्यायतनं प्रधानमेव । तथा हि सति अनुमानसिद्धस्य प्रधानस्यानुवाद इति सिध्यति । ब्रह्मपक्षे तु श्रुतिसिद्धस्य तस्यानुवादो वक्तव्यस्स्यात् । श्रुत्यनुमानयोर्मध्ये चानुमानस्यैव पुरोवादता वक्तव्या । श्रुत्यर्थस्य शक्तिग्रहार्थं प्रत्यक्षानुमानापेक्षत्वेन विलम्बितोपस्थितिकतया श्रुतिमपेक्ष्यानुमानस्यैव श्रुत्यनपेक्षस्य झटित्यर्थबोधकत्वादिति शङ्कानिरासार्थमिदं सूत्रम् । शक्तिग्रहवेलायामनुमानाद्यपेक्षायामपि गृहीतशक्तिकस्य शाब्दबोधवेलायां न तदपेक्षा । अन्यथा परं प्रति बोधनस्थले शाब्दबोधात् प्रागेव प्रवृत्त्यादेरसम्भवेन शाब्दबोधासम्भवात् । अनागतादिगोचरशाब्दबोधस्थले च प्रत्यक्षसाचिव्यमपि नास्तीति शब्दस्य प्रत्यक्षानुमानापेक्षं बोधकत्वमित्यसङ्गतम् । अपित्वाकाङ्क्षादिसाचिव्यादेव । ततश्च न शब्दस्य विलम्बितप्रवृत्तिकतेति तस्यैव पुरोवादता युक्ता, नानुमानस्येत्यभिप्रेत्याह—न ह्यत्रेति । 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतमि'त्यंशो हि अनुमानसिद्धप्रधानानुवादकः परस्याभिमतः । स तु न तदनुवादी । अपि तु सकलश्रुतिसिद्धसर्वप्रपञ्चाधिष्ठानब्रह्मानुवाद्येवेति भावः । पूर्वं तत्प्रतिपादकशब्दाभावादित्येवमतच्छब्दादिति सौत्रपदं व्याख्याय तद्विरुद्धचेतनप्रतिपादकशब्दादित्यर्थपरतया व्याचष्टे—तद्विपरीतस्येति । वायुदेवताजीवयोर्निरासार्थं सूत्रम् ॥३॥

## प्राणभृच्च ॥४॥

न चोपाधिपरिच्छिन्नस्येति । वायुदेवताया अपि नान्यानायत्तं द्युभ्वाद्यायतनत्वं सम्भवतीत्यपि द्रष्टव्यम् । मनः प्राणाद्यायतनत्वं तु ब्रह्मणोऽपि सम्भवतीति भावः । उत्तरार्थमिति । 'भेदव्यपदेशाच्चे'त्यादिषु जीवनिराकरणमाध्यस्यैव योग्यतया सुखेन तदन्वय एव यथावगतो भविष्यति, तदर्थमित्यर्थः ॥४॥

## भेदव्यपदेशात् ॥५॥

ननु, 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' । इति पूर्वमन्त्रे आत्मशब्दो जीवे प्रयुक्तः । 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान' इत्युत्तरमन्त्रे नाड्याश्रयत्वं प्रतीयते । साक्षाच्च नाडीसम्बन्धो हृदयस्य । ता वा एता हृदयस्य नाड्य इति श्रुतेः । तद्द्वारा तत्प्रतिष्ठितस्य जीवस्यापि सम्भवति । अन्तस्सञ्चारोऽपि जीवलिङ्गम् । 'ताभिः प्रत्यवसृप्य पुरीतति शेते' 'स्वे शरीरे यथाकामं परिवर्तत' इति च श्रुतेः । बहुधा जायमानत्वमपि जीवलिङ्गमेव । तथा चास्मिन्मन्त्रे यत्रेत्यादिपदानां द्युभ्वाद्यायतनविषयतया तत्र जीवलिङ्गानि द्युभ्वाद्यायतनविषयाणि तस्य जीवतां गमयन्तीत्यत आह—

## प्रकरणात् ॥६॥

पूर्वमन्त्रे यद्यपि जीव आत्मपदेन निर्दिष्टः, तथापि नासौ द्युभ्वाद्यायतनसमानाधिकरणात्मपदप्रतिपाद्यः । यस्मिन्नित्यादिसर्वनाम्नः द्युभ्वाद्यायतनत्वादिब्रह्मलिङ्गसचिवस्य प्रधानप्रकरणिपरमात्मपरामर्शकत्वसम्भवे अन्यार्थप्रस्तुताप्रधानजीवपरामर्शकताया उपपत्तिर्राहितत्वात् । 'ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तादि'त्यादावुत्तरत्रात्मशब्दः परमात्मन्यपि बहुधा प्रयुक्तः । एवं सत्यस्य मन्त्रस्याप्राकरणिकार्थत्वमपि परिहृतं भवति । अरा इवेति मन्त्रे जीवलिङ्गानि तु परमात्मन्यपि प्रत्यगभेदाभिप्रायाणि भविष्यन्ति ॥६॥

ननु, यथा द्वा सुपर्णा सयुजे'तिमन्त्रे अप्राकरणिको जीवः प्रतिपाद्यते, तथात्रापि कुतो न प्रतिपाद्यत इत्याशङ्क्याह—

## स्थित्यदनाभ्यां च ॥७॥

न हि तत्र जीवः प्राधान्येन प्रतिपाद्यते । अपि तु विशुद्धजीवस्य परमात्माभेदबोधनाय संसारिविलक्षणं परमात्मानं प्रतिपादयितुं प्रत्यक्षसिद्धो जीवोऽनूद्यते । प्रकृते तु प्राकरणिकपरमात्मपरत्वे सम्भवति किमर्थन्तथाकल्पनमाश्रयणीयमित्यभिप्रेत्याह—**द्युभ्वाद्यायतनमिति**। **यदापि पैङ्ग्युपनिषत्कृतेनेति** । अस्मिन् पक्षे अस्य मन्त्रस्याप्राकरणिकार्थत्वशङ्कैव नास्तीति भावः । **प्रपञ्चार्थमिति** । भूतयोनिप्रकरणमध्ये न पठितमिति कृत्वाचिन्तया एतन्मन्त्रगतैरेव श्रुतिलिङ्गैः ब्रह्मपरत्वं व्यवस्थापयितुम् । यद्येवं प्रकरणादिति प्रकरणोपन्या-

सः कथमुपपद्यताम् । कृत्वाचिन्तोद्घाटनाभिप्रायः स भविष्यति । नन्वेवं ततः प्राचीनानि सूत्राणि कृत्वाचिन्तया प्रवृत्तानि एतन्मन्त्रगतैः लिङ्गैर्द्युभ्वायतनस्य ब्रह्मत्वसाधकानीति चेत्, तेषु सूत्रेषु तन्मन्त्रमात्रगतान्येव श्रुतिलिङ्गानि दर्शनीयानि । भाष्ये तु प्रथमसूत्रे आत्मश्रुतिं 'सदायतना' इत्यादिच्छान्दोग्यवाक्यसाचिव्येन द्युभ्वाद्यायतनत्वं ब्रह्मण एवेति तल्लिङ्गञ्चैतन्मन्त्रगामितयोपन्यस्य पुनः 'पुरुष एवेदं' 'ब्रह्मैवेद'मिति मन्त्रद्वयं प्राकरणिकमप्युपन्यस्तम् । द्वितीयसूत्रे प्राकरणिकं 'भिद्यते हृदयग्रन्थिरित्यादिमन्त्रं जीवन्मुक्तप्राप्यत्वलिङ्गमुपन्यस्यैतन्मन्त्रगतमपि इतरवाग्विमोकपूर्वकं ज्ञेयत्वलिङ्गमुपन्यस्तम् । तृतीयसूत्रेऽपि द्युभ्वाद्यायतनत्वममृतस्यैष सेतुरित्यादिकं यत् प्रधानादिसाधकतयोपन्यस्तं, तत् तस्य साधकं न भवतीति प्रतिपाद्य अतच्छब्दादित्येतत्तद्विरुद्धप्रतिपादकशब्दादित्येतत्परमभिप्रेत्य यस्सर्वज्ञ इति प्राकरणिको मन्त्र उपन्यस्तः । चतुर्थसूत्रेऽपि सर्वज्ञत्वादिव्यपदेशं प्राणभृन्निराकरणपरतयोपन्यस्य तदनन्तरमेतन्मन्त्रगतं द्युभ्वाद्यायतनत्वमपि तथोपन्यस्तम् । इदं कथमुपपद्यत इति चेत्, उच्यते । एतन्मन्त्रगततयोपलब्धानि यानि भाष्ये उपन्यस्तानि, तान्येव प्रकरणादित्यतः प्राचीनेषु सूत्रेषु उदाहरणानि । प्राकरणिकानि तु प्रकरणोद्घाटनानन्तरमुपन्यासार्हाण्यपि वस्तुगत्या ब्रह्मत्वसाधकानि भवन्ति द्युभ्वाद्यायतनस्येत्यभिप्रायेणोपन्यस्तानीति द्रष्टव्यम् । तथा च प्रथमं स्वशब्दादित्यनेनात्मशब्दात् पृथिव्याद्योतत्वप्रतिपादकशब्दादित्येव मुक्तोपसृप्येत्यनेन इतरवाग्विमोकपूर्वकं ज्ञेयत्वादित्येवातच्छब्दादित्यनेन तत्प्रतिपादकशब्दाभावादित्येव च विवक्षितमिति द्रष्टव्यम् । अत एव च 'स्थित्यदनाभ्यां चे'ति सूत्रं प्राकरणिकमन्त्रविषय प्रकरणादिति कृत्वाचिन्तोद्घाटनानन्तरं कृतम् । ननु, यथा ब्रह्मप्रकरणे 'तदेतत्सत्यं मन्त्रेषु कर्माणी त्यादिना अपरविद्यानिरूपणं, तद्वत् प्रधाननिरूपणमिति शङ्कानिरासार्थमधिकरणमस्तु । किमिति कृत्वाचिन्तारूपमित्युच्यत इति चेत्, न । तादृशप्रधानसाधकप्रबललिङ्गाभावात् । पूर्वपक्ष्युपन्यस्तममृतस्यैष सेतुरित्यादि ब्रह्मण्येव श्वेताश्वतरादौ प्रसिद्धम् । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ इति ब्रह्मपरतया निर्णीते अन्यपरत्वशङ्कानास्पदे अमृतसेतुत्वश्रवणात् । ततश्च तदेतत्सत्यमित्यादिसन्दर्भस्य स्पष्टतया कर्मप्रतिपादकस्यापि 'प्लवा ह्येत' इत्यादिनिन्दावाक्यैकवाक्यतापन्नस्यापरविद्यानिन्दाद्वारा परविद्यास्तुतिपर्यवसितस्य यथाकथञ्चित् प्रकरणानुगतिस्वीकारेऽपि नास्य तादृशी

रीतिरनुसरणीया । साक्षादेव ब्रह्मप्रतिपादकत्वसम्भवात् । तस्मात् पूर्वपक्षः प्रकरणादिकमनुद्भाव्यैव प्रवर्तनीय इति युक्तम् । कृत्वाचिन्तायाः प्रयोजनं श्वेताश्वतरसाधारण्येन 'अमृतस्यैष सेतुरि'त्यादिव्यपदेशस्य ब्रह्मप्रतिपादकताव्युत्पादनं, प्रकृतमन्त्रे इतरवाग्विमोकपूर्वकज्ञानमपि 'अमृतस्यैष सेतु'रित्यनेन प्रतिपादयितुं शक्यमिति व्युत्पादनम्, एतन्मन्त्रपर्यालोचनया श्वेताश्वतरगतं 'निष्कलं निष्क्रिय' मित्यादिमन्त्रसनाथया निर्विशेषात्मज्ञानमेव मुमुक्षुणा सम्पादनीयमिति प्रयोजनं च । इदं च प्रयोजनं तत्रत्वायतनानायतनवद्भावश्रवणादित्यादिवाक्येन प्रथमसूत्रगतेन भाष्य एव दर्शितम् । अत्र इतरवाग्विमोकपूर्वकज्ञेयत्वादेर्ब्रह्मलिङ्गस्यामृतसेतुत्वरूपाब्रह्मलिङ्गाभिभूतत्वादस्पष्टतेति द्रष्टव्यम् ॥ ७ ॥

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

'भूमा त्वेव विजिज्ञासितव्य' इति भूमानं भगवो विजिज्ञास इतीति । अधीहि भगव इति मन्त्रेण ब्रह्मविद्यार्थं सनत्कुमारं प्रत्युपसन्ने नारदे त्वया यदवगतं तद्वक्तव्यमिति सनत्कुमारेण पृष्टे आत्मविद्यां विहाय सर्वा अपि विद्या अधिगता एवेत्युक्त्वा आत्मविद्यारहितत्वाच्छोचामि । अतश्शोकतरणहेतुभूतामात्मविद्यामुपदिशेति 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति नारदेनोक्तः सनत्कुमारः 'तं होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैव तन्नामोपास्व स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं, तत्रास्य यथा कामचारो भवतीति । अस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्वि'ति 'वाग्वाव नाम्नो भूयसी वाचमुपास्वेति स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य कामचारो भवतीति वाग्विषयं वाक्यं नामोपासनानिरूपणानन्तरं नामापेक्ष्य नारदकृतभूयस्त्वविषयप्रश्नपूर्वकमेव नामातिरिक्तार्थप्रतिपादकं प्रवृत्तम् । एवं पूर्वपूर्वमपेक्ष्य नारदकृतभूयस्त्वगोचरप्रश्नपूर्वकमेवोत्तरत्र मनस्सङ्कल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराशावाक्यानि प्रवृत्तानि । पुनश्च नारदेन अस्तिभगव आशाया भूय' इति पृष्टे 'प्राणो वा आशायाः भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं

वा भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पित्रादीनां त्वं हन्तासीति । अथ यद्यपि एनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेन् नैवैनं पित्रादीनां त्वं हन्तासीति ब्रूयुः प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवंपश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तञ्चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयात् नापह्नुवीतेति प्राणविषयवाक्यसमभिव्याहृतं प्राणमपेक्ष्य भूयस्तु प्रश्नं विनैव 'एष तु वा अतिवदति यः सत्येनातिवदती'त्याम्नातम् । अनन्तरं च सत्यवदनाभिलाषं नारदस्योपलभ्य सत्यविज्ञानमननश्रद्धानिष्ठाकृतिसुखोद्देशरूपां सत्यादिवदने साधनपरम्परामुपन्यस्योद्दिश्यमानं सुखं किमित्यपेक्षायां 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इत्यादिकं समाम्नायते । 'बहोर्लोपो भू च बहो'रिति पाणिनिसूत्रस्य बहुशब्दात् परस्य भावार्थविवक्षायां 'पृथ्वादिभ्य इमनिज्वे'तिसूत्रेण प्राप्तस्येमनिचो लोपः, बहुशब्दस्य भू इत्यादेशश्च भवतीत्यर्थः । एवं च यद्यपि भूमशब्दो भावार्थकः, तथापि 'यो वै भूमा तत्सुखं यो वै भूमा तदमृतमित्यादिधर्मिसामानाधिकरण्यात् 'धातुः प्रसादान्महिमानमीशं 'स एषोऽणिमेत्यादाविव धर्मिपरता । बहुत्वं च प्रकृते बहुषु बहुवचनमित्यादाविव न सङ्ख्यारूपम्, अपि तु 'बह्वन्नं पचत' इत्यत्रेवाधिक्यरूपम् । 'अथ यदल्पं तन्मर्त्य'मि'ति अल्पस्य तत्प्रतिद्वन्द्विताप्रतिपादनात् किमात्मकं पुनस्तद्बहुत्वमित्यत्रापि धर्मिपर एव भावप्रत्ययो द्रष्टव्यः । तथा च भूमपदार्थस्य धर्मिविशेषापेक्षायामुपक्रमगत आत्मा धर्मी भवेत् । अथवा सन्निहितः प्राण इति संशयः । अत्र भाष्ये प्राणकोटौ सन्निधानमुक्तम् आत्मकोटौ प्रकरणमुक्तं नियामकम् । इदन्तु पूर्वपक्षिणो न सम्मतम् । तथासति आत्मप्रकरणेन प्राणसन्निधिबाधात् पूर्वपक्षानुन्मेष एव स्यात् । परं तु सिद्धान्ताभिप्रायेण वस्तुगतिमनुरुध्योक्तम् । पूर्वपक्षी तु प्राणस्यैव प्रकरणं, ब्रह्मण एव सन्निधानमिति मन्यते । ननु, 'अस्ति भगव आशाया भूयानि'ति प्रश्नमारभ्य प्राणप्रकरणं वक्तव्यम् । तच्च 'तञ्चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीते'त्यन्तमेव । तदनन्तराम्नातेन 'एष तु वा अतिवदती'तिवाक्येन प्राणप्रकरणं विच्छिद्यानन्तराम्नातो भूमा कथं प्राणस्यादित्यभिनेत्य शङ्कते—कस्मादिति । भूमा सम्प्रसादादध्युपदेशादिति । अयं भावः पूर्वसन्दर्भे वागादिप्रकरणविच्छेदः 'अस्ति भगवो नाम्नो भूय' इत्यादिना तदधिकप्रश्नोत्तरसन्दर्भकृतो दृष्टः । इहापि 'एष तु वा अतिवदती'त्यतः प्रागेव प्राणप्रकरणविच्छेदोऽभिमतः स्यात् । 'अस्ति भगवः प्राणाद् भूय' इत्यादिना प्रश्नादिकं दृश्येत । न त्वेतदस्ति । अतो न प्राणप्रकरणविच्छेदः । एष तु वा अतिवदतीति वाक्यं

तु न प्राणप्रकरणविच्छित्तिसम्पादकम् । अपि तु पूर्वोक्तस्यातिवदनरूपस्य प्राणव्रतस्यानुकर्षेण प्राणोपासनाङ्गतया सत्यवदनविधायकं सदनुवृत्तिद्योतकमेव । तदाह **प्राणदर्शिनश्चातिवादित्वमित्यादिना** । अतिवाद्यसीति आशान्तेभ्यः सर्वेभ्यः प्राणोऽतिशयित इति आशादिकमतिक्रम्य प्राणवादी भवसीत्यर्थः । **सत्यादिपरम्परयेति** । सत्यवदनादिपरम्परयेत्यर्थः । **उच्यते सुषुप्त्यवस्थायामिति** । अस्मिन् पक्षे 'यत्र नान्यत्पश्यती'त्यस्य सुषुप्तौ यस्मिन् जाग्रति सति नान्यगोचरदर्शनादिकं भवति, स भूमेत्यर्थः । **प्राणाग्नय एवेति** । प्राणपदं प्राणापानादिपरम् । 'गार्हपत्यो हवा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राण' इति तत्रैव प्राणानामग्नित्वं रूपितम् । **यत्रैष देव इति** । एष जीवः यदा स्वप्नान्न पश्यति तदास्मिन्नेव शरीरे सुखं भवति, न तु शरीरात् बहिरित्यर्थः । तथा च सुषुप्तसुखसमानाधिकरणत्वात् प्राणस्य सुखत्वोपचारः । **प्राणो वा अमृतमिति** । यद्यपि प्रतर्दनाधिकरणे अत्र प्राणश्रुतिः ब्रह्मेति निर्णीतं, तथापि यथाश्रुतार्थमादाय पूर्वपक्षोपपादनार्थं तथोक्तम् । **प्राण एवेहात्मा विवक्षित इति** । ननु, उपक्रमगतस्यात्मशब्दस्योपसंहारगतप्राणपदानुसारेण तत्परत्वं कथं वक्तुं शक्यते । न चोपक्रमस्यात्मपरता न सम्भवति । तथासति तदुत्तरवाक्ये नामादिनिरूपणासङ्गत्यापत्तेः । अतः उपक्रमो न यथाश्रुत इति वाच्यम् । यन्मते उपक्रमस्य प्राणपरत्वं, तस्याप्युत्तरवाक्ये नामादिनिरूपणमसङ्गतमेव स्यादिति तुल्यम् । यदि तु यन्मते उपक्रमस्य प्राणपरत्वं, तस्य नोपक्रमः स्वातन्त्र्येण प्राज्ञविषय इत्युच्यते । अपि तु नामादिप्रतीकेषु उपास्यविषय इति । सिद्धान्ती तु स्वातन्त्र्येण ब्रह्मविषयमुपक्रममिच्छति । ततस्तन्मत उत्तरवाक्यानुगुण्यमित्युच्यते, तर्ह्युत्तरवाक्यानुगुण्यम् । उपक्रमस्य पारतन्त्र्याभिप्रायतामात्रेणोपपद्यते । तथा च यथाश्रुतार्थ एवात्मशब्दोऽस्तु । किमर्थं प्राणलक्षणोपेयते । नामाद्युपास्यतया आत्मसमर्पकतामात्रेण तदुपपत्तेः । एवंसति यो नाम ब्रह्मेत्युपास्त इति ब्रह्मपदमपि यथाश्रुतं भविष्यति । उपक्रमस्य प्राणलक्षकत्वेन पारतन्त्र्याभ्युपगमे तु 'यो नाम ब्रह्मेत्युपास्त' इत्यादौ ब्रह्मपदमपि प्राणपरमेव वक्तव्यं स्यादिति चेत्, अस्त्वेवत् । तावतापि पूर्वपक्ष्यभिलषितं सिध्यत्येव । एवं सत्युपक्रमस्य नामादिप्रतीकगतोपास्यसमर्पकतया वाक्यशेषत्वेन न ब्रह्मप्रकरणोत्थापकता । तथा च प्राणवाक्यपर्यन्तं नामादीनां प्रकरणानि । ब्रह्मणस्तु नामादिशेषतयोपस्थितेः सन्निधिमात्रम् । प्राणवाक्यमारभ्य तु आसमाप्ति प्राणप्रकरणमेव । तदन्तर्गत एव भूमेति स प्राण एवेति । परं तु अस्मिन् पक्ष उपक्रमोपसंहारयोरन्यान्यविषयतया वाक्यभेदस्स्यादित्युपसंहारस्य प्रश्नान्तराभावेन प्राणश्रुत्य-

भ्यासेन प्राणव्रतातिवादित्वानुकर्षणेन च प्राणपरत्वे सिद्धे तदनुसारेणोपक्रमगतमेवात्मपदमेकं प्राणलक्षकं भविष्यति । भूयोऽनुग्रहन्यायात् । न चैवमुपक्रमगतं शोकतरणं कथं प्राणोपासनायामन्वेतु । कात्रानुपपत्तिः । वचनबलेन प्राणोपासनाया अपि मोक्षहेतुत्वोपपत्तेः । एवंसति निर्विशेषात्मज्ञानमेव मोक्षसाधकमिति पूर्वाधिकरण उक्तं, तदाक्षिप्तं भवतीति पूर्वाधिकरणेन सङ्गतिः । मध्ये नामाद्युपासनं ब्रह्मवादिनापि प्रसङ्गसङ्गत्या वक्तव्यम् । तन्ममापि भविष्यति । ब्रह्मवादिनो ब्रह्मनिरूपणस्य प्रवृत्ततया प्रसङ्गेन नामादिषु ब्रह्मोपासनाविधिरुपपद्यत इति चेत्, प्राणवादिनोऽपि प्राणस्य 'यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितमित्यादिना प्राणे ब्रह्मधर्माणां कीर्तनात् ब्रह्मधर्मानारोप्येह प्राणोपासनं विवक्षितम् । तथा च नामादिषु ब्रह्मदृष्टिरपि ब्रह्मधर्मविशिष्टप्राणदृष्टिरेवेति प्राणप्रकरणे नामादिषु प्राणदृष्टिरेव विधीयत इति 'नाम ब्रह्मेत्युपास्त' इत्यादौ ब्रह्मपदमपि प्राणलक्षकमेवेति न काचिदनुपपत्तिः । बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सहेति 'स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वे'ति स्वप्नजागरितवाक्यसन्निधौ 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वेति पाठादित्यर्थः । ननु,सम्प्रसादपदं योगेन सुषुप्तिपरम् । तत्र जाग्रतः प्राणस्य लक्षकमिति किमर्थमुपेयते । 'अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्ये'ति सम्प्रसादपदेन व्यवहृतो जीव एव कस्मात्सौत्रसम्प्रसादपदेन लक्षणया न गृह्यते । तस्यापि सुषुप्तौ प्रसादशालित्वेन सुषुप्तिसम्बन्धोपपत्तेः । अथवा सुषुप्तौ मुक्तौ वा सम्यक् प्रसीदतीति योगेनापि तत्र सम्प्रसादपदं प्रवर्तत इति जीव एव ग्रहीतुमुचितः । एवं च पूर्वपक्षोऽपि जीवो भूमेत्येवास्तु । 'प्राणो वा आशाया भूया'नित्यादौ प्राणपदमपि जीवलक्षकमेवास्त्विति चेत्, अस्तु । नैतावता सिद्धान्तिनः काचित् क्षतिः । परं तु श्रुतौ प्राणपदस्य जीवलक्षणाग्राहकप्रमाणाभावात् सिद्धान्ते पूर्वपक्षे च यथाश्रुतमेव प्राणपदं स्वीकृतम् । न च प्राणस्य यानदानकर्तृत्वकीर्तनं पितृत्वादिकीर्तनं च चेतनायां लिङ्गमिति वाच्यम् । अत्र पितृत्वादिकीर्तनं न चेतनायां लिङ्गम् । पित्रादिपदानां शरीरपरत्वस्य दाह्यत्वलिङ्गावगतत्वात् । परं तु प्राणस्य पित्रादिसामानाधिकरण्यं कथमित्यपेक्षायां पित्रादिशरीरेषु प्राणस्थितिदशायां पित्रादिविषयप्रतिकूलवचनमात्रेण पितृहन्तृत्वादिव्यपदेशो भवति । प्राणोत्क्रान्तौ तु पित्रादिशरीराणां शूलेन समीकृत्य व्यत्यस्य दाहेऽपि न पितृहन्तृत्वादिव्यपदेशो भवतीति 'स यदि पितरं वे' त्यादिवाक्यशेषेण प्रतिपादनात् प्राणोत्क्रान्तितदभावप्रयुक्तस्तेषां शरीराणां पित्रा-

दिपदव्यपदेश इति प्राण एव पित्रादिव्यपदेश्यो भवतीति गौणं प्रतिपादितम् । अतोऽपि न प्राणस्य चेतनता सिध्यति । प्रत्युत वाक्यशेषपर्यालोचनया प्राणपदस्य मुख्यप्राणपरतावगम्यते । वाक्यशेषे हि शरीरदाहप्रयोजिका प्राणोत्क्रान्तिर्लोकप्रसिद्धा प्रतिपाद्यते । लोके च पामरविवेकिपुरुषसाधारण्येन श्वासनिर्गम एव दाहप्रयोजकतया प्रसिद्धः । ततश्च यानदानकर्तृत्वमपि प्राणयुक्तत्वात् प्राण उपचर्यते । न तु तावन्मात्रेण आशान्तजीवोपकरणप्रायपठितोपक्रमगताभ्यस्तवाक्यशेषप्रसिद्धोत्क्रान्तिलिङ्गोपबृंहिता श्रुतिरन्यथा नेतुमुचिता । तथा च श्रुत्यनुसारेण सौत्रसम्प्रसादशब्दोऽपि प्राणपरतयैव भाष्ये व्याख्यातः । प्राणादध्युपदेशादिति वक्तव्येऽपि सम्प्रसादशब्दप्रयोगः सुप्तौ प्राणप्राधान्यद्योतनद्वारा 'यत्र नान्यत्पश्यती'त्यादिवाक्यानां प्राणपूर्वपक्षे सङ्गमनार्थः । प्राणादूर्ध्वं प्राणादधिकत्वेन । एतच्चोत्तरत्र स्पष्टं भविष्यति । ननु,प्राणादधिकत्वोपदेशे प्राणान्यत्वं सिध्यति भूम्नः, न तु ब्रह्मत्वमिति चेन्न । सौत्रोपदेशपदस्य सत्यशब्देनोपदेश इत्यर्थकत्वात् । पूर्वपक्ष्युक्तं प्राणप्रकरणानुवृत्तिप्रयोजकमनुवदति—**नन्विति । श्रुत्यर्थपरित्यागप्रसङ्गादिति** । अयं भावः—'एष तु वा अतिवदति यस्सत्येनातिवदती'त्यत्र न प्राणातिवादिनोऽनुकर्षणम् । तुशब्दसत्यशब्दविरोधात् । तुशब्दो हि प्रकृतादतिवादिनः सत्यकरणकातिवादिनोऽतिशयद्योतनार्थः । प्राणकरणकातिवादी नातिवादी । अपि तु सत्यकरणकातिवाद्येवातिवादी । तुशब्देन प्रथमतोऽर्थावगमे सति प्राणातिवादिन्यतिवादित्वसामान्यस्य निषेद्धुमशक्यतया प्रसंशान्यायेन प्राणातिवादी न प्रशस्तातिवादी, अपि तु सत्यातिवाद्येव प्रशस्तातिवादीति तुशब्दार्थपर्यवसानात् पूर्वातिवदनमपेक्ष्य अन्यदेवातिवदनमित्यवगम्यते । एकत्वे च पूर्वमपेक्ष्येदं प्रशस्तमित्युक्तेरसम्भवात् । पूर्वं चातिवदनं 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती'तिवाक्ये प्राणविज्ञानकरणकमवगम्यते। इदं तु सत्येनेतितृतीयाश्रुत्या सत्यकरणकमवगम्यते । सत्यस्य च करणत्वमतिवदने प्राणस्येव स्वविज्ञानद्वारकमेव । तथा च वाक्यशेषः—'यदा वै विजानात्यथ सत्यं वदती'ति । तथा च प्राणसम्बन्ध्यतिवदनोपक्षेपेण प्रकरणं विच्छिन्नम् । अग्निहोत्रिणि प्रस्तुते 'एषोऽग्निहोत्री यस्सत्यं वदती'त्यत्र तु प्रकृतस्यैवाग्निहोत्रिणः सत्यवदनरूपो धर्मो विधीयत इति युक्तं प्रकृतादग्निहोत्रित्वात् भेदकस्य द्रव्यदेवतादेरनुपन्यासेन तदनुवादेन सत्यवदनधर्मविधानमात्रत्वावसायादेषोऽग्निहोत्रीतिवाक्यस्य । प्रकृते तु 'एष तु वा' इति वाक्ये तुशब्देन प्रकृतात् भेदमुपक्षिप्य तन्निर्वाहकतया सत्यस्य करणतयोपक्षेपात् भेदः स्थिरीकृतो भवति । ननु, प्राणकरणकातिवदनानुकर्षणपक्षे स्वस्मादेव स्वस्यातिशयासम्भवेऽपि प्राणकरणके सत्यस्य करणत्वा-

सम्भवेऽपि सत्यपदस्य सत्यवचने लक्षणामुपेत्य तृतीयाया सहार्थकतां चोपेत्यसत्यवचनरहितात् प्राणातिवादित्वात् सत्यवचनसहितं प्राणातिवादित्वमतिशयितमिति सत्यवचनसाहित्यराहित्यरूपोपाधिभेदादेकस्मिन्नेव भेदं कल्पयित्वा प्राशस्त्योपपादनमस्त्विति चेन्न । तथाङ्गीकारे नियामकाभावात् । तुशब्दो हि प्रकृताद्विशेषं प्रतिपादयति । प्रकृतश्च प्राणातिवाद्येव । न तु सत्यवचनरहितः । सत्यपदं च ब्रह्मण्येव स्वरसम् । 'तस्य हैतस्य ब्रह्मणो नामधेयं सत्य'मिति 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति च श्रुतेः । तृतीया च करणत्वप्रतिपादिकैवोचिता । ' उपपदविभक्तेः कारकविभक्तिर्बलीयसी ' तिन्यायात् । न च त्वत्पक्षे एष इत्यस्य य इत्यस्य च प्रकरिष्यमाणपरामर्शकता प्राप्नोति । स च दोष इति वाच्यम् । प्रकृतविच्छेदकतुशब्दसत्यशब्दप्राप्तस्य प्रकरिष्यमाणपरामर्शकत्वस्य 'अथैष ज्योतिरित्यादाविवादोषत्वादिति । सङ्ग्रहवाक्यं विवृणोति—**श्रुत्या हीति । सत्यवदनेनातिवादित्वमिति ।** सत्यवदनरूपातिवादित्वमित्यर्थः । अनेन च विशेषणेन 'ननु, यद्यतिवदने सत्यस्य करणत्वं, तदा 'यदा वै विजानात्यथ सत्यं वदती 'त्युत्तरवाक्ये सत्यपदार्थस्य कर्मत्वनिर्देशोऽनुपपन्नः । अत उत्तरत्र सत्यवचनमेव विवक्षितमिति ' तदनुसारेणात्रापि सत्यवचनेनेत्यर्थो भविष्यती'तिशङ्का परास्ता । अतिवदने यथा सत्यस्य करणत्वं स्वज्ञानद्वारा, तथा विषयतया कर्मत्वमप्यस्तीति सत्यकरणकातिवादित्वस्यैव सत्यं वदतीति निर्देशसम्भवान्नोपक्रमस्वारस्यहानमुपपद्यत इति । **सत्यं त्वेव विजिज्ञासितव्यमिति चेति ।** अत्र सत्यपदार्थस्य पृथग्जिज्ञासावतरणेन तस्य प्राधान्यं प्रतीयते । तत्र सत्यपदस्य सत्यवचनलक्षकत्वे तस्य च प्राणोपासनाङ्गत्वे सत्यपदार्थस्य प्राधान्यप्रतीतिर्बाध्येतेति भावः । न च वाच्यं 'विज्ञानं त्वेव विजिज्ञासितव्यं मतिस्त्वेव विजिज्ञासितव्ये'त्यादिना विज्ञानादीनामपि विजिज्ञासितव्यता प्रतीयत इति तेषामपि प्राधान्यप्रसङ्ग इति । विज्ञानादीनां ध्यानाद्यात्मनां स्वरूपसत्ताया एवापेक्षितत्वेन तत्र 'विजिज्ञासितव्यमि'ति पदस्य सम्पादनीयमित्यर्थकत्वात् सम्पादनोपयोगितया ज्ञानस्याप्यपेक्षितत्वेन यथाश्रुतार्थपरत्वेऽपि 'यदा वै विजानात्यथ सत्यं वदति यदा वै मनुते, अथ विजानाती 'त्यादिवाक्यैरन्यशेषताप्रतिपादनात् । न च सत्यस्यापि 'सत्येनातिवदती ' त्यतिवदने करणताप्रतिपादनात् अन्यशेषतेति वाच्यम् । अतिवदने सत्यस्य करणत्वं हि स्वज्ञानद्वारा वा, सर्वातिशायिसत्यमिति व्यवहाररूपे सत्यातिवदने व्यवहर्तव्यतया वेति पक्षद्वयेऽपि न प्राधान्यविरोधः । आद्ये मननादिसम्पाद्यज्ञानविषयत्वं प्राधान्यलिङ्गं पर्यवस्यति । द्वितीये प्राणान्तसकलतत्त्वातिशयितत्वमपि प्राधान्य-

लिङ्गं पर्यवस्यतीति 'एष तु वा अतिवदती'ति सन्दर्भे प्रधानवस्तुप्रतिपादकतयावगतस्य सत्यपदस्य न गुणभूतसत्यवचनपरतास्थेया । नन्वथापि पूर्वसन्दर्भे नारदस्य प्रतिपर्यायं प्रश्नदर्शनादिहापि तदकरणं किमित्यत आह—**तत्र प्राणान्तमनुशासनमिति** । यथा वा 'अरा नाभौ समर्पिता' इत्यादिना प्राणमाहात्म्यं श्रुत्वा प्राण एवोपक्रान्त आत्मेति' नारदस्य भ्रमोऽभूदिति न पृष्टवानिति भावः । ततश्च प्राणप्रकरणविच्छेदात् सत्यपदमेव भूम्नो विशेषाकाङ्क्षां पूरयतीत्याह—**तत्र यत् प्राणादधीति** । ननु, अत्र परमात्मनो महाप्रकरणं प्राणस्यावान्तरप्रकरणं च स्वीक्रियते । तथा चोपक्रमगत आत्मशब्दः यथाश्रुत एव। शोकतरणं च उपक्रमोपसंहारगतमात्मविज्ञानविषयमेव । आत्मतः प्राण इति च नानुपपन्नः । यदि हि उपक्रमगत आत्मशब्दः प्राणपरः स्यात्, तदा खलु प्राणादेव प्राणस्योपसंहारे उत्पत्तिप्रतिपादनप्रसक्त्या साङ्कर्यं भवेत् । न त्वेवम् । उभयत्राप्यात्मपदस्य परमात्मपरत्वाभ्युपगमात् । भाष्ये प्रकरणान्त इतिपदं प्रकरणादावित्यस्याप्युपलक्षणम् । प्राणावान्तरप्रकरणं च स एवाधस्तादिति पर्यायमभिव्याप्य भविष्यति । ननु, सन्दंशाभावे कथमवान्तरप्रकरणम् । उच्यते—'स एवाधस्ता'दितिपर्यायो हि न प्राकरणिकात्मसर्वात्मताप्रतिपादनार्थः । आत्मैवाधस्तादिति पर्यायेण पौनरुक्त्यापत्तेः । अतः 'प्राणो वा आशाया भूया'निति प्रस्तुतप्राणपरामर्शकः 'स एवाधस्ता'दित्यादौ स शब्दो वक्तव्यः । ततश्च सिद्धः संदंश इति तदन्तर्गतो भूमा प्राण एव । ततश्चैष तु वा अतिवदतीति वाक्यस्य प्राणावान्तरप्रकरणगतत्वात् प्राणविषयतैव क्लेशेन प्रतिपादनीयेत्यभिप्रेत्य शङ्कते—**प्रकरणान्ते परमात्मविवक्षा भविष्यतीति । भूम्न एव आप्रकरणसमाप्तेरनुकर्षणादिति** । 'स एवाधस्ता'दित्येतत्पर्यन्तमेव प्राणः। अनन्तरं प्राकरणिक आत्मेत्येवं विभागोऽशक्य एव । 'एष तु वा अतिवदती'त्यारभ्योपरितनस्य कृत्स्नस्य सन्दर्भस्य प्राणाधिकपरमात्मन एवोपक्रमगतस्योपदेश इत्येव स्वारस्येन प्रतीतेः। न च तथासति 'स एवाधस्तादित्यतः पार्थक्येन आत्मैवाधस्तादिति न वक्तव्यम् । पौनरुक्त्यादिति वाच्यम् । स एवाधस्ता'दित्यनेन सर्वात्मकतया निर्दिष्टस्य परमात्मनः जीवाभेदं द्योतयितुं प्रतीचो निष्कृष्टरूपेण सर्वात्मताप्रतिपादनपरत्वात् आत्मैवाधस्तादितिपर्यायस्य । न च तथासति अहमेवाधस्तादिति व्यर्थम् । लोकप्रसिद्धप्रत्यग्रूपेण प्रथमतस्सर्वात्मताप्रदर्शनार्थं तत् । न च लोकप्रसिद्धं यद्रूपमन्तःकरणादिसंभिन्नं, न तस्य सर्वात्मकता । नापि तस्याभेदः परमात्मना विवक्षितः । अपि तु शुद्धस्य । अतस्तस्य सर्वात्मतोपदेशो व्यर्थ एवेति वाच्यम् । विशुद्धरूपेण सर्वात्मतां ग्राहयितुं स्थूलारुन्धतीन्यायेन तथनिर्देशो-

पपत्तेः । प्रतीचो हि परमात्मभेद इह बोधनीयः । प्रत्यग्रूपं चाहमित्येव गृह्यमाणं लोकसिद्धम् । ततश्चाहमर्थमुपादाय प्रथमतस्सर्वात्मत्वे बोधिते बोध्यस्येयं बुद्धिर्भवति—नूनमयं जीवस्य सर्वात्मतां बोधयतीति । ततश्च बोध्यस्येयं शङ्कावतरति—अहमिति गृह्यमाणस्य कथमयं सर्वात्मतोपदेशः परिच्छिन्नत्वादिति । तादृशशङ्कां निवारयितुं तस्य यन्निष्कृष्टं रूपमस्ति, तदभिप्रायेणायं सर्वात्मतोपदेश इति प्रतिपादयत्यात्मैवाधस्तादित्यादिना । अतो न कस्यापि व्यर्थता । युक्तश्चेत्थमेवैतेषां पर्यायाणां विभागः निर्विशेषात्मप्रकरणानुगुणत्वात् उपक्रमोपसंहारयोश्शोकरूपाविद्यातरणस्य निर्विशेषविद्यासाधारणस्य फलस्यावगमेन मध्ये च 'यत्र नान्यत् पश्यती'त्यादिना निर्विशेषस्वरूपस्यैव बोधनेन प्रकरणस्य निर्विशेषप्रत्यगभिन्नवस्तुबोधनपरत्वावसायात्। न च निर्विशेषपरत्वे तेषां 'सर्वेषु लोकेषु कामचारो भवति स एकधा भवती'त्यादि सविशेषफलकीर्तनमसङ्गतमिति वाच्यम्। यावत्सर्वमोक्षं ब्राह्मेण रूपेण लोकदृष्ट्या अवस्थितस्य परमात्मधर्मैः स्तुतिसम्भवात्। अत एव 'तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवंविजानतः आत्मतः प्राण 'इत्यादिना सर्वस्रष्टृताकीर्तनमपि विदुषः उपपन्नं भवति । सविशेषविद्यायां जगद्व्यापारवर्जितस्यैव भोगस्य फलत्वेन तत्कीर्तनासम्बन्धात् । अत एव विद्वद्दृष्ट्या सर्वस्य भोग्यजातस्यात्ममात्रता निरूप्यते । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवती'ति । एवं च यस्य सन्दर्भस्य सविशेषात्मपरतायामपि स्वारस्यं न लभ्यते, तस्य प्राणपरत्वे का प्रत्याशा ॥ ८ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥

**सोऽप्यात्मन एवासङ्गत्वविवक्षयोक्त** इति । 'परे देवे मनस्येकीभवती'ति वाक्येन जीवे इन्द्रियाणां लयं व्युत्पाद्यानन्तरं 'न शृणोती'त्यादिना श्रवणाद्यभावप्रतिपादनात् इन्द्रियादिसम्पर्ककृतमेव द्वैतदर्शनम् । परमार्थतस्तु जीवोऽसङ्ग एवेति वाक्यतात्पर्यावसायात् । ततश्च प्रश्नवाक्यपर्यालोचनया प्राणाधिकरणको दर्शनाद्यभावो न लभ्यत इति भावः । परं तु प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीति प्राणानां जागरणप्रतिपादनात् 'यत्र नान्यत्पश्यती'त्यादि यस्मिन् जाग्रति नान्यत् पश्यतीत्यध्याहारेण प्राणवादिना व्याख्येयम् । तत् क्लिष्टत्वात् परित्यक्तव्यम् । ननु, प्रश्नोपनिषदि 'अथैतस्मिञ्छरीरे सुखं भवती'ति वाक्येन सौषुप्तं सुखं शरीरान्तर्गतमेवेति एतावन्मात्रं प्रतिपादितम् । तदात्मरूपमेवेति कुतो लभ्यत इत्यत आह—**यत आहैषोऽस्येति** । इदं वाक्यं

'सलिल एको द्रष्टाद्वैतो भवती'ति सुषुप्त्यवस्थागतं जीवं प्रस्तुत्याम्नातम्। तथाचैतद्वाक्यपर्यालोचनया सौषुप्तसुखस्य जीवरूपतानिर्धारणा'दथैतस्मिन् शरीरे सुखं भवती'ति वाक्यप्रतिपाद्यमपि सुखं जीवरूपमेवेत्यर्थः। नन्वत्र 'प्राणो वा आशाया भूयानित्यारभ्य तं चेत् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीतेत्यन्तं मुख्यप्राणवाक्यमिति सिद्धान्तपूर्वपक्षयोरभ्युपगम्य एष तु वा अतिवदतीत्यादिकं प्राणवाक्यान्तर्गतमिति पूर्वपक्षं कृत्वा ततो बहिर्भूतमेवेति व्यवस्थापितं भूम्नः परमात्मतासिद्ध्यर्थं, तदसङ्गतम्। 'प्राणो वा आशाया भूयानित्यादे'रपि परमात्मपरत्वेन एष तु वा अतिवदतीत्यादेरपि तदेकवाक्यतया पूर्वपक्षसिद्धान्तयोरसम्भवात्। मुण्डके हि 'प्राणो ह्येष यस्सर्वभूतैर्विभाति विजानन्विद्वान् भवते नातिवादी आत्मक्रीड आत्मरतिक्रियावानेष ब्रह्मविदां वरिष्ठस्सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमि'ति मन्त्रेण परमात्मपरेण सहैकार्थताप्रत्यभिज्ञानात्। स हि मन्त्रः प्रकरणात् परमात्मपर इत्यविवादम्। तत्र यथा प्राणपदोदितस्य सर्वभूतैरित्यादिना सर्वात्मता प्रतीयते। सर्वभूतैरितीत्थम्भावे तृतीया। एवमत्रापि 'यथावा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पित'मित्यादिना प्राणपदोदितस्य सर्वात्मता प्रतीयते। इह च यथा 'स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नतिवादी भवती'ति प्राणविज्ञानेनातिवादित्वं प्रतीयते, तथा तत्रापि विजानन् विद्वान् भवते नातिवादीति प्राणविज्ञानेनातिवादित्वं प्रतीयते। यथा च तत्र सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमित्यादिना प्राणविज्ञानसाधनानि विहितानि, तथात्रापि एष तु वा अतिवदति यस्सत्येनातिवदतीत्यादिना सत्यवचनादीनि विधीयन्त इत्येव स्वीकर्तव्यम्। श्रुत्यन्तरैकार्थ्यात्। अतोऽत्रापि प्राणपदोदितः परमात्मैव। अत एवात्र प्राणवाक्ये उपक्रमगतशोकतरणातिरिक्तं फलं न प्रतिपाद्यते। प्राणपदस्य मुख्यप्राणपरतया नापह्नुवीतेत्यन्तस्य सन्दर्भस्य प्राणोपासनापरत्वे तु नामाद्युपासनेष्विव फलान्तरमपि श्रूयेत। अत एव नारदस्य पृथगत्र न प्रश्नः—'अस्ति भगवः प्राणात् भूय' इति। ननु, प्राणपदस्य परमात्मपरत्वे 'अथ यद्यप्येनानुत्क्रान्तप्राणा'निति तदुत्क्रान्तिः कथं प्रतिपादनीया। न चेश्वरस्योत्क्रान्तिरस्ति। उत्तरत्र चात्मतः प्राण इत्यादिना प्राणस्योत्पत्तिर्निरूप्यते। सापि कथं परमेश्वर उपपद्यताम्। न चोत्पत्तिवाक्ये प्राणपदं मुख्यप्राणपरमेवेति वाच्यम्। तस्मिन् वाक्ये नामादीनां प्राणान्तानां वैपरीत्येन क्रमप्रत्यभिज्ञानात् उभयोः प्राणपदयोरेकार्थतायाः स्थानप्रमाणसिद्धत्वादिति चेन्न। उत्क्रान्तिस्तावदीश्वरेऽपि

जीवेन सह प्राज्ञेनात्मनान्वारूढ उत्सर्जन्यातीति समाम्नाता । परं तु सा जीवनियामकस्येश्वरस्य स्वाधीनेति सैवेह प्रतिपाद्यत इति नानुपपत्तिः । श्रुत्यन्तरार्थप्रत्यभिज्ञया स्ववाक्यगतैश्च लिङ्गैरुपक्रमगतस्य प्राणपदस्य परमात्मपरत्वनिर्णये सति औपसंहारिकप्राणपदसमानार्थता स्थानप्रमाणप्राप्ता परित्यज्यते । लिङ्गमपेक्ष्य स्थानस्य दुर्बलत्वात् । एवं 'प्राणो वा आशाया भूया'नित्यत्र प्राणपदस्य परमात्मपरत्वे स्थिते यत् पूर्वपक्षिणोक्तं प्राणवाक्यैकवाक्यतामुपेत्य भूम्नोऽब्रह्मत्वं, तदसङ्गतम् । यच्च सिद्धान्तिना वाक्यभेदं साधयित्वा प्राणभूम्नोरर्थान्तरत्वमुपगतं, तदप्यसङ्गतमेवेति चेत्, उच्यते–आकाशप्रतर्दनाद्यधिकरणेषु हीदं व्यवस्थापितं–दुर्बलमपि लिङ्गवाक्यादिकं उपक्रमादितात्पर्यलिङ्गोपोद्बलितं प्रबलाया अपि श्रुतेर्बाधकमिति । तथा च यत्र श्रुतिरेव स्वभावतो लिङ्गात् बलीयस्युपक्रमादितात्पर्यलिङ्गोपबृम्हिता तस्या लिङ्गबाधकत्वे का विप्रतिपत्तिः । अस्ति चात्र प्राणश्रुतिरुपक्रमाभ्यासाशान्तजीवोपकरणप्रायपाठौपसंहारिकस्थानादिरूपतात्पर्यलिङ्गोपदृब्धा । कथमेतस्याः सर्वात्मतादिलिङ्गैः बाधस्स्यात् । तथा च 'यथा वा अरा नाभौ समर्पिता' इत्यादिकं प्रबलप्रमाणश्रुत्यनुसारेण शरीरेन्द्रियादिसाधारणपरमेव व्याख्येयम् । तच्छ्रुत्यन्तरे 'मा मोहमापद्यथा अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'ति प्राण एव प्रसिद्धम् । पित्राद्यात्मत्वं तु गौणमिति वाक्यशेषपर्यालोचनया लभ्यत इति प्रागेव प्रतिपादितम् । उत्क्रान्तिश्चेह प्रतिपाद्यमाना दाहादिष्वपि हन्तृत्वाद्युपक्रोशाभावप्रयोजिका लोकप्रसिद्धा जीवसम्बन्धिनीत्यपि वक्तुमशक्या । अत्यन्ताप्रसिद्धेश्वरसम्बन्धिनीति दूरत एव निरस्तं स्ववाक्यगतश्रुतिलिङ्गादिपर्यालोचनया मुख्यप्राणपरत्वे स्थिते । मुण्डकवाक्यार्थप्रत्यभिज्ञा तु नेश्वरपरतां सम्पादयति । स्ववाक्यपर्यालोचनालभ्यश्रुतिलिङ्गादितो वाक्यद्वयपर्यालोचनसापेक्षायाः प्रत्यभिज्ञायाः दुर्बलत्वात् । अत एव पशुकामवाक्ये अभ्युदयेष्टिवाक्ये च सत्यामपि प्रत्यभिज्ञायां पूर्वतन्त्रे छान्दोग्यबृहदारण्यकगतयोरुद्गीथवाक्यगतयोश्च सत्यामपि प्रत्यभिज्ञायां अस्मिञ्छास्त्रे स्ववाक्यगतश्रुतिलिङ्गादिपर्यालोचनयार्थभे स्वीकृतः । इदं तु 'अन्यथात्वं शब्दादि'त्यत्र विशदं भविष्यति । तथा 'प्राणो वा आशाया भूया'निति वाक्यस्य मुख्यप्राणपरत्वमभ्युपेत्य सिद्धान्तप पक्षयोः प्रवृत्तिर्युक्तैव । अत्र यत्र नान्यत्पश्यतीत्यादिवाक्यप्रतिपाद्यानां पर त्मधर्माणां प्राणधर्मातिवादित्वानुकर्षणप्रश्नान्तराभावरूपप्राणलिङ्गाभिभूतत्वादस्पष्टता ॥९॥

॥ इति भूमाधिकरणम् ॥ २ ॥

# अक्षरमम्बरान्तधृतेः ॥१०॥

यथा पटः दीर्घभावेन तन्तुष्वोतः तिर्यग्भावेन च तत्रैव प्रोतः, एवमाकाशः कस्मिन्नोतश्च प्रोतश्चेति गार्ग्या पृष्टस्य याज्ञवल्क्यस्य प्रतिवचनम् ‘एतस्मिन् खल्वक्षर’ इत्यादिभूमपदस्याधिकार्थाभिधायिनो धर्मिविशेषाकाङ्क्षायां प्राकरणिकात्मैव धर्मीति निरूपितम् । अक्षरपदस्य तु वर्णे रूढतया उत्तरसन्दर्भस्वारस्यानुसारेणोपस्थितस्याप्यात्मनोऽन्वयायोग्यतया अक्षरपदार्थानुसारेणोत्तरत्र श्रूयमाणानां लिङ्गानामेव यथाकथञ्चिन्नयनम् । न तु न क्षरतीति यौगिकार्थमादाय वाक्यशेषोपस्थापिते परमात्मनि भूमपदार्थस्य प्राकरणिके परमात्मनीव पर्यवसानमुचितम् । योगमपेक्ष्य रूढेः बलीयस्त्वात् । न च वर्णेऽपि न क्षरतीतियोगेनैव प्रयोगोपपत्तौ किमिति रूढिः कल्प्यत इति वाच्यम् । नित्यवर्णवादे सम्भवतोऽपि योगस्य तदनित्यवादे अनुपपत्तेः । तन्नित्यत्ववादेऽपि वर्णसमुदाये ओङ्कारादिरूपे क्रमविशेषयुक्ते प्रयोगासम्भवाच्चेत्यभिप्रेत्याह—**तत्राक्षरसमाम्नाय** इति । ननु, श्रुतिमपेक्ष्यापि प्रश्नप्रतिवचनरूपप्रबलतात्पर्यलिङ्गोपबृम्हितमाकाशतदाश्रेयसकलवस्तुसाक्षादाधारत्वं प्रबलम् । अतो रूढिं परित्यज्य अक्षरपदं योगेनैव व्याख्येयम् । न चाक्षरपदेऽप्यभ्यासरूपं तात्पर्यलिङ्गमस्ति। अतः कथमक्षरपदे रूढिः परित्यज्यत इति वाच्यम् । प्रश्नपर्यालोचनया हि प्रथमत एवेयं बुद्धिरुत्पन्ना सकलवस्त्वाधार इह प्रतिपिपादयिषितः । अतोऽक्षरपदाभ्यासः चरमोपस्थितः तदनुसारेण व्याख्येय इति शङ्कां मनसि निधायाह—**प्रसिद्धव्यतिक्रमस्येति** । अयं भावः– नात्र प्रश्नः सकलवस्त्वाधारविषयः । ‘कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे’त्याकाशमात्रविषयकत्वात् । तन्मात्राधारत्वं च शब्दतन्मात्रात्मनि वर्णे अक्षरपदोदिते सम्भवत्येवेति किमिति रूढिः परित्यक्तव्या । अपि चेह कस्मिन्नु खलु आकाशः ओतश्च प्रोतश्चेत्यत्र यथा तन्तुषु पटः ओतः प्रोतश्च तदधिकरणकः, तथा आकाशः यत्र ओतः प्रोतश्च तदधिकरणकः स इत्यर्थो न विवक्षितः । तथासति पूर्वसन्दर्भासाङ्गत्यापत्तेः । अथ हैनं गार्गी वाचक्नवी पप्रच्छेति पूर्वस्मिन् गार्गिब्राह्मणे अब्वाय्वन्तरिक्षलोकगन्धर्वलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकेन्द्रलोकप्रजापातिलोकानां मध्ये अन्तरिक्षलोकादयोऽधस्तना यथाक्रममुत्तरास्मिन् स्वस्मादूर्ध्वे ओताश्च प्रोताश्च प्रश्नप्रतिवचनरूपैर्वाक्यैः प्रतिपादिताः । न चाधस्तनस्योर्ध्वं वर्तमान आधार इति वक्तुं शक्यम् । अतस्स्वस्मिन् ओतप्रोतात् पटात् तन्तवो यथा उत्कृष्टाः, त-

थाचष्टनाल्लोकादूर्ध्वलोक उत्कृष्ट इत्येवौतप्रोतोक्तिभङ्ग्या विवक्षितमिति स्वीकर्तव्यम् । तत्प्रायपाठाद्वितीयगार्गीब्राह्मणगतेऽपि 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'तिवाक्येऽपि उत्कृष्टत्वमेवाकाशापेक्षया वर्णस्य विवक्षितम् । तच्च प्रणवस्य सम्भवत्येव । सर्वसारतया श्रुतिषु प्रणवप्रतिपादनात् । अतो नाक्षरपदे रूढिः परित्यक्तव्या । अपि चेहाकाशपदेन ब्रह्मैव विवक्षितमित्यवश्यं वक्तव्यम् । पूर्वस्मिन् गार्गीब्राह्मणे ब्रह्मलोकपर्यन्तमोतप्रोतभावे निरूपिते 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चे'ति पुनर्गार्गीप्रश्ने 'सहोवाच गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरि'ति याज्ञवल्क्येन गार्गी निवारिता । तन्निवारणवाक्यस्यायमभिप्रायः—ब्रह्मलोकाधारगोचरस्त्वदीयः प्रश्नः परमात्मरूपदेवताविषय एव । सा च देवता अस्यां जल्पकथायां न प्रष्टुं शक्या । अपि तु गुरुशिष्यभावेन वादकथायामेव प्रष्टव्येति । तथा च कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति गार्गीप्रश्नः अनतिप्रश्न्यां देवतामिति निवारणवाक्यगतानतिप्रश्न्यदेवतात्वलिङ्गात् परमात्मविषय इति स्थितम् । तदनन्तरमुद्दालकेन सूत्रान्तर्यामिगोचरे प्रश्ने कृते याज्ञवल्क्येन चोत्तरिते सक्रोधं निवारितापि गार्गी सर्वेषां ब्राह्मणानां पराजयो मा भूदित्याशया मत्प्रश्नाभिप्रेतां देवतां निर्विशेषात्मरूपां किमयं ज्ञात्वा मां निवारितवान्, उताज्ञात्वेति सन्दिहाना यदि वा तामपि जानाति, तदा तस्या अपि कयाचित् विवक्षया आधारान्तरं प्रक्ष्यामि, तां विवक्षामज्ञात्वा व्यामुग्धो भविष्यतीत्यभिमानेन च शापभीता ब्राह्मणानुज्ञां प्रार्थितवती । अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमौ द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति नैव जातु युष्माकं इदं ब्रह्मोद्यं कश्चित् जेतेति ब्राह्मणैः कृतानुज्ञा पृच्छ गार्गीति पुनश्च याज्ञवल्क्यमपि प्रार्थितवती याज्ञवल्क्याहं त्वा द्वाभ्यामुपस्थितास्मि तौ मे ब्रूहीति याज्ञवल्क्येन कृतानुज्ञा पृच्छ गार्गीति तदनन्तरं चायं गार्गीप्रश्नः यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यत् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति । अयं च प्रश्नः शापपूर्वकं याज्ञवल्क्येन यः प्राक् निवारितः, स एव तस्यैव गार्ग्या मनसि विपरिवर्तमानतौचित्याच्छापभयनिवृत्त्युपयोगिब्राह्मणयाज्ञवल्क्यप्रार्थनालिङ्गाच्च । स च प्रश्नः अनतिप्रश्नदेवतात्वलिङ्गात् तदनुकर्ष एव तद्वाक्यगतसर्वाधारत्वलिङ्गाच्च परमात्मविषय एवेति तदुत्तरवाक्ये प्रतिपाद्यमान आकाशः परमात्मैव । न ह्यन्यस्य सर्वाधारदेवतात्वं वक्तुं शक्यम् । अव्याकृतस्य सर्वाधारत्वेऽपि देवतात्वस्य जडत्वेनासम्भवात् । तथा च परमात्मरूपाकाशाधारत्वेन निरूप्यमाणस्याक्षरस्य कथं

परमात्मता भवेत, भवन्ती वा स्वमहिमप्रतिष्ठत्ववत् गौणी भवेत् । तथा च परमात्मविवक्षायामपि गौणाधारतावश्यंभावादक्षरपदगतरूढ्यपरित्यागेन प्रणवो हृदयादिवत् परमात्माधारतयोपासनार्थं विवक्षितोऽस्तु । न चाकाशपदमेवाधारान्तरप्रश्नदर्शनात् भूताकाशपरं वा, अव्याकृताकाशपरं वास्तु । ब्रह्मपरत्वे आधारान्तरप्रश्नानुपपत्तेरिति वाच्यम् । पूर्वसन्दर्भपर्यालोचनयाकाशपदस्य ब्रह्मपरत्वे स्थिते तदाधारप्रश्नस्य तत्प्रतीकविवक्षया प्रवृत्त्युपपत्तेः । 'एतस्य वा अक्षरस्य प्रशासने गार्गी'त्यादिना उक्तानां ब्रह्मधर्माणां प्रणवरूपेऽक्षर एव तदभेददृष्ट्यभिप्रायेणाम्नानोपपत्तेरिति । नन्वथापि अक्षरपदस्य सामान्येन वर्णवाचकस्य कथं प्रणवे पर्यवसानमित्यत आह—**ओङ्कार एवेदं सर्वमिति । पृथिव्यादेराकाशान्तस्य विकारजातस्येति** । अयं भावः– 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' त्यत्र आकाशापेक्षया अक्षरमुत्कृष्टमिति पूर्वपक्ष्युक्तरीत्या अर्थो न विवक्षितः । तन्तुषु पटवदक्षरे आकाशस्य मुख्यौतप्रोतत्वसम्भवात् । न क्षरतीति योगेनाक्षरपदस्य ब्रह्मण्यपि वृत्तिसम्भवात् । क्लृप्तश्चायमक्षरशब्दस्य योगो ब्रह्मणि–'अथ परा यया तदक्षरमधिगम्यत' इत्यादौ । ततश्चानेकब्रह्मलिङ्गानुसारेणाक्षरपदे रूढिः परित्यज्यते । न च पूर्वस्मिन् पर्याये ओतप्रोतभावः ज्यायस्त्वापरपर्यायो विवक्षितः । अधस्तनानां गन्धर्वादिलोकानां देवलोकादिष्वोतप्रोततया आहितत्वसम्भवात् । तत्प्रायपाठादत्रापि तथैवेत्युक्तमिति वाच्यम् । पूर्वत्राप्यब्वायुपर्याययोर्मुख्यस्यौतप्रोतभावेनाहितत्वस्य सम्भवात् गौणार्थप्रायपाठस्य सम्भवन्मुख्यार्थस्थले गौणतापादकताया: ईक्षत्यधिकरणे निराकृतत्वाच्च । अधस्तनानामपि चोपरितनेषु गृहबन्धनकाष्ठादिषु शिक्यपाशादिसंयोजनेन दधिभाण्डपुस्तकादीनामाहितत्वं दृष्टम् । स न्यायः गन्धर्वलोकादेरुपर्याहितत्वोपपादनाय कल्पनीय इति तत्रापि मुख्ययैव गत्योतप्रोतभाववर्णनं सम्भवति । अपि चेहाबादीनां वाय्वादिष्वोतप्रोतभाववर्णने न श्रुतेस्तात्पर्यम् । तत्प्रतिपादने प्रयोजनानवाप्तेः वाक्यभेदापत्त्या प्रत्येकमुपासनाकल्पनानुपपत्तेश्च । ततश्च यथा 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्र परत्ववर्णनस्य यत् सर्वान्ते श्रोष्यते, तत्सर्वेभ्यः परमित्यत्र तात्पर्यं, तथा प्रकृतेऽपि यत्सर्वान्ते श्रोष्यते, तस्य सर्वाधारतेत्यत्र तात्पर्यमेकवाक्यतापादनाय कल्प्यते । न चैवमप्यकाशाधारतामात्रं सिध्यति, न तु सर्वाधारत्वमिति वाच्यम् । 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'त्येतावन्मात्रस्य श्रुतत्वेऽपि पूर्वपूर्वस्योत्तरोत्तराहितत्ववर्णनसार्थक्यायान्ते श्रुतस्सर्वाधार इत्येव सिध्यति । ततश्च तात्पर्याविषये ओतप्रोतभावस्य यथाकथञ्चित्प्रतिपादनेऽपि तात्पर्यविषयीभूतेऽपि तन्मुख्यतापरि-

त्यागो न न्याय्यः । तथा चाम्बरान्तधृतेरिति हेतोर्नासिद्धिः । न चानतिप्रश्न्य वै देवतामतिपृच्छसीति पूर्ववाक्यपर्यालोचनया अयमाकाशो ब्रह्मैवेति शङ्कनीय म् । तद्वाक्यपर्यालोचनया ह्येतावदवगम्यते—गार्ग्याः परमात्मरूपदेवता पिपृ च्छिषितेति । एतावदपि चोत्तरसन्दर्भपर्यालोचनयैवावगन्तव्यम् । तस्मिन् वाक्ये देवतामात्रश्रवणात् अनतिप्रश्नत्वलिङ्गस्य देवताविज्ञानमात्रसाधारणत्वात् 'कस्मि न्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति प्रश्नेनापि न देवतापदं परमात्मपरमिति निर्णेतुं युक्तम् । ब्रह्मलोकाधारत्वस्य परमात्मासाधारणत्वाभावात् । तथा चोत्त रसन्दर्भपर्यालोचनया यथा गार्ग्याः पिपृच्छिषितं ब्रह्मैवेति कल्प्यते, तथा तत्स न्दर्भपर्यालोचनया ब्रह्मलोकाधारगोचरः प्रश्नोऽव्याकृतविषय इत्येव कल्पयितु युक्तम् । तदाधारान्तरस्यापि पुनः पृष्टत्वादाकाशाधार एव च ब्रह्मधर्माणां स माम्नानात् । ब्रह्मलोकाधारप्रश्न एव च याज्ञवल्क्यस्य निवारणं तु ब्रह्मलोकाधारे उ त्तरिते तदाधारमपि पुनः प्रक्ष्यति, स च ब्रह्मैव भविष्यतीति दूरदृष्ट्या कृतमित्युत्तर- सन्दर्भपर्यालोचनयावगम्यत एव । ननु, यदन्ते श्रूयते तस्यैव सर्वाधारत्वमित्यत्र वाक्यस्य तात्पर्यं चेत् कथमक्षराधेय एव सर्वाधारत्वं निवेश्यते । न हि तच्चरम निर्देश्यमिति चेत्, न । चरमनिर्देश्यस्य ब्रह्मणोऽसङ्गस्वभावस्य स्वपरनिर्वाह- कोपाधिसंसर्गकल्पनां विना सर्वाधारताया वक्तुमशक्यतया ब्रह्मगतसर्वाधारतो- पपादनार्थत्वात् आकाशगतसर्वाधारत्वस्य । अत एव यदूर्ध्वं याज्ञवल्क्य दिवो यद- वागित्यादिना पुनस्तस्मिन्नेवार्थे पृष्टे 'आकाश एव तदोतं च प्रोतञ्चे'त्येवकारेण आकाशोपाधिकं ब्रह्मणः सर्वाधारत्वं आकाशशिरस्येव निक्षिप्तम् । तथा चा- म्बरान्तसकलाधारत्वानुसारेण अक्षरपदोदितं ब्रह्मैव सिध्यति । तदाह—**न चेय- मम्बरान्तधृतिरिति** । प्रश्नेनेदमक्षरमवतारितं, तथा चोपसंहृतमित्यनेन उपक्रमो- पसंहारैकरूप्यप्रश्नप्रतिवचनरूपतात्पर्यलिङ्गोपष्टब्धत्वादम्बरान्तधृतिरूपलिङ्गम् अ- क्षरपदगतरूढिच्यावनसमर्थमिति ध्वनितम् ॥ २० ॥

## सा च प्रशासनात् ॥११॥

**एतस्य वाक्षरस्य प्राशासन इति** । यथा प्रशासनवाक्यपर्यालोचनया प्रधानं पराकृतं भवति, एवमोतप्रोतपदाभ्यां जायत्वं विवक्षितमित्यपि अर्था- न्निराकृतं भवति । अत्र हि धृतिः प्रतिपाद्यमाना प्रागोतप्रोतशब्दनिर्दिष्टेत्येव वक्तुमुचितम् । पूर्वोक्तद्यावापृथिव्यादीनां प्रत्यभिज्ञानात् यद्भूतं च भवच्चेत्यादिना निर्दिष्टकालस्येहापि निमेषा मुहूर्ता इत्यादिना प्रत्यभिज्ञानाच्च । तथा च प्रशा-

सनवाक्यस्यायमर्थः—सूर्याचन्द्रमसौ द्यावापृथिव्यौ मुहूर्तादिः कालः अन्यच्च यत् परमात्मनोतप्रोतभावेन स्वस्मिन्विधृतं, तत् स्वप्रशासनेनैवेति । अत्र प्रशासन इति निमित्तस्याधिकरणविवक्षया 'राजाज्ञायां देशस्तिष्ठती'तिवत्प्रयोगः ॥११॥

## अन्यभावव्यावृत्तेश्च ॥१२॥

अम्बरान्तविधारणमिति प्रथमा । अक्षरमिति द्वितीया । अत्राकाशपदस्य ब्रह्मपरतां प्रसाध्य पूर्वपक्षिप्रतिपादितेन ब्रह्माश्रयत्वलिङ्गेन प्रशासनादीनां ब्रह्मलिङ्गानामभिभूतत्वादस्पष्टता ॥१२॥

॥ इत्यक्षराधिकरणम् ॥३॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

प्रश्नोपनिषदि सत्यकामप्रश्ने प्रायणान्तोङ्कारध्यानस्य कतमलोकप्राप्तिः फलमिति प्रवृत्ते इदमुत्तरं –'एतद्वै सत्यकामे'त्यादि । परं परात्मरूपम् । अपरं हिरण्यगर्भादिरूपम् । एतेन ओङ्कारेण आयतनेन परापरब्रह्मप्रतीकभूतेन एकतरं तत्क्रतुन्यायेन परमुपासीनः परम्, अपरमुपासीनोऽपरं प्राप्नोति । त्रिमात्रेण तिस्रो मात्राः ऋष्यादियुक्ताः अस्येति त्रिमात्रः । मात्रात्रयानुयायिऋष्यादिज्ञानपूर्वकमिति यावत् । अत्र ओङ्कारमभिध्यायीतेति परं चापरं च ब्रह्म ओङ्कार इति च प्रस्तुतत्वात् त्रिमात्रेणोमित्येतेनैवाक्षरेणेति तृतीया द्वितीयार्थे । पूर्वस्मिन्नधिकरणे अक्षरपदं निर्विशेषपरमात्मपरमित्युक्तम् । तस्येदानीमोङ्कारायतनत्वं व्यवस्थाप्यत इति सङ्गतिः । **स तेजसि सूर्ये सम्पन्न इति** । अर्चिरादिमार्गपर्वभूतां सूर्यदेवतां प्राप्त इत्यर्थः । सामभिः तदभिमानिदेवताभिः । ननु, परब्रह्मोपासनायाः ब्रह्मलोकफलत्वं नानुपपन्नम् । सगुणपरब्रह्मविद्यानां अहंग्रहरूपाणां ब्रह्मलोकफलतायाः 'कार्यं बादरि'रित्यत्र व्यवस्थापयिष्यमाणत्वात् चक्षुष्यश्श्रुतो भवतीत्यन्त्राल्पफलतायाश्च श्रवणात् कथं ब्रह्मलोकफलतामात्रेणापरब्रह्मोपासनमेतत् । प्रत्युतोपक्रमगतपरब्रह्मणः परं पुरुषमभिध्यायीतेति प्रत्यभिज्ञानात् परमात्मैव ध्येय इत्यभिप्रायेण शङ्कते—**नन्वपरब्रह्मपरिग्रहे परं पुरुषमितीति** । इदमेव 'सिद्धान्तकोटिबीजमि'ति सूचयितुं एतद्वै सत्यकामेत्यादिनोपक्रम उदाहृतः । **नैष दोष इति** । अयं भावः—अन्यत्र ब्रह्मोपासनानां कार्यब्रह्मप्राप्तिफलकत्वेऽपि नेह तथा सम्भवति । उपक्रमे 'एतेनैवायतनेनैकतरमन्वेती'ति परापरोपासनयोः परापरप्राप्तेः व्यवस्थया फलत्वोपक्रमात् । तथा च परं पुरुषमभिध्यायीतेति विहितोपासनायाः ब्रह्मलोकप्राप्तिफलताकीर्तनात् अपरब्रह्मोपासनत्वे लिङ्गे निर्णीते

परमपुरुषप्रत्यभिज्ञा परित्यज्यते । न चैवं परब्रह्मोपासनया परब्रह्मप्राप्तिरुपक्रमगता निरूपिता न भवेदिति वाच्यम् । 'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षत' इति वाक्येन तदुपपादनोपपत्तेः । इदं वाक्यं परमपुरुषध्यानेन ब्रह्मलोकं गतस्य तल्लोकाधिपहिरण्यगर्भसाक्षात्कारपरमिति चेत्, न । तल्लोकं गतस्तदधिपमीक्षत इत्यस्यार्थसिद्धत्वेन तदर्थं वचनानपेक्षणात् । अतस्सिद्धान्ते वक्ष्यमाणया रीत्या तद्वाक्यं प्रत्यगभिन्नब्रह्मसाक्षात्कारपरमेव । न च ब्रह्मलोकं गतस्तत्त्वं साक्षात्करोतीति 'कार्यात्यये तदध्यक्षेणे'त्यत्र वक्ष्यते । अतो ब्रह्मलोकं गतस्य विशिष्यामृतत्वसाक्षात्कारप्रतिपादकं वचनमप्यनर्थकमेवेति वाच्यम् । ब्रह्मलोकं गतानां 'एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्त' इति वाक्ये इममितिविशेषणेन यस्मिन्मानवे ब्रह्मलोकं गताः, तस्मिन्मानवे नावर्तन्त इत्येव नियमः । मानवान्तरे त्वनियमः । परं तु येषामुपासनानां क्रममुक्तिफलकतायां किञ्चित्प्रमाणमस्ति, तेषामेव ब्राह्मलौकिकतत्त्वसाक्षात्कारं विना तदनुपपत्तेः ब्रह्मलोके तत्त्वसाक्षात्कारः फलत्वेन कल्प्यते । ततश्च ब्रह्मलोकं गतस्य प्रत्यगभिन्नब्रह्मसाक्षात्कारपरं वचः सफलमेव । तथा चानेन वाक्येन परमात्मसाक्षात्काररूपा परप्राप्तिरुक्तैव । नन्वेतावतापि ओङ्कारालम्बनपरमात्मध्यानात् परप्राप्तिर्न लभ्यत इति चेत्, न । ब्रह्मलोकं गतस्तत्र ओङ्कारालम्बननिर्विशेषात्मोपासनेन तं साक्षात्करोतीति 'स एतस्माज्जीवघना'दित्यनेन विवक्षितत्वात् । ननु, कथमयमर्थः एकस्य वाक्यस्य भवेत्, उपसंहारपर्यालोचनयेति । तत्र 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत् कवयो वेदयन्ते तमोङ्कारेणायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चे'तिमन्त्रेण सामभिर्यत् कवयो वेदयन्ते प्राप्नुवन्ति ब्रह्मलोकाख्यं तमोङ्कारेणायतनेनान्वेति विद्वानिति त्रिमात्रप्रणवध्यानेन पूर्वोक्तं ब्रह्मलोकाख्यं फलं संगृह्य यत्तच्छान्तमित्यादिनोङ्कारेणायतनेनान्वेति विद्वान् शान्त्यादिगुणकं परमात्मानं प्राप्नोतीति स एतस्मादिति वाक्यार्थः संगृहीतः । नन्वस्मिन् पक्षे त्रिमात्रं प्रणवमपरब्रह्मदृष्ट्या ध्यायन् ब्रह्मलोकं गतः तमेव परमात्मदृष्ट्या ध्यायन् परमाप्नोतीत्यर्थवर्णनं पर्यवस्यति । तथा चैकस्मिन्नेव पुरुषे क्रमेणेह ब्रह्मलोके च परापरध्यानाभ्यां परापरप्राप्ती इति सिध्यति । तच्चोपक्रमाननुगुणम् । उपक्रमे हि 'स यो ह वै तत् भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेती'ति मनुष्यलोक एव यद्यपरब्रह्मदृष्ट्या प्रणवमुपास्ते, तदापरं-

यदि तत्रैव परदृष्ट्या उपास्ते, तदा परमिति मनुष्यलोक एव पुरुषभेदेनोपासनाव्यवस्थया परापरप्राप्त्योर्व्यवस्थाया अवगतत्वादिति शंक्यते, तदा 'स एतस्मादि' ति वाक्यं 'स सामभिरुन्नीयते ब्रह्मलोकमि' ति पूर्ववाक्यात् भिन्नमस्तु । तत्र स इति शब्दश्च 'तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती' ति वाक्यप्रतिपाद्ययोः परापरविदुषोर्मध्ये परविदुषो व्यवहितस्यापि परामर्शकः । आकाङ्क्षानुसारात् । तथा च स ओङ्कारेणायतनेन परं ब्रह्म विद्वान् परात् परं पुरिशयं प्रत्यग्रूपं पुरुषं आनन्दमात्रस्वरूपं स्वरूपप्रकाशेनेक्षते स्वप्रकाशानन्दमात्रतयाऽवस्थितो भवतीत्यर्थः । यदुपक्रमगतं विद्वत्पदमोङ्कारकरणकतत्त्वसाक्षात्कारवत्पुरुषपरं, यदि त्वोङ्कारालम्बनपरोपासनावत्परं, तदा ईक्षत इति वृत्तिज्ञानपरमस्तु । तथाचोपक्रमानुसारेण ब्रह्मलोकप्राप्तिरूपस्य लिङ्गस्यानुग्रहायोमित्येतेनैवेति वाक्यस्यापरब्रह्मोपासनाविधिपरत्वेऽपि न काचिदनुपपत्तिः । उपक्रमगतं परापरवेदनयोर्व्यवस्थितफलकीर्तनमेव पूर्वपक्षोपोद्बलकमित्यभिप्रायेण भाष्ये उक्तम् । **एतेनैवायतनेन परमपरं वैकतरमन्वेतीति प्रकृतत्वात्संशय इति ।** सूत्रे स इति पदं अभिध्यातव्यस्य विषयवाक्योपस्थितस्य परामर्शकमित्यभिप्रेत्याह— **परमेव ब्रह्मेहाभिध्यातव्यमिति ।** अत्र ईक्षतिकर्मत्वेन व्यपदेशादिति हेतुः । ईक्षणकर्मत्वेन श्रुतस्य परात् परस्य पुरिशयस्य पुरुषस्य तथाव्यपदेशवैयर्थ्यपरिहाराय उपक्रमगतपरत्वप्रत्यभिज्ञाननिर्वाहायासति बाधके ईक्षतिकर्मणो मिथ्यात्वं माभूदिति परमेश्वरपरतामापादयन् तदैक्यप्रत्यभिज्ञया ध्यातव्यस्यापि परमात्मतां साधयतीत्यभिप्रायेणाह— **ईक्षतिकर्मत्वेनेत्यादिना । ईक्षतेस्तु तथाभूतमेवेति ।** ननु, लोकेऽपीक्षतेरतथाभूतमेव सर्वं कर्म दृष्टम्। निर्विशेषब्रह्मसाक्षात्कारविषयव्यतिरिक्तस्य सर्वस्याप्यनृतत्वादिति चेत्, सत्यम्। अयमत्राभिप्रायः—लोके घटादीनां शुक्तिरजतादिवैलक्षण्यं तावदुपेयते । तत् कस्य हेतोः लौकिकबाधानवतारात् । परं तु तत्र वैदिकबाधावतारात् न ब्रह्मवत परमार्थतोपेयते । ततश्च घटादौ लौकिबाधानवतारात् यथा शुक्तिरजतवैलक्षण्यमुपगतं, एवं प्रकृते ईक्षणकर्मणि कस्य चित् बाधस्यावतार इत्यत्र विशिष्य प्रमाणाभावात् अत्यन्ताबाध्यनिर्विशेषपरमात्मतोपेयते । हिरण्यगर्भपक्षे तु तस्य चैतन्यातिरिक्तांशसंवलिततया तदंशे बाधोऽङ्गीकर्तव्यस्स्यात्, स माभूदिति । **नचात्र जीवघनशब्देनेति ।** अभिध्यातव्यस्य स सामभिरुन्नीयते ब्रह्मलोकमिति वाक्येन व्यवहितत्वान्न तस्यैतस्मादिति सर्वनाम्ना परामर्शः । अपि तु ब्रह्मलोकमित्यत्र निर्दिष्ट उपसर्जनीभूतो हिरण्यगर्भ एव निर्दिश्यते । तस्मात्परः परमात्मैवेति तस्य पुरिशयपदेन प्रत्यग्रूपतोच्यते । तथा च प्रत्यभिज्ञाविच्छेदका-

भावात् ध्यातव्यः परमात्मैव सिध्यतीति भावः । जीवलक्षण इत्यादौ जीवपदं हिरण्यगर्भरूपजीवपरम् । एवं च जीवघनात् परात्परमिति लिङ्गादपीक्षणीयः परमात्मेति सिध्यति । **अपर आहेति** । ब्रह्मलोकशब्देन प्रधानतया प्रस्तुतस्य ब्रह्मलोकस्यैव एतस्मादिति सर्वनाम्ना परामर्श उचित इति तदाशयः । अत्रागमस्वरसतः— एतस्मादिति विशेषणानि सर्वातिशयितवस्तुप्रतिपत्त्यर्थानि । परात्परमितिलिङ्गात् । तथा च पुरुषपदोदितस्य चेतनस्येक्षतिकर्मणः ब्रह्मलोकपदेन न्यग्भूततयोपस्थितस्य परामर्श एवैतत्पदेन सर्वातिशयिताद्धिरण्यगर्भाच्चेतनत्वेन सजातीयादुत्कर्षप्रतिपादनपरता वाक्यस्य सिद्धा भवतीति सर्वातिशायीक्षणकर्मेति लभ्यते । तथा च सर्वनाम्ना योग्यतया न्यग्भूतोऽपि हिरण्यगर्भ एव परामृश्यते । सर्वनाम्नां सन्निहितयोग्यपरामर्शकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । लोकपरामर्शे तु जडत्वेन विजातीयात्तस्मादुत्कर्षसिद्धावपि न वाक्यशैली सर्वातिशयनिरूपणपरा समञ्जसा भवति । **अथ यदुक्तमिति** । इदमुपलक्षणम् । ब्रह्मोपासनापक्षे ब्रह्मलोकप्राप्तिफलकथनमपि व्यर्थम् । 'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते' इत्यादिवचनानुसारेण परब्रह्मात्मोपासकानां सर्वेषामर्चिरादिमार्गेण ब्रह्मलोकप्राप्तेर्वक्ष्यमाणत्वादित्यपि द्रष्टव्यम् । **त्रिमात्रेणोङ्कारेणेति** । इदं ह्योङ्कारालम्बनब्रह्मणः प्रतीकोपासनम् । प्रतीकोपासकानां च विशिष्य वचनं विना न ब्रह्मलोकप्राप्तिरिति 'अप्रतीकालम्बनान्नयतीति बादरायणः' इत्यत्र वक्ष्यते । अतो न वचनवैयर्थ्यम् । **क्रममुक्त्यभिप्रायमिति** । तथा चोपक्रमे यत् परमात्मोपासनायाः परमात्मप्राप्तिरूपं फलं विभज्य दर्शितं, न तस्य विरोधः । ब्रह्मलोकप्राप्तेः क्रममुक्तिपर्यन्तायाः फलत्वेन प्रतिपादनात् । ननु, एवमुपक्रमे अपरब्रह्मोपासनायाः अपरब्रह्मप्राप्तिरूपं फलं निर्दिष्टम् । तत् कुत्र निरूपितम् । उच्यते—'स यद्येकमात्रमभिध्यायीते'त्यादिना यः पुनरेतमित्यतः प्राचीनेन वाक्येन पृथिवीलोकदृष्ट्या एकमात्रं प्रणवमुपासीनस्य पृथिवीलोके प्रणवप्रथममात्राभिमानिनीभिः ऋग्देवताभिः तपआदिसम्पन्नमनुष्यत्वप्रापणं अन्तरिक्षलोकदृष्ट्या द्विमात्रं प्रणवमुपासीनस्य तद्द्वितीयमात्राभिमानिनीभिः यजुर्देवताभिरन्तरिक्षात्मकसोमलोके विभूतिप्रापणं फलमुपपद्यते । तत्रापरब्रह्मोपासनया अपरब्रह्मप्राप्तिर्निरूपितेति न काचिदनुपपत्तिः । ननु, चात्रापरब्रह्मणः हिरण्यगर्भस्य शरीरैकदेशयोः पृथिव्यन्तरिक्षयोः फलत्वमुपास्यत्वं च निर्दिश्यते । न त्वपरब्रह्मणः । अतः कथमुपक्रमोपपत्तिरिति चेत्, उच्यते—उपसंहारपर्यालोचनयोपक्रमगतोऽपि अपरब्रह्मशब्दः तावन्मात्रपर्यवसितो भविष्यति । गत्यन्तराभावात् । न हि तस्य यथाश्रुतत्वोपपत्तये उपक्रमध्यानेक्षणवाक्यगतानां परं ब्र-

क्ष परं पुरुषं परं पुरिशयं पुरुषमिति पदानां परत्वप्रत्यभिज्ञया तुल्यार्थता परित्यक्तुं शक्यते । अपि चेह परापरब्रह्मणोरुभयोरपि न प्रकरणितयोपासनं विवक्षितम् । वाक्यभेदापत्तेः । तथा चैकवाक्यतानिर्वाहाय परोपासनापर एव सन्दर्भः कल्प्यते । 'ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा' इति परमोपक्रमात् इहाप्युपक्रमोपसंहारयोः परब्रह्मविद्याया एव संस्पर्शनात् । तत्र च किमपेक्षया परत्वमित्यपेक्षायामपरं ब्रह्म निर्दिष्टम् । तत्प्रसङ्गाच्च तच्छरीरैकदेशयोः पृथिव्यन्तरिक्षलोकयोः अकृत्स्ने प्रणव उपासने दर्शिते इति वक्तव्यम् । तथा चाप्रधानवाक्यार्थस्य यथाकथञ्चिन्नयने सत्यपि न तदनुसारेण प्रधानवाक्यस्वारस्यभङ्गो न्याय्य इति मनसि निधायाह —**अदोष इतीति ।** अत्रेक्षतिकर्मत्वस्य हेतोः ब्रह्मलोकप्राप्तिरूपापरब्रह्मलिङ्गाभिभूतत्वादस्पष्टता ॥ १३ ॥

॥ इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥

## दहर उत्तरेभ्यः ॥ १४ ॥

**तद्वाव विजिज्ञासितव्यमित्यादीति** । आदिपदेन 'तं चेत् ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणि यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति तं चेत् ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनत् जरा वाप्नोति प्रध्वंसते वा किंततोऽतिशिष्यत इति स ब्रूयात् नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामस्सत्यसङ्कल्प' इत्यादिकं गृह्यते । पूर्वं यथा प्रतीकोपासनाया अपि वचनबलेन ब्रह्मलोकप्राप्तिद्वारा मोक्षफलकत्वं उपगतम्, एवमिहापि पूर्वपक्षे जीवस्य भूताकाशस्य वा उपास्यत्वेऽपि वचनबलात् सत्यसङ्कल्पादिप्राप्तिर्भविष्यतीति सङ्गतिर्द्रष्टव्या । **आकाशब्रह्मपुरशब्दाभ्यामिति** । अत्राकाशपदं भूताकाशकोटेरुत्थापकम् । आकाशपदस्य तत्र रूढत्वात् । ब्रह्मपुरशब्दो जीवकोटेरुत्थापकः । ब्रह्मकोटेस्तु औपसंहारिकमाकाशोपमितत्वादीति द्रष्टव्यम् । ननु, ब्रह्मपुरशब्दो ब्रह्मपदसमभिव्याहारात् ब्रह्मकोटेरुत्थापकः । स कथं जीवकोटेरुत्थापको भवेदित्याशङ्क्य तस्यापि वक्ष्यमाणया रीत्या जीव एव स्वारस्यमिति मनसि निधाय तस्य ब्रह्मकोट्य-

साधारण्यं प्रत्याचष्टे—तथा ब्रह्मपुरमितीति। तत्राकाशशब्दस्येति । ननु, 'आकाशस्तल्लिङ्गादि'त्यत्रानन्यथासिद्धलिङ्गानुसारेण श्रुतेरन्यथानयनमुक्तम् । पुनः कथमिहाशङ्का । इहाप्युपसंहारे परमात्मलिङ्गानि सन्ति । उच्यते—तत्र हि नोपसंहारगतपरमात्मलिङ्गमात्रेण श्रुतिबाधो निरूपितः । अपि त्वनन्तत्वलिङ्गस्योपक्रमोपसंहारसंस्पर्शितया प्रबलस्यानुग्रहायोत्क्षिप्तान्तवत्त्वदोषस्यान्यथाव्याख्याने परिहारालाभाच्च श्रुतिभङ्ग आश्रितः । नेह तथाभूतं किञ्चिन्नियमाकमस्तीति पूर्वपक्षिणोऽभिप्रायः । यथा चोपक्रमविरोधोऽपि दहरस्य भूताकाशत्वे नास्ति, तथा न चात्र दहरस्याकाशस्यान्वेष्टव्यत्वमित्यत्र स्पष्टं भविष्यति । तथा चाकाशश्रुतिरभ्यस्ता यथाश्रुतैवोपेयेत्याह — भूताकाश एव दहर इति । ननु, अत्र 'यावान्वा अयमाकाश' इत्यादिवाक्ये बाह्याकाशो यत्परिमाणः, तत्परिमाणो हृदयाकाश इत्यवगम्यते । न तु बाह्यान्तराकाशयोरुपमानोपमेयभावोऽवगम्यते । यस्योपपादनं पूर्वपक्षे क्रियेत । यदि तु बाह्यान्तराकाशयोः परिमाणैक्यं न सम्भवति । आन्तरस्याल्पत्वात् । बाह्यस्य महत्त्वात् । अतो यावांस्तावानित्यत्र वतुप्प्रकृतिभूतयोः यत्तत्पदयोः सादृश्यपरतामुपेत्य यादृशपरिमाणो बाह्यः, तादृशपरिमाण आन्तर इति विवक्षितम् । तथा च पूर्वपक्षे भूताकाशविवक्षायां तद्गतपरिमाणस्यैकत्वात् कथं तेनैव परिमाणेन तस्य उपमेयतेत्याशङ्कायामुपाधिभेदेनाकाशभेदकल्पनया तत्परिमाणयोरपि भेदारोपात् उपमानोपमेयभावोपपत्तिरिति पूर्वपक्षे प्रतिपाद्यते, तदप्यनुपपत्तिः । कल्पितभेदस्यान्तराकाशस्य बाह्याकाशपरिमाणसमानपरिमाणत्वानुपपत्तेः द्यावापृथिव्यादि तस्मिन् समाहितमित्यनुपपन्नमेव । हृदयपुण्डरीकान्तर्वर्तिनि अल्पे तेषां समाधानानुपपत्तेः । अवकाशात्मना एकत्वादित्यप्यसङ्गतम् । भेदकल्पनापूर्वकं हृदयान्तर्वर्तिन्येवाकाशे द्यावापृथिव्यादिसमाधानस्य प्रतिपिपादयिषितत्वात् । तत्रावकाशात्मनैकत्वं कथमुपपादकमुच्यते । अन्तर्हृदये भूताकाशस्य व्यवहारगत्या अल्पत्वेऽपि प्रतिभासतो महत्त्वं सम्भवत्येव । व्यवहारसिद्धद्यावापृथिव्यादिसमाधानानाधारत्वेऽपि प्रातिभासिकविशेषाणां तेषां समाधानं तत्रोपपद्यते । तथा हि—द्यावापृथिव्यादयो यथा परमेश्वरसृष्टास्सर्वसाधारणाः, तथोपासकभोगोपयोगिनस्तन्मनसा सृष्टा इहैवाम्नायन्ते—'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती'त्यादिना 'यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव समुत्तिष्ठती'त्यन्तेन । ते च द्विविधाः । यदोपासक इच्छया स्थूलशरीरं समालिङ्गति, तद्दशानुभाव्या इच्छयैव, यदा स्थूलं विहाय सूक्ष्मशरीरमात्रावशेषो भवति, तद्दशानुभाव्याश्च । ततस्स्थूलशरीरं गृहीत्वा यदा भोगं सम्पादयति,

तदा ते भोग्याः पदार्था अस्मदादिजाग्रत्पदार्थवत् स्थिरभोगहेतवः सर्वेन्द्रियग्राह्याः । अशरीरावस्थायामनुभाव्यास्तु मानसा एव । स्वप्नवत् । उपासकेन अशरीरावस्थायामनुभाव्यान् पदार्थान्विषयीकृत्येयं श्रुतिः प्रवृत्ता—'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोकः' इति एतच्च सर्वं 'तन्वभावे सन्ध्यवदुपपत्तेः । 'भावे जाग्रद्वदि'ति सूत्राभ्यां फलाध्याये निरूपयिष्यति । इह द्यावापृथिव्यादयो ब्राह्मलौकिका एव ग्राह्याः । तत्क्रतुन्यायात् । तेष्वपि ये अशरीरावस्थायामनुभाव्याः, तेषामेव ग्रहणं न्याय्यम् । 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति हृदयाकाशान्तर्गततयैव समाधानवचनात् । न हि बाह्यानामन्तरेव समाधानं ब्रह्मवादिनापि शक्यं समर्थयितुम् । तदुपयोगितया च स्वप्ने सूक्ष्मनाडीमध्यगतस्यापि जीवस्य यथा रथहयाद्यवस्थानोपयोगिवैपुल्यप्रतिभासात् प्रातिभासिकं तदङ्गीक्रियते, तथा ब्राह्मलौकिकमानसपदार्थावस्थानयोग्यं मानसं वैपुल्यं सूक्ष्मेऽपि सम्भवत्येव । ननु, एवं तं चेद्ब्रूयुरित्यादिना 'हृदयपुण्डरीकमेव तावदल्पम् । तन्मध्ये विद्यमानः आकाशस्ततोऽप्यल्पः, तत्र किं वर्तते । यदन्वेष्टव्यं भवेत्' इत्याक्षिप्ते मानसं स्वाप्नवैपुल्यवत् तत्राल्पत्वाविरोधि वर्तत एव वैपुल्यमिति स्पष्टं परिहारमनुक्त्वा किमिति यावान्वा अयमाकाश इत्यादिना बाह्याकाशपरिमाणता दहराकाशस्य प्रतिपाद्यते इति चेत्, अनयाप्युक्तिभङ्ग्या स एवार्थो विवक्षितः । परं तु स्वप्नदृष्टान्तेन तस्मिन्नर्थे प्रतिपाद्यमाने स्वप्नो यथासन्, एवं प्रकृतोपासनाभोगोऽप्यसन्निति मन्दमतीनामविश्वासस्स्यात्, स माभूदिति प्रकारान्तरेण कथनम् । न ह्यन्यथा अन्तर्हृदय इति वाक्यशेषः समञ्जसो भवति । एतत् सर्वमभिप्रेत्योक्तं—**अवकाशात्मनैकत्वादिति** । उक्तगत्या बाह्याभ्यन्तराकाशयोरवकाश एकः तुल्य इति यावत् । ननु, एवमपि 'एष आत्मापहतपाप्मे'त्यादिवाक्यार्थस्य कथं दहराकाशेऽन्वयः, न कथमपि । न ह्येष आत्मापहतपाप्मेत्यत्रैषशब्दो दहराकाशपरामर्शकः । अपि तु सर्वं तदस्मिन् समाहितमिति प्रकृतं सर्वपदवाच्यं परामृशति । समानविभक्तिनिर्देशात् नपुंसकलिङ्गावगतस्याप्येष इति परामर्शस्तु आत्मपदसामानाधिकरण्यात् । ननु, नास्य जरयैतज्जीर्यति । न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता' इति पूर्ववाक्यगतैरिदमेतत्पदैराकाशस्य परामर्शे सति तत्रैव कथमेष इतिपदमाकाशान्तर्वर्तिसर्ववस्तुपरम् । तत्र हीदमेतत्पदानामाकाशपरामर्शकतैव । न तु तदन्तर्वर्तिपरामर्शकता । 'अस्मिन् कामास्समाहिता' इत्यत्र कामपदं हि ब्राह्मलौकिकपित्रादिपरम् । 'यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये चास्येह प्रेता ये च जीवा यच्चान्यदिच्छन्नरमते सर्वं तदत्र गत्वा-

विन्दते अत्र 'ह्यस्यैते सत्याः कामा' इत्यत्र ब्रह्मलोकं गतस्येह लोके ये वर्तन्ते, ये चातीता, ये चैतदिच्छाविषया भविष्यन्तः पित्रादयः, तान् सर्वानपि सङ्कल्पानुसारेण लभत इत्युपासकप्राप्यान् पित्रादीन् प्रस्तुत्य तेषु कामपदप्रयोगात् । ते च प्रागाकाशान्तर्गततया व्युत्पादिताः—'यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित' मिति । तथा च तदेवेह कामाधारत्वेन प्रत्यभिज्ञायते । अतस्तत्समानविषयाणां नास्य जरयैतज्जीर्यतीत्यादिवाक्यगतानामपि सर्वनाम्नामाकाशविषयत्वे एष आत्मेत्याकाशपरामर्श एव भविष्यति । अतः कथं दहराकाशो भूताकाशस्स्यादिति चेत्, उच्यते—आक्षेपवाक्ये ह्याकाशो न पृष्टः । ब्रह्मपुराख्यशरीरजराप्रध्वंसाभ्यां तदन्तर्वर्ति किमपि नावशिष्यते इत्येतावदेवाक्षिप्तम् । उत्तरवाक्येऽपि नास्य जरयैतज्जीर्यतीत्युच्यते । अत्र चैतत्पदेन द्यावापृथिव्यादिकमेव विवक्षितम् । आधारजराप्रध्वंसाभ्यामाहितं मूर्तं ध्वस्तं भवति । न त्वमूर्तम् । तथा च आकाशविषयत्वे अप्रसक्तप्रतिषेधता स्यात् । अतः प्रश्नोत्तरवाक्यपर्यालोचनया नास्य जरयैज्जीर्यतीत्यादौ शरीरजराप्रध्वंसाभ्यां तदन्तर्वर्ति द्यावापृथिव्यादिकं न जराप्रध्वंसशालि भवतीत्यर्थो विवक्षितः । द्यावापृथिव्यादेर्लिङ्गान्तरेण वचनान्तरेण प्रस्तुतत्वेऽपि सर्वं तदस्मिन् समाहितमिति सङ्ग्रहेण नपुंसकैकवचनेनापि तेषां प्रस्तुतत्वमस्ति । एतत् सत्यं ब्रह्मपुरमित्यनेन तस्यैव द्यावापृथिव्यादेः ब्रह्मता बोध्यते । यद्यपि द्यावापृथिव्यादेः न साक्षाद्ब्रह्मता सम्भवति, तथापि तत्परामर्शकस्यैतत्पदस्य ब्रह्मसामानाधिकरण्यात् द्यावापृथिव्यादिशब्दास्तदवच्छिन्नब्रह्मपरा इत्युपेयते । न च ब्रह्मपुरशब्दोऽत्र श्रूयते, न ब्रह्मशब्दमात्रम् । स च प्राक् देहे प्रयुक्तः । अतः कथं ब्रह्मसामानाधिकरण्यमिति वाच्यम् । ब्रह्मणः पुरमिति षष्ठीसमासः प्राचीनो ब्रह्मपुरशब्दः । अयं तु ब्रह्म पुरमिति कर्मधारयो वा, पदद्वयं वा । सत्यपदसामानाधिकरण्यात् । सत्यपदं हि ब्रह्मण्येव प्रसिद्धम् । विशिष्य चात्रैव प्रकरणे 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्य'मित्याम्नानाच्च । तस्मात् पूर्ववाक्ये प्रधानतया प्रस्तुतद्यावापृथिव्यादिपरामर्शकैतत्पदानुसारेण 'अस्मिन् कामास्समाहिता' इति एका प्रत्यभिज्ञा अन्यथा नेया । अस्मिन् द्यावापृथिव्याद्यवच्छिन्ने कामास्सृष्ट्यनुकूला इच्छास्समाहिता इत्यर्थः । तथा च 'एष आत्मापहतपाप्मेत्यादिकं नाकाशान्वयि । एवमुपक्रमे ब्रह्मपुरपदेन ब्रह्मण उपास्यत्वावगमोऽपि न विरुध्यते । उपक्रमगतो ब्रह्मशब्दो हि चैत्रान्वेषिणं प्रति मैत्रसद्मनि चैत्रस्तिष्ठतीत्यत्र मैत्रशब्दो यथा ग्रहान्तरव्यावर्तकः नैवं, ब्रह्मशब्दः पुरान्तरव्यावर्तकः । सर्वस्यापि शरीरस्य ब्रह्मपुरत्वात् । तथा च ब्रह्मपुरशब्देन यत् ब्रह्मणः

उपास्यत्वमुपाक्षिप्तं, तद्दहराकाशान्तर्वर्तिद्यावापृथिव्याद्यवच्छिन्नब्रह्मणः उपास्यत्वमादाय निर्वृणोति। तस्माद्दहराकाशो भूताकाशः । अथापि दहराकाश एवोपास्यः। तत्रैवैष आत्मापहतपाप्मेत्यादिवाक्यस्यान्वयः । तथापि नासौ ब्रह्म । अपि तु जीवः । द्यावापृथिव्यादिसमाधानाधारत्वं पूर्ववदेवोपपादनीयम् । जीवे मानसपदार्थोपादानतया स्वप्नगजादिवत् मानसद्यावापृथिव्यादिसमानाधारत्वोपपत्तेः । यावान्वा इत्यादिवाक्यप्रतिपाद्यं वैपुल्यं तु अविद्यावच्छिन्नस्य तस्योपपद्यते । अथवा यावान्वा इति वाक्यं न महत्त्वं प्रतिपादयति, अपि त्वल्पत्वमेव । अत्र ह्ययमितिशब्दो न बाह्याकाशपरामर्शकः । अपि तु दहराकाशपरामर्शक एव । तस्यैव पूर्ववाक्ये शब्देन प्रस्तुतत्वात् । तथा च यावानयं दहराकाशः, तावानेवैष दहराकाशः । नास्य परिमाणमन्येन तुलयितुं शक्यमिति 'रामरावणयोर्युद्धं रामरावणयो'रित्यादिवदुपपद्यते । अनेन च दहराकाशोऽतिसूक्ष्मः, नास्य सौक्ष्म्येऽन्यदुपमानं वर्तत इति प्रतिपादिते दहराकाशो जीव इति पर्यवस्यति । आकाशोपमितत्वादि चेति भाष्यमस्यापि प्रकारस्योपलक्षणम् । अपहतपाप्मत्वादिकं च विशुद्धजीवस्वरूपस्योपपद्यते । पापादीनामन्तःकरणोपाधिकत्वात् । इहैव च नास्य जरयैतज्जीर्यतीत्यादिना शरीरदोषाणां तत्र निरासात् । अथवा अपहतपाप्मत्वं सत्यकामत्वसत्यसङ्कल्पत्वाभ्यां सह ब्राह्मलौकिकमेव ग्राह्यम् । अतो न तदनुपपत्तिः । ननु, एवमुत्तरसन्दर्भो जीवपरतया नीयेत । यदि दहराकाशो जीव इति किञ्चित् प्रमाणमवगमयेत्। आकाशशब्दो हि तत्र न रूढः । नापि ब्रह्मवत् निरूढः । न चोपक्रमे ब्रह्मपुरपदस्य षष्ठीसमासगर्भस्य स्वस्वामिभावपर्यवसितस्य जीव एव स्वारस्यमिति तदनुसारेणाकाशपदं जीवपरमिति वाच्यम् । वाक्यान्तरगतस्याकाशपदस्य वाक्यान्तरगतषष्ठ्यर्थस्वारस्यमात्रेण जीवपरतायाः कल्पयितुमनुचितत्वात् । अपि तु ब्रह्मश्रुतिस्वारस्यानुसारेणाकाशपदनिरूढ्यनुसारेण ब्रह्मैव प्रकृते विवक्षणीयमिति चेत्, उच्यते—इह हि वाक्ये दहरत्वमाम्नायते । तद्यथाश्रुतं स्वाभाविकमेव वक्तव्यम् । हृदयपुण्डरीकान्तर्गततया अर्थसिद्धस्यापि पुनराम्नानात् उत्तरत्र यावान्वा इति वाक्येन तस्यैव दृढीकृतत्वाच्च । अतस्स्वाभाविकेन दहरत्वलिङ्गेन जीवे निर्णीते उक्तगत्या सर्वं जीवपरतयैव व्याख्येयम् । उपक्रमानुसारेणोपसंहारगतस्य ब्रह्मशब्दस्यापि तत्रैव वृत्तिरिति न ब्रह्मपुरपदादपि ब्रह्मनिर्णयः । इदमेव पूर्वपक्षलिङ्गं सूचयितुं आकाश इति धर्मिनिर्देशमकृत्वा सूत्रे दहर इति धर्मिनिर्देशः । जीवपूर्वपक्षस्तु 'इतरपरामर्शादित्यत्र भविष्यति । एवं दहराकाशस्योपास्यत्वमुपेत्य जीवपूर्वपक्षो दर्शितः अथवेत्यादिना । इदानीं तं परित्यजति—

**न चात्र दहराकाशस्येति** । तथा च पूर्वोक्तगत्या दहराकाशो भूताकाश एव । तदन्तर्वर्तिद्यावापृथिव्याद्यवच्छिन्नं ब्रह्मैवोपास्यमिति भावः । **तं चेद्ब्रूयुरिति** । तमुपाध्यायं शिष्याश्चेदाक्षेपं कुर्युः, तदा स उपाध्यायो ब्रूयादित्यर्थः । **पुण्डरीकवेष्टनमात्रदहरत्वनिवृत्तिपरत्वादिति** । न च तथासति लक्षणा स्यादिति वाच्यम् । न हि शब्दगत्या न्यूनत्वाभावः प्रतिपाद्यते । अपि त्वाकाशतुल्यपरिमाणता शब्दगत्या प्रतिपाद्यते । तच्च परममहति ब्रह्मणि सम्भवत्येव । तत्फलं तु न्यूनताव्यवच्छेदः, न त्वाधिक्यव्यवच्छेदोऽपि । ननु, उभयव्यवच्छेदोऽपि फलमस्तु । नेत्याह—**उभयप्रतिपादन इति** । फलगत्येतिशेषः । **वाक्यं भिद्येतेति** । गौरवलक्षणो वाक्यभेदः आपद्येतेत्यर्थः । **नचेति** । ननु, मानसानां द्यावापृथिव्यादीनां हृदयपुण्डरीकजीवयोस्समाधानमुपपद्यत इत्युक्तमिति चेत्, न । द्यावापृथिव्यादिपदानां मानसमात्रविषयतया सङ्कोचे प्रमाणाभावात् । न च तत्क्रतुन्याय एव सङ्कोचक इति वाच्यम् । तत्क्रतुन्यायस्य हि प्राप्यमवश्यं ध्येयमित्येतावति पर्यवसानम् । न तु प्राप्यमेव ध्येयम् । न च तत्क्रतुन्यायस्य निरङ्कुशत्वमेव स्वीकर्तव्यम् । न तदनुसारेण च ध्येयगुणा एव संकुचद्वृत्तयो व्याख्येया इति वाच्यम् । तासु तासूपासनासु हि पारमेश्वरा धर्मा बहवो निरूप्यन्ते । न च तेषां सर्वेषामेकेन तत्क्रतुन्यायेन लक्षणोचिता । परं तु उत्सर्गभूतस्य तत्क्रतुन्यायस्यैव सङ्कोचः तेषु गुणेष्वाश्रीयते । अतोऽत्र द्यावापृथिव्यादीनां साधारणानामुपासकासाधारणानां च समाधानाधारत्वं ध्येयम् । प्राप्यं तूपासकेन ध्येयैकदेशभूतं मानसद्यावापृथिव्यादिसमाधानाधारत्वम् । तदुपपत्तये च प्रसिद्धमेव महत्त्वं यावान्वा इति वाक्येन प्रतिपाद्यं, न तु मानसम् । तस्मिन् प्रसिद्धद्यावापृथिव्यादिसमाधानानुपपत्तेः अप्रसिद्धस्य शब्दार्थत्वे क्लेशापाताच्च । न च ब्रह्मण्यपि हृदयपुण्डरीकावच्छिन्ने प्रसिद्धाकाशौपम्यद्यावापृथिव्यादिसमाधाने न सम्भवत इति वाच्यम् । न हि हृदयपुण्डरीकावच्छेदेनैव तदुभयमुपपाद्यते । अपि तु अकाशवद्विभुः द्यावापृथिव्याद्याश्रयश्च स हृदयपुण्डरीके ध्येय इति । न च तथासति 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति हृदयपुण्डरीकमध्यगत एव परमात्मनि द्यावापृथिव्यादिसमाधानवचनानुपपत्तिरिति वाच्यम् । न ह्यनेन वाक्येन हृदयपुण्डरीकावच्छेदेनैव द्यावापृथिव्यादिकमस्तीति प्रतिपाद्यते । अपि तु यो हृदयपुण्डरीकगततया प्रतिपादित आत्मा, तस्य व्यापकतया सर्वं तदन्तर्गतमेव । न त्वात्मनो बहिर्भूतं किञ्चिदित्येतावत् प्रतिपाद्यते । व्यापकस्यापि हृदयपुण्डरीकान्तर्गतिस्तु न साकल्येन तत्र वर्तनम् । अपि तु तत्संसृष्टतामात्रम् । न चेयं गतिः भूताकाशवा-

दिना वक्तुं शक्यते । उपमानोपमेयभावसिद्ध्यर्थं हृदयपुण्डरीकावच्छिन्नस्यैवाकाशपदेन विवक्षणीयतया तत्र प्रसिद्धाकाशौपम्यद्यावापृथिव्यादिसमाधानवचनस्यासङ्गतत्वात् । एष आत्मेति । न चाक्षेपसमाधानवाक्ययोराकाशस्यास्पष्टत्वेन तदन्तर्वर्तिद्यावापृथिव्यादिकमेवात्मत्वादिना प्रतिपादनीयमिति पूर्वपक्षोक्तं समञ्जसम् । तं चेत् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरमित्याक्षेपवाक्ये आकाशो न स्पष्ट इति कथं वक्तुं शक्यम् । 'यावान्वा अयमाकाश' इति वाक्ये द्यावापृथिव्यादिकं ब्रह्मपुरान्तर्वर्तिहृदयपुण्डरीकाकाशे हि समाहितमुक्तं, न तु ब्रह्मपुर एव । तत्र विवक्षाविशेषं विना तं चेत् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा इत्यक्षेपवाक्ये आकाशानुवादमकृत्वा ब्रह्मपुरमात्रग्रहणं नोपपद्यते । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यत्र योऽर्थ उक्तः, स एवार्थः । अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वे च कामा इत्यत्राक्षिप्तः । स एव चार्थोऽस्मिन् कामास्समाहिता इत्यत्रोपपादनपूर्वकमुपसंहृत इति प्रतीयते, नास्य जरयैतज्जीर्यतीत्यादि तदुपपादकमिति च । ततश्च नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत् सत्यं ब्रह्मपुरमिति परिहारवाक्यपर्यालोचनया आक्षेपवाक्ये अयं विवक्षाविशेष उन्नीयते । ब्रह्मपुरान्तर्गत आकाशे समाधानोक्त्या ब्रह्मपुर एव समाधानमुक्तम् । ब्रह्मपुरान्तर्गत आकाशो यदि ब्रह्मपुरजराप्रध्वंसानुसारिजाप्ररध्वंसशीलः, तदा राजाधीनैश्वर्यामात्यभृत्यो यथा राजभृत्यः, एवं ब्रह्मपुरमध्यगताकाशनिहितमपि ब्रह्मपुर एव निहितमित्येकोऽभिप्रायः । घटादिषु दध्यादिस्थापनानुकूलावकाशरूप आकाशे विद्यमानं दध्यादि घटादाविव यथा निहितं भवति, एवं ब्रह्मपुरान्तर्गतावकाशरूप आकाशे विद्यमानमपि द्यावापृथिव्यादि ब्रह्मपुरे निहितमित्यपरोऽभिप्रायः । तथा च ब्रह्मपुरजराप्रध्वंसाभ्यां तदन्तर्गताकाशनिहितस्य द्यावापृथिव्यादेः स्थितिर्न लभ्यते । एवमुभयाभिप्राय आक्षेपे आद्यस्योत्तरं —नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत इति । तथा च द्यावापृथिव्यादिसमाधानाधारस्याकाशस्य ब्रह्मपुरजराप्रध्वंसानुसारिजराप्रध्वंसशालित्वाभावात् ब्रह्मपुरे जीर्णे नष्टेऽपि द्यावापृथिव्यादिसमाधानाधारस्य आकाशस्य यथा पूर्वं समवस्थितत्वात् द्यावापृथिव्यादिस्थितौ न काचिदनुपपत्तिः । द्वितीयाभिप्रायस्य चेदमुत्तरं—एतत्सत्यं ब्रह्मपुरमिति । नायमाकाशो घटान्तर्गतावकाशवत् अवकाशमात्रम् । अपि तु स्वतन्त्र आधारो ब्रह्मरूपः । तद्धि पुरं पुरवत् सर्वस्य द्यावापृथिव्यादेर्भोगस्थानस्य अग्न्यादेर्भोगोपकरणस्य पित्रादेर्भोग्यस्य चाश्रयः । अतो यथा घटादौ नष्टे दध्यादि नावतिष्ठते, एवं ब्रह्मपुरे जीर्णे नष्टे वा द्यावापृथिव्यादिकं नावतिष्ठत इति नाशङ्कनीयम् । तदा-

धारब्रह्मरूपस्य पृथगेव विद्यमानत्वात् । एवमाक्षेपसमाधानवाक्ययोराञ्जस्यायोत्तरवाक्यगतैतत्पदयोराकाशविषयत्वमवश्यम् वक्तव्यम् । यदि तु नास्य जरयेत्याद्युत्तरवाक्यगतैतत्पदयोः द्यावापृथिव्यादिविषयत्वमेवोच्येत, तथासति शरीरजराप्रध्वंसाभ्यां द्यावापृथिव्यादेर्जराप्रध्वंसाभावेऽपि तदाधारस्यान्यस्य स्थिरस्याप्रतिपादनाच्छरीरनाशे कुसूलनाशे कुसूलगतधान्यादेरनवस्थानवत् शरीरगतद्यावापृथिव्यादेरनवस्थानं स्यादिति शङ्कासम्भवेन किं ततोऽतिशिष्यत इत्याक्षेपोऽपरिहृत एव स्यात् । तस्मिन् पक्षे ऐकरूप्याय अस्मिन् कामाः समाहिता इत्यत्रापि द्यावापृथिव्यादेरेव परामर्शनीयत्वेन कामसमाधानप्रत्यभिज्ञानमपि बाधितं स्यात् । आकाशे कामसमाधानस्य प्रागुपक्षिप्तत्वात् । नचेदं प्रत्यभिज्ञानं बाधनीयमिति वक्तुमुचितम् । 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते अस्मिन् कामास्समाहिता' इत्युपक्रमोपसंहारैकरूप्येण तदर्थस्य विवक्षितत्वावश्यंभावात् । कृत्स्नतदन्तर्गतस्य वाक्यजातस्य तदुपपादकतायामेव स्वारस्यावगमाच्च । अस्ति चाकाशस्यापि दहरोऽस्मिन्नन्तराकाश इति वाक्ये प्रथमान्ततया प्राधान्येन प्रस्तुतत्वम् । यद्यपि तदपेक्ष्य द्यावापृथिव्यादि सन्निहितं, तथापि कृत्स्नवाक्यतात्पर्यपर्यालोचनया तस्यैव परामर्शयोग्यतया अयोग्यद्यावापृथिव्यादिसन्निधानस्याप्रयोजकत्वात् । नास्य जरयैतदित्यादौ नपुंसकलिङ्गं तु तस्मिन्नेव आकाशे ब्रह्मपदमपि प्रयुक्तम् । ब्रह्मपुरमितितदभिप्रायं भविष्यति । सामान्ये वा भविष्यति । तथा ब्रह्मपदसामानाधिकरण्यादप्याकाशो ब्रह्मेति । तत्सिद्धम्—एष आत्मा अपहतपाप्मेतिवाक्यं नाकाशादन्यत्रान्वेतीति । ननु, नास्य जरयैतज्जीर्यतीत्यत्र आकाशपरामर्शे अप्रसक्तप्रतिषेधता । अमूर्तस्य तस्य शरीरजराद्यनुविधायिजरादेरप्रसङ्गादिति चेत्, पूर्वपक्षिमतेऽपि असङ्गतमेव । द्यावापृथिव्याद्यवच्छिन्नस्य ब्रह्मण एव सर्वं तदस्मिन् समाहितमित्यनेन विवक्षिततया तत्रापि शरीरजराद्यनुविधायिजरादेरप्रसङ्गात् । सिद्धान्तिनस्तु नानुपपत्तिः । ब्रह्मपुरान्तर्गताकाशनिहिततयोक्तानां द्यावापृथिव्यादीनां ब्रह्मपुरान्तर्गततानुवादे किं तात्पर्यमिति विकल्पमुखेनास्मिन्नुत्तरे प्रवृत्तेऽसम्भावितं सम्भावितं वा सर्वं विकल्प्य निरस्यत इति विकल्पाभिप्रायखण्डने हि सर्वं सम्भावितमसम्भावितं वा निरस्यत इत्याधुनिकप्रबन्धेषु व्युत्पन्नमेव । एतेन यावान्वा अयमित्यत्राकाशौपम्येन पूर्ववाक्य एव ब्रह्मनिर्णये सति द्विविधोऽप्याक्षेपाभिप्रायो न सम्भवति । ब्रह्मणः शरीरानुविधायिजरादेरसम्भवात् । स्वतन्त्राधारत्वाच्चेत्यपि निरस्तं । यावान्वा इति वाक्यस्य मानसवैपुल्यप्रतिपादकतेति सम्भावनया आकाशपदस्य ब्रह्मपरताया झटिति

निर्गुणमशक्यत्वात् हृदयपुण्डरीकान्तर्गतस्याकाशस्य ब्रह्मत्व एव 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमि'ति वाक्यशेषे हृदि आत्मेत्येतदर्थकतया हृदयपदनिर्वचनमपि आत्मनि सङ्गतं भवति । तथा चायमर्थः— एष द्यावापृथिव्यादिसमाधानाधार आकाश आत्मा अपहतपाप्मा अपहताः अपगताः पाप्मानः पुण्यपापरूपाः सर्वसंसारतापनिदानभूताः यस्मात् स तथाभूतः 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक' इति वाक्यशेषात् । एवंसति यद्यपि पाप्मपदेनैव जरादिसङ्ग्रहात् पृथग्विजरइत्यादि नापेक्षतं, तथापि पुण्यपापमूलकशरीरद्वारा जराद्यभावेऽपि स्वाभाविकमेव जरादिकमस्त्विति मन्दबुद्धिपरिकल्पितजरादिनिवृत्त्यर्थं पुनस्तन्निषेधः । स वा अयमिति पुरुपुरीति च पुरुषपदे बहुवचनेन वा एकवचनेन वा विग्रहप्रदर्शनार्थम् । ब्रह्मपदस्य जीवपरत्वमुपेत्य प्रौढ्या पक्षान्तरमाह—अथवेति । अथाप्युत्तरभाविभिर्हेतुभिराकाशोपमितत्वादिभिः दहरो ब्रह्म भविष्यतीति भावः । अनुविद्य आचार्यसमीपतो ज्ञात्वा उपास्य । वस्तुतस्तु उपक्रमे ब्रह्मपदं यथाश्रुतमेव । षष्ठ्यर्थस्योपलब्ध्यधिष्ठानत्वरूपासाधारणसम्बन्धस्य ब्रह्मण्युपपत्तेः । तच्च वाक्यमुपक्रम एव ब्रह्मण उपास्यत्वमुपक्षिपति । अत आकाशो ब्रह्मैव । अत्रेयं पूर्वपक्षिणः शङ्का— उपक्रमे ब्रह्मण उपास्यत्वावगमेऽपि दहराकाशस्य ब्रह्मत्वं न सिध्यति । उपक्रमगतमुपास्यत्वं यदि दहराकाश एव पर्यवसितं स्यात्, तदा खलूपक्रमपर्यालोचनया दहराकाशस्य ब्रह्मत्वं सिध्येत् । तत्तु 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि'ति वाक्यस्वारस्येन दहराकाशान्तर्वर्तिन एव प्राप्नोति । नन्वेतद्वाक्यपर्यालोचनया दहराकाशान्तर्वर्तिन एवोपास्यत्वप्राप्तावपि 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति वाक्यपर्यालोचनया दहराकाशतदन्तर्वर्तिनोः उपास्यत्वं सिध्यति । तदेकदेशानुवादोऽयं तस्मिन् यदन्तरित्यादिः । 'अथ य इहात्मानमनुविद्ये'ति वाक्यं चैष आत्मापहतपाप्मेति वाक्योक्तस्यात्मन उपासनां प्रतिपादयति । 'एष आत्मे'ति वाक्यं दहराकाशविषयमिति प्रागेव निरूपितम् । अतो दहराकाशस्योपास्यत्वे सिद्धे उपक्रमवशादपि तस्य ब्रह्मत्वं सिध्यतीति चेन्न । एष आत्मेति वाक्यं हि द्यावापृथिव्यादिसमाधानाधारवस्तुपरं, न तु द्यावापृथिव्यादिपरमित्यस्तु । द्यावापृथिव्यादिसमाधानाधारश्च न दहराकाशः । अपि तु दहराकाशान्तर्वर्ती । तथा हि—उपक्रमे ब्रह्मणः उपास्यत्वेऽवगते तस्मिन् यदन्तरित्यनेन दहराकाशान्तर्वर्तिनि पर्य-

वसानकरणात् तत्स्वारस्यानुरोधेन 'यावान्वा अयमाकाश' इत्यस्यार्थोऽङ्गीक्रियते। 'यावान्वा अयमाकाशस्तावानेष' इत्येकं वाक्यम्, अन्तर्हृदयइत्यपरम् । अन्तर्हृदये दहराकाशे आकाशः परमात्मा, स चाकाशसमानपरिमाण इति वाक्यद्वयार्थः । दहराकाशान्तर्वर्ती च परमात्मा उत्तरत्र द्यावापृथिव्यादिसमाधानाधारत्वेन प्रतिपाद्यत इति एष आत्मेत्यादावपि स एव सम्बध्यते । अतो न कथमपि दहराकाशस्यान्वेष्टव्यत्वादिकं प्राप्नोतीति मनसि निधाय पूर्वपक्ष्युक्तमनुवदति— **यद्प्येतदुक्तमिति । आकाशस्वरूपप्रतिपादनं नोपपद्येतेति** । यावान्वा इति वाक्यं हि दहराकाशस्यैव बाह्याकाशोपमितत्वं प्रतिपादयति, न तु दहराकाशान्तर्वर्तिनोऽन्यस्य कस्यचित् । उपक्रमे हि पुण्डरीकशब्दः पुण्डरीकसमानाकारहृदयपर एव । समानप्रकरणे तैत्तिरीयके 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख'मिति श्रवणात् । तदेव चान्तर्हृदय आकाश इत्यत्र हृदयशब्देन प्रत्यभिज्ञायते, न तु दहराकाशः । तत्र तच्छक्तेरभावात् । आकाशपदेन च दहराकाश एवावगम्यते । तुल्यशब्दत्वात् । अवश्यं चेदं वाक्यं दहराकाशवैपुल्यप्रतिपादनपरमेवोपेयम् । अन्यथा कृताक्षेपसमाधानालाभात् । 'तं चेद्ब्रूयु'रिति वाक्ये हि अथ यदिदमिति वाक्योक्तस्य सर्वस्यार्थस्यानुवाददर्शनात् आक्षेपोऽयमित्यवगम्यते, न तु दहराकाशे किं वर्तत इति प्रश्नमात्रम् । उक्तानुवादवैयर्थ्यापत्तेः । कृत्स्नानुवादो हि विरोधस्फोरणार्थः । ततश्चायमाक्षेपाभिप्रायः—हृत्पुण्डरीकमेव तावदल्पम् । तदन्तर्वर्ती दहराकाशस्तावदतीवाल्पः । अतस्तत्र कस्यापि वस्तुनोऽन्वेषणयोग्यस्यासम्भवात् किमन्वेष्टव्यं विजिज्ञासितव्यं चेति । अयं चाक्षेपो न दहराकाशस्य महत्त्वनिरूपणं विना समाधातुं शक्यः । तथा च यावान्वा इति वाक्यमाकाशौपम्यप्रतिपादनपूर्वकं दहराकाशवैपुल्यप्रतिपादन एव पर्यवसितम् । न तु दहराकाशान्तर्वर्तिवस्तुप्रतिपादनपर्यवसितं तस्य वैपुल्यप्रतिपादकम् । कृताक्षेपसमाधानालाभात् वाक्यभेदापत्तेश्च । तदन्तर्वर्तिवस्तुप्रतिपादनपरं तु उभेऽस्मिन्नित्यादि । अत एव आत्मेत्यादिद्यावापृथिव्यादिसमाधानाधारपरं सत् दहराकाश एव पर्यवस्यति । तथा च आक्षेपसमाधानाद्यनेकस्वारस्यानुग्रहाय तस्मिन् यदन्तस्तदन्वेष्टव्यमित्येकं वाक्यं तदनुसारेणैव व्याख्येयम् । ननु, 'यावान्वा अय'मिति वाक्यमस्तु दहराकाशस्य वैपुल्यप्रतिपादनपरम् । तथापि न तस्यान्वेष्टव्यत्वम् । अपि तु तदन्तर्वर्तिनो द्यावापृथिव्यादेरेवेति मनसि निधाय शङ्कते—**नन्वेतदपीति** । परिहरति—**नैतदेवमिति** । इष्टापत्तिं वारयति—**तत्रेति** । एतदभिप्रायः प्रागेव स्पष्टीकृतः । **तस्मादुपक्रमेऽपीति** । ननु, कथमुपक्रमे दहराकाशो ज्ञेयत्वेन प्र-

तिपादित इति वक्तुं शक्यते । तस्मिन्यदन्तरिति अन्तर्वर्तिन एव अन्वेष्टव्यत्वादेरवगमात् । न चोपसंहारे दहराकाशस्य पूर्वोक्तगत्योपास्यत्वसिद्धौ तदैकार्थ्यायोपक्रमोऽपि तथा व्याख्येय इति वाच्यम् । उपक्रमोपसंहारयोरविरोधो यथा भवति, तथा सन्दर्भो व्याख्येयः । अर्थविरोधे एकवाक्यतानुपपत्तेः । अन्यूनानतिरिक्तार्थकत्वं तु तयोः कुतस्त्यम् । अप्रयोजकत्वात् । तथा चोपसंहारे दहराकाशस्य सहान्तस्थैः कामैरुपासनं फलाय विधीयते । उपक्रमे तु अन्तरसमाहितस्य वस्तुन एवान्वेष्टव्यत्वानुवादः तं चेद्ब्रूयुरित्यादिशङ्कावसरदानार्थः । उच्यते—उपक्रमोपसंहारयोरन्यूनानतिरिक्तार्थत्वं यद्यपि नास्ति । अप्रयोजकत्वात्, तथापि प्रकृते उपक्रम एवोपासनाविधिरङ्गीकर्तव्यः । उपसंहारे विहितस्यैवोपासनस्यानुवादेन फलसम्बन्धो बोध्यत इति वक्तव्यम् । उपसंहारगतस्यैव वाक्यस्योभयार्थत्वे गौरवापत्तेः । तथा चोपसंहारे दहराकाशतदन्तर्वर्तिकामोपासनायाः फलसम्बन्धं बोधयितुमनुवादात् उपक्रमे कामाधारस्य उपासनायां तात्पर्ये निर्णीते यथा तल्लाभो भविष्यति, तथा वाक्ययोजना कर्तव्या । अपि च 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषामिति वाक्य एवोपासनाविध्यङ्गीकारे कामपदेन पित्रादीनामेव प्रतिपादनात् विशिष्य तत्प्रतिपादनमितरगुणपरिसङ्ख्यार्थमित्यप्याशङ्क्येत । तस्मात् 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमित्येवोपासनाविधिः । तत्रान्वेषणं नाम गुरुमनुसृत्यात्मनो विचारणम् । विज्ञानं तु ध्यानम् । 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेने'ति विज्ञानपदस्य ध्याने प्रयोगात् । इदं हि वाक्यं 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति उक्तार्थस्यैव प्रातिपादकम् । विजिज्ञासितव्य इत्यत्र सन्नर्थो न विवक्षितः । निदिध्यासितव्य इत्यत्र यथा । तदिदमुक्तं—विज्ञेय उक्त इति गम्यत इति । ननु, तावतापि कथमुपक्रमे आकाशस्योपास्यत्वावगमः । इत्थं—'तस्मिन् यदन्त'रिति आकाशाधिकरणकं यद्वक्ष्यमाणं द्यावापृथिव्यादिकं, तदन्वेष्टव्यं विजिज्ञासितव्यं चोच्यते । न चाकाशमविज्ञाय तदधिकरणकं द्यावापृथिव्यादिकं ज्ञातुं शक्यम् । तथा चोपक्रमे आकाशोऽधिकरणत्वेन ज्ञेयः, द्यावापृथिव्यादयश्चाधेयत्वेन ज्ञेया इति सिध्यति । न चैवंसत्याकाशस्येतरविशेषणतयोपास्यत्वात्तदुपासनं प्राधान्येन न सिध्येदिति वाच्यम् । इष्टापत्तेः । इदमुपासनमाकाशे द्यावापृथिव्यादिकमित्येव कर्तव्यम् । वचनस्वारस्यात् । न चैवंसति 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा'निति विशेष्यतयोपासनानुवादो न सङ्गच्छत इति वाच्यम् । न हि तत्र विशेष्यतयात्मा उपास्य इति विशेष्यताबोधकं किञ्चित्पदमस्ति । अपि त्वात्मानमिति द्वितीया । सा तु

विषयतामात्रं प्रतिपादयति । तावन्मात्रमात्मप्रकारकोपासनायामपि न विरुध्यते । प्रकारताया अपि विषयताविशेषरूपत्वात् । अथवा 'तस्मिन् यदन्त' रित्याकाशाधिकरणकं यद्द्यावापृथिव्याद्युक्तं, तावन्मात्रमेव तदन्वेष्टव्यमिति तच्छब्दो न परामृशति । येन विषयनिर्देशकेन तत्पदेनाकाशस्य द्यावापृथिव्यादिविशेषणतयैव उपादानात्तथैवोपासना भवेत् । अपि त्वयं तच्छब्दो वाक्यार्थपरामर्शकः । तथाच 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे'त्यारभ्य यदुक्तं, तदन्वेष्टव्यं तद्विजिज्ञासितव्यं चेत्यर्थः । अवश्यं चैतस्येत्थमेवार्थः स्वीकर्तव्यः । कथमन्यथा हृदयपुण्डरीकादेरुपास्यता सिध्येत् । एवंसति 'अथ यदिदमस्मि'न्निति प्रथमयत्पदमपि निराकाङ्क्षं भवति । तदन्वेष्टव्यमित्यत्रान्तर्वर्तिवस्तुमात्रपरामर्शे द्वितीययत्पदस्य तत्पदेन प्रतिनिर्देशात् प्रथमयत्पदं साकाङ्क्षमेव स्यात् । न चैवमाक्षेपे अन्तर्वर्तिन एवान्वेष्टव्यतयानुवादोऽसङ्गतस्स्यादिति वाच्यम् । वाक्यार्थे कृत्स्नेऽप्यन्वेष्टव्ये प्रतिपादितेऽप्यन्तर्वर्तिन्येवासम्भावनायाः समुद्भवात् तावन्मात्रमेवाक्षिप्तम् । तदन्वेष्टव्यमिति वाक्यार्थपरामर्शके तत्पदे च सामान्याभिप्रायं नपुंसकं औत्सर्गिकं चैकवचनमुपपद्यते । वाक्यार्थस्य लिङ्गविशेषेण वचनविशेषेण चाप्रस्तुतत्वात् । यदि तु 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा'निति वाक्य एव फलेन विशिष्टमुपासनं विधीयते । 'उद्भिदा यजेत पशुकाम' इतिवत् । चशब्दश्चोक्तवक्ष्यमाणगुणसङ्ग्रहार्थः अन्येषां गुणानामाम्नानं व्यर्थं माभूदिति, तदापि दहराकाशस्य ब्रह्मत्वे न कोऽपि विरोधः इत्यपि द्रष्टव्यम् ॥ १४ ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥१५॥

नन्वहरहर्गच्छन्त्य इति वाक्यशेषः पुण्डरीकान्तर्गते भूताकाशेऽप्युपपद्यते । यदा हि जीवो हृदयान्तस्स्थितं ब्रह्म गच्छति, तदा हृदयान्तर्वर्त्याकाशमपि गच्छत्येव । हृदयगते भूताकाशे ब्रह्मलोकशब्दोऽप्युपपद्यते । ब्रह्मणो लोक उपासनास्थानमिति व्युत्पत्तिसम्भवात् । अतः कथं सुषुप्तौ जीवैर्गन्तव्यत्वं, ब्रह्मलोकशब्दश्च दहराकाशे श्रुतः तस्य ब्रह्मतां गमयेदित्यत आह—तथा हि दृष्टमिति । तद्व्याचष्टे तथाह्यहरहर्जीवानामिति । यद्यपि भूताकाशेऽप्युक्तरीत्या गतिशब्दावुपपद्येते, तथापि श्रुत्यर्थः श्रौतप्रसिद्ध्यैव व्याख्येयः । श्रुतौ 'सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'त्यादौ ब्रह्मण्येव सुषुप्तगतिः श्रुता । श्रुतिप्रस्थानपाटवशालिनो लोकस्यापि तथैव प्रसिद्धिः । 'एष ब्रह्मलोकस्सम्राडिति हैनमनुशशासे'ति ब्रह्मलोक-

शब्दोऽपि श्रुतो ब्रह्मणि प्रसिद्धः । अतश्श्रौतप्रसिद्ध्यनुगृहीतौ गतिशब्दौ भूताकाशशङ्कां व्यावर्तयत इति युक्तम् । यद्यपि गतिशब्दयोरुभयोः प्रस्तुतत्वात् तथाहि दृष्टाविति वक्तव्यं, तथापि द्वयोरपि प्रत्येकाभिप्रायमेकत्वं सामान्ये नपुंसकं चोपपद्यत इति भावः । **सामानाधिकरण्यवृत्त्या त्विति** । सम्भवति सामानाधिकरण्ये वैयधिकरण्यं ह्यन्याय्यम् । वैयधिकरण्ये हि प्रातिपदिकार्थानन्तर्गतोऽपि स्वस्वामिभावादिरन्यः सम्बन्धः कल्पनीयः । अभेदपक्षे तु प्रातिपदिकार्थस्वरूपभूत एव स इति लाघवम् । अपि च नामार्थानामभेदसंसर्ग एव शब्दबोध्यः । भूतले घट इत्यादावाधाराधेयभावबोधादर्शनात् । तथा च प्रकृते ब्रह्मलोकप्रातिपदिकयोरेकार्थपर्यवसिततैवोचितेति भावः । ननु, ब्रह्मलोकशब्दः सत्यलोके प्रसिद्धः । 'अत्रैव च अरश्च ह्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवी'ति अत्रैव प्रयुक्तः । अतश्चात्रोत्सर्गप्राप्तोऽप्यभेदान्वयः परित्यक्तव्यः । दृश्यते हि नरपतिशब्दादौ प्रसिद्ध्यनुसारेण सामानाधिकरण्यपरित्याग इत्याशङ्क्योक्तं—लिङ्गं चेति । तत् ब्रह्मलोकशब्दस्य सामानाधिकरण्यार्थत्व इत्यंशाध्याहारेण व्याचष्टे—**एतदेवचेति** ॥ १९ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥

ननु, 'अथ य आत्मा स सेतुर्विधृतिरि'त्येतद्दहराकाशविषयं न भवति । अथशब्दस्याधिकारार्थत्वेन तद्घटितस्य वाक्यस्य प्रकृतदहराकाशविषयत्वे पृथगधिकारप्रतिपादनविरोधात् । तदनुसारेणान्यस्यैवायमधिकार इति प्रतीयते । तथा च कथमयं हेतुर्दहराकाशस्य ब्रह्मतां गमयेदित्याशङ्क्य 'अथ य आत्मा स सेतुरि'ति वाक्यगतेन यत्पदेन पूर्वप्रकृतं परामृश्यते । तादृग्विधश्च दहराकाश एव । आत्मपदेनापि स एव प्रत्यभिज्ञायते—एष आत्मेति । तत्रात्मशब्दस्य पूर्वं प्रयुक्तत्वात् । तथा च यत्पदात्मपदानुसारेण 'अथ य आत्मे'ति वाक्यस्य दहराकाशविषयत्वे निर्णीते अथशब्दः आनन्तर्यार्थकः भविष्यतीति । न च तदुक्तिर्व्यर्था । आनन्तर्यमात्रं हि न वक्तव्यम् । तदनुक्तावपि तस्याम्नानमात्रेणैवावगन्तुं शक्यत्वात् । अतः स्वापेक्षितात् पूर्वस्मादनन्तरमिति विशिष्टानन्तर्ये परिणतोऽथशब्दः उक्तवक्ष्यमाणगुणानां समुच्चयं द्योतयन् 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानि'ति वाक्ये विशिष्य ग्रहणं सत्यानां कामानामितरपरिसंख्यार्थकमिति शङ्काव्यावर्तको भविष्यतीत्यभिप्रेत्याह— **कथं दहरोऽस्मिन्नन्तराकाश इति । प्रकृतेत्यादि** । ननु, 'आकाशे वै सूर्याचन्द्रमसौ उभौ विद्युन्नक्षत्राणी'त्यादिना भूताकाशस्यापि सर्वविधारकत्वमुपपद्यते । 'एषां लोकानामसम्भेदाये'त्यपि तत्र सम्भवत्येव । अवकाशसम्पा-

दकतया असाङ्कर्यहेतुत्वात् । 'आकाशे रमते' 'आकाशेन जायते आकाशमभिजायत' इति च ब्राह्मणम् । ततः कथं धृतेः परमात्मैव दहराकाश इत्यत आह—**अयं च महिमेति** । न केवलं जगदाधारत्वमेव प्रकृते धृतित्वम् । अपि तु महिमविशेषरूपम् ऐश्वर्यापरपर्यायम् । तदीश्वरस्यैव शासनपूर्वकं धृतिहेतुत्वमिति भावः ॥१६॥

ननु, परमात्मन्याकाशपदं किं शक्त्या, उत गौण्या । न तावत् परमात्मनि शक्तिः । प्रथमभूत एव तस्य रूढत्वात् । नापि गौणी । आकाशपदस्य हि व्यापकत्वेन गुणेन सा कल्पनीया परमात्मनि । न चेह तथा वक्तुं शक्यते । तथासति धर्मिनिर्देशकेनैव पदेन व्यापकत्वगुणस्य लब्धतया 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इतिवाक्यवैयर्थ्यप्रसङ्गात् । अथ नित्यत्वं गुणः आकाशपदस्य ब्रह्मणि वृत्तौ । तथासति तेन गुणेन जीव एव प्रकृते तदर्थः किं न स्यादत आह—

## प्रसिद्धेश्च ॥ १७॥

विभुत्वेन गुणेन परमात्मा इह आकाशपदप्रतिपाद्यः । न च यावान्वा इत्यादिवाक्यवैयर्थ्यम् । तद्बलादेवाकाशपदस्य ब्रह्मपरतालाभात् । न ह्यन्यथा गौण्या ब्रह्मपरता लब्धुं शक्यते । भूताकाशस्यैव मुख्यस्य ग्रहणप्रसक्तेः । अथाप्यनन्वयो भविष्यति यावान्वा इतिवाक्ये । तत्रोपमेयनिर्देशकेन पदेन व्यापकतया गौणेनाकाशपदेन व्यापकत्वे उद्देश्यतावच्छेदकेऽवगते उपमानपदेन पुनरपि व्यापकत्वे विधेये कथमनन्वयो न स्यात् । न हि व्यापकोऽव्यापक इत्यन्वयः सम्भवतीति चेत्, न । उद्देश्यतावच्छेदकतया आकाशपदप्रतिपाद्यत्वस्यैव प्रकृते निवेशेनानन्वयाप्रसरात् । परं तु यावान्वा इतिवाक्यपर्यालोचनया दहरोऽस्मिन्नन्तराकाश इतिवाक्ये आकाशपदं व्यापकतया गौणमितिबुद्धिस्स्थिरा भवति । अस्तु वा नित्यत्वेनैव गुणेन आकाशपदं ब्रह्मणि । तथापि जीवशङ्का निरूढ्या वाक्यशेषैश्च परिहृता भवति । तदिदमुक्तम्—**आकाशशब्दः परमेश्वरे प्रसिद्ध इत्यादिना** ॥१७॥

## इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १८ ॥

'एष सम्प्रसाद' इति वाक्येन शरीरात् समुत्थितस्योत्क्रान्तस्यार्चिरादिमार्गपर्वभूतादित्यात्मकं ज्योतिरुपसम्पन्नस्य स्वेन ब्राह्मलौकिकेनाविर्भूतसत्यकामत्वादिना रूपेणाभिनिष्पत्तिः प्रतिपाद्यत इति इदं वाक्यं जीवविषयमिति तावत् सिद्धम् । तदनन्तरपठितेन 'एष आत्मेति होवाचे'ति वाक्येन स एव

प्रकृतोऽपहतपाप्मादिरूप आत्मेति चोच्यते । एवंसति वचनेनैव दहराकाशात्मक-आत्मा जीव इति व्यवस्थापिते द्यावापृथिव्यादयो ब्राह्मलौकिका एव जीवसम्भाविनो ग्राह्याः । 'एष आत्मे'ति वचनानुसारेण तत्सङ्कोचोऽपि न दोषः । न च सत्यकामत्वं सत्यसङ्कल्पत्वं जीवे असम्भवीति वाच्यम् । कामशब्दो हि काम्यमानपित्रादिपरः । पित्रादिष्वस्मिन् प्रकरणे 'त इमे सत्याः कामा' इति प्रयोगदर्शनात् । सत्यत्वं च भोगसमर्थत्वम् । तथा च भोगसमर्थपित्रादिशालित्वं सत्यकामत्वम् । तदुपयोगिसङ्कल्पशालित्वं सत्यसङ्कल्पत्वम् । तथाचोपासकस्य स्वस्वरूपमेव ब्राह्मलौकिकमुपास्यमिति आकाशपदं तत्रैव व्याख्येयमित्यभिप्रेत्याह— **यदि वाक्यशेषबलेनेत्यादिना । यथाकाशव्यपाश्रयाणामित्यादि ।** 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इति वाक्यं इन्द्रप्रजापतिसंवादे उत्तरत्राम्नायते । तदर्थं इह दृष्टान्तीकृतः । **असम्भवादिति** । अयं भावः—निरङ्कुशं द्यावापृथिव्यादिसमाधानाधारत्वं जीवे न सम्भवत्येव । एवं सत्यकामत्वमपि । यदि कामपदं यथाश्रुतं, तदा सत्यः काम इच्छा अस्येत्यर्थः । सत्यत्वं च फलाविनाभूतत्वम् । न च जीवस्य सर्वे कामास्सफलाः । मानोरथिकपदार्थगोचराणां कामानामुपासनया ब्रह्मलोकं गतेऽपि स्वभोगानुपयुक्तानां फलपर्यवसानाभावात् । यदि हि कामशब्दः काम्यमानवस्तुपरः, तदापि न सर्वे कामाः उपासकस्यार्थक्रियाकारिणः । तन्मात्रभोगपर्यवसायिनामेव पित्रादीनामर्थक्रियाकारित्वात् । अतः कामपदमुपासकभोगोपयुक्तपित्रादिविषयं सङ्कोचनीयम् । एवं सत्यसङ्कल्पत्वमपि । स्वीकृतेऽपि सङ्कोचे असम्भवः । उपासनाकाले ब्राह्मलौकिकानामुपासके द्यावापृथिव्यादीनामविद्यमानत्वादिति । नन्वेवमेष सम्प्रसाद इति वाक्यशेषस्य कागतिस्तत्राह—**पठिष्यति चेति** । वाक्यशेषपरिहारमिति शेषः ॥ १८ ॥

इति दहराधिकरणम् ॥ ९ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

पुनरुत्थानं जीवाशङ्काया इति । अयं भावः—असंकुचितसत्यकामत्वादीनां सम्भवशङ्कैव नास्ति जीवे । संकुचितास्तु न ग्राह्या एव सत्यकामत्वादयः । तद्ग्रहणेऽपि ब्रह्मलोकगमनानन्तरभाविनां तेषामुपासनादशायामसम्भव एवेत्युक्तम् । तत्राशङ्का—संकुचिता एव सत्यकामत्वादयः दहरविद्यायामुत्तर-

वाक्यपर्यालोचनया ग्राह्याः । य आत्मा अपहतपाप्मेत्यादिकं हि वाक्यं यत्पदसमभिव्याहारादनुवाद इत्यविवादम् । तत्र च पुरोवादापेक्षायां 'एष आत्मापहतपाप्मा विजर इत्यादिकं पूर्ववाक्यमेव पुरोवादः । ततश्च प्रजापतिविद्यायां पूर्वोक्तमपहतपाप्मत्वादिगुणकमनूद्य तस्य 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यादिना जीवभावप्रतिपादनात् दहरविद्योपास्यो जीव इत्येव प्रतीयते । तत्र चासंकुचितसत्यकामत्वादेरसम्भवात् संकुचितमेव तदुपादीयते । न च तस्याप्यधुना असत्त्वम् । आविर्भूतस्य तस्याधुना असत्त्वेऽपि ब्रह्मलोकगमनानन्तरमाविर्भविष्यतस्तस्य तिरोहितस्याधुनासम्भवात् । एवं द्यावापृथिव्यादिष्वपि द्रष्टव्यम् । अधुना सतामेव तेषां तिरोधानं तु 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति वाक्यशेषादवगम्यते । यद्यप्येवंविधः पूर्वपक्षः 'त इमे सत्याः कामा अनृतापिधाना इति पूर्ववाक्यपर्यालोचनया विघटयितुं शक्यते, तथापि । तत्र सिद्धान्ती इत्थमपि वदेत्—दहरवाक्ये द्विविधं सत्यकामत्वम् । एकमुपास्यकोटिनिविष्टम् । एकं फलकोटिनिविष्टम् । आद्यमेष आत्मापहतपाप्मेत्यादिना निरूप्यते । तदसंकुचितमेव । पूर्वोक्तगत्या आविर्भूतं च पारमेश्वरमेव । द्वितीयं तत्सदृशं जैवं स्वभोगोपयुक्तं संकुचितम् । द्वितीयस्यैव तिरोधानं 'त इमे सत्याः कामा इति वाक्यप्रतिपाद्यम् । वस्तुतस्तु 'त इमे सत्याः कामा इत्यर्थवादमात्रं तात्कालिकशिष्यसमाधानोपयोगि । दहरोपासनाफलप्राप्तौ संशयो मास्तु वा विद्यमानमेव स्वस्मिंस्तत्फलम् । परं तु अनृतेन वस्तुना आवृतम् । उपासनया तदपगमे पित्रादिकमाविर्भविष्यतीति, अधुना नोपलभ्यत इति प्रतिपादने हि रुचिविशेषसम्भवात् । न तु विद्यमानमेव तदावृतमिति वस्तुस्थितिः । 'सर्वं तदत्र गत्वा विन्दत' इति उत्तरवाक्ये ब्रह्मलोकगमनानन्तरमेव तत्प्राप्तेः प्रतिपादनात् । अतो न जीवस्तद्वाक्यपर्यालोचनयोपास्य इति लभ्यते । अनेन तु प्रजापतिवाक्येन ये उपास्यत्वेन सम्मता अपहतपाप्मत्वादयः, तदनुवादपूर्वकं 'य एषोऽक्षिणीत्यादिना जीवस्य प्रतिपादनात् जीवगता एवोपास्यकोटौ निविष्टा इत्येदसिध्यतीति तन्निर्वाहः पूर्वोक्तरीत्यैवाश्रयणीयः । 'सर्वं तदत्र गत्वा विन्दत' इति वाक्यमपि ब्रह्मलोकगमनानन्तरमाविर्भूतं सत्यकामत्वं प्राप्नोतीत्यर्थकं द्रष्टव्यम् । ननु, प्रजापतिवाक्येऽपहतपाप्मत्वादिकं पारमेश्वरमेव प्रतिपाद्यते । अतो न तद्वाक्यपर्यालोचनया पूर्ववाक्यगतं जैवं तदिति वक्तुं शक्यम् । न च तथासति 'य एषोऽक्षिणि पुरुष' इत्यादिना जाग्रत्स्वप्नसुषुप्तिसम्बन्धिजीवप्रतिपादनमसङ्गतमिति वाच्यम् । तत्प्रतिपादनस्य तत्त्वमस्यादिवाक्य इव जीवब्रह्माभेदबोधपर्यवसितत्वात् । अत एव

च 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतत् ब्रह्मे'ति प्रतिपर्यायं पुरुषसामानाधिकरण्येनामृताभयब्रह्मप्रतिपादनं सङ्गच्छत इति चेन्न । तथासति निर्गुणविद्यात्वापत्त्योपक्रमे अपहतपाप्मत्वादिगुणकीर्तनवैयर्थ्यापत्तेः । न च यथा सद्विद्यादौ निर्विशेषविषयत्वेऽपि सृष्ट्यादिप्रतिपादनं, तथेदमपि किं न स्यादिति वाच्यम् । तत्र हि सृष्ट्यादिप्रतिपादनमपवादार्थम् । तत्रैवादावन्ते चापवादश्श्रूयते—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'ति । नैवं सत्यकामत्वादिकं तदर्थम् । अपवादाश्रवणात् । अत उपासनापरेऽस्मिन् वाक्ये तत्त्वमस्यादिवाक्यन्यायस्य वक्तुमशक्यतया जीव उपास्य एव विवक्षितः। **य एषोऽक्षिणि पुरुष इति** । अक्षिणि सन्निहितः यो जीवरूपः पुरुषः दृश्यते अक्षिव्यापारेणानुमीयत इत्यर्थः । महीयमानः स्त्र्यादिभिः पूज्यमानः। **यत्रैतदिति** । यस्यां दशायां एतदिति क्रियाविशेषणं स्वापार्थकम् । ततश्च स्वापं सुप्तः कृतवान् पाकंपचतीतिवत । समस्तः उपसंहृतसकलकरणः । अनेन स्वप्नावस्थानुयायिस्वापव्यावृत्तिः । अत एवेन्द्रियसम्बन्धकृतकालुष्याभावात् सम्प्रसन्नः। प्रजापतिविद्यायामेवमुपाख्यायते—अपहतपाप्मत्वादिगुणकमात्मानं यो जानाति, तस्य सर्वलोककामावाप्तिरितिश्रुत्वा तमात्मानं ज्ञातुं प्रजापतिसकाशमिन्द्रविरोचनावागत्य द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं कृत्वा तमात्मानमन्विच्छाव इति ताभ्यां स्वाशये कथिते प्रजापतिरुवाच—अथ य एषोऽक्षिणि पुरुष इति । तदनन्तरं विरोचने स्वगृहं गते इन्द्रः पुनरपि परावृत्तः तं प्रति द्वात्रिंशतं वर्षाणि ब्रह्मचर्याज्ञायां कृतायां तथाकृत्वा समागतं प्रत्येतद्वचनम् —एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्युक्तिपूर्वकं य एष स्वप्ने महीयमानश्चरत्येष आत्मेत्यादि । तद्वचनं श्रुत्वा किञ्चित् गत्वा पुनःपरावृत्यागतं प्रति द्वात्रिंशत्संवत्सरब्रह्मचर्याज्ञायां तथा कृत्वा पुनरागतं प्रति 'एतं त्वेव त' इत्युक्तिपूर्वकं यत्रैतत्सुप्तः समस्त इति चतुर्थपर्याये पञ्चसंवत्सरं ब्रह्मचर्यवासे सम्पन्ने एतं त्वेव त इत्युक्तिपूर्वकं प्रजापतेर्वचनं—मघवन्मर्त्यं वा इदं शरीरमित्यादि। चतुर्थपर्याये च परावृत्यागतस्येन्द्रस्येदं सुषुप्तविषये तृतीयपर्याये दोषोद्भावनं—**नाहखल्वयमेवं सम्प्रत्यात्मानं जानातीत्यादि** । अहेतिनिपात एवार्थकः । नैव जानाति । सम्प्रति सुषुप्तौ । अज्ञानविषयमाह—**अयमहमस्मीति । नो एवेमानि भूतानीति। शरीरसम्बन्धनिन्दापूर्वकमिति।** मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युनेत्येवंप्रकारेण प्रजापतिविद्या प्रत्यगभिन्नब्रह्मस्वरूपबोधनपरा । ननु जीव एव सत्यकामत्वादीनां बोधनपरेति प्रतिपादयितुमुपक्रमते—**एतदुक्तं भवतीति । उदशरावब्राह्मणेनेति** । इन्द्रविरोचना-

अपाममहतममृतत्वादिविशिष्टे आत्मनि पृष्टे प्रजापतिना 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे'ति प्रत्युक्तम् । अक्षिनैरन्तर्यात् यश्चैतन्यं पुरुषाख्यमुपलभ्यते, एतदेव प्रकृतात्मस्वरूपमिति प्रजापतेराशयः । तस्मिन् वाक्ये तमाशयमज्ञात्वा अक्षिगतः प्रतिबिम्बः प्रजापतिना प्रकृतात्मरूपतया निर्दिष्ट इति तयोर्भ्रमः । तथाभ्रान्तयोस्तयोः प्रश्नः—अक्षिप्रतिबिम्ब आत्मा चेत्, अप्स्वादर्शे च यो यः प्रतिबिम्बो भासते, अयं कः । किमक्षिप्रतिबिम्बादभिन्नः सन्नब्दादर्शादिप्रतिबिम्बोऽप्यात्मा, उत तद्भिन्नोऽनात्मेति प्रश्नाभिप्रायः । तथा तयोः प्रश्नमुपलभ्य प्रजापतेः समुग्धाकारं प्रतिवचः—यो मयोक्तः, एष एव सर्वत्र प्रतिभासत इति, तत्र समुग्धाकारप्रतिवचनेऽयमभिप्रायः—यदि मया चक्षुष्युपलक्षितः चिन्मयः पुरुषो निर्दिष्टः । प्रतिबिम्ब इति तु भवतोः भ्रम इति प्रतिपाद्येत, तदा आरोपितपाण्डित्यगर्वितयोर्मनसि खेदे सत्युत्तरत्र प्रतिपाद्यमानार्थग्रहणं व्यग्रचित्ततया न स्यात् । यदि तूत्तरमेव न दीयेत, तदा अवगतिः कृता स्यात् इति पुनरपि चित्तक्षोभ एव । अतः उभयाशयानुसारेण प्रथमतः प्रतिवचनं दत्वा युक्त्या तयोः भ्रममपनेष्यामीति तत्र प्रतिबिम्बभ्रममपनेतुमुदशरावे आत्मानमवेक्ष्य योंऽशोऽनवगत आत्मनः, स पुनः प्रष्टव्यः इति प्रजापतिनोक्तयोस्तथाकृतवतोः प्रतिबिम्ब एवात्मेति पुनरपि भ्रमो दृढोऽभवत् । ततः प्रजापतिं किमपि न पृष्टवन्तौ । प्रजापतिना अहो बतास्माभिः शरीरानुपातित्वादुदशरावप्रतिबिम्बोऽनात्मेति तन्न्यायेन चक्षुःप्रतिबिम्बोऽप्यनात्मेति बुद्धिर्भवत्विति नियुक्तौ प्रतिबिम्बदर्शनार्थं पुनरपि तयोर्भ्रमो दृढोऽभवत् । अस्तु नाम, उपायान्तरमाचरिष्याम इत्यभिप्रायेण साध्वलंकृतौ सुवसनौ भूत्वोदशरावे आत्मानं पश्यतमिति पुनरपि नियुक्तौ तत्र प्रजापतेः मया ह्यमृताभयलक्षण आत्मोपदिष्टः । शरीरं तु नानाविकारयुक्तं अपरिष्कारदशायां जुगुप्सितं हेयं, परिष्कारदशायामुपादेयम् । अतः शरीरमेवानात्मा, तदनुपातिनः प्रतिबिम्बस्यानात्मत्वमिति किमु वक्तव्यमिति निर्णयो भविष्यतीत्यभिप्रायः । तथाकृतवतोस्तयोर्मध्ये विरोचनस्य शरीरमेवात्मेति भ्रमोऽभूत् । इन्द्रस्तु प्रतिबिम्ब एवात्मेति पुनरपि गृहीतवान् । प्रजापतिस्तु पुनरपि समुग्धाकारमेव उपदिष्टवान्—'एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे'ति पूर्वोत्तरवाक्यपर्यालोचनया स्वगृहीतेऽर्थे विरोधस्फूर्तौ स्वयमेव मदभिप्रेतार्थग्रहणं भविष्यति । पुनरपि वा मम निकटमागमिष्यतः, तदा सम्यग्बोधयिष्यामीति । तथा च प्रजापतितात्पर्यानुसारेणोदशरावब्राह्मणं शरीरात्मतायाः व्युत्थापकं भविष्यतीत्यर्थः । ननु, य एषोऽक्षिणीत्यत्र न द्रष्टा जीवो नि-

दिश्यते । येनोदशरावब्राह्मणं शरीरविवेकोपयुक्तं स्यात् । अपि तु 'य एषोऽक्षिणी'त्याद्युपकोसलविद्यागतवाक्यसारूप्यात्तदर्थप्रत्यभिज्ञानेन परमेश्वरः प्रथमपर्याये अक्षिगततयोपासनाय निर्दिश्यते । अत आह—एतं त्वेव त इति । अक्षिपर्यायनिर्दिष्टस्यैव व्याख्येयत्वमुपक्रम्य स्वप्नाद्यवस्थासम्बन्धिनः प्रतिपादनात् अक्षिपर्याये जीव एव निर्दिष्ट इत्यवगम्यते । न च उपकोसलविद्यावाक्यार्थप्रत्यभिज्ञानं प्रकृते परमेश्वरपरतानिर्णायकं सम्भवति । स्ववाक्यशेषानुसारेण जीवपरत्वेऽवगम्यमाने वाक्यान्तरप्रत्यभिज्ञाया अनिर्णायकत्वात् । 'य एषोऽक्षिणी'त्येतदेव वाक्यं तु स्वतः प्रतिबिम्ब एव स्वरसं तद्वाक्यशेषानुसारेण जीव एव योजनीयम् । न च 'यत्रैतत् सुप्त' इति तृतीयपर्याये स्वापाधिकरणीभूतो यः, स आत्मेति निर्दिश्यते । स्वापाधिकरणं च परमात्मैवेति वाच्यम् । 'स्वमपीतो भवती'ति वाक्येन जीवस्यैव स्वापाधिकरणतायाः निरूपितत्वात्तदभेदेनैव परमात्मनोऽपि तदधिकरणत्वस्य वक्तव्यत्वात् । अतश्च त्रिषु पर्यायेषु जीव एव निर्दिश्यते । ततश्चोपक्रमगतमपहतपाप्मत्वादिप्रतिपादनं तत्तत्पर्यायगतैतदमृतमभयमेतत् ब्रह्मेति प्रतिपादनं च तस्यैव परमेश्वराभेदबोधनार्थमिति न प्रजापतिवाक्यपर्यालोचनया जीव एवापहतपाप्मत्वादिगुणविशिष्टः दहरविद्योपास्य इति भावः । ननु, यदि जीवस्य पराभेदबोधनार्थमपहतपाप्मत्वादिरूपेण पर एवोपक्रमे निर्दिश्यते, तर्हि सूत्रे आविर्भूतस्वरूपो जीव इह निर्दिश्यत इति कथं निर्दिश्यते । उच्यते—उपक्रमे पर एव निर्दिश्यते । परं तु अनन्तरं जीवनिर्देशः कथं परमात्मानमुपक्रम्य एतं त्वेव त इति च तमेव व्याख्येयत्वेनोपक्षिप्य जीवनिर्देशस्यासङ्गतत्वादित्याशङ्कायां जीवपर्यायाभिप्रायेणायं सूत्रकृतो निर्देशः आविर्भूतस्वरूपस्त्विति नोत्तरत्र जीवनिर्देश उपक्रमविरोधी । यदि शबलितो जीवो निर्दिष्टस्स्यात्, तदा खलु पराभेदो बाधितस्स्यात् । इह तु अवस्थात्रयात् विविक्तो जीवः क्रमेण प्रतिपादितः अवस्थात्रयविनिर्मुक्त एव आविर्भूतस्वरूप इत्युच्यते । स च परमात्मैवेति नोपक्रमस्य काचिदनुपपत्तिः । तदिदमाह—**यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्ट इति** । ननु, जीवब्रह्माभेदबोधनपरं यद्येतद्वाक्यं, तर्ह्युपक्रमे अपहतपाप्मत्वादिगुणकीर्तनं व्यर्थं स्यादित्यत आह—**यत् परं ज्योतिरुपसम्पत्तव्यमिति** । अयं भावः—परं ज्योतिरुपसम्पद्येत्यत्र ज्योतिःपदं नादित्यादिज्योतिःपरमिति 'ज्योतिर्दर्शना'दित्यत्र वक्ष्यते । ततश्च ज्योतिःपदेन परमात्मैवोपक्रमगतः तत्र गृह्यते । तेन मुक्तिकाले जीवस्य यावत्सर्वमुक्ति अपहतपाप्मत्वादिना ब्राह्मेण रूपेणावस्थानं, तदनन्तरं सर्वमुक्तौ निर्विशेषचिदात्मनावस्थान-

मित्यर्थो लभ्यते । अत इह मुक्तप्राप्यं ज्योतिरपहतपाप्मत्वादिरूपमिति द्योतयितुमपहतपाप्मत्वादिरूपेण परमात्मोपक्रमे दर्शित इति न तस्य व्यर्थताशङ्का । अयं चार्थो 'ब्राह्मेण जैमिनिरुपन्यासादिभ्य' इत्यादित्रिसूत्र्या स्पष्टो भविष्यति चतुर्थे। **कथं पुनरिति** ! नित्यस्य जीवस्य स्वरूपाभिनिष्पत्तिरुत्पत्तिरिति वक्तुं न शक्यते। अतः प्रागावृतस्य जीवस्वरूपस्याभिव्यक्तिरिति वक्तव्यम् । तदपि न सम्भवति । असङ्गे स्वरूपावारकपदार्थसंसर्गायोगादिति शङ्कितुरभिमानः । अहं करोमि जानामीत्यादिजीवस्वरूपस्य प्रकटत्वादावरणकल्पनापि न सम्भवतीत्याह—**दृष्टविरोधाच्चेति** । सङ्ग्रहं विशदयति–**दृष्टीत्यादि** । परमार्थतोऽसङ्गस्वभावेऽपि काल्पनिकोऽनादिसङ्गः आवारकस्य वस्तुनस्सम्भवति । द्रष्टृभोक्तृत्स्वरूपस्य काल्पनिकस्यानावृतत्वेऽपि असङ्गपरिपूर्णसुखात्मकस्य स्वरूपस्यावृतत्वमपि सम्भवतीत्यत्रोच्यत इत्यादिपरिहारस्याभिप्रायः । श्रुतिक्तं विवेकज्ञानमित्यादिना 'एष सम्प्रसाद' इतिवाक्यमित्थं व्याख्यातं भवति–एष सम्प्रसादो जीवः अस्माच्छरीरात् समुत्थाय शरीराद्विविक्तमात्मानं ज्ञात्वा वेदान्तविचारेण स्वेन रूपेणाभिनिष्पद्यते स्वेन विशुद्धचिन्मात्रात्मनाभिव्यक्तो भवति, तादृक्स्वरूपगोचरसाक्षात्कारवान् भवति । तदनन्तरं परं ज्योतिरुपसम्पद्यते । अत्र परं ज्योतिरुपसम्पद्येति क्त्वाप्रत्ययार्थो न विवक्षितः । ननु, क्त्वाप्रत्ययं यथाश्रुतं गृहीत्वापि वाक्यं व्याख्यातुं शक्यम् । एष जीवोऽस्माच्छरीरात् समुत्थाय शरीराद्विविक्ततया आत्मानं परमात्माभेदेन साक्षात्कृत्यानन्तरं यावत्सर्वमुक्ति अपहतपाप्मत्वादिरूपपरंज्योतिरात्मनावस्थाय सर्वमुक्तौ स्वेन विशुद्धेन रूपेण चिन्मात्रात्मना अवस्थितो भवति । एवं प्रकारान्तरेणापि क्त्वाप्रत्ययं यथाश्रुतं स्वीकृत्य व्याख्यातुं शक्यते । अतस्स्वेन रूपेणाभिनिष्पद्यत इत्यत्रैव वृत्तिरूपः साक्षात्कारो न विवक्षित इति चेत्, उच्यते—पूर्वस्मिन्वाक्ये 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुशरीरा ह्येतानि तान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्त' इति वाय्वादीनि अशरीरस्य समुत्थाने दृष्टान्ततयोपक्षिप्तानि । तत्र दृष्टान्तस्यायमर्थः—वाय्वादीनि प्रावृडन्ते आकाशे निलीनानि सन्ति पुनः प्रावृडारम्भे आकाशात्समुत्तिष्ठन्ति । ततो विविक्तानि किञ्चिदुपलभ्यन्ते । ततः परं ज्योतिः प्रावृट्कालारम्भे सौरमतितीक्ष्णं ज्योतिरुपसम्पद्य प्राप्य स्वेन वृष्टिप्रदेन रूपेण अभिनिष्पद्यन्ते साक्षात्क्रियन्त इति । अत्रोपसम्पद्येतिशब्देन प्राप्तिर्विवक्षितेति दार्ष्टान्तिकेऽपि परंज्योतिरूपसम्पद्येत्यत्रैव प्राप्तौ विवक्षणीयायां स्वेन रूपेणाभिनिष्पद्यत इत्यत्रैव साक्षात्कारो विवक्षितः । क्त्वाप्रत्ययोऽपि विवक्षितार्थश्रे-

त् पूर्वोक्तगत्यार्थो द्रष्टव्यः । यथाकथञ्चिन्निर्विशेषविद्यानुगुणो वाक्यार्थो विवक्षणीय इत्यत्रैव परं भाष्यकारनिर्बन्धः । ननु, प्रथमपर्याये जाग्रदभिमानिपुरुषो निर्दिश्यत इति स्वीकारेऽपि कथमुत्तरत्र 'एतं त्वेवत' इत्युपक्रम्य स्वप्ननिरूपणं भवेत् । तयोर्भिन्नत्वात् । तदवश्यम् 'एतं त्वेवत' इति वाक्यस्य स्वारस्ये हातव्ये 'य एषोऽक्षिणी' ति वाक्यं च्छायापुरुषमेव यथाश्रुततया प्रतिपादयतित्यत आह—क्लिष्टेति । तथा च जाग्रत्स्वप्नाभिमानिनोर्भेदाभावादेतं त्वेवत इत्यस्य न स्वारस्यभङ्गः । 'मघवन्मर्त्यं वा इदं शरीरमित्यादिने'त्यादिपदेन 'आत्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम् आत्तो वै स शरीरः प्रियाप्रियाभ्यां 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति गृह्यते । अत्र शरीरोपाधिकः प्रियाप्रियादिः सकलः संसारः, शरीरसम्बन्धस्त्वात्मनोऽनृत इति च प्रतिपाद्यते । अशरीरस्यैव शरीराधिष्ठानत्वप्रतिपादनेन शरीरसम्बन्धस्य मिथ्यात्वावगमात् । अशरीरमिति हि न शरीरान्यतापरम् । मर्त्यं शरीरममृतस्याधिष्ठानमित्यत एवान्यतायास्सिद्धत्वात् । अतोऽशरीरमिति हि शरीराधिष्ठानकालेऽपि तदभावं प्रतिपादयन्मिथ्यात्वमेवोपहरति । इदं प्रकरणस्य **प्रत्यगभिन्नब्रह्मपरत्व एव समञ्जसम्** । अपरे तु वादिन इति । केचित्त्विति पक्षस्तु अन्येषां वाक्यानां प्रत्यगभिन्नवस्तुपरत्वेऽपि प्रजापतिवाक्यं न तत्परम् । अपहतपाप्मत्वादिकीर्तनवैयर्थ्यापत्तेः । अयं तु पक्षो न कुत्रापि प्रत्यगभिन्नं वस्तु प्रतिपाद्यत इति भेदः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

सम्प्रसादशब्दोदितो जीव इति । अनेन संदर्भेण 'एष सम्प्रसाद' इति वाक्यं दहरविद्यागतमेवं व्याख्यातम् । 'अहरहर्वा एवं वित्स्वर्गं लोकमेती'ति पूर्ववाक्यप्रस्तुतः सुप्तो जीव एष इति परामृश्यते । तत्प्रकारोऽस्माच्छरीरादित्यादिना निरूप्यते । अस्मात् स्थूलसूक्ष्मशरीरात् समुत्थाय परं ज्योतिः सुप्तावुपसम्पद्य 'प्राज्ञेनात्मना सम्परिष्वक्त' इति श्रुतिप्रसिद्धं तदेव प्राज्ञात्मकं यत्स्वं रूपं 'स्वमपीतो भवती'ति श्रुतिसिद्धं, तेन रूपेणाभिनिष्पद्यते । विशेषविज्ञानोपाधेरपगमात् । एष सुप्तजीवप्राप्यः प्राज्ञ आत्मा दहरविद्योपास्य इति । अनेन वाक्येन सुषुप्तजीवाधारत्वं परमात्मनो महिमा दर्शितो भवतीति नैतद्वाक्यपर्यालोचनया जीवो दहर इति सिध्यति ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥२१॥

दहरपुण्डरीकवेश्मगतत्वादेव दहरत्वे सिद्धे पुनर्दहरत्वकीर्तनं तस्य स्वाभाविकतासिद्ध्यर्थमिति शङ्कितुस्तात्पर्यम् । परिहारस्यायमभिप्रायः—आत्मनो दहरत्वस्य कीर्तनं न स्वाभाविकताद्योतनार्थम् । अपि तु सद्विद्यायां 'स य एषोऽणिमैतदात्म्यमिदं सर्वमि'ति नवकृत्वोऽभ्यस्तं तत् परमार्थगत्या विवक्षितम् । 'यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्य'मिति भूमविद्यागतेन वाक्येन निषिद्धमल्पत्वं वैपुल्यं च प्रतिपादितमित्यनयोर्विरोधे प्रसक्ते तत्परिहारार्थमष्टमोऽध्याय आरब्धः । तत्र सद्विद्यागतमल्पत्वमनूद्य तस्य दहरपुण्डरीकवेश्मतोपाधिकता प्रतिपाद्यत इति पुनः कीर्तनं सद्विद्यावाक्यगताल्पत्वानुवादो दहरपुण्डरीकोपाधिकत्वविधानार्थः । तत्प्रसङ्गादुपासनमपि किञ्चित्प्रतिपादितमिति नैतावता जीवो दहर इति वक्तुं शक्यते । युक्तश्चायमेवार्थ इत्याह—**श्रुत्यैव चेति** । अपहतपाप्मत्वादिगुणानां दहरपुण्डरीकान्तर्गतवस्त्वन्वयित्वेन प्रतीयमानतया दहराकाशान्तर्वर्तिन उपास्यत्वलिङ्गेन दहराकाशान्वयस्याभिभूततया भूताकाशपूर्वपक्षे अभिभूतता, जीवपूर्वपक्षे दहरत्वादीनामभिभूततेति पादसङ्गतिः ॥ २१ ॥

इति उत्तराधिकरणम् ॥ ६ ॥

## अनुकृतेस्तस्य च ॥२२॥

परं ज्योतिरूपसम्पद्येत्यत्र ज्योतिः परमेव भवति । तदेवोपक्रमगतापहतपाप्मादिस्वरूपमित्युक्तम् । अत्रापि परमात्मन एव ज्योतिस्स्वरूपत्वं निरूप्यत इति सङ्गतिः । तेजोधातुरितितावत्प्राप्तमित्यादि । नन्वत्र तेजोग्रहणे किं नियामकं, किंरूपं वा तेजः । तत्र तावत् 'न तत्र सूर्यो भाती'त्यनेन यस्मिन् सति सूर्यादयो न भान्तीत्यर्थकेन सूर्यादिज्योतिरभिभावकत्वं प्रतीतं तेजोलिङ्गम् । तत्रेति न सतिसप्तमी । अपि तु विषयसप्तमी । कारकविभक्तित्वात् । सतिसप्तमीत्वपक्षे तु उपपदविभक्तित्वापत्तेः । तथा च सूर्याद्यभास्यत्वं ब्रह्मलिङ्गम् । ब्रह्मणः स्वत एव भासमानत्वात् । नापि तस्मिन् भात्येव सर्वस्य चन्द्रसूर्यादेरनुभानं तेजोलिङ्गम् । तेजसः तेजःप्रतिघातकत्वेन तदनुसृत्यान्यतेजोभानासम्भवात् । न चेदं ज्योतिः प्रसिद्धज्योतिष्ष्वन्तर्भवति । प्रसिद्धज्योतिरभिभावकत्वादिना तदतिरिक्तस्यैव कस्यचित् पूर्वपक्षे अवगम्यमानत्वात् । नाप्यप्रसिद्धमेव किञ्चित्कल्पनीयम् । कल्पनागौरवात् । तदनित्यत्वे च तत्तत्कारणान्तरकल्पनायां पुनरपि गौरवम् । नित्यत्वे चन्द्रतारकाद्यभावदशायामपि घटपटादिभानं स्यात् । अनुपलब्धिपराहतं

चैतत् । अपिचायं मन्त्रः कठवल्ल्यां मुण्डके चाम्नायते । तच्च ब्रह्मप्रकरणम् । तत्रालौकिकस्य ज्योतिषः प्रतिपादनं न प्रकरणोपयुक्तम् । अतः प्रकरणोत्कर्षं प्रकल्प्य तदुपासनाविधिः तत्फलं च कल्पनीयमित्यतिगौरवम् । 'तस्य भासा सर्वमिदं विभातीति' च सर्वावभासकत्वं प्रतीयते । तदपि तेजःपक्षे न समञ्जसम् । चाक्षुषेष्वेवार्थेषु भानार्थं तेजोऽपेक्षा न सर्वत्र । न च सर्वशब्दः प्रकृतसूर्यादिपर इति नानुपपत्तिरिति वाच्यम् । तेजश्चाक्षुषेऽपि तेजसोऽनपेक्षणात् । तस्मादयुक्तोऽयं पूर्वपक्ष इति चेत्, अत्रोच्यते—न तत्रेति नेयं विषयसप्तमी । भाधातूक्तज्ञाने ज्ञाधातूक्त इव विषयानपेक्षणात् । अतस्तत्र विषयापेक्षाजननाय भातीत्यस्य णिजर्थगर्भताश्रयणीया । तथाच भासयतीत्यत्रेव विषयापेक्षा भवेत् । तद्वरमुपपदसप्तम्येव भावलक्षणे भविष्यति । तथा च तस्मिन् सति सूर्यादिकं न भातीत्यर्थो लभ्यते । नन्वेवं, तस्मिन् सति सूर्यादिकं न भाति, तमनुभातीति परस्परविरुद्धं वाक्यार्थद्वयमापद्यत इति चेन्न । तस्मिन् सति न भातीत्यनेन तत्प्रयुक्तस्पष्टभाननिषेधाभ्युपगमात् । ततश्च तमनुभातीत्यनेनार्थात्तमनुसृत्यास्पष्टं भातीति लभ्यते । 'तमेव भान्तमनुभाती'त्यत्र सर्वशब्दः प्रकृतसूर्यादिपरः । सर्वनाम्नः सति सम्भवे प्रकृतपरामर्शितायाः न्याय्यत्वात् । ततश्च सूर्याद्यस्पष्टभानहेतुत्वे सति तत्स्पष्टभानविरोधित्वं मन्त्रगतपादत्रयेण लभ्यते । इदं च ज्योतिष एव लिङ्गम् । ज्योतिषामेव सौरादीनां दीपादिज्योतिस्स्पष्टभानविरोधित्वे सति तदस्पष्टभानहेतुत्वं प्रायेण दृष्टम् । अतस्तेजोधातुरेव मन्त्रप्रतिपाद्यः । स च नित्यो न भवति । अपि तु सृष्ट्याद्युत्पन्नापञ्चीकृततेजसा सूर्यादिरिव समुत्पद्यत इति । न च तथासति सूर्यचन्द्राद्यभावेऽपि पदार्थभानं स्यादिति वाच्यम् । तस्य सूर्यचन्द्रादिमण्डलमात्रनिष्ठत्वाभ्युपगमेन तदुदयाद्यनुविधाय्युदयादेरभ्युपगमात् । न च चन्द्रसूर्यादिषु स्पष्टं भासमानेषु तेषां स्पष्टभाननिषेधः कथमिव वक्तुं शक्यत इति वाच्यम् । चन्द्रसूर्यादिमण्डलेषु हि तदेव ज्योतिः स्पष्टं भाति । चन्द्रसूर्यादयस्स्पष्टं भान्तीति तु प्रकृतज्योतिर्विवेकाग्रहात् भ्रममात्रम् । एतेनानुपलब्धिपराहतत्वं निरस्तम् । तस्य भासा सर्वमिदं विभातीत्यत्र च सर्वपदमादित्यादिपरमेव । न चादित्यादिभाने तेजसोऽनपेक्षेति पुनरप्यसाङ्गत्यमिति वाच्यम् । तस्य भासेत्यत्र न करणे तृतीया, अपि तु साहित्यार्था । उपक्रमानुसारेण मन्त्रस्य ज्योतिःपरतानिर्णये सति तदनुसारेणोपपदविभक्तिग्रहणे निरोधाभावात् । ततश्च 'तस्य भासा सर्वमिदं विभातीतिमन्त्रशेषेण प्रतिपादिते 'सूर्याद्यभावदशायामपि घटपटादिर्भासेते'ति शङ्का श्रुत्यैव परास्ता भवतीति । अस्तु वा करणतृतीया, तथापि न दोषः । चाक्षुषत्वेनैव तेजोऽपेक्षायाः कल्पनात् ।

न तु तत्र तेजोभिन्नत्वमपि विशेषणीयम् । गौरवात् तेजश्चाक्षुषेऽपि सर्वत्र विषये तेजस्संयोगस्य सुलभत्वात् तेजोऽवयवान्तरेण तेजोऽवयवान्तरसंयोगस्य क्वापि तेजश्चाक्षुषे व्यतिरेकादर्शनात् । तथा च मन्त्रस्वारस्येन तेजस्येव प्रतिपाद्ये स्थिते तदुपासनादिकल्पनं न दोषाय । लिङ्गेन ब्रह्मप्रकरणबाधश्चोपपन्नएव । **समानस्वभावकेष्वेवानुकारदर्शनादिति** । ननु, 'षट् पदान्यनुनिष्क्रामति' 'छायेव तां भूपतिरन्वगच्छत्' इत्यादौ वेदे लोके च गोपुरुषयोरनुकारो निबध्यते । अतः कथं समानस्वभावकेष्वेवेति नियन्तुं शक्यम् । उच्यते—तत्र गोपुरुषयोर्विषमस्वभावत्वेऽपि समानक्रियत्वमस्त्येव । इह तु तदपि न सम्भवति । ब्रह्मपक्षे हि 'तमेव भान्तमनुभाति सर्वमि'त्यत्र भास्वरतारूपा भा विवक्षितेति वक्तुं न शक्यते । नीरूपत्वात् ब्रह्मणः । अतो ज्ञानरूपा सेति वक्तव्यम् । तत्र वृत्तिरूपं ब्रह्मविषयं ज्ञानं यदि विवक्ष्येत, तदा विरोधः । ब्रह्मज्ञानबाध्यस्य सर्वस्य ब्रह्मज्ञानानुसारिज्ञानविषयत्वायोगात् । यदि स्वरूपज्ञानं विवक्ष्यते, तदाप्यनुपपत्तिरेव । ब्रह्मात्मविज्ञानसदृशघटादिविषयज्ञानान्तराभावेन 'तमेव भान्तमि'त्यादि समानक्रियत्वनिर्देशानुपपत्तेः । तमेव भान्तमिति भानाश्रयत्वनिर्देशोऽपि स्वरूपज्ञानपक्षे नोपपद्यते । तस्य भासेति व्यतिरेकनिर्देशोऽप्यनुपपन्न एव । तेजःपक्षे तत्र तं तस्येति तच्छब्दास्तु तन्मन्त्रपर्यालोचनालभ्यमेव तेजः परामृश्यन्ति । न ह्ययमस्ति नियमः—त्यदादिभिः स्वसन्निहितमेव प्रकृतं प्रकरिष्यमाणं वा शब्दतो यत्, तदेव परामर्शनीयमिति । तद्वति तत्प्रकारकत्वमित्यादिलक्षणवाक्येषु पुरुषभेदेन यदेव लक्ष्यस्वरूपपरिचायकतया बुद्धौ विपरिवर्तते, तत् सर्वं हि परामृश्यते । 'तेन रक्तं रागादि'त्यादौ च सूत्रे उदाहरणगतप्रकृत्यर्थपरामर्शकता सर्वनाम्न उपलभ्यते । न ह्यत्र लक्षणादौ ते ते अर्थास्तच्छब्दपरामर्शनीयाः पूर्वत्रोत्तरत्र वा तेषु तेषु सन्दर्भेषु शब्दतः सन्निहिता भवन्ति । अतः प्रकरणबाधेन तेजोधातुरेव लिङ्गबलान्मन्त्रार्थतया स्वीकर्तव्य इति । **यदेतत् तमेव भान्तमनुभाति सर्वमित्यनुभानमिति** । तमेव भान्तमनुभाति सर्वमित्यत्र हि तस्मिन् सति अस्मदृष्टं भातीत्यर्थपर्यवसानं पूर्वपक्षिणा दर्शयित्वा तेजोलिङ्गप्रतिपादकता तस्य वाक्यस्य दर्शिता । नेदमर्थवर्णनमक्षरानुगुणम् । अयं हि तत्राक्षरार्थः प्रतिपाद्यते—एवकारबलात्तावत् स एव भाति नान्य इत्येकोऽर्थः, पुनश्च तमनुसृत्य अन्यत् भासत इत्यपरः । द्वितीयार्थस्य पर्यवसानमन्यस्य सर्वस्य भानं तत्प्रयुक्तमिति 'तस्य भासे'तिचतुर्थचरणेन क्रियते । न चान्यत् न भासत इति तत् भानमनुसृत्यान्यत् भासत इति च विरुद्धम् । ज्ञानरूपं हि ब्रह्म स्वत एव भासमानम् । जडं तु प्रपञ्चजातं भानर-

हितमेव यद्यपि भवति, तथापि ज्ञानरूपे ब्रह्मणि अध्यासात् स्वावच्छिन्नेन ब्रह्मरूपज्ञानांशेन स्फुरति । अतोऽध्यासपरिनिष्पन्नं स्वरूपमादायानुभातीत्युच्यते । अतः परमार्थतः कल्पनातश्चोभयमुपपद्यत इति न विरोधः । अत इदं ब्रह्मपक्ष एव समञ्जसम् । तेजःपक्षे तु नेदं वाक्यं समञ्जसमित्याह—न तु तेजोधातुमिति । सूर्यादय इति सर्वशब्दसङ्कोचमङ्गीकृत्योक्तम् । यथाश्रुते तु सर्वशब्दे सुतरामप्रसिद्धिः । चाक्षुषेष्वेव तेजसोऽपेक्षणात् । समत्वाच्चेति । न च चाक्षुषत्वात्तेजोऽपेक्षेति नियन्तुं शक्यम् । तमश्चाक्षुषे तदनपेक्षणात् । यद्यपि चक्षूरूपं तेजस्तत्राप्यस्ति, तथापि तद्भिन्नं तेजस्तत्र नापेक्षितम् । न च तमोभिन्नचाक्षुषे आलोकापेक्षेति वाच्यम् । दीपप्रभातमस्सन्धिभागगते आलोकांशे तेजोऽन्तरसंयोगाभावेन अचाक्षुषतापत्तेः । अतस्तमोभिन्नतेजोभिन्नवस्तुगोचरचाक्षुष एव तेजोऽपेक्षेति स्वीकर्तव्यमिति भावः । अपि चेह तमनुभाति सर्वमित्येव नोच्यते । अपि तु तं भान्तमित्यप्युच्यते । तथा च तद्भानानुसार्यन्यभानमित्युच्यते । भानं चेह ज्ञानरूपमेव विवक्षितम् । तथा चान्यभाने तेजस्स्वरूपापेक्षायामपि न तज्ज्ञानापेक्षेति न तेजःपक्ष इदं वाक्यं समञ्जसम् । भिन्नस्वभावकेष्विति । यदि त्वेतादृशस्थले क्रियासादृश्यं वर्तत इति अनुकारो भवतीत्युच्यते । प्रकृतेऽपि तर्हि क्रियासादृश्यं वर्तत एव । ब्रह्मचैतन्यमेव हि घटपटाद्यवच्छिन्नं घटादिभानमिति ब्रह्मभानघटादिभानयोः काल्पनिकभेदमादाय सादृश्योपपत्तेः । तच्छब्दमाहरन् प्रकृतग्रहणं दर्शयतीति । न च तद्वति तत्प्रकारकत्वमित्यादाविव प्रकृते अप्रकृतार्थपरामर्शकतोचितेति युज्यते । द्विविधानि हि सर्वनामानि व्यवस्थितैकार्थानि अव्यवस्थितार्थानि च । तत्र लक्षणवाक्यगतान्यनेकलक्ष्यसङ्ग्रहोपयोगीनि अव्यवस्थितैकार्थानीति तत्र बुद्धिस्थं यदेव कस्यचिल्लक्ष्यं भवति, तस्य परामर्शो उचितो भवति । व्यवस्थितैकार्थपरेषु तु वाक्येषु लोकवेदयोर्व्यवस्थितार्थानि सर्वनामानि । तानि च शब्दतः प्रकृतमेव स्वरसतः परामृशन्ति । तदलाभे प्रकरिष्यमाणमपि, यथा 'अथैष ज्योतिरि'त्यादौ । क्वचित्तु प्रसिद्धमेव प्रतिपादयन्ति—'तौ राघवावामिति वालिनं प्रति राघववचने । तत्र हि परशुरामधनुर्भङ्गकत्वादिना प्रसिद्धाविति विवक्षितम् । एवंस्थिते अस्मिन्मन्त्रे तत्पदस्य प्रकृतब्रह्मपरामर्शकतोपपत्तौ न स्ववाक्यपर्यालोचनया लभ्यमेव ज्योतिः परामृश्यत इति वक्तुमुचितम् । तथाव्युत्पत्तेरभावेन क्लिष्टत्वात् । अपि चापेक्षितार्थप्रतिपादनसम्भवेऽनपेक्षितार्थप्रतिपादकता न वक्तव्या । तेजःपक्षे च अनपेक्षितार्थप्रतिपादनपरता स्यात् । अस्मिन् सन्दर्भे तदकीर्तनात् । ब्रह्मपक्षे तु तदपि लभ्यत इत्याह—अनन्तरं चेति । ब्रह्मण्यपि चैषामिति । तत्रेति येन सतिसप्तमीत्युच्यते,

तेनापि स्पष्टमित्यध्याहारः समाश्रित एव । तथा चोपपदविभक्तित्वमप्याश्रयणीयम्, अध्याहारश्चेति दोषद्वयम् । मम तु वैषयिकाधारार्थां कारकसप्तमीं वदतोऽन्तर्भावितण्यर्थतामात्रं स्वीकर्तव्यं विषयापेक्षासमुन्मेषार्थमिति नोपपदविभक्तित्वरवीकारप्रयुक्तो दोषः। एवं प्रकरणतत्पदश्रुतिसर्वावभासकत्वादिलिङ्गैः ब्रह्मपरतायां मन्त्रस्य निर्णीतायां 'तमेव भान्तं तस्य भासे 'ति च भानाश्रयत्वं भानसम्बन्धित्वं भानरूपेऽपि ब्रह्मणि यथाकथञ्चित् भेदकल्पनया योज्यमिति न काचिदनुपपत्तिः । भानसम्बन्धत्वादिना चाब्रह्मलिङ्गेन पूर्वपक्षिकल्पितेन ब्रह्मलिङ्गानां सर्वावभासकत्वादीनामभिभूततया अस्पष्टब्रह्मलिङ्गता ॥ २२ ॥

## अपि च स्मर्यते ॥२३॥

**न तत् भासयत इति** । तथा चोपबृंहणानुसारेणापि भातीत्यन्तर्भावितण्यर्थम् । तत्रेति च विषयसप्तमी । **यदादित्यगतं तेज इति** । ननु नेयं स्मृतिरिहोदाहर्तव्या । अत्र हि स्मृतौ जगदवभासिका आदित्यादिप्रभा परमात्मसम्बन्धिनीत्येतावत् प्रतिपाद्यते । 'न तत्रे'तिश्रुतौ तु परमात्मस्वरूपभूतं यद्भानं, तदेव घटपटाद्यवच्छिन्नं घटपटादिभानं भवति । न तु सर्वस्य प्रपञ्चस्यान्यत् भानं विद्यत इति अतोऽनयोः श्रुतिस्मृत्योरुपबृंहणीयोपबृंहणभावः कथम् । असमानार्थकत्वादिति चेत, उच्यते—आद्यमेव वचनं प्रकृतोदाहरणम् । 'यदादित्य' इति वचनं तु दृष्टान्तार्थम् । यथा आदित्यादितेजः परमात्मसम्बन्धि परमात्मशक्त्यधिष्ठितम्, एवं घटपटादिभानमपि परमात्मसम्बन्धि परमात्मनः खिल्यभाव इति ॥ २३ ॥

॥ इति अनुकृत्यधिकरणम् ॥ ७ ॥

## शब्दादेव प्रमितः ॥ २४ ॥

**ज्योतिरिवाधूमक इति** । अधूमज्योतिरिव प्रकाशमान इत्यर्थः । **स एवाद्य स उ श्व इति** । सर्वदा विद्यमानो नित्य इति यावत् । त्वया यत् पृष्टं, तदेतद्वै इति नचिकेतसं प्रति यमस्य वचनम् । पूर्वं यथा न तत्रेति वचनस्य स्मृत्यनुसार्यर्थो वर्णितः, एवमस्यापि मन्त्रस्य स्मृत्यनुसारेण जीवपरत्वं वर्णनीयमित्याह—**स्मृतेश्चेति** । नन्वङ्गुष्ठमात्रत्वं जीवेऽपि स्वाभाविकं वक्तुं न शक्यते । अपि त्वौपाधिकम् । जीवो हि स्वभावतः विभुरिति 'तद्गुणसारत्वादि 'त्यत्र प्रतिपादयिष्यते । एवमौपाधिकमीश्वरेऽपि प्रतिपादयितुं शक्यम् । अतः कथं जीव एवाङ्गुष्ठमात्र इति निर्धारयितुं शक्यते । न च स्मृत्यनुसारेण तन्निर्णयः । तथास-

ति श्रुतौ 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि 'ति ब्रह्मणोऽङ्गुष्ठमात्रत्वनिर्देशात् श्रुतिप्रसिद्धमेव प्रत्यासत्त्येहाङ्गुष्ठमात्रत्वं ग्राह्यं स्यात् । नन्वङ्गुष्ठमात्र इति श्रुतौ 'अङ्गुष्ठं च समाश्रित'इति वाक्यशेषपर्यालोचनया पादाङ्गुष्ठोपाधिकत्वेनाङ्गुष्ठमात्रत्वं परमात्मनो निर्दिश्यत इति गम्यते । भोजनानन्तरं पादाङ्गुष्ठोपरि जलप्रस्रावणार्थोऽयं मन्त्रः । अतस्तत्राङ्गुष्ठं च समाश्रित इति पादाङ्गुष्ठग्रहणमेव ह्युचितम् । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती'त्यत्र तु हृदयोपाधिकं तत् प्रतीयते । अत्र ह्यात्मशब्दः शरीरपरः । यद्यप्यात्मपदम् 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनी'ति अनेकार्थसाधारणं, तथापि मध्य इतिपदसमभिव्याहारात् सावयवस्य ग्रहणमुचितमिति सावयवो देह एव प्रकृते आत्मपदेन ग्राह्यः । तन्मध्यं च योग्यतया हृदयमेव भवति । अतो नानयोर्मन्त्रयोरर्थप्रत्यभिज्ञास्तिास्मृत्या त्वस्ति। तत्र मरणकाले अङ्गुष्ठमात्रत्वं निर्दिष्टम् । तदा च जीवो हृदयोपाधिक एव । 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामती- ति हृदय एव मरणकाले प्रवेशप्रतिपादनात् । अतो हृदयोपाधिकमङ्गुष्ठमात्रत्वं निर्दिश्यमानं जीवस्यैवासाधारणमिति चेन्न । 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ती'ति श्वेताश्वतरे हृदयोपाधिकमप्यङ्गुष्ठमात्रत्वं परमात्मनो निर्दिष्टम् । अतोऽङ्गुष्ठमात्रत्वं श्रुतिप्रसिद्धं परमात्मन एवेति स एवेहाङ्गुष्ठमात्रस्स्यात् । यदि तु 'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरते स्वकर्मभिः । अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो य' इति श्रुतौ जीवेऽपि अङ्गुष्ठमात्रत्वमुक्तमित्युच्यते, तदा अङ्गुष्ठमात्रत्वश्रुतेः हृदयोपाधिकायाः जीवब्रह्मसाधारण्येन प्रकृतमन्त्रस्य ईशानो भूतभव्यस्येति वाक्यशेषानुसारेण परमेश्वरपरतैवास्त्विति चेत्, उच्यते—परमात्मनो हृदयोपाधिकत्वं नासाधारणम् । सर्वोपादानस्य सर्वनियन्तुः सर्वानुप्रवेशेन सर्वेण समत्वात् । उपासनार्थमपि हृदयमेव नासाधारणमायतनम् । चक्षुरादीनामपि तथात्वाम्नानात् । प्रत्युतोपासनोपयुक्तहृदयोपाधिकत्वेऽभ्युपगम्यमाने हृदयाग्रोर्ध्वसुषिरोपाधिकमणीयस्त्वमेव प्राप्नुयात् । तथा च श्रुतिः—'एष म आत्मान्तर्हृदयेऽणीयान् दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशे इति च । जीवस्य त्वन्तःकरणोपाधिकत्वादन्तःकरणस्य हृदयपुण्डरीकात्मकगोलकनिष्ठत्वादसाधारणं हृदयमायतनं भवतीति तदुपाधिकमङ्गुष्ठमात्रत्वं जीवेषु स्फुटम् । लोकेऽपि ह्यात्मा हृदयदेश एव प्रसिद्धः । अत एवात्मानं हृदयदेशे

निर्दिशति । नन्वेवमप्यङ्गुष्ठमात्रत्वमुपक्रमगत्या न्यायेन जीवपरमिति यावत् कल्प्यते, तावत् वाक्यशेषानुसारेण परमात्मन एव तत्सिद्ध्यतीति चेत् न। 'ईशानो भूतभव्यस्ये'ति वाक्यशेषोऽपि हि प्रकृते झटिति नेश्वरनिर्णयक्षमः। इतः पूर्वमन्त्रे 'य इमं मध्वदं वेदात्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वैतदि'ति स्वशब्देन जीवं निर्दिश्य भूतभव्येशानत्वस्यात्राम्नानात् । जीवगतं भूतभव्येशानत्वं सङ्कुचितं स्वोपकरणविषयं, तत्पर एव स मन्त्रभागो वक्तव्यः । तत्प्रत्यभिज्ञानादङ्गुष्ठवाक्येऽपि सङ्कुचितस्यैव तस्य ग्रहणमुचितमिति शङ्काकलङ्कितस्य वाक्यशेषस्येश्वरनिर्णायकत्वासम्भवात् । अतः प्रथमश्रुतेनाङ्गुष्ठमात्रत्वेन जीवस्वरसेन जीवे निर्णीते भूतभव्येशानत्वं चरमश्रुतं पूर्वमन्त्रानुसारेण जीवविषयतया प्रत्यभिज्ञायमानं च जीव एव यथाकथञ्चिद्व्याख्येयमिति। न चैव'मेतद्वैतदि'ति वाक्यशेषानुपपत्तिः । 'अन्यत्र धर्मा'दित्यादिना परमात्मन एव पृष्टत्वादिति वाच्यम्। तदुपयोगितया 'येयं प्रेत' इति जीवस्यापि पृष्टत्वात् परमेश्वरवादिनापि तथैव वक्तव्यम् । न ह्यत्रेशानत्वादिना परमात्मा विवक्षितः । 'अन्यत्र धर्मादि'त्यादिना निर्विशेषस्यैव पृष्टत्वात् । परं तु तदुपयोगितया तत्पदवाच्यार्थनिरूपणं परमात्मपक्षे वक्तव्यम् । तत् पूर्वपक्षिणोऽपि त्वंपदार्थविषयत्वे न काचिदनुपपत्तिः । **न ह्यन्यः परमेश्वरादिति** । अङ्गुष्ठमात्रत्वं परमात्मन्यपि सम्भवतीत्युत्तरत्र वक्ष्यति—'हृद्यपेक्षयेति'। यद्यपि तत् जीवे न्यायानुसारेण प्राप्नोति, तथापि 'ईशानो भूतभव्यस्ये'ति वाक्यशेषानुसारेणैव परमात्मविषयमेवेति झटिति निर्णीयते । न्यायानुसारेण निर्णयमपेक्ष्य वाक्यशेषानुसारेणैव हि तमभ्यर्हितं मन्यन्ते । न च वाक्यशेषोऽपि 'य इमं मध्वदं वेदे'ति मन्त्रशेषानुसारेण सङ्कुचद्वृत्तिराश्रयणीयः । श्रुतिभञ्जकस्य प्रायपाठस्यानाश्रयणीयत्वादिति भावः । **एतद्वैतदिति चेति** । यद्यपि तत्त्वंपदार्थनिरूपणमुभयमपि प्रकृतोपयुक्तं, तथापि त्वंपदार्थस्य परिच्छिन्नतया स्वविभूतिस्वामित्वेन च लोकसिद्धत्वात् तेन रूपेण प्रतिपादनं न शास्त्रमपेक्षते, अपि तु असङ्गत्वादिरूपेण । तत्पदार्थस्तु वाच्यो लक्ष्यश्च शास्त्रेणैव व्युत्पादनीय इत्यस्ति विशेष इति भावः । **शब्दादेवेत्यभिधानश्रुतेरेवेति** । ईशानशब्दोऽपि परमेश्वरे योगरूढः । तथा च प्रकृते परमात्मविषयं न लिङ्गमात्रं भूतभव्येशानत्वम् । अपित्वीशानश्रुतिरपि । ननु, नात्रेशानपदस्य रूढ्यर्थग्रहो वक्तुं शक्यते । येन श्रुतिस्स्यात् । योगरूढपदानां हि यत्र यौगिकार्थप्रतिसम्बन्ध्यर्थोपादानं, न तत्र रूढ्यर्थविवक्षा । अत एव 'पद्मानि यस्याग्रसरोरुहाणि विकासयत्यूर्ध्वमुखैर्मयूखै'रित्यत्र सरोरुहपदातिरेकेण पद्मपदमुपात्त-

म् । सरोरुहपदयोगार्थप्रतिसम्बन्धिनो हिमवदग्रभागस्य यस्याग्रेत्युपादानात् । उच्यते—रूढ्यर्थाविवक्षायां न योगार्थप्रतिसम्बन्ध्युपादानमनुगतं प्रयोजकम् । तथासति 'कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये' इत्यत्रापि पिनाकपाणिपदगम्ययोगार्थप्रतिसम्बन्धिनोऽनुपादानात् तत्र रूढ्यर्थाविवक्षाकारणाभावाद्धरस्येति पृथक्पदं नोपादीयेत । अपि च योगार्थप्रतिसम्बन्ध्युपादानमात्रं रूढ्यर्थाविवक्षायां कारणमिति निर्बीजं कथं वक्तुं शक्यम् । नहि तात्पर्याभावेन तद्व्याप्तम् । निर्मूलत्वात् । न च तद्रूढ्यर्थप्रतिपत्तिप्रतिबन्धकम् । अतः पद्मानि यस्येत्यादौ रूढ्यर्थाविवक्षायामन्यदेव कारणं वक्तव्यम् । तत्र काव्यानां व्यञ्जनाप्रधानत्वाद्व्यञ्जनोपयोगी योऽर्थः, तत्रैव कवेस्तात्पर्यातिशय इति यस्याग्रसरोरुहाणीत्यत्र हिमवदग्रभागगतेषु सरस्सु विद्यमानानां विकसनमूर्ध्वमुखरविमयूखकृतमिति वर्णनं हिमवदौन्नत्यव्यञ्जनाक्षममिति सरोरुहपदं तादृशव्यञ्जनोपयुक्तं योगार्थमादायैव भवतीति कवेस्तत्रैव तात्पर्यमिति रूढ्यर्थप्रतीतिर्झटिति न स्यादिति तदर्थं पुनः पद्मपदोपादानम् । एवंचसति पिनाकपाणेरित्यत्रापि हरस्येति प्रथग्ग्रहणमुपपद्यते । पिनाकपाणिपदस्य शिवे शौर्यातिशयद्योतकतया योगार्थपरत्वस्यैवाभिमतत्वात् । अतिशूरस्य पिनाकपाणेरपि धैर्यच्युतिं सम्पादयामि, किमु वक्तव्यमन्यस्य धैर्यच्युताविति हि तत्र विवक्षितोऽर्थः । ततश्च यत्र योगरूढं पदं व्यञ्जनाव्यापारव्यग्रं तन्निर्वाहकतया योगार्थमेवापेक्षते, तत्र रूढ्यर्थाविवक्षा युक्ता । झटिति तदप्रतीतेः । नैवं प्रकृते वाच्यातिरेकेणान्यार्थो विवक्षितः । परमात्मन एव मुख्यया वृत्त्या गम्यमानस्य विवक्षाविषयत्वात् । अपि च भूतभव्यस्येति ईशानपदे गुणभूतम् । न तेन प्रधानपदगतरूढेः परित्यागो न्याय्यः । पद्मानि यस्येत्यत्र तु सरोरुहपदमग्रपदमपेक्षते । न हि तेन विना व्यञ्जनोपयोगिहिमवदग्रभागगतसरस्सु विद्यमानत्वमर्थो लभ्यते । अतस्तत्र यः पदस्वारस्यलभ्यो योगार्थः, सोऽपि परित्यज्यत एव । पदस्वारस्यलभ्यस्य योगार्थस्य सामान्यरूपस्य निरङ्कुशत्वात् । तथाच विशेषणेनापि यस्याग्रेत्यनेन स्वापेक्षितेन यथा योगार्थसङ्कोचोऽपि सह्यते, एवं रूढ्यर्थपरित्यागोऽपि सोढव्यः । प्रकृते तु भूतभव्यपदं न योगलभ्यार्थसङ्कोचकम् । तदभावेऽपि ईशानपदेनैव सङ्कोचकाभावात् निरङ्कुशमैश्वर्यं लभ्यते । परं तु तत्सिद्धार्थानुवादमात्रमिति न तेन रूढ्यर्थसङ्कोचोऽङ्गीकर्तुं युक्तः । अतो युक्तमीशानपदं प्रकृते श्रुतिरेवेति ॥ २४ ॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥

**मनुष्यानेवाधिकरोतीति** । मनुष्यग्रहणं वक्ष्यमाणाधिकारवत्परं सत् त्रैवर्णिकानेव विषयीकरोति । शक्तिः साङ्गप्रयोगानुष्ठानसामर्थ्यम् । तदभिव्यञ्जकं चाग्निविद्यादिकं हिरण्यव्रीह्यादिकं च । तेन विद्यादिरहितानां व्यावृत्तिः । अर्थित्वादिति वीतरागव्यावृत्तिः । अपर्युदस्तत्वात् उपनयनादिशास्त्राच्चेति पतितशूद्रषण्डादिव्यावृत्तिः । अधिकारलक्षणे पूर्वतन्त्रगतषष्ठाध्याये । **यदप्युक्तमित्यादि** । नन्वियं शङ्का परमेश्वरेऽपि मनुष्यहृदयेऽन्तर्यामितया स्थिते हृदयोपाधिकमङ्गुष्ठमात्रत्वं सम्भवतीति 'हृद्यपेक्षये'ति सूत्रेण परिहृतैव । पुनः किमर्थमनूद्यते । कथं च तत्त्वमस्यादिवाक्यतुल्यताभ्युपगमेन परिहारोऽस्याः । तथासति अङ्गुष्ठमात्रपदं जीवपरं स्यात् । तथा चातिमात्रस्यापि परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यत इत्यादिभाष्यवाक्यं च विरुध्येत । उच्यते—पूर्वं केवलतत्पदार्थपर एवायं मन्त्र इति स्वीकृत्य सिद्धान्तपूर्वपक्षौ प्रवृत्तौ तदनुगुणतया । अधुना तु तत्त्वमस्यादिवाक्यसमानार्थक इति पक्षमादाय शङ्कासमाधानादिकमिति न काचिदनुपपत्तिः । युक्तश्चायमेव पक्षः । अस्मिन् पक्षे अङ्गुष्ठमात्रपदस्वारस्यहानाभावात् । अस्मिन् पक्षे उत्तरमन्त्रैकार्थ्यं दर्शयति—**एतमेवार्थमित्यादिना** । अयं हि मन्त्रो जीवानुवादेन परमात्मैक्यपर एवेत्यङ्गुष्ठमात्रपदं जीवपरमेव । 'तं स्वाच्छरीरात् प्रवृहेदि'ति शरीराद्विविक्तं गृह्णीयादित्यर्थकं सत् जीवलिङ्गमेव । देहविविक्ततया ज्ञातव्यत्वं हि तदविविक्ततया गृहीते जीव एवोचितम् । किं चैवंसति 'य इमं मध्वदं वेदे'ति पूर्वमन्त्रैकार्थ्यमपि लभ्यते । एवंचसति 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ती'ति श्वेताश्वतराणां मन्त्रोऽपि तत्त्वमस्यादिवाक्यसमानार्थकः । अस्मिंश्च पक्षे अधिकरणमित्थं द्रष्टव्यम्—'अङ्गुष्ठमात्र' इत्यादिर्मन्त्रः जीवस्येशानत्वेन उपासनापरः, तत्त्वमस्यादिवाक्यसमानार्थको वेति । तत्राभेदपरत्वे जीवस्य विशिष्य अङ्गुष्ठमात्रत्वेनोपादानं व्यर्थं स्यादिति पूर्वपक्षे अङ्गुष्ठमात्रत्वेन तदनुवादः परिच्छिन्नपरिमाणतायाः अपवादार्थ इति जीवब्रह्माभेदपरमेवेति सिद्धान्त इति 'हृद्यपेक्षये'ति सूत्रमपि जीव एवौपाधिकाङ्गुष्ठमात्रतोपपादनपरमिति न काचिदनुपपत्तिः । अङ्गुष्ठमात्रत्वेन जीवलिङ्गेन परमात्मलिङ्गस्य तदभेदलिङ्गस्य चेशानत्वस्य अभिभूतत्वादस्पष्टता ॥ २५ ॥

इति प्रमिताधिकरणम् ॥ ८ ॥

## तदुपर्यपि बादरायणस्सम्भवात् ॥२६॥

प्रासङ्गिकीं सङ्गतिमाह—**अङ्गुष्ठमात्रश्रुतिरिति** । **तत्प्रसङ्गादिति** ।

मनुष्याधिकारत्वादिति श्रवणे हि मनुष्याणामेवाधिकारो नान्येषामिति भ्रमः प्रसक्तः, तन्निरासार्थ इत्यर्थः । सूत्रे तदुपरीत्येतत् न तेषां मनुष्याणामुपरीत्येतदर्थकं षष्ठीसमासरूपम् । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने'ति अव्ययस्य षष्ठीसमासनिषेधात् । अपि तु लुप्तषष्ठीकं भिन्नं पदम् इत्यभिप्रेत्य व्याचष्टे—तेषामिति । देवादीनां चेतनत्वादिसम्भवासम्भवाभ्यां ब्रह्मविद्याधिकारसंशये सिद्धान्तोपक्रममिदमधिकरणम् । पूर्वपक्षस्तु 'विरोधः कर्मणी'त्यादिना दर्शयिष्यते । सम्भवादिति । उत्सर्गप्राप्तस्य बाधानुपलम्भादित्यर्थः । विकारविषयविभूतीति । अमरावत्यादिविकारगोचरैश्वर्येत्यर्थः । मन्त्रः 'सहस्राक्षो गोत्रभिद्वज्रबाहुरि'त्यादिः । अर्थवाद इन्द्रप्रजापतिसंवादादिरूपः । इतिहासो भारतादिः । पुराणं विष्णुपुराणादि । लोकः शिलाशास्त्रम् । उपनयनस्य वेदार्थत्वादिति । ननु, नोपनयनं वेदाध्ययनमात्रार्थम्, अपि तु यानि वैदिकानि कर्माणि सन्ध्यावन्दनप्रभृतीनि, तत्सर्वार्थमित्यत एव मूकबधिरादीनामप्युपनयनं सम्भवद्वैदिककर्माधिकारसिद्ध्यर्थम् । तथा च 'अष्टवर्षं ब्राह्मणमुपनयी'तेत्यादिभिर्वाक्यैः ब्राह्मणत्वादिसंयुक्तस्यैवोपनयनविधानात् तदभावे देवानां कथं वैदिक्यां ब्रह्मविद्यायामधिकारस्स्यात् । अपि चाध्ययनाभावे स्वयंभातवेदत्वमात्रेण कथमधिकारः । अध्ययनसंस्कृतस्यैव वेदस्य स्वकार्यफलपर्यन्त उपयुक्ततया स्वयम्भातवेदेन जातमप्यात्मतत्त्वज्ञानं नापरोक्षतापर्यवसायि भवेत् । उच्यते—यान् प्रत्युपनयनं विहितं, तान् प्रत्येव तत् वैदिककर्माधिकारप्रयोजकम् । अन्यथा शूद्रादीनां साधारणेषु धर्मेषु असाधारणेषु च तान् प्रत्येव विहितेषु अधिकारो न स्यात् । विद्यार्थोपनयनं तु देवादीनामप्यस्ति । 'तौ ह समित्पाणी प्रजापतिसकाशमाजग्मतुः एकशतं हवै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासे'तिलिङ्गात् अष्टवर्षादिवाक्यविहितोपनयनस्य देवेष्वभावेऽपि न काचित् क्षतिः । स्वयंभातवेदानामपि जन्मान्तरकृताध्ययनसंस्कारस्याविशिष्टतया न स्वाध्यायाध्ययनविधिविरोधः । अस्मिन्नपि हि जन्मनि क्रियमाणमध्ययनं न तत्कालमेव विचारादिषूपयुज्यते, अपि तु संस्कारद्वारैव । तथाचाध्ययनविधिरपि अध्ययनजन्यसंस्कारप्रयुक्तस्मृतिविषयीभूत एव स्वाध्यायः स्वकार्ये उपयुज्यत इत्येतावदेव बोधयतीति स्वयंभातवेदानां देवानामध्ययनसंस्कारजन्यस्मृतेर्विद्यमानतया नाधिकारानुपपत्तिः । वस्तुतस्तु संभवमात्रेणेदमुक्तम् । न तु देवानामध्ययननियमोऽपेक्षितः । 'स्वाध्यायोऽध्येतव्य' इति हि स्वशाखाया मेवाध्ययननियमः । कथमन्यथा सर्ववेदार्थोपसंहारेण क्रियमाणे कर्मण्यधिकारः । सर्वशाखोपेतसकलवेदानामध्ययनासम्भवात् स्वपदार्थस्य विवक्षितत्वाच्च पितृपितामहादिपरंपरागता च

स्वीया शाखा न देवानामस्तीति न तेषु स्वाध्यायाध्ययननियमः प्रवर्तत इत्यपि वक्तुं शक्यम् । न देवानां देवतान्तराभावादिति । इन्द्रादयो देवाः कर्मसु नाधिक्रियन्ते । ऐन्द्रयागे हि इन्द्रमुद्दिश्य दध्यादिकं त्यक्तव्यम् । तत्रेन्द्रो नाधिक्रियते । इन्द्रेण स्वोद्देशेन द्रव्यत्यागायोगात् । स्वत्वनिवृत्त्यनुकूलो व्यापारो हि त्यागः । न चेन्द्रेण स्वोद्देशेन कृते स्वत्वनिवृत्तिर्भवति । अतोऽन्योद्देश एव स्वत्वनिवृत्त्युपयोगीति इन्द्रदेवत्ये यागे नेन्द्रस्याधिकारः । एवं भृग्वादीनां गोत्रप्रवर्तकानामृषीणां नाधिकारः । तेषां स्वप्रवरभूतऋष्यन्तराभावेन 'त्रीन्वृणीत' इतिशास्त्रविहितार्षेयवरणाङ्गाभावादित्यर्थः ॥ २६ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

नन्वन्तःकरणाद्युपेतशरीराभावे देवानां विद्याधिकारो न सम्भवतीति तदुपपत्तये सिद्धान्तिना देवानां मन्त्रार्थवादप्रामाण्यमनुसृत्य शरीरे अभ्युगते देवानां कर्माङ्गभूतानां यदि शरीरित्वमभ्युपगम्यते, तदा ऋत्विगादिवत् कर्मसु सन्निधानं स्यादित्यापाद्यते विग्रहमनभ्युपगच्छता पूर्वपक्षिणा । तत् नोपपद्यते । तथा हि—किमत्र सन्निधानापादकं शरीरित्वमात्रम्, उताङ्गत्वविशिष्टम् । नाद्यः । न हि शरीरिणः सर्वस्य कर्मसान्निधानम् । असन्निहितानां शरीरिणां भूयसामुपलम्भात् । न द्वितीयः । शरीरीत्यंशस्य व्यर्थत्वात् । अङ्गत्वमेव हि कर्मसान्निधाने प्रयोजकम् । उपकार्योपकारकभावापन्नानां दण्डचक्रचीवरादीनां समानदेशकालत्वं दृष्टमिति ह्यङ्गप्रधानभावापन्नानां एकदेशकालत्वरूपं सन्निधानं स्वीक्रियते । तत्र शरीरित्वे सतीति व्यर्थम् । अत एव जुह्वादीनामशरीरिणामपि कर्मसन्निधानं सिध्यति । तथा च यन्मते देवानां शरीरं नास्तीति, तेनाप्यङ्गत्वादेव कर्मसन्निधानं स्वीकर्तव्यम् । तथा च तत्प्रयुक्तो दोष उभयोरपि तुल्य इति कथं विग्रहवत्त्वाभ्युपगम एव पूर्वपक्षिणा स आपाद्यते । यदि तु अङ्गस्य कर्मसु सन्निधानमित्युत्सर्गः । प्रवसद्यजमानकर्तृके विष्णुक्रमादौ असन्निधानस्यापि बाधकवशेनोपगमादित्युच्यते, तन्ममापि तुल्यम् । न च येन विग्रहोऽभ्युपगम्यते, तेन शब्दातिरिक्तैव देवता स्वीकर्तव्या । तमनभ्युपगच्छता तु शब्दरूपत्वमपि स्वीकर्तुं शक्यत इति तस्याः कर्मकाले शब्दोच्चारणे सन्निधानमुपपद्यते । न तु तदर्थरूपाया इति वाच्यम् । विग्रहमनभ्युपगच्छतापि इन्द्रादिपदानामर्थो ह्यभ्युपगन्तव्यः । तथा च 'ऐन्द्रं दध्यमावास्यायामि'त्यादौ तद्धितार्थस्येन्द्रादिप्रातिपदिकार्थेनैवान्वयात् तस्यैव देवतात्वमभ्युपेतव्यं,

न तु शब्दमात्रस्य। ननु, 'ऐन्द्रं दधी'त्यत्र अयं वाक्यार्थः—चतुर्थ्यन्तपदप्रतिपाद्यमानेन्द्रसम्बन्धि दधीति इन्द्रस्य दध्नश्च सम्बन्ध उद्देशघटित एव । तथाचेन्द्रविषयकचतुर्थ्यन्तपदोद्देशतुल्यकालकर्तृकत्यागविषयो दधीति पर्यवसितोऽर्थः । तथा च कर्माङ्गतयोद्देश एव विधीयत इति स सन्निहित इति चेत्, तुल्यं विग्रहवादिनोऽपि । अतः कथं विग्रहवादिमत एव इन्द्रादिदेवानां सन्निधानमापाद्य अनुपलब्ध्यादिविरोध आशङ्क्यत इति चेत्, एवम्मन्यते—येन हि मन्त्रार्थवादप्रामाण्यमुपेयते, तेनेन्द्रागमनादिप्रतिपादकार्थवादादीनामपि तदेष्टव्यम् । एवं च तदाह्वानादिप्रदिपादकानां मन्त्राणामपि दृष्टार्थत्वमुपेयम् । नेदं तेषां स्वार्थप्रामाण्यमनभ्युपगच्छता स्वीकर्तव्यमित्यास्ति विशेषः पूर्वपक्षसिद्धान्तिनोः। अतः कर्मणि विरोधः प्राप्नोतीति भावः । **एकस्यापि देवतात्मन इति** । यद्यपि मानान्तराविरोधे मन्त्रार्थवादानां स्वार्थे प्रामाण्यमभ्युपगतमिति देवतागमनाद्यर्थप्रतिपादकानां मन्त्रार्थवादानामर्थस्यानुपलब्ध्यादिविरोधोऽस्ति चेत्, तेषां स्वार्थे प्रामाण्यं नास्तीत्यपि परिहारो वक्तुं शक्यत एव । एवंचसति 'आयाहीन्द्रे'त्यादि मन्त्राणामिन्द्राह्वानादिप्रतिपादकानामिन्द्रागमनाद्यर्थवत्त्वासम्भवाददृष्टार्थत्वमप्यस्त्वित्यपि वक्तुं शक्यम्। अनेनैवाभिप्रायेण देवतागमनमनभ्युपगम्यैव परिहारभागस्यार्थान्तरं वक्ष्यति—अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्येत्यादिना । अत्र तु वस्तुगतिमनुसृत्य परिहारो दर्शित इति द्रष्टव्यम् । दर्शनादित्येतत्सौत्रं पदं श्रुतिस्मृत्योर्महिमविशेषवतां कायव्यूहदर्शनादित्यर्थतया व्याचष्टे । **तथाहीति** । **कति देवा इति** । शाकल्येन वैश्वदेवशस्त्रे प्रतिपाद्याः कति देवा इति गूढाभिसन्धिना पृष्टे 'सहैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्रीच शता त्रयश्च त्रीच सहस्रे'ति स याज्ञवल्क्यः यथा निविदा मन्त्रविशेषेण देवतासंख्यामवगम्य तन्मन्त्रप्रतिपाद्याः कति देवा इति शाकल्येन पृष्टः एतयैव निविदा शाकल्यं प्रत्युत्तरं दत्तवान् । उत्तरमेवाह—यावन्तो वैश्वदेवस्येति । तस्यैवार्थस्य विशेषेण प्रदर्शनं 'त्रयश्च त्रीणि च शतानि त्रयश्च त्रीणि च सहस्राणी'ति पुनःपुनस्तदनन्तरं शाकल्येन देवताविषये संख्याप्रश्ने कृते त्रयस्त्रिंशदिति षडिति त्रय इत्यध्यर्धइत्येक इति याज्ञवल्क्येनोत्तरितम् । पुनश्च 'तादृशसंख्याविशिष्टाः के त' इति प्रश्ने षडधिकत्रिशतोत्तरत्रिसहस्रसंख्याकाः ये पूर्वमुक्ताः, ते त्रयस्त्रिंशत एव महिमानः व्यूहाः । 'के ते त्रयस्त्रिंशदि'तिप्रश्ने अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः । तत्राग्निपृथिवीवाय्वन्तरिक्षादित्यद्युचन्द्रनक्षत्राण्यष्टौ वसवः । सर्ववासहेतुत्वात् । एकादशेन्द्रियाण्येका-

दश रुद्राः । मरणकाले रोदनहेतुत्वात् । द्वादश मासा द्वादशादित्याः । परिपाचकतया सर्वेषामायूंष्याददाय यन्तीत्येते आदित्याः । अशनिपशुभ्यां सहितास्त्रयस्त्रिंशत् । एते त्रयस्त्रिंशदपि अग्न्यादिद्युलोकान्तेषु षट्स्वन्तर्भवन्ति । तेऽपि षट् त्रिषु लोकेषु । ते त्रयोऽपि द्वयोरन्नप्राणयोरन्तर्भवन्ति । अध्यर्धशब्दार्थश्च सर्ववृद्धिहेतुर्वायुः । स एकः प्राणः । अत्र प्रकरणे आद्यपर्याये षडधिकत्रिशतोत्तरत्रिसहस्राणि ये दर्शिताः, ते त्रयस्त्रिंशतो व्यूहा एवेति भवत्यनेकप्रतिपत्तावुदाहरणम् । षडाद्यन्तर्भावस्तु अधिकसङ्ख्यानामेव पुनः संग्रहविशेषेण परिगणनं, न व्यूहरूपमिति द्योतयितुं षडाद्यन्तर्भावक्रमेणेत्युक्तम् । प्रकृतवाक्यतात्पर्यविषयीभूतस्त्वर्थः प्राणदेवतायाः सर्वेष्वपि प्राणिषु वृद्धिहेतुतया आध्यात्मिकवायुरूपेण आत्मानं व्यूह्यावस्थितत्वात् सर्वात्मकतेति भवति तदपि अनेकप्रतिपत्तावुदाहरणम् । तदिदमाह—प्राणैकरूपतामित्यादिना । देवतानामिति तु प्राणिमात्रोपलक्षणम् ॥ २७ ॥

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥

औत्पत्तिकं हि शब्दस्येति । अनेन 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः । तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वादि'ति जैमिनिसूत्रार्थः संगृहीतः । तस्य चायमर्थः—बादरायणग्रहणं पूजार्थम् । शब्दस्यार्थेन प्रतिपाद्येन सम्बन्धो वाच्यवाचकताशक्तिरूप औत्पत्तिकः । यथा देवदत्तादिव्यक्तिविशेषे उत्पन्ने पिता यत्र देवदत्त इति सङ्केतयति, नैवं व्रीह्यादिशब्दः तेष्वर्थेषु केन चित्सङ्केतितः । अतस्तत्र शब्दार्थयोः सम्बन्धोऽसाङ्केतिकः । अतस्सङ्केतार्थं बुध्यपेक्षाभावात् सापेक्षतालक्षणमप्रामाण्यं न प्रसज्यते । तदिदमुक्तमनपेक्षत्वादिति । अर्थे अलौकिकश्रेयस्साधनतादिरूपे अनुपलब्धे प्रमाणान्तरानधिगते । अनेन ज्ञातार्थज्ञापकत्वं प्रमाण्यपरिपन्थि नास्तीत्युक्तम् । उपदेशो विधिवाक्यम् । तस्य श्रेयस्साधनतादिरूपस्यार्थस्य । ज्ञानं ज्ञानकरणम् । अनेनाज्ञापकत्वं प्रामाण्यपरिपन्थि निरस्तम् । अव्यतिरेकश्च व्यतिरेको बाधः, तद्राहित्यम् । अनेन भ्रमसंशयरूपज्ञानजनकत्वं प्रामाण्यपरिपन्थि निरस्तम् । यतः औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, अतोऽनपेक्षत्वात् तस्य ज्ञानमुपदेशः । अव्यतिरेकश्च यतः, अतोऽप्यर्थे अनुपलब्धे बादरायणस्य तत् प्रमाणमिति योजना जैमिनिसूत्रे द्रष्टव्या । अनेन सूत्रेण चोदना

धर्मे प्रमाणमेवेति यश्चोदनासूत्रार्थभागः, स व्युत्पादितः । **विग्रहयोगादस्मदादिवज्जननमरणवतीति** । न च विग्रहादिमत्त्वेऽपि नित्यत्वं शङ्कनीयम् । विग्रहस्य सावयवस्य भावकार्यतया अनित्यत्वावश्यंभावेन तद्विशिष्टस्येन्द्रादिशब्दार्थस्यानित्यत्वापातात् । न च स्थूलशरीरस्यानित्यत्वेऽपि तदन्तःकरणादिरूपसूक्ष्मशरीरविशिष्टैव व्यक्तिरिन्द्रादिपदवाच्या । सूक्ष्मशरीरस्य च लयेऽपि वासनारूपेण विद्यमानत्वान्नानित्यतादोषापत्तिरिति वाच्यम् । त्वया हि देवानां विग्रहादिकं ब्रह्मविद्याधिकारासिद्ध्यर्थमुपेयते। ततश्चेन्द्रादेर्ब्रह्मविद्याधिकारित्वेन ब्रह्मविद्यया मुक्त्यवश्यंभावेन तदानीमिन्द्रान्तरमेव तदधिकारे समायातीति वक्तव्यम्। अन्यथा पूर्वभावीन्द्रमुक्त्यनन्तरमिन्द्रपदं निरर्थकमेव स्यात्। तथाचेन्द्रव्यक्तिभेदे तन्मुक्त्यभ्युपगमवादिना अवश्यं वक्तव्ये तत्रानुगतस्य धर्मस्य व्रीहित्वादिवदनुपलम्भात् इन्द्रादिपदानां डित्थादिपदवद्व्यक्तिवाचित्वस्याभ्युपेयतया पुनःपुनः उद्भूते व्यक्तिविशेष इन्द्रादिपदं कश्यपादिभिस्सङ्केतितं वक्तव्यम् । तथासति सापेक्षतापत्त्या वेदप्रामाण्यविरोधः। नन्विन्द्रादिपदस्य कश्यपादिसङ्केतविषयार्थप्रतिपादकत्वेन पुरुषबुद्ध्यपेक्षत्वेऽपि को दोषः । व्युत्पत्तिरूपपुरुषबोधापेक्षं हि बोधजनकत्वमुपेयत एव वेदवाक्यस्य । परं तु स्वप्रामाण्यस्य मूलभूतप्रमाणान्तरापेक्षैव दोषावहा । तथात्वे तादृशप्रमाणस्यानुपलम्भेन प्रामाण्यस्य वेदे अनिर्व्यूढत्वप्रसङ्गादिति चेत्, उच्यते—पुरुषान्तरसङ्केतितार्थप्रतिपादकत्वे इन्द्रादिपदानामभ्युपगम्यमाने सङ्केतयितृपुरुषाणामव्यवस्थितत्वेन बहूनां सङ्केतविषयत्वे सति क इन्द्रः प्रकृते यागदेवतेति निर्धारणं न स्यात् । 'अतः सङ्केतसापेक्षत्वे इन्द्रादिशब्दानां वेदस्यानुष्ठानलक्षणमप्रामाण्यं प्रसज्येतेति । अतः प्रभवादि'त्यनेन शब्दस्य ब्रह्मवत् कारणत्वं विवक्षितमिति भ्रान्त्या शङ्कते—**नन्विति**। शब्दप्रभवत्वेऽभ्युपगम्यमाने जन्मादिसूत्रविरोधः, उद्भावितदोषापरिहारश्चेत्याशङ्कितम् । तत्र द्वितीयाशङ्कां परिहरति—**गवादिशब्दार्थसम्बन्धेति** । सङ्ग्रहं विवृणोति—**न हीति** । **व्यक्तीनामानन्त्यादिति** । यदा वृद्धव्यवहारेणैकस्यां व्यक्तौ शक्तिर्गृह्यते, तदा व्यक्त्यन्तरस्यानुपस्थितत्वेन तत्र शक्तिग्रहासम्भवात् व्यक्त्यन्तरमुद्दिश्य प्रवृत्ताच्छब्दात् तदर्थबोधो न स्यात् । अतस्सर्वव्यक्त्यनुस्यूतायां जाताविव शक्तिग्रहः । इदं तु केवलव्यक्तिवाचित्व एव दूषणम् । यदि तु घटादिशब्दात् घटत्वप्रकारकोपस्थितेः अनुपपत्त्यनुसन्धानं विनैव सर्वत्र जायमानायाः लक्षणाव्यापाराधीनत्वानुपपत्तेः तत्तद्धर्मं प्रवृत्तिनिमित्तीकृत्य व्यक्ताविव शक्तिग्रहः इष्यते, तदा नायं दोषः । गोत्वावच्छेदेनैवादौ शक्तेर्गृहीततया व्यक्त्यन्तरेऽपि शक्यतावच्छेदकसत्त्वेन बोधोपपत्तेः । **आकृतिविशेषास्त्विति** । सहस्राक्षत्वा-

व्यभिव्यङ्ग्यो जातिविशेष इन्द्रत्वादिरित्यर्थः । **स्थानविशेषेति** । दिक्पालाधिपतित्वादिरूपोपाधिविशेष इत्यर्थः । जन्मादिसूत्रविरोधं परिहरति—**न चेदं शब्दप्रभवत्वमिति** । ब्रह्मणो ह्येकस्यैवोपादानत्वं निमित्तत्वं चेत्युभयरूपं कारणत्वं जन्मादिसूत्रेण निबद्धम् । अनेन तु सूत्रेण यथा शिल्पी शिल्पशास्त्रं दृष्ट्वा देवताप्रतिकृतीस्सृजतीति तत्र शिल्पशास्त्रानुसन्धानस्य स्रष्टव्यसमानाकारार्थज्ञानजननोपयोगात् परम्परया शब्दस्योपयोगः, एवमिहापि परम्परया तद्द्रष्टव्यमिति भावः । **एत इति वै प्रजापतिर्देवानसृजतेति** । 'एते असृग्रमिन्दवस्तिरःपवित्रमाशवः विश्वान्यभिसौभगे'तीयमृक्पठ्यते । तदन्तर्गतैः पदैः प्रकृते सृष्टिरुच्यते । ननु, तत्तदर्थासाधारणाकारप्रतिपादकेन शब्देन तं तमर्थं स्मृत्वा सोऽर्थः प्रजापतिना सृज्यत इति वक्तव्यम् । एतन्मन्त्रगतानां च पदानां न तत्तद्देवतापरामर्शकता सम्भवति । अपि चायं मन्त्रः सोमलतास्तुतिरूपे बहिष्पवमाने विनियुक्तः—'बहिष्पवमानेन वै यज्ञस्सृज्यते यदेते असृग्रमिन्दव इति प्रस्तौति यज्ञमेव तत्सृष्टं देवेभ्यः प्राहे'ति । अतो विनियोगानुसारेण सोमलताप्रतिपादकत्वे स्थिते मन्त्रस्य इत्थं तदर्थवर्णनं—तिरःपवित्रं तिर्यग्भूतं दशापवित्रं प्रति आशवः शीघ्रगामिनः एते इन्दवः सोमाः विश्वानि सौभगा सौभाग्यान्युद्दिश्य असृग्रं सृष्टा इति । अतः कथमेत इत्यादीनां पदानां सृष्टिहेतुत्वमिति चेत्, उच्यते—एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्यात् एत इति सर्वानेवैतानृध्यै भूत्या अभिवदतीति अनेकयजमानके क्रतौ एत इत्यादेः प्रतिपद्रूपतया विहितस्य बहुयजमानप्रकाशकताप्रतिपादनात् सोमलतां विहायार्थान्तरप्रतिपादकता अवश्यं वक्तव्या । तद्वत्सृष्टिविनियुक्तस्य मन्त्रस्य तत्तत्सृज्यार्थप्रतिपादकता भविष्यति । न च एत इत्यादिशब्दानां तत्तदर्थस्मारकता तेष्वर्थेषु शक्त्यभावात् न सम्भवतीति वाच्यम् । विनियोगानुसारेण यथाकथञ्चित् तत्तदर्थप्रतिपादकताया उन्मेषणीयत्वात् प्रजापतेर'प्येत इति वै प्रजापतिर्देवानि'त्याद्यर्थवादसहकृतेभ्यः एतन्मन्त्रान्तर्गतेभ्यः पदेभ्यः तत्तदर्थासाधारणरूपोपस्थितिसम्भवात् । तथा हि—एत इति सर्वनाम अर्थवादोपस्थितान् देवान् परामृशति । असृजि रुधिरप्रधाने शरीरे रमन्त इति असृग्रमिति पदं मनुष्याणां स्मारकं, इन्दव इति पदं इन्दुमण्डलस्थानां पितॄणां, तिर्यग्भूतं दशापवित्रमस्मिन्निति तिरःपवित्रमिति पदं ग्रहाणाम्, अश्नुवते प्रयोगं व्याप्नुवन्तीत्याशव इति पदं स्तोत्राणां, विशन्ति प्रयोगमिति विश्वपदं शस्त्राणाम्, अभितः सौभगं सौभाग्यमासामिति योगेनाभिसौभगपदं प्रजानामिति भावः । 'स मनसा वाचमुद्दिश्य मिथुनं वाचा मिलितं समभवत्' मनसा वैदिकीं वाचमनुसन्धाय तदर्थभूतान् देवाद्याकारान् सृष्ट्यर्थमालोचितवानि-

ह्यर्थः । कर्मणां यागादीनां कृष्यादीनां च । प्रवृत्तिम् अनुष्ठानप्रकारम् । पृथक्संस्थाः असाधारणाकारान् । ननु, शब्देनार्थमनुसन्धाय पदार्थाः स्रष्टव्या इति नास्ति नियमः । प्रत्यक्षेणापि तत्तदर्थं विषयीकृत्यानुसन्धाय समानाकारपदार्थसृष्ट्युपपत्तेः । अन्यथैडमूकादिषु शब्दप्रयोगानभिज्ञेषु कुलालादिषु का गतिः । न च तथापि प्रकृते पूर्वकल्पसमानाकारा सृष्टिर्वक्तव्या । तत्र पूर्वकल्पीयस्य संस्कारस्य प्रमोषाच्छब्दं विना न पूर्वसमानाकारा सृष्टिः सम्भवतीति वाच्यम् । सर्वज्ञस्य परमात्मनः पूर्वपदार्थानुसन्धानाय शब्दानपेक्षणात् । कथमन्यथा वेदस्य स्वत एव भानं सम्भवेत् । ननु, हिरण्यगर्भस्य तदनुसन्धानाय शब्दापेक्षा न । तस्य स्रष्टृत्वासम्भवेऽपि परमेश्वरेणैवाद्यसृष्ट्युपपत्तेः । यदि त्वाद्यायामपि देवतासृष्टौ हिरण्यगर्भः कारणं, तदा तस्यापि 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥' इति सर्वज्ञत्वस्मरणात् वेदतदर्थयोरिव स्रष्टव्यपदार्थसमानाकारप्राचीनपदार्थगोचरानुसन्धानस्यापि स्वत एव सम्भवात् । अतः कथं शब्दस्य निरुपपत्तिकं सृष्ट्युपयोगित्वं स्वीक्रियत इत्यत आह—अपि चेति । अयं भावः—न वयं शब्दस्य सृष्ट्युपयोगित्वं युक्तिमात्रेण साधयामः, अपि तूदाहृतवचनबलात् । तत्र परं लोकतस्सोऽर्थः सम्भावनीय इत्येतावन्मात्रमवशिष्यते । अस्ति च लोके शिल्पशास्त्रं पर्यालोच्य शिल्पिभिः विचित्रदेवतादिप्रतिकृतयो निर्मीयन्ते । तत्र शब्दस्य सृष्टावुपयोगः । प्रकृते च यद्यपि सर्वज्ञेश्वरस्य न तदुपयोगः, तथापि हिरण्यगर्भस्यास्त्येव तदपेक्षा । यथा हि घटादौ कुलाल ईश्वरश्चेत्युभावपि कर्तारौ, तथा देवतादिसृष्टौ हिरण्यगर्भसचिव ऐश्वरः कारणम् । तस्य च सृष्ट्यारम्भे परमेश्वरानुग्रहलब्धवेदतदर्थज्ञानाधीनमेव सार्वज्ञ्यम् । यथा श्रुतिः—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येदि'ति च । कपिलशब्दोऽत्र मन्त्रे हिरण्यगर्भपरः । ज्ञानैर्बिभर्ति वेदार्थज्ञानैः सृष्ट्युपयोगिभिः पूरयतीत्यर्थः । अत्र च वेदतदर्थज्ञानस्य उत्पत्तिकाल ऐश्वरानुग्रहलब्धत्वाद्धिरण्यगर्भस्सहजसिद्धज्ञान इति प्रसिद्धिः । अतो युक्तं हिरण्यगर्भः सृष्ट्यर्थं शब्दमनुसन्धत्त इति । स हिरण्यगर्भः भूरिति व्याहृतिं पृथिवीलोकप्रतिपादिकां व्याहरन् स्मृतवान् । ननु, व्यक्तिवाचिनामिन्द्रादिपदानां व्यक्त्यनित्यतया सापेक्षत्वे शङ्किते जातिवाचकतया तत्परिहारो विवक्षितश्चेत्, तदेव सूत्रकृता सूत्रणीयम् । किमर्थं शब्दप्रभवत्वं सूच्यते । न च तदपि जातिसिद्ध्युपयोगितया सूच्यत इति वाच्यम् । प्रत्यभिज्ञादेर्जातिसाधकतया शब्दप्रभवत्वस्य तदसाधकत्वादिति चेत्, उच्यते—

यद्यपि शब्दस्य जातिवाचकत्वमेव सूत्रणीयं, तथापीन्द्रादिगतजातिसिद्धिं विना नेन्द्रादिपदस्य जातिवाचकता लभ्यते । न 'अयमिन्द्रोऽयमिन्द्र इत्येवंरूपेण लौकिकी प्रत्यभिज्ञात्रास्ति । अत इन्द्रत्वादिजातिसाधकतया शब्दप्रभवत्वमिह सूत्रितम् । तथा हि—शिल्पी यदा तच्छास्त्रं पर्यालोच्य देवादिप्रतिमा निर्मिमीते, तदा प्रसिद्धस्वानुसंहितेन्द्रव्यक्तिसमानाकारामेव तां सृजतीति प्रसिद्धम् । ततश्चानुसन्धीयमानस्य प्राचीनस्य सृज्यमानस्य चाभिनवस्य तुल्यसंस्थानत्वं शब्दपूर्वकर्मनिर्माणे दृष्टम् । अतः प्रजापतिनापीन्द्रादयः तत्तद्वाचकशब्दानुसन्धानपूर्वकं सृज्यमानाः प्राचीनेन्द्रादिसमानसंस्थानैश्वर्यादियुक्ता एव सृज्यन्त इति तुल्यसंस्थानादिव्यङ्ग्येन्द्रत्वादिजातिसिद्धिः । ननु, शब्दपूर्वकसृष्टिः पूर्वसमानाकारेति नियन्तुं न शक्यते । नृसिंहमिव कल्पनापूर्वसंस्थानं पदार्थं मनसि कल्पयित्वा यत्र शब्देन तादृशमर्थं रचयेति शिल्पी नियुज्यते, तत्रापूर्ववस्तुसृष्टिरपि शब्दपूर्वोपलभ्यत इति प्रकृतेऽपि तथा किं न स्यात् । न ह्येन्द्रादिसंस्थानप्रतिपादकः शब्दोऽपूर्वाकारप्रतिपादकः प्रजापतेर्भवति । अपि तु 'धाता यथापूर्वमकल्पयदि'ति श्रुतिपर्यालोचनया समानाकारप्रतिपादक एवेति शिल्पशास्त्रन्याय एव प्रकृते समाश्रयणीयः । तथा च सृष्ट्यारम्भे हिरण्यगर्भस्येश्वरेण वेदतदर्थार्पणमपि पूर्वकल्पवृत्तान्तमनुसन्धाय तथाभूतामेव सृष्टिमारचयत्विति तात्पर्येणैवेति न काचिदनुपपत्तिः । अत्र भाष्ये इन्द्रादयस्सर्वेऽपि समानसंस्थाना एव । तदा जात्यभिव्यञ्जकस्य संस्थानस्य विद्यमानत्वात् जातिवाचकत्वमिन्द्रादिपदानां सिध्यति । यदा तु कल्पभेदेन विषमसंस्थाना एवेन्द्रादय इति कश्चिद्वदेत्, तदा जात्यसिद्धावपि स्वर्गलोकाधिपतित्वोपाधिका एवेन्द्रादिशब्दाः सन्त्विति मनसि निधाय उपाधिपक्षो दर्शितः । 'अतः प्रभवा'दित्यत्रैकदेशिभिर्विवक्षितं वाचकस्वरूपमुपन्यस्य दूषयितुं पृच्छति — **किमात्मकमिति** । 'उत्पन्नो गकारो नष्टो गकार' इति प्रतीतेः सार्वजनीनत्वात् अनित्यत्वं वर्णानामास्थेयम् । इयं च प्रतीतिरौपाधिकी भ्रान्तिरिति नित्यत्ववादिना वक्तव्यम् । नैतदुपपद्यते । स्थायित्वग्राहकप्रबलप्रमाणाभावात् । न च प्रत्यभिज्ञा तथा भविष्यति । भेदेन प्रतीयमानेषु गकारादिषु 'सैवेयं ज्वाले'ति प्रत्यभिज्ञा वक्तव्या । जातिविषयत्वोपपत्तेरित्यभिप्रेत्य वैलक्षण्यसाधिकां प्रतीतिमुपन्यस्यति । **प्रत्युच्चारणमिति** । प्रत्यक्षसिद्धेऽपि वैलक्षण्यप्रत्यये यदि कश्चिद्विप्रतिपद्येत, तं बोधयितुं वैलक्षण्यप्रत्ययकार्यभूतां व्यवहितदेवदत्ताद्यनुमितिं दर्शयति—**तथा ह्यदृश्यमानं इति** । नन्वनित्यत्वेऽपि वर्णानां न वेदनित्यत्वविरोधः । न हि स्फोटवादिमतेऽपि स्फोटस्वरूपमेव वेदः , अपि तु क्रमविशेषविशिष्टं स्वरविशेषविशिष्टं च । न च नित्या-

नां विभूनामेकरूपाणां स्फोटानां स्वत एव क्रमो वा स्वरो वोपपद्यते , अपि तु ध्वन्युपाधिक एव । तथा चाभिव्यञ्जकध्वनिविशेषविशिष्ट एव स्फोटो वेद इति ध्वनीनामनित्यतया तुल्यस्वरानुपूर्वीकतया वेदनित्यत्वं विवक्षणीयम् । सा विवक्षा वर्णात्मकवेदवादिनोऽप्यविशिष्टेति शङ्कां मनसि निधाय वर्णवादिनो दूषणान्तरमाह—**न च वर्णेभ्य इति** । **व्यभिचारादिति** । घ इत्येकवर्णोच्चारणे अर्थप्रत्ययाभावादिति भावः । **न च वर्णसमुदायप्रत्ययोऽस्तीति** । ननु, वर्णानां क्रमिकत्वेन वर्णसमुदायप्रत्यक्षाभावेऽपि पूर्वपूर्वानुभवजनितसंस्कारैर्वर्णसमुदायगोचरं स्मरणं भविष्यतीति चेन्न । तथासति राजा जारेतिपदस्मृतेर्विशेषाभावेनार्थबोधविशेषो न स्यात् । न च तत्र क्रमवैचित्र्याद्वर्णस्मृतिवैचित्र्ये सति अर्थबोधवैचित्र्यमुपपद्यत इति वाच्यम् । वर्णानामनित्यत्वमते तदुत्पत्तिक्रमात् नित्यत्वमते तदभिव्यञ्जकध्वनिक्रमाद्धि वर्णेषु क्रमः स्वीकर्तव्यः । न चेदं द्व्यमपि मौनिना लिखिते मौनिनैवानुसंहिते श्लोके संभवतीति स्फोटवादी मन्यते । पूर्वपूर्ववर्णसंस्कारसचिवस्यान्त्यवर्णस्य बोधकत्वे ह्यन्त्यवर्ण एव वाचकः । पूर्वपूर्ववर्णसंस्कारस्तु योग्यतादिवत् सहकारी । तथा च संस्कारोऽपि ज्ञातव्य इत्यापतेदित्याह—**तन्न सम्बन्धग्रहणापेक्ष इति** । **स्वयं प्रतीयमान इति** । संस्कारविशिष्टतयेति शेषः । अत्रेदमनुमानं विवक्षितं—यद्धि मानविभाजकोपाध्यवच्छेदेन सम्बन्धग्रहमपेक्ष्य बोधकं, तत् मानविभाजकोपाध्यवच्छेदेन भावरूपयावत्सहकारिविशिष्टमेव ज्ञातं बोधकम् । धूमादिवत् । ततश्च संस्कारस्य सहकारित्वे सोऽपि ज्ञातव्यस्स्यात् । शब्दस्य मानविभाजकोपाध्यवच्छेदेन सम्बन्धग्रहमपेक्ष्य बोधकत्वात् । अत्र व्याप्तौ 'भूतलसंयुक्तो घट' इति ज्ञाने जननीये चक्षुषः सम्बन्धग्रहणापेक्षत्वेऽपि न यावत्सहकारिमत्तया ज्ञातव्यतास्तीति व्यभिचारवारणाय मानविभाजकोपाध्यवच्छेदेनेति व्याप्यकोटौ विवक्षितम् । व्यापककोटौ यावत्पदादाने संस्कारे ज्ञातव्यतापादनं न स्यात् । व्याप्तेर्योग्यतादियत्किञ्चित्सहकारिज्ञानमादायोपपन्नत्वात् । अतस्तन्निवेशः । तावत्युक्ते सिद्ध्यभावस्य स्वरूपसत एव सहकारित्वाद्धूमस्य यावत्सहकारिविशिष्टतया ज्ञातस्यैव बोधकत्वाभावाद्यभिचारस्स्यात् । तद्व्यावृत्त्यर्थं भावरूपेति । अदृष्टस्य सर्वसहकारितया तज्ज्ञानस्यानपेक्षणात् पुनरपि व्यभिचारस्स्यात । तद्व्यावृत्त्यर्थं व्यापककोटावपि मानविभाजकोपाध्यवच्छेदेनेति विवक्षितम् । एवं संस्कारस्य ज्ञातव्यतामापाद्येष्टापत्तिं वदन्तं प्रत्याह—**न चेति** । **कार्यप्रत्यायितैरिति** । कार्यं वर्णस्मृतिः । **स्मरणस्य क्रमवर्तित्वादिति** । तथा च सर्ववर्णगोचरस्मरणस्य यौगपद्याभावेन न सर्वसंस्कारानुमितिस्स्यात् । इदमुपलक्षणम् ।

तस्यां दशायां चरमवर्णतत्साक्षात्कारयोरपि नाशापत्त्या शाब्दबोधानुदयप्रसङ्ग इति द्रष्टव्यम् । ननु, परेण स्फोटो ध्वनिव्यङ्ग्य इत्युच्यते। तन्मते च ध्वनय एव वर्णाः। न तु ध्वनिव्यतिरिक्तो वर्ण इति गत्वाद्याश्रयभूतैर्ध्वनिभिः स्फोटोऽभिव्यज्यते , न तु भेर्यादिध्वनिभिः । तत्र गकारादयः क्रमेण व्यञ्जयन्ति , उत मिलिता इति विकल्पस्तं प्रत्यपि प्राप्त इत्याशङ्क्य तन्मते प्रत्येकमेव गकारादयः स्फोटं व्यञ्जयन्ति । न च तथासति वर्णान्तरवैयर्थ्यम् । यथा हि रत्नतत्त्वं बहुधा निरीक्ष्यमाणं पूर्वपूर्वसाक्षात्काराहितसंस्कारे चेतसि जायमानेन चरमसाक्षात्कारेण स्पष्टं भासते , एवमत्राप्येकैकवर्णजनितस्फोटसाक्षात्कारैः स्फोटविषयास्संस्कारा 'एकमिदं पदम्, एकमिदं वाक्य'मित्येवंरूपं यत्स्फुटं स्फोप्रत्यक्षं, तद्बीजभूता आधीयन्ते । तादृशसंस्कारसमानाधिकरणेन अन्त्यवर्णप्रत्ययेन स्पष्टं स्फोटोऽभिव्यज्यत इति न कस्यापि वैयर्थ्यमित्यभिप्रेत्याह—**स चेति** । परिपाको नाम यदनन्तरमेव स्फुटं स्फोटाभिव्यक्तिर्भवति , तादृशवृत्त्यधीनश्चेतसः अवस्थाविशेषः । **न चायमेकप्रत्यय इति**। 'एकं पदम्, एकं वाक्य'मिति प्रत्यय इत्यर्थः । **प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वादिति** । 'तदेवेदं पदं, तदेवेदं वाक्यमि'ति प्रत्यभिज्ञाविषयत्वादिति यावत् । न च गकारादिसमुदायातिरिक्ते स्फोटेऽभ्युपगम्यमाने गत्वादिरूषितः पदवाक्यप्रत्ययो बाधितस्स्यादिति वाच्यम् । यथा दर्पणादिगतः प्रतिबिम्बो दर्पणादिगतनीलिमादिना रूषित एवावभासते , एवं ध्वनिव्यङ्ग्यस्फोटो ध्वनिगतगत्वादिरूषितो भासत इति किमनुपपन्नम् । स च घटकलशादिपर्यायेषु एक एव घटप्रतिपादकस्स्फोटः । न तु प्रतिपर्यायं भिन्नभिन्नः । एवं च प्रजापतिना वाचकपदमनुसन्धाय प्रजास्सृष्टा इत्यत्र वाचकानां बहुत्वात् किं वाचकमनुसन्धाय प्रजास्सृष्टा इति विनिगमनाविरहेण निर्धारणासम्भवादिति शङ्कापि निरस्ता भवति । वाचकनानात्वस्यास्मिन् पक्षेऽसम्मतत्वात् । अपि च स्फोटानङ्गीकारमते घटादिपर्यायाणां सर्वेषामेव वाचकत्वमुपेयम् । तथासति प्रतिपर्यायं शक्तयः स्वीकर्तव्या इत्यनेकशक्तिकल्पनात् गौरवम् । स्फोटपक्षे तु सर्वपर्यायव्यङ्ग्यस्य तस्यैकत्वात्तत्रैकैव शक्तिरुपेयत इति लाघवम् । **प्रत्यभिज्ञानस्य प्रमाणान्तरेणेति** । यद्यपि लूनप्ररूढकेशेषु त एवेति प्रत्यभिज्ञानं भेदग्राहकेण प्रमाणेन बाध्यते , तथापि प्रकृते वर्णप्रत्यभिज्ञाने तादृशं बाधकं भेदग्राहिप्रमाणं प्रबलं नास्तीति भावः । **संयोगविभागाभिव्यङ्ग्यत्वादिति** । संयुज्यमाना वियुज्यमानाश्च ये प्राणवायवः, तदुपाधिकत्वादित्यर्थः । न च तेषां वायूनां श्रावणत्वाभावेन तद्धर्मस्याप्युदात्त-

त्वादेः देवदत्तादिप्रभवत्वप्रयोज्यजातिविशेषस्य च श्रावणता न स्यादिति वाच्यम्। आकाशस्याश्रावणत्वेऽपि तद्धर्मस्य श्रावणत्ववदुपपत्तेरिति भावः । ननु, वर्णेषु भेदप्रत्ययोऽपि विद्यते । प्रत्यभिज्ञा च विद्यते । तत्र प्रत्यभिज्ञा स्वाभाविकी, भेदप्रत्यय एवौपाधिक इत्यत्र किं नियामकमित्यत आह—**अपि चेति**। अतिरिक्तगत्वादिजातिकल्पनाराहित्येन प्रत्यभिज्ञायाः लाघवानुसारित्वात् तदनुसारेण भेदप्रत्ययस्यैवौपाधिकत्वकल्पनमिति भावः । एवमभिव्यञ्जकवायूपाधिकं वैलक्षण्यादिकमुक्तम् । इदानीं ध्वन्युपाधिकं तदिति पक्षान्तरं वक्तुमुत्तरितामेव शङ्कां पुनरुपक्षिपति—**कथं हीति** । कथं तर्हीत्यर्थः । परिहरति—**अथवेति** । इत्थमिति वक्तव्ये अथवेत्युक्तिः । अस्यामेव शङ्कायां 'संयोगविभागाभिव्यङ्ग्यत्वा'-दिति परिहारः प्रदर्शित एव । इदं तु परिहारान्तरद्योतनाय प्रत्यभिज्ञाया बाधकत्वस्फुटीकरणाय । एकत्वस्य उदात्तत्वादीनां च विरोधप्रदर्शनार्थो वा कथं ह्येकस्मिन्नित्यादिग्रन्थ इति । यथाश्रुतमेव ध्वनिरूपं निरूपयितुं पृच्छति—**कः पुनरिति** । ननु, दूरादाकर्ण्यमानोऽवर्णात्मको ध्वनिरूपः शब्दः । स एव वर्णेषु वैलक्षण्यादिप्रत्ययोपाधिरनित्यश्चेत्युक्तमसङ्गतम् । कोलाहलप्रत्ययो हि न वर्णातिरिक्तध्वनिविषयः । अपि तु गत्वाद्यप्रकारको वर्णसामान्यप्रत्यय एव । समीपोपसर्पणानन्तरं तु तत्रैव गत्वादिर्गृह्यते । अतो नानेन प्रत्ययेन वर्णविलक्षणध्वन्यात्मकशब्दः सिध्यति । अपि च प्रत्यभिज्ञानुसारेण वर्णानां यदि नित्यत्वमुपेयते, तर्हि 'स एवायं ध्वनिः, स एवायं कोलाहल' इति प्रत्यभिज्ञानुसारेण तस्यापि नित्यत्वं किं न स्यात् । ध्वन्युपाधिका वर्णेषु वैलक्षण्यादयः वर्णोपाधिकाः ध्वनिषु वा वैलक्षण्यादय इत्यत्र नियामकं नास्तीति चेत्, उच्यते—भेरीमृदङ्गादिशब्दस्थले जायमानः कोलाहलप्रत्ययो गत्वाद्यनवगाहिवर्णसामान्यविषय इति तावद्वक्तुं न शक्यते । तत्र कण्ठताल्वादिरूपवर्णाभिव्यक्तिसामग्र्यभावेन वर्णानामसम्प्रतिपन्नत्वात् । शुकशारिकादिरवस्थले कोलाहलप्रत्ययोऽपि वर्णविलक्षणशब्दविषय एवेत्यपि सम्प्रतिपन्नमेव । समीपोपसर्पणेऽपि वर्णानामनुपलम्भात् । तत्र चोदात्तादिप्रत्यया वर्णोपाधिका इति वक्तुं न शक्यते । यद्यपि शुकशारिकादिरवस्थले प्राणोपाधिका इति वक्तुं शक्यं, तथापि भेर्यादिरवस्थले तदुपाधिका इत्यपि वक्तुं न शक्यते । तत्र वायूनामभावात् । अतो ध्वनावुदात्तादिप्रत्ययाः स्वाभाविका एवेति तत्र प्रत्यभिज्ञानं जातिविषयमेवेति बलादापतति । भेदप्रत्ययस्यौपाधिकत्वासम्भवात् । एवमापणादिस्थले कोलाहलप्रत्ययो भेर्यादिस्थल इव ध्वानविषय इत्येव वक्तव्यम् । कोलाहलप्रत्ययस्य ध्वनिविषयतायाः क्लृप्तत्वात् ।

वर्णस्थले च ध्वन्युत्पत्तिरपि स्वीकर्तव्या । हसितरुदितशुकादिध्वनौ कण्ठादेरपि कारणतायाः क्लृप्तत्वेन वर्णस्थले उभयसामग्रीसमावेशात् । तथा च वर्णेषूदात्तादिप्रत्ययस्य ध्वन्युपाधिकत्वमित्यत्र नास्ति विनिगमनाविरहः । एवंचसति सालम्बना इति संयोगविभागोपाधिकत्वमिति पक्षे तेषां श्रावणप्रत्यक्षाविषयत्वात् तद्धर्माणामप्युदात्तत्वादीनां वर्णेष्वारोपेण श्रावणता न स्यादिति शङ्काया अपीहानवसर इति भावः । स्फोटवादिना हि वर्णानामनित्यत्वात् नित्यता वेदस्य वर्णपक्षे न स्यात् । अतः स्फोटरूपः शब्दो नित्योऽभ्युपगन्तव्य इत्युक्तम् । तद्वर्णनित्यतासमर्थनेन निरस्तम् । वर्णानां प्रत्येकसमस्तविकल्पग्रासात् वाचकत्वं नोपपद्यते । अतो वर्णातिरिक्तमेव किञ्चिद्वाचकं पदतत्त्वमुपेयमिति चोक्तं, तन्निराकर्तुमुपक्षिपति—**वर्णेभ्यश्चेति** । स्फोटवादिपरिकल्पितं प्रत्यक्षमनुवदति—**न कल्पयामीति** । **बुद्धेर्वर्णविषयत्वादिति** । ननु, यथा वर्णविषयबुद्धेर्ध्वनिरूषितत्वेऽपि ध्वनिव्यङ्ग्यो वर्णोऽतिरिक्त इष्यते, उदात्तत्वादयश्च ध्वन्युपाधिका एव वर्णेष्वास्थीयन्ते, एवं गत्वादिरूपिते पदप्रत्यये सत्यपि गत्वाद्याश्रयादन्य एव स्फोटोऽस्तु । गत्वादिरूपिततया बुद्धिस्तु व्यञ्जकोपाधिनिबन्धनेति चेन्न । हसितरुदितकोलाहलस्थले उदात्तत्वाद्याश्रयतया वर्णविलक्षणशब्दसिद्धौ गत्वाद्याश्रयशब्दस्यापि प्रत्यक्षसिद्धत्वे तस्यानन्यथासिद्धप्रत्यभिज्ञया स्थायित्वसिद्धौ वर्णस्थले ध्वनिसामग्र्या अपि संप्रतिपन्नत्वात् उदात्तत्वादिप्रत्ययः तदुपाधिक इति कल्पनं युक्तम् । नैवं गत्वाद्यनाश्रयः स्फोटः कैश्चिदनुभूयते । एतेन रत्नतत्त्वमिव पुनःपुनः निरीक्षणानि स्फोटं प्रत्येकमेव वर्णा व्यञ्जयन्ति । स चरमवर्णावसरे स्फुटं भासत इति कल्पनं निरस्तम् । रत्नतत्त्वं हि प्रतिनिरीक्षणं किञ्चित् किञ्चित् भासत इत्यनुभवसिद्धम् । तत्र च पूर्वपूर्वदर्शनाविषयीकृतास्तत्तद्रत्नत्वावान्तरजातिचिह्नभूता उत्तरोत्तरदर्शनविषयास्सम्भवन्तीति सार्थक्यमपि बहूनां दर्शनानामुपपद्यते । नैवं प्रकृते सम्भवति । न ह्यत्रोत्तरोत्तरवर्णसाक्षात्कारेण स्फोटे पूर्वपूर्ववर्णसाक्षात्काराव्यञ्जितास्ते तेंऽशाः कस्यचिदनुभवपदमारूढाः । धर्मिण एवानुभवानारूढत्वे तद्धर्माणां दूरानिरस्तत्वात् । एकत्वबुद्धिस्तु वर्णविषयैवेत्युपपादयितुं शङ्कते—**नन्विति** । **सहस्रमित्यादीति** । ननु, वनादिप्रत्ययः बहुष्वेकत्वावगाही एकदेशस्थत्वाद्युपाधिनिबन्धन इति युक्तम् । शतादिप्रत्ययस्तु बहूनामेकत्वानां किञ्चिदुपाधिनिबन्धनः । ननु, शतादिकमेकत्वातिरेकेण विद्यत इति वक्तुं न शक्यते । कियतामेकत्वानां समुदायः शतमिति सन्देहे शतानामेकत्वानामिति हि निर्धारयितव्यम् । ततश्चैकत्वेषु शतसंख्या परा स्वी-

कर्तव्यैव । तद्वरमेकत्वाश्रयेष्वेव सास्तु । तथाच प्रत्येकवृक्षव्यक्तिव्यतिरेकेण वनस्यानभ्युपगमेऽपि प्रत्येकैकत्वातिरेकेण यथा शतादिसङ्ख्योपेयते, तथा वर्णव्यतिरेकेण स्फोटोऽभ्युपगन्तव्य इति चेन्न । उक्तयुक्त्या शतादिसङ्ख्याया एकत्वातिरेकेण उपगमेऽपि वर्णातिरेकेण स्फोटकल्पनाया निर्मूलत्वात् न वर्णातिरिक्तस्फोटसिद्धिः । अवान्तरसङ्ख्यातिरेकेण शतादिसङ्ख्यायाः सत्त्वेऽप्यवान्तरसङ्ख्येयातिरेकेण शतादिसङ्ख्येयो महान्नास्तीत्यभिप्रायकं दशशतं सहस्रमित्यादिभाष्यमिति ध्येयम् । **एकार्थावच्छेदनिबन्धनौपचारकीति** । न च तथाचसति एकपदत्वज्ञानादेकार्थत्वनिश्चयः, तस्मिन् सत्येकपदत्वज्ञानमित्यन्योऽन्याश्रय इति वाच्यम् । एकपदत्वनिश्चय एव हि एकार्थत्वज्ञाननिबन्धनः । अत एवाव्युत्पन्नानां काव्यश्लोके न पदविभागज्ञानम् । न त्वेकपदत्वैकवाक्यत्वज्ञानमेकार्थत्वनिर्णये कारणम् । तत्र वृद्धव्यवहारानुसारेण शक्तिग्रहस्तात्पर्यनिर्णयश्च कारणम् । यावतां हि वर्णानामेकस्मिन्नर्थे शक्तिर्गृहीता, तावन्त एवैकार्थका इति व्यवह्रियन्ते । यावत्सु च पदेष्वेकस्मिन्नर्थे विशिष्टे तात्पर्यं गृहीतं, तावन्त्येकार्थकानीत्येकं वाक्यमिति चोच्यन्ते । एवं च यथासम्भवं बहुषु वर्णेष्वेकत्वबुद्ध्युपपत्तौ गत्वादिरूपित 'इदमेकं पदमेकं वाक्यमि'त्यादिप्रत्ययो न वर्णातिरिक्तस्फोटसाधकः । न चैवं सन्ध्यक्षराणामपि स्वावयवभूताकारेकारादिव्यतिरेको न स्यादिति दूषणम् । इष्टापत्त्या तस्य दूषणत्वाभावात् । अत एव 'तानेकधा समभरत्तदोमि'ति प्रणवस्य तदवयवभूताकारोकारमकारात्मकता दर्शिता श्रुत्यैव। 'ओङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार' इति क्वचिदाधाराधेयभावेन प्रणवतदन्तर्गतमात्राणां निर्देशस्तु समुदायसमुदायिनोर्भेदोपचारेणेति द्रष्टव्यम् । ननु वाचके गत्वादिप्रत्यये एकत्वादिप्रत्यये च सति गत्वादिप्रत्यय एव स्वाभाविकः, नानाभूतेषु एकत्वप्रत्यय एवौपाधिक इत्यत्र किन्नियामकमिति चेत्, उच्यते—स्फोटपक्षस्यातिरिक्तपदार्थकल्पनागौरवग्रस्तत्वेन एकत्वबुद्धेस्तदालम्बनत्वासम्भव एव नियामकः । न च वर्णपक्षेऽपि बह्व्यः शक्तयः कल्पनीया इति गौरवमुक्तमिति शङ्कनीयम् । येन हि प्रतिपर्यायं व्यञ्जनीयस्फोट एक इत्युच्यते, तेनापि प्रतिपर्यायं वर्णेषु शक्तिरुपेयैव । अन्यथा घटादिपदव्यञ्जनीये स्फोटे एकपर्यायान्तर्भावेन शक्तिग्रहमात्रेण पर्यायान्तरेण गृहीतशक्तिकस्यैव स्फोटस्य व्यञ्जनीयतया तस्मिन् पर्याये अगृहीतशक्तिकस्यापि पुंसः शाब्दबोधापत्तेः । यदि तु एतद्दोषपरिहारार्थं तत्तत्पर्यायानुसन्धानोत्तरभाविशाब्दत्वावच्छेदेन तत्तत्पर्यायाभिव्यङ्ग्य-

त्वावच्छेदेन स्फोटगतशक्तिग्रहत्वेन कारणतेत्युच्यते, तथासति शाब्दं प्रति तत्पर्यायशक्तिग्रहत्वेनैव कारणतास्थेया, न तु तादृशस्फोटगतशक्तिग्रहत्वेन। गौरवादिति शक्तिग्रहगतकारणतावच्छेदकलाघवानुसारेण पर्यायेष्वेव शक्तयः सिध्यन्तीति नेदं गौरवं दूषणावहम् । धर्म्यन्तरकल्पनापत्त्या तु स्फोटपक्ष एव गौरवग्रस्तः। एवं च कं पर्यायमनुसन्धाय प्रजापतिना प्रजाः सृष्टा इति विनिगमनाविरहोऽपि न । वेदगता ये पर्याया मनसि विपरिवृत्तास्तैरेवादिसृष्ट्युपपत्तेः । अन्यथा किं पर्यायाभिव्यक्तेन स्फोटेन प्रजाः सृष्टा इति तवापि का गतिः । क्रमानुरोधिन एव वर्णा इति स्फोटवादिना प्रत्येकसमस्तवाचकतायां विकल्पपूर्वं दूषणमुक्तम् । तत्र समस्तपक्ष एवाश्रितः । कपिः पिक इत्यादौ तु नाविशेषः । यथा पूर्वमुच्चारणदशायां प्रत्येकमनुभूता वर्णाः समूहालम्बनस्मरणेन विषयीक्रियन्ते, तथा पूर्वपूर्ववर्णोत्तरत्वेनानुभूतास्तथैव स्मर्यन्ते । तथा च कपिः पिक इत्यादौ वर्णाविशेषेऽपि क्रमविशेषात् पदभेदः । न च क्रमस्य कथं पदभेदकतेति शङ्कनीयम् । शक्तत्वं हि पदत्वम् । वृद्धव्यवहारे च क्रमविशेषावच्छेदेनैव शक्तेर्गृहीततया अवच्छेदकभेदे शक्तिभेदस्यावश्यकतया पदभेदोपपत्तेः । न च मौनिना लिखिते युगपदेव लिप्यक्षरैरन्येनानुमिते श्लोके क्रमो न सम्भावित इति वाच्यम् । तत्रापि लिपिक्रमानुसारेणैव क्रमेणानुसन्धायानेन लिखितानीति लेखकानुसन्धानक्रमबोधोपपत्तेः । अवश्यं चेदं स्फोटवादिनाप्युपेयम् । तस्यापि तत्तदर्थप्रतिपादकस्फोटव्यञ्जका एते वर्णा इति ग्रहोऽपेक्षित एवेति क्रमानुरोधेनैव स्फोटव्यञ्जकतायास्समर्थनीयत्वात् । पूर्वं वर्णानां नित्यतामभिप्रेत्य वेदनित्यता व्यवस्थापिता । इदानीं 'उत्पन्नो गकारो विनष्टो गकार' इति प्रतीतेः स्फुटवैलक्षण्यप्रतीतेश्च गकारादयोऽनन्ता अनित्याश्चेति पक्षमाश्रित्यापि वेदनित्यत्वविरोधः परिहर्तुं शक्यत इत्यभिप्रेत्याह—अथापि नामेति। वर्णनित्यत्ववादिनापि हि समानानुपूर्वीकत्वेनैव वेदनित्यत्वं व्यवस्थापनीयम् । तदनित्यवर्णवादिनोऽपि तुल्यम् ॥ २८ ॥

## अत एव च नित्यत्वम् ॥२९॥

कर्तुरस्मरणादिभिरिति। यथा हि भारतादौ इति कृष्णद्वैपायनकृताविति रघुवंशादिवर्णनपरकाव्येष्विव कर्ता स्मर्यते, नैवं वेदोऽनेन कृत इति विशिष्य स्मरणमस्तीत्यतः वेदो नित्य इति। वेदनित्यत्वं स्थितं द्रढयतीति । कर्तुरस्मरणमसिद्धम् । संहिताकारपदकारब्राह्मणकाराणां 'मन्त्रकृतो वृणीते विश्वामित्रस्य सूक्तं भवती'त्यादिभिर्वाक्यैः वेदकर्तॄणां प्रतिपादनादिति शङ्कानिराकरणेनेत्यर्थः । वेदशब्द-

नित्यत्वमपि प्रत्येतव्यमिति । 'अस्य निश्वसित'मिति श्रुतिपर्यालोचनया वियदादिवत् परमेश्वरसृष्टत्वेऽपि विवक्षितवेदनित्यत्वस्य नानुपपत्तिः । यथा ह्यध्यापकाध्येतृव्यवहारदशायां वेदस्मृत्यनुकूलसंस्काराश्रयाः पुरुषा विद्यन्ते, एवं प्रलयकालेऽपि उत्तरकल्पीयस्मृत्यनुकूलवेदगोचरसंस्काराश्रयपुरुषसद्भाव इत्येव हि वेदनित्यत्वं विवक्षितम् । तत्र चातश्शब्देन देवादीनां वेदवाक्यप्रभवत्वं पूर्वत्र प्रतिपादितम् । तदिह हेतुत्वेन परामृश्यते । सृष्ट्यारम्भे वेदवाक्यस्मरणं विना पूर्वकल्पीयपदार्थानुसन्धानपूर्विका एतत्कल्पीयसृष्टेरसम्भवात् । तदानीं पूर्वकल्पानुभूतवेदस्मृतिरवश्यं वक्तव्या । सा च प्रलयकाले सूक्ष्मपुरुषगतसंस्कारं विना नोपपद्यत इत्यनेन हेतुना उक्तसाध्यसिद्धिः । तथा च मन्त्रकृत इत्यादिवचनानि तेषां तेषामृषीणां पुण्यविशेषाज्जन्मान्तराधीतस्य वेदस्य कल्पादावुद्भूतानां स्वत एव स्मरणमित्यभिप्रायेण व्याख्येयानीति परिहाराभिप्रायः । वाचः वेदस्य । पदवीयं ग्रहणयोग्यताम् । ऋषिषु विश्वामित्रादिषु । प्रविष्टां संस्काररूपेण स्थिताम् ॥ २९ ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

अयमत्र शङ्काभिप्रायः—अवान्तरप्रलये स्मृत्युपयोगिवेदगोचरसंस्काराश्रयपुरुषसद्भावेऽपि महाप्रलये न संभवति । अवान्तरप्रलयो हि प्रजापतेस्सुषुप्तिकालः । तत्र च विद्यमानस्संस्कारः पुनरुत्थानानन्तरं अस्मदादिसुप्तोत्थितवत् प्रजापतेरुपपद्यते स्मरणोपयोगी । एवं महर्षीणामपि । महाप्रलयस्तु प्रकृतिमात्रावशेषः प्रजापतिप्रभृतीनां सर्वेषामपि देहवियोगकालः । तदनन्तरं च जन्मान्तरानुष्ठितपुण्यवशादन्य एव प्रजापत्याद्यात्मना पुण्यविशेषेणोपचिता अधिकारिपुरुषा उत्पद्यन्ते । न च तेषां पूर्वकल्पीयवेदानुभवजनितः संस्कारः विद्यमानोऽपि सृष्ट्यारम्भे स्मृतिहेतुस्सम्भवति । मरणस्य स्मृतिप्रमोषहेतुत्वेन संस्कारोद्बोधविघटकत्वात् । न च तदानीमीश्वर एव तान् वेदं पूर्वकल्पसमानानुपूर्वीकमध्यापयिष्यतीति वाच्यम् । तस्य शरीराभावेनाध्यापकत्वासम्भवात् । अतः प्रजापत्यादिभिस्तदानीं कालिदासवत् वेदः काव्यमिव सृष्ट इत्यभ्युपेयम् । 'यज्ञेन वाचः पदवीय'मित्यादिपूर्वसूत्रोदाहृतानि वचनानि तु अवान्तरप्रलयाभिप्रायाणि भविष्यन्ति । एवं च 'मन्त्रकृत' इत्यादिवाक्यानि स्वारस्येनोपपद्यन्ते । एवमेव च व्यवस्था युक्ता । वचनद्वयस्यापि अवान्तरमहाप्रलयभेदेन व्यवस्थोपपत्तौ कस्यापि क्लेशेनार्थवर्णनायोगात् । अन्यथा

हि 'मन्त्रकृत'इति वचनं क्लेशेन व्याख्यातं भवेत् । नन्वभिनववेदसृष्ट्यभ्युपगमे तस्य पूर्वकल्पीयपदार्थानुसन्धानानुपयोगित्वात् कथं समानाकारसृष्ट्युपयोगित्वमिति चेत्, मास्तु तथात्वम् । वेदप्रभवत्वप्रतिपादकवचनजातस्यापि अवान्तरप्रलयविषयत्वोपपत्तेः । एवंसति उपायाभावेन पूर्वकल्पतुल्यैव प्रजापतिना सृष्टिः कर्तुमशक्येत्यापादनमपीष्टापत्तिपराहतमेव । तथा च **यत् पूर्वसूत्रे** वेदस्य नित्यत्वं व्यवस्थापितं, तन्नोपपद्यते । एवं 'शब्द इति चेदि'ति **सूत्रे यत् शब्दार्थसम्बन्धस्य** जातिमादाय नित्यत्वं व्यवस्थापितं, तदपि नोपपद्यते । जातिव्यक्त्यात्मकस्य कृत्स्नस्यापि प्रपञ्चस्य महाप्रलये असम्भवात् । तत्र जात्याश्रयव्यक्त्यभावेन जात्यवस्थानायोगात् जातिनित्यत्ववादो निरालम्बन एव । तदिदमुक्तम्—**अभिधानाभिधेयेत्यादिना**। अत्राभिधानग्रहणेन स्वरूपतोऽपि वेदनित्यत्वं न सम्भवतीति सूचितम् । **सम्बन्धनित्यत्वेन विरोधः शब्दे परिह्रियेतेति** । व्यवहितपूर्वसूत्राक्षेपदर्शनं तु अव्यवहितपूर्वसूत्रार्थाक्षेपस्याप्युपलक्षणम् । नन्वत्रेयं शङ्का—देवताविग्रहमनिच्छतोऽपि मीमांसकस्य वेदान्तिनं विग्रहमङ्गीकुर्वाणं प्रति वक्तव्या । सा न विग्रहाङ्गीकारप्रयुक्ता । अपि तु महाप्रलयाभ्युपगमप्रयुक्ता । सा मीमांसकस्यापि तुल्या । विग्रहानङ्गीकारेऽपि महाप्रलये अभिधानाभिधेयव्यवहारविच्छेदस्यापरिहार्यत्वादिति चेत्, उच्यते—मीमांसको हि मन्त्रार्थवादादिप्रामाण्यमनभ्युपगम्य यथा देवताविग्रहादिकं नाभ्युपगच्छति, तथा सृष्ट्यादिकमपि नाभ्युपगच्छतीति नायं दोषो मम प्रसरतीति तदभिमानः । ननु, सूत्रे समाननामरूपत्वादित्यत्र केन समानत्वं विवक्षितमित्याशङ्क्य पूर्वेण कल्पेनेति परिहारमभिप्रेत्य पूर्वकल्पसद्भावबोधनाय वक्ष्यमाणमनादित्वं स्मारयति—**तदापि संसारस्येति** । 'यदा सुप्त' इति श्रुतौ स्वप्नपदं जाग्रतोऽप्युपलक्षणम् । तथोपलक्षणं तु जाग्रतोऽपि स्वप्नतुल्यतया प्रातिभासिकताद्योतनाय । अत एव जाग्रत्पदार्थानामपि सुप्तावेव लयप्रतिपादनमपि सङ्गतम् । प्राणे परमात्मनि । एकधा अभिन्नो भवति । यथायतनं यथागोलकम् । प्राणा इन्द्रियाणि । प्राणेभ्य इत्यादयः पञ्चम्योऽनन्तरपदाध्याहारेण व्याख्येयाः । देवाः करणानुग्राहकाः । लोकाः विषयाः । **कल्पान्तरव्यवहारानुसन्धानोपपत्तेरिति** । सा च वेदानुसन्धाननिबन्धनेति कल्पान्ते संस्कारात्मना वेदाः पुरुषविशेषेष्ववस्थिताः । अतो न तस्यानित्यत्वम् । कल्पान्तरानुसन्धानं वेदपूर्वकमेवेत्यत्र नियामकमाह—**तथा च श्रुतिरिति** । ततश्च कल्पान्तरे यादृशो वेदोऽवस्थितः, तादृशं वेदं परमात्मा नित्यसिद्धसार्वज्ञ्यादिगुणः अशरीरोऽप्यन्तर्यामितया तं प्रत्युद्बोधयति । दृष्टं च

जन्मान्तरानुभूतपदार्थानुसन्धानं जातिस्मरणादिषु । स्तन्यपानादिप्रवृत्तिश्च जन्मान्तरानुभूतेष्टसाधनत्वादिव्याप्त्यनुसन्धानमूलैव । दृश्यते च जन्मान्तरसंस्कारवशादेव तत्तज्जातिप्राप्त्युद्बोधितान्मर्कटादिषु धावनकौशलं सहजम् । एवं हिरण्यगर्भादीनामपि जन्मान्तराधीतो वेदः स्वयमेव पुण्यविशेषलब्धपरमेश्वरानुग्रहशालिनामुद्बुद्धो भविष्यतीति न तस्य विभिन्नानुपूर्वीकत्वं, प्रलयवशादुच्छिन्नसंस्कारत्वं वा सम्भवति । **मधुच्छन्दःप्रभृतिभिः ऋषिभिर्दाशतय्यो दृष्टा इति** । दशमण्डलात्मको ऋग्वेदो दशतयः । तदन्तर्गता ऋचो दाशतय्यः । एवं च मन्त्रकारपदकारनिर्देशोऽपि तेषांतेषामृषीणां तत्र तत्तद्भागदृष्टत्वमित्येव पर्यवस्यति , न त्वपूर्वतया मन्त्रपदादिरचयितृत्वम् । तेषां हि तथासामर्थ्यं पुण्यविशेषाधीनं वक्तव्यम् । ततश्च पूर्वं तादृशान् मन्त्रादिप्रवर्तकान् ऋषीनुपलभ्य तेषां च कीर्त्यादिकमुपलभ्या'हमपि तथा स्यामि'ति कामनया पुण्यानुष्ठानं तत्तद्वेदभागप्रवर्तकताफलकं तैस्तैस्सम्पादितमिति वक्तव्यम् । तत्र विसदृशवेदभागरचयितृत्वे कामनानुरूपं फलं स्यादिति पूर्वकल्पसदृशवेदभागरचयितृत्वं गुर्वधीनाध्ययनं विनैव तेषां भवतीति प्राप्नोति । इदमेव च मन्त्रादिद्रष्टृत्वम् । एवं च हिरण्यगर्भेणापि तत्तदृषिमाहात्म्यप्रतिपादकं वेदभागं पूर्वकल्पीयं दृष्ट्वैव ते ते ऋषयः सृष्टा इति सिद्धं वेदस्य समानानुपूर्वीकत्वम् महाप्रलयव्यवधानेऽपि । इदमेव च तस्य नित्यत्वम् । यत् पूर्वपूर्वानुपूर्वीगोचरसंस्कारवशात् पुनःपुनः तादृशानुपूर्वीकस्यैवाध्ययनादिकम् । अमुमर्थमभिप्रेत्याह—**प्रतिवेदं चैवमेव काण्डर्ष्यादयस्समर्थन्त इति** । एवं पूर्वपूर्वसमानानुपूर्वीकस्य वेदभागस्य द्रष्टृत्वेनैव, न त्वपूर्वस्य रचयितृत्वेन । ऋषिज्ञानपूर्वकमेव, न तु कर्तृज्ञानपूर्वकम् । ऋषिश्च मन्त्रभागद्रष्टैव । आर्षेयं ऋषिः, च्छन्दः गायत्र्यादिः, दैवतं, मन्त्रप्रतिपाद्यदेवता, ब्राह्मणं, विनियोजकवाक्यम्, एतान्यविदितानि यस्मिन्मन्त्र इति बहुव्रीहिः । स्थाणुं स्थाणुत्वम् । वर्छति गच्छति । दृष्टं लौकिकम् । आनुश्रविकं वैदिकम् । धर्माधर्मफलभूतेति । तथात्वं च प्रपञ्चवैचित्र्यान्यथानुपपत्त्या स्वीकर्तव्यम् । अन्यथा सृष्ट्यारम्भे केचन सुखिनः केचन दुःखिन इति वैलक्षण्यं निर्हेतुकमेव स्यात् । तथा च कल्पान्तरानुष्ठितधर्माधर्माधीनत्वे वैचित्र्यस्य स्थिते तयोः कामनानुरूपफलजनकतया अनिष्टसाधनत्वेन नरकादिकं शास्त्रतोऽवगत्य दाहच्छेदादिकं च लोकतोऽवगत्य तत्परिहारार्थमधर्मवर्जनं यैः कृतम्, इष्टसाधनतयेन्द्रादिस्थानं शास्त्रतो राजादिस्थानं लोकतोऽवगत्य धर्माचरणं च यैस्तत्प्राप्त्यर्थं कृतं, तेषां कल्पान्तरे नरकाद्यप्राप्तिरनिष्टसाधनतयापेक्षिता । इन्द्रादिपदप्राप्तिश्चेष्टसाधनतयापेक्षिता । तत्र कल्पभेदेन पदा-

र्थानां वैजात्येऽभ्युपगम्यमाने यदि नरकमिष्टसाधनं, तथासति कल्पान्तरानुभाव्यानि यानि कर्माणि पूर्वकल्पेऽनुष्ठितानि, तेष्विन्द्रादिपदप्रापकं पुण्यमनिष्टसाधनं स्यात् । नरकप्रापकपापपरिहारश्च इष्टवियोगहेतुस्स्यादिति कर्मणामेकस्मिन्नेव कल्पे फलप्रापकतया अनिर्णीतत्वात् कस्यापि वेदवाक्याधीनप्रवृत्तिर्निवृत्तिश्च न स्यादिति तुल्यरूपतैव पदार्थानामुपेया । तदाह—पूर्वस्रष्टिसदृश्येवेति । तथा च तुल्यरूपसृष्टिसिद्धये कल्पान्तरव्यवहारानुसन्धानाय हिरण्यगर्भाय वेददानमीश्वरीयमिति न वेदानित्यता । हिंस्रादयो धर्मप्रधानाः शब्दाः । तैर्हिंस्रत्वादिभिः भाविताः संस्कृताः पुरुषाः हिंस्रत्वादिकं जन्मान्तरे प्रतिपद्यन्त इति योजना । शक्त्यवशेषमिति । शक्तिः सूक्ष्मावस्था । तथा च प्रलयेऽपि सूक्ष्मावस्थवस्तुसद्भावात् शब्दार्थसम्बन्धानित्यता नेति भावः । तथा 'अग्निर्वा अकामयते'त्यादि । नन्वत्रैकोऽग्निः यष्टव्यः, अपरो यष्टेति एतावदवगम्यते । तावता भविष्यन्नग्निः पूर्वेण समान इति कथं सिध्यति । उच्यते—यागादिप्रयुक्त एक एवाग्निरिति तावदुपेयम् । अन्यथा केन कोऽग्निर्यष्टव्य इत्यनिर्धारणप्रसङ्गात् । तथा च यष्टृपरं यद्यग्निपदं मुख्यं स्वीक्रियेत, तदा तस्य मुख्यतासिद्ध्यर्थं यष्टृतादशायां तस्य तदधिकारे वर्त्तमानतोपेयेति तस्य स्वोद्देशेनैव हविस्त्यक्तव्यमापद्येत । ततश्च वाक्यमसदर्थकं स्यात् । स्वोद्देशेन निर्वापे स्वत्वत्यागासम्भवात् । प्रकृते निर्वपतेर्यागपर्यन्तत्वात् । न चात्राग्निना स्वीयं द्रव्यं कृत्तिकासाधारणं कृतमित्येव कल्प्यताम् । 'अग्नये कृत्तिकाभ्य' इति श्रवणादिति वाच्यम् । साधरणीकरणेऽपि अग्निस्वामिकत्वस्यानिवृत्त्या अग्निकर्तृकयागानिष्पत्तेः । अतो यष्टृपरमग्निपदं भविष्यद्वृत्त्याग्नित्वमादाय यष्टव्यादग्नेर्भिन्नमेव त्रैवर्णिकमधिकारिणं प्रतिपादयतीति वक्तव्यम् । तथा च वर्तमानाग्न्यधिकारनिवृत्त्यनन्तरमयं यष्टाग्निर्भविष्यतीति लभ्यते । अतोऽतीतस्य वर्तमानस्य च तुल्यनामतायामिदमुदाहरणं भवत्येव । न च यष्टव्यपराग्निपदमेव भूतपूर्वगत्या अनग्नावेव लाक्षणिकमस्त्विति वाच्यम् । एवंहिसत्यवैरूप्याय अस्माकमप्यतीताधिकार एवाग्निर्यष्टव्यस्स्यात् । अतीतानां च बहुत्वात् कोऽग्निर्यष्टव्य इति विनिगमनं न स्यात् । अतस्सर्वैर्वर्तमान एवाग्निर्यष्टव्यः । एवंचसति 'अग्निमावहे'त्यादिमन्त्रगतान्यप्यग्निपदानि मुख्यानि सम्पद्यन्ते । 'अभून्नो दूतो हविषो जातवेदा'इत्यादिमन्त्रैर्वर्तमानाग्निप्रतिपादनमप्युपपद्यते । अतो यष्टृपरस्यैवाग्निपदस्य भविष्यद्वृत्त्या लाक्षणिकत्वमास्थेयम् । ऋषीणां प्राचीनानाम् । शर्वर्यन्ते प्रलयान्ते । पर्यये पर्याये पुनरप्यृतूनामागमने ॥ ३० ॥

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥३१॥

प्रथमसूत्रे देवादीनामुपासनास्वधिकार इत्युक्तम् । तत्र किं सर्वासूपासनासु अधिकारो विवक्षितः, उत कासुचिदेवेति विकल्पे आद्यनिराकरणार्थमिदं सूत्रमित्यभिप्रायेण व्याचष्टे—**इहेत्यादिना** । मधुविद्यायां ह्यादित्ये मधुदृष्टिर्विहिता—'असौ वा आदित्यो देवमधि'ति वाक्येन । अतस्तस्यामादित्य उपास्यः । पुनश्चादित्यस्य प्रागादिषु चतसृषु दिक्षूर्ध्वं च विद्यमानेषु रश्मिषु कर्मफलभूतानां यशस्तेजइन्द्रियवीर्यान्नाद्यानां संश्रयणमुक्त्वा तेषां रसत्वं चोक्तम् । ते च रसा आदित्यादिगततया प्रत्यक्षीक्रियमाणानि यानि रोहितशुक्लकृष्णपरःकृष्णमध्यगतक्षोभमाणात्मकानि पञ्च रूपाणि तदात्मतया निरूपिताः । तेषां च यथाक्रमं वस्वाद्युपजीव्यत्वं च दर्शितम् । वस्वाद्युपजीव्यतया तेषाममृतपदोदितानां रसानामुपासनाया वस्वादिप्राप्तिश्च फलं निर्दिष्टम् । अस्यामुपासनायामादित्यस्य वस्वादीनां चाधिकारो नोपपद्यते । कर्तृकर्मविरोधात् । ननु, कर्तृकर्मविरोधो न । उपासनासु स्वस्य स्वेनैवोपासितुं शक्यत्वात् । यागादिस्थल एव परं तथाविरोधः । स्वस्योद्देशे स्वत्वनिवृत्तेरसम्भवात् । कथमन्यथा पञ्चाग्न्यादिविद्यासु जीवस्योपास्यत्वम् । कथं च ब्रह्मविद्यास्वप्यहङ्ग्रहेणोपासनं स्यात् । अत एव वस्वादीनां वसुत्वप्राप्तिरूपं फलमपि न विरुध्यते । अस्मिन् जन्मनि वसूनामेव जन्मान्तरेऽपि वसुत्वप्राप्तिरस्त्वित्यभिलापसम्भवात् । अतो वस्वादीनामस्यामुपासनायां कथमनधिकार इति चेत्, उच्यते—वस्वादीनामुपास्यतयैतदुपासनाप्रीणनीयत्वं तेषां वक्तव्यम् । न च वस्वादीनामुपासनया स्वस्यैव प्रीणनीयत्वं वसून् प्रति सम्भवति । अत उपासनाजनितायाः वस्वादिप्रीतेर्वसुष्वसम्भवात् न तत्राधिकारो वस्वादीनाम् । पञ्चाग्निविद्यायां त्वगत्येश्वरप्रीतिरेव द्वारत्वेन कल्पनीयेति न तत्रानधिकारः । अहङ्ग्रहेण परब्रह्मोपासनायां च उपास्यस्य **ब्रह्मण** एव प्रीतिर्द्वारमिति न तत्राप्यधिकारविरोधः । अतो न वस्वादीनां मधुविद्यायामधिकार उपपद्यते । **अग्निः पाद इति** । अधिदैवतमाकाशस्य **ब्रह्मत्वेन** उपासनं विधाय तस्याग्न्यादयश्चत्वारः पादाः अनेन वाक्येन निर्दिश्यन्ते । **इमावेव गोतमभरद्वाजा**वित्येति । 'इदं वै तच्छिरः एष ह्यर्वाग्बिल ऊर्ध्वबुध्नश्चमस' इति चमसत्वेन मुखं प्रस्तुत्य 'तस्यास्त ऋषयस्सप्ततीर'इति मुखसम्बन्धित्वेन सप्तर्षीन् प्रस्तुत्य तद्विवरणार्थमिदं वाक्यं प्रवृत्तम् । तथाचेमाविति कर्णावित्यर्थो द्रष्टव्यः । अथ यत्रैवंविरोधो नास्ति । तेष्वेवोपासनेषु देवादीनामधिकारः, न सर्वत्रेति द्वितीयपक्षनिरासार्थत्वं मनसि निधाय सूत्रान्तरमवतारयति—**कुतश्चेति**॥ ३१ ॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

**वाक्यशेषप्रसिद्धेश्चेति** । आदित्यं प्रस्तुत्य 'पुरस्तादुदेता पश्चादस्तमेते'ति वाक्यशेषः । स ज्योतिर्मण्डलमेव प्रतिपादयति । तत्रैव हि उदयास्तमयौ प्रसिद्धौ । एवम् 'आदित्येनैवायं ज्योतिषास्ते पल्ययते चन्द्रमसैवायं ज्योतिषास्ते पल्ययत' इत्यादिकमपि मण्डलविषयमेव । 'एवं रोहिणीनक्षत्रं प्रजापतिर्देवता ज्येष्ठा नक्षत्रमिन्द्रो देवते'त्यादिवाक्यैरिन्द्रप्रजापतिपदानामपि ज्योतिर्मण्डलविशेषवाचकतैवावगम्यते । ननु, मन्त्रार्थवादादिभ्यः प्रतीयमानं देवताविग्रहादिकं कथं नास्तीत्यपलप्यते । अन्यथा ज्योतिष्टोमादिवाक्यात् प्रतीयमानस्वर्गयागादिसाध्यसाधनभावोऽप्यपलप्येत । न च ज्योतिष्टोमादिवाक्यस्य तस्मिन्नर्थे तात्पर्यात् सोऽर्थो नापलप्यते । अर्थवादादीनां तु न स्वार्थे तात्पर्यमिति वाच्यम् । एतादृशवैषम्ये मूलाभावादिति चेत्, उच्यते—वेदवाक्यानां हि प्रमाणान्तरानधिगते तदविरुद्धे च प्रयोजनवत्यर्थे प्रामाण्यम् । तत्र यद्यपि देवताविग्रहादिकं प्रमाणान्तरानधिगतं भवति, तथापि न प्रमाणान्तराविरुद्धम् । आदित्यादिपदानां चैतन्यादिमद्देवताभिधायित्वे हि लोके तेषां मण्डलादिषु गृहीता शक्तिर्निरुध्यते । अपि च यदि देवताप्रीतिपर्यन्ततां कर्मणामुपेत्य प्रीतायास्तस्याः फलदातृत्वमुपेयते, तदा कल्पान्तरानुभाव्येषु फलेषु का गतिः । कर्माश्रिताया देवतायाः प्रलये नष्टत्वात् । अश्वमेधाङ्गभूताश्वस्याङ्गादिकमुद्दिश्य ये होमा आम्नाताः—'दद्भ्यः स्वाहा हनूभ्यां स्वाहे'त्यादयः, तेषु कथं देवताप्रीत्यर्थता कर्मणामुपेतव्या । कथं च ह्यवदानसमित्कुशादिभिरत्यल्पैः अनदनीयैश्च देवताप्रीतिस्स्यात् । तत्र चेत् कर्मण एव देवताप्रीतिं विना फलं स्यात्, परमेश्वरप्रीत्यर्थता वा तत्राभ्युपगम्येत, तदा सर्वत्रापि तथास्तु । किमर्धजरतीयेन । अपि चोत्सर्गतः शब्दस्यैकस्मिन्नर्थे तात्पर्यम् । न च प्रयाजादिवाक्यानामवान्तरवाक्यार्थे महावाक्यार्थे चोभयत्र तात्पर्यमिष्टमिति वाच्यम् । अवान्तरवाक्यविधया प्रयाजादिवाक्यैर्योऽर्थः प्रतिपादितः, महावाक्यघटकतादशायामपि प्रयाजादिवाक्यांशेन तावानेवार्थः प्रतिपाद्यते, न त्वधिकः । परं तु बोधद्वयं तदर्थगोचरं जायते । अवान्तरवाक्यविधयैको बोधः, महावाक्यविधया अपरो बोधः । अर्थवादवाक्येषु तु मुख्यार्थ एकः, लक्षणीयश्च अपरः स्तुतिरूप इति कथमर्थद्वये तात्पर्यम् । न च विनिगमनाविरहात् उभयत्रापि तात्पर्यं कल्पनीयम् । श्रुत्यनुग्रहाय मुख्यार्थ एव वा तदस्त्विति वाच्यम् । मुख्यार्थस्य विध्यनपेक्षत्वेन तत्र तात्पर्यकल्पनायोगात् । न च विध्यपेक्षत्वं तात्पर्यविषयत्वे अप्रयोजकमिति वाच्यम् । प्रयोजनपर्यवसायी हा-

ध्ययनविधिगृहीतानां वेदवाक्यानामर्थो वर्णनीयः । तत्र विधिवाक्यानां ज्योतिष्टोमादिविषयप्रवृत्तिजननद्वारा स्वर्गादिपुरुषार्थपर्यवसायितायास्स्वार्थतात्पर्यकत्वे अर्थवादलक्षितायास्स्तुते रुच्युत्पादनद्वारा प्रवृत्त्युपयोगितया युक्ता तात्पर्यविषयता । देवताविग्रहादिज्ञानं तु न ब्रह्मज्ञानवत् स्वत एव पुरुषार्थपर्यवसायि, नापि स्तुतिज्ञानवत् प्रवृत्त्युपयोगि । अतो विध्यनपेक्षितविग्रहादिप्रतिपादकतायां वाक्यवैयर्थ्यं स्यात् । अवश्यापेक्षितेन स्तुत्यर्थेनैवाम्नानचारितार्थ्यात् न पुनर्व्युत्पत्तिविरुद्धं स्वार्थे तात्पर्यं कल्पनीयमिति तात्पर्याभावे कथं वाक्यस्य तत्र प्रामाण्यम् । न च तात्पर्याभावेऽपि यथा रेवत्याधारकत्वं वारवन्तीयसाम्नः प्रतीतमित्येतावता स्वीक्रियते । 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति वाक्यं रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधिपरम् । न च तस्य वाक्यस्य विशेषणेषु तात्पर्यं विद्यते । एवं स्तुत्यालम्बनस्यार्थस्य तात्पर्याविषयत्वेऽपि प्रतीतत्वेन तत्रापि प्रामाण्यं किं न स्यादिति वाच्यम् । वारवन्तीयस्य रेवत्याधारत्वे वाक्यतात्पर्यविषयता नास्तीत्यनुपपन्नम् । विशेषणविशेष्यतत्संसर्गघटितस्य विशिष्टस्य तात्पर्यविषयत्वे घटकीभूतानां पदार्थानां तात्पर्यविषयत्वावश्यंभावात् । न हि घटकीभूततत्तत्पदार्थव्यतिरेकेण विशिष्टं नाम किञ्चिदस्ति । परं तु तत्तात्पर्यं तावत्सु सर्वेषु व्यासक्तमिति न तेषां सर्वेषां प्रत्येकं तात्पर्यपर्याप्त्यधिकरणता । स्तुत्यालम्बनीभूतस्य तु न कथञ्चिदपि तात्पर्यसंस्पर्श इति कथं स वेदप्रमाणकस्स्यात् । अतः प्रतीतोऽपि सोऽर्थः अप्रामाणिकत्वात् परित्यज्यत इत्यभिप्रेत्योपसंहरति—तस्मादभावो देवादीनामिति ॥ ३२ ॥

## भावं तु बादरायणोऽस्ति हि ॥३३॥

**यद्यपि मध्वादिविद्यास्विति** । अत्र यद्यपीत्यनेनानधिकारे अनभिमतिर्द्योत्यते । यद्यपि वस्वादीनां स्वोपासना स्वप्रीत्यर्था न भवति, तथापीश्वरप्रीत्यर्था भवत्येवेति ततः प्रीत ईश्वर एव तेभ्यः फलं दास्यतीति न काचिदनुपपत्तिः । अवश्यं ह्यस्मदादिभिरपि कल्पावसानकृतायां वस्वाद्युपासनायामीश्वरप्रीतिरेव द्वारत्वेनास्थेया । उपासनाप्रीतानां वस्वादीनां प्रलये नष्टत्वात् । **देवादिभ्याभिश्रास्विति** । न च मधुविद्या ब्रह्मविद्यैव भवति । 'य एतामेवं ब्रह्मोपनिषदं वेदे'ति उपसंहारदर्शनात् । 'न हवा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवती'ति क्रममुक्तिफलकत्वाच्च । अतस्तत्रादित्यादिशब्दा गायत्र्यादिशब्दवत् तत्पदवाच्छिन्नब्रह्मपरा इति वाच्यम् । अत्र 'असौ वा आदित्यो देवमधि'त्युपक्रमगत आदि-

त्यशब्दः 'तद्यदादित्यमभितोऽश्रयदि'त्यादावभ्यस्तश्च । भूयांसि चादित्यलिङ्गान्यत्र रश्मिप्रभृतीन्युपक्षिप्तानि । एवं वस्वादिपदान्यप्यभ्यस्यन्ते । 'वसूनामेवैक' इत्यादिना च वस्वादिपदार्थस्य बहुत्वयोगोऽवगम्यते । उपासकस्य च तेषु मध्ये वसुत्वादीनां निवेशः श्रूयते न चेदं वस्वादिपदानां ब्रह्मलक्षकत्व उपपद्यते। ब्रह्मण एकत्वात् बहुवचनावधारणषष्ठ्यर्थान्वयानुपपत्तेः । अत इयं वस्वादिजीवोपासनैव । क्रममुक्तिस्तु ततो वचनबलात् भविष्यति । उपसंहारस्थब्रह्मशब्दोऽपि वेदपरो भविष्यति । ब्रह्मोपनिषदं वेदोपनिषदमित्यर्थः । अतो युक्तमुक्तं देवादिव्यामिश्रास्विति । आदिपदात्पूर्वोक्ता ऋष्यादिव्यामिश्रोपासनादिर्विवक्षिता । **प्रतीतिशरणैर्विद्यमानार्थवाद आश्रयणीय इति** । अयं भावः—यथा 'न सुरां पिबेदि'ति वाक्ये नञ्समभिव्याहारात् सुरापानं बलवदनिष्टाननुबन्धीष्टसाधनं न भवतीत्यर्थपरे 'सुरापानमिष्टसाधनमि'ति बोध एव नास्ति, नैवमर्थवादानामालम्बनीभूतार्थप्रत्यायकत्वमेव नास्तीति वक्तुं शक्यते । तत्प्रत्ययस्याकाङ्क्षादिबलाधानस्य सर्वसम्प्रतिपन्नत्वात् । अन्यथा मुख्यार्थाप्रत्यये स्तुतिलक्षणैव न स्यात् । सा च प्रतीतिः प्रमारूपेत्यपि स्वीकर्तव्यम् । अनवगताबाधितार्थगोचरं हि ज्ञानं प्रमेति प्रसिद्धम् । न च देवताविग्रहादिरूपोऽर्थः प्रामाणान्तरेणावगतः । येन तद्गोचरज्ञानस्य स्मृतिज्ञानवदप्रामाण्यं भवेत् । नापि केन चित् प्रमाणेन बाधितः । येनेदं रजतमितिज्ञानवत् अप्रामाण्यं भवेत् । अथापि क्लृप्तप्रमाणाजन्यत्वादप्रमात्वमिति चेत्, न । प्रतीत्यनुसारेण शब्दस्य तत्र करणत्वात् । न च तात्पर्यविषय एव शब्दस्य ज्ञानजनकत्वमिति प्रतीतिविरुद्धमास्थातुं शक्यते । मन्त्रार्थवादार्थस्य सतोऽसतो वा प्रतीतेः सर्वानुभवसिद्धत्वात् । यदि तु तात्पर्यविषय एव प्रतीतिजनकत्वं शब्दस्येति निर्बन्धः, तथासति आलम्बनीभूतस्यार्थस्य प्रतीयमानत्वात्तत्रापि तात्पर्यमस्तु । प्रमाणान्तराविरोधे तथाभूत एव भवति । न च शब्दस्योभयत्र तात्पर्यं व्युत्पत्तिविरोधि । श्लेषकाव्ये तथापि व्युत्पत्तेः । न चात्र लौकिकशक्तिग्रहविरोधः । आदित्यादिपदानां ज्योतिर्मण्डल एव शक्तिग्रहादिति वाच्यम् । यथा स्वर्गादिपदानां सुखसामान्यादौ शक्तिग्रहे लोकसिद्धे सत्यपि 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वपदास्पदम् ॥' इत्याद्यर्थवादानुसारेण सुखविशेषादिवाचकत्वे निर्णीते सुखसामान्यादौ लौकिकप्रयोगो लाक्षणिकः तादृशसुखविशेषाज्ञानप्रयुक्त इति निर्णीयते, एवं मण्डलादिषु प्रयोगोऽपि लाक्षणिको भविष्यति । 'रोहिणी नक्षत्रं प्रजापतिर्देवते'त्यादिनिर्देशस्तु रोहिणी नक्षत्रं, तस्य प्रजापतिर्देवतेत्यध्याहारेण व्याख्येयः । 'प्रजा-

पते रोहिणी वेतु पत्नी । इन्द्रो ज्येष्ठामनुनक्षत्रमेती ' ति व्यतिरेकप्रतिपादनात् । यच्चोक्तं देवतादिविग्रहादेः विध्यनपेक्षत्वेन तत्प्रतिपादने प्रयोजनं नास्तीति, तन्नोच्यते—मास्तु तत्प्रतिपादने साक्षादेव प्रयोजनम् । न ह्येतावता असति बाधके सोऽर्थोऽसन्निति वक्तुं शक्यते । परं तु प्रयोजनपर्यवसानाय स्तुतिलक्षणा आश्रीयते । वस्तुतस्तु मुख्यार्थोऽपि विध्यपेक्षित इत्याह—अपि चेति । न हि स्वरूपरहिता इति । यद्यपि स्वरूपरहिता अपि स्वरूपारोपेण चेतसि समारोहयितुं शक्यन्ते, तथापि अपेक्षितस्य रूपस्य मन्त्रार्थवादादिभिरुत्सर्गतः सत्त्वेनैव प्राप्तस्यासत्त्वं परिकल्प्यारोपकल्पना न प्रमाणानुसारिणी । एवं यानि कर्माणि इन्द्रादिपदप्राप्त्यर्थं विहितानि, तान्यपीन्द्रादिरूपफलसिद्धौ चेतनानिन्द्रादीनपेक्षन्ते । न हि चेतनस्याचेतनभावः सम्भवति । ततश्च यथा स्वर्गादिस्वरूपसमर्पकत्वस्यार्थवादस्य स्वर्गादिविषयककामनामुखेन स्वर्गादिफलके कर्मणि प्रवर्तकत्वात् स्वार्थपरतास्थीयते, एवमिन्द्रादिस्वरूपसमर्पकाणामप्यर्थवादानामिन्द्रत्वप्राप्त्युपयोगिषु कर्मसु प्रवृत्त्युपयोगित्वमिति स्वार्थपरतास्थेया । एवम् 'अग्निर्दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वे'त्यादिमन्त्रार्थवादप्रतिपाद्यं प्रसिद्धाग्निव्यतिरिक्तमाहवनीयादिस्वरूपमप्यग्नीनादधीतेति विधिना अपेक्ष्यते । आधानजन्यसंस्काराश्रयत्वस्य प्रसिद्धाग्निष्वनुपपत्तेः । पवमानेष्ट्यनन्तरमेव आहितस्य प्रसिद्धस्याग्नेः परित्यागेन तत्र विद्यमानसंस्कारस्य नाशापत्तेः । अग्निहोत्रादिकर्मकाले आहवनीयाद्यननुवृत्तिप्रसङ्गात् । अजस्रधारणपक्षेऽपि अनुगतस्य पुनर्मथनादिना सम्पादनेनाधानसंस्कृतस्याननुवर्तनात् । अतः सम्भारेषु मथिताग्निस्थापनरूपेणाधानेनाग्न्यभिमानिन्य एव देवताः संस्क्रियन्ते । यथा दीक्षादिसंस्कारैः प्रत्यगात्मा । न च यथा आधानमाहवनीयत्वादिप्रयोजकम्, एवं प्रणयनमथनादिकमपि तत्प्रयोजकमिति वाच्यम् । तथासत्याहवनीयादिपदानामेकविधप्रवृत्तिनिमित्ताभावेनानेकार्थता स्यात् । अत आधानेन देवता एव संस्क्रियन्ते । ता अजस्रधारणपक्षे मध्ये अनुगत्वभावे अन्त्येष्टिपर्यन्तं तेष्वायतनेषु सन्निदधते । अनुगतौ तु पुनर्मथने मथिताग्नावायान्ति । अजस्रधारणाभावपक्षे प्रणयनेन आहवनीयान्वाहार्यपचनदेवतयोरायतनेषु सन्निधानं भवति । कर्मान्ते पुनः गार्हपत्यायतने गमनं पशावौत्तरवेदिकप्रणयने पूर्वमाहवनीयाधिष्ठितं गार्हपत्योऽधितिष्ठति, प्रणीतमग्निमाहवनीयोऽधितिष्ठतीति कल्पनीयम् । न चैवमग्निसंसर्गनिमित्तप्रायश्चित्तापत्तिः । तस्य प्रत्यक्षाग्निसंसर्गनिमित्तकत्वात् । न चैवं गार्हपत्यादिपदानां देवतावाचकत्वे 'आहवनीये जुहोति गार्हपत्ये हवींषि श्रपयती'त्यादिचोदनासु देवतानामेवाधारता स्यादिति वाच्यम् ।

इष्टापत्तेः । 'अमून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वे'ति देवान् प्रति हविःप्रापकत्वेनावगताया एव पाकप्रयोज्यसुरभीकरणकर्तृत्वावगमात् । यदि त्वस्मिन्मन्त्रे अभिमान्यभिमान्यविषययोरभेदोपचारः, तदा 'गार्हपत्ये हवींषि श्रपयती'त्यादावपि तथास्तु । अतोऽलौकिकानि देवतास्वरूपाणि तत्तद्विध्यपेक्षितान्येव मन्त्रार्थवादैः प्रतिपाद्यन्ते । तथा च देवताचैतन्यविग्रहादिसिद्धौ हविर्भोगः ऐश्वर्यं प्रसन्नता वरप्रदानमित्येवमादिकं यत् मन्त्रार्थवादादिभिरवगम्यते,तदप्युपेयमेव । न्यायतौल्यात् । ये तावद्देवताप्रसादवरप्रदानार्थतया जपादिविधयः प्रवृत्ताः, ते वरप्रदानादिकं फलतयापेक्षन्ते । तदुपयोगितयैश्वर्यमपेक्षितम् । अनीश्वराया देवताया वरदातृत्वासम्भवात् । एवं देवताह्वानमन्त्रविधिभिर्देवतागमनं दृष्टार्थत्वादपेक्षते । तच्च दृष्टार्थतायै हविर्भोजनमिति न कस्यापि विध्यनपेक्षता । 'दद्भ्यस्स्वाहा हनूभ्यां स्वाहे'त्यादौ तु यदि प्रसिद्धार्थव्यतिरेकेण देवताप्रतिपादकं किञ्चित् प्रमाणं नास्ति, तदा मा भूत्तत्राप्रसिद्धा देवता । प्रसिद्धा चात्र चेतन एवार्थो देवता । न ह्येकत्र स्वीकृतमिति यत्र प्रमाणमवतरति, तत्रापि तथा स्वीकर्तुं युक्तम् । यत्तु ह्यवदानादिभिरल्पैः समित्कुशादिभिरनदनीयैश्च कथं देवताप्रीतिस्स्यादिति, तन्न । शास्त्रप्रामाण्यात्तैरेव प्रीतिकल्पनात् । लोके हि रुचिवैचित्र्यमुपलभ्यते । अपि च 'यावदेका देवता कामयते, यावदेका तावदाहुतिः प्रथते, यद्वै देवा हविर्जुषते, अल्पमप्येकामाहुतिमपि ताङ्गिरिमात्रं वर्धयन्ते' इत्यर्थवादानुसारेण हविषो देवतातृप्तिपर्याप्तिवृद्ध्युपपत्तेर्नोक्तदोषः प्रसरति । एवं समित्कुशादीनामपि गोभिर्भक्षिततृणादिवत् अदनीयत्वेन परिणामस्सम्भवति । तथा च लिङ्गम्—'एतद्वै दैव्यं मधु यत् घृत'मिति । अत्र हि घृतस्य मधुत्वं देवतोपयोगे सति परिणामविशेषेणोपपादनीयम् । अतो मन्त्रार्थवादादिभिर्विध्यपेक्षित एवार्थः प्रतिपाद्यते इति नस्वार्थाविवक्षा । ननु, यद्यर्थवादेषु क्वचिन्मुख्यार्थ एव विध्यपेक्षितो बाधप्राप्तिरहितः प्रतिपाद्यते, तर्हि तत्र स्वार्थ एव प्रामाण्यप्रयोजनयोर्लाभात् स्तुतिलक्षणा न सम्भवतीति कथं सर्वार्थवादसाधारण्येन स्तुतिलक्षणा स्यादिति चेत्, मास्तु सर्वार्थवादसाधारण्येन स्तुतिलक्षणा । का हानिः । तथा हि —यत्र स्वार्थे प्रामाण्यप्रयोजनयोरलाभः, तत्र स्तुतिनिन्दालक्षणा न सम्भवत्येव । यत्र तु विधिवाक्यसमभिव्याहृतैरर्थवादैः समभिव्याहृतविध्युपयुक्त एवार्थः प्रतिपाद्यते । यथा 'यन्न दुःखेन संभिन्न'मित्यादिभिर्विध्युद्देशगतस्वर्गपदार्थनिर्वचनं, तत्र समभिव्याहारस्यापि मुख्यार्थमादाय चरितार्थत्वात् नास्त्येव स्तुतिलक्षणा । यत्र तु 'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयती'त्येवमादौ प्रकृतविध्यनुपयुक्त एव स्वार्थोऽपूर्वो भवति । तत्र हि शब्दाद्यवगतप्रकृत-

विध्येकवाक्यतानिर्वाहाय स्तुतिलक्षणाप्यवश्यमास्थेया । एवं देवतादिविग्रहादिप्रतिपादकेष्वप्यर्थवादेषु यथासम्भवमवगन्तव्यम् । वषट्करिष्यन् वौषडिति शब्दोच्चारणं यः करिष्यति, स होता कैश्चिच्चतुर्थ्यन्तशब्दस्वरूपमेव देवतेत्युच्यते, तन्न सम्भवति । 'ऐन्द्रं दधी'त्यादिदेवताप्रतिपादकेन तद्धितेन प्रत्ययेन प्रकृत्यर्थस्यैव देवतात्वं प्रतिपाद्यते । प्रकृत्यर्थश्च नेन्द्रशब्द एवेत्याह—**न च शब्दमात्रमिति** । अर्थस्य देवतात्वेऽपि तद्विषयकचतुर्थ्यन्तपदोद्देशस्यैवाङ्गतया क्रतुषु विधानात् विध्युद्देशगत एव शब्दः कर्मकाले उच्चार्य इति सन्निधानात् सिध्यतीति भावः। **स्वाध्यायादिष्टेति** । तत्तद्देवताविषयकमन्त्रजपात्तत्तद्देवतासाक्षात्कार इत्यर्थः । **अणिमाद्यैश्वर्यप्राप्तिफलक इति** । अणिमा लघिमा गरिमा महिमा प्राप्तिः प्राकाम्यम् ईशत्वं वशित्वम् । झटिति परमाणुतुल्यतयावस्थानमणिमा । तूलपिण्डवल्लघुत्वापादनं लघिमा । लोहादिवत् दुर्वहत्वापादनं गरिमा । पर्वतादिवदाकारसम्पादनं महिमा। अङ्गुल्यग्रेण चन्द्रादिस्पर्शः प्राप्तिः । उदकादिवत् भूमावपि निमज्जनं कुर्यामित्यभिलाषाप्रतिघातः प्राकाम्यम् । ईशत्वं स्रष्टृत्वादिसामर्थ्यम् । वशित्वं राजादिवदाज्ञाया अप्रतिघातः । इदं सर्वं कामावसायितायां सङ्कल्पसिद्धतायामेव भवति। **पृथ्व्यप्तेजोऽनिलेति**। पादतलमारभ्याजानोः, जानुप्रारभ्यानाभिदेशं, तत आग्रीवं, तत आकेशप्रान्तं, तत आब्रह्मरन्ध्रं, क्रमेण पृथिव्यादिपञ्चभूतात्मतया यथाशास्त्रमनुसन्धानेन पृथिव्यादिपञ्चमहाभूतगणे समुत्थिते जिते सति योगगुणे योगफले अणिमादौ प्रवृत्ते प्राप्ते सति योगाग्निमयं योगनिष्पन्नपुण्यविशिष्टं शरीरं प्राप्तस्य रोगादिकं नेत्यर्थः । ननु, देवाद्यधिकारविचारो नास्मासूपयुज्यते, नापि देवादिषु । तदीयविग्रहादेः तैर्न्यायं विना प्रत्यक्षेण निर्णेतुं शक्यत्वात् ब्रह्मविद्यास्वधिकारज्ञानार्थमुक्तन्यायानपेक्षणात् । तस्माद्व्यर्थोऽयं विचार, इत्यत आह—**क्रममुक्तिदर्शनानीति** । अयं भावः—अस्मास्वेवायं न्याय उपयुज्यते । दहराद्युपासना हि अस्मदादिभिरनुष्ठिता ब्रह्मलोके देवशरीरप्राप्तिद्वारा निर्विशेषसाक्षात्कारमुत्पाद्य परममुक्तिं सम्पादयन्तीति क्रममुक्तिफला इष्यन्ते । तथा च देवानामनधिकार इति पक्षे तासु प्रवृत्तिर्न स्यात् । अतस्तत्र प्रवृत्तिसिद्ध्यर्थं देवानामधिकारनिर्णयोऽस्मासूपयुज्यत इति। इदमुपलक्षणम् । उपासनास्वपि विशेषः सिध्यति । मन्त्रार्थवादादिप्रामाण्येन प्रसिद्धमण्डलाद्यतिरिक्तस्यादित्यादिशब्दार्थस्य सिद्धौ 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात । समावृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनात्वि'त्यादिमन्त्रपर्यालोचनयादित्यपदवाच्यो देवताविशेषस्सिध्यति। ततश्च 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इत्याद्युपासनास्वादित्यदेवता-

न्तर्यामित्वेन परमात्मोपासनं सिध्यति । पूर्वपक्षे तु मण्डलान्तर्वर्तित्वेनोपासनमिति । तथा सर्वास्वर्चिरादिमार्गवतीषूपासनासु मार्गध्यानं वक्ष्यति—'तच्छेषगत्यनुस्मृतियोगाच्चे'ति । तत्र पूर्वपक्षे प्रसिद्धा एवार्चिरादयो मार्गचिन्हत्वेन ध्येयाः । सिद्धान्ते त्वर्चिराद्यभिमानिदेवतासिद्धौ ता एवातिवाहिकत्वेन ध्येया इति व्युत्पादयिष्यति—आतिवाहिकास्तल्लिङ्गादि'ति । एवं 'प्लवा ह्येते अदृढा यज्ञरूपाः तद्देवानामन्नं तं देवा भक्षयन्ती'त्यर्थवादपर्यालोचनया वैराग्यविशेषोऽपि सिद्धान्ते सिध्यति । अतो युक्त एवास्मदाद्यर्थो देवताविचारः ॥३३॥

इति देवताधिकरणम् ॥९॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

पूर्वोत्तराधिकरणयोस्सङ्गतिमाह—**यथेति । न ह्याहवनीयरहितेनेति** । नन्वाहवनीयादेः विद्यायामङ्गत्वाभावेऽपि आहवनीयादियुक्तानि कर्माणि सविशेषविद्यायामपेक्षितानि । 'विद्यां चाविद्यां चे'ति वचनेन तेषां समुच्चयात् । निर्विशेषविद्यायामपि चित्तशुद्ध्यर्थानि तान्यपेक्षितान्येवेति कथं तदभावे तस्याधिकारस्स्यात् । उच्यते- शूद्रस्यापि स्ववर्णोचितानि कर्माणि यान्यग्निनिरपेक्षाणि, तैस्समुच्चिता सविशेषविद्योपपद्यते । चित्तशुद्धिस्तु जन्मान्तरानुष्ठितैरग्निहोत्रादिभिस्तस्योपपद्यते । अस्मिन्नपि जन्मनि स्ववर्णोचितानि कर्माणि सम्भवन्त्येव चित्तशुद्ध्युपयुक्तानि । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इतिवचनात् । नन्वथापि विद्याप्रकरणे तत्र तत्रोपसदनोपनयनयोराम्नानेन विद्याङ्गत्वं तयोरवगम्यते । शूद्रस्य च तन्न सम्भवति । 'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हती' ति वचनेन संस्कारमात्रस्य तं प्रति प्रतिषिद्धत्वात् । तथा 'न शूद्राय मतिं दद्यादि' ति तं प्रति मतिदानप्रतिषेधेन विद्यामात्रे तस्यानधिकारावगमात् । अतः कथं शूद्रस्य उपासनायामधिकारस्स्यादिति चेत, उच्यते—शूद्रस्याप्यमन्त्रकः संस्कारोऽस्त्येव । 'न च संस्कारमर्हती' ति वचनानन्तरमेव 'धर्मे प्लवस्तु धर्मज्ञास्सतां वृत्तिमनुवृताः । मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च' । इतिवचनेन तदभ्यनुज्ञानात् । 'न शूद्राय मतिं दद्यात्' । इति प्रतिषेधस्तु यत्र शूद्रस्याधिकारे विशिष्य प्रमाणं नास्ति, तद्विषयः । अन्यथा शूद्रस्य स्वजात्युचितकर्मस्वप्यधिकारो न स्यात् । उपासनायां तु विशिष्याधिकारद्योतनोपयोगिलिङ्गमस्तीत्याह—**भवति चेति** । एवं छान्दोग्ये उपाख्यायते—जानश्रुतिः जनश्रु-

तस्यापत्यम् । पौत्रायणः पुत्रस्य गोत्रापत्यम् । श्रद्धापूर्वं बहुदानशीलः आतिथेय आस । स च सर्वत आगता अतिथयो ममैवान्नेन तृप्ता भवन्त्विति सर्वतो गृहान् कारयामास । तस्मिन् कदाचिद्रात्रौ हर्म्योपरिभागे शयाने तदीयान्नादिदानतोषिता ऋषयः हंसरूपमास्थाय तदुपरि विहायसि मालामावद्धा जग्मुः । तस्य हितोपदेशाय तेषु हंसेष्वग्रगामिनं पृष्ठगामी उवाच—मन्दबुद्धे जानश्रुतेः पौत्रायणस्य द्युलोकपर्यन्तं तेजो व्याप्तमस्ति । तत्सक्तिं माकुरु। तत्सङ्गे हि तव दाहो भविष्यति । अतो मार्गान्तरेणैव गन्तव्यम् । तं पृष्ठगामिनमग्रगामी हंसोऽवदत् । एनं वराकम् एतादृशमहिमशालितया किमिति प्रस्तौषि । नायमेतादृशस्तुतियोग्यः । अपि तु शकटयुक्तो रैक्व एव एतादृशस्तुतियोग्यः । कथं पुनः सशकट एतादृशमाहात्म्यविशिष्ट इति पृष्ठगामिना पृष्टे तमग्रगाम्याह—रैक्वस्योपासनाख्यो महान् धर्मः, तामुपासनामन्यो यो वेद, तस्य धर्मे फलतः सर्वेऽपि धर्मा अन्तर्भवन्ति । अतः स रैक्व एवोत्कृष्ट इत्युक्त्वा तेषु हंसेषु गतेषु तद्वाक्यं श्रुत्वा जानश्रुतिः शयनस्थानादुत्तिष्ठन्नेव क्षत्तारमुवाच—यस्य धर्मे सर्वेषां धर्मा अन्तर्भवन्ति, तादृशो महर्षिश्शकटसहितो रैक्वनामास्ति । तमुचितदेशे एकान्ते नदीपुलिनादौ विद्यमानं परिशोध्य मह्यं निवेदय । स च क्षत्ता तथैव परिशोध्य क्वचित्तं शकटस्य समीपे विद्यमानं भार्याधनादिरहितं दृष्ट्वा तथैव राज्ञे निवेदयामास । राजा च गवां षट् शतानि निष्कयुतं हारम् अश्वतरीरथं चोपहारमादाय तमुपससाद । उपसद्य चोवाच—इममुपहारं स्वीकृत्य त्वदुपास्यां देवतां मह्यमुपदिशेति प्रार्थयामास । तत्र जानश्रुतिं प्रति रैक्वस्येदं वचनं--'अहहारेत्वा शूद्र तवैव सह गोभिरस्त्व'ति । निष्कयुक्तेन हारेण युक्त इत्वा रथः यन्त्यनेनेत्यर्थे एतेः क्वनिप् । सगोभिः सहितस्तवैवास्त्विति । इदं वचनं श्रुत्वा जानश्रुतिः पुनरपि सहस्रं गवां निष्कयुतं हारमश्वतरीरथं स्वदुहितरं च उपहारमादाय उपससाद । इदं सर्वं स्वीकुरु यस्मिन् ग्रामे त्वं तिष्ठसि, इमं च ग्रामं स्वीकृत्य तां देवतां मह्यमुपदिशेति उवाच । स च तत्सर्वं स्वीकुर्वन्नुवाच—आजहोरमाः शूद्रानेनैव मुखेनालापयिष्यथा इति । हे शूद्र इदं सर्वमाहृतवानसि अनेनैव विद्याग्रहणोपायभूतेन मामालापयिष्यसि मत्तो विद्यां ग्रहीष्यसीति यावत् । ते हैते रैक्वपर्णानाम महावृषेषु देशविशेषेषु प्रसिद्धा ग्रामाः यत्रायमुवास रैक्वस्तान् सर्वानस्मै प्रददाविति । अत्र यद्यपि शूद्र एव जानश्रुतौ कोपवशाद्रैक्वेन शूद्रपदं प्रयुक्तमिति शक्यं वक्तुम् । शुश्रूषादिकं विहाय धनेन विद्यां ग्रहीतुमागतोऽसि

धनमपि स्वसामर्थ्यानुसारेण मदुपयुक्तं नानीतवानसीति कोपसम्भवात्, तथापि पुनस्समृद्धधनानयनानन्तरं प्रसादसमयेऽपि 'आजहारेमाश्शूद्रानेनैव मुखेने'ति शूद्रशब्दो न कोपाभिप्राय इति वर्णयितुमुचितः । न च विद्याधिकारिण्येव त्रैवर्णिके रुजं द्रावयतीति रुद्र इत्येवं रुद्रशब्दस्येव शुचा द्रवतीति शूद्र इत्येवमादिनिर्वचनं शूद्रपदे प्रकृते स्वीकृत्य तद्व्याख्येयमिति वाच्यम् । योगमपेक्ष्य रूढेर्बलीयस्त्वेन निरुक्तप्रक्रियया तथायोगार्थस्वीकारस्यानुचितत्वात् । **अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियत इति** । अयं भावः—'स्वाध्यायोऽध्येतव्य' इति अध्ययनविधौ प्रयोजनसमर्पकपदं स्वर्गकामादिपदवत् न श्रूयते । न च प्रकरणेन 'व्रीहीन् प्रोक्षती'त्यादिवत्तल्लाभः । अनारभ्याधीतत्वात् । अतः 'सुवर्णं हिरण्यं भार्यम् अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती' त्यादिवदलौकिकं किञ्चिदध्याहृत्य विध्याकाङ्क्षापूरणं कर्तव्यम्, उत विधेयस्वाध्यायाध्ययनसामर्थ्यलभ्यं किञ्चित् दृष्टमेव स्वीकर्तव्यमिति विशये दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् दृष्टमेव यथासम्भवं स्वीकर्तव्यम् । सम्भवति चेह स्वाध्यायप्राप्तितद्विचारद्वारा अर्थज्ञानं दृष्टं प्रयोजनम् । अतस्तदेव विधेयाध्ययनस्य प्रयोजनमुपेयते । ततश्चाध्ययनसंस्कृतेन स्वाध्यायेनार्थज्ञानं सम्पादयेदिति तव्यप्रत्ययावगतस्वाध्यायसंस्कार्यतामभङ्क्त्वैवाध्ययनविधिवाक्यार्थस्स्वीक्रियते । न चैवंसति वाक्यं व्यर्थमेव स्यात् । अध्ययनाद्वेदप्राप्तिः, तस्माद्विचारितादर्थज्ञानमिति विधिलभ्यस्यार्थस्य लोकत एव सिद्धत्वात् । अतो विधिवाक्यसार्थक्यायालौकिकमेव स्वर्गरूपं फलमध्याहर्तव्यमिति वाच्यम् । यथा ह्यध्ययनेन वेदप्राप्तिः, एवं पुस्तकनिरीक्षणेनापि वेदप्राप्तिरुपपद्यते । वेदस्य प्राप्तिर्हि गुरुमुखोच्चारणानूच्चारणरूपाध्ययनकृतेयमेव । यतः ब्रह्मयज्ञविचारादिकाले तत्तत्क्रमयुक्तवेदाक्षराणामविच्छिन्नस्मृतिप्रयोजकः संस्कारो वेदाक्षरगोचरः । यथा ब्रह्मयज्ञकाले निरन्तरमुच्चारणं भविष्यति, तथा जिह्वामूलादिस्थानेषु चाध्ययनकालकृतवेदाक्षरोच्चारणकृतः संस्कारविशेषः । यथा कटादिषु स्थितस्थापकः । इयं च प्राप्तिः स्वयं पुस्तकं निरीक्ष्य वेदाभ्यासेनापि सम्पादयितुं शक्या । अतोऽध्ययननियमाय विधिः सार्थकः । नियमस्य च प्रयोजनं तदेव कल्प्यते । यत् वेदाध्ययनस्य प्रयोजनम् । तथा चाध्ययननियमवतैव सम्पादितं वेदार्थज्ञानं तदर्थानुष्ठाने उपयुज्यत इति सिध्यति, न तु पुस्तकनिरीक्षणादितः सम्पादितम् । अध्ययनं च उपनयनसंस्कारयुक्तस्यैव, नान्यस्य । 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवाक्यैरुपनयनं त्रैवर्णिकानां विधाय 'तमध्यापयीते'ति उपनीतस्यैवाध्ययनविधानात् । तत्र यद्यप्युपनयनं नाध्ययनाङ्गम् 'अत

ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीरहिता व्रात्याः भवन्त्यार्यविगर्हिताः ॥' इत्यादिवाक्यैरकरणे दोषश्रवणेन नित्यतावगमात् स्वतन्त्रमेव व्रात्यतानिवृत्त्युपयोगि । अत एव मूकादीनामपि सम्भवत्कर्माधिकारसिद्ध्यर्थं तदुपयते, तथापि अध्ययनेऽधिकारिविशेषणं तत् । ' दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति वाक्यबलात् दर्शपूर्णमासयोरिव सोमाधिकारिविशेषणत्वम् । उपनयनं च त्रैवर्णिकानामेव । अत उपनयनाभावात् शूद्रस्य न वेदाध्ययनाधिकारः । तदभावे अध्ययननियमसम्पादितवेदार्थज्ञानाभावात् न वैदिकेष्वर्थेष्वधिकारः । ननु, वेदाध्ययनभावना नार्थज्ञानपर्यन्ता । न ह्यर्थज्ञानं स्वतः पुरुषार्थः, अपि तु पश्वादिवत् पुरुषार्थोपयोगितया । तथासति अध्ययनजनिता या वेदाक्षरावाप्तिः, तामुल्लङ्घ्य किमर्थमर्थज्ञानपर्यन्तभावनं क्रियते । तथाचाध्ययनेन वेदं प्राप्नुयादित्येव नियमः पर्यवस्यति । अतः अध्ययनसम्पादितमेव वेदार्थज्ञानं क्रतावुपयुज्यत इति कथं कल्पयितुं शक्यते । ज्ञानपर्यन्तत्वे हि नियमो ज्ञानस्वरूपेऽनुपयुक्तो ज्ञानस्य या दृष्टार्थकर्मोपकारकता वर्तते, तस्मिन्नंशे उपयुज्यत इति नियमास्सिध्यति । उच्यते—अक्षरावाप्तिपक्षेऽपि तस्याः स्वतःपुरुषार्थत्वाभावात् अवाप्तेः स्वाध्यायाक्षरैर्यद्यदिष्टं सम्पाद्यते, तदध्ययनावाप्तेरेवेति नियमपर्यवसानात् । अक्षरावाप्तेर्यत् प्रयोजनं ब्रह्मयज्ञादिरूपं वा, अर्थज्ञानद्वारा क्रत्वनुष्ठानादिरूपं वा, तत्र सर्वत्राध्ययननियमवत एवाधिकार इति पर्यवस्यतीति तत्रापि पक्षे न शूद्रस्याधिकारः । ननु, यद्यध्ययनावाप्तैरक्षरैर्वा, वेदार्थज्ञानेन वा तथाभूतेन विशिष्टस्यैव वेदार्थेऽधिकारः, तथासति शाखान्तराध्ययनाभावेन तदर्थानुष्ठाने अधिकारो न स्यात् । सर्वशाखार्थोपसंहारेण च कर्माणि कर्तव्यानि । न च सर्वशाखाध्ययनं सम्भवति । यदि तु 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वशब्दश्रवणेन स्वशाखारूपेण स्वाध्यायेन यद्यदिष्टं सम्पादनीयं, तदधीतेनैवेति नियमाभ्युपगमात् शाखान्तरार्थस्तदध्ययनं विनैवानुष्ठातुं शक्य इत्युच्यते, तथासति न शूद्रस्याधिकाराभावः सिध्यति । पितृपितामहादिपरम्परागता हि शाखा स्वशाखा । न च शूद्रस्य तादृशी शाखा विद्यते । अतोऽध्ययनाभावेऽपि शूद्रोऽधिकारी स्यात् । यद्युच्यते—शूद्रस्य ह्यनुष्ठानोपयोगिवेदार्थज्ञानं स्वत एव सिद्धं न भवति, अपि तु क्रतुविद्यानुष्ठानार्थं विधिनाऽऽक्षेप्तव्यम् । न चाक्षेपः प्रसरति । अध्ययनविधिसिद्धज्ञानैस्त्रैवर्णिकैरेव क्रतुविद्याविधीनामाकाङ्क्षाया उपशान्तत्वादिति, तत्रेदमुत्तरं—विधीनामाक्षेपकताशक्तिर्हि न कुण्ठिता । शाखान्तरार्थे अध्ययनसिद्धज्ञानाभावेन तदर्थोपसंहारपूर्वकं कर्मानुष्ठानाय त्रैवर्णिकेष्वपि विद्यायाः

आक्षेपणीयत्वात् । न च कर्मविधीनां त्रैवर्णिकेषु शाखान्तरार्थज्ञानाक्षेपकत्वेऽपि न सर्वार्थविषयकज्ञानाक्षेपकत्वम् । स्वशाखार्थज्ञानस्य स्वतस्सिद्धत्वात् । शूद्रे तु सर्वस्याप्याक्षेपः स्वीकर्तव्यः । अतो लाघवानुसारेण त्रैवर्णिकेषु स्वल्पाक्षेपेण चरितार्थाः न शूद्रे आक्षेपगौरवं सहन्त इति वाच्यम् । एवं हि यस्य कर्मणः शाखाभेदेनाधिकस्वल्पाङ्गयुक्तमाम्नानं, तस्याधिकाम्नानयुक्तशाखाध्यायिनं प्रति स्वल्पस्यैवाक्षेपणीयतया तत्र तस्यैवाधिकारस्स्यात् , न त्वल्पाम्नानयुक्तशाखाध्यायिनः । आक्षेपगौरवात् । यदि त्वल्पाम्नानयुक्तशाखाध्यायिनं प्रति यत्किञ्चित्कर्मभागाध्ययनस्य सार्थक्यायाक्षेपगौरवमपि सह्यते । अत एव 'वर्षासु रथकार आदधीत एतया निषादस्थपतिं याजयेदि'त्यत्रैवर्णिकयोरधिकारावगमाद्वचनसार्थक्यायाक्षेपगौरवमपि सह्यते । ततश्च यत्र विशेषप्रमाणं नास्ति , तत्र नाक्षेपगौरवं सोढव्यमित्युच्यते, तर्हि कर्मसु शूद्रस्य विशेषप्रमाणाभावेन तत्रानधिकारेऽपि विद्यासु तदधिकारिणो जानश्रुतेः शूद्रपदेनामन्त्रणात् अधिकारः प्राप्नोत्येव । आक्षेपसम्भवात् । न चैवं संवर्गविद्यायामेवाधिकारः, न सर्वासु विद्यास्विति वाच्यम् । जानश्रुतेर्विद्यार्थं गमनदशायां रैक्वः संवर्गविद्यानिष्ठ इति अज्ञानेन विद्यासामान्योद्देशेनैव प्रवृत्तत्वात् । अत आह—**अर्थवादस्थत्वात्तु न क्वचिदपीति** । अयं भावः—यथा विद्याधिकारिणः शूद्रपदेन सम्बोधनात् स शूद्र इत्यवगम्यते, तथास्मिन्नेव प्रकरणे विद्याधिकारिणो जानश्रुतेः क्षत्रियत्वलिङ्गमप्युपलभ्यते । क्षत्तृप्रेरणं तावदिह तस्मिन्नुपलभ्यते । 'सह सञ्जिहान एव क्षत्तारमुवाच तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छे'ति वाक्येन क्षत्तृप्रेरणं च क्षत्रियस्यैवोपपद्यते । 'वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । जीविका वृत्तिरेतस्य राजान्तःपुररक्षणम् ॥' इति क्षत्तुः राजभृत्यत्वस्यैव नियमनात् । तथा 'ते हैते रैक्वपर्णा नाम महावृषेषु देशेषु यत्रास्मा उवासे'ति वाक्येन महावृषाख्येषु देशेषु विद्यमानानां रैक्वावासभूतानामद्यापि रैक्वपर्णा इति तन्नामाङ्किततया प्रसिद्धानां तं प्रति दानं चावगम्यमानं तद्देशे तद्ग्रामाधिपत्यं सूचयति । न चेदं शूद्रस्य सम्भवति । 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् । अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः । यो मोहादधमो भूत्वा जीवेदुत्कृष्टकर्मणा । तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥' इति वचनेन क्षत्रियवृत्तित्वेनाभ्यनुज्ञातस्य तस्य वैश्यशूद्रयोः प्रतिषेधात् । तथा रैक्वस्य तत्पालितेषु ग्रामेषु वासोऽवगम्यते। तदपि जानश्रुतेरशूद्रत्वं गमयति । 'नाधार्मिकाश्रिते ग्रामे न व्याधिबहुले तथा।

न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते ॥' इति शूद्रेण मर्यादामतिक्रम्य विद्यमानेन राज्यपालनसम्भवात् तत्र वासो निषिद्धोऽनेन । एवमादीन्यन्यान्यपि अस्यामाख्यायिकायां स्वदुहितृप्रतिग्रहादीनि क्षत्रियलिङ्गानि द्रष्टव्यानि । न चैतानि सर्वाण्यपि मर्यादामतिक्रम्य विद्यमानाभ्यामेव जानश्रुतिरैक्वाभ्यां कृतानीह निबद्धानीति शक्यं वक्तुम् । एकेन शूद्रपदेन बहूनां तेषामशास्त्रीयत्वकल्पनाया अनुचितत्वात् । तथासति शूद्राय मतिदानमपि अन्याय्यमेव रैक्वेण कृतमित्यपि वक्तुं शक्यत्वेन नेदं शूद्रपदं शूद्रस्य विद्यानुष्ठानं धर्म्यमिति सूचयेत् । अतो बहुभिर्लिङ्गैरस्य क्षत्रियत्वेऽवगते तस्मिन्नेवैकं शूद्रपदं यथाकथञ्चिद्व्याख्यातुं शक्यमित्यभिप्रेत्याह—**शक्यते चायमित्यादिना** । अनेन सूत्रेण जानश्रुतौ शूद्रपदस्य योगः प्रतिपाद्यते । तत्र शूद्रपदस्य यौगिकार्थप्रदर्शनपरोऽयमंशः—'तदाद्रवणादि'ति । तदुपयोगितया अस्य जानश्रुतेस्तस्माद्धंसवाक्यादनादरश्रवणात् शुगुत्पन्नेति प्रतिपादनार्थोऽयमंशः—'शुगस्य तदनादरश्रवणादि'ति । हंसवाक्यादनादरं श्रुतवतो जानश्रुते रैक्वं प्रति शोकेन गमनमित्येतदस्यामाख्यायिकायामवगम्यत इति प्रतिपादनार्थं—'सूच्यते ही'त्यंशः। एतत् सर्वं प्रतिपादयति—**कथमित्यादिना** । तदाद्रवणादित्यत्र तां शुचं प्रति आद्रवणात्तया शुचा कर्त्र्या जानश्रुतिं प्रत्याद्रवणात् शुचा करणेन तं रैक्वं प्रत्याद्रवणादिति त्रेधा 'तदाद्रवणादि'ति सौत्रपदं विगृह्णाति—**शुचमभिदुद्रावेत्यादिना** । तथा च शुचा शुचं प्रति वाद्रवणाच्छूद्र इति पदं पृषोदरादित्वाद्यौगिकं द्रष्टव्यम् । रुजं द्रावयतीति रुद्र इत्यादिवदौणादिकप्रत्ययेन वा यथाकथञ्चित् नैरुक्तप्रक्रियया प्रकृतिप्रत्ययविभागः कल्पनीयः । न चात्र रूढिप्राबल्यन्यायावतारः । यौगिको ह्यर्थो वाक्यार्थवदनेकपदार्थाकाङ्क्षादिभिरवगम्यमानो विलम्बितप्रतीतिकत्वात् पदानुसन्धानमात्रेण गृहीतशक्तिकस्य पुंसोऽवगम्यमानाच्छीघ्रोपस्थितिकाद्रूढ्यर्थाद्दुर्बल इति हि रूढ्यर्थप्राबल्यवादिना वक्तव्यम् । प्रकृते तु यौगिक एवार्थे उपाख्यानपर्यालोचनया बुद्धिस्थे तात्पर्यं झटिति गृह्यते । अत्र च यद्यपि 'कम्वर'इत्यादिहंसवाक्यपर्यालोचनया शकटाचिह्नयुक्तरैक्वो महाविद्यानिष्ठ इत्यवगमात् तादृशोत्कृष्टविद्योपदेष्टा गुरुरवगत इति हर्ष एव सम्भावितो जानश्रुतेः, रैक्ववदयं जानश्रुतिः प्रशंसनीयो न भवतीति तु हंसवाक्यं निन्दामापाततोऽवगमयदपि न शोकावहम् । समीचीनविद्योपदेष्टृबोधनपरत्वात्, तथाप्येतावन्तं कालं समीपे विद्यमानमप्याचार्यमनवगम्याविदुषो मम वृथैव जीवितमभवदित्येतादृशानिन्दापात्रं चाभूवमिति शोकोऽपि जानश्रुतेराख्यायिकात उपस्थित एव भवति । एकस्य वाक्यस्य ऋजुकिल-

ष्टयोजनायुक्तस्य क्लिष्टोऽप्यर्थः प्राग्यदि बुद्धौ विपरिवर्तमानो भवति, तदा तत्रैव शब्दस्य झटिति तात्पर्यमवगम्यत इत्यपि लोके व्युत्पन्नमेव । तथा चाबुद्धिस्थादृज्वर्थादपि बुद्धिस्थक्लिष्टार्थस्यैव प्राबल्यं, शीघ्रोपस्थितत्वादिति न्यायेन प्रकृते रूढिप्राबल्यन्यायं भङ्क्त्वा यौगिक एव शूद्रपदार्थो ग्राह्य, इत्यभिप्रेत्याह—**अवयवार्थस्य सम्भवाद्रूढ्यर्थस्य चासम्भवादिति** ॥ ३४ ॥

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५॥

**चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारादिति।** अनेन सूत्रगतश्चैत्ररथशब्दः 'अथह शौनक'मित्याद्याख्यायिकागताभिप्रतारिपरश्चैत्ररथेनेत्यनन्तरं समभिव्याहारादित्यध्याहारश्च सूचितः । नन्वत्र अभिप्रतारी कापेयसमभिव्याहृतोऽवगम्यते, न तु कापेययाज्यो वा, चैत्ररथो वा । तथा च कापेयसमभिव्याहृतेनाभिप्रतारिणा सहैकस्मिन्सन्दर्भे पठितस्य जानश्रुतेः कथं क्षत्रियत्वावगमः । अथोच्येत—कापेयसमभिव्याहारादभिप्रतारी तद्याज्य इत्यवगम्यते । कापेयस्य च चैत्ररथियाजकत्वं द्विरात्रं प्रस्तुत्याम्नातेन एकाकिनमेवैनम् अन्नाद्यस्याध्यक्षं करोतीति तत्फलकीर्तनानन्तरं तदुपपादकेन 'एतेन वै चैत्ररथं कापेया अयाजयन् तम् एकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्मात् चैत्ररथिर्नामैकः क्षत्रपतिरजायते'ति अर्थवादेनावगम्यते। अतः कापेययाज्यत्वोपपादनाय चित्ररथात् भेदेन नामान्तरेणावगतस्याभिप्रतारिणः चैत्ररथित्वेन क्षत्रपतित्वे सिद्धे तेन सह समानसन्दर्भपठितो जानश्रुतिरपि क्षत्रियस्स्यादिति चेत्, अत्रोच्यते—कापेयेन सह परिविष्यमाणतारूपो हि समभिव्याहारः अभिप्रतारिणोऽवगतः । तादृशसमभिव्याहारश्च न याज्यत्वनियतः । मैत्र्यादिरूपसम्बन्धान्तरेणापि सह परिविष्यमाणतोपपत्तेः । तद्याज्यत्वेऽपि चित्ररथवंश्यत्वं कुतोऽवगम्यते । कापेयानामनेककुलयाजकत्वोपपत्तेः । न हि समानान्वयानां समानान्वया एव याजका भवन्तीति नियमोऽस्ति । अस्तु वा कापेययाज्यत्वेन चैत्ररथत्वम् । तथापि क्षत्रियत्वं कथम् । अक्षत्रियस्यापि क्षत्रपतित्वोपपत्तेः । अस्तु वा अभिप्रतारिणः क्षत्रियत्वम् । तथापि तत्सन्दर्भगतत्वेन जानश्रुतेः कथं क्षत्रियत्वम् । तत्सन्दर्भगतेष्वेव रैक्वादिषु क्षात्रियत्वानभ्युपगमात् । 'यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छे'ति वाक्यपर्यालोचनायां रैक्वस्य ब्राह्मणत्वावगतेरिति शङ्कां मनसि निधाय उक्तं--**क्षत्रियत्वं सूचयतीति** । नेदमभिप्रतारिणः साक्षादेव क्षत्रियत्वबोधकम्, अपि तु तत्रान्यार्थदर्शनरूपं लिङ्गमात्रं क्षत्रियत्वं तस्य सूचयति। तथाहि लोके उपाध्यायत्वेन प्रसिद्धे पुरुषे तत्समभिव्याहृतोऽन्यो

योऽवगम्यते, स तच्छिष्य इति बुद्धिरौचित्येन भवति । तथा याजकत्वेन प्रसिद्धे कापेये तत्समभिव्याहृतोऽभिप्रतारी याज्य इत्येव बुद्धिर्झटिति भवति । याज्ययाजकभावश्च समानान्वयानामेव प्रसिद्धः । तथैव प्राचीनराजचरितवर्णनेषु दर्शनात् । अनेककुलयाजकत्वं च ब्राह्मणस्य न प्रशस्तम् । अतः कापेययाज्यत्वेन अभिप्रतारिणश्चैत्ररथित्वमवगम्यते क्षत्रपतित्वं च । तच्च क्षत्रियस्योपपद्यते । कर्मधारयस्याभ्यर्हितत्वात् । नन्वत्र नरपतिन्यायः प्रवर्तते । तथा च क्षत्रस्य पतिरित्येव युक्तमिति चेन्, तथापि समानजातीयेष्वेव तदधिपतित्वं विवक्षितम् । 'तमेवैकाकिनमन्नाद्यस्याध्यक्षमकुर्वन्निति' पूर्ववाक्ये हि सर्वेष्वपि मध्ये अयमेकः अन्नाध्यक्ष इति न निर्धारयितुं शक्यम् । तस्मिन् काले अन्येषामपि मनुष्याणां देवानां चेन्द्रादीनामन्नाद्याधिपतित्वस्य सम्भवात् । अतस्सजातीयेष्वित्यौचित्येन विवक्षणीयम् । तत्प्रायपठात् क्षत्रपतित्वमपि तादृगेव भविष्यति । अस्मिंश्च सन्दर्भे संवर्गविद्याशालिनोर्द्वयोर्मध्ये ब्राह्मणद्वितीयत्वं क्षत्रियस्यैवाभिप्रतारिणो दृष्टम् । अतस्संवर्गविद्याशालिनोर्द्वयोर्मध्ये ब्राह्मणद्वितीयस्य जानश्रुतेरपि एतत्सन्दर्भगतस्य क्षत्रियत्वमेवोचितमिति न काचिदनुपपत्तिः ॥३९॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥३६॥

सूत्रद्वयेन जानश्रुतेः क्षत्रियत्वसमर्थनेन संवर्गविद्यागतं शूद्रेत्यामन्त्रणरूपं शूद्रस्य विद्याधिकारिलिङ्गं निरस्तम् । संस्कारपरामर्शादित्यादित्रिसूत्र्या तु शूद्रस्य विद्याधिकारव्यावर्तकं प्रमाणमुपन्यस्यते—**उपनयनादय इति** । आदिपदेनोपसदनगुरुकुलवासादयो विद्योपयोगिनः संस्काराः उपादीयन्ते । अध्ययनाङ्गोपनयनादिवद्विद्याङ्गोपनयनादिकमपि पृथगस्ति । तदभावात् न शूद्रस्याधिकारः । उपनयनादीनामङ्गत्वबोधकानि विद्याप्रकरणगतवाक्यान्युदाहरति—**तं होपनिन्य इत्यादिना** । उपसदनं नाम गुरुसमीपे शिष्यस्य गमनम् । उपनयनं तूपसन्नस्य विद्यां दास्यामीत्यङ्गीकारपूर्वकं शिष्यत्वेन स्वनिकटे स्थापनम् । ननु, प्राचीनशालादिषु षट्स्वृषिषु वैश्वानरविद्यार्थिषु अश्वपतिं केकयमुपसन्नेषु उपनयनं विनैव तेन तेभ्यो विद्योक्तेति 'तान्हानुपनीयैवोवाचे'ति वाक्यबलादवगम्यते । अतः कथं सर्वत्र उपनयनमपेक्षितमित्याशङ्क्याह—**तान्हानुपनीयैवेत्यपीति** । उपनयनस्य विद्याङ्गत्वेऽपि यत्रोत्कृष्टस्य निकृष्ट उपदेष्टा आपद्धर्मत्वेनानुज्ञातत्वादङ्गीक्रियते । तत्र विनैवोपनयनमुपसन्नाय विद्या वक्तव्येति 'प्रतिलोमं चैतत् यत् ब्राह्मणः क्षत्रियमुपेयादि' त्यादिवचनबलादवगम्यते । अ-

तो वैश्वानरविद्योपदेष्ट्रा क्षत्रियेणाश्वपतिना प्राचीनशालादीनामुपनयनं न कृतम् । तथा च यत्रोत्कृष्ट उपदेष्टा, तत्र सर्वत्रोपनयनमवश्यापेक्षितमेवेति भावः । नन्वेवमप्यमन्त्रकमुपसदनादिकं शूद्रस्याप्यस्तु । अतः कथं तस्य विद्यानधिकारः । अन्यथा कथं स्त्रीणां विद्योपदेशस्स्यात् । मन्त्रपूर्वकोपनयनस्य तत्रानभ्युपगमात् । अत आह—**शूद्रस्य च संस्काराभाव इति** । अयं भावः—'न शूद्रे पातकमि' त्यादिना वचनेन शूद्रे संस्कारमात्रं निषिद्धम् । 'मन्त्रवर्जं न दुष्यती'ति वचनेनामन्त्रपूर्वकं तदभ्यनुज्ञातम् । अयं चामन्त्रसंस्काराङ्गीकारो जातकर्मादिविधिनिमित्तसंस्कारविषय एव, न तूपसदनादिरूपविद्योपयोगिसंस्कारविषयः । 'शूद्रश्चतुर्थो वर्ण एकजातिरि'ति द्वितीयजन्मप्रयोजकसंस्कारनिषेधात् । नन्वनेन वचनेन येषु संस्कारेषु द्वितीयजन्मप्रतिपादकोऽर्थवादोऽस्ति, त एव निषिध्यन्ताम् । तादृशार्थवादश्चाध्ययनाङ्गोपनयन एव । तत् प्रस्तुत्य 'एतत् द्वितीयं जन्मे' त्याम्नानादिति चेत्, न । विद्याङ्गोपनयनेऽपि 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी' त्यर्थवादश्रवणेन विद्याप्रदस्य पितृत्वावगमात् विद्यातदुपनयनयोः द्वितीयजन्मत्वप्रतिपत्तेः । अतोऽङ्गाभावेन कृतमपि विद्यानुष्ठानं निष्फलमिति न शूद्रस्याधिकारो विद्यासु ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

**यत्सत्यवचनेनेत्यादि** । एवमुपाख्यायते—'सत्यकामो जाबालः मृतपितृकः जाबालां स्वमातरमुवाच आचार्यकुले ब्रह्मचर्येण स्थातुमिच्छामि किं गोत्रं ममेति, सोवाच बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे नाहमेतद्वेद यद्गोत्रस्त्वमिति सत्यकामो नाम त्वमसि जाबाला तु नामाहमस्मि । अतः सत्यकामो जाबाल इत्येव त्वया आचार्यपृष्टेन वक्तव्यम् । स गौतमं प्रत्येत्य ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमित्युक्त्वा गौतमेन किंगोत्रस्त्वमिति पृष्टः मात्रा यथोक्तं, तथैव सर्वमुक्तवान् । तदनन्तरं गौतमस्य वचनं—नैतदब्राह्मणो विवक्तुमर्हति । समिधं सोम्याहरोपत्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानां गवां चतुश्शतसङ्ख्यानां रक्षणाय नियोजयामास । स ता आदाय यावत्सहस्रसङ्ख्या न भविष्यन्ति तावन्न निवर्त इति प्रतिज्ञायारण्यं तृणजलसमृद्धं प्रापयामास । यदा तास्सहस्रं सम्पन्नाः, अथ तमाचार्यकुलं प्रापयितुमृषभ उवाच—प्राप्तास्सोम्य सहस्रं स्म इति प्रापय न आचार्यकुलमित्युक्त्वा स ऋषभस्तस्मै सत्यकामाय षोडशकलस्य चतुष्पदो ब्रह्मण एकं पादमुक्तवान् । ततोऽवशिष्टान्

त्रीन् पादान् अग्निहंससमद्गव ऊचुः । तथाभूत आचार्यकुलं प्राप्तमाचार्य उवाच—सत्यकाम ब्रह्मविदिव भासि कस्त्वामनुशशास अन्यो मनुष्येभ्य इति । सत्यकाम उवाच—परं तु न तावता मम सन्तोषः । यत आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति भगवत्सदृशेभ्यः श्रुतमस्ति । अतस्त्वत्त एव श्रोतुमिच्छामि तमाचार्यः ऋषभादिभिर्यदुक्तं ब्रह्म, तदेव पुनरपि तस्मै उक्तवानिति । नन्वत्र शूद्रत्वाभावनिर्धारणपूर्वकमेव विद्यार्थमुपनीय विद्याया उपदिष्टत्वात् न शूद्रस्याधिकार इति विवक्षितं, तदसङ्गतम् । 'नैतदब्राह्मण' इत्यादिवचनं हि शूद्रत्वाभावनिर्धारकं वक्तव्यम् । तन्न सम्भवति । तस्य 'नैतदब्राह्मण' इति स्वारस्यानुरोधेन ब्राह्मण्यनिर्धारणपरत्वात् । न चात्र विद्याङ्गोपनयनमस्ति प्रस्तुतम् । 'तं होपनीयोपेयां भगवन्त'मित्यादौ हि अध्ययनाङ्गमेवोपनयनं विवक्षितम् । किंगोत्र इति गोत्रप्रश्नस्याध्ययनाङ्गोपनयने गोत्रभेदेनेतिकर्तव्यताविशेषवति उपयोगादिति । अत्रोच्यते—'नैतदब्राह्मण'इति वाक्यं न ब्राह्मण्यनिर्धारणपरम्, अपि तु 'न सत्यादगा' इति वाक्यशेषानुसारेण शूद्रत्वाभावनिर्धारणपरमेव । 'अनृतं चातिवादश्च पैशुन्यमतिलोभता । निकृतिश्चाभिमानश्च जातितश्शूद्रमाविशत्' ॥ इत्यनृतवादस्य शूद्रसाधारणत्वोक्त्या तद्व्यतिरेकस्य तदभावनिर्धारण एव स्वारस्यात् अब्राह्मणपदस्य क्षत्रियादित्रयसाधारणस्य शूद्रासाधारणानृतवादव्यतिरेकोक्त्या विशेषपरत्वस्यैव न्याय्यत्वात् । अथापि गोत्रप्रश्नसमभिव्याहृतस्य शूद्रत्वाभावनिर्धारणस्याप्यध्ययनाङ्गोपनयन एव पूर्वप्रस्तुत उपयोगो, न विद्यायामिति चेत्, उच्यते— इदं हि षोडशकलब्रह्मविद्याप्रकरणम् । अतस्तदुपक्रमाम्नातस्योपाख्यानस्य तत्र उपयोगो वक्तव्य इति इत्थमुपक्रमे विवक्षितं—'उपेयां भगवन्तमि'ति सामान्योक्त्या विद्याङ्गोपनयनमध्ययनाङ्गोपनयनं च द्वयमपि सत्यकामेन प्रार्थितम् । अध्ययनाङ्गोपनयनमपि हि 'विद्यासूपनयनादिर्नियम' इति वचनानुसारेण सकलवैदिकाधिकारप्रयोजकत्वादुपयुज्यत एव । ततो वयोरूपविशेषेणाध्ययनोपयुक्तकाल एवायमुपनयनं प्रार्थयत इति नूनं ब्राह्मणो भवति । अतो गोत्रं वक्ष्यामीत्यभिप्रायेण गौतमेन गोत्रे पृष्टे तेन गोत्राज्ञाने उद्भाविते पुनर्गौतमस्य सन्देहोऽभवत्—किमयं गोत्राभावादेव गोत्रं न जानाति, आहो विद्यमानमेव न जानाति । गोत्राभावे च शूद्रोऽपि सम्भावितोऽयमिति तत्कालं वितर्क्य सर्वथाप्ययं सत्यवचनात् शूद्रो न भवति । अत उपनयनद्वयेऽप्यधिकारीति निश्चित्य मातरं प्रति गोत्रस्य पृष्टत्वात् ब्राह्मणोऽपि भवत्येवायमिति च मनसि निधायाध्ययनोपनयनाभावे कुत्राप्यधिकाराभावात् प्रथमतस्तेन संस्कृत्याध्ययनमपि का-

रयित्वा गुरुशुश्रूषया शुद्धान्तःकरणाय तस्मै ब्रह्मविद्यामुपदेक्ष्यामीति मनसि निधाय तथैव कृतवान् । अतः शूद्रत्वाभावनिर्धारणपूर्वकमेव द्विविधमप्युपनयनं कृत्वा विद्याया उपदिष्टत्वात् युक्तमुक्तं 'तदभावनिर्धारणे च प्रवृत्तेर्न शूद्रस्याधिकार' इति ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

स्मृतेः श्रवणाध्ययनार्थप्रतिषेधाच्च न शूद्रस्याधिकार इति सूत्रं योजयति—**इतश्चे-त्यादिना** । त्रपुजतुभ्यां सीसलाक्षाभ्याम् । पद्यु सञ्चारि । **तस्मादिति** । अध्ययनं वर्जयेदित्यनुवृत्तौ 'श्मशाने सर्वतः शम्या प्रासादि'त्युक्तेः शूद्रस्यापि श्मशानत्वेन ततोऽप्यध्ययनं वर्जयितव्यमिति हेत्वर्थवादः । उदाहरणे वेदस्योच्चारणे । ननु, शूद्रस्यैतेषु प्रतिषेधेषु सत्स्वपि तेषां प्रत्यवायबोधकत्वाद्य प्रत्यवायमङ्गीकृत्य विद्यायां सम्पन्नायां सर्वः प्रत्यवायोऽपगतो भविष्यतीति बुद्ध्या विद्यामनुष्ठातुमिच्छेत्, तस्य विद्याधिकारे न काचिदनुपपत्तिरिति चेत्, उच्यते—'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति । धर्मेऽस्य नाधिकारोऽस्ति नाधर्मात्प्रतिषेधनम् ॥' इति वचनेन शूद्रं प्रति ये विशिष्य नोक्ता धर्माः, तदकरणे प्रत्यवायाभावस्य, विशिष्यानुक्तेषु संस्कारेष्वयोग्यतायाः, विशिष्यानुक्तेषु धर्मेष्वनधिकारस्य, यच्च विशिष्य न प्रतिषिद्धं, तदनुष्ठानेऽपि प्रत्यवायाभावस्य स्मरणेन वेदवाक्यविचारतदर्थविद्यानुष्ठानस्य च विशिष्याविहिततयाधिकाराभावात् तेषु कृतेष्वपि फलपर्यवसानाभावेन 'कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्रश्चण्डालतां व्रजेत् ॥' इत्यादिवचनेन प्रत्यवायकरणताया विशिष्यावगतेश्च तन्मात्रभागितापरं स्यात् । तत्सिद्धं विशिष्य वेदविचारप्रापकलिङ्गाभावेन विद्याविधीनां तदाक्षेपकत्वाभावात् उपनयनादिसंस्कारप्रतिषेधेनाङ्गराहित्याद्विशिष्य चानधिकारस्मरणात् शूद्रैरनुष्ठिता विद्या शूद्राणां प्रत्यवायायैव, न तु मोक्षायेति । ननु, विदुरधर्मव्याधादीनां ब्रह्मविदां पुराणेषु कीर्तनं तर्हि कथमुपपादनीयम् ? तत्राह—**येषां त्विति** । ननु, तर्हि ये मुमुक्षवः शूद्रास्तेषां किं मोक्षोपाया एवापलप्यन्ते, नेत्यभिप्रेत्याह—'**श्रावयेच्चतुरो वर्णा-नि'ति** । नन्वेतद्वचनपर्यालोचनया भारतश्रवणेऽधिकारोऽस्तु नाम । तावता कथं मोक्षाधिकारितेति चेत्, उच्यते —मोक्षो नामानन्दसाक्षात्कारः । तदधिकारो नाम तत्रेच्छा । सा तु स्वत एव सर्वेषां न निषेद्धुं शक्या न हि सा धर्मः । तत्साधनीभूतो यो वृत्तिरूपः साक्षात्कारः, सोऽपि 'धर्मेऽस्य नाधिकारोऽस्ती'ति प्रतिषेधस्य विषयो न भवति । विधिना अलौकिकश्रेयस्साधनतया अनुष्ठेयत्वेन यो बोध्यते, स हि धर्मः । ज्ञा-

ह्मज्ञानस्य च प्रमाणवस्तुपरतन्त्रस्य पुरुषकृत्यसाध्यस्याननुष्ठेयतया धर्मत्वाभावात् । तथा च तत्रापि तदिच्छारूपोऽधिकारो नानुपपन्नः । तदुपायेषु परं वेदान्तश्रवणादिषु विधेयतया धर्मभूतेष्वधिकारस्य निषिद्धत्वात् न तदनुष्ठानं फलपर्यवसायीति वक्तव्यम् । 'धर्मेऽस्य नाधिकारोऽस्ती'ति वचनं विशेषविहितेतरविषयम् ; भारतश्रवणं च विशिष्य विहितम् । अतस्तदन्तर्गतब्रह्मभागश्रवणे सति जायमानं ज्ञानं केन वारयितुं शक्यम् । न च वाक्यश्रवणमात्रेणार्थबोधो न भवति । अपि तु तदर्थध्यानादिकमपि अपरोक्षज्ञानायापेक्षितम । तत्तु शूद्रस्य न विहितमिति वाच्यम् । तावता हि भारतश्रवणजनितं ज्ञानमपरोक्षतापर्यवसायि न भविष्यति । परोक्षं तु ब्रह्मज्ञानं भारतादिश्रवणेन शूद्राणामपि सम्भाव्यत एव । ननु, यदि परोक्षब्रह्मज्ञानमेवाद्वितीयवस्तुपरभारतांशश्रवणस्य फलं, तर्हि तत् भाषाप्रबन्धेनापि सम्पादयितुं शक्यमिति शूद्राणां भारतश्रवण एव को निर्बन्ध इति चेत्, भारतादिश्रवणजनितस्यात्मज्ञानस्य जन्मान्तरे हि अपरोक्षतायामुपयोगो वक्तव्यः । तत्र प्रतिबन्धकीभूतदुरितक्षपणं नियमादृष्टस्य प्रयोजनं भविष्यति । एवं यानि सगुणोपासनानि विशिष्य शूद्रं प्रति शैववैष्णवतन्त्रेषु प्रदर्शितानि, तत्र शूद्रस्याधिकारे न काचिदनुपपत्तिः । वेदान्तवाक्यश्रवणतद्विचारादिषु नाधिकार इत्याह—**वेदपूर्वस्त्विति**॥३८॥

इति अपशूद्राधिकरणम् ॥१०॥

## कम्पनात् ॥३९॥

अव्यवहिताधिकरणस्य प्रासङ्गिकत्वादनेन सङ्गतिं विहाय अङ्गुष्ठाधिकरणेन सङ्गतिमाह—**अवसित इत्यादिना** । तथा च यथाङ्गुष्ठवाक्ये ईशानशब्दात् परमात्मैवाङ्गुष्ठमात्रः, तथा प्राणशब्दात् पञ्चवृत्तिः वायुविकार एवेजयिता प्रकृतमन्त्रे वज्रादाद्याशनिरेव भयानकत्वेन ग्राह्य इति दृष्टान्तसङ्गतिर्विवक्षिता । आकाशप्राणाधिकरणयोराकाशादिपदस्योपक्रमगतानन्तत्वदेवतात्वलिङ्गाभ्यामवधारणोपोद्बलितजगत्कारणत्वादिसहकृताभ्यां ब्रह्मपरत्वमास्थितम् । नेह तथाविधं किञ्चिल्लिङ्गमस्ति । जगच्चालनहेतुत्वं तु प्राणस्यापि सम्भवति, भयहेतुत्वं चाशनेरपि । तथा च प्रकृतवाक्ये पञ्चवृत्त्यात्मना वज्रात्मना च परिणतो वायुरेवोपास्यः । अतो वाक्यभेदोऽपि न भवति । उभयविषयैकोपासनविधेः स्वीकारात् । तदिदमाह—**प्रसिद्धेः पञ्चवृत्तिवायुरित्यादिना** । **वायौ प्राणशब्दिते प्रतिष्ठायैजतीति** । यद्यपि प्राण एजतीत्येव श्रुतं, तथापि यो यस्मिन्नधिकरणे चेष्टते, स तत्र प्रतिष्ठायेत्यर्थाल्लभ्यत इति तथोक्तम् । नन्वत्र 'यदिदं

किञ्चे'ति सर्वस्य जगतश्चालनमवगम्यते । नेदं प्राणस्य सम्भवति, अपि तु प्राणवर्गचालकत्वमेव तस्य । अतः सर्वपदसङ्कोचः पूर्वपक्षे प्राप्नोति । अपि च प्रकृते अमृतफलकवेदनविषयत्वं प्राणवज्रश्रुत्यर्थस्यावगम्यते । तत्र यद्यपि अपमृत्युतरणहेतुत्वं वायुविज्ञानस्यान्यत्र श्रुतं, तथापि मोक्षरूपामृतहेतुत्वं वायुविज्ञानस्य न सम्भवति । प्रकरणं चेदं परमात्मनः । अतः कथं पञ्चवृत्तिप्राणात्मना वज्रात्मना परिणतस्य वायोरिदमुपासनं स्यादिति चेत्, उच्यते—सर्वशब्दः प्राणचलनीयेषु प्राणिषु सङ्कुचद्वृत्तिराश्रीयते । ब्रह्मपक्षे हि प्राणश्रुतेः सर्वात्मना परित्यागस्स्यात् । श्रुतित्यागापेक्षया च श्रुतिसङ्कोचो न्याय्यः । ब्रह्मप्रकरणेऽपि प्राणवज्रोपासनं न विरुध्यते । प्रकृतब्रह्मोपासनां प्रति विशुद्धिद्वाराङ्गत्वोपपत्तेः । अत एवामृतत्वफलकीर्तनमुपपद्यते । प्रधानफलस्याङ्गे कीर्तनोपपत्तेः । 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत' इति ब्रह्मप्रकरणे सर्वकामावाप्तिरूपमोक्षफलकविज्ञानमयकोशोपासनाम्नाने हीयमेव गतिराश्रयणीया । अतो न काचिदनुपपत्तिः । वायुरेव व्यष्टिर्वायुस्समष्टिः विविधा अष्टिः व्याप्तिरस्येति व्यष्टिः । साकल्येन अष्टिरस्येति समष्टिः । आध्यात्मिकवायुरूपेण परिणतस्य हि वायोर्विविधेषु मशकादिशरीरेषु तत्तच्छरीरसमानपरिमाणतामापन्नस्य तत्तच्छरीरसंयोगरूपा व्याप्तिः विविधोच्यते । देवतात्मना स्थितस्य सर्वेषु प्राणेषु अभिमानरूपा व्याप्तिः साकल्येन व्याप्तिरुच्यते । **अत्रैवेदमिहेति** । अनेन विषयवाक्योपस्थितः प्राणो वज्र चेह पक्षत्वेन सम्बध्यते । ब्रह्मेति साध्यं चाधिकारिकब्रह्मपदसम्बन्धाल्लभ्यते । तत्र हेतुसमर्पकं सूत्रं 'कम्पनादि'ति । ननु, प्राणस्य ब्रह्मत्वे सर्वजगच्चालकत्वं हेतुः । वज्रस्य ब्रह्मत्वे अग्निसूर्यादिभयानकत्वं हेतुः । तत्कथमुभयत्रापि 'कम्पनादि'ति सौत्रहेतोरन्वयः । अपि च सूत्रकृता 'कम्पनादि'ति हेतुरुपक्षिप्तः । तं परित्यज्य कथं भाष्ये पूर्वोत्तरपर्यालोचनादिति हेतुरुपक्षिप्यते । 'जगत्सर्वमेजती'त्यनेन लोकाश्रयत्वप्रत्यभिज्ञोक्तिरप्यनुपपन्ना । लोकाश्रयत्वचालकत्वयोर्भिन्नत्वेन प्रत्यभिज्ञानाभावात् । 'न प्राणेने'ति मन्त्रोपन्यासोऽपि प्रकृते नोपपद्यते । तत्र हि जीवनहेतुत्वं परमात्मन उच्यते । इह तु चालकत्वं प्राणस्येति किं केन सङ्गतम् । अत्रोच्यते—सूत्रे कम्पनादिति चालनं भावव्युत्पत्त्या विवक्षितम् । करणव्युत्पत्त्या तु कम्पनहेतुभूतं भयं विवक्षितमिति उभयहेतुसम्भवः । भाष्ये पूर्वोत्तरपर्यालोचनोपक्षेपस्तु चालकत्वं भयहेतुत्वं च ब्रह्मगतमेव ग्राह्यं न प्राणवज्रगतं पूर्वपक्षोक्तरीत्या ग्राह्यमिति सौत्रहेतुपयुक्त एव क्रियते, न तु तमतिलङ्घ्य हेत्वन्तरम् । पूर्वत्र हि 'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थ·

स्सनातनः ।' इत्युक्त्वा 'तदेव शुक्र'मिति प्रतिपाद्यते । तत्र न ज्ञायते कोऽसावूर्ध्वमूलोऽवाक्छाखोऽश्वत्थः । 'तदेव शुक्र'मित्यत्र च तत्पदेन किमश्वत्थमूलत्वेन निर्दिष्टं यत्, तदेव परामृश्यते, उताश्वत्थ एवेति एतादृशाकाङ्क्षानिवर्तकत्वेन 'यदिदं किञ्चे'तिमन्त्रः पठ्यते । आकाङ्क्षितार्थसमर्पकत्वसम्भवेऽनाकाङ्क्षितार्थसमर्पकताया अनुचितत्वात् । अस्य च मन्त्रस्यायमर्थः—यदिदं किञ्च जगत् सर्वं, तत् प्राणान्निस्सृतं सत् प्राण एजति । अस्मिन्मन्त्रे जगतो निस्सृतत्वोक्त्या पूर्ववाक्यनिर्दिष्टोऽश्वत्थो जगदिति निर्णीयते । अश्वत्थो हि मूलान्निस्सृतो भवति । तथा चाश्वत्थपदस्य जगत्परत्वे तदेव शुक्रमित्यत्र ब्रह्मपदसमानाधिकरणस्य तत्पदस्याश्वत्थपरामर्शकत्वासम्भवात् तन्मूलं परामृश्यते तत्पदेन । तथा च पूर्वमन्त्रे जगत्कारणतया ब्रह्मणो निर्देशादिहापि प्राणशब्दोदितं जगत्कारणं ब्रह्मैवेति निर्धार्यते । एवं च सर्वशब्देन निरङ्कुशेन यत् कृत्स्नजगच्चालकत्वमवगतं, तत् प्राणस्य ब्रह्मत्वे लिङ्गं भवत्येव । तत्र परं पूर्वपक्षिणा सर्वपदस्य सङ्कोच आशङ्कितः । स तु न सम्भवति । पूर्वमन्त्रपर्यालोचनया ब्रह्मकार्यनिरूपणपरेऽस्मिन्मन्त्रे सर्वपदसङ्कोचायोगात् । एवं च 'प्राण एजती'त्युक्त्या प्राणे प्रतिष्ठायैजतीति लभ्यते । तथा च 'तस्मिन् लोकाश्श्रिता'इत्यस्येह प्रत्यभिज्ञानमपि सम्भवत्येव । 'न प्राणेने'त्यादिमन्त्रोपन्यासोऽपि प्रकृते युक्त एव । यस्य हि यदधीनं जीवनं, तस्य तदधीना चेष्टेति तेन वाक्येन ब्रह्माधीना चेष्टापि लभ्यत एवेति तदैकार्थ्यादिहापि प्राणो ब्रह्मैवेति । एवं 'न प्राणेनेत्या'दिवाक्यपर्यालोचनोपस्कृतेन सर्वजगच्चालकत्वेन प्राणो ब्रह्मेति सिद्धम् । एवं वज्रशब्दोदितमपि पूर्वोत्तरपर्यालोचनया ब्रह्मैव भवति । पूर्वत्र हि 'तदु नात्येति कश्चने'ति सर्वस्याप्यनतिक्रमणीयं ब्रह्मेत्युक्तम् । तत् कथं महाप्रभावानामग्न्यादीनां विद्यमानत्वादित्याशङ्क्य 'महद्भयं वज्रमुद्यत'मित्युक्तम् । तद्विवरणार्थं च 'भयादस्याग्निस्तपती'त्यादि । तदाह—**उत्तरत्रापीति** । ननु 'यदिदं किञ्चे'ति मन्त्रे पूर्वार्धेन सर्वं जगत् प्राणपदोदितात् ब्रह्मणो निस्सृतं सत् तत्रैव प्रतिष्ठाय चेष्टत इत्यर्थः प्रतिपाद्यते । 'महद्भयमि'त्यनेन त्वग्न्यादिशासकत्वं विवक्षितमिति किमर्थमुच्यते । कृत्स्नेनापि मन्त्रेण पूर्वोक्तानतिक्रमणीयत्वसिद्ध्यर्थं न शासकत्वमेव विवक्षितमित्येव हि वक्तुमुचितम् । एजतीत्येतद्धि न चेष्टासामान्यप्रतिपादकम् । अपि च भयक्षोभादिनिमित्तकम्पनरूपचेष्टाप्रतिपादकम् । तथा चैजतीति पदेन कम्पे उक्ते जगतः कम्पः प्राणाधीनः कथमित्यपेक्षायां उद्यतं वज्रमिव भयानकं तदिति भयहेतुत्वं तु ब्रह्मणः राजवच्छासकत्वादिति 'भयादस्याग्नि'रित्यनेनोच्यते, इति चेत्, सत्यम् । अस्मिन् पक्षे हि 'यदिदं किञ्च जगत्सर्वमि'ति न

कृत्स्नं जगद्विवक्षितुं शक्यम् । परमात्मशासनानभिज्ञानां मूढानां तद्भयनिमित्तकम्पासम्भवात् । अपि तु सूर्यादिकं जगत् एतच्छासनाभिज्ञं विवक्षणीयम् । तथा चायमप्यर्थो भाष्ये अग्निवायुसूर्यादिकं जगदित्यत्र जगत्पदे । सूचित एव । परं तु सर्वशब्दसङ्कोचापत्त्या नायमर्थोऽभिमत इति स्थितिनिमित्तं चलनमात्रं विवक्षितम् । न च चलनमात्रे एजतिरनुपपन्नः । पूर्वत्र जगतो वृक्षत्वेन रूपिततया वृक्षचलने वृक्षः कम्पत इति प्रयोगानुसारेण जगच्चलनमपि कम्पत्वेन रूपितम् । **प्रकरणादप्यत्र परमात्मनिश्चय इति** । तथा च ब्रह्मप्रकरणे प्राणवज्रोपासनां विवक्षित्वा तत्रामृतत्वफलकीर्तनं तदुपासनायाः ब्रह्मज्ञानाङ्गत्वं कल्पयित्वा परम्परया घटनीयमिति क्लेशोऽपि निर्मूल एव पूर्वपक्षिण इति । अत्र जगच्चलनहेतुत्वं भयहेतुत्वं च प्राणवज्रसाधारणं सर्वपदसङ्कोचापत्त्या पूर्वापरपर्यालोचनासनाथया ब्रह्मासाधारणं सम्पादनीयमिति अस्पष्टब्रह्मलिङ्गता ॥३९॥

कम्पनाधिकरणम् ॥ ११ ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

'एष सम्प्रसाद' इति वाक्यं यद्यपि प्रजापतिविद्यायां प्रत्यगभिन्नब्रह्मविषयायां पठ्यते, तथापि न तदनुसारेणानेकश्रुतिभङ्गं कृत्वा व्याख्येयम् । अपि तु श्रुत्यनुसारेण प्रकरणबाधं कृत्वा तत उत्कर्ष एव स्वीकर्तव्यः । पूर्वत्र हि प्राणवज्रश्रुतिभङ्गः न केवलं प्रकरणमात्रेण, अपि तु पूर्वोत्तरमन्त्रार्थप्रत्यभिज्ञानसहकृतसर्वपदासङ्कोचोपोद्बलितजगच्चालकत्वभयानकत्वलिङ्गेन । इह तु ज्योतिश्श्रुतेरेवोपोद्बलिका समुत्थानादिश्रुतिरस्ति । समुत्थानं ह्यनुत्कर्षवादिना विवेकज्ञानं वक्तव्यम् । तथा च क्लेशः । शरीरात् समुत्थानं हि शरीरादुत्क्रान्तिरेव स्वरसतः प्रतीयते । अतस्तदनुसारेण ज्योतिःपदमादित्यपरमेव व्याख्येयम् । न च तथासति परमिति विशेषणानुपपत्तिः । आदित्यज्योतिषोऽपि नक्षत्राद्यपेक्षया परत्वोपपत्तेः । अमुमर्थमभिप्रेत्याह—**प्रसिद्धमेव तेजो ज्योतिश्शब्दमिति** । ज्योतिश्चरणाभिधानादित्यनेन पौनरुक्त्यमाशङ्क्याह—**ज्योतिश्चरणाभिधानादित्यत्र हीति** । **प्रकरणादिति** । प्रकृतत्रिपाद्ब्रह्मपरामर्शकयत्पदसामानाधिकरण्यादित्यर्थः । **तथा च नाडीखण्ड इति** । 'अथ या एता हृदयस्य नाड्य' इत्यारभ्य आम्नाते दहरविद्याप्रकरणान्तर्गते 'अथ यत्रैतदि'त्यादिवाक्यम् । तत्र शरीरादुत्क्रमणमुक्त्वा रश्मिभिरूर्ध्वगतस्य 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छे'दित्यादित्यप्राप्तिरभिहिता । सैवेहोत्क्रान्तिरादित्यप्राप्तिश्च 'शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्ये'त्यत्र प्रत्यभिज्ञायते । अत-

स्तत्वाक्यगतसमुत्थानश्रुतिज्योतिश्श्रुतिभ्यां वाक्यान्तरार्थप्रत्यभिज्ञानुसारेण च एष सम्प्रसाद इति वाक्यस्यार्चिरादिमार्गपर्वभूतादित्यप्रतिपादकत्वात् तदर्थस्य निर्विशेषप्रकरणे निर्विशेषविदां 'प्रतिषेधादिति चेन्न शारीरादि' त्यधिकरणे गतिप्रतिषेधस्य वक्ष्यमाणतयानन्वयादुत्कर्ष इवेति पूर्वपक्ष्याशयः । अयमत्र सिद्धान्ताशयः—यद्यपि यथाश्रुतार्थस्य वाक्यस्य न प्रकरणे समावेशः, तथापि लक्षणया प्रकरण एव निवेशः स्वीकर्तव्यः । यथाश्रुतार्थमादायोत्कर्षे उपगम्यमाने सगुणविद्यासूत्कर्षो वक्तव्यः । तथासति वाक्यं व्यर्थमेव स्यात् । पञ्चाग्निविद्यागतस्य 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ती' त्यादि वाक्यस्य 'अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्यामि' त्यधिकरणे सर्वासु सगुणोपासनासु मार्गप्रापकतायाः वक्ष्यमाणत्वेन तेनैव साधारण्येन सकलपर्वोपेतस्य मार्गस्य प्रापिततया तदनुक्तस्य पर्वविशेषस्य अनेन [illegible]नाप्रतिपादनात् । न च 'शतं चैका चे' ति श्लोके 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती' त्यनेन मूर्धन्यनाडीतः निर्गतस्यामृतत्वमुक्तम् । तत् कथमित्यपेक्षायां 'परं ज्योतिरुपसम्पद्ये' त्यनेन परस्य ज्योतिषः आदित्यस्य समीपे यो ब्रह्मलोकः, तत्र सम्पद्य स्थित्वा स्वेन निर्विशेषशुद्धचिदात्मनावतिष्ठत इति तयोर्ध्वमायन्निति वाक्यापेक्षितः सविशेषोपासनानां क्रममुक्तिप्रकार आम्नात इति वाच्यम् । 'अमृतत्वमेती' त्यत्रामृतत्वशब्दो हि न मुख्यामृतत्वपरः, अपि तु आभूतसम्प्लवस्थानगौणामृतत्वपरः । तथा च वक्ष्यति चतुर्थे—'अमृतत्वं चानुपोष्ये' ति । न चेदमपि वाक्यं क्रममुक्तिप्रकारं स्पष्टं प्रतिपादयति । आदित्यं प्राप्तस्य स्वेन रूपेणाभिनिष्पत्तिरित्येतावन्मात्रप्रतिपादनात् ब्रह्मलोकं गत्वा निर्विशेषमात्मानं साक्षात्करोतीत्यंशस्याप्रतिपादनात् । अस्ति च तदर्थप्रतिपादकं स्पष्टवचनं तैत्तिरीयके दहरविद्याप्रकरणे—'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति । अत्र ये ब्रह्मलोके गत्वा सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः वेदान्तविज्ञानसुनिश्चितार्थाः, ते परामृतं प्राप्य परिमुच्यन्ति सर्वे इत्यन्वयो द्रष्टव्यः । तथा चोत्कर्षवादिन 'एष सम्प्रसाद' इति वाक्यं व्यर्थमेव स्यात् । अतो वैयर्थ्यपरिहाराय प्रकरण एव निवेशमुपगम्य लक्षणया तदनुगुण एवार्थो वर्णनीयः । वरं हि वैयर्थ्यापेक्षया लक्षणाश्रयणमिति । तथा चैष संप्रसादोऽस्माच्छरीरात् समुत्थाय वेदान्तश्रवणमननसंस्कारादिजेन विवेकज्ञानेन देहात्माभिमानपरित्यागरूपं देहात्समुत्थानं कृत्वा परं ज्योतिः परमात्मरूपं साक्षात्कृत्य स्वेन रूपेण

निर्विशेषचिदात्मना अभिनिष्पद्यत इत्येवंरूपार्थो द्रष्टव्यः । न च तथासति 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत, एवमेवैष सम्प्रसाद' इति दृष्टान्तवाक्ये परं ज्योतिरुपसम्पद्येत्यादित्यप्राप्तिर्विवक्षिता । इह तु परं ज्योतिरिति दार्ष्टान्तिके ब्रह्मसाक्षात्कारो विवक्षित इति दृष्टान्तदार्ष्टान्तिकयोः वैरूप्यं स्यादिति वाच्यम् । येन हि शरीरात् समुत्थायेत्यत्र उत्क्रान्तिर्विवक्षितेत्युच्यते, तस्याप्यमुष्मादाकाशात्समुत्थायेत्यत्र वैरूप्यम् । वाय्वादीनां ह्याकाशात् समुत्थानं न तत उत्क्रान्तिरूपम् । तेषां सदा आकाशेन संसृष्टत्वात् । किं तु निदाघे निलीनानि पुरोवातादीनि आकाशात् विविच्य न गृह्यन्ते । प्रावृडारम्भे तु किञ्चिद्विविच्य गृह्यन्त इति तदेव तेषां आकाशात् समुत्थानम् । अर्थतो वैरूप्ये सत्यपि 'सकलकलं पुरमेतत् सम्प्रति सुधांशुबिम्बमिवे'त्यादाविव शब्दैकरूप्यात् समुत्थायेतिशब्दस्योभयत्र दृष्टान्ते दार्ष्टान्तिके च प्रयोगात् सारूप्यमुपेयते । तथासति परं ज्योतिरुपसम्पद्येत्यत्रापि तथात्विति न काचिदनुपपत्तिः । सूत्रे दर्शनादित्यस्य निर्विशेषप्रकरणानुवृत्तिदर्शनादित्यर्थमभिप्रेत्य 'उत्तराच्चेदाविर्भूतस्वरूपस्ति'त्यत्र प्रजापतिविद्यायाः निर्विशेषपरतायाः स्थापितत्वादिह तमंशं सिद्धवत्कृत्यैष सम्प्रसाद इति वाक्ये तस्यानुवृत्तिं दर्शयति-य आत्मापहतपाप्मे'त्यादिना । स उत्तमः पुरुष इति च विशेषणादिति । यद्यपि स उत्तमः पुरुष इत्यत्र तच्छब्दः यः स्वेन रूपेणाभिनिष्पद्यत इति मुक्तजीवो निरूपितः, तस्य परामर्शकः । स तत्र पर्येतीत्यादिना मुक्तधर्माणामाम्नानात् ज्योतिरपेक्षयात्यन्तसन्निहितत्वाच्च, तथापीहोत्तमपदश्रवणेन तत्समानार्थकपरशब्दस्य तत्र श्रवणात् ज्योतिष एव प्रत्यभिज्ञानात्तस्य परामर्शकः । जक्षणादयश्च नेह स्वरूपेण विवक्षिताः । 'नोपजनं स्मरन्निदं शरीर'मिति निषेधात् निर्विशेषमुक्तेस्तदसम्भवाच्च । किं तु सर्वात्मताद्योतनाय । तदर्थश्च ब्रह्मण्यपि सम्भवतीति भावः । इह ज्योतिषः परत्वं ब्रह्मत्वे लिङ्गमस्पष्टम् । नक्षत्राद्यपेक्षया परत्वस्यादित्येऽपि सम्भवात् । तत् प्रकरणानुसारेणोन्मेषणीयमित्यस्पष्टता ॥ ४० ॥

॥ इति ज्योतिर्दर्शनाधिकरणम् ॥ १२ ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

पूर्वस्मिन्नधिकरणे ज्योतिश्श्रुतेः प्रकरणादुत्कर्षे आनर्थक्यापातात् प्रकरणे च यथाश्रुताया निवेशासम्भवात् ब्रह्मपरत्वमास्थितम् । इह तु न प्रकरणादुत्कर्ष उच्यते । अपि तु 'यदन्तरे'त्युत्तरवाक्येन ब्रह्मोपासनं विधीयते । तदङ्गतया नामरूप-

निर्वोढृतया भूताकाशोपासनं विधीयत इति न प्रकरणे तस्या यथाश्रुतत्वे काचिदनुपपत्तिरिति सङ्गतिः । ननु, 'आकाशस्तल्लिङ्गा'दित्यत्राकाशपदस्य ब्रह्मपरत्वं स्थापितम् । 'सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्त' इति लिङ्गात् । इहापि नामरूपयोर्निर्वहितेति नामरूपकर्तृत्वमवगम्यते । 'ते यदन्तरा तद्ब्रह्मे'त्युत्तरवाक्ये च ब्रह्मश्रुत्यादयः । ततस्तेन गतार्थमि मित्यत आह—**नामरूपनिर्वहणस्य चेति** । अयं भावः—निर्वहणं न कर्तृत्वम् । उपद्रवादिनिवर्तनेन देशस्थितिहेतौ देशानुत्पादकेऽपि राज्ञि देशनिर्वाहक इति प्रयोगात् । पटोत्पादके तन्तुवाये तदपरिपालके तदप्रयोगाच्च । अतः पारेपालनमेव निर्वहणम् । तच्चाकाशेऽप्यवकाशदानेन सम्भवति । अतो न निर्वहितेत्यस्य ब्रह्मलिङ्गसमर्पकता । 'ते यदन्तरे'ति वाक्यं तु ब्रह्मविषयं, नाकाशविषयम् । न च ते यदन्तरेत्यत्र यत्पदेन प्रकृताकाशं परामृश्य तत्र ब्रह्मादिशब्दप्रयोगात् उभयोरेकविषयतेति शङ्कनीयम् । (यत्पदस्य तदमृतमित्यत्र प्रतिनिर्दिष्टवस्तुनिर्देशकतत्पदेनैव निराकाङ्क्षत्वात् ।) परं तु येन रूपेण यत्पदसमभिव्याहृतं वाक्यं किञ्चिदर्थं प्रतिपादयति, तस्य प्रसिद्धिः पूर्वमपेक्षिता । अत एव 'अथ यदतः पर' इत्यत्र विद्यमानस्य यत्पदस्य द्युसम्बन्धित्वेन ज्योतिषः प्रसिद्ध्यपेक्षस्य पूर्ववाक्यार्थपरामर्शकतोपेयते न तु प्रकृतपरामर्शकत्वमिति निर्बन्धेनैव । प्रकृते तु 'ते नामरूपे यदन्तरे'ति वाक्येन नामरूपास्पृष्टत्वं प्रतिपाद्यते । न तेन रूपेण पूर्ववाक्ये प्रसिद्धिरस्ति । नामरूपनिर्वाहकत्वस्यैव पूर्ववाक्ये प्रसिद्धेः । ते यदन्तरेतिवाक्येन नामास्पृष्टत्वेन प्रसिद्धावपेक्षितायां पूर्ववाक्यस्य तदशक्तत्वाद्स्थूलादिवाक्यमेव तथास्थेयम् । अतो नाकाशवाक्यस्य ब्रह्मवाक्यस्य च पर्यालोचनया ऐकार्थता, प्रत्युत तयोर्भिन्नार्थतैव प्रतीयते । यथैतयोर्ग्रामयोर्निर्वाहको दत्तः । ताभ्यामस्पृष्टा तु या, सा मैत्रीत्यत्र भिन्नधर्मनिर्देशात् भिन्नलिङ्गनिर्देशाच्चार्थभेदः प्रतीयते, एवमत्रापि नामरूपयोर्निर्वाहक आकाशः, ताभ्यामस्पृष्टं तु ब्रह्मेति भिन्नलिङ्गधर्मनिर्देशात् भेद एव स्वरसतः प्रतीयते । अपि चाकाशो ह वै नामेति निपातावगता प्रसिद्धिरिहाकाशपदार्थेनान्विता । तथा च प्रसिद्धो य आकाश इत्यर्थो लभ्यते । यथा च भूताकाशस्य लोकवेदप्रसिद्धिः, नैवमात्माकाशस्य लोकवेदप्रसिद्धिः । अपि तु वैदिक्येव । तथा चात्मग्रहणं हवैनामेतिनिपातार्थोऽपि सङ्कोचनीयस्स्यात् । न चैतदसङ्कोचसम्भवे न्याय्यम् । न च तथासति 'सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्त' इति वाक्येऽपि हवा इति निपातश्रवणात् तत्रापि ब्रह्मनिर्णयो न स्यादिति

---

यत्पदस्य तदमृतमित्यत्र तत्पदप्रतिनिर्दिष्टस्तु प्रतिनिर्देशकतदादिपदेनैव निराकाङ्क्षो भवति ॥ इति क्वचित् पुस्तके पाठः ॥

वाच्यम् । सर्वाणीति वाक्ये हवा इति पदद्योतिता प्रसिद्धिर्नाकाशप्रातिपदिकार्थेऽन्वेति । आकाशो ह वै नामेत्यत्रेव प्रथमान्ततया श्रवणाभावेनाकाशप्रातिपदकार्थप्राधान्याभावात् । किं तु आकाशादेव समुत्पद्यन्त इति पञ्चमीश्रवणेन विभक्त्यर्थकारणतायाः प्राधान्यात्तत्रैवान्वेति । तस्याश्च सर्वभूतकार्यतानिरूपितायाः लोकप्रसिद्धत्वाभावेन श्रौतप्रसिद्धेरेवागत्याश्रयणीयत्वात् न तद्वाक्यतुल्यतास्य वाक्यस्य । तदिदं वक्ष्यति 'आकाशस्तल्लिङ्गादित्यस्यैवायं प्रपञ्च' इति । **ते यदन्तरा तद्ब्रह्मेति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशतीति** । ते नामरूपे अन्तरा यदिति योजनायां नामरूपमध्यस्थत्वं ब्रह्मणो दर्शितं भवति । तच्च निरवधिके ब्रह्मणि यथाश्रुतमघटमानं यथा मध्यस्थो नामासंस्पृष्टो भवति, तथा ब्रह्मापि ताभ्यामसंस्पृष्टमिति प्रतिपादयन्नामरूपाभ्यामर्थान्तरत्वं ब्रह्मणस्साधयत्येव । न च द्वितीययोजनायामवधिद्वयनिर्देशाभावात् अन्तरापदमसङ्गतं स्यादिति वाच्यम् । 'ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः। वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥' इति भट्टिकाव्ये अवधिद्वयनिर्देशं विनैव अन्तरापदप्रयोगेण तथा नियमाभावात् । ननु, नामरूपाभ्यामर्थान्तरत्वादाकाशस्य कथं ब्रह्मत्वम् । आकाशे नामरूपाभ्यामर्थान्तरत्वस्याश्रवणादिति चेत्, उच्यते—यदन्तरेतिवाक्ये यत्पदस्य प्रकृताकाशपरामर्शकतया तत्रापि तदवगतिसम्भवात् । न च तद्ब्रह्मेति तत्पदेन प्रतिनिर्देशात् प्रकृते न यत्पदस्य प्रकृतपरामर्शकत्वनिर्बन्ध इति वाच्यम् । 'त्यदादीनां हि सर्वेषां प्रकृतपरामर्शकत्वमेव स्वरसतः । न तद्यत्पदे सङ्कोचनीयम् । परं तु यथा यत्पदस्य प्रसिद्धत्वं परामर्शनीये अधिकमपेक्षितं, एवं पूर्ववाक्यगतस्य तत्पदादिना प्रतिनिर्देशोऽप्यधिकोऽपेक्षितः, न तु तावता प्रकृतपरामर्शकता परित्यक्तव्या । दृश्यते हि अदसो देशकालाभ्यां विप्रकृष्टत्वम्, इदमः सन्निहितत्वम्, एतदः अपरोक्षत्वं, तदस्तु परोक्षत्वमित्येवमाद्यसाधारणप्रयोगोपाध्यपेक्षत्वेऽपि परामर्शनीये सर्वेषां प्रकृतत्वापेक्षा । तथा च यत्पदेनाकाशपरामर्शे तदर्थस्यापि नामरूपाभ्यामर्थान्तरता प्रदर्शितैव भवति । तथा चाकाशपदं ब्रह्मपरमेवोक्तलिङ्गात् सिध्यति । तदाह—**न च ब्रह्मणोऽन्यदिति** । न च तथासत्याकाशप्रातिपदिकार्थान्वयिनि हवै नामेति निपातद्योतिता प्रसिद्धिर्विरुध्यत इति वाच्यम् । देवदत्तः खलु पण्डित इत्यादौ खलुशब्दद्योतितायाः प्रसिद्धेरिव विशिष्ट एवान्वयोपपत्तेः । खलुशब्दद्योतिता प्रसिद्धिर्विधेयपाण्डित्यविशिष्टदेवदत्ते अन्वेति, न तु केवले । तथैवान्वयबोधात् । न हि देवदत्तः खलु पण्डित इत्यत्र प्रसिद्धो यो देवदत्तः, स पण्डित इत्यन्वयबोधोऽस्ति, अपि तु पाण्डित्यशालितया देवदत्तः प्रसिद्ध इत्येव । तथा च प्रसिद्धिद्योतकानां निपातानां विधेयधर्मान्वयिस्वार्थसमर्पकतया व्युत्पन्नत्वात्

इहापि हवैनामेति निपातद्योतिता प्रसिद्धिः विधेयनामरूपनिर्वाहकत्वविशिष्टाकाशान्वयिन्येव, न तु केवलाकाशप्रातिपदिकार्थान्वयिनीति न तद्बलात् भूताकाशग्रहः । नामरूपनिर्वाहकता तु न भूताकाशस्येत्याह—**नामरूपयोरपि निर्वहणमिति** । यद्यपि स्थितिहेतुर्निर्वाहको भवति, तथापि नाचेतने आधारतया स्थितिहेतौ निर्वाहकपदप्रयोगः । घटाधारे भूतले घटनिर्वाहकत्वाप्रसिद्धेः । अपि तु यश्चेतन इष्टप्रापणेनानिष्टनिवर्तनेन च नियच्छति, स एव निर्वाहक इत्युच्यते, न तु तथा भूताकाश इति भावः । ननु, तथापीन्द्रादिभौतिकविषयनामरूपनिर्वाहकता हिरण्यगर्भस्यापि सम्भवति । 'सर्वेषां तु स नामानि रूपाणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' इति तस्यापि तदवगमात् । अत उक्तं—**निरङ्कुशमिति** । निरङ्कुशत्वमनन्याधीनत्वम्, असङ्कुचितनामरूपविषयत्वं च । तथा च यस्यां क्रियायां यश्चेतनः प्रथमावयवमारभ्य फलनिष्पत्तिपर्यन्तं कर्तृत्वेनानुस्यूतो भवति, स तस्या निर्वाहक इत्युक्तलक्षणं निर्वाहकत्वं हिरण्यगर्भस्य नामरूपोत्पत्तौ उदाहृतवचनपर्यालोचनया 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।' इति वचनपर्यालोचनया स्थितावपि भौतिकनामरूपयोस्तदस्ति । तथापि न तस्य सर्वनामरूपगोचरं तत् । नाप्यनन्याधीनम् । ईश्वरतन्त्रत्वात् । अतो नेह स विवक्षितः । ननु, 'अनेन जीवेने'ति श्रुतौ जीवात्मना स्थितस्य परमात्मनो नामरूपव्याकर्तृतावगम्यते । तथा च जीवस्यैव तत्पर्यवस्यतीति शङ्कते—**ननु जीवस्यापीति** । अत्र हि जीवपदं सर्वजीवविषयम् । न च सर्वेषां जीवानां नामरूपव्याकरणं त्रिवृत्करणं च सम्भवति । तथाचात्र जीवात्मनानुप्रवेशानन्तरमैश्वरेण रूपेण व्याकरणादिकं विवक्षितम् । नामरूपव्याकरणादेर्जीवरूपप्रवेशानन्तरत्वोक्तिस्तु तद्भोगार्थत्वान्नामरूपव्याकरणस्येति द्योतनाय, न तु तेनैव रूपेण कर्तृत्वमिति द्योतनायेत्यभिप्रेत्य परिहरति—**बाढमित्यादिना** । यच्चोक्तं नामरूपयोर्निर्वहिताकाशः । तदसंस्पृष्टं तु ब्रह्मेत्येवंनिर्देश उभयोर्भेदे लिङ्गम् । तत्तु अभेदसतर्केण यत्पदेन नामरूपनिर्वहितृत्वस्य ब्रह्मलिङ्गत्वव्यवस्थापनेन च बाध्यते । भेदाभेदलिङ्गयोर्मध्ये अभेदलिङ्गस्यैव प्रबलत्वात् । अभेदस्य स्वरूपतया धर्मिप्रतियोग्युपस्थितिसापेक्षात् भेदाल्लघूपस्थितिकत्वात् । नामरूपनिर्वाहकत्वं चाकाशस्योत्तरवाक्यपर्यालोचनां विनैव ब्रह्मत्वमवगमयतीति वाक्यद्वयपर्यालोचनासापेक्षान्निर्देशविशेषरूपात् भेदलिङ्गात् प्रबलमिति । अत्रोक्तनिर्देशविशेषरूपात् भेदलिङ्गादाकाशे ब्रह्मलिङ्गमाभिभूतमित्यस्पष्टब्रह्मलिङ्गता ॥ ४१ ॥

॥ इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १३ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

व्यपदेशादित्यनुवर्तत इति । 'आकाशोऽर्थान्तरत्वादिव्यपदेशा'दिति पूर्वसूत्रादिति शेषः । **संसारिस्वरूपमात्रविषयमेवेति** । ननूपक्रमे 'किं ज्योतिरेवायं पुरुष' इति जनकस्य याज्ञवल्क्यं प्रति प्रश्ने जीवस्य व्यवहारसाधनीभूतं ज्योतिः किमित्यर्थो विवक्षितः । तदनन्तरं च याज्ञवल्क्येन आदित्यचन्द्राग्निवाचां मध्ये पूर्वपूर्वाभावे उत्तरोत्तरं व्यवहारसाधनमित्युत्तरिते वाचोऽप्यस्तमये किंज्योतिरिति पृष्ट आत्मैवास्य ज्योतिरित्युत्तरितम् । अत्रात्मपदं न जीवपरम् । अस्येति जीवस्य पृथङ्निर्देशात्, अपि तु परमात्मपरम् । अत एव तदनन्तरं 'कतम आत्मे'ति प्रश्नोऽपि सङ्गच्छते । आत्मपदस्य जीवपरत्वे तु तस्याहमिति प्रत्यक्षसिद्धस्य प्रष्टव्यतानुपपत्तेः । अत एव मध्येऽपि 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'ति शारीरपदोक्तस्य जीवस्य स्वप्नेनाभिप्रहन्ता परमात्मा पृथङ्निर्दिश्यते । अत उपसंहारेऽपि 'स वा एष महानज आत्मे'त्यादिकं परमेश्वरपरमेव भविष्यति । एवं च 'सर्वस्य वशी सर्वस्येशान' इत्यादिना परमात्मधर्मकीर्तनमपि प्रकृतात्मन्युपपद्यते । अथोच्येत—'स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे'ति जीवधर्माः कीर्त्यन्ते । अत्र स इति पदं प्रकृतात्मपरम् । समान इत्यत्र केन समान इत्यपेक्षायां विज्ञानमयः प्राणेष्विति पूर्ववाक्यनिर्दिष्टयोर्विज्ञानप्राणयोस्सम्बन्धे ताभ्यां समान इति निश्चीयते । तथा च विज्ञानाद्युपाधिकं यस्य लोकसञ्चारादिकं, स जीव एवेह वाक्ये प्रतिपाद्यते । उत्तरत्र च 'स वा अयं पुरुषो जायमान'इत्यादिना जन्ममरणादिकीर्तनं स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा 'स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वे'ति वाक्यैस्तदेतत्पदाभ्यां प्रकृतमात्मानं परामृश्य तत्र सुषुप्तिस्वप्नजाग्रदवस्थानां प्रतिपादनं च जीवपक्ष एव सङ्गच्छते । अतो वाक्यशेषपर्यालोचनयायमात्मशब्दो जीवपर एव स्यादिति । न स्यादिति प्रतिपादयामः । उपक्रमानुसारेण ह्युपसंहारो व्याख्येयः । तथा च उपक्रमे जीवातिरिक्तात्मपरत्वे निर्धारिते मध्ये विद्यमानानां जीवलिङ्गानां सर्वान्तर्यामिणि परमात्मन्येव यथाकथञ्चिन्नयनोपपत्तेः । एवं सर्वस्य वशीत्यादय उपसंहारगताः परमात्मधर्मा अपि समञ्जसा भवन्ति । तस्मादुपक्रमोपसंहारपरामर्शैः परमात्मैवात्र प्रतिपाद्यत इति चेत्, अत्रोच्यते—'आत्मैवास्य ज्योति'रित्युपक्रमो न जीवातिरिक्तपरमात्मपरः । 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपु-

रात्मनः । बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ॥' इत्यादावभेदेऽप्येतादृशसम्बन्धनिर्देशात् । तथा चोभयथा सम्भवतः । उपक्रमस्य उत्तरत्र जीवधर्मकीर्तनानुसारेण जीवपरतैवाङ्गीकर्तव्या । अपि च 'आत्मैवास्य ज्योतिर्भवती'त्यस्योपसंहारे 'अत्रायं पुरुषस्स्वयंज्योतिर्भवती'त्युक्तम् । तत्र स्वयमितिपदं पुरुषपरमेव । तथैव व्युत्पत्तेः । न हि देवदत्तेन स्वयं गतमित्यादौ देवदत्तादन्योऽर्थः प्रतीयते । अतो नोपक्रमो जीवान्यपर इति सम्भवति । 'कतम आत्मे'ति प्रश्नस्यापि न जीवविषयत्वेऽनुपपत्तिः । अहमित्येवंरूपेण प्रसिद्धस्यापि देहादिव्यतिरिक्ततया निर्णयार्थं प्रश्नोपपत्तेः । अत एव कतम इति पदं प्रयुक्तम् । तस्य ह्ययमर्थः--अहमित्येवं देहप्राणमनआदयः बहवो भासन्ते । तेषां मध्ये ज्योतिस्स्वरूप आत्मा क इति । तत्रोत्तरं---'योऽयं विज्ञानमयः प्राणे'ष्विति । अत्र विज्ञानमय इति क्षणिकविज्ञानव्यतिरेको दर्शितः विज्ञानविशिष्टः, न तु विज्ञानमेव । प्राणेष्विति सामीपिकाधारत्वेन प्राणानां निरूपणात् तद्व्यतिरेको दर्शितः । हृदिति मनोव्यतिरेकोपपादनम् । अन्तरिति बाह्यशरीरादिव्यतिरेकः । तादृश आत्मा ज्योतिस्स्वरूप इति तस्य प्रकाशान्तरनिरपेक्षता प्रतिपादिता । पुरुष इत्यनेन 'किंज्योतिरेवायं पुरुष' इति ज्योतिःप्रतिसम्बन्धित्वेन निर्दिष्टात् पुरुषादभेदस्सूचितः । अत उपक्रमस्तावत् स्वारस्येन जीवपर एव प्रतीयते । यस्य हि देहाद्यव्यतिरेको गृहीतः, तस्यैव तद्व्यतिरेकः प्रतिपादनीयः । 'स्वप्नेन शारीरमभिप्रहत्ये'त्यत्रापि शरीराभिप्रहन्ता जीव एव प्रतिपाद्यते । 'शुक्रमादाय पुनरैति स्थान'मिति वाक्यशेषात् । तत्र शुक्रपदं प्रकाशसाधनेन्द्रियगणपरम् । तथा च स्वप्नारम्भे येभ्यस्स्थानेभ्यः इन्द्रियाण्याकृष्टानि, तान्यादाय जाग्रदारम्भे पुनस्तत्स्थानमेतीति तदर्थः । न चैतत्परमात्मन्याञ्जसम् । जीवस्यैव च स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति विहन्तृत्वमाम्नातम् । तस्य ह्ययमर्थः---अस्य लोकस्य शरीरस्य सर्वावतः सर्वभोगपालकस्य तदुपयोगिन इति यावत् मात्रामेकदेशमिन्द्रियादिकमुपादाय स्थूलशरीरं जाग्रदुपयुक्तं स्वयं विहत्य स्वप्नशरीरं स्वयं निर्माय स्वेन भासा स्वीयेन जाग्रद्वासनारूपेण स्वेन ज्योतिषा स्वरूपभूतेन सहितः प्रस्वपितीति । इदं च वाक्यं स्वपितिलिङ्गात् जीवपरमिति तदनुगुण एवार्थो वर्णनीयः । तथा च पूर्ववाक्ये जीवस्यैव शरीरहन्तृत्वेन प्रतिपादनात् स्वप्नेन शारीरमभिप्रहत्येत्यत्रापि 'तदेते श्लोका भवन्ती'ति पूर्वोक्तार्थे सम्मतित्वेनोपन्यस्तैस्तत्समानार्थकताया आवश्यकत्वात् जीवपरतैवास्थातुमुचिता । तथा च शारीरपदं शरीरपरम् । जीवस्य स्वप्नदशायां शरीरहन्तृत्वं नाम तस्यां दशायां तेन उपभोगाभाव एव । तथा च

उत्तरश्लोकेऽपि जीव एव कीर्त्यते—'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंस' इत्यादौ । अतो मध्ये परामर्शोऽपि जीवपरः । पूर्वं यथोपक्रान्तो जीवो देहादिव्यतिरिक्ततया, तथोत्तरत्रोपसंह्रियते—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणे'ष्विति । अत उपक्रमोपसंहारपरामर्शैर्जीवपरमेतद्वाक्यम् । ननु, परमेश्वरोऽपि सुषुप्तौ 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति उत्क्रान्तौ च 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याती'ति जीवसम्बन्धितया निरूप्यते । तथा 'सर्वस्य वशी सर्वस्येशान' इति परमात्मधर्मा भूयांस आम्नायन्ते । तद्विज्ञानार्थतया च 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिना वेदानुवचनादीन्याम्नायन्ते । 'अत ऊर्ध्वं विमोक्षायैव ब्रूही'ति प्रष्टा जनको मुमुक्षुरवगम्यते । अतोऽङ्गुष्ठवाक्यवज्जीवानुवादो जीवपरमात्मनोरभेदबोधनार्थ इति परमात्मनो यद्विशुद्धं प्रत्यगभिन्नं स्वरूपं, तत्पर एवायं सन्दर्भ इति चेत्, अत्रोच्यते—जीवातिरिक्ते कस्मिंश्चिदसंसारिणि सिद्धे हि तस्य वशित्वादीनि लिङ्गानीति शक्यते वक्तुम् । स एवासिद्धः । न च जन्मादिसूत्रमारभ्य तत्तच्छ्रुत्युदाहरणेनाधिकः परमात्मा व्यवस्थापित इति वाच्यम् । तत्र हि जीवातिरिक्तं परमात्मानं सिद्धवत्कृत्य जगत्कारणत्वादिकं तस्यैव धर्म इति व्यवस्थापितम् । तन्न सम्भवति । अतिरिक्तमीश्वरमुपेत्य तस्य जगत्कारणत्वमिति कल्पनायाः गौरवग्रस्तत्वात् । अपि तु क्लृप्तानामेव जीवानां जगत्कारणत्वमात्रं कल्पनीयम् । लाघवादिति । अस्तु वा जीवातिरिक्तो व्यवहारतः, परमार्थतो जीवस्वरूपभूतः परमेश्वरः, तथापि न तत्परमेतद्वाक्यम् । उपक्रमोपसंहारयोः प्राणादिसम्बन्धित्वेन कीर्तितस्य जीवस्य तदभेदबोधनासम्भवात् । ननु, मध्ये असङ्गत्वादिना जीवः कीर्त्यते—'असङ्गो ह्ययं पुरुष' इति, सङ्गित्वेनापि कीर्त्यत एव जाग्रत्स्वप्नसुषुप्त्याद्यवस्थोपन्यासात्—'साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेने'ति । तथा च संसारित्वासंसारित्ववर्णनयोर्मध्यगतयोः कलहे उपक्रमाद्यनुसारेण संसारित्वनिरूपणानुसारेणासङ्गत्वादिवचनानि व्याख्येयानि । तथा चोपक्रमादिपर्यालोचनया जीवपरत्वे वाक्यस्य स्थिते औपसंहारिकसर्ववशित्वादिपरमात्मधर्मकीर्तनं जीवे तद्दृष्टिविधानार्थम् । सुषुप्त्युत्क्रान्त्योः परमात्मसम्परिष्वक्तत्वकीर्तनमपि तथोपासनार्थम् । वेदानुवचनादीनां च तत्रैवोपासनायां चित्तशुद्ध्यर्थतयोपयोगो भविष्यति । मोक्षफलकीर्तनमपि 'न लिप्यते कर्मणा पापकेने'त्यौपसंहारिकपापनिवृत्त्यर्थकमेव भविष्यति । तस्मात्संसारिस्वरूपान्वाख्यानपरत्वं युक्तमेव । अत एव नाङ्गुष्ठाधिकरणेन गतार्थतापि । तत्रैतादृशजीवोपक्रमोपसंहारैकरूप्याभावेन तस्य

वाक्यस्य ब्रह्मात्मना जीवोपासनापरत्वानभ्युपगमात् । आकाशपदस्य नामरूपनिर्वाहकत्वादिप्रबलब्रह्मलिङ्गानुसारेणास्तु ब्रह्मलक्षकता । अस्य तु वाक्यस्य सविशेषजीवपरतायाः प्रबललिङ्गैरवगतत्वात् न विशुद्धजीवस्वरूपलक्षकतेति सङ्गतिः । **परमेश्वरोपदेशपरमेतद्वाक्यमिति ।** अयं भावः—येन ह्यनुमानेनेश्वरः प्रसाध्यते, तं प्रत्येवातिरिक्तेश्वरकल्पनं गौरवग्रस्तमिति दूषणं शक्यं वक्तुं, न त्वौपनिषदं प्रति । श्रुतिभिर्हि जीवानामपि नियामकत्वेन जीवासम्भाव्यमानेक्षणादिपूर्वकस्रष्टृत्वादिना चेश्वरः प्रतिपाद्य इति प्राचीनाधिकरणैर्निपुणतरं व्यवस्थापितम् । तथा च प्रामाणिकं गौरवं न दोषाय । अस्मिंश्चार्थे 'भेदेन व्यपदेशादि'ति सूत्रांशो योजनीयः । तत्र श्रुतिषु संसारिणो जीवात् भेदेन व्यपदेशादस्ति परमेश्वर इति । यदि तु अन्यासूपनिषत्स्वीश्वरप्रतिपादनमस्तु । अथापि प्रकृते ज्योतिर्ब्राह्मणे तत्प्रतिपादनं नास्ति । तथा चेश्वरस्यैवात्राप्रतिपादनात् तद्भेदप्रतिपादनं दूरत एव निरस्तमिति वदेत्, तं प्रति पुनरपि सुषुप्त्युत्क्रान्त्योरिति पदाभ्यां सह भेदेन व्यपदेशादित्यनेनावृत्तेनोत्तरमुच्यते—**परमेश्वरमित्यादिना** । तद्व्याचष्टे—**अन्वारूढ उत्सर्जन्यातीति** । परमेश्वरेणाधिष्ठितो मरणसमये वेदनावशात् नानाविधान् शब्दानुत्सर्जन्यातीत्यर्थः । 'पत्यादिशब्देभ्य' इति सूत्रेण जीवं प्रस्तुत्य सर्ववशित्वसर्वाधिपतित्वादिकीर्तनात् प्रतीचो ब्रह्माभेदबोधनपरमेतद्वाक्यमिति प्रतिपाद्यते । तदुपयोगितया प्रथमत एव त्वंपदार्थशोधनपरतामवान्तरवाक्यानां कथयति—**अत्र ब्रूम इत्यादिना** । अयं भावः—'कतम आत्मे'ति प्रश्नस्तावत् मुमुक्षया जनकस्येति तावत् 'दत ऊर्ध्वं विमोक्षायैव ब्रूही'ति तदीयवचनैरवगम्यते । मोक्षश्च निर्विशेषप्रत्यगभिन्नब्रह्मज्ञानादेवेति' ज्योतिर्ब्राह्मणपूर्वभाविनः कूर्चब्राह्मणादवगम्यते । तत्र हि दक्षिणवामाक्षिगततया इन्धविराट्छब्दोदितौ पुरुषपत्नीभावेन जीवस्य सूक्ष्मस्थूलावस्थोपाधिकभेदावुक्त्वास्य तस्यैव जीवस्य मूर्तामूर्तब्राह्मणप्रतिपाद्य'मथात आदेशो नेति नेती'ति एतदेव पारमार्थिकं रूपमिति 'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्जते असितो न व्यथते न रिष्यती'त्युक्त्वा 'अभयं वै जनक प्राप्तोऽसी'ति हि तत्रोक्तम् । श्वेताश्वतरे च 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यती'ति निर्विशेषपरमात्मविज्ञानादेव मोक्षोऽवधारितः । न चात ऊर्ध्वं विमोक्षाय ब्रूहीत्यादिवाक्यगतो मोक्षशब्दः पापाभावपरतया सङ्कोचयितुं युक्तः । अभ्यस्तस्य सङ्कोचासहिष्णुत्वात् । 'न लिप्यते कर्मणा पापकेने'त्युपसंहारस्तु एकदेशद्वारा मोक्षप्रति-

पादनपर एव । उपक्रमोपसंहारौ त्वसङ्गात्मप्रतिपादन एव स्वरसौ । ज्योतिर्ब्राह्मणं हि 'स एष नेति नेत्यात्मे'त्यनेन पूर्ववाक्येन यत् संक्षेपेणोक्तं निर्विशेषप्रत्यगभिन्नब्रह्मस्वरूपं, तस्यैव विवरणार्थमिति तावदवगम्यते । सन्निधानात् असङ्गत्वादिप्रत्यभिज्ञानाच्च । तत्रात्मैवास्य ज्योतिरित्यनेन स्वप्रकाशचिद्रूपब्रह्माभेदोपयोगितया जीवस्य ज्योतिस्स्वरूपता प्रतिपादिता । तेन चागृह्यो न हि गृह्यत इत्यविषयता ब्रह्मणः स्वप्रकाशतोपक्षिप्ता पूर्वत्र या, सा विशदीकृता । 'अशीर्यो न हि शीर्यत' इत्यनेन शरणयोग्येभ्यः प्राणादिभ्यः सावयवेभ्यो यो व्यतिरेक उपक्षिप्तः, तद्विवरणं 'योऽयं विज्ञानमयःप्राणे'ष्वित्यादिना कृतम् । 'असङ्गो न हि सज्जत' इत्यनेनोपक्षिप्तस्यासङ्गत्वस्य व्युत्पादनाय स्वप्नान्ताद्युपन्यासेनावस्थानामागमापायिनीनां सदैकरूपमात्मानं प्रति स्वाभाविकता नास्तीति परमार्थतस्तदसंस्पृष्ट एवात्मेति प्रतिपाद्यते । तथा च प्रतिपर्यायं वदति—'स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष' इति । अस्वाभाविकत्वादेवौपाधिकत्वे संसारित्वस्य सिद्धे सुषुप्तौ च पूर्वं 'स समान' इतिवाक्येनोपक्षिप्तस्योपाधेः लये सिद्धे सति 'अत्र पितापिता भवतीत्यादिना 'तीर्णो हि तदा सर्वान् शोकान्हृदयस्य भवती'त्यन्तेन वाक्येन विशुद्धता जीवस्य प्रतिपाद्यते । तेन च न व्यथत इति पूर्वं यत् संक्षेपेणोक्तं, तद्विवृतं भवति । न रिष्यतीत्यनेन यः प्रतीचो नाशाभाव उक्तः, स तु स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिस्संसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहातीत्यनेन देहसंयोगवियोगावेवात्मनो जन्ममरणे, न त्वभूतप्रादुर्भावस्वरूपध्वंसरूपे इति व्युत्पादयता विशदीक्रियते । असित इत्यनेन यद्बन्धराहित्यमुक्तं, तत् 'एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयानि'त्यादिवाक्यैः बन्धमूलपुण्यपापासंसर्गं वदद्भिर्विशदीक्रियते । अतः संक्षेपविस्तराभ्यां सर्वोऽप्ययं सन्दर्भः विशुद्धप्रत्यक्स्वरूपप्रतिपादनपूर्वकं तस्य पराभेदबोधनार्थमेव प्रवृत्त इत्यवसीयते । तथा चोपसंहृतं—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदयाकाशः तस्मिन् शेते । सर्वस्य वशी सर्वनियमनसामर्थ्यवान्, सर्वस्येशानः सर्वनियामकः, सर्वस्याधिपतिः सर्वस्यापि कर्मोचितफलदानेन पालयिता । तथा च मध्ये यत्क्वाचित् 'पुण्यः पुण्येन कर्मणा भवति पापः पापेने' त्यादिसंसारिस्वरूपप्रतिपादनमुपलभ्यते, तत् 'न साधुना कर्मणा भूयानि'त्यादिनिषेधशेषभूतमित्यव-

गन्तव्यम् । उपक्रमाद्यनेकलिङ्गोपष्टम्भत्वात् विशुद्धजीवप्रतिपादनपरतायाः । तस्माज्ज्योतिर्ब्राह्मणं यथा सविशेषपरमात्मपरं न भवति, एवमेव संसारिजीवपरमपि न भवति । अपि तु जीवस्य परमात्माभेदबोधनपरमेवेति सिद्धम् ॥ ४२ ॥ ४३ ॥

इति सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १४ ॥

इति श्रीमच्छारीरकभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां
प्रथमस्याध्यायस्य
तृतीयः पादः

ॐम्

---

अथ

## ॥ चतुर्थः पादः ॥

# आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥

वृत्तानुवादपूर्वकं तुरीयपादस्य त्रिपाद्या सङ्गतिं वदन् वक्ष्यमाणपादार्थमाह— **ब्रह्मजिज्ञासां प्रतिज्ञायेत्यादिना तेषामन्यपरत्वं दर्शयितुं परस्सन्दर्भः प्रवर्तत इत्यन्तेन** । अयमर्थः—ईक्षत्यधिकरणे हि जन्मादिसूत्रोक्तं ब्रह्मलक्षणत्वेनाभिमतं जगत्कारणत्वादिकं श्रुतिप्रतिपाद्यं प्रधानेऽपि सङ्घटयितुं शक्यम् । अतोऽनुमानसिद्धसावयवप्रधानपरत्वमेव वेदान्तानामस्तु, न त्वलौकिकनिरवयवब्रह्मपरत्वमिति किञ्चिदवान्तरवाक्याभासमूलतया लक्षणासम्भवशङ्कायां प्रधाने श्रुतिस्वारस्यनिराकरणेन सा शङ्का परिहृता । तदुपोद्बलनाय च सर्वासां श्रुतीनां गतिसामान्यन्यायं ब्रह्मणि प्रतिज्ञाय 'आनन्दमयोऽभ्यासा'दित्यादिभिः 'पत्यादिशब्देभ्य' इत्यन्तैः सूत्रैस्तत्तच्छ्रुतिस्वारस्यपर्यालोचनया गतिसामान्यमेव शङ्काविशेषनिराकरणपूर्वकं व्यवस्थापितम् । अस्मिन् पादे तदाशङ्क्यत इति त्रिपाद्या सह आक्षेपिकी अस्य पादस्य सङ्गतिः । तत्र प्रथमतः त्रिभिरधिकरणैः यत् प्रधानस्य अशब्दत्वोक्त्या क्वचिदपि वेदे तत् न प्रतिपाद्यत इत्युक्तं, तदाक्षिप्य समाधीयते । तथा च ब्रह्मलक्षणस्यातिव्याप्तिशङ्का निराकृता भवति । प्रधानस्य क्वचित् कारणत्वेन प्रतिपादने हि जन्मादिसूत्रोक्तं ब्रह्मलक्षणमतिव्याप्तं स्यात् । चतुर्थाधिकरणेन च वेदान्तानां विरुद्धार्थप्रतिपादकतया नैकरूप्येण ब्रह्मप्रतिपादकत्वमस्तीति गतिसामान्यमाक्षिप्य समाधीयते । तदनन्तरं द्वाभ्यामधिकरणाभ्यां जीवे ब्रह्मलक्षणस्यातिव्याप्तिरित्याशङ्क्य समाधीयते । ततः प्रकृत्यधिकरणेन जन्मादिसूत्रोक्तं कारणत्वं ब्रह्मणः कर्तृत्वरूपमेव पर्यवस्यति । उपादानं तु प्रधानमेव भविष्यतीति पुनरपि प्रधानस्याशब्दत्वमासिद्धमित्याशङ्का निराक्रियत इति कृत्स्नोऽयं पादः पूर्वोक्ताक्षेपसमाधानार्थ इति । एतेनेत्यधिकरणं तु यानि प्रातिस्विकरूपेण नोदाहृतानि वाक्यानि, तेषूक्तानामेव न्यायानां सञ्चारार्थमित्यध्यायान्ते कृतम् । अतस्तुरीयपादे विशिष्य सङ्गतिर्न वक्तव्यैवेति । 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' इत्यत्र अव्यक्तपदेन किं साङ्ख्यतन्त्रप्रसिद्धं प्रधानं गृह्यते, किं वा 'आत्मानं रथिनं विद्धि शरीरं रथमेव त्वित्यादि-

रूपकवाक्यगतं शरीरं गृह्यत इति संशये सूत्रे आनुमानिकमप्येकेषामिति शङ्काविभागं विवृण्वन्नेव पूर्वपक्षमाह—**आनुमानिकमपीत्यादिना । तत्र य एवेत्यादि।** ननु, साङ्ख्येन स्मृतिप्रसिद्धमहदादिशब्दानां तत्क्रमस्य चेह प्रत्यभिज्ञानात् तदनुसारेण स एवेहार्थो विवक्षित इत्युच्यते । तत्र वक्तव्यं—तस्यास्स्मृतेः किमियमेव श्रुतिर्मूलम्, उत श्रुत्यन्तरम् । तत्र न तावदाद्यः । यदि हीयमेव श्रुतिर्मूलं भवेत्, तदैतच्छ्रुतिपूर्वोत्तरसन्दर्भपर्यालोचनया योऽर्थोऽवगम्यते, तदनुसारित्वं तस्याः वक्तव्यम् । न तु तां स्मृतिमनुरुध्य प्रकृता श्रुतिर्व्याख्यातुं युक्ता । अस्यां तु रूपकवाक्यविन्यस्ता ये आत्मादिपदार्थाः, तेषामेव ग्रहणं न्याय्यम् । ननु, रूपकवाक्यविन्यस्ता एवेह ग्राह्या इत्यत्र किं नियामकम् । अन्योन्याकाङ्क्षेति चेत्, रूपकवाक्ये हि आत्मशरीरादीनां रथरथिभावेन विन्यासः । तत्र च प्रयोजनाकाङ्क्षा । अत्र चेन्द्रियेभ्यः परा ह्यर्था इत्यत्र परापरभावेन उपन्यस्ता इन्द्रियादयः के इत्यपेक्षा । अतस्त एवेह ग्राह्या इति अन्योन्याकाङ्क्षा वर्णनीया । सा तु न सम्भवति । रूपकवाक्योक्तानामिन्द्रियादीनां तदनन्तरवाक्य एव वशीकरणविधिर्दृश्यते । 'यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ।' इत्याभ्यां मन्त्राभ्यां यो बाह्यान्विषयानध्यवस्यन् इदं मे भूयादिति सङ्कल्पयति, तस्य बुद्ध्यपरपर्यायं विज्ञानमप्रशस्तं मनश्चायुक्तं, तथाभूतस्येन्द्रियाणि विषयेभ्योऽपरावृत्तान्यवश्यान्येव भवन्ति । परावर्तयितुं पुनरशक्यानि भवन्ति । यस्य तु विज्ञानमनसी, विषयाध्यवसायसङ्कल्पविमुखे, तस्य चक्षुरादीनि विषयप्रवृत्तिस्वभावान्यपि परावर्तयितुं योग्यानि भवन्त्येवेत्युक्त्वा अवश्येन्द्रियत्ववश्येन्द्रियत्वयोः फलं च दर्शितं–'यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति । यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्मात् भूयो न जायते । ' इति । तथा च वशीकृतहयाद्युपकरणस्य यथा समीचीनदेशप्राप्तिः, तद्वद्वश्येन्द्रियस्य मोक्षप्राप्तिरिति दृष्टान्तमुखेनेन्द्रियजयसम्पादनविध्यर्थावगमे रूपकवाक्यस्योपयुक्तत्वात् न तदाकाङ्क्षा, नापीन्द्रियेभ्यः परा ह्यर्था इति वाक्यस्य । तत्र हि तावन्नेन्द्रियादिशब्दार्थनिर्णयार्थं तद्वाक्यापेक्षा । प्रसिद्धार्थत्वात्तेषां पदानाम् । नापि परत्वेन प्रतिपाद्यमानस्य पुरुषस्य परत्वावध्यपेक्षा । स्ववाक्योपात्तैरेवेन्द्रियादिभिस्तदाकाङ्क्षायाः शान्तत्वात् । अतः कथं पूर्वापरसन्दर्भपर्यालोचनया रूपकवाक्यगता एव ग्राह्या इति चेत्, उच्यते—पूर्वं रूपकवाक्यविन्यस्तानां यद्यपि वशीकरणविधिरस्ति, तथा-

पि स यावत्पर्यन्तमिन्द्रियादिषु मध्ये इदं प्रथमतः वशीकर्तव्यं यत्नेनेति विशिष्य न प्रतिपाद्यते, तावत् साकाङ्क्ष एव भवति। इन्द्रियेभ्यः परा ह्यर्था इत्यत्र च सर्वेभ्यः परत्वेन पुरुषः प्रतिपाद्यः। 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः'। इति वाक्यशेषात्। तत्र च इन्द्रियादिभ्यः सर्वेभ्यः परः इत्येकया हेलया वक्तव्ये किमिति इन्द्रियेभ्यः परा ह्यर्था इत्यवान्तरपरापरभावो वर्ण्यत इत्याकाङ्क्षा भवत्येव। तदाकाङ्क्षानिवृत्तये रूपकवाक्यविन्यस्तानामेव वश्यतायां परापरभावबोधनार्थमिन्द्रियेभ्यः परा ह्यर्था इत्यस्यावान्तरतात्पर्यं कल्प्यते। तथा च रूपकवाक्यविन्यस्तानामेवेह ग्रहणे शरीरातिरिक्तानां पदान्तरैरेव गृहीतत्वात् परिशेषादव्यक्तपदेन शरीरमेव गृह्यते। तथा चायमर्थः—येन इन्द्रियाणि वशीकर्तव्यानीति चिकीर्षितं, तेनार्थाः प्रथमतो वशीकर्तव्याः। तद्वश्यता च तत्सन्निधिपरित्याग एव। अर्थसन्निधिपरित्यागेऽपि तद्विषयकमनस्सङ्कल्पे पुनरपि त इन्द्रियक्षोभका एवेति मनसा तद्विषयस्सङ्कल्पोऽपि परित्यक्तव्यः। तत्सङ्कल्पपरित्यागोऽपि बुद्धिवृत्त्यध्यवसायपरित्यागं विना न भवतीति विषयगोचरोऽध्यवसायः परिहर्तव्यः। इदं सर्वमपि नित्यनैमित्तिककर्मभिः परमेश्वराराधकस्य भवतीति तदाराधनेन विशुद्ध आत्मा सम्पादनीयः। परमेश्वराराधनं च शरीरस्वास्थ्ये भवतीति हितमितमेध्याशनेन शरीरं वशे कर्तव्यम्। तदिदमुच्यते—'इन्द्रियेभ्यः परा ह्यर्था' इति। परत्ववाचोयुक्त्या इन्द्रियेभ्यः अर्थाः पराः। वश्यतापादने इन्द्रियाणि वशीकर्तुमिच्छता प्रथमतोऽर्थसान्निध्यं परिहर्तव्यं भवति। अतस्ते इन्द्रियेभ्यः पराः। एवमुत्तरत्र द्रष्टव्यम्। तथा च पूर्वापरपर्यालोचनायां नेयं श्रुतिः साङ्ख्यस्मृतेर्मूलं भवति। एवं श्रुत्यन्तरमपि तत्र मूलं नोपलभ्यते। अतः कथं निर्मूलसाङ्ख्यस्मृत्यनुसारेण श्रुतिर्व्याख्यातुं शक्या। उच्यते—साङ्ख्यस्मृतिर्न निर्मूला। अनुमानमूलत्वसम्भवात्। साङ्ख्या हीत्थं वदन्ति—स्थूलानर्थान् दृष्ट्वा तत्कारणं तन्मात्रपदप्रतिपाद्याः सूक्ष्माः पृथिव्यादयः कल्प्यन्ते। पञ्चतन्मात्राणामिन्द्रियाणां च कारणत्वेनाहङ्कारः कल्प्यते। इन्द्रियाणि तु विषयोपलब्ध्यानुमीयन्ते। अहङ्कारकारणत्वेन महत्तत्वं, तस्यापि कारणमव्यक्तं, तत्तु न कस्यापि कार्यम्। परं तु तस्य भोग्यभूतस्य भोक्ता पुरुषः कल्प्यते। तथा च साङ्ख्यानां स्थूला अर्थाः प्रत्यक्षसिद्धाः, अन्ये त्वानुमानिकाः। तथा च प्रधानादिकमानुमानिकमेवेति तन्मूलायाः स्मृतेः श्रुतिसंवादोऽपि पूर्वपक्षे प्रतिपाद्यते। तदिदमुक्तं सूत्रकृता—'आनुमानिकमप्येकेषामि'ति। अनुमानसिद्धं यत् प्रधानं, तदिह श्रुतौ क्वचित् प्रतिपाद्यत इति यदुक्तं, श्रुतिः पूर्वोत्तरपर्यालोचनायां न साङ्ख्यतत्त्वपरा, अपि त्वन्योन्याकाङ्क्षया रूपकविन्य-

स्तेन्द्रियादिपरा । ततश्च परिशेषादव्यक्तपदं शरीरपरमिति, तत्रोच्यते—रूपकविन्यस्तानां वश्यताक्रियायां विनियोगे सति तत्रापि पुनः प्रथमतः किं वशीकर्तव्यमित्याकाङ्क्षा जायत इत्युक्तम् । सा किं क्रियापदश्रवणे कारकाकाङ्क्षेव स्वारसिकी, उत नीलो घटोऽस्तीत्यत्र घटस्य नीलांश इवोत्थाप्यते । नाद्यः । 'यस्तु विज्ञानवान् भवती'त्यादिवाक्यस्य ह्यभिधानमभिधेयं वा पर्यवसानाय नापेक्षते इन्द्रियेभ्यः परा इति वाक्यम् । न चाभिधानपर्यवसानेऽपि नाभिधेयं पर्यवासितम् । प्रथममिदम्, अनन्तरमिदं वशीकार्यमिति विशिष्यानुक्तेरिति वाच्यम् । एतादृशविशेषानभिधानेऽपि अभिधेयपर्यवसानसम्भवात् । परं तु कथं बुद्ध्यादीनि वशे कर्तव्यानीत्यपेक्षा तत्प्रकारानभिज्ञस्य भवति । सा तु 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते । इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥' इति शास्त्रेण इन्द्रियप्रवृत्तेः प्रयोजकं ज्ञात्वा तन्निरोधस्तत्र प्रकार इत्यवगतिसम्भवात् निवर्तनीया, न तु तादृशी आकाङ्क्षेन्द्रियेभ्यः परा इति वाक्येन निवर्तयितुमपि शक्या । तत्प्रकारस्य तत्रानवगमात् । अतो नोक्तस्वारसिकी आकाङ्क्षा सम्भवति । नापि द्वितीयः । तदुत्थापकादर्शनात् । वशीकरणविधिवाक्ये हि तदुत्थापकं नोपलभ्यते । न चावान्तरपरापरभावकथनम् 'इन्द्रियेभ्यः परा'इति वाक्यगतं स्वसार्थक्याय तथाकाङ्क्षामुत्थापयतीति वाच्यम् । अवान्तरपरापरभावकथनस्य सोपानपङ्क्तिन्यायेन सर्वेभ्यः पुरुषः पर इति सुखेन बुद्ध्युपारोहार्थत्वात् । अपि च तदुत्थापकत्वकल्पनेऽपि बुद्धिमनइन्द्रियाणामेव परापरभावो वक्तव्यस्स्यात् । वश्यताविधौ तेषामेव कीर्तनात् । अपि च प्रकृतसन्दर्भे 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इतिवाक्यपर्यालोचनया बुद्धेरेव वशीकरणे प्रयत्नोऽतिवास्थेय इत्यवगम्यते । उक्तगत्याऽव्यक्तपदस्य शरीरपरत्वे तस्य वशीकरणे अत्यन्तं यत्नः कर्तव्य इति कल्पनीयं स्यात् । तथा च 'दृश्यते त्वग्र्यये' तिवाक्यविरोधोऽपि । अपि च 'इन्द्रियेभ्यः परा ह्यर्था' इति वाक्यं 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरि' ति वाक्यपर्यालोचनया सर्वेभ्यस्तत्त्वेभ्यः परः पुरुष इति प्रतिपत्तिपरमित्यवगम्यते । तच्च साङ्ख्यीयतत्त्वग्रहण एव समञ्जसं भवति । अर्था दश इन्द्रियाणि दश मनः बुद्धिपदोदितोऽहङ्कारः महानात्मेति महत्तत्वम् अव्यक्तपदोदितं प्रधानमिति चतुर्विंशतितत्त्वग्रहणसम्भवात् । रूपकवाक्योदितानां ग्रहणे तु न सर्वतत्त्वसङ्ग्रहः । रूपकवाक्ये हि 'विषयांस्तेषु गोचरानि'ति स्थूलानामेव ग्रहणं, न सूक्ष्माणाम् । तेषामिन्द्रियगोचरत्वाभावात् । तथा तन्मात्राणामहङ्कारमहत्तत्त्वाव्यक्तानां च तस्मिन् पक्षे ग्रहणासम्भवात् न सर्वेभ्यः परत्वं पुरुषस्याभिहितं स्यात् ।

अतः श्रुतितात्पर्यात् साङ्ख्यीयानामेव तत्त्वानामिन्द्रियेभ्यः परा ह्यर्था इत्यादिना ग्रहणं वक्तव्यमिति सिद्धं साङ्ख्यप्रक्रियायाः श्रुतिसम्मतत्वम् । तदिदमाह—**तत्र य एव यन्नामान इत्यादि** । अपि चाव्यक्तशब्दः प्रधाने रूढः । योगोऽपि तस्य प्रधान एव, न शरीरे । तस्य व्यक्तत्वात् । नाप्यव्यक्तपदस्य शरीरे रूढिः । तदाह—**तत्राव्यक्तमित्यादि** । न च साङ्ख्यतन्त्रे प्रसिद्धिर्न वैदिकलौकिकव्यवहार उपयुज्यत इति । तथाहिसति तार्किकप्रसिद्धिरपि न शब्दार्थनिर्णय उपयुक्ता स्यात् । तान्त्रिकप्रसिद्धत्वाविशेषात् । न चेष्टापत्तिः । तथापि महाकविव्यवहारदर्शनात् । तथा च भारते नारदं प्रस्तुत्योक्तम्—'ऐक्यनानात्मसंयोगसमवायविशारदः । पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ॥' इति । अत्र समवायपञ्चावयवशब्दाः तार्किकसमयप्रसिद्धाः । अतस्साङ्ख्यप्रसिद्ध्यापि शब्दार्थग्रहणे नानुपपत्तिः । यद्यपि प्रधानं सूक्ष्मावस्थाशब्दादियुक्तमेव, तथापि स्थूलावस्थाशब्दादिहीनत्वं शब्दादिहीनत्वाच्चेत्यनेन विवक्षितम् । तदेव जगतः कारणमित्यत्र एवकारोऽपिकारार्थः । न च महतः परमित्यत्र परत्वमात्रं प्रतिपाद्यते, न कारणत्वमिति वाच्यम् । तत्र परत्वे किं प्रयोजकमित्यपेक्षायां कारणत्वमेव पर्यवस्यतीति भावः । न चार्थमनसोरिन्द्रियार्थाभ्यां परत्वं कारणत्वेन वक्तुं न शक्यत इति अर्थानामिन्द्रियक्षोभकत्वात् ततः परत्वं, मनसस्तु अर्थावभासकत्वात्तेभ्यः परत्वमिति च कल्पने तदनन्तराम्नातानां च कारणत्वेन परत्वमिति तस्मिन्नेव सन्दर्भे परशब्दस्यार्थवैरूप्यं स्यादिति वाच्यम् । परशब्देन ह्युत्कर्षमात्रं प्रतिपाद्यते । तत्र प्रयोजकं यथासम्भवं कल्प्यत इति न वैरूप्यम् । **श्रुतिस्मृतिन्यायेति** । श्रुतिः प्रकृता, स्मृतिः साङ्ख्यीया, न्यायोऽनुमानम् । **न ह्यत्र यादृशं स्मृतिप्रसिद्धमिति** । परशब्दो हि न साक्षादेव कारणत्वमाह , अपि तु पर्यवसानगत्या तथा कल्पनीयम् । न च कारणत्वेनैव पर्यवसानमित्यत्र किञ्चिन्नियामकमिति भावः । **न वेदार्थनिरूपणे कारणभावं प्रतिपद्यत इति** । वेदस्य पुरुषसङ्केतितार्थप्रतिपादकत्वे सापेक्षत्वलक्षणाप्रामाण्यापातेन साङ्ख्यकल्पिताया रूढेः वेदार्थकरणेऽनुपयोगात् । भारतादीनां तु पौरुषेयत्वेन साङ्केतिकार्थप्रतिपादकत्वे न काचिदनुपपत्तिरिति भावः । एवं सौत्रतन्त्रं व्याख्यातुं सूत्रात् बहिरेवोपपत्तिमुक्त्वा 'शरीररूपकविन्यस्तगृहीते'रित्यनेन सिद्धान्त्यभिमतार्थस्यैव स्वारस्येन प्रतीतिरिति तत्रोक्तामुपपत्तिं व्याचष्टे—**प्रकरणनिरूपणायां चेति** । शरीरं ह्यत्र रथरूपकविन्यस्तमिति स्वेन रूपेण प्रतीतिविषयतामन्यस्यापादयन्तीति रूपकपदेन शरीरादिसामानाधिकरण्येन विन्य-

स्ता रथादयो विवक्षिताः । तथा च रूपकात्मको यो रथः तत्सामानाधिकरण्येन विन्यस्तं प्रतिपादितमित्यर्थो द्रष्टव्यः । अत्र च रूपकपदस्य रूपवन्तं करोतीति विग्रहे रूपवच्छब्दात्तत्करोतीति णिचि मतुपो लुकि टिलोपे च सति रूपिधातोर्ण्वुलि तस्याकादेशे णेरनिटीति णिलोपे च सति निष्पत्तिर्द्रष्टव्या । नन्वथापि रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम् । शरीरस्यैव विशेष्यत्वप्रसिद्धेः । उच्यते—तथासति रूपकविन्यस्तेति विशेषणमरूपकविन्यस्तशरीरव्यावर्तकम् । तथा चायमर्थो भवेत्–रूपकविन्यस्तं यच्छरीरं वर्तते, तदेव गृह्यते अव्यक्तपदेन, न तु ततोऽन्यत् । एवंचसति प्रकृतासङ्गतिः । न हीहाव्यक्तपदेन शरीरग्रहणं सिद्धवत्कृत्य तद्विशेषग्रहणे विवादः । अपि तु प्रधानं ग्राह्यमिति परः, शरीरमिति तु सिद्धान्ती । तत्र च शरीरग्रहणमित्यत्र सिद्धान्तिना युक्तिर्द्विप्रकारा विवक्षिता । सामान्यविशेषाभ्यां रूपकविन्यस्ता एवेन्द्रियेभ्यः परा इत्यादौ गृह्यन्ते । प्रकृतत्वात् । तेष्वपि परिशेषादव्यक्तपदेन शरीरमेव गृह्यत इति । तथा च रूपकविन्यस्तगृहीतेरित्यंशो सामान्ययुक्तिर्निरूप्यते । तत्राप्यव्यक्तपदेन रूपकविन्यस्तेषु मध्ये न सर्वे गृह्यन्ते, अपि तु शरीरमितीन्द्रियादिव्यावृत्त्यर्थं तद्विशेषणं शरीरमिति । अतो विशेषणविशेष्यभावव्यत्यासः सूत्रे समाश्रितः । तदिदमाह—**प्रकरणात् परिशेषाच्चेति** । प्रकरणं व्युत्पादयितुं सौत्रं दर्शयतीतिपदमवतारयति—**तथा ह्यनन्तरातीतो ग्रन्थ इत्यादिना** । इन्द्रियेभ्यः परा ह्यर्था इति वाक्ये न साङ्ख्यीयस्मृतिप्रसिद्धानि तत्त्वानि गृह्यन्ते । तेषां विप्रकृष्टत्वात्, अपि तु सन्निहितत्वात् रूपकवाक्यविन्यस्ता एवेन्द्रियादय इह विवक्षिता इति । अत्र यद्यपीन्द्रियादिपदानि तत्रात्र च तुल्यान्येव प्रत्यभिज्ञायन्त इति न तदर्थैक्ये काचिद्विप्रतिपत्तिः, तथापि तत्र 'विषयांस्तेषु गोचरान्' 'शरीरं रथमेव तु तद्विष्णोः परमं पदमि'ति । इह तु अर्था इति अव्यक्तमिति पुरुष इति च पदभेदोऽस्ति । अतस्तदैकार्थ्याय सन्निहितत्वादियुक्त्याश्रयणम् । युक्त्यन्तरमाह—**तैश्चेन्द्रियादिभिरिति** । अयमर्थः—पूर्वत्र 'सोऽध्वनः पारमाप्नोति तद्विष्णोःपरमं पदमि'ति प्राप्यत्वेनावगतं विष्णोः परमं पदम् । इहापि पुरुषस्य 'सा परा गति'रिति कर्मव्युत्पन्नेन गतिशब्देन प्राप्यत्वमवगम्यते । अतस्तयोरभेदः । पूर्वत्र चेन्द्रियादीनां वशीकृतानां तत्प्रापकत्वेनाङ्गत्वं तं प्रति क्लृप्तम् । इहापि तस्य परत्वेनावगतौ अवधित्वेन निबध्यमानानीन्द्रियादीनि तदङ्गानीति वक्तव्यम् । तथा च पूर्वत्र पुरुषं प्रत्यङ्गत्वेन क्लृप्तानि यानि, तान्येवेहापि अङ्गत्वेन निबध्यन्त इति युक्तं पुरुषोपकारकतायाः क्लृप्तत्वेनावगतिरूप-

द्वारभेदमात्रकल्पनायाः लघुत्वात् । अन्येषां तु ग्रहणे उपकारकत्वमपि कल्पनीयमिति गौरवं भवेत् । यत्तूक्तं—सर्वेभ्यः परत्वेनेह पुरुषः प्रतिपाद्यः । अतः साङ्ख्यीयतत्त्वग्रहणमेव समञ्जसम् । सर्वसङ्ग्रहसम्भवात् । रूपकविन्यस्तानां ग्रहणे तु तस्मिन्वाक्ये सर्वेषामनुक्तेः सर्वेभ्यः परः पुरुष इति प्रतिपत्तिर्न स्यादिति । अत्रोच्यते—न ह्यत्र सर्वेभ्यः परः पुरुष इत्येतावन्मात्रबोधने वाक्यस्य तात्पर्यम्, अपि त्वा'त्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इति वाक्येनोपक्षिप्तस्य भोक्तुः रथित्वेन कल्पितस्य प्राप्यं वैष्णवं पदमित्युक्तेः प्राप्तं भेदमपोदितुं तस्यैव यद्विशुद्धं स्वरूपं, तदेव विष्णोः परमं पदमिति बोधने । प्राप्यत्वं च तस्य प्राप्तस्यैवाप्राप्तत्वभ्रमव्युदासमात्रम् । अत एव च 'ऋतं पिबन्तावि'ति पूर्वमन्त्रेण जीवस्य समीपवर्तितया बुद्धिगुहायामेव परमात्मा विशुद्धसाक्षिस्वभाव उपक्षिप्तः । उत्तरत्र चाव्यवधानेनैव 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि'ति परमात्मन एव जीवरूपेण गूढत्वं वक्ष्यति । तथा च विशुद्धसाक्षिस्वरूपबोधनाय ये तदभेदेनाहमित्येव गृहीताः शरीरादयः, तेभ्यः परत्वं बोधयितुं प्रवृत्तेऽस्मिन्वाक्ये न सर्वतत्त्वग्रहणनिर्बन्धः । अत एवे'न्द्रियेभ्यः परं मनः मनसस्सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषो व्यापको लिङ्ग एव च । यत् ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छती'ति वाक्ये अर्था न निर्दिष्टाः । तत्र जीवाभेदभ्रमाभावात् । इह तु तेषां ग्रहणं रूपकवाक्यविन्यस्तानामेव ग्रहणमिति द्योतनार्थम् । तथा च 'अव्यक्तात् पुरुषः पर' इत्यन्तेन विशुद्धं साक्षिणं निरूप्य ततोऽपि परं विष्णोः परमं पदमस्तीति भ्रमनिरासार्थं 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरि'ति तदभेदो बोध्यते । एवं च प्रकरणानुगुण्यं भवति । कठवल्लीनां प्रत्यगभिन्नब्रह्मप्रकरणत्वं च 'त्रयाणामेव चे'ति सूत्रे विशदं भविष्यति । अपि च साङ्ख्यस्यापि न सर्वतत्त्वग्रहः । 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्र हि इन्द्रियसमभिव्याहृतार्थशब्दः स्थूलार्थपर एव पर्यवस्यति स्वरसतः । बुद्धिशब्दोऽपि स्वारस्येन नाहङ्कारवाचकः । स ह्यध्यवसायवृत्तिकान्तःकरणावान्तरभेदवाचको वा, महत्तत्त्ववाचको वा, महानात्मापि हैरण्यगर्भबुद्धिर्वा, जीवो वा, न तु साङ्ख्यीयम्महत्तत्त्वम् । तथा च न स्वरसतः साङ्ख्यस्यापि सर्वतत्त्वसङ्ग्रहः । यथाकथञ्चिल्लक्षणया अर्थाद्वा सर्वसङ्ग्रहः सिद्धान्तिनापि वक्तुं शक्य एव । परं तु प्रकरणविरुद्धार्थप्रतिपादकता परस्यावशिष्यते । अतः प्रकरणात् परिशेषाच्च शरीरमे-

वाऽव्यक्तपदेन ग्राह्यमिति सिद्धम् । **इन्द्रियाणां च ग्रहत्वमित्यादि** । घ्राणवाग्जिह्वा-चक्षुश्श्रोत्रमनोहस्तत्वचः अष्टौ ग्रहत्वेन, गन्धनामरसरूपशब्दकामकर्मस्पर्शा अ-ष्टावतिग्रहत्वेन च 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रती'त्यादिना बृहदारण्यके समाम्नाताः । तत् सर्वेषामिन्द्रियाणां तद्विषयाणां चोपलक्षणम् । इन्द्रियाणां ग्रहत्वं च प्रसिद्धपिशाचादिग्रहवत् पुरुषव्यामोह-कत्वात् । विषयाणां चातिग्रहत्वं सन्निधानाभावेऽपि स्मृतिमात्रेण व्यामोहहेतुत्वा-त् । ननु, 'बुद्धेरात्मा महान् पर' इत्यत्र नात्मपदं विशेष्यसमर्पकं, किं तु मह-त्पदमेव । तेन च महत्तत्त्वमेव प्रतिपाद्यते । आत्मपदं तु तस्यैव स्वरूपपरं सत् विशेषणम् । अत एवोत्तरत्र 'महतः परमव्यक्तमि'ति महत्पदस्यैवोपादानमित्यभि-प्रायेण पृच्छति—**कुत इति** । **आत्मशब्दादिति** । 'आत्मानं रथिनं विद्धी'त्य-त्र रथित्वेनोपक्षिप्तस्यात्मन इह आत्मपदेन प्रत्यभिज्ञानात् आत्मा महानिति सम-भिव्याहारे गुणवाचकत्वेन लोके प्रसिद्धस्य महत्पदस्य स्वरसतो विशेषणत्वस्यैव प्र-तीतेः स्वरूपपरत्वे व्यर्थतापाताच्च उत्तरत्र विशेषणद्वारा आत्मन एव निर्देशसम्भ-वात् भोक्तैवात्र निर्दिश्यत इति भावः । **स्वामित्वादिति** । इदमुपलक्षणं स्वरू-पतोऽपि व्यापकतया महत्त्वोपपत्तेः । प्रौढ्या पक्षान्तरमाह—**अथ वेति** । ननु, हिरण्यगर्भस्यैवाप्रसिद्धेः तदीयबुद्धेर्ग्रहणं दूरापास्तमित्यत आह—**यो ब्रह्माणं विदधातीति** । **हिरुगिति** । पृथगित्यर्थः । एतादृशक्लेशा-श्रयणे किञ्चित् न नियामकमिति भोक्तृपक्ष एव समीचीनः । एवं दर्श-यतीत्यंशं सन्निहितत्वादङ्गत्वेन क्लृप्तत्वाच्च रूपकवाक्यविन्यस्तानामेवेह ग्र-हणमित्यभिप्रायं व्याख्याय प्रकरणपर्यालोचनयापि तद्ग्रहणम् । प्रत्यगभिन्नब्र-ह्मप्रकरणे तद्विरुद्धस्य साङ्ख्यीयाव्यक्तस्य ग्रहीतुमनुचितत्वादित्यभिप्रायेणापि दर्श-यतीत्येतद्याचष्टे— **शरीरेन्द्रियेत्यादिना** । ननु, प्रकरणोद्घाटनं त्रयाणामिति सूत्रे भविष्यति । ततश्च दर्शयतीत्यनेनापि तदुद्घाटने पुनरुक्तता स्यादिति न तत्र महाप्रकरणोद्घाटनम् । इह तु 'ऋतं पिबन्ता'वित्यारभ्य 'निचाय्य तं मृत्युमुखात्प्रमु-च्यत'इत्यन्तमवान्तरप्रकरणं वशीकृतेन्द्रियगणेन 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादिम-न्त्रप्रतिपाद्ययोगबलात् प्राप्यं वैष्णवं परमं पदं देहादिव्यतिरिक्तप्रत्यगभिन्नस्वरूपमे-वेत्यनया भङ्ग्या परमात्मप्रतिपादकं तदुद्घाट्यत इति कुतः पौनरुक्त्यम् । मन्त्रस्या-स्फुटत्वात् । तं व्याचष्टे—**एतदुक्तमित्यादिना** । 'तद्यच्छेज्ज्ञान' इत्यादावुत्तरत्राधि-करणाधेयभावस्य स्फुटमवगमात् वाङ्मनसीत्यत्रापि तथैव विवक्षितमित्यभिप्रेत्य वा-गित्यत्र द्वितीया मनसीति च सप्तमी छान्दसप्रक्रियया स्वीकर्तव्येत्याह—**वाचं**

**मनसि नियच्छेदिति** । वाक्यग्रहणमिन्द्रियमात्रोपलक्षणम् । नियमनं च तत्तद्व्यापारनिरोध एवेत्याह—**वागादीन्द्रियव्यापारमित्यादिना** ॥ १ ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

सूत्रव्यावर्त्याशङ्कां दर्शयितुं वृत्तं कीर्तयति—**उक्तमेतदित्यादिना** । स्पष्टतरं प्रत्यक्षम् । अस्पष्टवचनः अप्रत्यक्षवाचकः । सूक्ष्मशरीरस्याव्यक्तशब्दार्हत्वात् प्रकृते स्थूलमेव शरीरं कारणात्मना सूक्ष्मं विवक्षितमित्येवं सूत्रं योजयन् परिहारमाह—**अत उत्तरमुच्यत इत्यादिना** । **तस्य त्वारम्भकं भूतसूक्ष्ममिति** । सूक्ष्मं भूतं सूक्ष्मतापन्नं भूतसूक्ष्मम् । भूतपूर्वादिवत् समासः । इदं च 'तदन्तरप्रतिपत्ता'वित्यत्र निरूपयिष्यते । अथवा भूतसूक्ष्मम् अविद्या । गोभिः श्रीणीत गोभिः पयोभिः श्रीणीत मिश्रयेत् मत्सरं सोमम् । अत्र गोपदं तत्कार्ये पयसि प्रयुक्तम् ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ ३ ॥

यद्यपि जगतः सूक्ष्मावस्थाभ्युपगमः परस्य सिद्धान्तिनश्चाविशिष्टः, तथापि परस्य सा स्वतन्त्रा । सेश्वरसाङ्ख्यस्यापि सा परमात्मनः सकाशात् परमार्थतो भेदवती । सिद्धान्ते तु परमात्मनि स्वरूपेण कल्पितेत्यस्ति विशेष इति परिहाराभिप्रायमाह—**अत्रोच्यत इत्यादिना** । **प्रागवस्था जगत इति** । जगत्प्रागवस्थाश्रयाविद्येत्यर्थः । तदधीनत्वादित्यंशं व्याख्याय अर्थवदित्यंशं व्याचष्टे—**अर्थवतीह सेति** । परमात्मनो जगदुपादानत्वकर्तृत्वे न शक्तिं विना सम्भवतः । निर्विकारस्वभावस्य हि परमात्मनः कामसङ्कल्पादिरूपो विकारो वियदादिरूपश्चौपाधिकोऽनृतो वक्तव्यः स्फटिकारुणिमादिवत् । अत उपाधिभूता तस्य मायादिशब्दप्रतिपाद्या शक्तिरेष्टव्या । नन्वसङ्गस्वभावे परमात्मनि यथा अविद्याध्यारोपः उपाध्यन्तरं विनैवास्थीयते । अविद्यारोपस्याप्युपाध्यन्तरायत्तत्वेऽनवस्थापातात् । लोकेऽपि शुक्तिरजतादिभ्रमो निरुपाधिकत्वेन प्रसिद्धः । एवं वियदादिभ्रमोऽपि निरुपाधिक एवास्तु । निर्विकारस्यापि परमार्थगत्यानृतविकारसंसर्गे विरोधाभावात् । तथा च न वियदादिकारणत्वनिर्वाहाय परमात्मन्युपाधिभूता शक्तिरेष्टव्येति चेत्, उच्यते—द्विविधभ्रमदर्शने सति वियदादिभ्रमः परमात्मनि श्रुतिप्रामाण्यादौपाधिक एष्टव्यः । 'मायी सृजते विश्वमेतत्' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।' 'य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति ।' तत्र आद्यो वर्णशब्दः परमात्मपरः । द्वितीयः कार्यपरः । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवस्सर्वभूतानां ततो भवति भारत ॥ सर्वयोनिषु कौन्तेय मूर्तयस्सम्भवन्ति याः । तासां

ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥' इत्यादिश्रुतिस्मृतिवादैरुपाधिसाचिव्येनैव परमात्मनः कारणताप्रतिपादनात् । तथा च जीवेश्वरजगद्रूपविभ्रमास्पदत्वं परमात्मनो मायाविद्याद्यपरपर्यायशक्तिनिबन्धनमास्थेयम् । ननु, यद्यविद्याधीनो जीवत्वादिविभ्रमः, तर्हि सा तत्त्वज्ञानेन निवर्तते, न वा । यदि न, तदा तत्त्वविदामपि बन्धानुवृत्तिस्स्यात् । यदि निवर्तते, भ्रमोपादानकोटिनिविष्टोपाधेरभावात् वियदादिप्रपञ्चो न स्यादित्याशङ्क्याह—**मुक्तानां च न पुनरुत्पत्तिरिति** । एवमपि द्वितीयदोषस्तदवस्थ इति चेत्, अत्र केचिदाहुः—अविद्यैकैव सावयवा । तथा च कस्यचित्तत्त्वज्ञानेन तस्य बन्धापादको यः अविद्यांशो वर्तते, स निवर्तते। अतो न तस्य पुनर्बन्धः। अविशिष्टैरंशैः प्रपञ्चानुवृत्तिरुपपद्यत इति न द्वितीयदोषावसरः ।अन्ये तु 'यो योनिं योनिमधितिष्ठत्येकः इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादिश्रुतिभिः परमात्मोपाधिभूता माया अनेकास्तत्तज्जीवबन्धापादिकाः । ततश्च तस्यतस्य तत्त्वज्ञानेन तत्तद्बन्धापादकाज्ञानमेव नश्यतीति न बन्धमुक्त्यनुपपत्तिः । नन्विदं मायाख्यं तत्त्वं किं जीवगतम्, उतेश्वरगतम् । नाद्यः । तथासति तदुपाधिकं जगत्कर्तृत्वादिकं जीवस्यैव स्यात् । न द्वितीयः । तथात्वे तत्कार्यभूतमज्ञत्वादिकमपि परमात्मनः स्यात् । ततश्च सर्वज्ञत्वादिवचनविरोध इत्यत आह—**परमेश्वराश्रयेति** । परमेश्वरपदलक्ष्यं यद्विशुद्धचैतन्यं, तदाश्रयेत्यर्थः। अयं भावः—जीवेश्वरानुयायि यद्विशुद्धं चैतन्यं, तन्मायाधिष्ठानम् । तत्र चावरणशक्तिर्विक्षेपशक्तिश्च। तत्रावरणशक्तिकार्यमज्ञत्वादिकं, विक्षेपशक्तिकार्यं क्रियारूपं जगत्सृष्टिः गत्यादिकं च । शक्तिद्वयमपि 'माययापहृतज्ञाना आसुरं भावमाश्रिताः ।' 'मायां तु प्रकृतिं विद्या'दित्यादिश्रुतिस्मृतिभिरवगम्यते । सा च विक्षेपशक्त्यंशेन परमात्मनि सर्वज्ञत्वादिरूपं वियदादिरूपं च विक्षेपमादधाति, जीवे तु संसाररूपम् । अतो विक्षेपांश उभयावच्छेदेनैव वर्तते । आवरणांशस्तु जीवत्वावच्छेदेनैव, नेश्वरत्वावच्छेदेन। अतो नेश्वरे सर्वज्ञत्वादिविरोधः। इयं च व्यवस्था ईश्वरे सर्वज्ञत्वश्रुतेरहमज्ञ इति जीवे प्रत्यक्षेणाज्ञत्वावगतेश्चोपेयते । एवंचसति 'ज्ञाज्ञौ द्वावजावीशनीशा'विति श्रुतौ व्यवस्थिततया ज्ञत्वाज्ञत्वनिर्देशोऽपि परमेश्वरजीवयोः सङ्गच्छते। तदिदमाह—**मायामयी महासुप्तिरिति**। माया वियदाद्यनृतकार्यं तद्विशिष्टा। अनेन विक्षेपांशो दर्शितः । महासुप्तिरित्यावरणांशः । तस्य विवरणं—**यस्यां स्वरूपप्रतिबोधरहिता इत्यादि** । अनेन च तदंशस्य जीवगतत्वं ध्वनितम्। तादृशशक्तिविशेषं श्रुतिसिद्धमाह—**तदेतदव्यक्तमिति** । यथा चैतयोरक्षराकाशपदयोर्जगत्कारणत्वोपाधिभूतशक्तिपरत्वं, तथा 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'अक्षरमम्बरान्तधृते'रित्यधिकरणयोर्व्यवस्थापितम् । मायापदस्य तु तत्परत्वमुत्तराधि-

करणे व्यक्तं भविष्यति । ननु, यथोक्ता दैवी शक्ति 'वेदान्तवेद्यं प्रत्यक्तत्त्वं न जानामी'तिप्रत्यक्षसिद्धा सिद्धान्तिभिरास्थीयते । कथमस्यामस्पष्टत्ववचनोऽव्यक्तशब्दो वर्तताम् । अत आह—**अव्यक्ता हि माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वादि**ति । तत्त्वमबाध्यत्वम्, अन्यत्वं लब्धस्वरूपान्यत्वम् असत्त्वमिति यावत् । तथा-चाबाध्यत्वेनासत्त्वेन च निर्वक्तुमशक्यत्वं लब्धस्वरूपत्वात् 'अथात आदेशो नेति नेती'त्यादिवचनबाधितत्वाच्च यदनिर्वचनीयत्वमविद्याया आस्थीयते, तदेव तस्या अव्यक्तत्वमिति । ननु,यद्यव्यक्तपदे अनिर्वचनीयत्वं प्रवृत्तिनिमित्तं, तर्हि शरीरेऽपि तदस्तीति किमिति पूर्वं यद्यपीदं स्थूलं शरीरं नाव्यक्तशब्दमर्हतीत्यादिना कारणाभेदोपचारेण शरीरे अव्यक्तपदप्रतिपाद्यतेत्युक्तम् । उच्यते—स्फुटप्रत्यक्षागोचरत्वम् अव्यक्तपदप्रवृत्तिनिमित्तमिति लोकप्रसिद्ध्यनुसारात्तथोक्तम् । न च तादृशं प्रवृत्तिनिमित्तमविद्यायामपि नास्तीति कथं कारणाभेदोपचारेण निर्वाहः । अविद्यायाः प्रत्यक्षत्वे सत्यपि 'प्रत्यक्तत्त्वं न जानामी' ति प्रत्यक्षस्य शङ्काविशेषकलुषितत्वेन स्फुटत्वाभावात् । एवं ह्यत्र शङ्का—'प्रत्यक्तत्त्वं न जानामी' ति प्रत्यक्षं न भावरूपमायाशक्तिविषयम् । ज्ञानाभावविषयकत्वात् । ननु, ज्ञानाभावविषयत्वे आत्माधिकरणक आत्मविषयकज्ञानप्रतियोगिकोऽयमभाव इति वक्तव्यम् । तस्य च ज्ञानमधिकरणतया प्रतियोगितावच्छेदककोटिप्रविष्टतया चात्मनो ज्ञानमपेक्षते । तथा चात्मज्ञाने सति तदभावस्यासम्भवात् कथमिदमात्मज्ञानाभावविषयकं प्रत्यक्षमिति वक्तुं शक्यमिति चेत्, यन्मतेऽपि भावरूपशक्तिविषयमेतत्प्रत्यक्षं, तेनापि सा शक्तिरात्मविषया स्वसमानविषयज्ञाननिवर्त्या चोपेया । अन्यथा प्रत्यक्तत्त्वमिति विषयोल्लेखस्य आत्मविज्ञानस्याविद्यानिवर्तकताप्रतिपादकशास्त्रस्य चानुपपत्तेः । सविषयत्वे च विषयज्ञानं विना तद्विशिष्टस्य ज्ञानं न सम्भवतीति आत्मविषयभावरूपाज्ञानावगमायात्मज्ञानमपेक्षितम् । न हि कस्य चिदपि प्रत्यक्तत्त्वज्ञानाभावदशायां 'तन्न जानामी' ति व्यवहारो दृश्यते । ततश्च सामान्यतस्तत्त्वमवगम्य विशेषविषयकं तदज्ञानमनुभूयत इति स्वीकृत्य निरूपकात् सामान्याकाराद्विषयतावच्छेदकमन्यदेव विशेषरूपं स्वीकर्तव्यम् । एवमभाववादिनापि रूपभेदमादाय स्वपक्षः समर्थयितुं शक्यत एव । यद्यपि प्रत्यग्विषयज्ञानत्वमेव प्रतियोगितायां निरूपकतया भासते, तथापि न तत् प्रतियोगितावच्छेदकम्, अपि त्वात्मविषयनिर्णयज्ञानत्वमेव । सामान्यधर्मपुरस्सरं च विशेषाभाव एवात्र भासते । अपि च प्रतियोगिभूतो निर्णयो यो मोक्षजनकः, स एव विवक्षितः । धर्मितया प्रतियोगितावच्छेदकनिविष्टत्वेन च तज्ज्ञानं न तथाभूतमिति न विरोधः ।

प्रतियोगिसामान्यस्य विशेषाभावविरोधित्वाभावात् । न च सविषयभावरूपपदार्थोल्लेखो न निरूपकविषयतावच्छेदकभेदेनापि दृष्टः । घटं जिज्ञास इत्यत्र हि जिज्ञासाविषयो न ज्ञानसामान्यम् । सर्वात्मना घटज्ञानस्यैवाभावे तज्जिज्ञासाया एवाभावात् । अतः सामान्यतो घटज्ञाने तज्जिज्ञासोपयोगिनि सति सिद्धे तस्मिन्निच्छाया असम्भवात् ज्ञानविशेष एव तद्विषयतया आस्थेयः । अतो भावरूपशक्तिविषयकत्वपक्षे न रूपभेदानुपपत्तिः । अभाववादिमते त्वनुपपत्तिरेव । विशेषाभावस्य सामान्यरूपेण क्वचिदप्यनुल्लेखात् । न हि पीतघटवति भूतले नीलघटाभावो घटो नास्तीत्यनुभूयते । अतः कथं रूपभेदेनाभावविषयत्वं समर्थयितुं शक्यमिति वाच्यम् । श्वासादिचेष्टावति पुरुषे 'निश्चेष्टोऽहमि'त्यनुभवस्य सर्वजनीनस्य सामान्यरूपेणैव विशेषाभावोल्लेखितत्वात् । तथा 'न जानामी'त्यनुभवस्याभावविषयत्वे न काचिदनुपपत्तिरित्येतादृशस्य शङ्काकलुषिततया अस्फुटस्यास्य प्रत्यक्षस्य भावरूपशक्तिविषयत्वमेतादृशन्यायानुसन्धानेन व्यवस्थापनीयम् । यद्धर्मवदाश्रयतया यदधिकरणं गृहीतं, तस्मिन्नधिकरणे तद्धर्मविशेषितप्रतियोगिताकोऽभावो नानुभूयत इति तावन्नियमेन दृष्टम् । न हि घटत्ववदाश्रयतया गृहीतेऽधिकरणे विद्यमानोऽपि घटविशेषाभावः घटो नास्तीत्येवमनुभूयते । तथा च प्रतियोगिघटितपरम्परासम्बन्धेन तद्धर्मवत्ताज्ञानं तद्धर्मनिरूपितप्रतियोगिताकाभावज्ञाने प्रतिबन्धकमास्थेयम् । श्वासादिमत्तयावगते स्वस्मिंस्तु निश्चेष्टोऽहमिति ज्ञानं श्वासादिकं चेष्टा न भवतीति भ्रमवत एव । तदपि चेष्टेति निश्चयवतस्तु तद्व्यवहारमात्रं, न त्वनुभवः । व्यवहारस्तु श्वासातिरिक्तचेष्टायां लाक्षणिकः । प्रत्यक्त्त्वं न जानामीति त्वनुभवेन तादृशक्लेशाश्रयणं न्याय्यम् । जीवत्वावच्छेदेन आवरणशक्तिमत्तया श्रुतिस्मृतिसिद्धायास्तस्या एवानुभवोपपत्तौ अभावविषयतया क्लेशसहनायोगात् । तथा च धर्मिप्रतियोगिज्ञानदशायां ज्ञानत्ववदाश्रयतया आत्मनोऽवश्यमवभासात् ज्ञानत्वनिरूपितप्रतियोगिताकाभावानुभवत्वस्य प्रत्यक्त्त्वं न जानामीत्यत्र वक्तुमशक्यतया भावरूपाविद्याशक्तिविषयत्वं तस्यास्थेयम् । तथा चाविद्यायाः प्रत्यक्षगोचरत्वेऽपि नाव्यक्तत्वानुपपत्तिः। तत्प्रत्यक्षस्य स्पष्टत्वाभावात् । एवं स्वमतेन सूत्रद्वयं योजयित्वा मतान्तरेण तद्योजयति—**अन्ये त्वित्यादिना** । द्वितीयसूत्रं तन्मते योजयति--**तदधीनत्वाच्चेत्यादिना** । पूर्वव्याख्यायामर्थवदिति सौत्रपदं मतुबन्ततया व्याख्यातम् । इदानीं तुल्यताप्रतिपादकतया वतिप्रत्ययान्तं व्याचष्टे—**यथार्थाधीनत्वादिति** । **अविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायामिति** । नन्वव्यक्तपदं यौगिकत्वाद्व्यक्तिविशेषपर्यवसानाय रूपकवाक्यमपेक्षते, न तु शरीरपदमप्यव्यक्तपदेन स्वार्थग्रहणम-

पेक्षते। अव्यक्तपदवदपर्यवसितार्थत्वाभावात्। रूपकप्रयोजनस्यापि वशीकरणविधिनैव लब्धत्वात्। यद्यपि तत्र शरीरस्य वशीकरणं नोक्तं, तथापि इन्द्रियादीनां वशीकरणविध्युपयोगितया हयत्वादिना रूपणे कर्तव्ये तत्परिपूरणाय शरीरस्यापि रथत्वेन रूपणमावश्यकम्। अतो न तस्याकाङ्क्षेति चेत्, उच्यते —यद्यपि न तस्याकाङ्क्षा स्वारसिकी, तथापि परत्ववाक्ये रूपकवाक्ये चेन्द्रियपदानां तुल्यतया प्रत्यभिज्ञानाद्रूपकविन्यस्तेभ्य एवेन्द्रियादिभ्यः परत्वं बोध्यत इति सिद्धे शरीरपदस्य परत्ववाक्ये अश्रवणात्ततः परत्वं केन बोध्यत इत्याकाङ्क्षा समुन्मिषत्येव।३॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

**गुणपुरुषान्तरज्ञानादिति**। गुणास्सत्त्वरजस्तमांसि प्रधानं, पुरुषो जीवः। तयोरन्तरं भेदः, तज्ज्ञानादित्यर्थः। **क्वचिच्च विभूतिविशेषप्राप्तय इति**। 'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।' इत्यादौ। **नेहाव्यक्तं ज्ञातव्यमुपास्यमिति**। यथा चात्र नोपासनाविध्यध्याहारः, तथा 'आध्यानाय प्रयोजनाभावादि'त्यत्र व्यक्तं भविष्यति ॥ ४ ॥

## वदतीति चेत्, न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

'अशब्दमस्पर्शमि'त्यादिमन्त्रः शब्दादिहीनत्वाल्लिङ्गात् महतः परत्वलिङ्गाच्च प्रधानपर इति शङ्कितुरभिमानः। **प्राज्ञस्य प्रकरणमिति**। नन्वत्र 'यच्छेद्वाङ्मनसी प्राज्ञ' इति प्राज्ञशब्दो जीवे प्रयुक्तः। प्रकरणिनि तु परमात्मनि पुरुषादिशब्दाः प्रयुक्ताः। तथा च प्रकरणिनि परमात्मनि पुरुषादिपदे प्रयोक्तव्ये किमिति सूत्रभाष्ययोः प्राज्ञशब्देन परमात्मा व्यवह्रियत इति, उच्यते— कठवल्लीनां हि जीवाभिन्नपरमात्मप्रतिपादनपरतां 'त्रयाणामि'त्युत्तरसूत्रे व्यवस्थापयिष्यति। अतस्तमर्थं संक्षेपेणात्र सूचयितुं जीववाचकशब्देनैव प्रकरणी परमात्मा सूत्रभाष्ययोर्व्यवह्रियत इति। ननु, कठवल्लीनां परमात्मप्रकरणत्वेऽपि यथा अग्निविद्यापि तत्र निरूप्यते, एवं प्रधानविद्यानिरूपणमपि अशब्दमित्यादिमन्त्रेण किं न स्यात्। 'येयं प्रेत' इत्यादि विशिष्य परमात्मप्रश्नानन्तरमपि 'अन्यच्छ्रेयोऽन्यदुतैव प्रेय' इत्यादिना सांसारिकफलवर्णनं क्रियते, तद्वत् प्रधानवर्णने कानुपपत्तिरिति शङ्कानिराकरणार्थं सूत्रम् ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

**वरप्रदानसामर्थ्यात् वक्तव्यतयेति**। एवमत्रोपाख्यायते—वाजश्रवसस्य ऋषेर्नचिकेता नाम पुत्र आस। स च वाजश्रवसेन यज्ञे जरद्गवीषु दक्षिणात्वेन कल्पि-

तासु नैतया दक्षिणया पितुस्सफलः क्रतुः भविष्यतीति मन्यमानः स्वात्मप्रदानेन क्रतुं स गुणं कारयिष्यामीति तात मां कस्मै दास्यसीति पुनःपुनः पितरं पप्रच्छ । निर्बन्धक्रुद्धस्तु वाजश्रवसो मृत्यवे ददामीत्युवाच । तदनन्तरं च सत्पुत्रस्य यमाय दानं कथं कृतमित्यनुशयानं वाजश्रवसमालक्ष्य क्षणमात्रावस्थायीदं शरीरं, नात्रासक्त्या प्राचीनैरपि परिपालितं सत्यं परित्यक्तुं शक्यते । अतः 'प्रेषय मां यमं प्रतीति नचिकेताः पितरमुक्त्वा तदनुज्ञया यमसदनं गत्वा तिस्रो रात्रीरुवास । तथाभूतं नचिकेतसं दृष्ट्वा यतो मम सदने तिस्रो रात्रीरनश्नन्नुषितवानसि, अतस्त्रीन् वरान् प्रार्थयेति तं प्रति त्रयो वरा यमेन दत्ताः । तत्र नचिकेता यतो यमो मामतिथिं मत्वा वरान् प्रददौ, अतो मम जीवनं सिद्धमेव । परं तु तावता मया पुनः पितृसमीपं गमने यमसदनादागतं मां पुत्र इति न प्रत्यभिज्ञास्यति, तत्प्रत्यभिज्ञानवान्वा-मदाज्ञामुल्लङ्घ्य पुनर्गृहं प्रत्यागतवानिति कुपितस्स्यात्, तदुभयं माभूदिति प्रथमेन वरेण पितुः प्रत्यभिज्ञापूर्वकं प्रीतिरस्त्विति प्रार्थितवान् । यमेनापि तथेत्युक्ते-द्वितीयवरोऽग्निविद्याविषयः प्रश्नः—स त्वमिति । सर्ववित्त्वेन प्रसिद्धः स्वर्ग्यम् अ-र्चिरादिप्राप्यं स्थानमिह स्वर्गपदार्थः । 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके'। इति पूर्ववाक्ये 'स्वर्गलोका अमृतत्वं भजन्त' एतद्द्वितीयेन वृणे वरेणे'त्युत्तरवाक्ये चेन्द्रादिस्थानभूतस्वर्गासम्भविधर्मकीर्तनात् तादृशस्वर्गाय हितं स्वर्ग्यम् अध्येषि स्मरसि । तृतीयवरान्तर्गतौ च द्वौ प्रश्नौ—'येयं प्रेते विचिकित्से-ति अन्यत्र धर्मादिति च । लोकादिमग्निम् अग्नेर्लोकादित्वं विराडात्मदृष्ट्यभिप्रायम् । तस्मिन्नग्नौ यथा यत्संस्थाना यावतीः यत्सङ्ख्याकाः याश्शास्त्रसिद्धाः इष्टका विद्यन्ते, तास्सर्वा उक्तवान् । 'हन्त त इदं प्रवक्ष्यामी'ति जीवविषयप्रतिवचनप्र-तिज्ञा । 'योनिमन्ये प्रपद्यन्त' इत्यादिना तन्निरूपणम् । तच्च 'देवैरत्रापि विचि-कित्सितं पुरे'त्यादिना 'इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितावि'त्यन्तेन महता परमात्मपरप्रबन्धेन व्यवहितम् । अत्र च जीवविषयप्रतिज्ञायां गुह्यं ब्रह्म सनातनमिति परब्रह्माभेदाभिप्रायम् । मरणानन्तरमात्मास्ति , उत नास्तीति विचिकित्सितम् । तत्रोत्तरं—मरणं प्राप्यात्मा भवति अस्तीति यावत् । यथाचैतत्तथा वक्ष्यामि । योनिं मनुष्यसम्बन्धिनीम् अन्ये तदुपयोगिपुण्यादिशालिनः शरीरत्वाय शरीरवत्त्वाय देहि-नो जीवाः स्थाणुं स्थाणुत्वं कर्म पुण्यपापरूपं श्रुतं विद्या विहिता प्रतिषिद्धा च तदनुसारेण । नैवं प्रधानविषयः प्रश्नः अस्तीति । अयं भावः—अग्निनिरूपणवत् प्रधाननिरूपणं किं न स्यादिति शङ्कितुमशक्यम् । 'येयं प्रेत'इत्यतः प्राक्

प्रश्नानुसारेण अग्नेरप्यस्ति प्रकरणम् । प्रधानस्य तु न तथा प्रश्न इति। सूत्रकारवचनविरोधपरिहाराय 'अन्यत्र धर्मा'दिति प्रश्नः 'येयं प्रेत' इति प्रश्नादन्य एव स्वीकर्तव्यः । तथा च मदिष्टसिद्धिरिति मन्वानो विकल्पयति प्रधानवादी— **अत्राहेत्यादिना**। सूत्रविरोधमुत्तरत्र परिहरिष्यामीत्यभिप्रेत्योपक्रमगतवरत्रित्वपर्यालोचनया अन्यत्र धर्मादित्यादि नापूर्वः प्रश्नः इत्याह—**अत्रोच्यत इति** । **वाक्यं बाध्येतेति** । तथासति चतुर्थवरत्वापत्त्या 'प्रतित्रीन्वरान्वृणीष्वे'ति वाक्यं बाध्येतेति भावः । अपि च 'एतत्त्रयाणां प्रथमं वरं वृणे एतद्द्वितीयेन वृणे वरेण वराणामेष वरस्तृतीय' इति वरत्रित्वमेव यथोपक्रममुपसंहृतम् । तद्बाधश्च न न्याय्यः । पूर्वं सूत्रविरोधपरिहाराय अन्यत्र धर्मादित्यादिरन्यप्रश्न इति शङ्कितम् । इदानीं श्रुतिस्वारस्यानुसारेणान्यत्वं शङ्कते—**नन्वित्यादिना** । ननूपक्रमगतवरत्रित्वानुरोधेन 'येयं प्रेत' इत्यस्यैवानुकर्षणम् अन्यत्र धर्मादिति कल्प्यते। न च जीवविषयस्य तस्य कथं परमात्मविषयकेणोत्तरेणैकार्थ्यं कल्प्यत इति वाच्यम् । येयं प्रेत इत्यस्य मनुष्ये प्रेते मृते सति अयं मनुष्योऽस्ति उत नास्तीति यथाश्रुतोऽर्थः प्रकृते विवक्षितुं न शक्यते । मरणानन्तरं सविशेषमुक्तिपर्यन्तमनुयायिनो देहातिरिक्तस्यात्मनो निर्णीततया नाचिकेतसस्तावन्मात्रस्य प्रष्टव्यत्वानुपपत्तेः। अतः प्रेते मनुष्य इत्यस्यायमर्थः— प्रकर्षेण इते शरीरादत्यन्तं निर्गते आत्मसाक्षात्कारविध्वस्तसर्वबन्धे निर्विशेषचैतन्यमात्रतयावस्थिते । तथा च मुक्तजीवस्य परमात्मरूपत्वात्तद्विषयकेण येयं प्रेत इत्यनेन 'अन्यत्र धर्मा'दित्यादेरैकार्थ्ये न काचिदनुपपत्तिरिति चेत्, अत्रोच्यते—यद्यपि जरद्गवीनां दाने क्रतुसाद्गुण्यं न भविष्यति । अतः मां कस्मै दास्यसीति पितरं प्रति पृष्टत्वान्नचिकेतसा तस्य कर्मश्रद्धावगम्यते । स्वर्गे लोके न भयं किञ्चनेत्यग्निविद्याफलस्य चानुकीर्तनं तत्कृतमस्ति। न चेदं देहातिरिक्तात्मज्ञानं विना सङ्गच्छते । तथापि 'येयं प्रेत' इत्यस्य न यथाश्रुतार्थता परित्यक्तुं शक्यते । नचिकेतो मरणं मानुप्राक्षीः साम्पराये महति ब्रूहि नस्तत् । यथा च मरणं प्राप्यात्मा भवतीत्युत्तरसन्दर्भे एकरूपेण कीर्तितस्य यथाश्रुतार्थस्य त्यागायोगात् देहातिरिक्तात्मनिश्चयवतोऽपि नचिकेतसस्तद्दार्ढ्याय पुनः प्रश्नोपपत्तेश्च। अतो देहातिरिक्तजीवमात्रविषयस्यास्य प्रश्नस्य कथमन्यत्र धर्मादित्यनेनैकार्थ्यमुपपादयितुं शक्यम् । यमेन वरत्रयदानस्य प्रतिज्ञातत्वेऽपि यथा नचिकेतसा अप्रार्थितावेव द्वौ वरौ तस्मै पुनः दत्तौ, एवं यमेन देयतया अप्रतिज्ञातस्य चतुर्थवरस्य नचिकेतसा प्रार्थनं सम्भवत्येव । पूर्वत्र हि यमेन यथोक्तामग्निविद्यां यदा नचिकेता उज्जग्राह, तदा तस्मै यमो नानावर्णां स्रजं दत्तवान्, मदुक्तस्याग्नेस्तवैव नाम्ना प्रसिद्धिर्भविष्यतीति चोक्तवानिति प्रतिपादितं

'स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः । तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ॥ तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाणे'ति वाक्यैः ।अतः 'अन्यत्र धर्मा'दित्यादेश्चतुर्थवरत्वेऽपि न काचिदनुपपत्तिः । **जीवप्राज्ञयोरेकत्वाभ्युपगमादिति** । पूर्वत्र हि वरद्वयं नचिकेतसा अप्रार्थितमपि यमेन दत्तमिति वरं तवेहाद्य ददामि भूय इति यमवचनादवगम्यते । भूयः-पदस्य वृतादधिकमित्यर्थकत्वात् । अन्यत्र धर्मादित्यत्र त्वधिकं याच इत्यस्य द्योतकं किमपि नास्ति । अतो नायमन्यः प्रश्न इति भावः । देहातिरिक्तात्मगोचरप्रश्नश्च त्वंपदार्थशोधनद्वारा परमात्माभेदपर्यवसाय्येवेत्यभिप्रेत्य संग्रहवाक्यं विवृणोति—**भवेत्प्रष्टव्यभेदादिति** । **स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्येति** । नन्वयं जीवः स्वप्नजागरिते येन पश्यति, तस्य परमात्मनो महत्त्वादिकमवगम्यते, न तु स्वप्नदृश एव । तथाहिसति 'उभौ योऽनुपश्यती'ति भाव्यमिति चेत्, येनेति तृतीया प्रथमार्थ एव प्रकृते विवक्षिता । अथवा येन विशुद्धसाक्षिणा विशिष्टो जीवः स्वप्नादिकं पश्यतीति विवक्षितम् । तथाकल्पनं च 'पराञ्चि खानि व्यतृणत्स्वयंभूः तस्मात् पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि'ति मन्त्रे 'य इमं मध्वदं वेदात्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सत' इत्युत्तरमन्त्रे च प्रत्यगभिन्नात्मविज्ञानस्यैव मोक्षहेतुत्वावगमेनास्यापि तदैकार्थ्यस्यैव न्याय्यत्वादुपेयते । **यत्प्रश्ननिमित्तां च प्रशंसां महतीमिति** । ननु, जीवविषयप्रश्नस्य प्रशंसा पुनरपि प्रश्नान्तरं करोत्वित्यभिप्रायवतो मृत्योर्नचिकेतस्युत्साहवर्धनार्था भविष्यति । अतो न प्रशंसाविरोध इति चेत, उच्यते—पूर्वसन्दर्भपर्यालोचनया हि'येयं प्रेत' इति यत् पृष्टं, तदतिरिक्तं मुमुक्षूणां प्रष्टव्यं नास्तीति मृत्योरभिप्रायोऽवगम्यते। तथा हि—नचिकेतसा 'येयं प्रेत' इति देहातिरिक्ते आत्मनि पृष्टे मृत्युर्वितर्कयामास—देहातिरिक्तात्मज्ञानवानयं नचिकेताः किं तावन्मात्रमेव पुनर्दार्ढ्यार्थं कर्मसु प्रवृत्त्युपयोगितया पृच्छति, आहोस्वित् देहातिरिक्तस्यैव जीवस्य यद्विशुद्धं परमात्मस्वरूपं, तावत्पर्यन्तं देहातिरिक्तत्वोपक्षेपेण क्रमेण पृच्छामीति मन्यते, तत्राद्ये पक्षे उत्तरं सुखेनैव दातुं शक्यम् । द्वितीयपक्षे तु तद्ग्रहणाधिकारोऽस्य विचारणीय इत्यभिप्रायेण तत्पृष्टस्यात्यन्तगहनतोपक्षिप्ता—'देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मामोपरोत्सीरतिमासृजैनमि'ति । तथा यमवचनं श्रुत्वा नचिकेता उवाच—'देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न ल-

भ्यो नान्यो वरस्तुल्य एतस्य कश्चिदि' ति । ततो यमः नचिकेतसः सूक्ष्मार्थग्रहणे धैर्यमुपलभ्य अथापि कामी सन् कर्माधिकारोपयुक्तमेव किं पृच्छतीति संशयनिवृत्त्यर्थं पुनरलौकिकैरद्भुतैः कामैः प्रलोभयामास । नचिकेतास्तु तेषु सर्वेष्वनासक्त एवाभवत् । ततो मृत्युः नचिकेतास्सर्वतो विरक्तः 'अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधस्स्थः प्रजानन् । अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत' । कुः भूमिः, सैवाधोभागः । तत्र विद्यमानः मर्त्यः। वर्णाः स्त्र्यादयः, तेषु रतिरासक्तिः तत्कृताः प्रमोदाः सुखविशेषाः,ताननित्यत्वादिदोषयुक्ततया अभिध्यायन्नमृतानां मुक्तानां युष्मादृशानां सकाशमुपेत्यातिदीर्घे जीविते को रमेतेति वदन् मुमुक्षुर्भवतीति निश्चित्याविद्याख्यकर्मसाध्यमभ्युदयाख्यं मन्दमतिः प्रार्थयमानः पुनःपुनस्संसरति, विद्यसाध्यनिश्श्रेयसार्थी तु न पुनस्संसारं प्राप्नोति । त्वां तु विद्याभीप्सिनं मन्ये । यतो बहवः कामास्त्वां न लोलुपन्त न मोक्षमार्गच्छेदनं कृतवन्त इति ब्रह्मविद्यार्थितया तं प्रशंसयामास । अतो मृत्युना कृतेयं प्रशंसा न प्रश्नान्तरोत्थापनार्था, अपि त्वयमेव प्रश्नस्सर्वातिशायिनाऽतोऽन्यत् प्रष्टव्यमस्तीत्यभिप्रायैव । अपि च नचिकेतसोऽपि न प्रश्नान्तरे तात्पर्यमिति 'नान्यो वरस्तुल्य एतस्य कश्चित् । वरस्तु मे वरणीयस्स एव । नान्यं तस्मान्नचिकेता वृणीत' इति येऽयं प्रेत इति प्रश्नाधिकारगतैस्तद्वचनैरेवावगम्यते । ततश्च येयं प्रेत इत्यस्यैवानुकर्षणम् अन्यत्र धर्मादित्यादि । पृष्टस्यैव पुनःप्रश्नस्तु संक्षेपेणोक्तस्य विस्तरेण प्रतिपादनार्थः । येयं प्रेत इति देहातिरिक्तोपक्षेपेण परमात्मपर्यन्तजीवस्वरूपं नचिकेतसा पृष्टमिति निर्धार्य देहातिरिक्तात्मज्ञानरहितानां देहात्मभ्रमवतां परलोको नास्तीति निन्दाव्याजेन 'अविद्यायामन्तरे वर्तमाना' इत्यादिना 'अयं लोको नास्ति पर इतिमानी पुनःपुनर्वशमापद्यते मे' इत्यन्तेन देहातिरेकमात्मनस्संक्षेपेण प्रतिपाद्य देहविविक्त आत्मा परमात्माभिन्न इति 'तं दुर्दर्शमि'ति वाक्येन सूचयामास । अत्र तमिति पदं 'येयं प्रेत इति प्रश्नविषयपरामर्शकम् । तदधिकारपठितत्वात्। दुर्दर्शत्वे हेतुर्गूढमिति । तदुपपादयति—अनुप्रविष्टमिति । कुत्रेत्यपेक्षायां गुहाहितं, गुहात्र पञ्चकोशरूपा । अध्यात्माधिकारात् गुहायास्सुगमत्वे दुर्दर्शत्वं कथमित्यत आह – गह्वरेष्ठं कण्टकवृक्षस्थानीया अनेके ये देहाभिमानादयः परमात्मावगतिप्रतिबन्धकाः, तत्सङ्कीर्णायां गुहायां विद्यमानमेवंविधं प्रत्यञ्चम्, अध्यात्मयोगः 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादिना वक्ष्यमाणः, तस्याधिगमः प्राप्तिः, तेन देवं परमात्मानं मत्वा साक्षात्कृत्य हर्षशोकोपलक्षितं संसारं जहातीति ।

अत्र तमितिपदपरामृष्टे जीवे संसारनिवृत्तिप्रयोजकज्ञानविषयत्वाध्यात्मयोगाधिगमजन्यमतिविषयत्वलिङ्गाभ्यां देवश्रुत्या च परमात्माभेदो बोध्यते । तथा च 'अन्यत्र धर्मादन्यत्राधर्मादि' त्यतः प्राक्तनेन सन्दर्भेण जीवस्यैव परमात्माभेदेन संक्षिप्ततया प्रतिपादितस्य विशेषेण प्रतिपित्सया अन्यत्र धर्मादित्यादिप्रश्न इति श्लिष्यते । 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तदि'ति वाक्येनाध्रुवैः कर्मभिः ध्रुवं नित्यं परमात्मस्वरूपं न प्राप्यत इति संक्षेपावसरोक्त धर्मादिफलविलक्षणत्वं कालास्पृष्टत्वं चान्यत्र धर्मादित्यत्र नचिकेतसानूदितं वक्तुरुत्साहवर्धनार्थं जीवप्रश्नस्य परमात्मपर्यन्तं नयनं च तयोरभेदं सूचयति—यदेवेह देहे जीवस्वरूपं, तदेवामुत्रादित्यादिषु विद्यमानं परमात्मरूपं, नानात्वदर्शिनस्तु मरणं प्राप्य पुनर्मरणमित्येवंरूपस्संसार इति च प्रतिपादयन् यदेवेहेत्यादिर्मन्त्रो जीवपरयोर्भेदं न सहते । अतः कठवल्लीनां प्रत्यगभिन्नब्रह्मप्रकरणत्वे श्रुतिलिङ्गादिपर्यालोचनया स्थिते यत् 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि'त्यादौ चेतनानां बहुत्वप्रतिपादनं, ततश्च जीवपरमात्मनोर्भेदप्रतिपादनं, तत् व्यवहारदृष्ट्यौपाधिकमपवादशेषतया व्याख्येयम् । 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति । मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यती'ति बहुशो भेददृष्ट्यपवादात् । ततश्च प्रत्यगभिन्नब्रह्मप्रकरणे संसारगत्यादिनिरूपणस्य निन्दाद्वारा ब्रह्मज्ञानप्रशंसार्थत्वात् उपयोगसम्भवेऽपि न तत्त्वज्ञानविरोधिनः प्रधाननिरूपणस्य सङ्गतिरिति तात्पर्यार्थः । येयं प्रेत इत्यस्यान्यत्र धर्मादिति प्रश्नस्य च विषयैक्येनैकत्वे त्रयाणामिति सूत्रविरोधः शङ्कितः, तं परिहरति—सूत्रं त्विति ॥ ६ ॥

## महद्वच्च ॥ ७ ॥

सत्तामात्रे भावप्रत्ययार्थो न विवक्षितः सन्मात्रे महत्तत्त्वे । ननु, साङ्ख्येन बुद्धेरात्मा महान् पर इत्यत्र महच्छब्दो महत्तत्त्वपर एवेत्युच्यते । ततश्च तत्र महत्तत्त्वप्रतिपादनाभावं सिद्धवत्कृत्य तद्दृष्टान्तेनाव्यक्तपदं न साङ्ख्यीयप्रकृतिपरमिति कथं वक्तुं शक्यमिति चेत्, उच्यते—अनेन सूत्रेण दृष्टान्तव्याजेन बुद्धेरात्मा महान् पर इति वाक्यं न साङ्ख्यीयं महत्तत्त्वपरमित्येव विवक्षितम् । अपूर्वतया बोधनीयोऽप्यर्थः दृष्टान्ततया निबध्यमानः समुच्चयोपमास्थले 'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि समरोत्थानि तच्छोणितनदीष्विव' ॥ इत्यादौ दृश्यते ॥७॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

## चमसवदविशेषात् ॥८॥
## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥

'अजामेकामि'त्यादिमन्त्रः श्वेताश्वतरगतः किं साङ्ख्यतन्त्रसिद्धं प्रधानं प्रतिपादयति, उत छान्दोग्ये प्रतिपादितानि तेजोऽबन्नानि प्रतिपादयतीति संशयः। तत्र पूर्वस्मिन्नधिकरणे महतः परमित्यत्राव्यक्तपदेन साङ्ख्यतन्त्रसिद्धं प्रधानं न ग्राह्यम्, अपि तु तस्यामेव शाखायां सन्निहितं शरीरमेव ग्राह्यम्। सन्निहितस्य वैदिकस्य ग्रहणसम्भवे विप्रकृष्टस्य तान्त्रिकस्य प्रधानस्य ग्रहणं न न्याय्यमित्युक्तम्। इह तु सन्निहितमजापदग्रहणयोग्यं किमपि नोपलभ्यते। नन्विहापि 'देवात्मशक्तिं स्वगुणैर्निगूढामेको वर्णो बहुधा शक्तियोगादि'त्यादिपूर्वमन्त्रे 'अस्मान्मायी सृजते विश्वमेतत्। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'त्याद्युत्तरमन्त्रे च दैवी शक्तिः प्रस्तुतास्ति। तथा च सन्निहितमजापदग्रहणयोग्यं सिद्धान्ताभिमतमस्त्येवेति चेत्, सत्यम्। कृत्वाचिन्तैषा न्यायव्युत्पादनार्था। ननु, तथापि शाखान्तराम्नातानां वैदिकत्वेन प्रत्यासन्नानां तेजोऽबन्नानां ग्रहणसम्भवे नावैदिकस्य प्रधानस्य ग्रहणं न्याय्यमिति चेत्, न। तत्राजापदरूढेर्वा तद्योगस्य वा असम्भवेन तेषामपि ग्रहीतुमनुचितत्वात्। अतोऽजापदेन साङ्ख्यतन्त्रसिद्धप्रधानमेव ग्राह्यमिति पूर्वपक्षिणोऽभिप्रायः। अमुं मन्त्रं साङ्ख्यतन्त्रसिद्धप्रधानपरतया योजयन् पूर्वपक्षमाह—**अत्र हि मन्त्र इत्यादि। लोहितं रजो रञ्जनात्मकत्वादित्यादि।** अरुणिमदर्शने चित्तस्यासक्तिरूपः कोऽपि विकारविशेषो जायते। स रजोगुणकार्यं, तज्जनकत्वमुभयोस्साधारणो गुणः। **प्रकाशात्मकत्वादिति।** धवलवस्तुदर्शने चित्तस्य प्रसन्नतारूपः प्रकाशाख्यः कोऽपि विकारविशेषः। स सत्त्वकार्यं, तज्जनकत्वमुभयोस्साधारणो गुणः। एवमावरणात्मकत्वादित्यत्रापि द्रष्टव्यम्। ननु, तथासति लोहितादिपदानां पूर्वपक्षिमते गौणत्वं स्यात्, सिद्धान्ते तु मुख्यत्वमेवेति भूयोऽनुग्रहन्यायेन अजापदमेकं तेजोऽबन्नेष्वेव यथाकथञ्चिद्व्याख्येयमिति चेत्, न। लोहितादिपदानां गुणमात्रवाचकत्वेन तेजआदिधर्मिषु लाक्षणिकत्वाविशेषात्। अपि च बह्वीः प्रजास्सृजमानामिति कृत्प्रत्ययोक्तं स्वातन्त्र्य'मजो ह्येको जुषमाणः जहात्येनां भुक्तभोगामजोऽन्य' इति जीवनानात्वं विद्यमानाया एव प्रकृतेस्त्यागश्च जीवैकत्वं प्रकृते ब्रह्मपरतन्त्रतां ब्रह्मज्ञानबाध्यतां च वदतस्सिद्धान्तिनो मते न समञ्जसम्। मूलप्रकृतिरविकृतिरित्यभ्युपगमा-

दिति । मूलप्रकृतिः प्रधानम् अविकृतिः अकार्यमिति साङ्ख्यानामभ्युपगमः । तटस्थश्शङ्कते—**नन्विति** । **छागायां रूढ इति** । यद्यपि 'जातेरस्त्रीविषयाद्योपधादि'ति सूत्रेण छाग्यामिति भाव्यं, तथाप्यजादेराकृतिगणत्वमुपेत्य तथोक्तम् । भुक्तभोगामित्येतदनुपपन्नम् । भोगस्य सुखदुःखानुभवलक्षणस्य भोग्यत्वासम्भवात् । न च तथापि भुक्तपदं प्राप्तेत्यर्थकमस्तु । तथा च प्राप्तभोगामित्यर्थकथने न काचिदनुपपत्तिरिति वाच्यम् । भोगस्य पुरुषावसायितया प्रधाने तत्प्राप्त्यसम्भवादित्याशङ्क्य भुक्तपदं कृतेत्यर्थकतया व्याकुर्वन् भोगपदमप्यपवर्गोपलक्षकतया व्याचष्टे—**कृतभोगापवर्गामिति** । अत्रापवर्गपदमपवृज्यते अनेनेति अपवर्गं प्रधानपुरुषविवेकज्ञानमिति करणसाधनो द्रष्टव्यः । प्रकृतिविविक्ततयावस्थितस्य पुरुषस्यापवर्गपदार्थस्य नित्यतया प्रकृतिकृतत्वानुपपत्तेः अविवेकध्वंसोऽपवर्गपदार्थोऽस्तु । तथा च भावसाधनत्वेऽपि न काचिदनुपपत्तिः । प्रधानं हि यदा बुद्धिद्वारा सुखदुःखात्मना परिणतं भवति, तदा पुरुषः तत्प्रकाशतामापन्नो भोग इत्युच्यते । अतः प्रधानकृतत्वं भोगस्य । एवं बुद्धौ विवेकात्मतया परिणतायामविवेकः प्रतिबद्धो भवतीत्यपवर्गः करणसाधनत्वपक्षे भावसाधनत्वपक्षे च प्रधानकृतः । अत्र च भोगपदस्यापवर्गोपलक्षकत्वम् । उभयहेतुभूतप्रधानस्यान्यतरहेतुत्वोक्तिर्निस्तात्पर्या स्यादिति तन्निवृत्तये—**नानेन मन्त्रेणेति** । अयं भावः—अजापदस्य रूढ्यर्थग्रहणं न सम्भवतीत्युभयोरपि सम्मतम् । ततश्च रूढ्यर्थात् प्रच्युतस्य न यौगिकत्वं कल्पनीयम् । रूढिपूर्वलक्षणाया योगमपेक्ष्यापि बलवत्त्वाल्लक्षणया कस्य ग्रहणमिति विशेषनिर्धारणाय यत्नान्तरमास्थेयं, न त्वेतन्मन्त्रमात्रपर्यालोचनया झटिति साङ्ख्यप्रकृतिरिति निर्धारयितुं शक्यम् । यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपं, तस्यास्त ऋषयस्सप्ततीरे वागष्टमी ब्रह्मणा संविदाने'तिमन्त्रगतचमसादिपदेषु प्रकरणाद्यनुसारेण मुख्यार्थात् प्रच्युतेषु वाक्यान्तरं विना तन्मन्त्रमात्रपर्यालोचनया निर्धारणं न सम्भवति, तद्वत् । सौत्रमविशेषादिति पदं विशेषावधारणकारणाभावपरतया व्याचष्टे—**विशेषावधारणेति** । 'ज्योतिरुपक्रमा तु तथा ह्यधीयत एक' इत्युत्तरसूत्रमवतारयति—**तत्र त्विदं तच्छिर इत्यादि** । 'अर्वाग्बिलश्चमसः ऊर्ध्वबुध्नः चमसः शिरः, तत्र निहितं विश्वरूपं यशः प्राणाः, तस्य तीरे विद्यमानास्सप्त ऋषयः कर्णौ चक्षुषी नासिके रसना चेति 'इदं वै तच्छिर' इत्यादिना ब्राह्मणेनैव व्याख्यातम् । प्रकृते तु तन्निर्धारणं सन्निहितवाक्याभावेऽपि शाखान्तरानुसारेण तदास्थेयमित्याह —**अत्र ब्रूम इति** । सौत्रं ज्योतिःपदं तृतीयभूतपरतया व्याचष्टे—**तेजोऽबन्नलक्षणे-**

ति । 'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥' इत्यादौ तृतीयभूतेऽपि ज्योतिःपदप्रयोगात् । एक इति सौत्रं पदं छन्दोगाभिप्रायेण व्याचष्टे—**तथा ह्येके शाखिन इति** । अयं भावः—श्रुत्यर्थानिर्धारणे प्रसक्ते श्रुत्यन्तरानुसारेणैव निर्धारणमुचितम् । सजातीयत्वात्, न तु वैदिकत्वेन विप्रतिपन्नया साङ्ख्यस्मृत्या । विशिष्येह लोहितशुक्लकृष्णामिति पदैरपि तत्सजातीयपदवत् 'यदग्ने रोहितं रूप'मित्यादिवाक्यं प्रत्यभिज्ञायते । सत्त्वादिगुणेषु च लोहितादिपदानामत्यन्तजघन्यवृत्तिराश्रयणीया । द्रव्येषु तु तेजआदिषु निरूढलक्षणा वा शक्तिरेव वा । एतैस्त्रिभिर्हेतुभिः छान्दोग्यवाक्यानुसारेणैव प्रकृतमन्त्रार्थनिर्णयो युक्त इति । एवं सन्निहितं निर्धारणोपयुक्तं वाक्यं नास्तीत्यभ्युपेत्य शाखान्तरानुसारेण निर्णयो दर्शितः । इदानीं कृत्वाचिन्तारूपतामुद्घाटयति—**तथेहापीति** । श्वेताश्वतरे हि उपक्रमोऽयं 'किं कारणं ब्रह्म कुतस्स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥' इति । अस्यायमर्थः—'यतो वा इमानि भूतानि जायन्ते'इत्यादावाम्नातं कारणं ब्रह्म किमिति संग्रहेण प्रथमं प्रश्नः, तस्यैव विवरणं कुतस्स्म जाता इत्यादि, लयकाले क्व च सम्प्रतिष्ठाः सम्यक्प्रतिष्ठाः । सुखेतरेषु सुखानीतराणि दुःखानि । तत्राक्षेपस्यायमभिप्रायः—परमात्मनस्तावत् निर्विशेषत्वात् तस्य कारणता वक्तुं न शक्यते, नापि जीवादयः जगत्कारणीभूतब्रह्मत्वेनास्थातुं शक्याः । तेषामपि सृज्यत्वादिप्रतिपादनात् । अतोऽस्मिन्नाक्षेपे हे ब्रह्मविदः व्यवस्थां वदतेति, ते ब्रह्मविदः ध्यानमेव योगः अर्थनिर्धारणप्रयोजकत्वात् । तमनुगताः प्राप्ताः अर्थनिर्धारणाय परमात्मानं ध्यातवन्त इति यावत् । ध्यात्वा च सत्यज्ञानादिलक्षणः परमात्मैव जगत्कारणमिति निश्चित्य परमार्थतो निर्विशेषस्यैव तस्यौपाधिकं जगत्कारणत्वमिति परिहारं कृताक्षेपस्य निर्धारितवन्तः । तदाह—**अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति** । देवस्य सत्यादिस्वरूपस्य परमात्मनः आत्मभूता तदैक्याध्यासमापन्ना शक्तिः कारणत्वनिर्वाहोपयुक्तसामर्थ्यविशेषरूपा स्वगुणैस्सत्त्वादिभिर्निगूढा युक्ता तामपश्यन् । यो योनिंयोनिमिति वीप्सा अविद्यानानात्ववादिनां सुगमैव । परं तु मायां तु प्रकृतिमित्यादौ एकवचनं जात्यभिप्रायं तेषां मते । तदेकत्ववादिनां तु एकवचनं यथाश्रुतम् । योनिंयोनिमिति वीप्या अवयवसाकल्याभिप्राया । कृत्वाचिन्तापक्ष एवाक्षिपति—**कथं पुनरिति** । अजाकृतिरजात्वजातिः । जातिश्रवणात् जन्मश्रवणात् अजातिनिमित्तः अनुत्पत्तिनिमित्तः । ततश्च रूढियोगयोरसम्भवात् कथं तेजोऽबन्नेष्वजापदप्रवृत्तिः । न च लक्षणा । असाधारणसम्बन्धाभावादिति ॥८॥९॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

अजारूपकक्लृप्तिरिति । अजैव स्वात्मना अन्यं रूपयतीति रूपकं; तस्याः क्लृप्तिराहार्यारोपः । ननु, रूपकस्थले आलम्बनप्रतिपादकं पदान्तरमपेक्षितम् । यथा 'आत्मानं रथिनं विद्धी' त्यादावात्मादिपदं, नेह तथा तेजोऽबन्नानामालम्बनीभूतानां प्रतिपादकं किञ्चित्पदमस्ति । आरोप्यालम्बनयोस्सादृश्यं चापेक्षितम् । प्रकृते तु तन्नास्ति । अपि चास्मिन् पक्षे 'जहात्येनां भुक्तभोगामजोऽन्य' इति वाक्येन मुक्ते अजत्वमारोपणीयम् । इदमप्यनुपपन्नम् । परमात्मनैकीभूतस्य निकृष्टप्राणित्वेन रूपणस्यानुचितत्वात् । किं चैतादृशः क्लिष्टया गत्या रूपणमपि व्यर्थम् । प्रयोजनाभावादिति चेत्, उच्यते—अत्यन्तसादृश्य एव रूपणमिति नियमो नास्ति । द्वा सुपर्णेत्यव्यवधानाम्नाते उत्तरमन्त्रे 'यत्किञ्चित्सादृश्येनापि पक्षित्वादिरूपणदर्शनात् । तादृशं यत्किञ्चित्सादृश्यमिहापि 'यथाहि लोक' इत्यादिना भाष्ये प्रतिपादितमेव । रूपकातिशयोक्तौ आलम्बनीभूतपदस्य पृथक्प्रयोगो नापेक्षित एव । यथा 'द्वा सुपर्णेति' मन्त्र एव । प्रयोजनं च सुखप्रतिपत्तिः द्वा सुपर्णेतिमन्त्रवदेवात्रापि । यथा च तत्र विशुद्धसाक्षिणः पक्षित्वेन रूपणम्, एवमत्रापि मुक्तस्य छागत्वेन रूपणं नासङ्गतम् । अवश्यं चास्य कल्पनोपदेशपरत्वमास्थेयम् । अन्यथा अजामिति क्वचित् स्त्रीलिङ्गनिर्देशः, अन्यत्राजो ह्येक इति अजोऽन्य इति च पुंलिङ्गनिर्देशो निस्तात्पर्य एव स्यात्, द्वा सुपर्णेतिकल्पनोपदेशसमभिव्याहारश्चानुपपन्नस्स्यात् । जीवनानात्वेन साङ्ख्यवादप्रत्यभिज्ञामाशङ्क्य निराकरोति—न चेदमाशङ्कितव्यमिति । इत्यादिश्रुतिभ्य इत्यादिपदेन तत्प्रकरणगतस्य 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुख' इत्यादेस्सङ्ग्रहः । बह्वीः प्रजास्सृजमानामिति स्वातन्त्र्यनिर्देशोऽपि न साङ्ख्यवादैकपक्षपाती । ईश्वराधिष्ठिताया अपि प्रकृतेर्यन्त्रधिष्ठितरथस्य रथो गच्छतीति स्वातन्त्र्यनिर्देशवत् सृजमानामिति स्वातन्त्र्यनिर्देशोपपत्तेः । तत्तत्प्रयोजकप्रयोज्यानामपि कारकाणां स्वव्यापारे स्वतन्त्रत्वात् । जहातीति तु प्रकृतिबाध एव त्यागत्वेनोपचरितो भवति । तत्कृतसुखदुःखाद्यभावप्रयोजकत्वसाम्यात् 'मत्वा धीरो हर्षशोकौ जहाती'तिवत् । 'मध्वादिवदविरोध' इति सौत्रमंशं व्याचष्टे—मध्वादिवादिति ॥ १० ॥

इति चमसाधिकरणम् ॥ २ ॥

———

# न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥
# प्राणादयो वाक्यशेषात् ॥१२॥

पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्या श्रूयत इति। ननु, स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः।' इति कोशवचनपर्यालोचनया पञ्चजनपदस्य मनुजेषु रूढत्वाद्यस्मिन् पञ्च मनुष्या इत्येवार्थोऽवगम्यते। अतः कथं पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्या श्रूयत इत्युक्तम्। जनशब्दात् प्राचीनस्य पञ्चशब्दस्याश्वकर्णपदगताश्वपदस्येव पृथगर्थाभावात् इति चेत्, उच्यते—तथासति वाक्यं निस्तात्पर्यं स्यात्। न हि सर्वाधारस्य ब्रह्मणः पञ्चमनुजाधारत्वकीर्तनेन किञ्चित् प्रयोजनं लभ्यते। अत इह पञ्चजनपदस्य रूढ्यर्थपरित्यागे सति यदि रूढिपूर्वकलक्षणामाश्रित्य माध्यन्दिनशाखायामुत्तरमन्त्रे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नास्यान्नं मनसो ये मनो विदुरि'त्यत्राम्नाताः प्राणादयो मनोऽन्ताः पञ्च गृह्येरन्। काण्वशाखायां तु अन्नस्यानाम्नानात् 'तद्देवा ज्योतिषां ज्योतिरि'ति पूर्वमन्त्रगतं ज्योतिः पञ्चानां पूरणं गृह्येत, तदापि निस्तात्पर्यकत्वम् अविशिष्टमेव। एकस्यैव मन्त्रस्य शाखाभेदेन भिन्नार्थत्वाङ्गीकारः परमधिको दोषः। अतो रूढिपूर्वकलक्षणाश्रयणमप्यनुचितम्। तथा च रूढितत्पूर्वकलक्षणाभ्यां प्रच्युतस्य पञ्चजनपदस्य यौगिकत्वे सति पञ्चजनपदं यदि वा समासः, यदि वा असमासः, पक्षद्वयेऽपि सर्वप्रपञ्चसङ्ग्रहायैवं वाच्यम्। पञ्चपदेन द्वितीयेन पञ्चसङ्ख्याविशिष्टाःसङ्ख्येया अवगम्यन्ते। अत्र प्रथमश्रुतपञ्चपदोक्ता सङ्ख्या विशेषणभूतायां पञ्चत्वसङ्ख्यायां वान्वेति। तदिदमुक्तं—**पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्येति**। विशेष्येषु सङ्ख्येयेषु वान्वेति। तदिदमुक्तं—**एते पञ्च पञ्चका इति**। पक्षद्वयेऽपि पञ्चविंशतिसङ्ख्याया लाभः। आद्यपक्षे पञ्चत्वसङ्ख्यायाः पञ्चत्वेन गुणने पञ्चविंशतित्वं, द्वितीयपक्षे पञ्चसु सङ्ख्येयेषु प्रत्येकं पञ्चत्वसम्बन्धे पञ्चविंशतित्वम्। तथा च पञ्चविंशतिसङ्ख्यायामवगतायां विशिष्य तत्सङ्ख्येयेष्वपेक्षितेषु नानुमानिकाधिकरणोक्तरीत्या सन्निहिताम्नातैराकाङ्क्षापरिपूरणम्। तत्राव्यक्तपदग्रहणयोग्यस्य शरीरस्येवेह पञ्चविंशतिसङ्ख्यावच्छेदयोग्यानां सङ्ख्येयानां सन्निधावभावात्। नापि चमसाधिकरणोक्तरीत्या शाखान्तरतस्तथालाभः। तत्र 'लोहितशुक्लकृष्णामि'ति पदैः प्रत्यभिज्ञापितानां 'यदग्ने रोहितं रूपं तेजसस्तद्रूप'मित्यादिवाक्यप्रतिपाद्यानां शाखान्तरगतानां तेजोऽबन्नानामिवेह प्रत्यभिज्ञया ग्रहणयोग्यानां शाखान्तरगतानामनुपलम्भात् साङ्ख्यस्मृतिप्रतिपाद्यानां तत्त्वानामेवेह ग्रहणं न्याय्यम्। तेषां पञ्चविंशति-

त्वप्रसिद्धेरिति मन्यते पूर्वपक्षी । **मूलप्रकृतिरविकृतिरिति** । मूलप्रकृतिः प्रधानं सा चाकार्यं, महदाद्यास्सप्त महदहङ्कारौ पञ्च तन्मात्राणीति सप्त महदादयः, ते प्रकृतयो भवन्ति, महत्तत्त्वमहङ्कारस्य प्रकृतिः, अहङ्कारः सात्त्विकांशमादाय इन्द्रियाणां प्रकृतिः, तामसांशमादाय तन्मात्रपदप्रतिपाद्यानां सूक्ष्मभूतानां प्रकृतिः, आहङ्कारिको रजोंऽशस्तु तदीययोस्सत्त्वतमसोः प्रवृत्तिहेतुः महत्तत्त्वं प्रकृतेर्विकृतिरिति सप्त प्रकृतिविकृतयः । षोडशकश्च विकार एव, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च स्थूलभूतानि, मनश्चेत्याहत्य षोडश । एते न कस्यापि प्रकृतयः । यद्यपि पृथिव्यादिस्थूलभूतानि घटादीनां प्रकृतयो भवन्ति, तथापि यथा प्रकृत्यादीनि अष्टौ स्वातिरिक्ततत्त्वान्तरस्य प्रकृतयो भवन्ति, नैवमेते स्थूलाः पृथिव्यादयः स्वातिरिक्ततत्त्वप्रकृतयः । घटादीनां पृथिव्याद्यपेक्षया तत्त्वान्तरत्वेन परिगणनाभावात् । एते चतुर्विंशतिः । पुरुषस्तु न प्रकृतिः न कारणं, नापि कस्य चित् कार्यम् । तेन सह पञ्चविंशतिः । ननु, साङ्ख्यतत्त्वानां 'यस्मिन् पञ्च पञ्चजना' इत्यंशेन ग्रहणे आकाशात्मनोरपि तदन्तर्गततया अधिगततया पृथगाकाशस्य, आत्मनश्च पृथगाधारतया ग्रहणमनुपपन्नं स्यादिति चेत्, न । यथा ब्राह्मणा आगताः वसिष्ठोऽप्यागत इत्यादि समभिव्याहारे ब्राह्मणपदगृहीतस्यैव वसिष्ठस्य पुनर्ग्रहणं तस्य प्राशस्त्यद्योतनाय, तद्वत् सकलावकाशप्रदतया सर्वशेषितया च प्राधान्यद्योतनायाकाशात्मनोः पुनर्ग्रहणमुपपन्नम् । तत्सिद्धं साङ्ख्यवादस्य वेदमूलत्वम् । **नैषां पञ्चशःपञ्चश इति** । नन्वत्र साङ्ख्येनावान्तरपञ्चसङ्ख्यानिवेशपूर्वकं पुनः पञ्चसङ्ख्यानिवेशेन पञ्चविंशतित्वे प्रतिपादिते आन्तरालिकपञ्चसङ्ख्यायाः पञ्चसु पञ्चसु निवेशार्थं तेष्ववच्छेदकं किञ्चिदपेक्षितं, तन्न सम्भवतीति दूषणमापद्यते, तन्न । पञ्चसु पञ्चकेषु प्रत्येकं बाह्यज्ञानेन्द्रियत्वकर्मेन्द्रियत्वतन्मात्रत्वस्थूलभूतत्वैतदतिरिक्तत्वानां पञ्चानामवच्छेदकानां सम्भवादिति चेत्, उच्यते — नायं मन्त्रः साङ्ख्यतत्त्वानुसार्येवेति निर्णयः कर्तुं शक्यते । यदि हि तन्त्रोक्ता एव पदार्था इह ग्राह्या इति निर्बन्धः, तदा सप्तविंशतितत्त्ववादिनां पक्ष एवेह ग्राह्यः किं न स्यात् । तेषां साङ्ख्यवदेव पञ्चविंशतितत्त्वानि, ततोऽप्यधिकं तत्त्वद्वयं चिच्छक्तिरिशवश्चेति । ततश्चाकाशपदेन चिच्छक्तेर्ग्रहणम्, आत्मपदेन सर्वाधारस्य परमात्मनो ग्रहणमिति तेषां मते पूर्वं गृहीतयोरेवाकाशात्मनोर्ग्रहणं क्लेशेन न व्याख्येयमिति गुण एव भवति । एतद्दोषपरिहाराय यदि साङ्ख्यः इत्थं वदेत्—एकादशेन्द्रियाणि पञ्च तन्मात्राणि चत्वार्याकाशव्यतिरिक्तानि स्थूलभूतानि महदहङ्कारौ त्रिगुणां प्रकृतिं त्रेधा भित्त्वा एकया त्रयसम्पादनम् आहत्य

पञ्चविंशतिरात्माकाशौ विहाय । ततश्च पञ्चविंशताविव सप्तविंशतिसङ्ख्याया: अवान्तरविभागेन कल्पनं, ततो गृहीतयोरात्माकाशयोर्ग्रहणमिति दोषो न प्रसज्यते। नापि वादान्तरस्यावकाशः । तस्मिन्नपि पक्षे अयमेव तान्त्रिकवादो ग्राह्यः, नायमित्यत्र नियामकं नास्तीति दूषणमस्त्येव । दूषणान्तरमिदमुच्यते—**नानाभावादिति**। तथा च ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, तन्मात्राणि पञ्चेति पञ्चकत्रिके अवच्छेदकलाभेऽपि चत्वारि स्थूलभूतानि मनसा सह पञ्च महदहङ्कारौ त्रयो गुणा इति तुरीयपञ्चमपञ्चकयोरेवंकल्पने अवच्छेदकमेकं न लभ्यते । अवच्छेदकं विनैवावान्तरसङ्ख्यानिवेशं दृष्टान्तेन शङ्कते—**अथोच्येतेति** । एवं पञ्चजना इति पदान्तर्गते पञ्चेतिपदे अर्थवत्त्वमुपेत्य दूषणमुक्तम् । वस्तुतस्तु पञ्चजना इति पदं समासस्वरूपम् । स च समासस्संज्ञायामेवेति वक्ष्यत इत्यभिप्रेत्याह—**परश्चात्रेति** । समासपक्षे नियामकमाह—**भाषिकस्वरेणेति** । भाषायां भवो भाषिकः । यथा प्रवचनशब्दो मन्त्रभागे वैदिकानां प्रसिद्धः, एवं भाषाशब्दो ब्राह्मणभागे । तथा च शतपथब्राह्मणस्वरप्रतिपादकेन व्याकरणविशेषेण विहितं स्वरं पर्यालोच्य पञ्चजनशब्दस्समास इति निर्णीयते । तथाहि—'यस्मिन् पञ्च पञ्चजना' इति मन्त्रः मन्त्रकाण्डे ब्राह्मणे च पठ्यते। तत्र ब्राह्मणे पञ्चजनशब्देऽन्तिमोऽकारः अनुदात्तः, इतरे उदात्ताः । मन्त्रे तु अन्तिम उदात्तः, इतरे अनुदात्ताः । इयं व्यवस्था समासं विना नोपपद्यते । समासे सति 'समासस्ये'ति सूत्रेणान्तोदात्तत्वे सति 'अनुदात्तं पदमेकवर्ज'मिति सूत्रेण यस्य पदस्य कस्मिंश्चिदचि उदात्तस्स्वरितो वा विशेषेण विधीयते, तमेकमचं विहाय इतरे अनुदात्ता भवन्तीति प्रतिपादयता अन्येषामचामनुदात्तत्वं मन्त्रकाण्डपठितान्तर्गते पञ्चजनशब्दे सिध्यति । ततश्च शतपथब्राह्मणस्वरनियमार्थं प्रवृत्ते व्याकरणे पठितेन 'स्वरितोऽनुदात्तो वे'ति सूत्रेण मन्त्रकाण्डे यस्स्वरितोऽनुदात्तो वा, स ब्राह्मणे उदात्तो भवतीति प्रतिपादयता नकारात् प्राग्भाविनां पञ्चजनपदान्तर्गतानामचामुदात्तत्वम् 'उदात्तमनुदात्तमनन्त्यमि'ति सूत्रेण उत्तरेणाचा संलग्नतयोच्चार्यमाणमनन्त्यमुदात्तं मन्त्रदशायां यत्, तत् ब्राह्मणे अनुदात्तं भवतीत्यर्थकेन नकारोपरितनस्याचः अनुदात्तत्वं सिध्यति । न चैवमपि मन्त्रकाण्डे नकारोपरितनाकारस्य ब्राह्मणपाठनिमित्तानुदात्तस्वरस्थानीयतयोदात्तत्वमपेक्षितं, तत्तु, समासं विनैव सिध्यति । जनशब्दस्य पचाद्यजन्ततया 'चित' इति सूत्रेणान्तोदात्तत्वसम्भवात् । अतः कथं समासापेक्षेति वाच्यम् । 'चित' इति सूत्रापवादभूतेन 'वृषादीनां चे'ति सूत्रेण वृषादिगणपठितस्य जनशब्दस्याद्युदात्तत्वे सति 'अनुदात्तं पदमेकवर्ज'मिति सूत्रेण नकारोपरितनस्याकारस्यानुदात्तत्वे सति मन्त्रे

अन्तोदात्तत्वाभावात् । अपि चासमासपक्षे पञ्चेतिशब्दस्य मन्त्रे सर्वानुदात्तत्वालाभेन ब्राह्मणे सर्वत उदात्तत्वं न स्यात् । समासे तु 'वृषादीनां च'त्यस्यापवादभूतेन 'समासस्ये'तिसूत्रेण पञ्चजनशब्दस्यान्तोदात्तत्वे सति पूर्वोक्तगत्या सर्वव्यवस्था लभ्यते । तस्मात् पञ्चजनशब्दस्समास इति तावदुपेयमिति । ननु 'जना यदग्निमयजन्त पञ्चे'त्यादौ पञ्चजनशब्दावसमस्तावपि दृश्येते इत्याशङ्क्यात्र स्वरविशेषेण समासनिर्णयात् तदैकरूप्ये नातीव निर्बन्ध आस्थेय इति मनसि निधाय श्रुत्यन्तरे पञ्चजनशब्दौ समस्तावुपलभ्येते इति तत्सारूप्यमेव प्रकृते समासोपपत्तय आस्थेयमित्याह—**प्रयोगान्तरे चेति** । ऐकस्वर्यम् एकपदत्वप्रयुक्तस्वरत्वम् । **न वीप्सेति**। यथा 'दशदशैकैकं चमसमुपसर्पन्ती'त्यत्र दशशब्दे वीप्सोपेयते, नैवमिह । अत एव न पञ्चकद्वयग्रहणमपि । अपि च पञ्चकद्वयग्रहणपक्षेऽपि दशानामेव लाभस्स्यात्, न पञ्चविंशतेः । एवं वीप्सापक्षेऽपि न पञ्चविंशतेर्लाभस्स्यात् । वीप्सा हि जनशब्दोपात्तानां प्रत्येकं साकल्येन पञ्चत्वबोधनार्थेति वक्तव्यम् । ततश्च यथोपसर्पणीयानां चमसानां दशत्वेन निर्णीततया 'दशदशैकैकं चमसमुपसर्पन्ती'ति वाक्येन प्रतिचमसं दशानामुपसर्पकाणां विधानात्तेषां शतत्वं दशपेये क्रतुविशेषे सिध्यति । तथा च वाक्यशेषः—'शतं ब्राह्मणाः सोमं भक्षयन्ती'ति, एवमत्रापि पञ्चविंशतिता सिध्येत् । यदि वीप्सितपञ्चपदार्थान्वायिनां जनानां प्राक् पञ्चधा विभागस्सिद्धो भवेत् केन चित् निबन्धनेन । न तु तदस्तीत्यपि दूषणं द्रष्टव्यम् । एवं समासे सति पञ्चपदस्य द्वितीयस्यार्थ एव नास्तीति प्रतिपादितम् । इदानीं तदर्थवत्तामुपेत्यापि पूर्वपक्षिकल्पनां निराकरोति—**उपसर्जनस्य विशेषणेनान्वयायोगादिति** । घटो नित्य इत्यादिप्रयोगो हि लोकेऽसाधुः । तत् कस्य हेतोः । पदात् स्वातन्त्र्येणोपस्थित एव पदार्थे पदार्थान्तरस्यान्वय इति व्युत्पत्तेः । अन्यथा हि नित्यत्वस्य घटपदाद्विशेषणतयोपस्थिते घटत्वेऽन्वयसम्भवेन वाक्यस्यासाधुता न स्यात् । तथा पञ्चपदादस्वतन्त्रतयोपस्थितायां पञ्चत्वसङ्ख्यायां न पदान्तरोपस्थितायाः पञ्चत्वसङ्ख्याया अन्वय इति । नन्वेतद्दोषपरिहारार्थं सङ्ख्येयेष्वेवान्वयोऽस्तु । न च सङ्ख्येयानां पञ्चेतिपदोपात्तानां समासपक्षे जनान् प्रति विशेषणत्वेन पञ्चेति पदात् स्वतन्त्रतयोपस्थितत्वेऽपि न पदान्तरोपात्तपञ्चसङ्ख्याया विशेष्यता सम्भवति । समासान्तर्गतस्य विशेषणस्य पदान्तरोपात्तविशेषणान्वयासहिष्णुत्वात् । अत एव ऋद्धस्य राजपुरुष इति प्रयोगोऽसाधुरिति वाच्यम । तथापि जनपदोपात्तेषु सङ्ख्येयेषु पञ्चसङ्ख्यायाः पदान्तरोपात्तायाः अन्वये नायं दोष इत्यभिप्रेत्य शङ्कते—**नन्वापन्नपञ्चसङ्ख्याका जना**

ति । **आदित एव भेदोपादानादिति** । भेदयतीति भेदः विशेषणं, तदुपादानादित्यर्थः । अयं भावः—प्रथमपञ्चपदोपात्तायाः सङ्ख्यायाः जनान् प्रत्यन्वयः किं स्वारसिक्यामेव कतीत्याकाङ्क्षायां कल्प्यते, उत रक्तः पटो भवतीत्यत्र रक्तपदवैयर्थ्यपरिहरणाय घटपदस्य यथाकाङ्क्षामुत्थाप्य तदन्वय उपेयते, तद्वत् प्रकृतेऽपि वैयर्थ्यपरिहाराय कतीत्याकाङ्क्षामुत्थाप्य । नाद्यः । द्वितीयपञ्चपदेनैव तदाकाङ्क्षायाः परिपूरणात् । न च पञ्चपूलीत्यत्र पञ्चानां पूलानां समाहारस्समुदायः पञ्चपूलीत्युपात्तयोर्द्वयोस्समुदायसमुदायिनोस्सङ्ख्येययोः समस्तया पञ्चसङ्ख्यया आकाङ्क्षानिवृत्तावपि समुदायिनां समुदायानां समासप्रतिपादितानां कतीत्याकङ्क्षाया अनुपशान्तत्वादसमस्तः पञ्चशब्दः तदाकाङ्क्षां पूरयति, तद्वत् पञ्चजनाः इत्यत्रापि पञ्चानां जनानां समाहार इति समाहारसमासमुपेत्यासमस्तस्य पञ्चेतिपदस्याकाङ्क्षापरिपूरकत्वं कल्प्यतामिति वाच्यम् । तथासति 'अकारान्तो द्विगुस्स्त्रियामि'ति वचनेन पञ्चजनीत्येव स्यात्, न तु पञ्चजना इति । अतो नात्र स्वारसिकाकाङ्क्षा । नापि रक्तपटन्यायः । यत्र हि सजातीयं विरुद्धं वा विशेषणान्तरं श्रूयते, तत्र तदनवतारात् । न हि रक्तो रक्तः पट इति भवति प्रयोगस्साधुः, नापि मृण्मयो हिरण्मयो घट इति । ननु, न साक्षात् पञ्चेति पदोपात्तायां सङ्ख्यायामपरस्याः पञ्चसङ्ख्याया अन्वय उपेयते, येन घटो नित्य इति वाक्यतुल्यता स्यात् । नापि सङ्ख्येयेष्वेवान्वयपर्यवसानमुपेयते । येन रक्तो रक्तः घट इति वाक्यतुल्यता स्यात् । अपि तु प्रथमं विशेष्येषु जनेष्वन्वितायाः वैयर्थ्यपरिहारायाद्या सङ्ख्या केवलं जनेष्वन्वेति । प्रथमपञ्चपदोपात्ता त्वनन्तरमन्वयं प्रतिपद्यमाना पञ्चत्वविशिष्टेष्वन्विता विशेषणीभूते पञ्चत्वेऽवतरति । अतो न कोऽपि दोष इत्याशङ्क्याह—**भवदपीति** । **तत्र चोक्तो दोष इति** । उक्तप्राय इत्यर्थः । एतादृशक्लेशाश्रयेण पञ्चविंशतिसङ्ख्यालाभमुपेत्य प्रधानं त्रेधा भित्त्वा स्वमतरक्षणं साङ्ख्यस्य न युक्तिक्षममिति भावः । यदि प्रधानं त्रेधा न प्रविभज्येत, तदा दोषमाह—**अतिरेकाच्चेति** । न च पञ्चविंशतावन्तर्भूतस्यैव पुनर्ग्रहणं प्राशस्त्यद्योतनार्थमिति युक्तम् । अपि च पञ्चविंशतावन्तर्गतस्यैवात्मनः पुनरधिकरणत्वेन निर्देशे स्वात्मानं प्रति स्वस्याधिकरणत्वं प्राप्नोतीत्यपरो विरोधः । न च स्वमहिमप्रतिष्ठितत्वनिर्देशवत् तदुपपद्यत इति वाच्यम् । तथासति 'यस्मिन् पञ्च पञ्चजना' इति वाक्येनात्मांशे गौणोऽधिकरणाधेयभावः प्रतिपादनीयः, तद्व्यतिरिक्तेषु तु मुख्यया वृत्त्येति वैरूप्यं स्यात् । ननु, 'पञ्चभिर्धाता विदधाविदं यस्तासां स्वसृजनयत् पञ्चपञ्चे'ति वाक्ये पञ्चपदद्वयनिर्देशेन पञ्चविंशतिसङ्ख्यालाभ एषि-

तव्यः । तथा च सजातीयविशेषणश्रवणस्थलेऽपि यत्र वर्धनेन महासङ्ख्या लभ्यते, तत्र रक्तपटन्यायोऽवतरतीत्युपेयम् । तथा च प्रकृतेऽपि पञ्चविंशतिसङ्ख्यालाभार्थं रक्तपटन्याय आश्रीयत इत्यत आह—**कथं चेति** । **सङ्ख्यामात्रश्रवणे सतीति** । पञ्चपदद्वयश्रवणे सतीत्यर्थः । न ह्यत्राहत्य पञ्चविंशतित्वं श्रुतम्, अपि तु यत्किञ्चित्सङ्ख्यावाचकं पदद्वयम् । तावता कथं पञ्चविंशतित्वलाभः । दशत्वग्रहणेऽपि पञ्चपदद्वयोपपत्तेः । 'तासां स्वसृरि'ति वाक्ये तु त्रिंशत्स्वसार इति वाक्यशेषपर्यालोचनया पञ्चभिर्वीतेति पञ्चानां गृहीतत्वात्त्रिंशत्त्वसम्पादनाय पञ्चविंशतेरपेक्षितत्वात् तासां स्वसृरजनयत् पञ्चपञ्चेत्यस्य यथाकथञ्चित् पञ्चविंशतौ पर्यवसानमास्थीयते । नेह तथा पञ्चविंशतिग्रहणप्रयोजको वाक्यशेषोऽस्तीति भावः । अस्तु वा यथाकथञ्चित् पञ्चविंशतिलाभः । तत्र सङ्ख्येयानि साङ्ख्यप्रसिद्धानि तत्त्वान्येवेत्यत्र किं नियामकम् । न तावत जनपदस्य तत्त्वेषु रूढिः । असिद्धेरित्याह—**जनशब्दस्येति** । न च प्रकारान्तरेण सङ्ख्येयापर्यवसानमित्याह—**अर्थान्तरोपसंग्रहेऽपीति** । साङ्ख्यीयतत्त्वापेक्षया अन्य एवार्थास्तत्सङ्ख्यापरिच्छेद्या लभ्यन्ते शाखान्तरप्रसिद्धाः । तथा हि—'इन्द्रियेभ्यः परा ह्यर्था' इति वाक्ये पुरुषादपराः पञ्चविंशतिपदार्था निर्दिष्टाः । इन्द्रियाणि दश, स्थूलसूक्ष्माश्चार्था दश, मनोबुद्ध्यात्मानस्त्रयः, अव्यक्तपदगृहीतं स्थूलं सूक्ष्मं चेति शरीरद्वयम्, आहत्य पञ्चविंशतिः । 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' तिश्रुतिप्रतिपन्नोऽव्याकृताकाश आकाशपदार्थः । आत्मा तु परमेश्वरः । अतो नात्र कथञ्चिदपि साङ्ख्यस्यावकाशः । एवं पञ्चजनशब्दान्तर्गतस्य पञ्चपदस्य पृथगर्थवत्त्वमुपेत्यापि नास्ति साङ्ख्यस्यावकाश इत्युक्तम् । इदानीं पञ्चजनपदस्य समासरूपस्य संज्ञाशब्दत्वं व्युत्पादयितुं पृच्छति—**कथं तर्हि पञ्च पञ्चजना इति** । पञ्चजनशब्दस्समास इति प्राक् निरूपितमेव । स च समासो दिग्वाचिनश्शब्दास्सङ्ख्यावाचिनश्च शब्दास्समानाधिकरणेन संज्ञायामेव समस्यन्त इति प्रतिपादकेन 'दिक्सङ्ख्ये संज्ञायामि' ति सूत्रेण संज्ञायामेव नियमितः । दक्षिणाग्निस्सप्तर्षय इति यथा, अतः पञ्चजनपदमपि संज्ञैवेत्याह—**उच्यत इति** । तस्याश्च संज्ञाया विषयोऽपि 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा' इति निघण्टुवचनेन नियमितः । परं तु तस्यात्र ग्रहणे निस्तात्पर्यकता वाक्यस्य स्यादित्यभिप्रेत्य पृच्छति—**के पुनस्ते पञ्चजना नामेति** । 'प्राणादयो वाक्यशेषादि' ति सूत्रेणोत्तरमाह—**तदुच्यत इति** । **वाक्यशेषगता इति** । न च यस्मिन् पञ्च पञ्चजना इत्यन्यो मन्त्रः, प्राणस्य प्राणमित्यन्यः । उभयोरेक-

वाक्यत्वाभावात् । कथमाद्यस्य मन्त्रस्योत्तरो वाक्यशेष इति वक्तुं शक्यमिति वाच्यम् । विवरणसङ्ग्रहयोरेकवाक्यत्वोपपत्तेः । उत्तरमन्त्रे हि प्राणादीनामपि प्राणादिरूपं ब्रह्मेत्युक्तं, तत् कथमित्यपेक्षायां ब्रह्मणि प्राणादेः कल्पितत्वेन तेषां ब्रह्मणि प्रतिष्ठितत्वात् प्राणादिसत्ताप्रदं ब्रह्म 'प्राणस्य प्राण' मित्यादि व्यपदिश्यत इति पूर्वमन्त्रेण प्रतिपाद्यते । निर्विशेषब्रह्मणोऽधिष्ठानत्वोपाधिराकाशपदेन समर्थ्यते । अत एव निस्तात्पर्यकतापि न । अपेक्षितार्थसमर्पकत्वात् । प्राणादिषु पञ्चजनशब्दस्य रूढेरभावात् कथं तेन तेषां ग्रहणमिति शङ्कते—**कथं पुनरिति । जनशब्देति** । पञ्चजनशब्देत्यर्थः । लक्षणया प्राणादिग्रहणं समर्थयितुं प्रतिबन्दीमाह—**तत्त्वेषु वेति** । शक्यसम्बन्धं स्वपक्षे दर्शयति—**जनसम्बन्धाच्चेति** । पञ्चजनसम्बन्धादिति यावत् । एवं पञ्चजनशब्दस्य मनुजेषु रूढस्य प्राणादिषु लक्षणया प्रयोग इति व्यवस्थापितम् । इदानीं पञ्चजनशब्दस्य प्राणादिषु रूढिरेवेति पक्षान्तरं प्रौढ्या वक्तुं शङ्कते—**कथं पुनरसति प्रथमप्रयोग इति । रूढिश्शक्येति** । प्राणादिष्विति शेषः । **शक्योद्भिदादिवदित्याहेति** । सङ्ग्रहवाक्यं विवृणोति—**प्रसिद्धार्थसन्निधाने हीति** । 'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भित्पदस्य योगपर्यालोचनयोत्कृष्टभेदनकर्तेत्यर्थः प्रतीयते । स च क इति विशिष्य न ज्ञायते । तत्र यदि तृतीयायजिपदाभ्यां यागसाधनत्वे अवगते यागसाधनत्वान्वायिखनित्रादिकं प्रकृत्यर्थो वर्ण्येत, तदा 'सोमेन यजेते'त्यादिवन्मत्वर्थलक्षणा प्रसज्येत, विशिष्टविधिगौरवं च स्यात्, तन्माभूदिति यागस्य यत्फलजनकत्वमस्ति, तदेवोद्भेदनत्वेन उपचर्य यागनामता आस्थीयते । एवं चोद्भिदेति तृतीया यागगतकरणत्वानुवादिनी भविष्यतीति प्रसिद्धयजिपदसमभिव्याहारादुद्भित्पदं यागसंज्ञा । तथा चोद्भिन्नामकेन यागेनेष्टं भावयेदिति वाक्यार्थः । एवं 'यूपं छिनत्ती'त्यादावपि 'खादिरो यूपो भवती'त्यादिप्रसिद्धार्थखादिरादिपदसमभिव्याहारात् खदिरवृक्षविकारभूतः काष्ठविशेषो यूपपदार्थ इति निर्णयः । एवं 'वेदिं करोती'त्यत्रापि वेदिशब्दः 'चतुरङ्गुलं खनति पुरीषवतीं करोती'त्यादितत्प्रकरणगतवाक्यपर्यालोचनया खननपुरीषादिसम्पादितस्थण्डिलप्रतिपादक इति निर्धार्यते । प्राणादिषु पञ्चजनपदस्य शक्तिरिति पक्षो नातीव समीचीनः । मनुजेषु शक्तस्य पञ्चजनपदस्य लक्षणया तत्र प्रयोगसम्भवे शक्त्यन्तरकल्पनाया अन्याय्यत्वात् प्राणादिष्वेकरूपशक्यतावच्छेदकाभावाच्च । अतः प्राणादयः पञ्चजनशब्देन लक्षणया प्रतिपाद्यन्ते । तेषां च यद्यपि पुरुषभेदेन पंचभ्योऽधिकत्वमस्ति, तथापि वाक्यशेषोपात्तप्राणत्वाद्युपाधिभिः पंचत्वं द्रष्टव्यम् । **केश्चित्त्विति** । अस्मिन् पक्षे न वाक्यशेषानुकूल्यम् । नापि पंचजनपदस्य मुख्यार्थ-

त्वलाभ इत्यस्वारस्यं द्रष्टव्यम् । **अन्यैरिति** । अस्मिन् पक्षे पंचजनपदस्य मुख्यार्थत्वं लभ्यते । ननु, तेषां पंचभ्योऽधिकत्वात् कथं तत्र प्रथमश्रुतः पंचशब्दः। न हि तत्र प्राणादिग्रहणपक्ष इव वाक्यशेषेण पंचावच्छेदकानि उपात्तानीति चेत्, मा भूवन्। पंचजनशब्देन शक्त्या मनुष्येषूपस्थापितेषु तत्र पंचत्वोपपादनाय स्वबुद्ध्यैव कल्पनोपपत्तेः । इयमेव गतिः मन्त्रान्तरेष्वप्यनुसरणीया । तथाहि अथर्ववेदे तृतीयकाण्डे पंचमानुवाके समाम्नायते मन्त्रः—'यं त्वा होतारं मनसाभिसंविदुस्त्रयोदश भौवनाः पंच मानवाः वर्चोधसे यशसे सूनृतावते तेभ्योऽग्निभ्यो हुतमस्त्वेतदि' ति । अस्यार्थो वेदभाष्ये दर्शितः—हे अग्ने त्वा त्वां होतारं देवानाम् आह्वातारं मनसा अभिसंविदुः सम्यक् जानन्ति के त्रयोदश भौवनाः 'विश्वकर्मा भौवनस्स्वात्मनि सर्वाणि भूतानि जुहवाञ्चकारे'त्यादि श्रुत्यन्तरप्रसिद्धा विश्वकर्मप्रभृतयः भुवनस्य ऋषेः पुत्रास्त्रयोदशसङ्ख्याकाः पंच मानवाः निषादपंचमाः चत्वारो वर्णा गन्धर्वा देवाः पितरो रक्षांसि असुरा इत्येके यं त्वामभिसंविदुः तस्मै वर्चोधसे तेजो धारयते यशसे यशस्विने सूनृतावते प्रियहितवचनयुक्ताय तेभ्यः प्रागुक्तेभ्यः भवद्विभूतिभ्योऽग्निभ्यश्च हुतमेतद्धविरस्त्विति 'यमाय हार्म्यमवपन् पंच मानवाः वैवस्वतो न तृप्यति पंचभिर्मानवै'रित्यादौ वेदान्तरगतेऽपि मन्त्रभागे पंचमा निषादपंचमाश्चत्वारो वर्णा इति व्याख्यातारः।एतेषु सर्वेष्वपि मनुष्येषु रूढस्य मानवशब्दस्य श्रवणात्तेषां पंचत्वं बुद्धिकल्पितैः पंचभिरुपाधिभिः स्वीकृतम्, इहापि तथैवास्तु । एवं चात्रत्यपंचजनपदस्य मन्त्रान्तरगतमानवपदैकार्थ्यमपि लभ्यते । नन्वस्मिन्पक्षे पंचजनपदस्य मुख्यता लभ्यते । परं तु पंचत्वसङ्ख्या स्वबुद्धिकल्पितोपाधिना नीयमाना न स्वरसा स्यात् । प्राणादिग्रहणपक्षे तु वाक्यशेषतः पंचानामुपाधीनां सिद्धत्वात् पंचशब्दस्स्वरसेन व्याख्यातो भवति । प्रथमचरमश्रुतयोश्चान्यतरस्वारस्यहाने प्रसक्ते चरमश्रुतस्वारस्यमेव हातव्यम् । न चेह प्रथमश्रुतस्यापि पंचेतिशब्दस्य पंचजनार्थं प्रति विशेषणीभूतसङ्ख्यासमर्पकतया पंचजनपदानुसारेणैव नयनमुचितमिति वाच्यम् । यतः 'चतुरो मुष्टीन्निर्वपती'त्यत्र विशेषणसमर्पकस्यापि चतुरितिपदस्य प्रथमश्रुततया 'प्राजापत्यस्सप्तदश शरावो नैवारश्चतुर्भवती'ति विकृतिविशेषेऽतिदेशतः प्राप्तस्य चतुर्मुष्टिपरिमितनिर्वापस्य करणे सप्तदशशरावपरिमाणस्य चरोस्सम्पादयितुमशक्यतया सङ्ख्यामुष्ट्योरन्यतरबाधे प्रसक्ते चतुस्सङ्ख्यानुग्रहमङ्गीकृत्य मुष्टिबाध एवाश्रितः । एवं प्रकृतेऽपि पंचसङ्ख्यानुग्रह एवास्त्विति चेत्, उच्यते—'चतुरो मुष्टीन् निर्वपती'त्यत्र हि चतुःपदोपात्ता सङ्-

ख्या कारकविभक्तिसमभिव्याहारेण करणतयावगता न मुष्टिविशेषणम्, अपि तु निर्वापविशेषणम् । तथा च तत्र प्रथमश्रुतचतुःपदार्थसङ्ख्यानुसारेण मुष्टिबाधेऽपि नेह विशेषणीभूतया पञ्चत्वसङ्ख्यया पञ्चजनश्रुतेः प्राणादिषु लक्षणाङ्गीकर्तुमुचितेत्यन्येषामाशयः । चतुर्णां वर्णानां पञ्चमत्वेन निषादस्य तु ग्रहणमग्निसम्बन्धित्वसाम्यात् । तथा चान्यो मन्त्रवर्णः 'जना यदग्निमयजन्त पञ्चे'ति जनानामग्निसम्बन्धित्वेनैव पंचत्वं दर्शयति । अत्रेदमनभिमतबीजं सूत्रकृतः—वाक्यशेषपर्यालोचनया मन्त्रार्थनिर्णये सति न प्रकरणान्तरगतमन्त्रानुसार एषितव्यः । अपि च मन्त्रान्तरानुसारेण मानवपदैकार्थ्यायेह निषादपञ्चमानां चतुर्णां वर्णानां ग्रहणे वाक्यं निस्तात्पर्यं स्यात् । सर्वाधारस्य ब्रह्मणः यत्किचिन्मानवाश्रयत्वप्रतिपादने कस्यचिदतिशयस्यालाभात् पञ्चजनपदेन वाक्यशेषगतप्राणादिग्रहणे अपेक्षितार्थसमर्पकतेति प्रागेवोक्तम् । न चैवमपि सर्वसत्ताप्रदस्य ब्रह्मणः 'प्राणस्य प्राण'मित्याद्युत्तरमन्त्रेण प्राणादिकतिचित्सत्ताप्रदत्ववर्णनं निरतात्पर्यकमिति दोषः । 'आम्नातस्यार्थं वक्तुं प्रभवामो. नाम्नातं पर्यनुयोक्तु'मिति न्यायेन प्राणादिपदश्रवणे सति तद्ग्रहणस्यावश्यकतया तैरेव 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इत्यत्र ब्रह्मक्षत्राभ्यामिव कृत्स्नप्रपञ्चग्रहणसम्भवात् एतदर्थप्रदर्शनार्थमेव 'यस्मिन् पञ्च पञ्चजना' इत्यत्राकाशश्चेत्याकाशपदेनाव्याकृताकाशो गृहीतः । अनुक्तसमुच्चयार्थेन चकारेणान्यत् गृहीतमिति । **कचिच्चेति** । 'यत् पांचजन्यया विशेन्द्रघोषा असृक्षते'ति वाक्ये विशां तृतीयवर्णरूपाणाम् इन्द्रविषयं घोषं सृष्टवतां पाञ्चजन्येतिपदेन पञ्चजनोत्पन्नत्वकीर्तनात् मनुष्याः पञ्चजनपदेन विवक्षिता इति योग्यतया अवधार्यते । **काण्वानां तु कथमिति** । ननु, तेषामपि माध्यन्दिनशाखातोऽन्नस्य उपसंहारसम्भवात् न पञ्चत्वविरोध इति चेत्, सत्यम् । उपसंहारो नास्तीति कृत्वाचिन्तया परिहारं वक्तुमयमाक्षेपः ॥

## ज्योतिषैकेषामसत्यन्ने ॥१३॥

सूत्रेऽसत्यन्न इति अन्ने अनुपसंहृते सतीति द्योत्यते । तत्प्रतिपादनार्थो भाष्ये असत्यपीत्यपिशब्दः प्रयुक्तः । तद्देवा इत्यत्र तत्पदं 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तत' इति पूर्ववाक्यगतं कालातीतत्वेन निरूपितं ब्रह्म परामृशति । अत्र च ज्योतिषामिति षष्ठ्यन्तनिर्दिष्टं ज्योतिः पञ्चत्वसङ्ख्यापूरणाय गृह्यते । तत्र ज्योतिषां बहुत्वात् पञ्चभ्योऽधिकता स्यादिति शङ्कावारणार्थं सूत्रे ज्योतिषेत्येकवचनेन निर्देशः । तथा च ज्योतिष्ट्वैनैकीकारान्न सङ्ख्याधिक्यम् । **अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे इति** । एतेनैकस्यैव मन्त्रस्य शाखाभेदेन

भिन्नार्थकत्वं कथमिति शङ्कापि निरस्ता । यथा एकस्यैव मन्त्रस्य विनियोगभेदेन अनेकार्थता भवति, तद्वदेकस्यैव मन्त्रस्यान्नपदसन्निधानतदसन्निधानाभ्यामर्थभेदोपपत्तेरिति । ननु, सिद्धान्ते प्राणादिषु पञ्चसु प्राणत्वादीनामुपाधीनां भिन्नत्वात् कथमेकमवच्छेदकं विना पञ्चत्वसङ्ख्यानिवेश इति चेत्, उच्यते—अन्नेन सह पञ्चत्वविवक्षायाम् उत्तरमन्त्राम्नातत्वं ज्योतिषा सह तद्विवक्षायां समभिव्याहृतमन्त्राम्नातत्वमेकमवच्छेदकमस्तीति न काचिदनुपपत्तिः ॥१३॥

॥ इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥३॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥

इतः प्राचीनैस्त्रिभिरधिकरणैः यत् प्रधानस्याशब्दत्व'मीक्षतेर्नाशब्द'मित्यत्रोक्तं, तत्र बाधकतया आपाततः प्रतीयमानानि कानिचिद्वाक्यानि तदबाधकानीति प्रतिपादितम् । इदानीं यद्वेदान्तानां ब्रह्मणि गतिसामान्यमुक्तं, तत्र बाधकं परस्परविरुद्धार्थप्रतिपादकत्वमाशङ्क्य परिह्रियते अनेनाधिकरणेनेति दर्शयितुं वृत्तं सङ्कीर्तयन् प्रकृताधिकरणप्रतिपाद्यमाह—**प्रतिपादितं ब्रह्मण इत्यादिना** । नन्वानुमानिकाधिकरणारम्भगतेनेदं'त्विदानीमवशिष्यत इत्या'दिना 'तेषामन्यपरत्वं दर्शयितुं परस्सन्दर्भ'इत्यन्तेन भाष्येण कृत्स्नस्यानुमानिकाधिकरणमारभ्योत्तरस्य सन्दर्भस्य प्राधानिकाशब्दत्वाक्षेपनिवारकताया उक्तत्वात् कथं प्रकृताधिकरणस्य गतिसामान्याक्षेपपरिहारार्थत्वमुच्यत इति चेत्, उच्यते—प्रकृताधिकरणस्य न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यमिति भाष्यवाक्येन पारमेश्वरजगत्कारणत्वतदुपपादकगतिसामान्याक्षेपपरतायाः प्रदर्शितत्वात् पादारम्भभाष्यमधिकरणत्रयविषयं द्रष्टव्यम् । पादार्थस्तु पूर्वोक्ताक्षेप एवेति प्रागेवोक्तम् । नन्वस्मिन्नधिकरणे वेदान्तवाक्यानां परस्परविरुद्धार्थकत्वमाशङ्क्य परिह्रियते । नायमर्थस्समन्वयलक्षणसङ्गतः, अपि त्वविरोधलक्षणसङ्गत एव । न च स्मृतितर्कमतान्तरविरोध एवाविरोधलक्षणार्थः, न तु श्रुतिविरोधपरिहारोऽपि, स त्वत्रैव सङ्गतः । न हि परस्पराविरोधसमर्थनं विना वेदान्तवाक्यानां ब्रह्मणि समन्वयो लक्षणार्थोऽनाकुलमवगन्तुं शक्यत इति वाच्यम् । तथा सति वियत्प्राणपादयोरपि द्वितीयलक्षणे सङ्गतिर्न स्यात् । अपि तु श्रुत्यविरोधसमर्थनार्थयोस्तयोः प्रथमलक्षण एव कर्तव्यता स्यादिति चेत्, सत्यम् । प्रथमलक्षण एव सङ्गतयोरपि तयोः द्वितीयलक्षणे निवेशः प्रसङ्गसङ्गत्या । 'विप्रतिषेधाच्चासमञ्जसमि'ति सूत्रेण परकीयमतस्य स्वस्वप्रक्रियायामेव परस्परविरोधात् परित्याज्यत्वे कथिते वेदान्तानामपि सृष्ट्यादिविषयाणां विरुद्धप्रक्रियत्वात्त्याज्यतेति

शङ्कायां प्रसक्तायां तयोः प्रवृत्तत्वात् अत्र स्वरसतस्सङ्गतयोरपि तयोः परैरुद्भावितो दोष उद्धर्तव्यः । स्वदर्शनेन तु बाधितत्वसामान्यादुपेक्ष्यं वेददर्शनमिति शिष्यशिक्षार्थं प्रासङ्गिकीमपि सङ्गतिमवलम्ब्य तत्र करणे सूत्रकृतोऽभिनिवेशः । अत्र वेदान्तवाक्यानां ब्रह्मणि समन्वयस्सम्भवति, नवेति संशय्य तदर्थं तेषामविरुद्धार्थत्वम् , उत विरुद्धार्थत्वमिति संशयः । पूर्वस्मिन्नधिकरणे अपेक्षाविशेषात् तुल्याम्नानस्यैव मन्त्रस्यार्थभेद इत्युक्तम् । तदस्तु, न त्वेकरूपस्यैव कार्यस्य सत्कारणत्वमसत्कारणत्वं च सम्भवतीति प्रत्यवस्थानात् सङ्गतिः। 'स इमान् लोकानसृजते'ति लोकसृष्टिरुक्ता । लोकानेवाह—**अम्भ इति ।** द्युलोकात् परस्ताद्विद्यमाना अम्मया लोका अम्भःपदप्रतिपाद्याः । अन्तरिक्षं मरीचयः पृथिवीमरो याः पृथिव्या अधस्तात्ता आपः । ताः अप्छब्दप्रतिपाद्याः । **तत् सदासीदिति** । यदसत् पूर्वं स्थितं, तत् सदभूत् किञ्चित्कार्योन्मुखमभूत् । तदेव सम्यग्वियदादिरूपेणाभवत् । तद्धेदं तत् पुरुषसृष्टत्वेन यत्पूर्ववाक्ये प्रतिपादितम्, इदं प्रत्यक्षादिसन्निहितं, तर्हि सृष्टेः प्राक्, अव्याकृतम् अनभिव्यक्तनामरूपात्मकम् आसीत् । तन्नामरूपाभ्यां नामरूपज्ञाप्यव्यावृत्तिकं नामरूपविशिष्टं सदिति यावत् । व्याक्रियते अभिव्यज्यते । **सत्यपीति** । अनेनेत्थं सूत्रयोजना दर्शिता भवति—'न सङ्ख्ये'ति सूत्रात् नानाभावादिति पञ्चम्यन्तम् अतिरेकाच्चेति प्रकृतिमात्रमनुवर्तते । सा च यथायोगं विपरिणम्यते । अतिरेकश्च प्रकृते विरोधो विवक्षितः । तथा चायमर्थः—वियदादेः कार्यत्वे क्वचिदाकाशादिः क्रमः, क्वचित्तेजआदिः क्रमः, क्वचित् क्रमं विनैव सृष्टिप्रतिपादनमित्याम्नानस्य नानाभावात् अतिरेके विरोधे सत्यपि आत्मनः कारणत्वे विरोधो न विद्यते । सूत्रे चशब्दः अप्यर्थः । कार्यांशे आम्नानस्य विरोधाभ्युपगमेनैव परिहारं वदामः । वस्तुतस्तु तत्रापि विरोधो नास्तीति वियत्प्राणपादयोः स्पष्टं भविष्यतीति द्योतनार्थः । कारणत्वे इति सप्तम्यन्तम् । एवं 'कारणत्वेन चाकाशादि'ष्वित्यन्तेन सूत्रांशेन प्रतिज्ञां वाचयित्वा पुनः कारणत्वेनाकाशादिष्विति पदयोरावृत्तिमुपेत्य कारणत्वेनेति तृतीयान्तमुपेत्य हेतुमाह—**कुत इत्यादिना** । ननु, ज्ञानपदेन चिद्रूपता परमात्मनस्सिध्यति, न तु ज्ञानाश्रयत्वरूपं चेतनत्वमित्यत आह—**परेण च तद्विषयेण कामयितृत्ववचनेनेति** । तथा च यः कामयते, स ज्ञानाश्रय इति तदन्यथानुपपत्त्या चेतनत्वं सिध्यति । कामयितृत्वाक्षिप्तमपि चेतनत्वं 'स तपोऽतप्यते'त्यनेन पुनस्स्पष्टं श्रुत्यैव दर्शितम् । ज्ञानरूपस्यापि तत् वृत्त्युपाधिकमुपपद्यत एव । **अपरप्रयोज्यत्वेनेति** । 'इदं सर्वमसृजते'ति स्रष्टृत्वं प्रकीर्त्य 'भीषास्माद्वातः पवत'इत्यादिना वाय्वादीनां तत्प्रयोज्यत्ववत् परमात्मनः किञ्चित्प्रयोज्यत्वाप्रति-

पादनात् अपरप्रयोज्यत्वमिति भावः । ननु, कार्यांशविगाने सति तन्निरूपितायाः कारणताया अपि विगीतत्वमवर्जनीयमेव । तथा च कथं कारणतायामविगीततेति चेत्, यदि हि कारणत्वविशिष्टत्वमेव ब्रह्म वेदान्तप्रतिपाद्यं भवेत्, तदा खलु विगानमप्रामाण्यावहं भवेत्, न तु तथास्ति, अपि तु कारणत्वोपलक्षितं सत्यज्ञानाद्यात्मकं ब्रह्म तात्पर्यविषयः । कारणत्वादिप्रतिपादनं तु तत्प्रतीत्युपायमात्रम् । तथा च कार्यद्वारा कारणतायां विगाने सत्यपि यथा नानाव्याकरणैर्विलक्षणप्रक्रियारचनद्वारा शब्दानां साधुत्वे प्रतिपाद्यमाने उपायभूतासु प्रक्रियासु विरोधे सत्यपि तात्पर्यविषयीभूते परिनिष्ठितरूपे विरोधाभावात् नाप्रामाण्यम्, एवं वेदान्तेष्वपि भविष्यति । **मृल्लोहेति** । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा' इत्यादिभिर्दृष्टान्तैश्चोदितेत्यर्थः । सः मृदादिदृष्टान्तः आत्मनि बुद्धेरवतारायोपायः । परमार्थस्तु भिद्यत इति भेदः स नास्तीति । ननु, कारणीभूतस्य सत्यादिलक्षणस्य ब्रह्मण एकरूपेण प्रतिपादनात् ब्रह्मस्वरूपबोधकेषु वाक्येषु विगानं नास्तीति हेतुरसिद्धः । कारणीभूतस्य वस्तुन एव क्वचिदसत्त्वप्रतिपादनात् कारणस्वरूपमसदिति प्रतीयते । तथा च शून्यवादः । तन्नामरूपाभ्यामेव व्याक्रियेतेत्यकारणकार्योत्पत्तिप्रतिपादनात् स्वभाववादः प्रतीयते । शून्यवादिमते अभाव एव कारणं, स्वभाववादे तु न भावो, नाप्यभावः कारणमिति भेदः । अतस्तद्वाक्यविरोधः सद्रूपब्रह्मकारणवादिवाक्यानाम् । न च सत्कारणप्रतिपादकवाक्यानुसारेणासद्वादस्वभाववादोपोद्बलकानि यथाकथञ्चिद्योजनीयानीत्यत्र नियामकमस्ति । अतो विनिगमनाविरहादुभयोरपि निरर्थकत्वमस्तु । स्वाध्यायविधिपरिग्रहश्च हुंफडादिशब्दवज्जपपारायणादिपूपयोगात् भविष्यतीति पूर्वपक्षिण आशयमनुवदति **—यत् पुनरिति** ॥१४॥

## समाकर्षात् ॥१५॥

भवेदेतदेवं, यद्यसत्कारणत्ववादिवाक्यापेक्षया कारणीभूतस्य ब्रह्मणः सत्यादिप्रतिपादकानां वाक्यानां प्राबल्यं न भवेत् । उपक्रमोपसंहाराद्यनेकलिङ्गैस्तेषां सत्यादिरूपब्रह्मनिरूपणे तात्पर्यमितीक्षत्याद्यधिकरणैः प्रतिपादितम् । तथा च तदुपक्रमोपसंहारान्तर्गताना'मसद्वा इदमग्र आसी'दित्यादिवाक्यानां तदनुसारेणैव नयनमुचितम् । तात्पर्योपेतानेकसत्कारणताप्रतिपादकवाक्येभ्यः तात्पर्यग्राहकोपक्रमादिलिङ्गरहितानां क्वाचित्कासत्कारणतावादिवाक्यानां दुर्बलत्वादिति परिहाराभिप्रायः । यद्यप्ययमर्थ ईक्षत्याद्यधिकरणव्युत्पादितैर्न्यायैः सिद्ध एव, तथापि जग-

त्कारणे प्रयुक्तानामसदादिपदानां व्याख्यानायायं यत्नः । 'तदप्येष श्लोको भवती'ति पूर्ववाक्ये सत्यादिरूपं ब्रह्म समाकृष्य 'असद्वा इदमग्र आसीदि'ति मन्त्राम्नानात् असत्पदमनभिव्यक्तनामरूपवस्तुपरमिति तैत्तरीयवाक्ये सूत्रं योजयित्वा 'असदेवेदमग्र आसीदि'ति छान्दोग्यवाक्येऽपि सूत्रं योजयति—**एषैवासदेवेदमग्र आसीदित्यत्रापीति** । ननु, 'असद्वा इदमग्र आसी'दित्यादौ नानभिव्यक्तनामरूपत्वेन कारणे असत्पदप्रयोगः, अपि तु यथाश्रुत एव शून्यवादद्योतकः । अन्यथा तद्वादस्याप्रसिद्धत्वेन छान्दोग्ये तद्वादानुवादपूर्वकं दूषणाभिधानमसङ्गतं स्यादित्यत आह—**तद्धैक आहुरिति । मन्दमतिपरिकल्पितस्येति** । असन्नेव स भवतीत्यस्यासद्वादद्योतकत्वासम्भवस्य दर्शितत्वादिति भावः । तथा च 'तद्धैक आहु-' रिति श्रुतावेके मन्दमतय इत्यर्थो द्रष्टव्यः । **व्याक्रियत इति कर्मकर्तरि लकार इति** । अयं भावः—कर्मणः कर्तृत्वं सौकर्यसूचनाय विवक्ष्यते । यथा लूयते केदारः, भिद्यते कुसूलमिति । लुनाति केदारं, भिनत्ति कुसूलमिति प्रयोगे हि लूञा भिदिना च विभागविशेषानुकूलो व्यापारोऽभिधीयते । स च पुरुषनिष्ठः । विभागस्तु केदारकुसूलनिष्ठः । यदा तु अल्पेनैव पुरुषव्यापारेण विभागो निष्पद्यते, तदा विभागसुकरताद्योतनाय धातुना व्यापारांशं विहाय विभागमात्रं लक्ष्यते । तथा च विभागस्य केदारकुसूलगततया धातूपात्तव्यापाराश्रयत्वात् तस्मिन् प्रयोगे तयोरेव कर्तृसंज्ञा प्राप्ता । सोऽयं कर्मकर्तेत्युच्यते । धातोः फलव्यापाररूपांशद्वयाभिधायितादशायां यत् कर्म, तत् कर्तेति व्युत्पत्तेः । तत्र छेदनाश्रयः केदारो भवति, भेदनाश्रयश्च कुसूलं भवतीत्यर्थपर्यवसाने लुनाति केदारः, भिनत्ति कुसूलमिति प्रयोगे प्राप्ते 'कर्मवत् कर्मणा तुल्यक्रिय' इति सूत्रेण धातोरंशद्वयाभिधायितादशायां यत् कर्म स्थितं, तत् यदा धातोः फललक्षकतया कर्तृसंज्ञं भवति । तस्मिन् प्रयोगे कर्मणि यत् कार्यं यगात्मनेपदादिकं, तत् भवतीति प्रतिपादयता लूयते केदारः, भिद्यते कुसूलमिति सिध्यति । इदं च सूत्रं यत्र लकारेण कर्तृप्रतिपादनं, यत्र च पुरुषव्यापारेण कर्मणि विकारः स्पष्टमुपलभ्यते, तत्रैव प्रवर्तते, न तु लकारं विनाभिधानविवक्षायां, नापि दृश्यादिधातुप्रयोगे । दृशिस्थले पुरुषव्यापारेण ज्ञानेन कर्मणि घटादौ विकारस्यानाहितत्वात् । तथा च 'लूयते केदार' इत्यादौ विद्यमानस्यैव मुख्यकर्तुरविवक्षामात्रम्, एवमत्रापि विद्यमानस्यैव कर्तुः परमेश्वरस्याविवक्षामात्रं, न तु तदभाव एव । ननु, भिद्यते कुसूलमित्यादावविद्यमानेऽपि कर्तरि कर्मकर्तृप्रयोगोऽस्ति । न च तत्रापि भेदनकर्ता पुरुषो नियत इति वाच्यम् । यत्र चिरकालेन विश्लिष्टावयवं वर्षातपाद्यभावेऽपि कुसूलं भिद्यते , तत्रान्यस्य कर्तुरभावात् उभ-

यथापि कर्मकर्तृप्रयोगः । कुचिद्विद्यमानस्यैवाविवक्षा, कुचित्त्वविद्यमानतयैव । तथा च प्रकृते कर्तृकल्पनागौरववारणायाविद्यमानतैवास्थेयेति चेत्, न । उक्तोत्तरत्वात् । तथासति हि जगत्कर्तृप्रतिपादकानेकश्रुतिविरोधः स एष इह प्रविष्ट इति तच्छब्दानुकर्षणानुपपत्तिः, लौकिकनामरूपव्याकरणवैरूप्यकल्पना चेति । ननु, तन्नामरूपाभ्यामेव व्याक्रियतेति कर्मकर्तृप्रयोग इति पक्षो न साधुः । 'तद्धेदं तर्ह्यव्याकृतमासी'दिति पूर्ववाक्ये अव्याकृतमिति हि कर्मण्येव क्तप्रयोगः । न च तत्रापि कर्मकर्तृविवक्षा । तथासति अव्याकृतवत् आसीदिति क्तवतुप्रयोगापत्तेः । कर्मणि विहितक्तप्रयोगस्य 'कर्मवत् कर्मणे'ति सूत्रेण लकारेण कर्तुरभिधानविवक्षायामेव कर्मकार्यातिदेशस्य कृततया अप्रसङ्गात् । तत्समभिव्याहाराद्व्याक्रियतेत्यपि कर्मण्येव प्रयोग उचितः । एवंचसति 'तदात्मानं स्वयमकुरुते'त्यनेनैकार्थ्यमपि लभ्यते, इत्यस्वरसादाह—यद्वा कर्मण्येवेति ॥१९॥

॥ इति कारणत्वाधिकरणम् ॥४॥

# जगद्वाचित्वात् ॥१६॥

**कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवाद इति ।** एवं तत्रोपाख्यायते—गार्ग्यो बालाकिर्नाम काश्यमजातशत्रुं राजानमुपेत्योवाच—'ब्रह्म ते ब्रवाणीति स चाजातशत्रुरुवाच सर्वेऽपि ब्रह्मवित्त्वेन प्रसिद्धाः ब्राह्मणाः जनकं प्रत्येव ब्रह्मोपदेशाय धावन्ति त्वं तु मामुपदेशयोग्यं सम्भावयन् मत्सकाशमागतोऽसि । अतो गवां सहस्रमस्मिन्वचने दद्म इति प्रतिज्ञाय बालाकिना आदित्यचन्द्रविद्युदादिगतेषु केषुचित् पुरुषेषूपदिष्टेषु तान् पुरुषान् स्वविज्ञाततत्तद्गुणोपदेशपूर्वकमब्रह्मत्वेन निरूप्य तावन्मात्रमुपदिश्य बालाकावुपरते एतावन्नु इति तं पृष्ट्वा एतावदेव मया ज्ञायत इत्युत्तरिते तेन मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणीति बालाकिं शिक्षयित्वा स्वयमुवाच 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्य' इति एवमुपक्रम्य च उपसंहृतं 'य एवंविद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येते'ति सर्वपाप्मप्रदाहादिकं च फलं मुक्तस्यैव, नान्यस्य । तथा च मुक्तिसाधनज्ञानविषयतया श्रुतः पुरुषः पूर्वपक्षे हिरण्यगर्भो जीवो वेति पर्यवस्यति । तथा च हिरण्यगर्भाद्यतिरिक्तं ब्रह्मैव मुमुक्षुज्ञेयमिति 'तन्निष्ठस्य मोक्षोपदेशात्' 'मुक्तोपसृप्यव्यपदेशादि'त्यादौ यद्व्यवस्थापितं, तदाक्षिप्तम् । यद्यप्यत्र पूर्वपक्षे आदित्यादिपुरुषकर्तृत्वमेव हिरण्यगर्भस्य जीवस्य वा सिध्यतीति न सर्वजगत्कारणत्वरूपं ब्रह्मलक्षणं तयोरातिव्याप्तं भवेत् । 'एतेषां पुरुषाणां कर्ते'त्येव श्रव-

णात्, तथापि प्राधान्येन मुमुक्षुज्ञेयस्वरूपं यत् ब्रह्मलक्षणं, तदतिव्याप्तं भवत्येव। **उत मुख्यप्राण** इति । नन्वनया कोट्या किं वायुविकारः पञ्चवृत्तिः प्राणो विवक्षितः, उत हिरण्यगर्भः । आद्ये मुख्यशब्द उपपन्नो भवति । तत्कोट्युपपादकतया परिस्पन्दलक्षणकर्मसम्बन्धित्वलिङ्गोपन्यासः प्राणश्रुत्युपन्यासश्च समञ्जसो भवति । ये चैत इत्याद्युत्तरवाक्येनादित्यादिपुरुषकर्तृत्वं तु लिङ्गतयोपन्यस्यमानं तत्र न सङ्गच्छते । मुख्यप्राणे तदसम्भवात् । द्वितीये तदुपपद्यते । हिरण्यगर्भे देवतास्रष्टृत्वस्य श्रुतिस्मृतिसम्मतत्वात् । मुख्यप्राणपदं परिस्पन्दलक्षणकर्मसम्बन्धित्वं प्राणश्रुतिश्च तत्रासमञ्जसम् । तस्मादनुपपन्नमिति चेत्, उच्यते—त्रिकोटिकोऽत्र पूर्वपक्षः । तत्र जीव इत्यनेन जीवसामान्यं, जीवविशेषो हिरण्यगर्भश्चेति द्वयं विवक्षितम् । मुख्यप्राण इत्यत्र तु पञ्चवृत्तिः प्राणो विवक्षितः । मुख्यप्राणपूर्वपक्षो ये चैत इत्यतः प्राक्तनेन वाक्येन दर्शितः । ननु, मुख्यप्राण इति पूर्वपक्षो न समीचीनः । तत्रादित्यादिदेवताकर्तृत्वस्यासम्भवादित्याशङ्कायां ये चैत इति वाक्येन हिरण्यगर्भपूर्वपक्षो दर्शित इति विभागः । हिरण्यगर्भे प्राणश्रुतिः परिस्पन्दलक्षणकर्मसम्बन्धित्वं च तदभिमन्तव्यप्राणद्वारकं द्रष्टव्यम् । इदानीं जीवसामान्यपूर्वपक्षमाह—**जीवो वायमिति** । 'यस्य वै तत्कर्मे'ति वाक्यं जीवे योजयति—**तस्यापीति** । ननु, कर्मशब्दः परिस्पन्दलक्षणे कर्मण्येव शक्तः, न तु धर्माधर्मयोः । अतः कथं कर्मपदेन धर्माधर्मयोर्ग्रहणमिति चेत्, उच्यते—'यदि हवा अनेवंवित् पुण्यं कर्म करोती'ति पुण्ये 'न कर्मणा लिप्यते पापकेने'ति पापे च कर्मपदसामानाधिकरण्यश्रवणेन तत्रापि शक्त्युपपत्तेः । न च परिस्पन्दलक्षणकर्मजन्यत्वाल्लक्षणयैव तदुपपत्तिरिति वाच्यम् । दर्शनश्रवणादिजनितानां पुण्यपापानां परिस्पन्दजन्यत्वाभावेन लक्षणया तद्ग्रहणासम्भवात् । अतस्तत्रापि शक्तिरिति भावः । एतेषां पुरुषाणां कर्तेति वाक्यं जीवसामान्ये सङ्गमयति—**सोऽपि भोक्तृत्वादिति** । जीवसामान्यग्रहणसाधकमाह—**वाक्यशेषे चेति । कर्तुर्वेदानायोपेतमित्यादि** । स वै वेदितव्य इति राजोक्त्यनन्तरमेवमाम्नायते—'तत उह बालाकिः समित्पाणिः प्रतिचक्राम उपत्वायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्यात् यत्क्षत्रियो ब्राह्मणमुपनयेदेहि व्येव त्वा ज्ञापयिष्यामी'ति तं ह पाणावभिप्रपद्य प्रवव्रजतुस्तौह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति स इह तूष्णीमेव शिश्ये तत उहैनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थावि'ति । तथा च बुबोधयिषयोपेतं बालाकिं प्रति सुप्तजीवस्यैव राज्ञा बोधितत्वात् स एवोपक्रान्तो वेदितव्यः पुरुष इत्यवगम्यते । ननु, यदि सुप्तो जीवो बोधनीयः, तर्हि मध्ये बृहन्नित्यादिपदैः कि-

मर्थमामन्त्रणमित्यत आह—**आमन्त्रणशब्दाश्रवणादिति** । प्राणादिव्यतिरिक्तस्य भोक्तृजीवस्य सर्वप्रसिद्धत्वाभावात् प्राण एव भोक्तेति भ्रमसम्भवात् तद्व्यतिरेकं वेदितव्यस्य भोक्तुः बोधयितुं बृहन्नित्याद्यामन्त्रणम् । बृहन्नित्यादिपदानि च प्राणप्रतिपादकानि भवन्ति । 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे'ति श्रवणात् । 'प्राणो बृहन् किं मे वास इति प्राणेन पृष्टे आप इति होचुरि'ति प्राणसंवादे श्रवणात् पाण्डरा आपो वासो यस्य स पाण्डरवासा इतिव्युत्पत्त्या पाण्डरवासाः प्राणः । अथैतस्य प्राणस्यापश्शरीरं ज्योतीरूपमसौ चन्द्र इति सप्तान्नब्राह्मणे चन्द्ररूपताश्रवणात् सोमराजत्वं प्राणस्य । तथा च यदि प्राण एव चेतनो भोक्ता स्यात् , तदानीं तस्य सुप्तावनुपरतव्यापारतया आमन्त्रणशब्दं शृणुयात् , तदश्रवणात् न प्राणश्चेतनः , अपि तु तद्व्यतिरिक्तश्चेतनो भोक्ता । स एव वेदितव्यः पुरुषः । **तद्यथेति** । श्रेष्ठी स्वामी स्वैर्भृत्यैर्भोगं प्राप्नोति, यथा वा स्वा भृत्या श्रेष्ठिनं भुञ्जन्ति पालयन्ति , एवमेष प्राज्ञः आत्मा प्रकृतो वेदितव्यः पुरुषः एतैरात्मभिः पूर्वोपन्यस्तैरादित्यादिपुरुषैर्भुङ्क्ते, एवमेवैत आत्मानः आदित्यादयश्चक्षुराद्युपकारद्वारा एतं पालयन्ति । ननु, यदि जीव एव वेदितव्यः पुरुषस्स्यात् ; तदानीं क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वा एतदभूत् कुत एतदागादिति वाक्यैर्जीवस्य सुप्तिः कुत्र, सुप्त्यनन्तरं यावत्प्रबोधं जीवश्च क्व तिष्ठति, प्रबोधसमये कुत आयातीत्युपेतं बालाकिं प्रति पृष्टे तेन च तदुत्तराज्ञाने राज्ञोत्तरितं—'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येती'त्यादि मनश्च सर्वैर्ध्यानैस्सहाप्येतीत्यन्तं पुनश्च स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठेरन्नि'त्यादि, तदसङ्गतं स्यात् । जीवस्य निरूपणीयत्वे तमेव प्रतिपादयेत्, न तु तदधिकरणम् । उच्यते—क्वैष इत्यत्राद्यः प्रश्नो जीवस्य सुप्त्यधिकरणं किमित्येवंरूपः जीवपक्ष उपपन्न एव । सौषुप्तजीव एव हि वेदितव्य इत्यभिप्रायं राज्ञस्सुप्तपुरुषसमीपोपसर्पणम् । तत्र च जाग्रत्स्वप्नावपेक्ष्य सुषुप्तजीवस्य पाप्मास्पर्शरूपोऽतिशय इति बोधनार्थं तदाधारप्रश्नः । यतः तदाधारतया तासु तदा भवतीति हिता नाडीर्बोधयति । हिता नाम हृदयस्य नाड्य इति वाक्येन तासां प्रकृतत्वात् । हिता नाडीः प्रविष्टस्य च पाप्मसंस्पर्शाभावो दहरविद्यायां नाडीखण्डे समाम्नातः हिता नाडीः प्रक्रम्य 'यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति तं न कश्चन पाप्मा स्पृशती'ति श्रवणात्, न तु जीवाधारः सुप्तौ ब्रह्मेति बोधनार्थम् । तथासत्युत्तरे नाडीनामाधारतया बोधनासाङ्गत्यात् । तत्र तास्वित्यादि पश्यतीत्यन्तमाद्यप्रश्नस्योत्तरम्, 'अथास्मिन् प्राण एवैकधा भवती'ति द्वितीय-

प्रश्नस्य सङ्ग्रहेणोत्तरं, तद्विवरणं 'तदैनं वाक् सर्वैर्नामभिः सहाप्येतीत्या'दिनेन्द्रियाणां सविषयाणां लयाधारतया क्रियते । सुप्तौ चेन्द्रियाणां लयो वृत्त्यभावः । विषयाणां लयः तत्कृतभोगाभावः । तथा चोत्तरपर्यालोचनया द्वितीयप्रश्नः कैतत्सविषयमिन्द्रियजातमभूदित्येतदर्थकः । तथा चोत्तरवाक्ये सविषयमिन्द्रियजातं सुप्तिदशायां जीव एव प्रलीनं भवतीति प्रश्नप्रतिवचनाभ्यां प्रतिपादितं भवति । इदमपि जीवलिङ्गमेव भवति । तत्राशङ्का—तथासति प्राणपदस्य कथं प्रयोग इति । तत्राह—**प्राणभृत्त्वाच्चेति** । तथा च श्रुत्यन्तरं 'स प्राणन्नेव प्राणो नाम भवती'ति प्राणशब्दत्वं जीवस्य प्रतिपादयति । तृतीयप्रश्नोत्तरे अपि जाग्रदारम्भे इन्द्रियाणां जीवादेवाभिव्यक्तिरिति प्रतिपादनार्थे इति न प्रश्नप्रतिवचनवाक्यानां जीवपक्षे अनुपपत्तिः । हिरण्यगर्भपक्षे तु जीवसामान्याधारतया सुप्तौ यः प्राणशब्दोदितः, स बोध्यत इति सिद्धान्तिवदेव प्रायशो योजना प्रश्नप्रतिवचनवाक्यानाम् । ननु, यदि हिरण्यगर्भो वा जीवो वा वेदितव्यः पुरुषः, तद्युपक्रमे 'ब्रह्म ते ब्रवाणी'ति ब्रह्मसङ्कीर्तनम्, उपसंहारे च मुक्तिरूपफलकीर्तनमसङ्गतं स्यात् । अतः यो वै बालाक इति वाक्येऽपि पुरुषाणां कर्ता परमात्मैव प्रतिपाद्यते । यस्य वै तत्कर्मेति तु कर्मशब्दो योगेन क्रियत इति जगन्मात्रं प्रतिपादयति । तथा च सर्वजगत्कारणत्वं 'यस्य वै तत् कार्यमि'ति वचनभङ्ग्या प्रतिपाद्यते । अतः कथं पूर्वपक्षोऽत आह—**तस्माज्जीवमुख्यप्राणयोरन्यतर इति** । अयं भावः—'ब्रह्म ते ब्रवाणी'ति हि बालाकिना प्रतिज्ञातम् । तेन तु ब्रह्म नोक्तमेव । तच्च राज्ञैवोद्घाटितम् । तदुपन्यस्तानामादित्यादिपुरुषाणां ब्रह्मत्वख्यापनानन्तरं मृषा वै खलु बालाके मा संवदिष्ठाः ब्रह्म ते ब्रवाणीति । न च मृषावादिबालाकिवचनानुसारेण राज्ञोऽपि वाक्यं व्याख्येयमित्यत्र किञ्चिन्नियामकमस्ति । उपकोसलविद्यायामग्निवाक्यानुसारेणाचार्यवाक्यव्याख्यानम् 'आचार्यस्तु ते गतिं वक्ते'ति अग्निभिरेवैकवाक्यतायाः कृतत्वादुपपन्नम् । ननु, राज्ञा बालाकिं प्रति मृषावादित्वमुद्घाट्य स्वयमपि ब्रह्मणोऽप्रतिपादने उपक्रमोऽत्यन्तनिरालम्बन एव स्यात् । किं कुर्मः । राजवाक्यपर्यालोचनया हि राजा अब्रह्मविदित्यवगम्यते । 'ब्रह्म ब्रवाणी'ति प्रतिज्ञायां बालाकिना कृतायां सहस्रमस्यां वाचि दद्म इति तावन्मात्रेण गुरुदक्षिणायाः प्रतिज्ञातत्वात् । न हि स्वस्यापि ब्रह्मवित्त्वे अयं मह्यं ब्रह्मोपदेक्ष्यतीत्युत्साहेन सहस्रदानप्रतिज्ञा सङ्गच्छते । यो वै बालाक एतेषां पुरुषाणां कर्ता इति वाक्यमपि न ब्रह्मप्रतिपादनसमर्थम् । सर्वजगत्कर्तुः यत्किञ्चिदादित्यादिकर्तृत्वप्रतिपादनासामञ्जस्यात् । परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो व्यापके निरवद्ये चासम्भवात् । न च क्रियत इति व्युत्पत्त्या कर्मशब्देन कार्यमात्रं प्रतिपाद्यते । तत्प्रतिसम्बन्धित्वेन

यस्येति तत्कर्तृत्वं सिध्यतीति सकलजगत्कारणत्वमेवानेन प्रतिपाद्यत इति वाच्यम् । रूढिमपेक्ष्य योगस्य दुर्बलत्वेन प्रकृते यौगिकार्थमादाय कार्यमात्रग्रहणासम्भवात् । तथात्वे च 'यस्य वै तत्कर्म' त्यनेनैव सर्वकर्तृताया लब्धतया एतेषां पुरुषाणां कर्तेति वाक्यवैयर्थ्यापत्तेः । अतो नात्र परमेश्वरः प्रतिपाद्यते । एवं च पूर्वाधिकरणेनास्य प्रत्युदाहरणलक्षणा सङ्गतिर्द्रष्टव्या । पूर्वत्र हि एकवाक्यगतसच्छब्दानुसारेण असच्छब्दो व्याख्यातः । इह तु वक्तृभेदेनैकवाक्यताया अभावान्न बालाकिवाक्यगतब्रह्मपदानुसारेण राजवाक्यं व्याख्येयमिति । **उपक्रमो बाध्येतेति** । न चोपक्रमस्य भ्रान्तबालाकिवाक्यान्तर्गतस्य मृषा वै खलु बालाके मा संवदिष्ठाः ब्रह्म ते ब्रवाणीति राजवाक्येनैव बाधो दर्शित इति वाच्यम् । तावता त्वं ब्रह्म न जानासि उपक्रान्तं ब्रह्माहं वक्ष्यामीति राजाभिप्रायकल्पनसम्भवात् । न च राज्ञोऽब्रह्मवित्त्वं सहस्रदानप्रतिज्ञया अवगतमिति वाच्यम् । ब्रह्मविदोऽपि राज्ञोऽन्योऽपि ब्रह्मवित् संवादकरणाय लब्ध इति हर्षेण पारितोषिकदानप्रतिज्ञाकरणसम्भवात् । एवमुपक्रमे ब्रह्मपदश्रवणात् उपसंहारे च मुक्तिफलश्रवणात् इह प्रबन्धे ब्रह्म प्रतिपाद्यमिति या बुद्धिरभवत्, तदनुगुणतया आख्यायिकायोजनसम्भवे तद्विरुद्धतया आख्यायिकायोजनं न साधु । अपि च 'यो वै बालाक एतेषां पुरुषाणां कर्तेति' वाक्यस्वारस्यपर्यालोचनयापि राज्ञा ब्रह्मोपदिष्टमित्यवगम्यते, इत्याह—**कर्तृत्वं चैतेषामिति** । **स्वातन्त्र्येणेति** । तथा चान्तर्याम्यधिकरणन्यायेन ब्रह्मगतमेव कर्तृत्वं ग्राह्यमिति भावः । 'यस्य वै तत्कर्म'त्यत्र कर्मशब्दो यद्यपि रूढ्या परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणः प्रतिपादकः, तथापि प्रकृते योगेन कृत्स्नमेव जगत् ग्राह्यम् । योगाद्रूढिर्बलीयसीत्युत्सर्गस्यैतत्पदसामानाधिकरण्येन बाधोपपत्तेः । एतत्पदेन ह्यसति सङ्कोचकारणे कृत्स्नमेव जगत्प्रतिपाद्यत इति मनसि निधाय तस्यान्यपरत्वं खण्डयति—**यस्य वै तत्कर्मेत्यपीति** । **अप्रकृतत्वादिति** । प्राधान्येनाप्रतिपादितत्वादित्यर्थः । **असंशब्दितत्वादिति** । यथाकथञ्चिद्वा पूर्वं शब्दतोऽनवगतत्वादित्यर्थः । न च पूर्वप्रकृतत्वाभावेऽपि यस्य वै तत्कर्मेति वाक्य एव प्रकरिष्यमाणत्वात तद्ग्रहणं किं न स्यात् । प्रकरिष्यमाणपरामर्शकताया अपि असति प्रकृते सर्वनामसु व्युत्पन्नत्वादिति वाच्यम् । तथासत्येतत्पदवैयर्थ्यापत्तेः । यस्य कर्मेत्येव विवक्षितार्थलाभसम्भवात् । **लिङ्गवचनविगानाच्चेति** । पुरुषाः पुल्लिङ्गबहुवचनाभ्यां निर्दिष्टाः । एतत्पदं त्वेकवचननपुंसकलिङ्गयुक्तमिति तात्पर्यम् । करोत्यर्थस्य क्रियासामान्यरूपस्य तत्फलस्य उत्पत्तिरूपस्य । **प्रत्यक्षसान्निहितमिति** । बुद्धिसन्निहितमिति यावत् । प्रकृतप्रकरिष्यमाणपरामर्शकत्वानुपपत्तौ च बुद्धिमात्रसन्निहितपरामर्शकत्वं 'यतो वा इमानि भूतानि जायन्त' इत्यादौ

व्यवस्थापितमेव, तद्वत् प्रकृतेऽपि भविष्यतीति तात्पर्यार्थः। जगदेकदेशद्वारा कृत्स्नस्य जगतः प्रकृतत्वमप्यस्तीत्याह—**जगदेकदेशभूतानामिति** । ननु,यस्य वैतत्कर्मेत्यनेनैव सकलजगत्कर्तृतोक्तौ 'एतेषां पुरुषाणां कर्ते'ति पूर्ववाक्यं व्यर्थमेव स्यादित्यत आह—**एतदुक्तं भवतीति** । एतेषां पुरुषाणां कर्तेत्यनेन हि यत्किञ्चिदादित्यादिकर्तृत्वं प्रथमतः प्रतिपाद्यते बालाक्युपदिष्टानामादित्यादिपुरुषाणां ब्रह्मत्वख्यापनाय । पुनश्च तावन्मात्रनिर्देशे न सर्वजगत्कर्तृत्वं निर्दिष्टं भवेदिति पुरुषकर्तुर्न ब्रह्मत्वनिश्चयो झटिति स्यात्, तन्माभूदिति । न केवलमयं पुरुषः आदित्यादीनामेव कर्ता, अपि तु सर्वस्य जगतः कर्तेति पुनर्निर्देशः । एतदर्थद्योतनार्थ एव यस्य वेति वाशब्दोऽपि । तथा च पूर्ववाक्योक्तमादित्यादिकर्तृत्वमपि कैमुतिकन्यायेन समर्थितं भवतीति न कस्यापि वैयर्थ्यम् । अपि च कर्मशब्दे परिस्पन्दगोचरधर्माधर्मगोचररूढ्योः परस्परं कलहे सति प्रतिबन्धाल्लब्धोन्मेषो योग एव भवति । अतो न रूढिप्राबल्यम् । न च 'यो वै बालाके एतेषां पुरुषाणां कर्ते'ति वाक्येन जीवस्य पुरुषकर्तृत्वे उक्ते तत् कथम्, उपादानापरोक्षज्ञानादिमत्त्वं हि तत् । न च देवेषु तादृशं कर्तृत्वं सम्भवतीति शङ्कायां जीवादृष्टारब्धत्वात् तेषां जीवः कर्तेत्युपचर्यत इति प्रतिपादनाय यस्य वैतत् कर्मेति वाक्यम् । तत्र धर्माधर्मरूढिरेव लब्धोन्मेषेति न परिस्पन्दरूढेरत्रावकाशः । तथा च कथमत्र योगो लब्धोन्मेषस्स्यादिति वाच्यम् । पुरुषाणां कर्तेत्यनेन हिरण्यगर्भे विवक्षिते न तस्य देवतादीन् प्रत्येव कर्तृत्वम्, अपि तु परिस्पन्दलक्षणं यत् कर्म, तदपि तदीयमेवेत्यधिकार्थबोधनाय । परिस्पन्दरूढेरपि लब्धोन्मेषत्वात् । तथा चेयमेव रूढिर्ग्राह्या, नेयमित्यत्र विनिगमनाभावेन कलहे सति योगोन्मेषोऽपि चल एव । अपि च कर्मशब्दस्य परिस्पन्दे वा धर्माधर्मयोर्वा न पृथग्रूढिराश्रयणीया । क्रियत इति कर्मेति योगेनैव तस्यापि ग्रहणसम्भवात् । यत्र हि योगेन रूढ्यर्थसङ्ग्रहः नास्ति, तत्रैव पृथग्रूढिराश्रीयते। यथा अश्वकर्णादौ । यत्र तु योगेनैव रूढ्यर्थसङ्ग्रहोऽपि, न तत्र पृथग्रूढिराश्रीयते । यथा प्रोक्षणीशब्दे । प्रकृष्टोक्षणसाधनत्वादेवापां लाभे सति प्रोक्षणीशब्दस्य तत्र पृथग्रूढेरनङ्गीकारात् । तस्मादजातशत्रुवाक्यमपि स्वरसतः कार्यसामान्यकर्तृत्वलिङ्गात् परमेश्वर एव पर्यवस्यति । सूत्रस्य चायमर्थः—'यो वै बालाक' इत्यादिवाक्यप्रतिपाद्यः पुरुषाणां कर्ता परमात्मा । कार्यसामान्यकर्तृत्वलिङ्गादि'त्यनुमानं मनसि निधाय तत्साधकमुच्यते—जगद्वाचित्वादिति । कर्मशब्दस्येति शेषः । क्रियत इति कर्मेति व्युत्पत्त्या कर्मपदेन कृत्स्नस्य कार्यरूपस्य जगतः प्रतिपादनात् उक्तहेतोर्नासिद्धिरिति भावः । एवंचसति यद्यपि 'जगद्वाचित्वादि'ति सूत्रोक्तहेतुरेव पुरुषाणां कर्तुः परमेश्वरत्वसाधको भवत्येव, तथापि भाष्ये प्रथमत उप-

क्रमोपन्यासः उत्तरसूत्रपर्यालोचनया सोऽपि हेतुर्लभ्यत इत्यभिप्रायः ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

सर्वेषां भूतानामिति । अस्य श्रैष्ठ्यमाधिपत्यमिति पदाभ्यामन्वयः । तयोरेव ससम्बन्धिकत्वात् । स्वाराज्यं स्वरिति स्वरूपभूतं सुखं, तत्र राजत इति स्वराट्, स्वेन राजते स्वप्रकाशः स्वराडिति वा, तस्य भावः स्वाराज्यम् । अत्र न सम्बन्धाकाङ्क्षा । यस्य वैतत् कर्मेत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वादिति । तथा च कर्मशब्देन यौगिकार्थ एव ग्राह्य इति अत्रोपयुक्तो न्याय इहैव व्युत्पाद्यत इति न तेनास्य गतार्थता ॥ १७ ॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

पूर्वं 'क्वैष एतद्बालाक' इत्यादिप्रश्नप्रतिवचनानां पूर्वपक्षुद्भावितां जीवविषयां योजनामुपेत्य तत्सन्दर्भगतस्य जीवलिङ्गस्य सर्वात्मके ब्रह्मणि नयनं कर्तव्यमित्युक्तम् । अनेन सूत्रेण प्रश्नप्रतिवचनसन्दर्भोऽपि न स्वरसतो जीवं प्रतिपादयति । अपि तु जीवस्य सुषुप्तौ एकतापत्त्यधिकरणं परमात्मानमेव प्रतिपादयतीति प्रपञ्च्यते। पुनर्जीवव्यतिरिक्तविषयो दृश्यत इति । 'क्वैष' इत्यादिप्रश्नः तत्प्रतिवचनं च न सुषुप्तो जीव एव वेदितव्यः पुरुष इति निरूपणार्थम् । तथात्वे सुषुप्तजीवाधिकरणप्रश्नासाङ्गत्यापत्तेः । अतस्सुषुप्तजीवाधारनिरूपणार्थ एव स प्रश्नः। न च सुषुप्तजीवस्य प्रतिपाद्यत्वेऽपि तदधिकरणप्रश्नो हितानाडीप्रवेशेन पाप्मासंस्पर्शगुणप्रतिपादक इत्युक्तम् । तथात्वे 'तासु तदा भवती'ति वाक्यानन्तरं पाप्मासंस्पर्शस्यापि प्रतिपादनं प्रसज्येत । न च तस्य शाखान्तरप्रसिद्धत्वादप्रतिपादनमिति वाच्यम् । तथात्वे नाडीप्रवेशस्यापि ततः प्रसिद्धिसम्भवात् सोऽपि न वर्ण्येत। यदि तु क्वैष इत्यादिप्रश्नत्रयानन्तरं 'तदुह न मेने गार्ग्य' इति गार्ग्यस्य श्रुत्यन्तरप्रतिपाद्यगोचराज्ञानोद्भावनाद्धितानाडीप्रवेशप्रतिपादनमिहावश्यकम् । तथात्वे पाप्मासंस्पर्शप्रतिपादनमप्यावश्यकमेव । अपि च पूर्वं वेद्यत्वेन पुरुषे उपक्षिप्ते क्वैष इति प्रश्नस्य पुरुषविषयत्वेन प्रधानसंबन्धोपपत्तौ न पुरुषाङ्गभूतनाडीविषयत्वं कल्पनीयम् । प्रश्नश्चायमधिकरणप्रधान इति स्पष्टमेव । तथा च पुरुषस्य वेदितव्यतयोपक्षेपात् प्रश्नस्य च सुषुप्तजीवाधिकरणविषयत्वात् प्रथमत एव इदं निर्धार्यते — प्रश्नप्रतिवचनसन्दर्भोऽयं सुप्तजीवाधिकरणतया पुरु-

षप्रतिपत्त्यर्थ इति । तथाचाद्यस्य प्रश्नस्य 'तासु तदा भवती'त्येतावदेवोत्तरं न भवति । नाडीनां वेदितव्यपुरुषत्वाभावात्, अपि तु 'अथास्मिन् प्राण एवैकधा भवती'त्यन्तम् । तथाचोपक्रमानुसारेणात्र प्राणपदं पुरुषपरम् । 'सता सोम्य तदा सम्पन्नो भवती'ति श्रुत्यन्तरानुसाराच्च । 'तासु तदा भवती'त्येतत्तु सुप्त्यारम्भे हिता नाडीः प्रविश्यानन्तरं परमात्मप्राप्तिरित्यभिप्रायम् । तथा च बृहदारण्यके 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इति हितानाडीनां ब्रह्मप्राप्तिद्वारत्वमेव दर्शितम् । न च शयनप्रश्ने एकीभवतीत्युत्तरमसङ्गतमिति वाच्यम् । शयनशब्दार्थो हि स्थूलावस्थस्य जीवस्य लय एव, लयश्चैकतापत्तिरिति 'स्वाप्यया-दि'ति सूत्रे निर्णीतम् । 'क्व वा एतदभूदि'ति द्वितीयप्रश्नोऽपि सुप्तिदशायामिन्द्रियग्रामः क्वाभूदित्यर्थको न भवति । तत्र इन्द्रियग्रामस्य कर्तृत्वेनाश्रवणात् अप्रस्तुतत्वाच्च । किं तु क्वैष इति पूर्ववाक्यात् एष इत्यस्यानुषङ्गे सति एष जीवः सुप्त्यारम्भानन्तरं यावत्प्रबोधं क्वाभवत् । एतदिति क्रियाविशेषणं त्रिष्वपि वाक्येषु तुल्यम् । तृतीयप्रश्नोऽपि प्रबोधसमये एष जीवः कुत आगादिति प्रतिपादयति । न च यत्र सुप्तः, तत्रैव यावत्प्रबोधं स्थास्यति, प्रबोधसमये च तत एवोत्थास्यतीत्यर्थसिद्धम् । अतः पुनः प्रश्नो निरर्थक इति वाच्यम् । अर्थसिद्धस्याप्यर्थस्य शङ्काविशेषनिराकरणपूर्वकं प्रतिपादनाय पुनः प्रश्नोपपत्तेः । पुरुषाणां कर्तुरसंसारिणः परमात्मनो वेदनायोपेतं बालाकिं प्रति बुबोधयिषो राज्ञः सुप्तपुरुषोपसर्पणं हि जीवस्य सुप्तौ एकतापत्त्यधिकरणतया परमात्मानं बोधयिष्यामीत्येतदभिप्रायम् । तत्र प्राण एव चेतनस्य जीवस्य एकतापत्त्यधिकरणं न भवतीति प्राणस्याचेतनत्वसूचनेन ध्वनितम् । तथा च चेतनो जीवः सुप्तौ यत्र चेतने एकतां गच्छति, स एव वेदितव्यः असंसारिपुरुष इति बुबोधयिषया आद्ये प्रश्ने कृते संसारिणो जीवस्य असंसारिणा कथमेकतापत्तिरिति प्राप्तायाः शङ्कायाः निराकरणमभिप्रेत्य द्वितीयः प्रश्नः । अत एव द्वितीयप्रश्नस्योत्तरे 'तदैनं वाक् सर्वैर्नामभिः सहाप्येती'त्यादौ उपाधिलयः सुप्तौ प्रदर्शितः । तथा च संसारित्वस्योपाधिकृतत्वादुपाधीनां च सुप्तौ लीनत्वात् स्वाभाविकैक्यप्राप्तौ न काचिदनुपपत्तिरिति परिहारो भवति । तृतीयप्रश्नस्तु यदि सुप्तावेकतां गतः परमात्मना जीवः, ततः पुनरुत्थानं न स्यात् । मुक्तवदिति शङ्कायाः परिहारार्थः । 'एवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठन्त' इत्युत्तरवाक्येन परिहारश्चेत्थं दर्शितो भवति—मुक्तावुपाधीनामात्यन्तिको लयो भवति, सुप्तौ तु संस्कारावशेषेण । तथा च संस्कारावशेषेण लीनानामुपाधीनां पुनरुद्बोधनसम्भवात् जीवस्य पुनः परमात्मनौपाधिको विशेषः सम्भाव्यत इति । अतो युक्तं प्रश्नस्य

जीवव्यतिरिक्तविषयत्वम् । 'अपि चैवमेक'इति सूत्रांशं विवृणोति—**अपि चैवमेक इति । सर्व एत आत्मानो व्युच्चरन्तीति चेति ।** अयं माध्यन्दिनपाठः। काण्वानां तु 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि च भूतानि व्युच्चरन्ती'ति पाठः । प्राणनिराकरणस्य मुख्यप्राणनिराकरणस्य बृहन्नित्यादिनामभिरामन्त्रणेन यथा प्राणव्यतिरेकबोधनं, तथा प्रागेवोदितम् । तावतापि प्राणव्यतिरेक उत्थापितस्य जीवस्यैव सिध्यति, न तु तदधिकरणस्येत्यत आह—**अभ्युच्चय इति** । सुप्तपुरुषोत्थापनेन प्राणव्यतिरिक्तोपदेशस्य साक्षाद्वेदितव्यपुरुषत्वाभावेऽपि जीवैकतापत्तिप्रतिपादनद्वारा स तत्रोपयुक्तो भवत्येवेत्यभिप्रायः ॥१८॥

इति जगद्वाचित्वाधिकरणम् ॥९॥

## वाक्यान्वयात् ॥१९॥

पूर्वमुपक्रमोपसंहारयोर्मध्ये च ब्रह्मकीर्तनात् बालाक्यजातशत्रुसंवादस्य ब्रह्मपरत्वं दर्शितम् । अत्र तूपक्रमोपसंहारपरामर्शेषु जीवस्यैव कीर्तनात् मैत्रेयीब्राह्मणं जीवपरमेवास्त्विति दृष्टान्तसङ्गत्या पूर्वपक्षः क्रियते । ननु, मैत्रेयीब्राह्मणस्य उपक्रमे न जीवः, अपि तु ब्रह्मैवाम्नायते । अमृतत्वसाधनज्ञानविषयत्वरूपतद्धर्माम्नानात् । तथाह्युपाख्यायते—याज्ञवल्क्येन प्रव्राजिष्य'तोद्यास्यन्वा अरेऽहमस्मात् स्थानादस्मि कात्यायन्या सपत्न्या सह तव वित्तसंविभागं करिष्यामी'ति मैत्रेयीं प्रति पृष्टवता मुमुक्षुणा पत्या सह चिरसंवासेन तत्परिचरणलब्धचित्तशुध्या च सञ्जातमुमुक्षया मैत्रेय्या वित्तसंविभागेन मया वित्ते लब्धे तेन किमहं साक्षादेवामृतत्वं प्राप्नुयाम्, उत परम्परयेत्यभिप्रायवत्या 'कथं तेनामृता स्यामि'ति पृष्टेन 'नेति होवाचे'ति वाक्येन वित्तेन साक्षात् स्वसाध्यकर्मद्वारा वा कथमप्यमृतत्वं नास्तीत्युत्तरिते मैत्रेय्याः प्रश्नः—'येनाहं नामृता स्यां, किमहं तेन कुर्यां, यदेव भगवानमृतत्वसाधनं वेद, तदेव ब्रूही'ति । तथा चोपक्रमसामर्थ्यात् इदं तावदवगतं—यदमृतत्वसाधनज्ञानविषयः, तदिह प्रतिपाद्यमिति। षष्ठाध्यायगतमैत्रेयीब्राह्मणे च 'एतावदरे खल्वमृतत्वमि'ति उपसंहारेऽप्यवगम्यते । तथा च कथमुपक्रमोपसंहारयोर्जीवविषयत्वमिति चेन्, सत्यम् । अत्र हि पूर्वपक्षी ब्रह्मज्ञानस्यैवामृतत्वसाधनत्वमिति न मन्यते, अपि तु प्रकृतिविविक्तात्मज्ञानमपि मोक्षसाधनमिति, तदीयाशयानुसारेण अमृतत्वसाधनोपक्रमोपसंहारौ न ब्रह्मैकपक्षपातिनाविति कृत्वाचिन्तया प्रवर्तितमिदमधिकरणम् । तथा च तद्व्यतिरिक्तालिङ्गबलाबलपर्यालोचनयेह निर्णयेन भवितव्यम् । तदभिप्रायेणैव भाष्ये पत्यादिगोचरप्री-

तियुक्तेन भोक्त्रोपक्रमो जीवकोटेरुत्थापक उक्तः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमीश्वरकोटेरुत्थापकमित्युक्तम् । ननु, पतिजायादिकं सर्वं भोक्तुर्जीवस्य प्रियमित्यर्थकस्सन् 'न वा अरे पत्युः कामाय पतिः प्रियो भवति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवती'त्यन्तस्सन्दर्भो यदि जीवपरस्स्यात्, तदा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य' इत्यादिविधिविशेषो न भवेत् । तत्र हि आत्मनो दर्शनसाधनतया श्रवणादिकं विधीयते । तत्र च आत्मन एव प्रियत्वं व्युत्पादनीयं , न त्वात्मव्यतिरिक्तानां पत्यादीनाम् । अतः एवमस्यार्थो वर्णनीयः—पत्युर्जायाप्रीतिविषयत्वं तस्येष्टसाधनमिति प्रसिद्धमेव । तत्त्वहं जायायाः प्रियस्स्यामिति यः पत्युः कामो वर्तते, तदर्थं न भवति, अपि तु आत्मन ईश्वरस्य यः कामोऽयं पतिरेतदीयजायां प्रति प्रियो भवत्विति, तदर्थः । अत्र च कामशब्दो यदि भावसाधनः सन् इच्छामात्रपरः, तदा जायादिप्रीतिविषयत्वस्य तादर्थ्यं तद्विषयसाधनतामादाय द्रष्टव्यम् । यदा तु काम्यमानवस्तुपरत्वं, तदा अनुपपत्तिरेव नास्ति । तथा चायमर्थः—पत्यादीनां जायादिप्रीत्या यत् सुखं, तदात्मन ईश्वरस्येच्छया भवतीति तादृशीच्छेश्वरस्य स्वाराधकविषयैव भवतीति स्वेष्टसाधनजायादिप्रीतिप्रयोजकेश्वरानुग्रहासिद्धये ईश्वर एवाराधनीयः श्रवणादिभिरिति । तथा च 'न वा अर' इत्यादिसन्दर्भगतस्य आत्मपदस्य परमात्मपरत्वात् कथं जीवेन भोक्त्रोपक्रम इति मनसि निधाय शङ्कते—**कस्मादिति** । परिहरति—**उपक्रमसामर्थ्यादिति** । अयं भावः—आत्मपदं यद्यपि जीवेश्वरसाधारणं, तथापि न वा अरे इत्यादिवाक्येषु जीवपरमेव । पत्यादिसमभिव्याहारेण तत्प्रतिसम्बन्धिनो जायाद्यात्मन एव स्वरसत आत्मशब्दादुपस्थितेः । अपि चात्र वैशब्दश्श्रूयते । स च प्रसिद्धिद्योतकः । तथा च सम्बोध्यां मैत्रेयीं प्रति प्रसिद्धो योऽर्थः, स एव वक्तव्यः । न चेश्वरसङ्कल्पाधीना सर्वस्येष्टप्राप्तिरिति वेदाध्ययनरहितया मैत्रेय्यावगन्तुं शक्यते । सार्वत्रिकप्रसिद्धिद्योतकत्वसम्भवे च न क्वाचित्कवैदिकमात्रप्रसिद्धिपरत्वमपि न्याय्यम् । तस्मादयमर्थः—सर्वमपि पत्यादिकम् आत्मनस्स्वस्य कामाय प्रियं भवति स्वेष्टोपयोगितया सर्वं प्रियं भवतीत्यर्थस्तु मैत्रेय्या अपि प्रसिद्ध एव । अत एव तदीयां दृष्टिमनुरुध्यैव 'न वा अरे पत्युः कामाय पतिः प्रियो भवती'त्युक्तम् । अयं हि तस्य पर्यायस्याभिप्रायः—पतिव्रतायास्तवाहं पतिः सर्वेभ्यः प्रियः । सोऽपि तु स्वशेषतयैव प्रियः तवेति । अतः उपक्रमस्य तावत् जीवविषयत्वं स्वारसिकम् । न च तथासति दर्शनादिवाक्यैकवाक्यता न स्यादित्युक्तं युक्तम् । यस्मादात्मार्थतया सर्वं प्रियं भवति, अत आत्मन एव निरुपाधिकं प्रियत्वम् । न हि तस्य कदाप्यप्रियत्वम् । पत्यादीनां त्वात्मानिष्टापादक-

तादृशायामप्रियत्वम् । अतस्सोपाधिकप्रियत्वं तेषामिति पत्यादिवाक्यार्थः पर्यवसितः । अमुमर्थं श्रुत्यन्तरमप्यनुवदति—'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयः प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'ति । ततश्च निरुपाधिकप्रीतिगोचरतया आत्मैव 'द्रष्टव्यश्श्रोतव्य' इति एकवाक्यतायां न काचिदनुपपत्तिः । ननूपक्रमे आत्मपदमस्तु जीवपरम् । तथाप्यात्मा वा अरे द्रष्टव्य इत्यादिवाक्येषु आत्मपदं परमात्मपरमेवास्तु । न च तथासति पूर्वसन्दर्भस्य तत्रैकवाक्यता न स्यादिति वाच्यम् । यस्मादात्मार्थतया सर्वं प्रियं लौकिकं वैदिकं वा पत्यादिकं , तस्मादात्मनो निरतिशयप्रीतिसाधनं यत् श्रवणं मननं निदिध्यासनं परमात्मविषयं, तदेव सम्पादनीयमित्येकवाक्यतोपपत्तेरित्यत आह—**प्रियसंसूचितमित्यादि** । आत्मपदस्योपक्रमगतस्यैव दर्शनादिवाक्ये श्रवणप्रत्यभिज्ञया अर्थैक्यावगतेः न भिन्नार्थत्वमुचितम् । न च 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेदं सर्वं विदितमि'ति उत्तरपरमात्मलिङ्गसमभिव्याहृततया आत्मपदश्रवणात् तस्य परमात्मपरत्वे तत्प्रत्यभिज्ञानादिदमपि परमात्मपरमिति वाच्यम् । प्रथमश्रुतपत्यादिवाक्यगतात्मपदप्रत्यभिज्ञानानुसारात् द्रष्टव्यादिवाक्यगतस्यात्मपदस्य जीवपरत्वे अवधारिते चरमश्रुतात्मपदप्रत्यभिज्ञायाः अनादरणीयत्वात् । एतेभ्यश्शरीराकारपरिणतेभ्यो भूतेभ्यः हेतुभ्यः समुत्थाय जन्म प्राप्य तान्येव भूतानि नश्यन्त्यनुसृत्य नश्यति । इदं च वाक्यं जन्ममरणलिङ्गात् जीवपरमिति भावः । ननु, इदं वाक्यं प्रकृतद्रष्टव्यात्मविषयकं माभूदित्याशङ्क्याह — **प्रकृतस्यैवेति** । अत्र वाक्ये इदंपदस्य सर्वनामतया प्रकृतात्मपरामर्शकत्वात् महद्भूतपदाभ्याम् 'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेद' इत्यादिवाक्यगतस्य महतो भूतस्य प्रत्यभिज्ञानाच्च । निश्वसितवाक्ये च अस्येत्यस्य प्रकृतात्मपरामर्शकत्वात् षष्ठे च मैत्रेयीब्राह्मणे तद्वाक्यस्थाने 'अयमात्मानन्तरोऽबाह्यः कृत्स्नो रसघन एवे'त्येवं प्रकृतमात्मपदमेव श्रूयते । **विज्ञातारमरे केन विजानीयादिति** । ननु, विज्ञातृपदेन विशिष्टज्ञानवान् सर्वज्ञः परमात्मापि वक्तुं शक्यत इति कथमिदं जीवासाधारणमिति शङ्कितुं युक्तम् । विज्ञानपदस्यान्तःकरणपरिणामभूतज्ञानविशेष एव रूढत्वात् अस्मिन्नेव प्रकरणे 'तदितर इतरं विजानाति तत् केन कं विजानीया'दित्यादौ जीवधर्मस्यैतेनाभिधानाच्च । तथा चोपक्रमोपसंहारैकरूप्येण वाक्यस्य जीवपरत्वेऽवधारिते मध्ये एकविज्ञानेन सर्वविज्ञानादिकमीश्वरलिङ्गतयावगम्यमानं यथाकथञ्चिद्व्याख्येयमित्याह—**तस्मादिति** । **भोक्त्रर्थत्वादिति** । यथा प्रधाने राजन्यवगते सर्वे अवगता एव भवन्तीति प्रधानभूतस्य स्तुत्यर्थमुच्यते, एवमिदमपि वाक्यं स्तुत्यर्थमिति भावः । ननु, तत्त्वमस्यादिवाक्यैर्जीवब्रह्मणोरभेदस्यावगततया जीवेश्वरानुयायिनश्चेतन्यस्यै-

कत्वाज्जीवधर्मा ईश्वरे वक्तुं शक्यन्त एवेति प्रत्यगभिन्नपरमात्मपरमेवेदं वाक्यं किं न स्यात्, न स्यात्। न हि तत्त्वमस्यादिवाक्यपर्यालोचनया जीवब्रह्मणोरभेदोऽवधारयितुं शक्यते। आत्यन्तिकाभेदाभ्युपगमे भेदघटितस्योद्देश्यविधेयभावस्यैवासम्भवेन तत्त्वमस्यादिवाक्यानां बोधकतैव न स्यात्। तस्मात् प्रकृतिविविक्तो भोक्ता जीव एव मुमुक्षुभिर्ज्ञेयतया मैत्रेयीब्राह्मणप्रतिपाद्य इति पूर्वपक्षः। अयं मैत्रेयीब्राह्मणसन्दर्भः परमात्मपर एवेति साध्यमध्याहृत्य वाक्यान्वयादिति सौत्रं हेतुं तत्र दर्शयितुमाकाङ्क्षामुत्थापयति—**कस्मादिति**। '**अमृतत्वस्य तु नाशास्ति वित्तेनेति' याज्ञवल्क्यादुपश्रुत्येति**। इदं कृत्वाचिन्तोद्धाटनम्। **श्रुतिस्मृतिवादा वदन्तीति**। 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यती'ति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय। तमेव विद्वानमृत इह भवति। नान्यः पन्थाः अयनाय विद्यत' इत्याद्याश्श्रुतयः, तदनुसारिण्यश्च 'ज्ञेयं यत्तत् प्रवक्ष्यामि यत् ज्ञात्वामृतमश्नुत' इत्याद्याः स्मृतयो निर्विशेषात्मज्ञानस्य मुक्तिहेतुतां वदन्ति, न तु साङ्ख्याभिमतप्रकृतिविविक्तात्मज्ञानस्य। प्रत्युत निर्विशेषात्मज्ञानादन्यस्य साधनतां वारयन्ति। अतोऽमृतत्वोपक्रमोपसंहारैकरूप्यान्निर्विशेषप्रत्यगभिन्नस्वरूपपरतैवास्य सन्दर्भस्यास्थेयेति भावः। तिष्ठतु तावदमृतत्वोपक्रमोपसंहारैकरूप्यम्। मध्यगतवाक्यपर्यालोचनयापि भोक्तृस्वरूपविलक्षणात्मपरतास्थेयेत्यभिप्रेत्याह—**तथात्मविज्ञानेन सर्वविज्ञानमिति**। उपपत्तिरूपतात्पर्यलिङ्गसद्भावात् न तस्य गौणत्वमास्थेयमित्याह — **न चैतदिति**। इत्यादिनेत्यादिपदेन 'क्षत्रं तं परादात् लोकास्तं परादुः देवास्तं परादुः सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदेदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि च भूतानि इदं सर्वं यदयमात्मे'ति वाक्यशेषो गृह्यते। तस्य तात्पर्यमाह—**यो हीति**। **आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावमिति**। आत्मनोऽन्यत् ब्रह्मसत्तातिरिक्तसत्तावच्चेत्यर्थः। अयमत्रोपपादनवाक्यस्याशयः—ब्रह्मविज्ञानेन वियदादिकं सर्वं कथं ज्ञातुं शक्यम्। न हि घटविज्ञानेन पटो विदितो भवतीति शङ्कायां परिहारो ब्रह्म तं परादादित्यादिना क्रियते। ब्रह्मविज्ञानेन वियदादिकं सर्वं तदा हि विज्ञातं न स्यात्, यदि घटपटयोरिव ब्रह्मप्रपञ्चयोर्भेदः, न तु तदस्ति। किं तु ब्रह्मैवानिर्वचनीयाभिर्वियदाद्यवस्थाभिः तत्तत्प्रपञ्चात्मना अवस्थितं सर्वमित्युच्यते। तथा च ब्रह्मक्षत्रादिशब्दार्थोऽपि तत्तज्जात्यवस्थितपिण्डोपहितं ब्रह्मैव। यथेदं रजतमिति प्रयोगे रजतपदार्थो रजतावस्थोपाहिता शुक्तिरेव ततश्च वियदादिप्रपञ्चे चिज्जडात्मरूपे सति ब्रह्मणि विदिते जडानामवस्थानामज्ञानेऽपि तदनुगतं ब्रह्म विदितमेव भवतीति। तथा च प्रतिज्ञाऽनुपपादनाय प्रवृत्ते 'ब्रह्म तं परादा'दित्यादिवाक्ये अन्यत्रेति

त्रल्प्रत्ययः ब्रह्मक्षत्रादिसामानाधिकरण्याय द्वितीयार्थे द्रष्टव्यः । सार्वविभक्तिकत्वात् । तथा चान्यत्र प्रथमार्थे प्रयोगो भवति 'समं समाधानमन्यत्राभिनिवेशा'दिति। अत एव 'इदं ब्रह्मेदं क्षत्र'मिति वाक्यशेषेऽपि पूर्वोक्तानां ब्रह्मक्षत्रादीनां सामानाधिकरण्यमेवात्मपदेन दृश्यते । ननु, सर्वस्य प्रपञ्चस्य ब्रह्मरूपतानुगतांशमादाय व्युत्पादनीया । तत्र सर्वासु वियदाद्यवस्थासु अनुगतिः ब्रह्मणः कुतः सिध्येदित्याशङ्कायां 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत' इति 'स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः' इत्यादिवाक्यान्याम्नातानि। तत्राद्यपर्यायस्यायमर्थः प्रकृतोपयोगी ग्राह्यः—'इदं सर्वं यदयमात्मे'त्यनेन योऽर्थ उक्तः स यथा विस्पष्टो भवति, तथा व्युत्पाद्यते दुन्दुभेर्हन्यमानस्येति । अत्राग्रहणेनेति पदमध्याह्रियते । दुन्दुभिपदं दुन्दुभिजनितशब्दसामान्यलक्षणार्थं हन्यमानपदमपि तत्तात्पर्यग्राहकम् । शब्दपदं दुन्दुभिजनितशब्दविशेषपरम् । ग्राह्यपदं तदर्थतात्पर्यग्राहकम् । तथा चायमर्थः—दुन्दुभिशब्दसामान्याग्रहणे तद्विशेषान् गृहणाय न शक्नुयात । एवं व्यतिरेकमुक्त्वान्वयमाह—दुन्दुभेस्तु ग्रहणेनेति। दुन्दुभिशब्दसामान्यस्य ग्रहणे तु शब्दः दुन्दुभिविशेषशब्दो गृहीतो भवति। एवं दुन्दुभ्याघातस्य वेररसप्रधानो दुन्दुभिशब्दो दुन्दुभ्याघात उच्यते । तत्सामान्यस्य ग्रहणे तदवान्तरविशेषा गृहीता भवन्तीति तदर्थः। एवं वीणापर्यायेऽप्यर्थो द्रष्टव्यः । तथाचायमर्थस्सिद्धः—यस्मिन् गृहीते यत् गृह्यते, अगृहीते च न गृह्यते, तत्तेष्वनुगतं भवति । यथा दुन्दुभिशब्दसामान्यं तद्विशेषेषु, एवं सद्रूपे ब्रह्मणि गृहीत एव वियदादिविशेषा गृह्यन्ते। अतस्तत् तेष्वनुगतमिति व्याप्तिवाक्यमध्याहृत्य दृष्टान्तदार्ष्टान्तिकयोस्साङ्गत्यं द्रष्टव्यम् । तदिदमाह—**दुन्दुभ्यादिदृष्टान्तैश्चेति**। तथाच नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा गौणीति वक्तुं शक्यते । अत्र सर्वविज्ञानोपपादकतयोपन्यस्तं सर्वात्मत्वं स्वातन्त्र्येणापि ब्रह्मलिङ्गं भवत्येव । तद्धि 'सर्वं खल्विदं ब्रह्मे'त्यादिषु ब्रह्मण एव प्रसिद्धमिति द्रष्टव्यम् । द्रष्टव्यस्यात्मनो ब्रह्मत्वे जगत्कारणत्वलिङ्गमाह—**अस्य महत इति** । तस्यैव ब्रह्मत्वे सर्वलयकारणत्वं लिङ्गान्तरमाह—**तथैकायनप्रक्रिययापीति** । नन्वेकायनप्रक्रियायां 'स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमित्यादिना, एवं सर्वेषां वेदानां वागेकायनमित्यन्तेन निश्वसितवाक्यानन्तरमाम्नातेन नदीसमुद्रदृष्टान्तपूर्वकं तत्तदिन्द्रियविषयाणां तत्तदिन्द्रियमायातनुमुक्तं, न त्वत्र कृत्स्नस्य प्रपञ्चस्य प्रकृतात्मायतनत्वमुक्तम्। अतः कथमेकायनप्रक्रिया तस्य ब्रह्मतां गमयेदिति चेत, उच्यते—एकायनप्रक्रिया प्रकृतात्मसम्बन्धिनी तावदवश्यमुपेया । तत्प्रकरणगतत्वात् ।

तत्प्रतिपादकयोर्निश्वसितसैन्धवखिल्यवाक्ययोः मध्यगतत्वाच्च । तथा च नदीनां समुद्रो लयाधिकरणत्वेन 'समुद्र एकायनमि'त्यत्र वाक्ये विवक्षितः। 'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाये'तिश्रुत्यन्तरार्थोद्बोधात् तदनुसारेण एवं सर्वेषां स्पर्शानामित्यादिदार्ष्टान्तिकवाक्यान्यपि लयप्रतिपादकानि विवक्षितानि । न च विषयाणामिन्द्रियाणि लयाधिकरणानीति त्वगादिपदैस्स्पर्शादीनां सूक्ष्मावस्था विवक्ष्यन्ते । अतीन्द्रियत्वसामान्यात् । तथाचैकायनप्रक्रियया नदीनां यथा समुद्रे विलयः, एवं स्थूलानां स्पर्शादीनां सूक्ष्मावस्थासु लयो भवतीति प्रतिपादितं भवति । अयं च सर्वोऽपि ब्रह्मणो लयाधारत्वे दृष्टान्तः । तत्र लयाधारत्वं व्युत्पादयितुं 'एवं सर्वेषामात्मैकायनमि'ति वाक्यमध्याहर्तव्यम् । एवं सर्वात्मत्वादिना ब्रह्मणः सप्रपञ्चत्वेन विकारित्वे निर्विकारत्वप्रतिपादकागमविरोधे प्रसक्ते सप्रपञ्चत्वस्यारोपितत्वप्रतिपादनार्था 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति षष्ठे मैत्रेयीब्राह्मणे श्रुतिः । तदर्थं संगृह्णाति—**अनन्तरमित्यादिना**। यथा सैन्धवपिण्डः बहिरन्तर्वा लवणरसातिरिक्तरसान्तररहितः, तथा आत्मापि बहिरन्तरं वा प्रज्ञानव्यतिरिक्तस्वरूपरहितः कृत्स्न एव ज्ञानस्वरूपः । तथा च षष्ठ एव मैत्रेयीब्राह्मणान्ते श्रूयते—'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यत' इत्यादिना सर्वप्रपञ्चप्रतिषेधः। तथा च मैत्रेयीब्राह्मणमध्यगतः कृत्स्नोऽपि सन्दर्भोऽध्यारोपापवादाभ्यां भोक्तृस्वरूपातीतविशुद्धचैतन्यमात्रप्रतिपादनपर इत्युपसंहरति—**तस्मात् परमात्मन इति** ॥१९॥

इदानीमुपक्रमगतस्य भोक्तृनिर्देशस्य गतिं वक्तुं त्रिसूत्रीमवतारयति—**यत्पुनरुक्तमित्यादिना** ॥

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥२०॥

अयमत्र परिहाराभिप्रायः—उपक्रमोपसंहारयोर्यद्यपि जीवप्रतिपादनं दृश्यते, तथापि न तदनुसारेण मध्यगतमनेकतात्पर्यलिङ्गोपेततया अन्यथा व्याख्यातुमशक्यं परमात्मप्रतिपादकवाक्यजातं लक्षणया भोक्त्रभिप्रायं व्याख्यातुं युक्तम्। तथा च उपक्रमादिगतं जीवप्रतिपादनमपि यदि परमात्मपरतया व्याख्यातुमयुक्तं भवेत्, तदा परं वाक्यभेद एवास्तु, न तु तदस्ति । जीवधर्माणां भोक्तृत्वादीनां परमात्मन्यपि विद्यमानतया भोक्तृत्वादिना परमात्मन एव निर्देशसम्भवात्। एतावति सर्वमतसाधारण्येन परिहारे स्थिते आश्मरथ्यकल्पितपरिभाषया प्रथममाह—**अस्त्यत्र प्रतिज्ञेति** । अभेदांशेनेत्यंशपदात् तन्मते जीवब्रह्मणोर्भेदाभेदौ सूचि-

तौ ! न च तयोर्विरोधः । मृद्घटयोर्भेदाभेदौ हि दृष्टौ । अत्यन्ताभेदे हि कार्यकारणभाव एव न स्यात् । अत्यन्तभेदे च मृदेव घटो भवतीति सामानाधिकरण्यप्रत्ययो निरालम्बन एव स्यात् । ब्रह्मणोऽपि जीवस्य भेदो 'नाहं सर्वज्ञ' इति प्रत्यक्षसिद्धः। अभेदश्च तत्त्वमसीत्यादिवाक्यसिद्धः । ततः प्रमाणबलात् मृद्घटयोरिव जीवब्रह्मणोरपि भेदाभेदावुपेयौ । तयोर्भावाभावरूपतया प्रसक्तस्य विरोधस्य परिहारार्थं त्ववच्छेदकभेद आस्थेयः । मृद्घटयोर्मृत्त्वेनाभेदः, घटत्वरूपावच्छेदकभेदाद्भेदः, जीवब्रह्मणोस्तु चिद्रूपत्वेनाभेदः, जीवत्वेश्वरत्वरूपावच्छेदकभेदाद्भेदः । एवं स्थिते द्रष्टव्यस्यात्मपदोदितस्य परमात्मनः स्वधर्मेणैवोपक्रमं विहाय यज्जीवधर्मेणोपक्रमणं नाहं सर्वज्ञ' इति लोकप्रतीत्या जीवब्रह्मणोर्भेदस्य सिद्धत्वात् ब्रह्मविज्ञानेन जीवविज्ञानासम्भवात् कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञेति शङ्का माभूदिति । जीवधर्मेण परमात्मोपक्रमे हि जीवधर्माणां ब्रह्मगतताप्रतिपादनात् शास्त्रीयस्तयोरभेदः सूचितो भवतीति प्रतिज्ञा समर्थिता भवति ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

एकस्यैव भेदाभेदौ विरुद्धौ । न हि मृद्घटयोर्भेदाभेदौ । घटो नाम पृथुबुध्नत्वाद्यवस्थाविशिष्टं मृद्द्रव्यमेव । तत्र द्रव्यांशे अत्यन्ताभेद एव । तदालम्बनं च सामानाधिकरण्यम् । कार्यता तु प्रागसत्या पृथुबुध्नत्वाद्यवस्थया विशिष्टत्वेन । सा चावस्थात्यन्तभिन्नैव । तस्याश्च मृद्द्रव्येण तादात्म्याख्यस्वरूपविशेषसम्बन्धो भवति । अतस्तत्र भेदाभेदयोर्भिन्नधर्मिकत्वमेवास्थेयम् । अस्त्वेवं मृद्घटयोः । जीवब्रह्मणोस्तु प्रत्यक्षसिद्धभेदयोः तत्त्वमसीत्यभेदः प्रतिपाद्यत इति चेत्, अस्तु नाम । तथापि न तयोस्समानकालतामुपेत्यावच्छेदकभेदेन परिहारस्समाश्रयणीयः । शास्त्रीयस्यार्थस्य शास्त्रोक्तगत्यैव समर्थनीयत्वात् । शास्त्रेण च कालभेदतो विरोधपरिहार आश्रितः । 'आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥' इति श्रुत्यापि च मुक्तिकाल एव जीवस्य परेणैक्यमाम्नातमित्याह—श्रुतिश्चैवमिति । तथा च तत्त्वमसीतिवाक्यमपि भविष्यद्वृत्त्या अभेदपरं व्याख्येयम् । अत्र मते मुक्तिकालमभेदमाश्रित्य जीवत्वं परमात्मनः प्रागवस्थैव भवतीति भोक्तृत्वं भूतपूर्वगत्या परमात्मन्येव द्रष्टव्यमिति नोपक्रमविरोधः । **क्वचिच्चेति**। तथा च दृष्टान्तानुसारात् जीवेऽपि नामरूपादिकं धर्मिसमसत्ताकमिति भावः । एतेन भिन्नयोरेव द्रव्ययोः कथमभेद इति शङ्का निरस्ता । शास्त्रप्रामाण्यात् भिन्नानामेव समुद्रात् नदीनां तदैक्यस्य कालविशेषे दर्शनाच्च ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥२२॥

तत्त्वमसीत्यादिवाक्यं हि न भविष्यद्वृत्त्या व्याख्यातुं शक्यम् । तथात्वे नियामकाभावात् । न चोदाहृतवचनानुसारेण तथाकल्पनम् । 'आमुक्तेर्भेद एव स्यादि'त्यागमवचनं विष्णुपुराण एव दूषितं—'परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥' इति । तत्रान्यद्द्रव्यं हीत्यादिवाक्यशेषानुसारेण प्राग्भिन्नयोरेव सतोर्जीवपरमात्मनोरभेदाख्यो योगो भवतीत्येतत् मिथ्येति हि पूर्वार्धार्थः प्रतीयते । न च नदीनां भिन्नानामेव सतीनां समुद्रेणैक्यं दृष्टान्तवाक्ये प्रतिपादितमिति वाच्यम् । यदि हि संस्थानविशेषो नदीशब्दार्थः, स समुद्रसम्पर्कात् नष्ट एवेति कथमैक्यं, संस्थायिनां तु परमाणूनां न समुद्रेणैक्यम् । तत्सम्पर्कदशायामपि भिन्नानामेवावस्थानात् । अतो यथा नदीनां समुद्रप्राप्त्या नामरूपपरित्यागः, एवं जीवस्यापि नामरूपपरित्यागः परमात्मप्राप्तावित्येतावदेव 'तथा विद्वान्नामरूपा'दित्यादिवचनार्थो ग्राह्यः । अतः औडुलोम्युक्तगत्या भेदाभेदप्रतीत्योः विरोधः परिहर्तुं शक्यः । ननु, तर्हि वियदादिवज्जीवः परमात्मनः कार्यमस्तु, 'तत्त्वमसी'त्यादिसामानाधिकरण्यं तु सत्येव भेदे अभेदांशमादायेत्याशङ्क्याह—**न चेति** । सत्यपि कार्यकारणभावे न भेदाभेदौ, मृद्घटयोस्तदसम्प्रतिपत्तेरित्युक्तम् । **प्रतिपिपादयिषितार्थानुसारादिति** । भेदो हि प्रत्यक्षादिसिद्धः, न श्रुत्या प्रतिपिपादयिषितः । अज्ञातार्थबोधनस्वरसत्वाच्छ्रुतेः । अतो 'य आत्मनि तिष्ठ'न्नित्यादौ भेदानुवादमात्रं 'नान्योऽतोऽस्ती'त्यादिवाक्यैः प्रतिषेधार्थम् । न च 'नान्योऽतोऽस्ती'त्यादावत्यन्तमिति पदाध्याहारो युक्तः । तस्मात् भेदोऽनृतः, अभेदस्तु शास्त्रप्रतिपाद्यः परमार्थ इत्येव व्यवस्थाश्रयणीया । जीवविषयकं लिङ्गान्तरं परमात्मनि योजयितुं उक्तामेव त्रिसूत्रीं पुनर्योजयति—**यदप्युक्तमित्यादिना** । **नैष दोषः विशेषविज्ञानविनाशाभिप्रायमेतदित्यादि** । 'अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्ती'ति चतुर्थे पाठः पर्यनुयोगवाक्ये । षष्ठे तु 'अत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामी'ति पर्यनुयोगवाक्ये पाठः । 'स होवाच न वा अरे अहं मोहं ब्रवीमि अलं वा अर इदं विज्ञानाये'ति परिहारवाक्यपाठश्चतुर्थे । 'न वा अरे अहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवती'ति षष्ठे परिहारवाक्यपाठः । याज्ञवल्क्येनात्मनो विज्ञानघनत्वे कथिते न प्रेत्य संज्ञास्तीति विज्ञानविनाशे च कथिते मैत्रेय्या पर्यनुयुक्तं—ज्ञानरूपस्यात्मन एव चेत् भूतनाशानुसारिनश्वरत्वं, कथं तर्हि तस्य मोक्षफलभागिता । अतो 'न प्रेत्य संज्ञास्ती'तिवाक्येनोक्तशङ्काकलुषितान्तःकरणाया व्यामोहः ममाभवदिति तया पर्यनुयोगे कृते नाशकारणरहितो-

ऽविनाशी अयमात्मा उच्छित्तिशाली न भवति । न प्रेत्य संज्ञास्तीति मद्वाक्यं तु अन्तःकरणादिसंसर्गरूपोपाधिकृतत्वात् विशेषविज्ञानानां तल्लये विशेषविज्ञानानामभाव इत्यभिप्रायम् । अतो मद्वाक्यं तव विशिष्टज्ञानायालम् । अन्तःकरणाद्युपाधिकत्वं विशेषविज्ञानानां च संसारदशायां तेषु सत्स्वेव द्रष्टृदृश्यदर्शनव्यवहारः, मोक्षे तदभावे द्रष्ट्रादिव्यवहाराभाव इत्यन्वयव्यतिरेकयोः सद्भावादिति 'यत्र हि द्वैतमिव भवती'त्यादिनोत्तरसन्दर्भेण व्यवस्थाप्यते । तथा 'चैतेभ्यो भूतेभ्यस्समुत्थाये' त्यादिसन्दर्भो मोक्षदशायां परमात्माभेदाभिव्यक्तिपर इति न तद्वाक्यं निर्विशेषप्रकरणाननुगुणमिति । **काशकृत्स्नीयेनैव दर्शनेनेति** । तस्यैव प्रतिपिपादयिषितार्थानुसारित्वादिति भावः । अपि च तद्वाक्यं कर्तृत्वादेः पारमार्थिकत्वं वदतोः आश्मरथ्यौडुलोम्योः मते न प्रक्रमपर्यालोचनया योजयितुं शक्यमित्यभिप्रेत्य प्रक्रमसहितस्य वाक्यस्य तात्पर्यमाह—**अपि चेति** । अविद्याविषये अविद्यानिबन्धनायां द्वैतावस्थायाम् । तस्याश्चाविद्यकत्वं 'यत्र हि द्वैतमिवे'तीवकारेण द्योत्यते । विद्याविषये विद्यानिबन्धनायामात्ममात्रपरिशेषावस्थायाम् । आत्ममात्रपरिशेषिता च विद्यावस्थायामित्येतत् 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येव प्रोच्यते स एषोऽकलोऽमृतो भवती' त्यादिवचनैरवगम्येत । पारमार्थिकत्वमते इवशब्दो विद्यया आत्ममात्रपरिशेषिता च न भवेदिति भावः । **भूतपूर्वगत्येति** । मोक्षदशायां 'न प्रेत्य संज्ञास्ती'ति पूर्ववाक्येन विशेषविज्ञानाभावस्य उपक्षिप्तत्वादिति भावः । ननु, जीवेश्वराभेदप्रकरणे 'विज्ञातारमरे केन विजानीयादि'त्यतः पूर्ववाक्ये 'येनेदं सर्वं विजानाति, तं केन विजानीयादि'ति जीवात् भिन्नतया परमेश्वरः किमर्थं प्रतिपाद्यते । येनेश्वरेण जीव इदं सर्वं विजानाति, तं परमेश्वरं केन विजानीयादिति हि तदर्थः । तस्मादिदं वाक्यमत्यन्ताभेदवादिनोऽननुगुणमिति चेत्, न । एतादृशशङ्कानिवृत्त्यर्थमेव हि उत्तरवाक्येनेदं वाक्यं व्याख्यायते । उत्तरवाक्ये हि विज्ञेयत्वं विज्ञातृपदोदितजीवस्यैवाक्षिप्यते । तदनुसारेण पूर्ववाक्येऽपि विज्ञेयत्वेनाक्षिप्यमाणो जीव इति स्थिते येनेति तृतीया प्रथमार्थे भविष्यति । अथ वा येन विशुद्धसाक्षिणा अयं प्रमाता विजानातीत्यर्थो द्रष्टव्यः । न च पूर्ववाक्यानुसारेणोत्तरवाक्य एव विज्ञातृपदं परमात्मपरमस्त्विति वाच्यम् । तथासत्युत्तरवाक्यवैयर्थ्यापत्तेः । मत्पक्षे तु व्याख्यानरूपतया न वैयर्थ्यम् । एवंसति 'येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै त'दिति काठकमन्त्रेणाप्यैकार्थ्यं लभ्यते । तत्र हि येन रूपादिकं जानाति, एतदेव त्वत्पृष्टमिति प्रतिपादिते यत्पदार्थः क इति शङ्कायामेतेनैव विजानाति किमत्र यत्पदार्थे ज्ञातव्यं

परिशिष्यत इति मध्यगतेन वाक्येन प्रतिपाद्यते। तत्रैतत्पदार्थः प्रत्यङ्ङेवापरोक्षत्वात् 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदि'ति पूर्वमन्त्रप्रस्तुतत्वाच्च सर्ववेदान्तवादिभिरभ्युपगन्तव्य इति। शास्त्रेण हि जीवेश्वरयोरभेदे प्रतिपादिते प्रत्यक्षसिद्धस्य भेदस्य यथाशास्त्रं व्यवस्था आस्थेया। तत्रावच्छेदकभेदेन कालभेदेन वा व्यवस्थायामाश्रीयमाणायां भेदनिषेधकवाक्यानां भेदनिन्दावाक्यानां च क्लेशः। आविद्यकत्वे तु भेदस्योच्यमाने न कस्यापि क्लेशः। अतः आविद्यकत्वात् भेदस्य न शास्त्रीयाभेदविरोधितेत्येव पक्षः समीचीनः । अपि चोपबृंहणानुसारेण भेदाभेदविरोधपरिहारसम्भवे स्वकपोलकल्पनया न किञ्चिदास्थेयम् । उपबृंहणं च भेदस्याविद्यकत्वेऽस्ति । तथा हि विष्णुपुराणे—'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत् । विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥ सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तिदृष्टिभिरात्मापि तथैकस्सन् पृथक्पृथक् ॥ एकस्समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत । सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम् ॥' 'तत्याज भेदं परमार्थदृष्टिः।' 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति। न च जीवब्रह्मणोर्भेदं तात्त्विकमुपेत्यैवमादिवचनजातं क्लेशेन योजयितुमुचितम् । निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थविज्ञानानुपपत्तेश्चेति । निरपवादत्वं शास्त्रीयापवादरहितत्वम् । सुनिश्चितत्वम् अर्थस्य युक्तिसम्भावितत्वम्। भेदाभेदविज्ञानं भेदनिषेधकशास्त्रेणापोद्यते। न च युक्त्या सम्भाव्यते स पक्षः। यन्मते संसारदशायामपि भेदाभेदौ, तेन वक्तव्यं—मोक्षदशायां भेदोऽनुवर्तते, न वेति । यद्यनुवर्तते, 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिशास्त्रविरोधः। न चाभेदांशमादाय तदुपपत्तिः। तस्य ज्ञानात्प्रागपि विद्यमानतया ज्ञानानन्तरं तत्कथनवैयर्थ्यात्। यदि नानुवर्तते, तथासति ज्ञानबाध्यत्वेन मोक्षदशायामप्यनुवर्तमानतया पारमार्थिकेन स्वात्यन्ताभावरूपेणाभेदेन प्रपञ्चदशायां समानाधिकरणस्य भेदस्यानृततया न सिद्धान्ताद्वैषम्यम् । न च कालभेदेन भेदाभेदौ व्यवस्थिताविति पक्षोऽपि युक्तिक्षमः। तथा हि भिन्नस्याभेद इति वदता वक्तव्यं—किं स्थितस्यैव जीवस्य मोक्षदशायामभेदः, उत नष्टस्य। नाद्यः। सतो जीवस्य प्राग्भिन्नस्य मोक्षदशायामप्यभेदासम्भवात् । न हि घटपटयोर्भिन्नयोः प्राक् सतोः कदाचिदप्यभेदो दृष्टः। नापि नष्टस्याभेदः सम्भवति । असतो विद्यमानेनैक्यासम्भवात् । अतो जीवस्य ब्रह्मणा नित्यसिद्धोऽत्यन्ताभेद एषितव्यः । **स्थितप्रज्ञलक्षणस्मृतेश्चेति**। 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्॥' इत्यादिवचनेषु विद्वान् स्थितप्रज्ञत्वेन निरूप्यते। प्रज्ञायाः स्थितत्वं च सुनिश्चितार्थविषयत्वं निरपवादत्वं चेति भावः। ननु, जीवो

यद्यशनायाद्यतीतब्रह्मस्वरूप एव सदा भवेत्, तदा तथा संसारदशायामप्युपलभ्येतेत्यत आह—**न हि सत्यं ज्ञानमिति** । बुद्धिरूपगुहाप्रविष्टत्वेन आवृतस्वरूपत्वात् संसारदशायां तथा नोपलभ्यत इति भावः । ननु, ब्रह्माभेदं स्वक्रियत्यावृतत्वात् स नोपलभ्यत इति किमर्थं कल्प्यते । अभेद एव मास्त्वित्यत आह—**न च ब्रह्मणोऽन्यदिति** । प्रमाणसिद्धस्यार्थस्य हि उपपादनं न्याय्यं, न त्वनुपपत्तिप्रतिभानमात्रेण तत्परित्यागो न्याय्य इति भावः । **न्यायेन च न सङ्गच्छन्त इति** । कृतकस्यापि नित्यत्वे 'यत्कृतकं, तदनित्यमि'ति न्यायेनासङ्गमनमित्यर्थः ॥ २२ ॥

इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

ननु, 'जन्माद्यस्य यत' इति सूत्रेणैव ब्रह्मणो जगन्निमित्तत्वोपादानत्वे समर्थिते । अतो ब्रह्मोपादानत्वसमर्थनमत्र किमर्थं क्रियत इत्याशङ्क्य उपादानत्वमेव शङ्काविशेषनिराकरणपूर्वकमत्र व्यवस्थाप्यते । तथा चेदमधिकरणं जन्मादिसूत्रावशिष्टार्थकथनमिति परिहारं वक्तुं वृत्तं कीर्तयति—**यथाभ्युदयहेतुत्वादिति** । जिज्ञासासूत्रार्थकीर्तनं जन्मादिसूत्रस्य शास्त्रादौ कर्तव्यतासूचनार्थम् । ब्रह्मजिज्ञासायां प्रतिज्ञातायां हि प्रमाणादिषु बहुषु विचार्येष्वपि अभ्यर्हितत्वात् स्वरूपमेव प्रथमतो निरूपितम् । अतो जन्मादिसूत्रं नाध्यायान्ते कृतम् । ननु, तर्हि इदमेवाधिकरणं तच्छेषत्वात् तत्समीपे कुतो न कृतं, 'शास्त्रयोनित्वादि'त्यारभ्य कृतस्सर्वोऽपि विचारः उक्तलक्षणस्यासम्भवादिदोषनिरासायैव, न तु स्वातन्त्र्येणेति द्योतयितुम् । प्रकृत्यधिकरणस्याध्यायान्तकरणे हि कृत्स्नस्याप्यध्यायस्य लक्षणविचारोपक्रमोपसंहारान्तर्गततयोक्तार्थद्योतनं सुखेन भवति । शास्त्रयोनित्वादित्यारभ्य कृतस्य ब्रह्मप्रमाणविचारत्वेन स्वत एव प्रतिज्ञासङ्गतत्वात् किमर्थं जन्मादिसूत्रोक्तलक्षणमुखनिरीक्षणमिति तु न शङ्कनीयम् । 'ब्रह्मविदाप्नोति, परम् अधीहि भगवो ब्रह्मे'त्यादौ ब्रह्मनिरूपणमुपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्त' इति लक्षणस्यैव प्रथममुपन्यासेन श्रोतव्य इति विचारविधेः लक्षणमुखेनैव ब्रह्म विचारणीयमिति नियमपर्यवसानात् । **ईक्षापूर्वककर्तृत्वश्रवणादिति** । ननु, यक्ष्य इतीक्षापूर्वकं यागकर्तुरेव यागं प्रति प्रकृतित्वं दृष्टम् । अनेककारणकत्वं तु जगतो निमित्तोपादानयोरभेदवादिनाप्युपेतम् । मायादृष्टादीनामन्येषामपि कारणानामुपगमात् । यथा च 'तमीश्वराणां परमं महेश्वरमि'त्यादिशास्त्रादीश्वरत्वं प्रसिद्धं, तथैकविज्ञानेन सर्वविज्ञान-

प्रतिज्ञानात् मृदादिदृष्टान्तैश्चोपादानत्वमपि शास्त्रेणैव प्रसिद्धम् । अतस्तदपि स्वीकर्तव्यम् । उपादानोपादेययोः सारूप्यानपेक्षा तु 'न विलक्षणत्वा'दित्यधिकरणे व्यवस्थापयिष्यते । कथं च 'तदैक्षत बहु स्यां प्रजायेये'त्यादिवचनानामुपादाननिमित्ताभेदप्रतिपादकानां निमित्तत्वमात्रे पर्यवसानम्, उच्यते—यागादौ गुणे कर्तुरेवोपादानत्वे सत्यपि घटादिद्रव्यकर्तुः कुलालस्य घटं प्रत्युपादानत्वं न दृष्टम् । अतो 'द्रव्योपादानं यत्, तत् कर्तृभिन्न'मिति नियमस्तावत् सिद्धः । न चायं नियमः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिनान्यथाकर्तुं शक्यते । न ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सिद्धान्तेऽपि यथाश्रुता आस्थातुं शक्यते । तथात्वे ब्रह्मविदो घटपटादिषु कुत्रापि संशयो न स्यात् । अतो विवक्षाविशेष आस्थेयः । तथा च अमात्यादिषु दृष्टेषु यो धनलाभः, स राजदर्शनेनैव भविष्यतीत्यभिप्रायेण राजनि दृष्टे सर्वे दृष्टा एव भवन्तीति प्रयुज्यते, तथा ब्रह्मदर्शनेन सर्वकामावाप्तेः ब्रह्मणि विदिते सर्वं विदित'मित्युच्यते । अत एव 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञात'मिति अश्रुतत्वादिकीर्तनपूर्वकमेव श्रुतत्वादिकं प्रतिपाद्यते । नापि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दिति वाक्यशेषे मृत्पिण्डलोहमणिनखनिकृन्तनानां दृष्टान्तानामुपात्तत्वाद्दार्ष्टान्तिकेऽपि उपादानतयैवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा व्युत्पादनीयेति निर्बन्ध आस्थेयः । मृत्पिण्डादीनां घटादिवत् मृदाद्यवस्थाविशेषत्वेन घटादिषूपादानत्वाभावात् कार्यकाले तत्तादात्म्येनैवानुवर्तमानस्य द्रव्यस्य उपादानत्वात् मृत्पिण्डादेरतथात्वात् । नापि मृत्पिण्डादौ विदिते सर्वं मृण्मयादिकं विदितं भवति । अतो दृष्टान्ताः स्थालीपुलाकन्यायेन व्युत्पादनीयाः । तस्मात् न छान्दोग्यगतैकविज्ञानेन सर्वविज्ञानादिकम् उपादानतायां प्रमाणम् । अत एव मैत्रेयीब्राह्मणगतम'प्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदित'मित्यादिकं नोपादानतायाम् आत्मनः प्रमाणम् । न चोत्तरवाक्ये तदुपपादकं सर्वात्मत्वमुपन्यस्यते । 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेदे'त्यादिषु त्रल्प्रत्ययप्रयोगेण सर्वस्यात्माधिकरणताया एव व्युत्पादनात् त्रल्प्रत्ययस्य सप्तम्यर्थ एव स्वारस्या'दिदं ब्रह्मे'त्यादि 'इदं सर्वं यदयमात्मे'त्यन्तेन वाक्यशेषेण सामानाधिकरण्यमपि सर्वस्यात्मना दृश्यत इति चेत्, उपक्रमानुसारेण तदप्याधाराधेयभावप्रतिपत्तिप्रतिपादनपरं लक्षणया भविष्यति । नापि दुन्दुभ्यादिदृष्टान्तैः तादात्म्यं प्रतिपाद्यते । यदि हि दुन्दुभिशब्दसामान्यज्ञान एव ज्ञायमानानां दुन्दुभिशब्दविशेषाणां तच्छब्दसामान्येन तादात्म्यं दृष्टमित्येवमर्थः तत्र स्वरसतोऽवगम्येत, तदा खलु तद्वाक्यं तादात्म्यव्युत्पादनोपयोगि भवेत् । न च सोऽर्थः तत्र स्वरसतः प्रतीयते । अध्याहारादिना तदर्थस्य प्रतिपादनीयत्वात् । अयं हि तत्र स्वरसतोऽर्थः प्रतीयते—दुन्दुभौ हन्यमाने दुन्दुभिशब्दप्रतिरुद्धा अन्ये बाह्याश्शब्दा ग्रहीतुं न

शक्यन्ते । दुन्दुभौ तदाहन्तरि वा निरुद्धे ते शब्दा गृहीता भवन्तीति । अस्ति चास्यार्थस्य प्रकृतोपयोगः । यदि सर्वस्याधिकरणमात्मा, तदा तथात्वेन कुतो न गृह्यत इति शङ्कायां दुन्दुभिशब्दप्रतिरुद्धा बाह्याश्शब्दाः यथा न गृह्यन्ते, तत्प्रतिरोधे च गृह्यन्ते, एवमिन्द्रियाणां बाह्यविषयप्रवृत्तिरूपप्रतिबन्धकात् न तथात्वेन गृह्यते, तन्निरोधे गृहीतो भविष्यतीति प्रकृतोपयोगसम्भवात् । न चात्मनः सर्वाधिकरणत्वमनुपपन्नमिति शङ्कनीयम् । तच्छङ्कानिवृत्त्यर्थमेव हि 'इदं सर्वं यदयमात्मे'ति वाक्यं प्रवृत्तम् । तेन हि 'सर्वं समाप्नोषि ततोऽसि सर्व' इति स्मृत्यनुसारेण सर्वगतत्वं व्युत्पाद्यते । तथा च सर्वगतत्वादात्मनः सर्वात्मनीत्युच्यत इति । एवं चान्यत्रापि सर्वात्मत्वप्रतिपादकवाक्यानां सर्वगतत्वमेवार्थ इति न तैरप्यात्मनः उपादानत्वं सिध्यति । एवं च यत्पूर्वाधिकरणे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मुख्यत्वमाश्रित्य मैत्रेयीब्राह्मणस्य परमात्मपरत्वमुक्तं, तदाक्षिप्तं भवतीत्यस्याधिकरणस्य पूर्वेणाधिकरणेनाक्षेपिकी सङ्गतिर्द्रष्टव्या । तदैक्षत 'बहु स्यां प्रजायेये'त्येतदपि न मुख्यया वृत्त्या व्याख्यातुं शक्यम् । प्राक्सिद्धस्यैकस्य ब्रह्मणः बहुत्वजननयोः असम्भवात् । अतः 'प्रप्रजया पशुभिः मिथुनैर्जायते प्रजायते हवै प्रजया पशुभिः य एवं वेदे'त्यादौ यथा प्रजादीनामुत्पत्तिः स्वामिन एवोत्पत्तिरित्युपचर्यते, एवं जगत उत्पत्तिः तत्कर्तुरित्युपचर्यत इति नेदं वाक्यमुपादानत्वे प्रमाणम् । न च 'शृङ्गाच्छरो जायत' इत्यादौ पञ्चम्या उपादानत्वमर्थः, एवं 'आत्मन आकाशः सम्भूत इत्यत्रापि पञ्चम्युपादानत्वविषया स्यादिति वाच्यम् । पुत्रात् प्रमोदो जायत इत्यादौ निमित्तत्वेऽपि पञ्चमीदर्शनेन उपादानार्थकत्वस्यैव नियतत्वाभावात् । न च 'यत्प्रयन्त्यभिसंविशन्ती'ति लयाधारत्वमात्मनः प्रतिपाद्यते । नेदमुपादानादन्यस्य सम्भवतीति वाच्यम् । भूतले घटो ध्वस्त इति प्रतीत्या ध्वंसापरपर्यायस्य लयस्य उपादानादन्यत्रापि दर्शनेन तथानियमाभावात् । न च निर्विकारस्य उपादानत्वं सम्भवति । विकारोनामोपजनापायशालिन्यो घटपटाद्यवस्थास्तादात्म्यापृथक्सिद्धत्वाद्यपरपर्यायेण तार्किकाभिमतसमवायस्थानाभिषिक्तेन स्वरूपसम्बन्धविशेषेण विकाराश्रयो ह्युपादानमित्युच्यते । यथा मृत्तन्त्वादि । ब्रह्म च 'अस्थूलमनण्वि'त्यादिश्रुतिभिः 'कूटस्थमचलं ध्रुव'मित्यादिस्मृतिभिश्च निर्विकारमवगम्यते । न च विकारस्य मिथ्यात्वात् न निर्विकारश्रुतिविरोध इति वाच्यम् । एवं हि विकाराश्रयत्वं उपादानत्वं मिथ्येति स्वीकारे पूर्वपक्षात् को विशेषस्स्यात् । नास्तित्वापरपर्यायत्वात् मिथ्यात्वस्य । अतो न ब्रह्मण उपादानत्वं सम्भवतीत्यभिप्रेत्योपसंहरति—**पारिशेष्यादिति** । **स्मृतिप्रसिद्धामिति** । अत्र ब्रह्मणो निमित्तत्वं स्वीकृत्यैव पूर्वपक्षस्य प्रवृत्तत्वात् सेश्वरसाङ्ख्यस्मृतिपरः स्मृतिशब्दः । स च श्रुतेरप्युपलक्षणम् । श्रुताव-

पि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति मायाशब्दितस्यैव जडस्य तत्त्वस्योपादानत्वमुच्यते। ब्रह्मणस्तु तदाधारत्वमात्रमुच्यते। 'प्रकृतिश्चे' ति सूत्रगतचकारार्थमाह—**निमित्तकारणं चेति**। **प्रतिज्ञा तावदिति**। यद्यपि ब्रह्मणि विदिते विशेषास्तत्तदसाधारणस्वरूपेणाज्ञाता एव भवन्ति, तदभिप्रायेणैव 'येनाश्रुतं श्रुतं भवती' त्युच्यते अश्रुतत्वादिकमपि। ब्रह्मविज्ञानेन श्रुतत्वादिकं तु उपादानतां विना नोपपादयितुं शक्यते। राजविज्ञानेनामात्यादिज्ञानवाक्यप्रकाराश्रयणे तु श्रुतत्वादिवचनमत्यन्तं बाधितं भवेत्। उपादानत्वे तु कार्यकोटौ ब्रह्मांशस्यापि प्रविष्टत्वात् सर्वशब्दार्थो ब्रह्मापि भवति। घटपटादिकार्यं हि नावस्थामात्ररूपम्, अपि तु अवस्थावदुपादानस्वरूपमेव। यथा हि घटसूक्ष्मावस्था मृच्चेत्यंशद्वयमुपादानकोटौ निविष्टम्, एवं घटस्थूलावस्था मृद्द्रव्यं चेत्यंशद्वयं कार्यकोटिनिविष्टम्। अत एव मृदेव घटोऽभवदिति लौकिकप्रत्ययः। तथा च ब्रह्मणि श्रुते मते विज्ञाते विशेषात्मना अश्रुतममतमविज्ञातमपि कार्यं कारणस्वरूपेण श्रुतं मतं विज्ञातं भवतीति वाक्यं मुख्यार्थकमेव भवति। उपादानकारणाव्यतिरेकात् कार्यस्येत्युपादेयनिविष्टोपादानांशाभिप्रायेणोक्तम्। **दृष्टान्तोऽपीति**। प्रतिज्ञा तावत् मृत्पिण्डादिदृष्टान्तैः उपपाद्यते। अतः सा प्रतीयमाने मुख्येऽर्थे उपपत्तिरूपतात्पर्यलिङ्गसत्त्वात् न लक्षणया अन्यथा व्याख्यातुं शक्यते। न च दृष्टान्ते मृत्पिण्डादीनां घटाद्युपादानत्वं न सम्भवतीति वाच्यम्। अन्वयव्यतिरेकाभ्यां मृत्पिण्डस्य घटं प्रत्युपादानत्वस्यावश्यकत्वात्। न च निमित्ततया तावन्यथासिद्धौ। मृत्पिण्ड एव घटः कृत इति अबाधितप्रतीत्या तयोरुपादानविषयत्वात्। न च कार्यकाले अनुवृत्तिरहितस्य मृत्पिण्डस्य कथमुपादानत्वं सम्भवतीति वाच्यम्। पिण्डत्वावस्थाया अनुवृत्त्यभावेऽपि तदाश्रयस्य द्रव्यस्य अनुवर्तमानत्वात्। न हि कार्यप्राक्काले उपादाने यावत्योऽवस्थाः सन्ति, तावतीनां सर्वासां कार्यकाले अनुवृत्त्या भवितव्यमिति नियमो वक्तुं शक्यते। तथासति तन्तूनामपि पटे उपादानता न स्यात्। कार्यप्राक्काले वियुक्तावस्थायाः तन्तुगतायाः कार्यकाले अनुवृत्त्यभावात्। अत उपादानोपादेयभावस्थले यथा कार्येण कासांचिदवस्थानां तिरोधानं, तथा कासांचिदवस्थानामुपमर्दोऽपीति स्वीकर्तव्यम्। पटेन हि निबिडघट्टितेन तन्तुत्वावस्था तिरोधीयते। तदानीं तन्तव इति प्रतीतेरभावात्। दध्यादिना तु पयस्त्वाद्यवस्थोपमृद्यते। एवं घटादिना पिण्डकार्येण पिण्डावस्थोपमर्देऽपि तदवस्थाश्रयस्य द्रव्यस्य कार्यतादात्म्येन विद्यमानत्वात् नोपादानतायां काचिदनुपपत्तिः। एवं लोहमणिनखनिकृन्तनयोरपि द्रष्टव्यम्। न चैतावतापि मृत्पिण्डविज्ञानेन सर्वं मृण्मयं कथं विज्ञातं भवेदिति वाच्यम्। मा भूत्। सर्वशब्दस्य तत्तन्मृ-

त्पिण्डकार्यसाकल्यपरत्वात् । छान्दोग्यप्रतिज्ञादृष्टान्तावुपन्यस्य मुण्डकगतावुपन्यस्यति—**कस्मिन्नु भगव इति** । बृहदारण्यके तौ दर्शयति—**आत्मनि खल्वर इति । स यथा दुन्दुभेर्हन्यमानस्येति** । दुन्दुभिदृष्टान्तो वाक्यान्वयाधिकरणोक्तरीत्या तादात्म्यप्रतिपादनद्वारा प्रतिज्ञोपपादको द्रष्टव्यः । न च 'ब्रह्म तं परादादि'त्यत्र आधाराधेयभाव उपन्यस्तः, न तादात्म्यमिति वाच्यम् । त्रल्प्रत्ययस्य सार्वविभक्तिकतया सन्दिग्धार्थस्य वाक्यशेषेण निर्णये द्वितीयार्थतायाः प्राप्तत्वात् । न च लोके सप्तम्यर्थे प्रचुरप्रयोगेण तादर्थ्यमेव शीघ्रं निर्णीयत इति वाच्यम् । वाक्यशेषानुसारिनिर्णयसम्भवे लोकप्रसिद्धेरनादरणीयताया अत्राधिकरणे समर्थितत्वात् । अतस्सन्निहिततादात्म्योपयोगितया दुन्दुभिवाक्यस्य तदुपयोगिवाक्यान्वयाधिकरणोक्तरीत्यैवार्थो ग्राह्यः, न तु पूर्वपक्षोक्तरीत्या । तस्य प्रकृततादात्म्यवाक्यानाकाङ्क्षितत्वात् । 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतौ यत इत्यादिपञ्चमीबलादपि ब्रह्मण उपादानत्वमित्याह—**यत इतीयमपीति** । ननु, 'जनिकर्तुः प्रकृति'रिति सूत्रेण जायमानस्य यो हेतुः, तस्यापादानसंज्ञा विधीयते। ततश्च 'अपादाने पञ्चमी'त्यनेन जायमाना पञ्चमी निमित्तोपादानसाधारणहेतुत्वमात्रवाचिका , न तूपादानकारणवाचिकेति चेत्, न । प्रकृतिपदस्य मायां तु प्रकृतिं विद्यात् 'तदर्थं विकृतेः प्रकृतौ' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि' त्यादिवेदवैदिकव्यवहारानुसारेणोपादानमात्रार्थकत्वात् 'जनिकर्तुः प्रकृति'रिति सूत्रगतस्यापि तदर्थकत्वमावश्यकम् । अपि च यदि 'जनिकर्तुरि'ति सूत्रे प्रकृतिपदं हेत्वर्थकं स्यात्, तदा कारके इत्यनुवृत्तस्यास्मिन् सूत्रे अन्वय एव न स्यात् । 'कारक' इति हि सप्तमी निर्धारणे । निर्धारणं च तत्रैव भवति, यत्र सामान्यधर्मावच्छिन्नाद्विशेषधर्मावच्छिन्नस्य पृथक्करणम् । यथा गोषु कृष्णा बहुक्षीरेति, न तु सामान्यधर्मावच्छिन्नात्तदवच्छिन्नस्यैव । नापि तदधिकधर्मावच्छिन्नस्यैव पृथक्करणे । न हि भवति गोषु गौर्बहुक्षीरा, नापि गोषु पशुर्बहुक्षीर इति । तदिह यदि प्रकृतिपदेन कारकहेतुर्विवक्षितः, यदि वा कारकाकारकसाधारण्येन हेतुमात्रं विवक्षितं, पक्षद्वयेऽप्यनन्वयः । आद्ये अभेदात् कारकेषु मध्ये यत् कारकमित्यनन्वयः । द्वितीये तु कारकेषु मध्ये यः कारकाकारकसाधारण्येन हेतुरित्युक्तौ अधिकवृत्तित्वाद्धेतुत्वस्यानन्वयः । तस्मात् प्रकृतिपदमुपादानकारणपरमित्येव स्वीकर्तव्यत्। तथा च क्रियान्वयिषु कारकशब्दोदितेषु मध्ये यदुपादानत्वेन क्रियान्वयि, तदपादानसंज्ञं भवतीति सूत्रार्थः । न चैवंसति 'पुत्रात् प्रमोदो जायत' इत्यादौ कथं पञ्चमी, धूमाद्वह्निमानित्यादौ वा कथं पञ्चमी । न हि प्रकृतिपदस्य हेतुपरत्वेऽपि ज्ञापकहेतौ पञ्चमी लभ्यते । 'तदशिष्यं

संज्ञाप्रमाणत्वादि'ति पाणिनिनिर्देशात् तत्र पञ्चमी भविष्यतीति चेत्, तर्हि पुत्रात् प्रमोदो जायत' इत्यादावपि उपादानत्वारोपेण पञ्चमी भविष्यति । आरोपितार्थमादाय हि प्रत्यया उपलभ्यन्ते—व्यासः पाराशर्य इति । अत्र ह्यनन्तरापत्ये गोत्रत्वमारोप्य यञ् प्रत्ययः । अथवा 'विभाषा गुणे स्त्रियामि'ति हेतुपञ्चमीविधायके सूत्रे विभाषेति पृथक् क्रियते । तेन अगुणे स्त्रियां च प्रयोगानुसारेण हेतौ पञ्चमी भविष्यति । ननु, महाभाष्ये 'शृङ्गाच्छरो जायते गोलोमभ्यो दूर्वा जायन्त' इत्यादिषु प्रकृतिसूत्रोदाहरणेषु लोकबुद्धिसिद्धमुपादानकारणादुपादेयस्य विश्लेषमुपेत्य 'ध्रुवमपायेऽपादानमि'त्यनेनैवापादानसंज्ञायाः वक्तुं शक्यत्वा'ज्जनिकर्तुरि'ति सूत्रं न कर्तव्यमिति प्रतिपादितम् । वैवक्षिको विश्लेषो निमित्तादपि सम्भवति । अतो 'ध्रुवमपाय' इत्यनेन यतो वा इत्यादौ निमित्तत्वविवक्षायामपि सम्भवत्यपादानसंज्ञेति' चेत्, न । लौकिकानां विश्लेषबुद्धेरुपादानकारण एव प्रसिद्धतया निमित्तकारणस्थले 'ध्रुवमपाय' इति सूत्राप्रवृत्तेः । नन्वेवमपि 'विभाषे'ति योगविभागसिद्धैवेह पञ्चमी भवतु । न । कारकविभक्तेः प्रत्यक्षसूत्रसिद्धायास्सम्भवे योगविभागलब्धाया उपपदविभक्तेः स्वीकर्तुमयुक्तत्वात् । हेतुपञ्चमीविवक्षायामपि हेतुत्वस्य निमित्तोपादानसाधारण्येन सङ्कोचकप्रमाणाभावात् आनन्त्यस्योपपादनीयत्वाच्चोभयानुगतकारणतामात्रमेव प्रकृते पञ्चम्या विवक्षितमस्तु, न तु निमित्ततायामेव सङ्कोच इति ॥२३॥

## अभिध्योपदेशाच्च ॥२४॥

अभिध्यापदेनेक्षणं कामश्चेति विवक्षितम् । तावता कार्यानुकूलेक्षणादिशालित्वेन परमात्मा कर्तेति सिध्यति । उपादानत्वं तु कथमित्याशङ्क्याह—**बहु स्यामिति । प्रत्यगात्मविषयत्वादिति** । उपादानगोचरं हि कामनादिकं कार्यानुकूलं भवति । ततश्च जगत्सृष्ट्यनुकूलेक्षणादिविषयत्वं परमात्मन उपादानत्वं गमयति । अपि चैकस्य परमात्मनः बहुत्वं विवक्षाविशेषेण वक्तव्यम् । तथा च 'प्रजायेय' 'तत्तेज ऐक्षत' 'इदं सर्वमसृजते'ति वाक्यशेषपर्यालोचनया तेजआद्यात्मनोत्पन्नस्य परमात्मनो बहुत्वमिति लभ्यते । न चानुपादानत्वे तेजआद्यात्मना ब्रह्मैवोत्पन्नमिति वक्तुं शक्यम् । अतो बहुभवनमप्युपादानतां गमयतीति भावः । ननु, चोक्तमिदमुपचारतो भविष्यति पश्चाद्भुत्पत्तिरिव स्वामिन इति, अत्रोच्यते—छान्दोग्ये 'तदैक्षते'त्यादिकं ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञामुपपादयितुं ,तैत्तिरीयके 'सोऽकामयते'त्यादिकमानन्त्योपयोगितया सृष्टिप्रतिपादनपरम् । अतस्तत्र निमित्तत्वमात्रविवक्षा न युक्ता । उपादानस्य निमित्तादन्यस्य सत्त्वे ह्येक-

विज्ञानेन सर्वविज्ञानस्यानन्त्यस्य चासङ्गतत्वापातात् । अत इदं वाक्यमात्मन एव निमित्तत्वमुपादानत्वं च प्रतिपादयतीत्यवश्योपेयत्वेन लक्षणां न सहते । अयुक्तं च स्वारसिकार्थसम्भवे लक्षणाश्रयणम् ॥२४॥

## साक्षाच्चोभयाम्नानात् ॥२५॥

**यद्धि यस्मात् प्रभवति, यस्मिंश्च प्रलीयते, तत्तस्योपादानमिति।** ननु, भूतले घटलयेऽपि न भूतलं घटोपादानम् । न च यस्मात् प्रभवतीति भूतलव्यावृत्तिः । निमित्तकारणेऽपि चक्रादौ लयसम्भवात् । उच्यते—नेहोत्पत्तिलयप्रतिपादनं निमित्तमात्रेण पर्यवस्यति । 'अनन्तवद्वै किल ते शालावत्य सामे'ति उपक्रमात् स एषोऽनन्त इत्युपसंहाराच्चानन्त्यव्युत्पादनार्थं 'सर्वाणि ह वा' इत्यादिवाक्यमाम्नायते । न चोपादानस्यान्यत्वे आनन्त्यं व्युत्पादयितुं शक्यम् । अत इहोत्पत्तिलयप्रतिपादनं निमित्तोपादानत्वोभयपरम् । अत एव प्रकृतित्वस्यायमभ्युच्चय इत्युक्तम् । आनन्त्यवाक्यैकवाक्यतापन्नतयैव विवक्षितार्थसाधकत्वेन न स्वत एव साधकत्वमिति भावः । ननूक्तार्थविवक्षायामुभयाम्नानादित्येव सूत्रयितुमुचितं, किमर्थं साक्षादिति पदमित्याशङ्क्याध्याहारेणाधिकार्थान्तरपरतया व्याचष्टे – **साक्षादिति चेति।** तथा च आकाशादेवेत्येवकारेण साक्षान्मूलकारणान्तरव्यावर्तनादिति अध्याहारेण तदर्थो द्रष्टव्यः । तेन च ननु, ब्रह्मणो निमित्तत्वे उपादानत्वे च सत्यपि कथमानन्त्यम् । तदतिरिक्तस्यापि मायाख्यस्योपादानान्तरस्य सत्त्वात् । तस्य च ब्रह्मकार्यत्वाभावेन कथं ब्रह्मण आनन्त्यमित्याशङ्का निवर्त्यते । मायाया उपादानत्वेऽपि न मूलकारणत्वम् । स्वरूपलाभार्थमन्यानपेक्षं सत् यत् कार्यं जनयति, तन्मूलकारणम् । मायायाश्च परमात्मनि कल्पितत्वात् न निरपेक्षता। तथा च वियदादिवन्मायायाः ब्रह्मणि निषेधसम्भवात् आनन्त्ये न काचिदनुपपत्तिः । 'आत्मन आकाशस्सम्भूत' इति 'इदं सर्वमसृजते'ति च श्रुत्यैव साक्षादुपादानत्वनिमित्तत्वोभयाम्नानात् इत्यपि सूत्रस्यार्थान्तरं द्रष्टव्यम् ॥२५॥

## आत्मकृतेः परिणामात् ॥२६॥

ननु, स्वयमितिपदेन कृञर्थस्य स्वनिष्ठताद्योतनात् कर्तृत्वम्, आत्मानमिति द्वितीयया स्वस्यैव कार्यतेति द्योतनेन प्राप्तस्य कर्तृकर्मविरोधस्य परिहाराय यथा देवदत्तः पण्डितमात्मानं करोतीत्यत्र प्राक्सिद्धस्यैव कर्तुर्देवदत्तस्य पाण्डित्यरूपावस्थाश्रयत्वेन कर्मत्वम्, एवं पूर्वसिद्धस्यैवात्मनो वियदादिविकाराश्रयतया कर्मत्वे वक्तव्ये उपादानत्वं वियदादिषु सिद्धं भवतीति 'परिणामादि'ति सूत्रांशेन प्रतिपा-

द्यते । विकारः परिणामः अन्यथाभाव इत्यनर्थान्तरम् । ब्रह्म च 'अस्थूलमनण्वि'-त्यादिश्रुतिवाक्यैः 'कूटस्थमचलं ध्रुव'मित्यादिस्मृतिवचनैश्च सर्वविकारवर्जितमवगम्यते । अतः कथं परिणामादित्युच्यते । केचिदाहुः— सृष्टिवाक्यपर्यालोचनया आत्मन उपादानत्वमवगम्यते । उपादानत्वं चाप्टथक्सिद्ध्या विकाराश्रयत्वम् । निर्विकारत्वं च श्रुतिष्वाम्नायते । अत उभयविरोधपरिहाराय सृष्टिवाक्येष्वात्मादिपदानां मायाऽव्यक्ताजादिपदैः प्रतिपादिता या दैवी शक्तिः, तद्विशिष्टेश्वरपरत्वमुपेयते । तथा च विकारित्वाख्यमुपादानत्वमव्यक्तरूपविशेषणांश एव पर्यवसति । विशेष्यभूतस्यात्मनो निर्विकारत्वप्रतिपादनेन तदंशे बाधादिति । तैस्तु वाचोयुक्त्यन्तरेण सेश्वरसाङ्ख्यपक्ष एव व्यवस्थापितो भवति । प्रकृत्यंशस्यैवोपादानत्वोपगमात् । अपि च सृष्ट्यादिवाक्येष्वात्मब्रह्मादिपदानां प्रकृत्या विशिष्टलक्षणापि न न्याय्या । कथं च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति विशुद्धात्मानं प्रस्तुत्याम्नाते 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादौ प्रकृतविशिष्टात्मलक्षणालक्षितेऽपि विशिष्टात्मनि पञ्चम्यर्थस्योपादानत्वस्य विशेष्यांशे स्वरसतोऽन्वितस्य विशेषणांशपर्यवसानकल्पनमपि न स्वरसम् । तस्मान्नेयं कल्पना श्रुतिस्वारस्यानुरोधिनी । अन्ये तु यथा प्रकृतेरुपादानत्वम्, एवमात्मनोऽप्युपादानत्वम् । उभयोपादानत्वस्य श्रुतिसिद्धत्वात् । परं तु आत्मनो विकाराश्रयत्वं परम्परया, प्रकृतिः साक्षादेव विकारिणी । आत्मा तु विक्रियमाणप्रकृत्याश्रयतया विकारी । तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति । न च तथासति परमात्मन उपादानत्वं न स्यादिति वाच्यम् । न ह्यपृथक्सिद्ध्या विकाराश्रयत्वम् उपादानत्वमित्यत्र साक्षात्सम्बन्धेन विकाराश्रयत्वं विवक्षितम् । येन परम्परया विकाराश्रयस्योपादानत्वं न स्यात् । गौरवेण साक्षात्त्वस्यानिवेशात् । निर्विकारश्रुतिस्तु साक्षाद्विकारित्वं निषेधति । अतो नोभयवचनविरोध इति । एवं हि 'आत्मन आकाशः सम्भूत' इत्यादिवचनानां स्वारस्यं परित्यक्तमेव स्यात् । उत्सर्गतः साक्षात् सम्बन्ध एव हि तत्र प्रतीयते । न चौत्सर्गिकस्य तस्य 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति वचनानुसारेण मायाद्वारकत्वमास्थेयमिति वाच्यम् । न हि तत्रोपादानत्वं मायाद्वारकमित्यवगम्यते, अपि तु प्रकृतिमायाश्रयत्वमात्रम् । ततश्च प्रतिज्ञाद्यनुरोधादुपादानत्वं 'मायां त्वि'ति श्रुत्यनुरोधात् प्रकृत्याश्रयत्वं चेत्यस्तु, न तूपादानत्वमपि परम्परयाश्रयणीयम् । न च निर्विकारत्वश्रुत्यनुसारेण उत्सर्गतः प्राप्तं साक्षात्त्वं परित्यज्यत इति वाच्यम् । श्रुतिद्वयस्वारस्यानुरोधेन विकारमिथ्यात्वकल्पनोपपत्तेः । अपि च श्रुतिप्रतिपादितयोर्विकारित्वनिर्विकारत्वयोः श्रुत्याद्यनुसारेणैव विरोधपरिहारसम्भवे न श्रुत्यस्वारस्यापादकं किञ्चित् स्वयं कल्पनीयम् । श्रुतिश्च विकारमिथ्यात्वं प्रतिपा-

दयति वाचारम्भणमित्याद्या, एवं पुराणमपि—'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥' इत्यादिना । ततश्च विकारस्य मिथ्यात्वात् न स्वाभाविकनिर्विकारत्वविरोधितेत्येव श्रुतिस्मृत्यनुयायिभिः परिहार आस्थेयः । पूर्वमात्मकृतेरिति हेतुसाधकतया 'परिणामादि' ति सूत्रांशो व्याख्यातः । इदानीमात्मन उपादानतायामेव तं हेतुं व्याचष्टे—**परिणामादिति वा पृथक्सूत्रमिति । सच्च त्यच्चाभवदिति** । ननूपादानेनोपादेयस्य तादात्म्यमुत्पत्त्यैव । इह तु सृष्ट्यनन्तरमनुप्रविष्टस्य तादात्म्यमाम्नायते । 'इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति श्रुतेः। अतः कथमनया श्रुत्योपादानत्वं प्रतिपादनीयमिति चेत्, उच्यते —उपक्रमे हि 'सोऽकामयत बहु स्यां प्रजायेयेति'ति सृज्यात्मना बहुभावः परमात्मनोऽवगतः । स एवेदं सर्वमसृजत । यदिदं किं चे'त्यादिना स्पष्टं प्रतिपाद्यत इति वक्तव्यम् । तथा चेदं सर्वमसृजतेत्यनेनापञ्चीकृतभूतात्मना बहुभाव उक्तः । 'तदेवानुप्राविश'दित्यत्र तु पञ्चीकृतमहाभूतात्मना । न हि व्यापिनः परमेश्वरस्य तत्तद्वस्तुतादात्म्यं विना अन्यः प्रवेशः सम्भाव्यते । 'सच्च त्यच्चाभव'दिति तु भौतिकात्मना बहुभावपरम् । एवं च मुख्ययैव वृत्त्या सामानाधिकरण्यसम्भवेन 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति स्मृतिमनुसृत्यैव गौणं सामानाधिकरण्यमाश्रयणीयम् । प्रत्युत स्मृतावेव समित्युपसर्गश्रवणात् सम्यक्तादात्म्येन सर्वमाप्नोषीत्येव व्याख्यातुमुचितम् ॥२६॥

# योनिश्च हि गीयते ॥ २७ ॥

**स्त्रीयोनेरपीपि** । न च तावता योन्येकदेशस्य शोणितस्यैव गर्भं प्रत्युपादानता भवेत्, न त्ववयविन्या योनेरिति वाच्यम् । यथा हि तन्त्वेकदेशनिष्पन्नस्य खण्डपटस्य तन्तूपादानत्वम्, एवं योन्येकदेशनिष्पन्नस्यापि गर्भस्य योन्युपादानत्वोपपत्तेः । **योनिष्ट इति** । हे इन्द्र ते निषदे अवस्थानाय योनिः स्थानमकारीत्यर्थः। **यथोर्णनाभिरिति** । गृह्णते गृह्णाति ग्रसतीत्यर्थः । नन्वूर्णनाभिश्चेतनः तन्तूनां सृष्टौ ग्रासे च निमित्तमेव । उपादानं तु तच्छरीरैकदेशभूता लालैव । अतः कथमूर्णनाभिदृष्टान्तानुसारेण योनिशब्दस्योपादानपरतेति चेत्, न । लोके ह्यूर्णनाभितच्छरीरयोर्न भेदग्रहोऽस्ति । अतो लोकदृष्टिमाश्रित्य शरीरस्योपादानता चेतनेन तादात्म्यापन्नस्यैवेत्यूर्णनाभिरपि भवति लोकदृष्ट्योपादानम् । अत एव विवेकिदृष्ट्या दृष्टान्तान्तरमुपात्तं—'यथा पृथिव्यामोषधयस्सम्भवन्ती'ति । पूर्वपक्ष्याशयमनूद्य दूषयति-- **यत्पुनरुक्तमिति** । यथा हि घटादिषु कार्येषु सर्वकर्ता एकः कश्चिदाश्रीयते अप्रसिद्धोऽपि लौकिकानां प्रमाणबलात्, एवं लोके कर्तुरुपादानस्य च भेदः प्रसिद्धोऽस्तु ना-

म, तथापि तां प्रसिद्धिं शास्त्रेण बाधित्वा उपादानाभिन्न एव वियदादिषु कर्तोपेयत इति भावः ॥ २७ ॥

## एतेन सर्वे व्याख्याताव्याख्याताः ॥ २८ ॥

**सूत्रैरेवेति** । यद्यपि काणादादिपक्षोऽपि सूत्रैरेव एतेन सर्वे इत्यादिभिर्निराक्रियते, तथापि साङ्ख्यनिराकरणार्थं या युक्तय उक्ताः, प्रायशस्ता एव तन्निराकरणाय कैश्चित् सूत्रैरतिदिश्यन्ते । साङ्ख्यं प्रति तु बहूनि युक्त्युपदेशरूपाणि सूत्राणि प्रणीयन्ते निराकरणायेत्यस्ति विशेषः । **प्रधानमल्लनिबर्हणन्यायेनेति** । मल्लो बाहुयुद्धविशारदः, तेषु प्रधानमल्लनिबर्हणं जयकामेन प्रथमं कर्तव्यम् । तस्मिन् निगृहीते हि दुर्बलानामितरेषां मल्लानां जयस्सुकर इति न्यायः । **किञ्चिल्लिङ्गमापातेन मन्दमतीन्प्रतिभायादिति** । न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इति आसामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयसे एतस्यैव सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्य'मिति । अत्र दृष्टान्ते 'न किञ्चन भगव' इति असत्त्वोपक्षेपपूर्वकं न्यग्रोधोत्पत्तेः प्रतिपादनाद्दार्ष्टान्तिकेऽपि असदेव कारणं प्रतिभाति । अणिम्न एवं महान्न्यग्रोधस्तिष्ठतीत्यणूनां दृष्टान्ते कारणताप्रतिपादनाद्दार्ष्टान्तिकेऽपि स य एषोऽणिमेत्युक्तत्वादणुकारणतावादः प्रतिभाति । अणिमेति भावप्रत्ययार्थाविवक्षा सिद्धान्तिनोऽपि समाना । न च तथासति ब्रह्मकारणताप्रतिपादकवाक्यविरोधः । कल्पभेदेनोभयकारणत्वस्याविरोधादिति । **तेषामपि प्रधानवादवदशब्दत्वाच्छब्दविरोधित्वाच्चेति** । अयं हि सन्दर्भः एकविज्ञानेन सर्वविज्ञानोपक्रमात् मध्ये च सदेवेत्यादिपरामर्शात् स आत्मा तत्त्वमसीत्युपसंहाराच्च अध्यारोपापवादाभ्यां निष्प्रपञ्चप्रत्यगभिन्नब्रह्मबोधनपरः । अतः प्रधानार्थानुसारेण दृष्टान्तवाक्यस्यार्थो ग्राह्य इति न किञ्चन भगव इत्यणिम्न इति च दुर्विभाव्यसूक्ष्मतापरम् । एवंहिसत्युपक्रमाद्यविरोधो भवति । अन्यथा तद्विरोधः स्यात् । एवमन्यत्रापि वाक्येषु विद्यमाना अण्वादिशब्दाः परमात्मनि सूक्ष्मताभिप्राया द्रष्टव्याः । **पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयतीति** । तद्द्योतकता त्वभ्यासस्य वैदिकसम्प्रदायागता । तथा च श्रुतिषु अध्यायादिसमाप्तौ पदाभ्यासो दृश्यते—'तद्वास्य

विजज्ञाविति विजज्ञाविति' 'तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते' 'ओङ्कार एवेदं सर्वमोङ्कार एवेदं सर्व'मिति ॥ २८ ॥

इति

श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयातिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वैतानन्दस्य कृतौ शारीरकभाष्यव्याख्यायां प्रथमस्याध्यायस्य

चतुर्थः पादः ।

॥ **समाप्तश्चाध्यायः** ॥

हरिः ॐम् ।

श्रीः

॥ श्रीः ॥

# द्वितीयाध्यायप्रारम्भः ॥

## प्रथमः पादः ।

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥

वृत्तानुवादपूर्वकं समन्वयनिरूपणानन्तरमविरोधनिरूपणे विषयविषयिभावं सम्बन्धं प्रयोजकमाह—**प्रथमेऽध्याय इत्यादिना द्वितीयोऽध्याय आरभ्यत इत्यन्तेन** । पूर्वाध्याये अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रत्यगभिन्नं ब्रह्म वेदान्तैः प्रतिपाद्यत इति सप्रपञ्चं निरूपितम् । तदिह स्मृत्यादिविरोधोद्भावनेनासङ्गतमित्याशङ्क्य समर्थ्यते । अतस्समन्वयाध्यायार्थस्याविरोधाध्यायार्थं प्रति विषयत्वम् । न च विषयपरिज्ञानं विना साङ्कत्येन आक्षेपः समाधानं वा सम्भवतीति पूर्वापरीभावो द्रष्टव्यः । तदाह—**इदानीं स्वपक्ष इति** । स्मृतिन्यायविरोधपरिहार इति प्रथमपादार्थो दर्शितः । प्रधानादिवादानामित्यनेन द्वितीयपादार्थः । प्रतिवेदान्तं चेति तृतीयतुरीयपादार्थः । युक्त्यपेक्षया स्मृतीनामभ्यर्हितत्वात् तद्विरोध एव प्रथमं परिह्रियत इत्याह—**तत्र प्रथमं तावदिति । चोदनादिलक्षणेनेति** । चोदना विधिः । आदिपदेन मन्त्रार्थवादौ गृह्येते । स्मृतीनां चोदनापेक्षितार्थसमर्पकत्वं च विप्रकीर्णानामस्फुटार्थानां चोदनानामर्थमाकलय्य स्फुटतया समर्पणमेव । न हि तथाविधार्थसङ्ग्रहं विना आधुनिकानामनुष्ठानं पर्यवस्यति । **कथं पुनरीक्षत्यादिभ्यो हेतुभ्य इति** । अयं भावः—श्रुत्या हि ब्रह्मोपादानं प्रतिपाद्यते । न च तत् साङ्ख्यस्मृत्या बाधितुं युक्तम् । स्मृतयो हि पुरुषवचनरूपा अलौकिकेऽर्थे न स्वयमेव प्रमाणम्, अपि तु श्रुतिमूलकतया । तत्र च श्रुतिस्मृत्योर्विरोधे उपजीव्यतया श्रुतेस्स्मृत्यप्रामाण्यमेव युक्तम् । न च वाच्यं दुर्बलाया अपि स्मृतेर्बलवदाश्रयलाभे श्रुतिबाधकत्वम् । यथा ‘क्षुते आचामे’ दित्यादिस्मृतेः प-

दार्थाश्रयत्वात् श्रुतिप्रतिपन्नपदार्थधर्मभूतक्रमबाधकत्वम् , एवं प्रकृते दुर्बलाया अपि स्मृतेर्निरवकाशत्वरूपं बलमाश्रितायाः श्रुतिबाधकता भविष्यति । दृष्टं च लोकेऽपि निर्धनतया दुर्बलोऽपि धार्मिकं राजानमाश्रितो न शक्यतेऽन्यैः धनिकैः प्रबलैः बाधितुमि' ति । यत्र द्वयोः प्रामाण्येन विप्रतिपत्तिः, तत्रैव सावकाशस्य निरवकाशेन बाधः । न हि निरवकाशेनापि वञ्चकवचनेन सावकाशमपि प्रामाणिकपुरुषवचनमन्यथा नीयते । न च 'क्षुते आचामेदि' त्यादावपि स्मृतिवशेन श्रौतार्थबाधः । तत्र विरोधाभावात् । क्रमो हि श्रौतस्मार्तनित्यनैमित्तिकसकलपदार्थपर्यालोचनयैव कल्प्यते । तत्र स्मृत्या मध्ये क्षुते निमित्ते विधीयमानमाचमनमनुसन्धायेत्थं कल्प्यते—वेद्यादीनां यथाश्रुतक्रमो योऽवगतः, स निमित्ताभावदशायां, निमित्ते तु सति तद्घटित एव । सर्वपदार्थप्राप्त्यनुसारेणैव क्रमस्य कल्पनीयत्वात् । 'भिन्ने जुहोति, स्कन्ने जुहोती' त्यादिश्रौतनैमित्तिकपदार्थस्थलेऽपीयमेव गतिः। ततश्च स्मार्तपदार्थप्राप्त्यनुसन्धानात् प्राक् कस्य चित् क्रमस्याक्लृप्तत्वात न तत्र क्रमविरोधः । इह तु साङ्ख्यस्मृतेः प्रामाण्यं प्रत्येव विप्रतिपत्तेः कथं निरवकाशयापि तया श्रुतेरन्यथानयनम् । साङ्ख्यस्मृतिप्रामाण्यं संरक्षणीयमिति निर्बन्धकारणाभावात् । न च साङ्ख्यस्मृतेरपि वेदवदपौरुषेयत्वमिति वाच्यम् । स्पष्टपौरुषेयत्वस्मरणेन तथाकल्पनाया एवाप्रसरात् साङ्ख्यैस्तथानभ्युपगमाच्च । अतः कथं साङ्ख्यस्मृत्यनुसारेण श्रुतेरन्यथानयनमिति पूर्वपक्षः क्रियत इति । **भवेदयमनाक्षेप** इति । अयमर्थः—न वयं साङ्ख्यस्मृत्यनुसारेण वेदार्थो बाधनीय इति वदामः । अपि तु गहनो वेदार्थो न युष्मदुपन्यस्ताभिरीक्षतेर्नाशब्दमित्येवमादिभिर्युक्तिभिर्निर्णेतव्यः, अपि तु महर्षिप्रणीतस्मृत्यनुसारेणैव निर्णेतव्यः । 'वेदार्थो यस्स्वयं ज्ञातस्तत्राज्ञानं भवेदपि । ऋषिभिः कथिते तस्मिन् का शङ्का स्यान्महात्मभिः ॥' इति वचनात् । यद्यपि गहनो वेदार्थोऽनादिमीमांसकसम्प्रदायागतैर्न्यायैरवधारयितुं शक्यत एव । कथमन्यथा साङ्ख्यस्मृतिप्रणेत्रापि वेदार्थोऽवगतः । गहना अपि न्याया अविच्छिन्नसम्प्रदायाचार्यादवगन्तुं शक्या एव । कथमन्यथा साङ्ख्यप्रणीतस्मृत्यर्थावगतिः । न्यायाश्च श्रुतिस्वारस्यानुरोधिनो भवन्ति, न साङ्ख्यस्मृतिः । अतः कथं साङ्ख्यस्मृत्यनुसारी वेदार्थो भवेदित्याशङ्कयोक्तं—**परतन्त्रप्रज्ञास्त्विति** । तथा च मन्दमतिसमाधानाय उपबृंहणानुसारेण वेदार्थे वक्तव्ये किं साङ्ख्यस्मृत्यनुसारेण वेदार्थो ग्राह्यः, उत मन्वादिस्मृत्यनुसारेणेति विचारोऽत्र क्रियते । अत एव भाष्ये प्राङ्मन्वादिस्मृतीनामेव सावकाशत्वं प्रतिपादितम् । सूत्रकृता सिद्धान्ते स्मृत्यन्तरानवकाश एवोद्भावितः । **ऋषिं प्रसूतमिति** । यः तं प्रसिद्धं ज्ञानैर्बिभर्ति पूरयति जायमानं च पश्येत्

अनुग्रहदृष्ट्या अनुग्रहेण ज्ञानिनं करोतीत्यर्थः। यः परमेश्वरः । यत्पदस्य 'एकैकं जालं बहुधा विकुर्वन् यस्मिन् क्षेत्रे संहरत्येष देव' इति उत्तरमन्त्रे एतत्पदेन प्रतिनिर्देशो द्रष्टव्यः । **एवमन्या इति** । अत्र बहुवचनेन मन्वादिस्मृतीनां भूयसीनां बाधो भवेत् साङ्ख्यस्मृत्यनुसारेणोपबृंहणे क्रियमाणे । तथा च भूयोऽनुग्रहन्यायात् मन्वादिस्मृतीनामेवादरः कर्तव्य इति सूचितम् । **तस्मादव्यक्तमुत्पन्नमिति** । अव्यक्तस्यानादित्वेऽपि वियदादिकार्याकारेण तदुत्पत्तिर्द्रष्टव्या । **निष्कले परमात्मनि प्रलीयत इति** । स्थौल्यावस्थापरित्यागेनेति शेषः । प्रभवत्यस्मादिति प्रभवः, प्रलीयतेऽस्मिन्निति प्रलयः । स परमात्मा मूलं कारणं शाश्वतिकः अनादिः । **श्रुत्यनुसारिण्य इति** । अनेन मन्वादिस्मृतीनां बहुत्ववत श्रुत्यनुसारित्वमन्यत् प्राबल्यकारणमुक्तम् । **विरोधे त्वनपेक्षं स्यादिति** । 'औदुम्बरीं स्पृष्ट्वोद्गाये'दिति श्रुत्या सर्वौदुम्बरी वेष्टयितव्येति स्मृतिर्विरुद्धा । सा किं प्रमाणमप्रमाणं वेति संशये अष्टकादिस्मृतिवन्मूलभूतश्रुत्यनुमानसम्भवात् प्रमाणम् । न च वेष्टने सति स्पर्शासम्भवात् विरुद्धयोः श्रौतस्मार्तार्थयोः कथमनुष्ठानमिति वाच्यम् । व्रीहियववद्विकल्पसम्भवादिति पूर्वपक्षे स्मृतिवचनस्य श्रुतिविरोधे सति प्रमाणतया स्मृतिवचनम् अनपेक्षं विरुद्धार्थकश्रुतिवचनानुसन्धाने सति मूलभूतश्रुत्यनुमानप्रतिबन्धात असत्येव विरोधे मूलतया श्रुत्यनुमानात । ततश्च वेष्टनस्मृतिवत् श्रुतिविरुद्धा कापिलस्मृतिरपि अप्रमाणम् । **वासुदेवनाम्नस्स्मरणादिति** । न च तावतापि कपिलशब्दार्थसन्देह एव भवेदिति वाच्यम् । 'ऋषिं प्रसूतमि' ति वचनं श्वेताश्वतरगतम् । तच्चाद्वितीयब्रह्मप्रतिपादनस्वरसमिति चमसाधिकरणे दर्शितम् । तथा च तेनाद्वैतानुयायी वासुदेवांशः कपिल एव प्रतिपाद्यत इति निर्धारयितुं शक्यम् । **यद्वै किञ्च मनुरवदत्तद्भेषजमिति** । नन्वत्र मनुशब्दो न स्मृतिप्रणेतृमनुपरः, अपि तु समष्टिमनोऽभिमानिहिरण्यगर्भपरः । 'मानवी ऋचौ धाय्ये कुर्यादि' ति विधेर्ह्ययमर्थवादः । तद्विधेययोश्चर्चो'र्देवानां य इन्मनो यजमान यियक्षती' ति श्रवणात देवमनोऽभिमानिहिरण्यगर्भप्रकाशकतावगम्यते । तथा च विधिगतस्य मानवी इति पदस्य मनुप्रकाशिके इत्यर्थपरत्वात मनुपदस्य स्मृतिप्रणेतृमनुपरत्वे तदसम्भवात । विधिगतस्य मनुपदस्य हिरण्यगर्भपरत्वे सति तदैकार्थ्याय 'यद्वै किञ्च मनुरवददि'त्यर्थवादगतस्यापि तस्य हिरण्यगर्भपरत्वमेव स्वीकर्तव्यमिति चेत्, उच्यते—अस्त्वृचो हिरण्यगर्भप्रकाशकता, तथापि विधिगतस्य तद्धितप्रत्ययस्य न प्रकाश्यप्रकाशकभावसम्बन्धपरत्वम् । अपि तु 'यद्वै किञ्च मनुरवददि'ति वाक्यशेषानुसारेण मनुना दृष्टे मानवी इत्यर्थ एवाश्रयणीयः । तथा च हिरण्यगर्भप्रकाशकयोरपि मनुसूक्तान्तर्गत्या मनुना दृष्टत्वसम्भवात् न क्लेशेन मनुश-

ब्दो हिरण्यगर्भपरतया व्याख्येयः । नन्वेवमपि कथमेतत् मनूक्तीनां प्रामाण्यप्रतिपादनपरं भवेत् । भेषजत्वमात्रश्रवणात् । न च भेषजपदमेव लक्षणया प्रामाण्यपरमिति वाच्यम् । सन्दर्भविरोधेन लक्षणाश्रयणस्यानुचितत्वात् । 'यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतं सोमारौद्रं चरुं निर्वपेदि'ति ब्रह्मवर्चसकामस्येष्टिं विधाय तत्राज्यं प्रोक्षणमित्यादीन्यङ्गानि ब्रह्मवर्चसफलार्थवादयुक्ततया विधाय 'अतिब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरि'ति वाक्येन पुनरपि ब्रह्मवर्चसाधिक्यात् 'यजमानश्श्वित्री भवे'दिति फलमेव निन्दित्वा मानवी ऋचौ धाय्ये कुर्यादित्याम्नाय तथात्वे दोषनिर्घातो भवेदिति अनेनार्थवादेन प्रतिपाद्यते। 'यद्वै किञ्च मनुरवदत्तद्भेषज'मित्यत्र दुश्चर्मत्वरोगकीर्तनानुसारेण भेषजपदं यथाश्रुतमेवापेक्षितमिति चेत्, इदं हि यथाश्रुतार्थत्वे अत्यन्तबाधितार्थकं भवेत् । न ह्याज्यादिषु प्रोक्षणत्वेन स्वीकृतेषु यजमानस्य श्वित्रित्वं मनूक्तीनां च रोगनिवर्तकत्वमित्यर्थस्सङ्गच्छते । अतः कृत्स्नोऽप्ययमर्थवादः मानवी ऋचौ धाय्ये कुर्यादि'ति विधेयस्तुत्यर्थः । तत्र च यद्वै किञ्च मनुरिति वचनस्यालम्बनीभूतेऽर्थे अत्यन्तासदर्थता माभूदिति मनूक्तीनां धर्मब्रह्मावबोधकतया यद्धितसाधनत्वं प्रसिद्धं, तदालम्बनीकृत्य अत्र भेषजत्वं कल्पितमिति स्वीकर्तव्यम् । अतो भवत्येतन्मनूक्तीनां प्रामाण्ये मूलमिति भावः । सर्वभूतेषु चात्मानं जीवरूपेण अन्तर्यामिरूपेण च सर्वभूतानि चात्मनि आरोपितानि पुरुषाणां शरीराणां यथैका योनिः पृथिवी भवति, सैव तेषां पारमार्थिकं स्वरूपं, तदात्मना च सर्वेषां शरीराणामेकत्वं यथा एवं सर्वेषां भोक्तृरूपाणां जीवानां पारमार्थिकस्वरूपभूतमेकं साक्षिणमाख्यास्यामि तव च मम च शिरः पाण्यादिमतः अन्तरात्मा भोक्ता अन्ये च ये देहिनो भोक्तारः, तेषां सर्वेषामपि साक्षिस्वरूपः शुद्धचैतन्यविग्रहः पारमार्थिकजीवः, एवमर्थपरत्वं च साङ्ख्यपक्षे जीवबहुत्वमुपक्षिप्य सिद्धान्ते जीवैकत्वस्यैव वक्तव्यतयोपक्रमात् ॥ १ ॥

## इतरेषां चानुपलब्धेः ॥२॥

षष्ठस्येवेन्द्रियार्थस्येति । इन्द्रियाणां हि शब्दादयः पञ्च विषयाः प्रसिद्धाः । षष्ठस्त्वसन् । एवं साङ्ख्यकल्पितानि महदादीन्यपि लौकिकवैदिकप्रमाणविधुरत्वात् न सन्त्येवेत्यर्थः ॥ २ ॥

इति स्मृत्यधिकरणम् ॥ १ ॥

## एतेन योगः प्रत्युक्तः ॥३॥

श्रोतव्यो मन्तव्य इति । योगश्चित्तवृत्तिनिरोधः । श्रवणादीनां त-

दुपयोगितया योगत्वम् । **त्रिरुन्नतमिति** । स्वार्थे सुच् छान्दसः । त्रीणि शरीरमध्यग्रीवाशिरांसि उन्नतानि यस्मिन् शरीरे तत्तथा । **तां योगमिति मन्यन्ते इति** । अत्र तत्पदेन 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिमि'ति पूर्वमन्त्रार्थः परामृश्यते । **विद्यामेतामिति** । 'मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरि'तिवाक्यैकदेशोऽयम् । **अतः सम्प्रतिपन्नार्थेति** । योगशास्त्रस्य योगस्वरूपतत्साधनादिनिरूपणांशे प्रत्यक्षश्रुतिमूलतया प्रामाण्यस्यावश्यवक्तव्यतया प्रधानमेवोपादानम्, ईश्वरो निमित्तमित्यंशेऽपि श्रुतिमूलकतया प्रामाण्यं कल्पनीयम् । एकदेशाप्रामाण्ये कृत्स्नाया अपि अप्रामाण्यापत्तेः । न चेष्टापत्तिः । योगशास्त्रस्य शिष्टपरिगृहीतस्याप्रामाण्यकल्पनाया अनुचितत्वात् इति पूर्वपक्ष्याशयः । **अर्थैकदेशसम्प्रतिपत्तावपीति** । प्रधानांशे प्रत्यक्षश्रुतिविरोधेन तदंशे योगशास्त्रस्य तात्पर्यकल्पने अंशान्तरे प्राप्तस्य प्रामाण्यस्य रक्षयितुमशक्यतया तदंशे यथाश्रुतार्थे तात्पर्यमेव नास्तीति कल्प्यते । तात्पर्याभावेऽपि तत्प्रतिपादनं तु परमात्मनोऽतिसूक्ष्मतया तस्मिन् सहसा चित्तस्य योजयितुमशक्यत्वात् प्रथमतस्तदुपयोगितया स्थूलविषयं योगं वक्तुं तत्तत्पूर्वपक्षप्रसिद्धान्येव प्रधानादीन्यालम्बनतयानूदितानि । **तत्कारणमिति** । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि'ति पूर्वमन्त्रे परमात्मा प्रस्तुतस्तत्पदार्थः । वैदिकमेव तत्र ज्ञानं ध्यानं चेति श्रवणमननिदिध्यासनसमुदायस्साङ्ख्यपदार्थः । माण्डूक्यतापनीयाद्युक्तरीत्या केवलमेवोपासनं योगशब्दार्थः । ताभ्यामभिपन्नं विषयीकृतं साङ्ख्ययोगपदयोस्सामान्यश्रुतिरूपतया पूर्वाधिकरणोक्तरीत्या कपिलश्रुतिवदेव श्रुत्यनुसारेण व्याख्यानोपपत्तेरिति भावः । **एतेन सर्वाणि तर्कस्मरणानीति** । अक्षपादादिप्रणीतसूत्राणि तेषामपि यदि प्रमाणादिनिरूपणद्वारा वेदार्थोपकारकतया प्रामाण्यं संरक्षणीयं, तदा परमाण्वादिषु तात्पर्यं नास्तीत्येव कल्पनीयमित्याह—**तान्यपीति** ॥ ३ ॥

॥ इति योगप्रत्युक्त्यधिकरणम् ॥२॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ।४।

**इदानीमिति** । एतत्सूत्रमारभ्यापादपरिसमाप्तेरिति शेषः । पूर्वाध्याये यत् ब्रह्मणो जगदुपादानत्वमुक्तं, तत् वियदादिकं न ब्रह्मप्रकृतिकम् । ब्रह्मविलक्षणत्वादिति तर्केण बाधितं, न वेति सन्देहः । पूर्वत्र च स्मृतीनां प्रधानाद्यंशे मूलाभावेनाप्रमाणभूतानां दुर्बलतया वेदान्तार्थाबाधकत्वमुक्तम् । अत्र त्वनुमानस्य व्याप्तिपक्षधर्म-

तादिसत्त्वेन समूलत्वात् बाधकता भविष्यतीति प्रत्यवस्थीयत इति सङ्गतिः। अत्र विशेषव्याप्तिविवक्षायामविद्यादृष्टान्तः । यत् यद्विलक्षणं, तत् न तत्प्रकृतिकमिति सामान्यव्याप्तौ यथा हिरण्यविलक्षणो घटः न हिरण्यप्रकृतिक इत्यादिर्दृष्टान्तः । **नन्विति** । यत इत्यर्थः । **परिनिष्पन्ने च वस्तुनि प्रमाणान्तरावकाशोऽस्तीति** । ननु, परिनिष्पन्नत्वं प्रमाणान्तरयोग्यत्वे अप्रयोजकम् । अन्यथा कार्यत्वमेव पाकादिदृष्टान्तेन प्रमाणान्तरयोग्यताप्रयोजकं किं न स्यादिति शङ्कासम्भवात् । तस्मात् वेदानुपजीविभिः प्रमाणान्तरैर्धर्मविषयकज्ञानाजननात् फलबलकल्प्या योग्यता फलाभावादेव नास्तीति निर्णीयत इति वक्तव्यम् । तत्तुल्यं सत्यज्ञानानन्दात्मके प्रत्यगभिन्ने ब्रह्मणि । तथा च प्रमाणान्तरेण ब्रह्मण एवानवगमात् तदुपादानं न भवतीति कथं शङ्क्यत इति चेत्, उच्यते—सत्याद्यात्मकं ब्रह्मेति श्रुतितो निर्धार्ये सालक्षण्य एवोपादानोपादेयभावस्य दृष्टत्वेन तावन्मात्रं न सम्भवतीत्याक्षेपोपपत्तेः । न च धर्मिग्राहकमानबाधः । धर्मिग्राहकसत्यादिवाक्यार्थाङ्गीकारेण तद्विरोधस्यैवाभावात् । **एकवशेनेति** । प्रबलैकवशेनेत्यर्थः । युक्तेः प्राबल्ये प्रधानभूतसाक्षात्कारसन्निकर्षमाह—**दृष्टसाम्येन चेति** । दृष्टः सपक्षः । तत्साम्येन साध्यवत्ताया अदृष्टं पक्षं अनुमापयन्ति दृष्टसाधर्म्यादेवायमपि कदाचित् द्रष्टुं योग्य इति सम्भावनाद्वारा अनुभवसन्निकृष्टेत्यर्थः । **सुखदुःखमोहान्वितमिति**। शीतोष्णादिर्विषयः कदाचित् सुखाय, कदाचिद्दुःखाय, कदाचित् मूर्छादिसम्पादनद्वारा मोहायेति तेषां च सुखादिजनकत्वं स्वयंसुखाद्यात्मकत्व एव भवति । सुखदुःखमोहाश्च सत्त्वरजस्तमःपरिणामा एव । 'सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतो ज्ञानमेव च ॥' इतिस्मृतेः । लोभो दुःखस्याप्युपलक्षणम् । तथा च त्रिगुणात्मकप्रधानसालक्षण्यात् प्रधानप्रकृतिकमेव वियदादिकमिति पूर्वपक्षिणोऽभिप्रायः । ननु, जगतश्चेतनत्वेऽपि पुरुषोपकारकतास्त्वित्याशङ्क्य किं प्रकाशसम्पादनेनोपकारकता, उत स्वामिभृत्यन्यायेन। नाद्य इत्याह—**न हि साम्य इति** । द्वितीयं शङ्कते—**नन्विति**। **नेति** । कार्यकरणादेश्चेतनत्वे पुरुषवदेवोदासीनत्वापत्त्योपकारकता न स्यादिति तात्पर्यम् । श्रुतचेतनोपादानत्वोपपत्तये जगतोऽपि चेतनत्वं कल्प्यत इति 'तथात्वं च शब्दादि'ति सौत्रांशमवतारयितुं शङ्कते—**योऽपि कश्चिदिति** । **प्रविभागप्रसिद्धिरपीति** । यथा घटादेरङ्कुरादेश्च कृतत्वाविशेषेऽपि कृतत्वाकृतत्वविभागो विभावितत्वाविभावितत्वाभ्यां कृतत्वस्य, एवं चेतनाचेतनविभागोऽपि भविष्यतीत्यर्थः । **तथात्वं च शब्दादिति** प्रत्यक्षश्रुत्या जगतोऽचेतनत्वे प्रतिपादिते न श्रुतार्थापत्त्या चेतनत्वं कल्पयितुमुचितम् । श्रुतार्थापत्तिमपेक्ष्य श्रुतेः प्रबलत्वात् । एवमपि यदि प्रत्यक्षेण जगतश्चेतनत्वं

गृह्येत, तदा प्रत्यक्षोपोद्बलिता श्रुतार्थापत्तिरपि श्रुत्या बाधितुमशक्या स्यात् । न च तदस्तीत्यभिप्रायेणोक्तमनवगम्यमानमेवेति । न वयं श्रुतार्थापत्त्यैव केवलं जगतश्चेतनतां कल्पयामः । अपि तु प्रत्यक्षा श्रुतिरपि जगतश्चेतनतायामस्तीति । उत्तरसूत्रमवतारयितुं शङ्कते—**नन्विति** । ननु, 'मृदब्रवीदि'त्यादावपि न साक्षाच्चेतनत्वं श्रुतम् । अपि तु वक्तृत्वादिकं तल्लिङ्गमेवेत्याशङ्क्याह—**ता आप ऐक्षन्तेति** । न चात्र तेज आदिपदानि तत्तदभिमानिदेवतापराणीति वाच्यम् । महाभूतसृष्टिसमये देवतानां क्षेत्रज्ञरूपाणां शरीराभावेनेक्षणानुपपत्तेः तत्तेज ऐक्षतेत्यादौ महाभूतसृष्टिकथनपरे न देवताविवक्षेति भावः । ते हेमे प्राणा इन्द्रियाणि अहं श्रेयसे अस्मासु कश्श्रेष्ठ इति स्वस्वश्रैष्ठ्याय विवदमाना ब्रह्म चतुर्मुखं निर्णयाय जग्मुः । ते प्राणाः वाचं वागिन्द्रियं असुरविजयायास्माकमुद्गात्री भवेत्यूचुः ॥ ४ ॥

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

**तुशब्द इति** । पूर्वपक्षिणं प्रति कृतामाशङ्कामपवदन् पूर्वपक्षमेव द्रढयति, न तूत्तरसूत्रगततुशब्दवत् पूर्वपक्षमपवदतीत्यर्थः । सौत्रं विशेषपदं विभागपरतया व्याख्याय विशेषणपरतया पुनर्व्याचष्टे—**अपि चेति** । अनुगतिपदं व्याचष्टे—**अनुगताश्चेति** । वाग्भूत्वा वागभिमानिनी भूत्वा । **प्राणसंवादवाक्यशेषे चेति** । श्रैष्ठ्यावधारणार्थं प्रजापतिसकाशं गतानां प्राणानां यस्मिन् उत्क्रान्ते शरीरं पतति, स श्रेष्ठ इति प्रजापतिनोक्तानां मध्ये चक्षुरादिनिर्गमनेऽपि अन्धत्वादिकमेव प्राप्तं, न तु पातोऽभूच्छरीरस्य । मुख्यप्राणनिर्जिगमिषायां तु शरीरपातप्रसक्त्या तेषां निर्धारणमभूत् अयमस्मासु श्रेष्ठ इति । ततस्तस्मै चक्षुरादिभिः स्वस्वासाधरणगुणाः बलित्वेन कल्पिता इत्युपाख्यायते प्राणसंवादे । **परस्या एव देवताया इति** । यदीक्षत्यधिकरणोक्तरीत्या शङ्कक ईक्षतिधातोर्गौणत्वं नानुमन्यते, तदा तेज आदिपदान्येव ब्रह्मलक्षकाणि भविष्यन्तीति तात्पर्यम् । ननु, चक्षुरादिपदेषु देवतालक्षणा तेज आदिपदेषु ब्रह्मलक्षणा किमर्थमुपेयते । चक्षुरादीनामेव चेतनतामुपेत्य यथाश्रुतार्थ एव कुतो नोपेयत इति चेत्, उच्यते—चक्षुरादीनां चेतनत्वोपगमेऽपि प्रत्यक्षादिप्रमाणसिद्धाचेतनत्वोपपत्तये अनुद्भूतं तदुपेयम् । न चानुद्भूतचैतन्यानां वक्तृत्वादिव्यवहार ईक्षणादिकं चोपपद्यत इति अवश्यं लक्षणोपेयेति नैतानि वाक्यानि तेषां चेतनतायां प्रमाणभूतानि ॥ ५ ॥

## दृश्यते तु ॥६॥

विलक्षणत्वेऽप्युपादानोपादेयभावदर्शनेन विलक्षणत्वहेतोः सामान्यव्याप्तिपक्षे व्यभिचारमाह—**यदुक्तमित्यादिना** । किञ्चिदचेतनं वृश्चिकादिशरीरं, आयतनभावं भोगायतनभावं, किञ्चिन्न गोमयादिकम् । **पारिणामिक इति** । गोमयपुरुषादीनां गन्धरूपादिकम् अन्यदेव केशनखवृश्चिकादीनां चान्यत् । अतो न प्रकृतिविकारयोस्सालक्षण्यम् । **सत्तालक्षणस्वभाव इति** । ननु, द्रव्यविभाजकधर्मेण सालक्षण्यं विवक्षितम् । सत्तायाश्च न तथात्वमिति चेत् न । पृथिवीजलादिषु द्रव्यं द्रव्यमिति प्रतीत्यभावेन पृथिवीत्वादीनां द्रव्यविभाजकताया एवासम्प्रतिपत्तेः । तथा परिभाषाभ्युपगमेऽपि द्रव्योपादेयतया गुणानामभ्युपगमात् नियमासिद्धेः । द्रव्यरूपकार्येष्वेवायं नियम इत्यभ्युपगमेऽपि जलोपादेये मुक्ताफले तृणाद्युपादेये वह्नौ च जलत्वपृथिवीत्वानभ्युपगमेनोक्तनियमासिद्धेः । न चाप्रयोजकम् । नियममुपेत्यापि लोकप्रतीतिविरुद्धं जलकाष्ठादिषु विद्यमानाः पृथिवीतेजोऽवयवा एव मुक्ताफलाग्न्योरुपादानभूता इति कल्पनमुचितम् । **तृतीये तु दृष्टान्ताभाव इति** । ननु, वियदादिकार्यं न ब्रह्मप्रकृतिकम् । अचेतनत्वादिति पर्यवसिते तृतीयकल्पे अविद्यैव दृष्टान्तोऽस्तीति कथं दृष्टान्ताभाव इति चेत्, अचेतनत्वमात्रे हेतौ घटेश्वरसंयोगे व्यभिचारः । द्रव्यत्वविशेषिते तु नाविद्यादृष्टान्तः । सिद्धान्ते ब्रह्मशक्तित्वेनाभिमताया अविद्याया अनादिधर्मतया आत्मत्वादिवदेव द्रव्यत्वानुपपत्तेः । अनादित्वेन सोपाधिकश्च । मन्मते सादेः सर्वस्य ब्रह्मप्रकृतिकतया न साध्याव्याप्तिः, पररीत्या तु नाविद्येति दृष्टान्तासिद्धिः । **आगमविरोधस्त्विति** । धर्मिग्राहकतया तद्विरोधिनोऽनुमानस्यानुत्थानात् । न च सत्यादिवाक्यस्य धर्मिग्राहकत्वेऽपि न तद्विरोध इति वाच्यम् । न हि सत्यादिवाक्यं सृष्टिवाक्यं विहाय स्वार्थसमर्पकम् । समभिव्याहृतपदानां सम्भूयकारितया सृष्टिवाक्यप्रतिपन्नजगत्कारणानुवादेनैव सत्यादिस्वरूपबोधनात् । तथा च जगदुपादानतयैव ब्रह्मसिद्धेः उपजीव्यागमबाधितानुमानस्य नावतार इति भावः । **नैषा तर्केणेति** । ब्रह्मविषया मतिस्तर्केणापनेया दूषणीया प्रापणीया वा न भवति । इयं विसृष्टिः इदं सृज्यमानं जगत् यतः उत्पन्नं तम् अद्धा अत्यन्तं को वेद को वा प्रावोचत् । स्वप्नान्तबुद्धान्तयोः स्वप्नजाग्रदवस्थयोः सम्प्रसादे स्वापे केवलस्य श्रुतिविरुद्धस्य । **विभावनाविभावनाभ्यामिति** । ननु, येन श्रुतार्थापत्त्या घटपटादीनां चैतन्यं कल्प्यते, तेन घटः प्रकाशते, घटः स्फुरतीत्यादिप्रतीत्यनुसारेण तदास्थेयम् । अन्यथा प्रत्यक्षश्रुत्या श्रुतार्थापत्तेर्बाधप्रसङ्गात् । न चेयं प्रतीतिः प्रकाश-

विषयत्वविषयेति वाच्यम् । प्रभाश्रये घटे जायमानायाः घटः स्फुरतीत्यादिप्रतीतेराश्रयत्वविषयतया क्लृप्ततया तत्समानाकाराया ज्ञानरूपप्रकाशावगाहिन्या अपि आश्रयताविषयताया एवोचितत्वात् । न च तथासति प्रभाश्रयत्वेनेव ज्ञानाश्रयत्वेनापि सर्वं सर्वस्य चक्षुरुन्मीलने सति भायादिति वाच्यम् । प्रभायां चक्षुरुन्मीलनस्येव चैतन्यात्मकस्फुरणे अभिव्यक्त्यर्थं वृत्तिविशेषस्यापेक्षितत्वात् । तद्वशेन प्रमातृविशेषे विषयविशेषावच्छिन्नस्फुरणावभासोपपत्तेः । तथा च घटादिषु चैतन्यस्य विभावितत्वेन कथमविभानमिति चेत्, उच्यते—जीवेषु यादृशं चैतन्यम् इच्छाप्रवृत्त्यादिप्रयोजकं, नैवं घटादिष्वितीदं वैषम्यं विभावनाविभावनाशब्देन विवक्षितम् । न चैवमप्युपादानस्य ब्रह्मणस्स्पष्टचैतन्यतया ततोऽस्पष्टचैतन्यानां घटादीनां कथमुत्पत्तिः । उद्भूतगुणकवस्तूपादेयानामप्युद्भूतगुणकत्वनियमादिति वाच्यम् । उद्भूतरूपादप्यग्नेरनुद्भूतरूपयोस्तुपतप्तवारिस्थतेजसोरुत्पत्तिदर्शनात् अप्रयोजिकां परिभाषामाश्रित्य तेजोगतानामनुद्भूतरूपाणामेवावयवानां तत्रोपादानत्वकल्पनमिति तु न न्याय्यम् ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥७॥

कार्यकारणयोरैक्ये ह्युत्पत्तेः प्राक् कारणसत्त्वे तदभिन्नस्य कार्यस्यापि सत्त्वावश्यम्भावेन सदेव कार्यमुत्पद्यत इति शक्यते । विलक्षणयोस्तूपादानोपादेयभावाभ्युपगमे वैलक्षण्यस्याभेदविरोधितया ऐक्यायोगात् उत्पत्तेः प्राक् कारणसत्त्वेऽपि कार्यसत्त्वस्य समर्थयितुमशक्यतया कथं सत्कार्यवाद इति शङ्का । परिहारस्तु न वयमुपादानोपादेययोर्ब्रह्मजडयोस्स्वरूपैक्यं वदामः, अपि तु उपादाने ब्रह्मणि कल्पितस्य प्रपञ्चस्य पारमार्थिकं स्वरूपं ब्रह्मैवेति ब्रह्मव्यतिरेकेणासत्त्वम् । तथा च उत्पत्तेः प्रागपि प्रपञ्चस्य पारमार्थिकं स्वरूपभूतं ब्रह्मास्तीत्येतावता सत्कार्यवाचोयुक्तिः । अतो न किञ्चिदनुपपन्नमिति ॥ ७ ॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

ननु, कार्यस्य प्रलये कारणेन संसृज्यमानत्वेऽपि यथा स्थितिदशायां संसृज्यमानमपि स्वधर्मैः कारणं न रूषयति, एवं प्रलयेऽपि न रूषयेदिति शङ्कां निराकर्तुं संसृज्यमानमिति पदस्यार्थमाह—**अविभागमापद्यमानमिति** । लयो ह्येकतापत्तिरिति स्वाप्ययसूत्रे निरूपितम् । तथा च स्थितौ तादात्म्याख्यस्वरूपसंसर्गमात्रेण स्वधर्मैः कारणस्यारूषणेऽपि प्रलये ऐक्यापत्त्या तथा स्यादेवेति भावः । ननु, प्रलये जगदेव नास्ति, कथं तद्धर्मैः ब्रह्म रूषितं भवेदित्यत आह—**अपि चेति** ॥८॥

## न तु दृष्टान्तभावात् ॥९॥

**नैवास्मदीय** इति । अयं भावः—प्रलये कार्यानुवृत्तिः कारणांशो यो वर्तते, तस्यैवावस्थाविशेषोपाधिकभेदविलयनेन कारणैक्योपपत्तिः, कारणव्यापाराधीनानां अवस्थानां तु सूक्ष्मतापत्तिरेव । तथा च प्रलये वियदादीनां सूक्ष्मतापत्त्या तदनुस्यूतस्य सदाद्यंशस्यौपाधिकभेदप्रहाण्या ब्रह्मैकतापत्तावपि स्थूलावस्थानां वियदादीनां स्थितिसमये ब्रह्मतादात्म्यमिव प्रलये सूक्ष्मतापन्नानामपि तादात्म्यमेव, न तु ब्रह्मैक्यापत्तिः । अतो न कारणस्य कार्यधर्मैः प्रलये रूषणम् । नापि पुनर्विभागेनोत्पत्तौ काचिदनुपपत्तिरिति । **अनन्यत्वेऽपीति** । भेदेन परमार्थतः कार्यस्वरूपाभावेऽपीत्यर्थः । कार्यस्य पारमार्थिक आत्मा अधिष्ठानं कारणमेव, न तु कारणस्य पारमार्थिकमधिष्ठानं कार्यमित्यर्थः । ननु प्रलये ऐक्याभावेऽपि सूक्ष्मावस्थायास्तादात्म्येन ब्रह्मधर्मत्वोपगमात् कथं निर्दुष्टत्वमिति शङ्कां प्रतिबन्द्या समर्थयितुमाह—**अत्यल्पञ्चेदमिति** । अनादिमाययेति । स्वाभाविकस्वरूपज्ञानराहित्यात् सुप्तः ॥ ९ ॥

## स्वपक्षदोषाच्च ॥१०॥

‘न विलक्षणत्वादि’ति सूत्रमारभ्य ये दोषाः साङ्ख्येन वेदान्तिनं प्रति पूर्वपक्षे दर्शिताः, ते सर्वे साङ्ख्यं प्रत्यपि समाना इति दर्शयति—**स्वपक्षे चैत इति** । **इदमस्य पुरुषस्येति** । देवदत्तस्य उपादानं भोगसाधनमिदं बुद्ध्यादिकं यज्ञदत्तस्येदमिति विभागः ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥११॥

**पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का** इति । यत् यस्माद्विलक्षणं, तत तदुपादानं नेति सामान्यव्याप्तिमूलकोऽनुमानाख्यस्तर्कः अप्रतिष्ठितः । सामान्यव्याप्तेः यत्तत्पदार्थघटितत्वेन पक्षसपक्षसाधारण्येनानुगतीकर्तुमशक्यतया साध्यासाधकत्वात् । दृष्टान्ते हि सुवर्णविलक्षणत्वं घटे सुवर्णोपादानकत्वाभावे प्रयोजकं वक्तव्यम् । न तद्वियदादेर्ब्रह्मोपादानकत्वाभावे साध्ये हेतूकर्तुं शक्यते । अपि तु ब्रह्मविलक्षणत्वं हेतुतया वक्तव्यम् । तथा च कथं दृष्टान्तदार्ष्टान्तिकयोः हेतुतावच्छेदकैक्यलाभः । साध्यतावच्छेदकहेतुतावच्छेदकैक्यलाभे च पक्षवृत्तिहेतौ व्याप्तिग्रहा-

सम्भवात् नानुमितिस्स्यात् । न च सिद्धान्ते शास्त्रयोनित्वसूत्रप्रथमवर्णके यद्यद्विस्तरार्थं शास्त्रमित्येवंरूपेण परमात्मनः सर्वज्ञत्वसाधिका सामान्यव्याप्तिरुपन्यस्तेति वाच्यम् । श्रुतिसिद्धे सार्वज्ञ्ये साध्यसम्भावनामात्रप्रयोजनाय तदुपन्यासेऽपि स्वातन्त्र्येण किञ्चिदर्थसाधकतया तदुपन्यासाभावात् । श्रुतिप्रसिद्धे ह्यर्थे सम्भावनार्थं सामान्यव्याप्तिरहितं यत्किञ्चित्सामान्यमात्रमपि ह्युपन्यस्यमानं दृश्यते । 'तस्य भूरिति शिरः' 'एकं हि शिरः' 'एकमेव तदक्षरमि'त्यादौ । ननु, तर्हि अविद्यादृष्टान्तेन विशेषव्याप्तिरेव विवक्षितास्तु । तत्र नोक्तदोष इत्यभिप्रायेण 'अन्यथानुमेयमि'ति सूत्रांशं व्याचष्टे—**अथोच्येतेति** । **अतीतवर्तमानाध्वसाम्येन हीति** । अतीतवर्तमानपाकदृष्टान्तेन ह्यागामिनि पाके पाकत्वहेतुना इष्टसाधनतामनुमाय पुरुषः पाके प्रवर्तते । एवं सर्वत्र । तथा चानुमानाप्रामाण्ये प्रवृत्त्यादिव्यवहारोच्छेदः । **अर्थाभासेति** । तथा च तत्तत्पूर्वपक्षोपन्यस्ततर्काभासमूलकार्थनिरासाय पूर्वोत्तरमीमांसोपन्यस्तसिद्धान्ततर्काणां समीचीनत्वमास्थेयमिति । **तथापि प्रकृते तावदिति** । न वयं सर्वेषां तर्काणाम् अप्रतिष्ठितत्वं ब्रूमः , अपि तु श्रुतितात्पर्यविषयीभूतार्थबाधनार्थमुपन्यस्तस्य । एवंविधस्य तर्कस्य विशेषव्याप्तिपक्षेऽप्यप्रयोजकतापरिहारार्थं ब्रह्मबिलक्षणत्वं ब्रह्मोपादानत्वे न स्यादिति तर्कमूलभूता सामान्यव्याप्तिरेवाश्रयणीयेति पूर्वोक्तमेवाप्रतिष्ठितत्वं पुनरापद्यते ॥ ११ ॥

॥ इति नविलक्षणत्वाधिकरणम् ॥ ३ ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥

परममहत्परिमाणं ब्रह्माल्पपरिमाणस्य प्रपञ्चस्योपादान वेदान्तार्थः । यद्यत् कार्यद्रव्यं तत् स्वन्यूनपरिमाणद्रव्यारब्धं, यथा तन्त्वारब्धः पट इति न्यायेन बाध्यते, न वेति संशये विलक्षणत्वहेतुकानुमान इवेह दोषाभावादेतद्विरुद्धो वेदान्तार्थो बाध्य एव । न च ब्रह्मकारणत्वानभ्युपगमे कपालादीनां सर्वेषां कार्यतया नित्यासिद्धकारणालाभेन प्रलये सर्वेषां कार्यद्रव्याणां नाशान्मूलकारणाभावेन पुनस्सृष्टिर्न स्यादिति वाच्यम् । परमाणूनां मूलकारणत्वसम्भवात् । न च तत्र प्रमाणाभावः । द्व्यणुकं स्वन्यूनपरिमाणद्रव्यारब्धम् । कार्यद्रव्यत्वात् घटवदित्यनुमानेन सिद्धत्वात् । न च तेषामपि पृथिवीत्वादिना सावयवत्वेन कार्यत्वानुमाने ततोऽपि न्यूनं किञ्चित् सिध्येत्, एवं ततोऽपि किञ्चिदित्यविश्रान्तिः । परमाणोस्सावयवत्वकल्पने सावयवत्वाविश्रान्तौ मेरुसर्षपयोरनन्तावयवत्वाविशेषेण तुल्यपरिमाणतापत्त्या दृष्टविरोधेन पृथिवीत्वादिना परमाणोस्सावयवत्वानुमानासम्भवात् । तथा च परमाणव एव मूलकारणं,न ब्रह्मेति शङ्का अतिदेशनिवर्त्या । निवृत्तिप्रकारस्तु कार्यद्रव्यस्य स्वन्यू-

नपरिमाणद्रव्यारब्धत्वनियमो नास्ति । महता तूलपिण्डेन सूक्ष्माणां दीपवर्तीनामुत्पादनदर्शनात् विवर्तवादिनं प्रति तथोद्भावनासम्भवाच्च महतामपि गिरिशिखरवर्तिनां वृक्षाणां दूर्वाप्रवालारोपोपादानत्वस्य तेनोपगमात् घटादिषु तथादर्शनमात्रेण श्रुतिविरुद्धार्थकल्पने पृथिवीत्वादिना परमाणूनामपि सावयवत्वकल्पनं कथं वारयितुं शक्यम् । मेरुसर्षपयोस्तुल्यपरिमाणतापत्तिदोषोऽपि नास्ति । उभयोरनन्तावयवत्वाविशेषेऽपि आनन्त्य एव विशेषकल्पनोपपत्तेः । तथा च मेरुसर्षपयोरवयवानन्त्यस्य विलक्षणत्वात् न तुल्यपरिमाणता । अवश्यं ह्यानन्त्ये विशेष आश्रयणीयः । अन्यथा अतीतकल्पानामतीतक्षणानां चानन्त्यात्तुल्यता स्यात् । अतस्तत्रानन्त्यविशेषः कल्पनीयः । तथा च सावयवत्वाविश्रान्त्या मूलकारणमेव परमते दुर्लभं स्यात् । अत आगमानुसारेण ब्रह्मैवाविद्यासचिवं मूलकारणमास्थेयम् । सत्यामप्येतस्यां निवर्तनीयायां शङ्कायामस्या अतिफल्गुत्वद्योतनाय न पुनराशङ्कितव्यं किञ्चिदस्तीत्युक्तम् ॥ १२ ॥ इति शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥१३॥

उक्तयुक्तीनामाभासत्वेन 'आत्मन आकाशस्सम्भूत' इत्यादिवाक्यप्रतिपाद्यस्योपादानत्वस्य बाधासम्भवेऽपि 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्मे'त्यादिवाक्यैः प्रतिपाद्यमानस्य जीवजगतोर्ब्रह्मणा अभेदस्यैकब्रह्माभिन्नयोर्जीवजगतोः परस्परमभेदस्यापत्तेरित्यादितर्कविरुद्धत्वात् बाधोऽस्ति, न वेति सन्देहे स्यादेव बाधः । 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्मे'ति वाक्यस्य स्वारसिकार्थाङ्गीकारे उक्तदूषणस्य परिहर्तुमशक्यतया वाक्यस्यार्थान्तरपरताया आवश्यकत्वादित्ययुक्तमिदं ब्रह्मकारणतावधारणमिति । ननु, उक्तयुक्त्या जीवजगतोरभेदाभिधानस्यायुक्तत्वेऽपि ब्रह्मकारणतावधारणस्यायुक्तता कथमुच्यत इति चेत्, जीवजगतोर्ब्रह्मोपादेयतया श्रुतत्वादुपादानोपादेययोश्च समवायं निराकुर्वता सिद्धान्तिना अभेदस्यैव उपगमनीयत्वात् अभेदासम्भवे उपादानोपादेयभावोऽपि न सम्भवतीत्यभिमानवतः पूर्वपक्षिणस्तथोक्तिसम्भवात । स्याल्लोकवदिति परिहारस्यायमभिप्रायः—यथाहि तार्किकैरुपादानभूतात् कपालादिद्रव्यात् घटाद्युपादेयद्रव्यमन्यदेव, तयोश्च समवायः सम्बन्ध इत्युच्यते, नैवं सिद्धान्ते उपादानोपादेयभावस्थले द्रव्यद्वयमभ्युपगम्यते । अपि त्वेकमेव द्रव्यं पिण्डावस्थारूपं धर्मं परित्यज्य कारकविशेषात कम्बुग्रीवादिसंस्थानभाक् भवतीति । तथा च मृत्पिण्ड एव घटोऽभवदिति सामानाधिकरण्यप्रतीतिः । तथा च 'सर्वं खल्विदं ब्रह्मे'त्यादिवाक्येषु 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमि'ति श्लोकोक्तरीत्या जगद्रूपानुप्रविष्टब्रह्मरूपं

धर्मिणमादाय भेद उपपन्नः । नामरूपांशस्य तु ब्रह्मणा सह तादात्म्यमेव स्वरूपसम्बन्धविशेषाख्यं, न त्वैक्यम् । अतो न ब्रह्मजगतोस्साङ्कर्यम् । ननु, नामरूपांशस्य स्वरूपैक्यानभ्युपगमेन साङ्कर्याभावेऽपि जीवब्रह्मणोस्स्वरूपैक्याभ्युपगमात् तयोस्साङ्कर्यं स्यादित्याशङ्क्य परिहरति—**यद्यपीत्यादिना** । स्वरूपैक्ये सत्यपि औपाधिकभेदाभ्युपगमात् असाङ्कर्यमिति परिहाराभिप्रायः ॥ १३ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१४॥

**अभ्युपगम्य चेममिति** । पूर्वसूत्रे लोकवदित्युक्तेः लोके च विकारानृतत्वाप्रसिद्धेः विकारसत्यतामुपेत्यैव परिहारो दर्शित इति भ्रमस्स्यात्, औपाधिकोऽपि जीवब्रह्मणोर्भेदः उपाधिसत्यतया पारमार्थिक इति च भ्रमस्स्यात्, तदपाकरणाय इदं सूत्रम् । न च प्रपञ्चसत्यतामुपेत्यैव 'इदं सर्वं यदयमात्मे' ति श्रुतिव्याख्यानोपपत्तौ किमिति प्रपञ्चमिथ्यात्वसाधननिर्बन्ध इति वाच्यम् । तदभावे 'नेह नाने' त्यादिप्रपञ्चनिषेधश्रुतीनां प्रत्यक्षादिविरोधपरिहारासम्भवात् । ननु, सूत्रे अनन्यत्वोक्त्या जगद्ब्रह्मणोरभेद इत्युक्तं भवति । तावता कथं मिथ्यात्वम् । न चानन्यत्वमित्यनेनान्यत्वस्य भेदस्याभावमात्रं विवक्षितं, न तु स्वरूपैक्यमिति वाच्यम् । तावतापि दूरस्थवनस्पत्योरभेदेन गृहीतयोरभेदमात्रस्येव ब्रह्मप्रपञ्चयोर्भेदस्यैव मिथ्यात्वमुक्तं भवेत्, न तु स्वरूपस्य । न चात्रान्यत्वेन कार्यस्याभाव इत्युक्त्या भेदः, कार्यं चेति द्वयोरपि मिथ्यात्वं विवक्षितम् । तथात्वे कार्यस्य स्वरूपेण मिथ्यात्वोक्त्या भेदमिथ्यात्वस्यार्थसिद्धेः पृथक्तत्कथनं व्यर्थम् । कथं च सौत्रस्यानन्यत्वपदस्य मिथ्यात्वपर्यवसाय्यर्थकथनम्, उच्यते—'आरम्भणशब्दादिभ्य' इति सूत्रांशेन वाचारम्भणमित्यादिश्रुतेर्हेतूकरणात् तस्याश्च प्रपञ्चमिथ्यात्वकथनस्वरसत्वात् अनन्यत्वपदेन साध्यतया मिथ्यात्वमेव विवक्षितमिति प्रतीयते । तत्र प्रपञ्चस्वरूपस्यैव मिथ्यात्वकथनौचित्येऽपि भेदविशिष्टतया तत्कथनं विवक्षाविशेषेण—प्रपञ्चान्तर्गतो हि जीवोऽपि भवति, घटादिष्वनुगतः 'अस्ति भाति प्रियमि'त्यंशोऽपि । तत्रान्यत्वेन मिथ्यात्वे कथिते जीवे सत्ताद्यंशे च भेदमात्रमिथ्यात्वमादाय विशिष्टाभावः पर्यवस्यति । जडांशे तु स्वरूपं भेदश्चेत्यंशद्वयस्यापि मिथ्यात्वमादायेति । न हि प्रपञ्चस्य जडव्यतिरिक्तांशेऽपि स्वरूपमिथ्यात्वं वक्तुं शक्यते । न च 'नेह नाने'ति श्रुतिविरोधस्य प्रपञ्चमिथ्यात्वमात्रेणापि परिहारसम्भवात् किमिति जीवादेर्भेदोऽपि मिथ्येति साध्यते । तावता निरङ्कुशनानात्वनिषेधासम्भवात् जीवादिभेदस्य नानाभूतस्य विद्यमानत्वात् । अतो न काचिदनुपपत्तिः । ननु, 'वाचारम्भणं विकारो नामधेय'मित्यादिश्रुतेः प्रपञ्चसत्यत्व-

मुपेत्यापि अर्थो वर्णयितुं शक्यते। तथा हि—एकविज्ञानेन सर्वविज्ञानोक्त्या कार्यकारणयोरभेद उपक्षिप्ते पिण्डे दृष्टेऽपि घटादिगोचरस्सन्देहः पिण्डघटयोरर्थक्रियानामादिभेदश्च कथमुपपन्न इति शङ्कायां वाचारम्भणमिति वाक्यशेषः। वाचा घटेन जलमाहरेत्यादिवाक्, तत्पूर्वको व्यवहारश्च वाक्पदार्थः। तदर्थं अध्ययनेन वसतीत्यादाविव फलस्य हेतुत्वविवक्षया। विकारो घटादिः, तन्नामधेयं घटः, मृत्तिकया आरम्भणं स्पृश्यं सम्बन्धनीयमिति यावत्। 'आलम्भस्स्पर्शहिंसयो'रिति वचनात् स्पर्शार्थकस्यालभतेस्सम्बन्धे पर्यवसानम्। कर्मणि ल्युट्। मृत्तिकेत्येवेत्यत्र विद्यमानस्यानुषक्तस्य मृत्तिकापदस्य तृतीयया विपरिणामः। तथा च घटमानयेत्याद्यभिवदनरूपव्यवहारार्थं तन्मूलानयनादिव्यवहारार्थं च मृत्तिकया कम्बुग्रीवादिसंस्थानं घट इति नामधेयं च सम्बध्यत इति प्रतिपादिते पिण्डघटयोरेकद्रव्यत्वेऽपि अवस्थानां भेदात् सन्देहादिकं सर्वमुपपद्यत इत्युक्तं भवति। ननु, द्रव्यैक्यमुपेत्यावस्थाभेदात् सन्देहादिकं किमित्युपपाद्यते। तार्किकादिवत् कार्यकारणयोर्द्रव्यभेद एव कुतो नोपेयत इत्याशङ्क्य उक्तं–मृत्तिकेत्येव सत्यमिति। घट इति पदमध्याहृत्य घटो मृत्तिकेत्येवार्थः सत्यं प्रामाणिक इति यावत्। घटो मृत्तिकेति लोकप्रसिद्धप्रत्यभिज्ञया अभेदोऽवगम्यते। अतो द्रव्यैक्यमादायैव व्यवहार उपपादनीय इति। एवमर्थे वर्ण्यमाने प्रपञ्चमिथ्यात्वं यद्यपि श्रुत्या न प्रतिपादितं भवति, तथापि वाचेति तृतीयायाश्चतुर्थ्यर्थत्वाङ्गीकारो, मृत्तिकेत्यनुषङ्गः, तृतीयान्ततया तस्य विपरिणामः, मृत्तिकेत्येवेत्यत्र घटपदाध्याहारश्चेति क्लिष्टेयं योजनेति कृत्वा प्रपञ्चसत्यत्वमनुसृत्यैव प्रकारान्तरेणैव केचिद्वाक्यं योजयन्ति—वाचाया आरम्भणं वाचेतिपदमजहल्लक्षणयैवाभिलापरूपमर्थक्रियारूपं च व्यवहारं प्रतिपादयति। तस्या विषयतया आरम्भणं विकारो घटाद्याकारो घटादिनामधेयं च। यतो घटो मृत्तिकेत्येव प्रामाणिकमिति। अत्रापि वाचेतिपदे अजहल्लक्षणा, मृत्तिकेत्यत्र घट इति पदाध्याहारश्चेति कृत्वा प्रकारान्तरेण व्याचक्षते—वाचारम्भणं विकारो घटशरावादिर्विकारो मृदो भिन्न इति वाङ्मात्रेण व्यवह्रियते, न तु भेद इति भावः। नामधेयमित्याद्यवशिष्टभागस्यायमर्थः—घटादिनामधेयं घटादिद्रव्यं मृत्तिकेति कृत्वैव सत्यं सति प्रामाणिकेऽर्थे साधु। 'तत्र साधु'रिति यत्प्रत्ययः। घटपिण्डादीनां व्यवस्था अवस्थाभेदानुसारेणैव स्वीकर्तव्या, न तु तद्वशेन कार्यकारणद्रव्यभेद आस्थेय इति पर्यवसितोऽर्थः। अयमप्यर्थो वाचारम्भणमित्यत्र मृदो भिन्न इति पदाध्याहारात् नामधेयपदस्य घटादिपरत्वाङ्गीकारेण सङ्कोचकल्पनात मृत्तिकेत्यत्र घटादिपदाध्याहाराच्च क्लिष्टः। तथाचैवंविधानेकार्थभानात् कथं वाचारम्भणवाक्यस्य मिथ्यात्वपर्यवसाय्येवार्थस्स्यादित्यत आह—**एतदुक्तमिति**। **नामधेयमात्रं ह्येतदनृतमिति**। नन्वत्र कथं मात्रपदान्तर्भावेनानृतत्वपर्यवसायिना-

मधेयपदं व्याख्यायत इति चेत, उच्यते—वाचा व्यवह्रियमाणं विकारं वाचारम्भणमिति वाक्योदितमुद्दिश्य नामधेयत्वविधाने श्रुतार्थमादाय सामानाधिकरण्यस्यासम्भवान्नामधेयपदस्य नामधेयवाच्यत्वलक्षणामुपेत्य सामानाधिकरण्ये पौनरुक्त्यात् अर्थपरिसङ्ख्यार्थत्वमुपेत्य मात्रपदान्तर्भावेन मिथ्यात्वपर्यवाय्यर्थत्वं नानुपपन्नम् । यद्यपि 'यजन्ते नाम यज्ञैस्त' इत्यादौ क्वचिदर्थाभासताद्योतकतया नामपदस्य दृष्टत्वेऽपि शब्दस्वरूप एव तस्य स्वारसिकत्वात् मिथ्यात्वपर्यसाय्यर्थवर्णनं लाक्षणिकमेव, तथापि'मृत्तिकेत्येव सत्य'मित्यादिवाक्यशेषानुमतत्वान्नेयं लक्षणा दुष्टा । यदाहुः—'गौण्या लक्षणया वापि वाक्यभेदेन वा पुनः । वेदो यमाश्रयेदर्थं कोऽनु तं प्रतिकूलयेत् ॥' इति । विस्तरेण चैतत् समन्वयसूत्र एव व्युत्पादितम् । **दृष्टनष्टस्वभावत्वादिति** । अनेन श्रुतिसिद्धे प्रपञ्चमिथ्यात्वे अनुमानमपि दर्शितं—विप्रतिपन्नं वियदादिकं मिथ्या । दृश्यत्वात् विनाशप्रतियोगित्वाच्च । शुक्तिरजतादिवदिति अनुमानद्वयमत्र विवक्षितम् । न चाद्यानुमाने ब्रह्मणि व्यभिचारः । 'आत्मा वा अरे द्रष्टव्य' इत्यादिवचनानुसारेण ब्रह्मणोऽपि दृश्यत्वावगमात् इति वाच्यम् । आश्रयान्यूनसत्ताकत्वेन विशेषणात् । ब्रह्मणि विद्यमानं च दृश्यत्वं ब्रह्मन्यूनसत्ताकमिति हेतोरभावात् न व्यभिचारः । न चानेनानुमानेन प्रपञ्चमिथ्यात्वे सिद्धे ब्रह्मणि विद्यमानस्य दृश्यत्वस्यापि मिथ्यात्वसिद्ध्या तस्य ब्रह्मसत्तान्यूनव्यावहारिकसत्ताकतया हेतोरभावात् न व्यभिचार इति वक्तव्यम् । तथासत्यन्योन्याश्रयः—अव्यभिचारे ज्ञाते मिथ्यात्वसिद्धिः, मिथ्यात्वसिद्धौ चाव्यभिचारज्ञानमिति वाच्यम् । श्रुतिसिद्धं मिथ्यात्वमुपजीव्यान्योन्याश्रयपरिहारात् । न च तथात्वे सिद्धसाधनम् । श्रुतिसिद्धस्यैवार्थस्य शुक्तिरजतादिदृष्टान्तोपहारमुखेन सम्भावनाप्रयोजनकत्वात् । भोक्त्रापत्तिसूत्रोक्तमेकदेशिमतं दूषयितुमनुवदति—**नन्वनेकात्मकं ब्रह्मेति** । **अनेकशक्तिप्रवृत्तीति** । शक्तयः सृष्ट्याद्यनुकूलाः, प्रवृत्तयः सृष्ट्यादिरूपाः । इदं वियदादेस्सृज्यस्याप्युपलक्षणम् । तैः परमार्थभूतैरेव युक्तमित्यर्थः । सत्यमेवेत्यन्तं संग्रहवाक्यं विवृणोति—**यथा वृक्ष इत्येकत्वमिति** । यथैको वृक्षः, तत्तादात्म्यापन्नाः शाखास्कन्धादयो नानाभूताः, एवमेकं ब्रह्म, तत्तादात्म्यापन्ना वियदादयो नानाभूता इत्येको भेदाभेदपक्षः । अत्र पक्षे भेदाभेदौ नैकं धर्मिणं स्पृशतः । भेदाभेदाश्रययोर्धर्मधर्मिणोस्तादात्म्यमात्राभ्युपगमात् । **यथा च समुद्रात्मनैकत्वमिति** । अत्रात्मपदोपादानेन प्रकारान्तरेण भेदाभेदपक्षः सूचितः । फेनतरङ्गादिषु व्याप्तस्याभिन्नस्यैव समुद्रस्य फेनावच्छिन्नात् स्वस्मादेव तरङ्गावच्छिन्ने स्वस्मिन् भेदः, एवं वियदादिषु व्याप्तस्यैकस्यैव ब्रह्मणः तत्तदुपाधिकृतः स्वस्मादेव स्वस्य भेदः । यद्यपि चेयं

प्रक्रिया सिद्धान्तिनोऽपि समाना, तथाप्यवैदिकप्रमाणान्येव सम्मानयतो 'नेह नाने'-त्यादिश्रुतिवचांसि तदुपबृंहकाणि च पुराणेतिहासादीनि अध्याहारलक्षणादिभिः कदर्थयतः प्रपञ्चमिथ्यात्वे स्वोचितार्थक्रियाकारिता च वियदादेर्न स्यात् इति मन्यनानस्यैकदेशिनो मते नानात्वं सत्यम् । श्रुतिस्मृतिपुराणेतिहासानुयायिनः तत्स्वारस्यमनुसन्दधानस्य स्वाप्निकपदार्थवत् मिथ्यात्वेऽपि अर्थक्रियाकारित्वोपपत्तेः नानात्वमनृतमिति सिद्धान्तिनो मतम् । अतोऽस्ति विशेषः । **एवं च मृदादिदृष्टान्ता अपीति** । मृदादिदृष्टान्तेषु घटादिविकारस्य लोके अनृतत्वप्रसिद्धेरभावादिति भावः । लोकदृष्टिमपोह्य मृदादिदृष्टान्तेषु विकारानृतत्वस्य श्रुत्यैवावधारणात् सिद्धान्तानुकूलमेव दृष्टान्तवाक्यमित्यभिप्रायेण एकदेशिमतं दूषयति—**नैवं स्यादिति** । जीवब्रह्मणोरैक्यं मुक्तिकाले भविष्यतीत्यौडुलोमिमतनिराकरणायाह—**स्वयं प्रसिद्धं हीति** । तत्त्वमसीति वर्तमाननिर्देशेनोपदेशकाल एव श्वेतकेतोः परब्रह्माभेदबोधनात् नित्यसिद्धमेव ब्रह्मत्वं जीवस्येत्यर्थः । ननु, 'यत्र त्वस्ये'ति वाक्ये यत्रेत्यनेन मुक्तिदशाया अभिधानात् मुक्तिदशायामेवाद्वैतं, न प्रपञ्चदशायामिति शङ्कते—**न चेति** । वाक्यान्तरपर्यालोचनया प्रपञ्चमिथ्यात्वेन नित्यसिद्धेऽप्यद्वैते मुक्तिदशायां मिथ्याभूतस्य दर्शनमपि नास्तीत्यभिप्रायमस्यां श्रुतौ यत्रेतिग्रहणमित्यभिप्रायेण परिहरति—**तत्त्वमसीति** । अनवस्थाविशेषनिबन्धनत्वात् अवस्थाविशेषनिबन्धनत्वाभावात् । **मिथ्याज्ञानस्येति** । मिथ्या च तदज्ञानं च मिथ्याज्ञानमविद्या । अयं भावः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती'त्यादिभिरैक्यप्रकरणगतैर्वाक्यैरैक्यज्ञानं नामरूपात्मकनानात्वस्य निवर्तकमवगम्यते, तच्च नामरूपयोराज्ञानिकत्वं विना नोपपद्यते । लोके शुक्त्यधिष्ठानकस्य रङ्गरजतादेराज्ञानिकस्यैवाधिष्ठानपरिशेषात्मकतारूपाया निवृत्तेर्ज्ञानकृताया दर्शनात् । तथा चात्माधिष्ठानकस्य नानात्वस्यात्मैकत्वावगाहितत्त्वबोधप्रयुक्ताया अधिष्ठानपरिशेषतापत्तेरवगमात् तस्याज्ञानिकत्वमिति सिद्धे चाज्ञानिकत्वे ज्ञानस्याज्ञानविरोधित्वस्वाभाव्यात् ज्ञानेन प्रपञ्चमूलाज्ञाननिवृत्तौ सुलभो मोक्ष इमि तात्पर्येण सम्यग्ज्ञानापनोद्यत्वेनाज्ञानं विशेषितम् । कथं चानृतेन मोक्षशास्त्रेणेत्यनेन किं वेदान्तशास्त्रस्यानृततया अर्थक्रियाकारिता न सम्भवतीत्याक्षेपोऽभिमतः, उत तद्विषयस्य ज्ञानस्य भ्रमरूपतया , ततः कथं ब्रह्मविषयप्रमोत्पत्तिरिति वा विवक्षितम् । आद्यमनूद्य परिहरति—**कथं चेत्यादिना । शङ्काविषादिनिमित्तेति** । नन्वत्रानृतं शङ्कितं विषं न मरणहेतुः, अपि तु शङ्कैव । सा च सत्या । स्वाप्निकपदार्थावगमश्च साक्षिरूपः । न कस्यचिदनृतस्य कार्यम् । अतो नेदमनृतात् सत्योत्पत्तौ निदर्शनमिति चेत्, उच्यते—विषशङ्का हि न विषं विहाय केवला मरणहेतुः, अपि तु विषविशि-

ष्टैव । अन्यथा शङ्कासामान्यात् मरणप्रसङ्गात । न च विषमुपलक्षणम् । उपलक्ष्यतावच्छेदकान्तरानुपलम्भात् । अपि च मन्दविषशङ्कायामीषद्भयं, तीव्रविषशङ्कायां तीव्रं, तीव्रतरविषशङ्कायां मरणमिति विषोत्कर्षापकर्षाभ्यां कार्ये उत्कर्षापकर्षयोर्दर्शनात विषविशिष्टैव शङ्का तत्र कारणम् । स्वप्ने यद्यपि साक्षिरूपावगतिर्नित्या, तथापि चाक्षुषस्पार्शनाद्यवगतिर्न नित्या । तत्र चानृतान्येव स्वाप्नानि चक्षुरादीनि करणानि । ननु , तथासति नेदं सत्यस्यासत्याद्युत्पत्तावुदाहरणं भवेत् । चाक्षुषादिप्रतीतेरपि असत्यत्वादिति चेत् , उच्यते—चाक्षुषत्वादिधर्मस्य तत्र बाध्यमानत्वेऽपि तदाश्रयायाः साक्षिरूपायाः प्रतीतेरबाधात् तदंशमादाय प्रतीतेः सत्यत्वं द्रष्टव्यम् । अपि च चाक्षुषत्वादिविशिष्टतया स्वाप्नप्रतीतेरनृतत्वमुपगन्तव्यम् । तस्याश्च सत्यकार्यजनकत्वमुपलभ्यते । स्वप्ने जायमानयोः सुखदुःखयोरबाधादेव सत्यत्वमुपगतं लौकिकैः । तत्र चेष्टवस्तुदर्शने अन्यत् सुखं, तत्स्पर्शने ततोऽपि विजातीयं स्वप्ने उपलभ्यते । एवमनिष्टवस्तुदर्शनस्पर्शनयोरपि दुःखे । तत्र वैजात्योपपादकतया चाक्षुषत्वाद्याकारेणैव कारणतोपगन्तव्येति भवति लौकिकसम्प्रतिपन्नमनृतात् सत्यम् । अपि च सौरकिरणसन्तप्तचक्षुषः अपवरकं प्रविष्टस्य सन्तमसारोपः । तत्र तेन चानृतेन सन्तमसेन चाक्षुषज्ञानप्रतिबन्धः सत्यमेव कार्यं,दीपेन तदपसरणे च पुनश्चाक्षुषज्ञानोदयः । किं च शुक्तिरजतादेरनृतस्य स्वोचितार्थक्रियाजनकत्वादर्शनात् घटादिषु तद्वैलक्षण्यम् उचितार्थक्रियाजनकतावच्छेदकतया कल्पनीयम् । तत्र सत्यत्वमेव श्रुतिविरुद्धं किमिति कल्प्यते । अपि तु शुक्तिरजतादीनां ज्ञातैकसत्ताकत्वं, सत्यपि प्रमातरि बाध्यमानत्वम्, अविद्यातिरिक्तदोषजन्यत्वम्, एवमादिरूपं प्रातिभासिकत्वम् । घटादीनां तु अज्ञातसत्ताकत्वं प्रमात्रा सहैव बाध्यमानत्वं अविद्यातिरिक्तदोषाजन्यत्वमित्येवमादिरूपं मिथ्यात्वाविरुद्धमेव धर्मान्तरं कल्पनीयं श्रुत्यनुग्रहाय । श्रुतितात्पर्योपेतस्यार्थस्योपपादनं हि नीतिमन्तोऽनुमन्यन्ते । प्रसङ्गाच्चार्वाकमतं निराकरोति—एतेनेति । स्वप्नजाग्रद्देहयोर्भेदमनुभवन्नेवाबाधमुभयानुस्यूतमेकमात्मानमनुसन्धत्ते सर्वो लोकः । अतः सर्वप्रसिद्धं देहाभ्यां विविक्तमात्मस्वरूपमित्यर्थः । अप्रमातः कथं प्रमोत्पत्तिरिति द्वितीयाक्षेपनिराकरणं मनसि निधायाह—तथा च श्रुतिः—'यदा कर्मसु काम्ये'ष्विति । अप्रमारूपात् कामिनीदर्शनात भाविनोऽभ्युदयस्यानुमितिः प्रमारूपं जायत इति भावः । ननु, शुभाशुभस्वप्नज्ञानमेवाभ्युदयानिष्टयोर्भाविनोरनुमापकं , न तु शुभाशुभस्वप्न एव । ततश्च स्वप्नस्य भ्रमरूपत्वेऽपि तज्ज्ञानस्य प्रमात्वान्नेदमुदाहरणं भ्रमस्य प्रमोत्पादकत्व इति यदि लिङ्गज्ञानमेवानुमितिकारणमिति मन्यमानश्शङ्केत , तत्राह—तथा अकारेति । ननु, रेखायामकाराद्यक्षरव्यञ्जकत्वज्ञानमेव, न तु

रेखैवाक्षरमिति भ्रमः । यदि तु लोकानाम् इयं रेखैवाकार इति प्रतीत्यनुसारेण तथाभ्रम आस्थीयते, न हीयं रेखा अस्याक्षरस्य व्यञ्जिकेयमस्येति लोकाः प्रति यन्ति, अपि तु अयमकारोऽयं गकार इत्येव , तदा रेखाक्षरातिरिक्तस्य सत्याक्षरस्य कस्य प्रतीतिः रेखाक्षरज्ञानजन्येति चेत्, उच्यते—पुस्तकं पश्यतः पुंसः रेखाक्षरज्ञानानन्तरं रेखानवगाहिनी या पदवाक्यप्रतीतिः प्रमारूपा, सोदाहरणत्वेन विवक्षिता । अपि च धूलीपटले धूमभ्रमानन्तरं परामर्शे सति वह्निमति जायमाना वह्न्यनुमितिरसल्लिङ्गपरामर्शजन्यापि प्रमा भवति, सति तु बाधे सल्लिङ्गपरामर्शजन्यापि काञ्चनमयोऽद्रिर्वह्निमानित्यनुमितिरप्रमा भवति । अतः कारणगतं प्रमात्वमप्रमात्वं वा न ज्ञानप्रामाण्याप्रामाण्ययोः प्रयोजकम् । अपि तु बाधः अप्रामाण्ये, अबाधः प्रामाण्ये इत्येवास्थेयम् । तथा च ब्रह्मणि बाधाभावात् तज्ज्ञानं प्रमाणमेव । लौकिकप्रमाणानां तु 'नेह नाने'ति बाधे सत्यपि व्यावहारिकबाधाबाधाभ्यां भ्रमत्वप्रमात्वव्यवस्थेति न क्वचिदनुपपत्तिः । यच्चोक्तं 'तत्त्वमसीत्या'दिवाक्यानां भेदाभेदपरत्वमास्थेयम् । एवंसति नानात्वांशेन कर्मकाण्डाश्रयो व्यवहार उपपद्यत इति, तत्राह—**अपि चान्त्यमिदं प्रमाणमिति** । ननु, नाहं सर्वज्ञ इति विरोधिभेदनिश्चये सति कथमभेदगोचरः शाब्दबोध इत्याशङ्क्य देहात्मज्ञानवदेव दोषमूलत्वशङ्काकलुषितस्य नाभेदप्रतिपत्तिप्रतिबन्धकतेत्यभिप्रेत्याह—**न चेयमवगतिर्नोत्पद्यत इत्यादिबाधकज्ञानान्तराभावाच्चेति** । ननु, वेदान्तैर्निष्प्रपञ्चं चैतन्यमात्रं परमार्थ इति योऽर्थः प्रतिपाद्यते, सोऽपि सर्वशून्यताप्रतिपादकेनावैदिकेनागमेन बाध्यत एव । न च तस्य पौरुषेयस्य दोषमूलत्वसम्भवात् दुर्बलेन तेन निर्दोषापौरुषेयागमप्रतिपाद्यार्थः कथं बाध्यत इति वाच्यम् । सर्वोऽपि प्रपञ्चोऽविद्यात्मकदोषमूल इति मते वेदस्यापि प्रपञ्चान्तर्गतस्याविद्याख्यदोषमूलत्वेन साम्यात् । उच्यते—चैतन्यमात्रं परमार्थः । जडवर्गस्तु तत्राध्यस्तोऽनृत इति वेदान्तानामर्थः । तदुपपादकतया ह्यविद्याख्यदोषमूलत्वं प्रपञ्चस्य कल्प्यते । लोके अनृतस्य शुक्तिरजतादेर्दोषमूलत्वदर्शनात् । न तु वेदान्तार्थज्ञानात् प्रागेव प्रपञ्चस्य दोषमूलत्वमवगतम् । तथा च प्रामाण्योपपादनार्थं कल्प्यमानं दोषमूलत्वं यथा प्रामाण्यविघातकं न भवति, तथैव कल्प्यते । यथा यागस्वर्गयोस्साध्यसाधनभावनिर्वाहाय कल्प्यमानमपूर्वं तदविघाताय व्यापारविधयैव कल्प्यते । तथा च दोषाणां बहुविधत्वादविद्याख्यो दोषोऽसङ्गचैतन्ये प्रपञ्चारोपमात्रपर्यवसायी, न तु वेदान्तजन्यज्ञानस्य बाधितार्थत्वापादकोऽपि । तथैव कल्पनात् । यथा हि असल्लिङ्गपरामर्शजननद्वारा अनुमित्युपयुक्तोऽपि दोषो वह्निमति पर्वते तस्याप्रामाण्यापादको न भवति, एवमसङ्गसाक्षिणि वेदान्तजन्यज्ञा-

नस्वरूपारोपहेतुरपि अविद्याख्यो दोषो न तस्याप्रामाण्यावादको भवति । तथाचाप्रमाणभूतेन शून्यवादेन न वेदान्तार्थबाध इति द्रष्टव्यम् । परिणामधर्मत्वं परमार्थत इति शेषः । कूटस्थस्येति विशेषणादिति सङ्ग्रहवाक्यं विवृणोति—**न हीति** । नित्यं विकाररहितत्वं कूटस्थत्वम् । तच्च 'सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुव'मित्यादिशास्त्रसिद्धम् । ननु,सृष्टिवाक्यपर्यालोचनया सप्रपञ्चं ब्रह्मेत्याशङ्क्य निर्विशेषप्रकरणगतस्य तस्य फलवन्निषेधवाक्यशेषतया अध्यारोपपरत्वात् न सप्रपञ्चतापरत्वमित्याह–**न च यथाब्रह्मात्मैकत्वदर्शनमित्यादि** ॥१४॥

## भावे चोपलब्धेः ॥१५॥

ननु, सिद्धान्ते समवायो नोपगम्यते । तथा च कथं मृद्घटादीनामुपादानोपादेयभावः । तद्दृष्टान्तेन च जगद्ब्रह्मणोरपि उपादानोपादेयभावो नोपपद्यते । न च संयोग एव उपादानोपादेयभावनिर्वाहक इति वाच्यम् । भूतलघटयोस्सत्यपि संयोगे उपादानोपादेयभावादर्शनात् उपादेये उपादानविश्लेषादर्शनेन संयोगसम्बन्धानुपपत्तेश्च जन्यनिरूपितसंयोगस्थले विश्लेषयोग्यत्वनियमात् । तथा च नियामकसम्बन्धाभावे कथं जगद्ब्रह्मणोरुपादानोपादेयभावः । तदभावे च स्वतन्त्रस्य जगतो ब्रह्मणि निषेधेऽपि न मिथ्यात्वमुपपद्यत इत्याशङ्कानिराकरणार्थं सूत्रम् । अनेन च सूत्रेण उपादानोपादेयभावनियामकतया तादात्म्याख्यस्वरूपविशेषसम्बन्ध उपपाद्यते । तथा च ब्रह्मोपादेयस्य प्रपञ्चस्य ब्रह्मणि निषेधे मिथ्यात्वं पर्यवस्यति। तदाह—**इतश्च कारणादनन्यत्वमिति** । तादात्म्यमिह विवक्षितमनन्यत्वम् । **न च नियमेनान्यभाव इति** । अन्यस्य तादात्म्यरहितस्य भाव इति । **कया चिदवस्थयेति** । यदवस्थाविशिष्टो धूमो विद्यमानवह्नावेवोपलभ्यते, तयावस्थया । **तद्भावानुरक्तां हि बुद्धिमिति** । अयं भावः—सूत्रे भाव इति विषयसप्तमी । भावस्तादात्म्यम् । तथा चोपादानोपादेययोस्तादात्म्यविषयकोपलब्धेः तयोस्तादात्म्यमुपेयम् । तथा च लोकप्रत्ययः–यः पूर्वाह्णे पिण्डो दृष्टः, स एवेदानीं घटशरावाद्यात्मना व्यवस्थित इति । पाठान्तरेण सूत्रं व्याचष्टे—**भावाच्चोपलब्धेरिति वेति** । अर्थतस्तु न भेदः ॥१५॥

## सत्वाच्चावरस्य ॥१६॥

उत्पत्तेः प्राक् कारणव्यतिरेकेण कार्यसत्त्वनिषेधका'देकमेवाद्वितीय'मित्या-

दिवाक्यादपि कार्यस्यानृततेति अभिप्रायेण सूत्रं व्याचष्टे—**इतश्च कारणात् कार्यस्येति** । अत्र यद्यपि यथाश्रुतसूत्रभाष्यपर्यालोचनया उत्पत्तेः प्राक् कारणे कार्यस्य सत्त्वमित्यर्थः प्रतिभाति । तथाप्युदाहृतानां वचनानामेवकारयुक्तानां उत्पत्तेः प्राक् कार्यस्य कारणव्यतिरेकेण सत्त्वनिषेधप्रतिपादनस्वरसत्वात् सूत्रभाष्ययोरपि तदनुसार्येवार्थो वर्णनीयः । अथवा 'सदेव सोम्येदमग्र आसी' दित्यादावेवकारेण सद्व्यतिरेकेण नासीदिति प्रतिपादिते पुनस्तं विहाय इदं सदासीदित्यंशेनावृत्त्याऽव्यतिरेकोऽपि प्रतिपाद्यते । लोके पार्थ एव धनुर्धर इत्यादावेवकारघटितानां वाक्यानां पार्थान्यो धनुर्धरो न, पार्थो धनुर्धर इत्यर्थद्वयप्रतिपादकतायाः प्रतीतिसिद्धतया एवकारघटितवाक्ये आवृत्तेर्दोषत्वाभावात् । तथा च द्वितीयमर्थमादाय यथाश्रुतैव सूत्रभाष्ययोर्योजना द्रष्टव्या । अस्मिन् पक्षे साध्यभूतमनन्यत्वं तादात्म्यरूपं द्रष्टव्यम् । ननु, तादात्म्यं सम्बन्धिद्वयसमानकालविश्लेषसहचरितभेदशून्यत्वम् । तच्चोपादानोपादेययोरेवं पर्यवस्यति । उपादेयानुस्यूतोपादानांशे मृद्रूपे ऐक्येन भेदरूपविशेष्याभावादेव । संस्थानरूपावस्थांशे तु धर्मधर्मिभावप्रयोजकभेदे सत्यपि न तस्य सम्बन्धिद्वयकालीनविश्लेषसहचरितत्वमिति विशेषणाभावेन । ततश्च जगद्ब्रह्मणोरपि तादात्म्यं वदता जगति ब्रह्मणोऽनुस्यूतता वक्तव्या । सा तु नोपलभ्यत इत्याशङ्कानिवर्तकतया प्रकारान्तरेण सूत्रं योजयति । **यथा च कारणं ब्रह्मेति** । तथा च सन् घटः, सन् पट इति प्रतीत्या अपरस्य कार्यस्य सत्त्वाच्चेचि सूत्रयोजना । तथा च सद्रूपेण जगति ब्रह्मणोऽनुस्यूततया तादात्म्यमुपपन्नम् । ननु सन् घटः, सन् पट इत्यादिप्रकारेण उपलभ्यमानं न ब्रह्मरूपम् । तस्य प्रतिपदार्थं भिन्नभिन्नरूपेण प्रतीयमानस्यैकेन ब्रह्मणा अभेदायोगात् । अतः कालादिसम्बन्धित्वमेव घटादिषु सत्त्वं, न तु ब्रह्मेत्याशङ्क्याह—**एकं च पुनस्सत्त्वमिति** । अनुगताकारप्रतीतेरेकवस्तुविषयकतयैव उपपाद्यतया न भिन्नभिन्ने देशकालादिसम्बन्धविषयतेति भावः । नन्वस्तु, तथापि तार्किकपरिकल्पितसत्तारूपा जातिरेव तस्याः प्रतीतेर्विषयः । तस्या एकत्वेनानुगताकारप्रतीतिनिर्वाहादित्याशङ्क्य शास्त्रसिद्धोपादानरूपब्रह्मणैवानुगतप्रतीतिनिर्वाहे अतिरिक्तसत्ताजातिकल्पने प्रमाणाभावात् । तत्कल्पनेऽपि घटत्वं सत्, अभावः सन्नित्यादिप्रतीतीनामनिर्वाहात्तार्किकपरिभाषायां द्रव्यगुणकर्मभ्योऽन्यत्र जातेरनङ्गीकारात् तेषु सामानाधिकरण्यसम्बन्धेन सदिति प्रतीतिनिर्वाहे द्रव्यादिषु समवायेन च तत्प्रतीतिनिर्वाहे वैरूप्यात् सर्वत्र सद्रूपब्रह्मतादात्म्यादेव सदिति प्रतीतिरुपपादनीयेत्यभिप्रायेणोपसंहरति—**अतोऽप्यनन्यत्वमिति** ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

पूर्वसूत्रे 'सदेव सोम्येत्या' दिवाक्यपर्यालोचनयोत्पत्तेः प्राक् कार्यस्य कारणतादात्म्यावगमादुत्पन्नमपि तदात्मकमेव भवतीत्युक्तं, तन्न सम्भवति । अन्यत्रोत्पत्तेः प्राक् कार्यस्यासत्त्वाम्नानेन तस्य उत्पत्तेः प्रागसत्त्वावगमात्तदानीमसता कार्येण कारणस्य तादात्म्यं कथमिति शङ्काभागतात्पर्यमाह—**नन्विति** । उत्पत्तेः प्राक् सूक्ष्मरूपेण सत एव कार्यस्य प्रत्यक्षाद्ययोग्यतया असद्व्यपदेशो गौण इत्यभिप्रायेण परिहारभागं व्याचष्टे—**नेति ब्रूम इति** । यद्यप्ययमर्थः 'समाकर्षादि' ति सूत्र एव व्युत्पादितः । तथापि कार्यकारणयोस्तादात्म्यव्युत्पादनाय पुनरिहानूदितः ॥ १७ ॥

## युक्तेश्शब्दान्तराच्च ॥ १८ ॥

## पटवच्च ॥ १९ ॥

## यथा च प्राणादिः ॥ २० ॥

तार्किका हि समवायिकारणात् अत्यन्तभिन्नमेव कार्यमुत्पद्यते यथा कपालद्वयं समवायिकारणं घटद्रव्यं कार्यं, तयोश्च द्रव्ययोस्समवायः सम्बन्धः । घटरूपस्य कार्यस्य चोत्पत्तेः प्रागसत्त्वमेव । तथा चासता कथं तादात्म्यमिति वदन्ति । तन्मतं श्रुतियुक्तिविरोधादपाकुर्वन्नुत्पत्तेः प्राक् कार्यस्य सत्त्वं तादात्म्यं च व्यवस्थापयति—**युक्तेश्चेत्यादिना । तद्गतिशयवत्त्वात् प्रागवस्थाया** इति । उत्पत्तेः प्राक् मृदि घटस्यातिशयो वर्तत इति वदता तदानीमतिशयेन घटस्य सम्बन्धो वर्णनीयः । न चासता घटेन तदानीं सम्बन्धो वक्तुं शक्य इति घटस्य तदानीं सत्त्वं प्राप्नोति, एवमुत्पत्तेः पूर्वमुपादाने घटस्य प्रागभाव इति वदतापि प्रागभावप्रतियोगिताश्रयतया घटस्य सत्त्वमास्थेयम् । असत्त्वे प्रतियोगिनो निराश्रयाया प्रतियोगितायाः असम्भवादिति । नन्वतिशयापरपर्यायया शक्त्या सम्बन्धितया घटसत्त्वेऽपि कथं तस्य कारणतादात्म्यमित्याशङ्क्याह—**शक्तिश्च कारणस्येति** । अन्येत्यत्र कार्यकारणाभ्यामिति शेषः । यथा असती, शक्तिः कार्यं न नियच्छेत् एवं कार्यकारणाभ्यामन्यापि न नियच्छेत् । अतः कार्यकारणाभ्यामनन्यैव शक्तिरास्थेया ।

तथा च शक्तिद्वारकं कार्यकारणयोस्तादात्म्यमिति । **भेदबुद्ध्यभावादिति** । य एव पूर्वाह्णे मृत्पिण्डो दृष्टः, स एवेदानीं घटशरावादिरूपोऽभवदिति तादात्म्यबुद्धेस्सत्त्वाच्चेत्यपि द्रष्टव्यम् । **अनभ्युपगम्यमान इति** । यथा हि रज्जुस्तम्भपशवोऽसम्बद्धाः न संश्लिष्टा भवन्ति, एवं कार्यकारणसमवाया अपि असम्बद्धाः नैव संश्लिष्टा भवेयुः । **अनपेक्ष्यैवापरं सम्बन्धं सम्बध्येतेति** । यदि तु समवायस्य समवायिभ्यां स्वरूपसम्बन्ध एव कल्प्यते, तर्हि कार्यकारणयोरपि स्वरूपसम्बन्ध एवास्तु । किं समवायकल्पनया । यद्यपि 'समवायाभ्युपगमाच्चे'ति सूत्र एव समवायनिराकरणं भविष्यति, तथापि वक्ष्यमाण एवार्थ इह संक्षेपेण कार्यकारणयोस्तादात्म्यप्रसाधनाय स्मारितः । **किं समस्तेष्ववयवेष्विति** । अत्रापि द्वेधा विकल्पः । किं समस्तेषु द्वित्वादिवत् व्यासज्यवृत्तित्वसम्बन्धेन वर्तते, उत समस्ते कोशे यथा असिः स्वावयवैः तं तं कोशावयवं सम्बध्य वर्तते, एवमवयवी तं तमवयवं स्वावयवैः सम्बध्य । आद्यं निराकरोति—**यदि तावदित्यादि** । **अवयव्यनुपलब्धिः प्रसज्येतेति** । यत्किञ्चिदवयवप्रत्यक्षेऽपि अवयविप्रत्यक्षं लोकसिद्धं, तदनुपपन्नम् । व्यासज्यवृत्तिधर्माणां द्वित्वादिवद्यावदाश्रयप्रत्यक्षाधीनप्रत्यक्षत्वनियमादिति । आद्यविकल्पान्तर्गतं द्वितीयं निराकरोति—**अथावयवश इति** । प्रत्यवयवं कार्त्स्न्येनावयवी वर्तत इति द्वितीयं निराकरोति—**अथेति** । उत्पत्तेः प्राग्घटस्यासत्त्वेन तस्यां तस्य कर्तृत्वासम्भवेन तस्या निरात्मकता वक्तुं न शक्यते । प्राक् सतां कपालादीनामेव तस्यां कर्तृत्वसम्भवात् इत्याशङ्कयाह—**घटस्य चेति** । उत्पत्तिर्न क्रिया, अपि तु कार्यस्योपादानेन सत्ताजात्या वा सम्बन्ध एव । तथा च नावश्यं कर्तापेक्षित इति शङ्कते—**अथेति** । अभावस्य च निरुपाख्यत्वादित्यादि प्रागभावाभिप्रायम् । कार्याभावोऽपि कारणव्यापारादूर्ध्वमिति ध्वंसाभिप्रायम् । उभयोरप्यधिकरणातिरेकेणानुपलम्भात् तुच्छत्वम् । कारकव्यापारात् प्राक् कपाले घटो नास्ति, दण्डादिव्यापारादूर्ध्वं तत्रैव घटो नास्तीति प्रतीतिश्च कपालस्वरूपविशेषविषयैवेति । स्वीकृतं हि तार्किकैरपि घटभेदे घटो नास्तीत्यादिप्रतीतीनां स्वरूपविशेषविषयत्वम् । ननु, तार्किकप्रक्रियासिद्धं प्रागुत्पत्तेः कार्यासत्त्वं यदि निराक्रियते, किं तर्हि कार्यस्य सत्त्वमेव कारकव्यापारात् प्राग्विवक्षितम् । तथा सति कारकव्यापारोऽनर्थक इति शङ्कते—**नन्वेवमिति** । **नैष दोष इति** । अयं भावः—तार्किकेण हि उपादानात् कपालद्वयादतिरिक्तमेव घटाख्यं द्रव्यं जायते, तस्य च कम्बुग्रीवादिमत्त्वं संस्थानं धर्म इत्युच्यते । तत्तु सिद्धान्ते नोपेयते । तथा सति कपालपरिमाणं घटपरिमाणं, चेति परिमाणद्वयं तथैव रूपद्वयं गुरुत्वद्वयं चोपलभ्येत । न चोपलभ्यते । अतो न द्रव्यद्वयं तत्र । अपि त्वेकस्यैव मृद्द्रव्यस्य

पूर्वं पिण्डावस्था, तदनन्तरं कपालाकारः । तदाच्छादनेन घटाकारः । तथाचाकारविशेषसिद्ध्यर्थं कारकव्यापार उपपद्यते । न च सत्कार्यवादे आकारविशेषस्यापि प्राक् सत्त्वात् न तदर्थमपि कारकव्यापार इति वाच्यम् । आकारविशेषाणां प्रागसत्त्वोपपत्तेः । न च तथासति सत्कार्यवादहानिः । कार्यानुस्यूतकारणस्य प्राक्सत्त्वेनैव सत्कार्यवादोपपत्तेः । यदि तु प्रागसतः कम्बुग्रीवादिमत्त्वाकारस्योत्पत्तिर्न सम्भवति । असत उत्पत्तेर्निराकृतत्वात् । तर्हि सतोऽप्युत्पत्तिर्न सम्भवतीति सत्त्वासत्त्वाभ्यां प्राक् निरूपयितुमशक्त्या आकारा अनिर्वचनीया एव भवन्तु । का नः क्षतिरिति । अतो दुर्निरूपत्वादपि प्रपञ्चस्वरूपस्य स्वप्नादिवन्मिथ्यात्वमिति सिद्धम् । नन्वद्वैतं व्यवस्थापयितुं प्रपञ्चस्य मिथ्यात्वं स्वीक्रियते, तत्तु न सम्भवति । तथाहि—प्रपञ्चमिथ्यात्वं मिथ्या वा सत्यं वा । आद्ये यथा रजते रजतत्वमिथ्यात्वस्य मिथ्यात्वे न रजतत्वं सत्यं, एवं प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्सत्यस्स्यात् । अतो नाद्वैतम् । यदि तु मिथ्यात्वं सत्यं, तथासति ब्रह्म मिथ्यात्वं च सत्यमिति सत्यपदार्थद्वैतापत्तिः । उच्यते—मिथ्यात्वं ह्येकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठाभावप्रतियोगित्वं समीचीनरजते नेदं रजतमिति ज्ञानापादितं यद्रजतत्वस्य मिथ्यात्वं प्रतियोगिताविशेषरूपं, तस्य मिथ्यात्वं रजतत्वनिष्ठात्यन्ताभावप्रतियोगितामादायैव पर्यवस्यतीति रजताधिकरणावच्छेदेन रजतत्वे मिथ्यात्वस्याभावात्तत्र सत्यमिति युक्तम् । प्रपञ्चस्य तु यन्मिथ्यात्वं प्रपञ्चसंसृज्यमानब्रह्मरूपाधिकरणनिष्ठाभावप्रतियोगित्वं 'नेह नानेत्या'दिशास्त्रसिद्धं, न तस्याभावः प्रपञ्च उपेयते । तथा च यथा घटस्य घटत्वं प्रमाणसिद्धत्वात् स्वाभाविकं, तथा प्रपञ्चस्य मिथ्यात्वमपि । मिथ्यात्वस्य मिथ्यात्वं तु सर्वस्यापि प्रपञ्चस्य ब्रह्मण्यभावबोधकेनागमेन सिद्धम् । मिथ्यात्वं हि प्रपञ्चान्तर्गतं घटत्वादिवत् ब्रह्माधिष्ठानकमित्युपेयम् । तथा च यथा घटत्वादीनां ब्रह्मण्यभावबोधनान्मिथ्यात्वेऽपि न घटस्याघटत्वम् । तत् कस्य हेतोः, घटे तदभावानङ्गीकारात्, एवं मिथ्यात्वस्यापि ब्रह्मण्यभावबोधनान्मिथ्यात्वेऽपि न प्रपञ्चस्य सत्यत्वम् । प्रपञ्चे तदभावानङ्गीकारात् । तथा च प्रपञ्चेन सहैव मिथ्यात्वस्य बाधात् तन्मिथ्यात्वे प्रपञ्चसत्यत्वमिति व्यामोहमात्रम् । यथा घटध्वंसो घटप्रागभावध्वंसोऽपि भवतीति प्रागभावध्वंसस्य घटस्य ध्वंसे न प्रागभावोन्मज्जनम्, एवं मिथ्यात्वबाधः प्रपञ्चबाधोऽपि भवतीति न मिथ्यात्वबाधे प्रपञ्चसत्यतापत्तिः ॥१८॥१९॥२०॥

इति आरम्भणाधिकरणम् ॥६॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥

तदनन्यत्वमित्यनेन जीवब्रह्मणोर्भेदस्य मिथ्यात्वसूचनेन स्वरूपैक्यं विवक्षितम् । तदाक्षिप्यत इति सङ्गतिः । जीवब्रह्मणोरैक्ये हि हिताहितादिकं जीवगतम् ईश्वरस्यैवेति सर्वज्ञः सर्वशक्तिरीश्वरो जीवाहितं न सृजेत् । न च प्रमादकृता स्वाहितसृष्टिरीश्वरस्य सम्भवति । स सर्वज्ञत्वात् सृष्टमप्याहितं सर्वशक्तित्वादेवोपसंहरेत, हितमेव च सृजेत् । न चेष्टापत्तिः । प्रपञ्चवैचित्र्यानुपलम्भप्रसङ्गादित्येवमादिदोषाः जीवब्रह्मणोर्धर्माणामैक्यापादितं साङ्कर्यमुपजीव्य प्रवर्तन्ते । तथा चोक्तदोषापत्तिरूपतर्कबाध्यो भवति वा न वा वेदान्तानां प्रत्यग्ब्रह्मैक्यसमन्वय इति सन्देहे उक्तदोषपरिहारासम्भवात् बाध्य एवेति पूर्वपक्षमाह—**चेतनाद्धीति** ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

भवेयुरेते दोषाः, यदि जीवब्रह्मणोरैक्येऽपि साङ्कर्यमपरिहार्यं भवेत्, न तु तदस्ति । यथा ह्येकस्यैवाकाशस्य घटाद्युपाधिकल्पितभेदात् धर्माणामल्पत्वमहत्त्वादीनां व्यवस्था । यथा वैकस्यैव मुखस्य, दर्पणाद्युपाधिकृतबिम्बप्रतिबिम्बभावेन भेदात् मलिनत्वावदातत्वादिधर्मव्यवस्था, तथैकस्यैव चैतन्यस्याविद्यकजीवेश्वरभावेन भेदस्यानादिसिद्धतया संसारित्वसर्वस्रष्टृत्वादिधर्माः व्यवस्थिता एव । तथा च हिताहितप्राप्त्यादिरूपः संसारो जीवस्यैव, सर्वज्ञत्वं सर्वस्रष्टृत्वमित्येवमादयो धर्मा ईश्वरस्यैवेति स्वाहितकारित्वादेरीश्वरे अप्रसङ्गान्नोक्तदोषः । अमुमेव चाविद्यकभेदमभिप्रेत्य 'आत्मा वा अरे द्रष्टव्य' इत्यादौ कर्तृकर्मभावादिनिर्देशः नाहं सर्वज्ञ इत्यादिलौकिकव्यवहारश्च । ननु, चायं जीवेश्वरविभागः पारमार्थिक एव किं न स्यादत आह—**अपि चेति** । उपक्रमाद्यनेकतात्पर्यलिङ्गोपेतैस्तत्त्वमस्यादिवाक्यैरभेदे अवधारिते क्वचिदन्यपरेभ्यो वाक्येभ्यः प्रतीयमानो भेदो लौकिकप्रमाणावगत एवाविद्यको भविष्यति । दर्शयति च श्रुतिर्मायामयत्वं भेदस्य 'जीवेशावाभासेन करोति' 'माया चाविद्या च स्वयमेव भवति । अस्मान्मायी सृजते विश्वमेतम् तस्मिंश्चान्यो मायया सन्निरुद्ध' इति ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥२३॥

सत्रे आदिशब्दगृहीतान् दृष्टान्तानाह—**यथा चैका पृथिवीति** । माया-

मये जीवेश्वरविभागे मन्दमतिसमाधानाय उपपादनप्रक्रिया आश्रिता । वस्तुतस्तु अनुपपत्तिः प्रपञ्चस्य स्वाप्निकपदार्थवत् मायामयत्वमुपोद्बलयतीत्यभिप्रेत्याह—**श्रुतेश्च प्रामाण्यादिति । वैचित्र्यवच्चेति** । अनुपपत्तिर्न दोषायेति शेषः ॥ २३ ॥

॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

'सदेव सोम्येदमग्र आसी'दित्यादिवाक्यैरद्वितीयं ब्रह्म सृष्टेः प्रागवधार्य ततः सृष्टिराम्नायते। अयमर्थः—यद्यदुपादानं कर्तृकारकं च, तत् इतरकारणकलापसहितमेव कार्योत्पादकमिति न्यायबाध्यो न वेति सन्देहः । पूर्वमौपाधिकं जीवब्रह्मणोर्भेदमाश्रित्य व्यवस्था कृता। सृष्टेः प्राक् उपाधितोऽपि द्वितीयं सहकारि नास्ति। अद्वितीयत्वावधारणादिति सङ्गतिः । ननु, सृष्टेः प्रागपि तत्तत्कार्यवासनास्सन्ति विचित्राः । सन्ति च धर्माधर्मरूपाण्यदृष्टानि । न च तथात्वे अद्वितीयत्वावधारणविरोधः । विद्यमानस्यापि सूक्ष्मात्मना नानात्वस्यानृततयाद्वितीयत्वावधारणोपपत्तेः। मास्तु वान्यत् किञ्चित् सहकारि । उक्ततर्कस्याप्रयोजकतया असहायादेव सृष्टिसम्भवादित्यभिप्रेत्य शङ्कते—**कस्मादिति** । परिहरति—**उपसंहारदर्शनादिति।** अयं भावः—असहायादेव ब्रह्मणो यदि सृष्टिः स्वीक्रियेत, तदा तस्यैकरूपत्वेन कारणवैचित्र्याभावात् कार्यवैचित्र्यमाकस्मिकं स्यात् । अतो नाप्रयोजकता। न चादृष्टवैचित्र्यादपि वैचित्र्यमुपपादयितुं युक्तम् । लोके अदृष्टातिरिक्तकारणैरेव कार्यवैचित्र्यदर्शनेनादृष्टमात्रेण कार्यवैचित्र्यायोगात् । न च वासनावैचित्र्यात्तदुपपत्तिः । तावता विचित्रत्वोपपत्तावपि वासनानां क्रमिकाणां युगपदेव विद्यमानतया वियदादिक्रमोऽनुपपन्न एव स्यात् ! न च वासनापरिपाकक्रमात्तदुपपत्तिः । नियामकाभावेन परिपाकक्रमानुपपत्तेः । न च तत्र काल एव नियामको भविष्यति । तदानीं खण्डकालस्याभावादखण्डस्य साधारणत्वेन क्रमनियामकत्वानुपपत्तेः । अतोऽसहायात् ब्रह्मणो विचित्रक्रमिकजगत्सृष्ट्यनुपपत्तिरिति । **नैष दोष इति** । अयं भावः—यथा दधिवासनोपेतं क्षीरं कालविशेषेण दधिवासनायां परिपक्वायां दध्याकारं भजते, एवं विचित्राणां वियदादिवासनानां कालविशेषेण क्रमिकपरिपाके सति विचित्रक्रमिकवियदाद्याकारतां ब्रह्मापि भजते। न च तदानीं पाकक्रमोपयुक्तक्रमिककालविशेषानुपपत्तिरिति वाच्यम् । प्रलयान्तकालो वियद्वासनायाः परिपाकः, वियदुत्पत्तिकालो वायुवासनायाः परिपाकहेतुरिति क्रमिककालविशेषसम्भवादिति ॥ २४ ॥

# देवादिवदपि लोके ॥ २५॥

पूर्वसूत्रं परमात्मन उपादानत्वोपपादकम् । इदं तु कर्तृत्वोपपादकं देवादिवदिति । आदिशब्दार्थमाह—तन्तुनाभश्चेति । सौत्रलोकशब्दार्थमाह—एवं चेतनमिति । तथा च लोक्यत इति व्युत्पत्त्या स्वप्रकाशं ब्रह्मैव लोकशब्दार्थः ॥ २९ ॥ ॥ इति उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

# कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥

# श्रुतेस्तु शब्दमूलत्वात् ॥ २७॥

# आत्मनि चैवं विचित्राश्च हि ॥२८॥

लोके सावयवानामुपादानत्वस्य दर्शनात् निरवयवं नोपादानमिति युक्तिबाध्यो वेदान्तसमन्वयः न वेति सन्देहे पूर्वं विचित्रशक्तियोगात् सत्यसङ्कल्पत्वाच्च ब्रह्मण उपादानत्वं कर्तृत्वं च सम्भवतीत्युक्तम् । तत्र कृत्स्नप्रसक्त्यादिदोषेणोपादानत्वाक्षेपात् सङ्गतिः । ननु, सावयवमेव उपादानमिति नास्ति नियमः । तार्किकमते निरवयवस्यैव परमाणोरुपादानत्वाभ्युपगमात् । साङ्ख्यमतेऽपि निरवयवानामेव सत्त्वरजस्तमसामुपादानत्वाभ्युपगमात् एवं निरवयवस्य ब्रह्मण उपादानत्वं भविष्यति । न चैवमपि निरवयवस्यैव ब्रह्मणो विकारापत्तौ उपगतायामैकदेशिकविकारापत्तेरसम्भवात् कृत्स्नस्य ब्रह्मणो विकारोपयुक्तत्वात् अधुना विशुद्धब्रह्मपरिशेषो न स्यादिति दोष इति वाच्यम् । भवेदयं दोषः परिणामवादे, न तु विवर्तवादे । अनृतविकारोपयुक्तस्यापि परमार्थतो विशुद्धस्य नित्यमवस्थानात् । अतः पूर्वपक्षाभावात् अयुक्तमिदमधिकरणम् । न च विवर्तवादोद्घाटनार्थमिदमधिकरणम् । तदनन्यत्वमित्यत्रैव तस्योद्घाटितत्वात्, उच्यते—मन्दमतीनामुपासनादिषूपयुक्तः आपाततः प्रतीयमानः परमार्थः सविशेषमेव ब्रह्मेति वादोऽपि 'न बुद्धिभेदं जनयेदि'तिन्यायेन तत्त्वविद्भिर्व्यवह्रियते । तत्र च जगतो विवर्ततामनुद्घाट्यैव कृत्स्नप्रसक्त्यादिदोषनिवृत्तिः प्रतिपादनीया । अतो विवर्तवादो नास्तीति कृत्वाचिन्तया प्रथमं समाधानं श्रुतेस्तु शब्दमूलत्वादिति । कृत्वाचिन्तोद्घाटनं तु आत्मनि चैवं विचित्राश्च हीति । अपि च विवर्तवादेऽपि शङ्काविशेषोऽत्र निराकर्तव्योऽस्ति । आरोपिता हि शुक्तिरजतादयो भ्रान्तिसमानकाला एव भवन्ति । न त्वज्ञातसत्ताका एव । तथा च वियदादिसृष्टिक्रमादेर्

प्यारोपितत्वे ज्ञातैकसत्ताकत्वं वक्तव्यम् । सृष्टिसमये च तज्ज्ञानं भ्रान्तिरूपं नेश्वरस्य वक्तुं शक्यम् । तस्य निर्दोषस्य भ्रान्त्यसम्भवात् । नापि जीवानां तदानीं भ्रान्तिस्सम्भवति । शरीराभावेन तदानीं सुप्तप्रायत्वात् तेषाम् । तथा च भ्रान्तिनियतस्यारोपितस्य भ्रान्त्यभावेऽसम्भवात् विवर्तवादे सृष्ट्यादिश्रुतिरसदार्थिकैव स्यात् इत्यस्याश्शङ्कायाः पूर्वोक्तस्य विवर्तवादस्य स्मारणेनेत्थं समाधानं विवक्षितं—श्रुत्या प्रपञ्चस्य मिथ्यात्वेऽवधृते अनृता अपि द्विप्रकारा भविष्यन्तीति कल्प्यते । शुक्तिरजतादयो ज्ञातैकसत्ताकाः । सृष्ट्यादयस्तु स्वसमानकालभ्रान्त्यभावेऽपि स्वरूपेणारोपिता इति। सर्गप्रतिपादकश्रुतिकृता तु परोक्षभ्रान्तिस्सर्गानन्तरं जीवानां सम्भवत्येवेति । यथा चात्मनि विचित्रा स्वाप्नरथादिसृष्टिस्स्वरूपानुपमर्देनैव, यथा च मायाविनि स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयः, एवं ब्रह्मण्यपि स्वरूपानुपमर्देनैव विचित्रा वियदादिसृष्टिर्भविष्यतीति सूत्रं योजयति—**अपि चेति** ॥२८॥

## स्वपक्षदोषाच्च ॥ २९ ॥

**समानत्वात्स्वपक्षदोषप्रसङ्गस्य, तर्काप्रतिष्ठानादिति** । प्रतिष्ठितस्तर्कस्सम्भवति । यः परपक्ष एव दूषणमापादयेत् । यस्तु स्वपक्षे परपक्षे च दूषणमावहति, नासौ प्रतिष्ठितस्तर्क इति भावः । सत्त्वरजस्तमसामपि प्रत्येकं सावयवत्वमेवास्त्विति शङ्कते—**सावयवत्वमेवेति** । **एवमप्यनित्यत्वादीति** । आदिपदेन तेषामप्यवयवानामवयवान्तरमुत्तरोत्तरं प्रसज्यत इत्यनवस्था दर्शिता । **तथाणुवादिनोऽपीति** । इयं हि तार्किकप्रक्रिया—परमाणुर्निरवयवः । द्वयोश्च परमाण्वोः संयोगे द्व्यणुकाख्यं कार्यं ततोऽधिकपरिमाणं जायत इति । तत्र द्वयोः परमाण्वोस्संयोगः किं व्याप्यवृत्तिरव्याप्यवृत्तिर्वा । आद्ये परमाणुमपेक्ष्य द्व्यणुकस्य प्रथिमा नोपपद्यते । व्याप्यवृत्तिता हि संयोगस्य तदा स्यात्, यावति देशे एकः परमाणुः सम्मितः, तावत्येव देशे यद्यपरोऽपि सम्मितो भवेत् । तथा च न प्रथिमा सम्भवति । सति प्रथिम्नि परमाणुदेशापेक्षया द्व्यणुकस्याधिकदेशव्याप्तेरावश्यकत्वात् । अथाव्याप्यवृत्तिरण्वोस्संयोगः । तथासति द्वयोः मृत्पिण्डयोरेकैकपार्श्वसंयोगेन महतो मृत्पिण्डस्येवाण्वोरप्येकैकपार्श्वसंयोगेन द्व्यणुकारम्भे प्रथिमा सम्भवति । परं त्वव्याप्यवृत्तित्वे संयोगस्य तत्रैवाभावो वक्तव्यः । तयोश्च संयोगतदभावयोर्विरोधपरिहाराय वृक्षादिषु शाखादिमूलादिरूपावयवा इव नेहावयवभेदा अवच्छेदकास्सम्भवन्ति। निरवयवत्वात् । न च दिग्भेदा एवावच्छेदका भविष्यन्ति । तेषामप्यसंयुक्तानाम् अवच्छेदकत्वासम्भवेन संयोगाङ्गीकारे पूर्वोक्तविकल्पानतिवृत्तिः ॥ २९ ॥

॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

## सर्वोपेता च तद्दर्शनात् ॥३०॥

निरवयवस्यापि ब्रह्मणो विचित्रशक्तियोगात् न कृत्स्नप्रसक्त्यादिदोष इत्युपपादितम् । तन्न सम्भवति । शरीरेन्द्रियरहितस्य विचित्रशक्तियोग एव न सम्भवतीत्याक्षिप्यते । अतस्सङ्गतिः । यश्शरीरी, स एव शक्तियोगात् सृजति, नाशरीर इतिन्यायापनोदनीयो न वा अशरीरस्यैव ब्रह्मणो जगत्स्रष्टृत्वमित्येवंविषयको वेदान्तसमन्वय इति सन्देहे उक्तन्यायस्यानाभासत्वात् । बाधनीय एवेति पूर्वपक्षः । न च 'अन्तर्याम्यधिदैवादिष्वि'त्यनेन पुनरुक्तता । तत्र ह्यशरीरस्यापि परमात्मनो अविद्याशक्तियोगात् अन्तर्यामिता भविष्यतीत्युक्तम् । इह तु देहेन्द्रियरहितस्याविद्याशक्तिरेव न सम्भवतीति शङ्क्यते — **सर्वकर्मेति** । यद्यपि सर्वं कर्म कार्यं यस्येति व्युत्पत्त्या सर्वकर्तृत्वादिकमेवोदाहृतश्रुत्या प्रतिपाद्यते, तथापि कार्यैकोन्नेया शक्तिः सर्वकर्तृत्वाद्यन्यथानुपपत्त्या कल्प्यत इति तात्पर्यम् ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

पूर्वसूत्रसूचितं पूर्वपक्षमनूद्य तद्दूषणाय इदं सूत्रम् । करणानीन्द्रियाणि । तानि शरीरस्याप्युपलक्षणानि । तथा च शरीरेन्द्रियरहितत्वादिति शङ्काभागगतहेतोरर्थः । तदुक्तमित्येतत् 'श्रुतेस्तु शब्दमूलत्वादि'ति सूत्रोक्तत्वाभिप्रायेण व्याचष्टे—**श्रुत्यवगाह्यमिति** । 'आत्मनि चैवं विचित्राश्च ही'ति सूत्रोक्तत्वाभिप्रायेण व्याचष्टे—**प्रतिषिद्धेति** । यथा देवादीनां बाह्यसाधनानपेक्षाणामपि श्रुतिप्रामाण्यात् सङ्कल्पमात्रेण विचित्रसृष्टिकर्तृत्वं कुलालादिष्वदृष्टमप्युपेयते, यथा वा विद्यमानशरीराभिमानरहितस्यापि स्वप्नभुजो वासनामात्रेणैव विचित्रसृष्टिकर्तृत्वं प्रत्यक्षदृष्टत्वादेवोपेयते, तथा अशरीरस्यापि परमात्मनो विचित्रशक्तियोगोपपत्त्या स्रष्टृत्वं श्रुतिप्रामाण्यादेवोपेयमिति परिहाराभिप्रायः । न चैवं 'श्रुतेस्तु शब्दमूलत्वादि'त्यनेनैव गतार्थता । निराकर्तव्यतर्कभेदात् ॥ ३१ ॥

## न प्रयोजनवत्त्वात् ॥३२॥

अवाप्तसकलकामत्वात् प्रयोजनोद्देशरहितोऽपि परमात्मा प्रपञ्चस्रष्टेति प्रतिपादयद्वेदान्तवाक्यं याया प्रेक्षावतः प्रवृत्तिः, सा प्रयोजनोद्देशपूर्विकेति न्यायबाध्यं न वेति सन्देहे सर्वशक्त्युपेतस्यापि परमात्मनः प्रयोजनोद्देशाभावात् न स्रष्टृ-

त्वमिति पूर्वाधिकरणेनाक्षेपिकीं सङ्गतिं मनसि निधाय पूर्वपक्षमाह—न खल्विति ॥ ३२ ॥

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

कैवल्यमित्यत्र स्वार्थे ष्यञ् । वैशेष्यादितिवत् । लीलाशब्दो विलासवचनः क्रियावचनश्च । 'लीला क्रिया विलासश्चे'ति वचनात् । विलासो द्विविधः—उद्यानविहारादिरूपः, सुखोद्रेके हासगानादिरूपश्च । तत्र उद्यानविहारादिरूपे किञ्चित्प्रयोजनोद्देशः सम्भाव्येतापि । सुखितस्य हासगानादिरूपे तु न किमपि सम्भाव्यते । दुःखोद्रेके रोदनाश्रुमोचनवत् । तथा च सप्रयोजनविलासव्यावृत्त्यर्थं कैवल्यपदमित्यभिप्रेत्य व्याचष्टे—**यथा लोक इत्यादिना** । लीलापदस्य क्रियार्थत्वमादाय दृष्टान्तमाह—**यथा वोच्छ्वासेति** । क्रियापि द्विविधा—प्रयोजनोद्देशयुक्ता, तद्रहिता च । गमनादिरूपा प्रयोजनोद्देशयुक्ता प्रसिद्धा । श्वासादिरूपा स्वाभाविकी प्रयोजनोद्देशरहिता । स्वापेऽपि दर्शनात् । सम्भाषणकाले अङ्गुल्यादिचालनरूपा यादृच्छिकी च प्रयोजनोद्देशरहिता । तथा च प्रयोजनोद्देशयुक्तक्रियाव्यावृत्तये कैवल्यपदम् । तथा च विलासस्वाभाविकयादृच्छिकप्रवृत्तिषु प्रेक्षावत्प्रवृत्तित्वरूपहेतोस्सत्त्वेऽपि प्रयोजनोद्देशपूर्वकत्वरूपसाध्याभावेन व्यभिचारात् नानेन तर्केण श्रुतिबाधो न्याय्यः । ननु, 'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैषा महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्र'मिति श्वेताश्वतरमन्त्रे स्वभाववादं प्रतिक्षिप्य महिमशब्देन क्रीडापक्षो व्यवस्थापितः । माण्डूक्यश्रुतौ तु 'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे'ति क्रीडापक्षं प्रतिक्षिप्य स्वभावपक्षः व्यवस्थापितः । अतः श्रुतिद्वयविरोधात् सृष्टिः क्रीडेति वा स्वभाव इति वा आस्थातुं न शक्यत इति चेत्, उच्यते—श्वेताश्वतरे प्रतिक्षेप्यस्वभावपक्षः यथा भोजनशयनादिरूपा स्वाभाविकी चेष्टा प्रयोजनोद्देशपूर्विका भवति, नैवं परमात्मनः सृष्टिरित्यभिप्रायेण । माण्डूक्ये प्रतिक्षेप्यः क्रीडापक्षोऽपि यथा वनविहारादिरूपा ईषत्प्रयोजनोद्देशपूर्विका भवति, नैवं परमात्मनः सृष्टिरित्यभिप्रायेण प्रयोजनोद्देशरहिततया स्वभावरूपा वा क्रीडारूपा वा परमात्मनस्सृष्टिरिति श्रुतिद्वयपर्यालोचनया पर्यवसितोऽर्थः ॥ ३३ ॥

---

# वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥३४॥

यः कस्यचिद्दुःखं सम्पादयति, कस्यचित् सुखं, स पक्षपातित्वेन सावद्य इति, यश्च हिंसकः, सोऽपि सावद्य इति प्रसिद्धम् । परमात्मा च सुखदुःखतत्साधनयुक्ततया विचित्रं जगत् सृजति, प्रलयसमये च युगपदेव सर्वान्नाशयतीत्यतः सावद्यः प्रसज्येत । तथा च निरवद्यस्सन् परमात्मा विचित्रं जगत्सृजति संहरति चेति वदत् वेदान्तवाक्यं उक्ततर्कबाध्यं न वेति संशयः । अस्तु प्रयोजनोद्देशरहिता सृष्टिः, तथापि सावद्यतापादकतया परमात्मनः सा भवतीति पूर्वोक्तार्थाक्षेपात् सङ्गतिः । ननु, तर्काप्रतिष्ठानादिति प्रबलप्रमाणविरोधे तर्काप्रतिष्ठानम् । 'श्रुतेस्तु शब्दमूलत्वादि'त्यत्र श्रुत्यवगाह्यं परमात्मतत्त्वम् । न तत्र तर्कस्यावसरोऽस्ति साधकतया बाधकतया वा । यथा चक्षुषः शब्दे । श्रुतिबाधितत्वादेव च तद्विरुद्धास्तर्का आभासतां प्रतिपद्यन्त इति निरूपितम् । अतः किमर्थं पुनःपुनः तर्कनिमित्त आक्षेपः क्रियत इत्याशङ्क्य यद्यप्ययं पारमार्थिकः परिहारोऽस्ति, तथापि तर्कमेव बहुमन्यमानं प्रति तदुद्भावितानां तर्काणां प्रातिस्विकवेषेणाभासतास्फुटीकरणेन तर्काप्रतिष्ठानमेव प्रपञ्च्यते । अतो नानुपपत्तिरिति परिहरति—**स्थूणानिखनन्यायेनेति** । क्वचिद्रागः क्वचिद्द्वेष इति एवंरूपं वैषम्यं, नैर्घृण्यं निर्दयत्वम् । इदमुभयमपि न प्रसज्यते परमात्मनि । धर्माधर्मसापेक्षत्वाद्विषमसृष्टेरिति सूत्रं योजयन् सिद्धान्तमाह—**वैषम्यनैर्घृण्ये इति** । ननु, धर्माधर्मसापेक्षतया विषमस्रष्टृत्वमस्तु । तावता पूर्वपक्षोद्भावितस्य तर्कस्य को दोष उद्भावितः । कथञ्चादृष्टमात्रेण वैषम्यम् । वैषम्ये सर्वत्र दृष्टकारणापेक्षत्वात्, उच्यते—लोके प्राणिषु सुखदुःखादिकं वैषम्येण सम्पादयतोऽपि धार्मिकस्य राज्ञो नास्ति सावद्यत्वप्रसिद्धिः । तत् कस्य हेतोः, अपराधाद्यपेक्षित्वात् । ये ह्यपराधिनः, तान् दण्डयन् न्यायानुसारिणो जनाननुगृह्णंश्च राजा समीचीन एवेति लोके प्रसिद्धम् । तथा चोरान्निघ्नन्नपि । प्रत्युत न्यायानुसारादपराधभाजो जनानविविच्य साम्येन व्यवहरन्नेव राजा सावद्यो भवति । तथा च सुखदुःखादिसम्पादके राजनि हेतोस्सत्त्वेऽपि सावद्यत्वप्रसिद्धेरभावात् व्यभिचार उक्तः तर्के । न चादृष्टमात्रेणैव वैचित्र्यं प्रतिपादयामः । किं तु तत्तद्धर्माधर्मानुसारेण तां तां दृष्टसामग्रीं सम्पादयन्नेव ईश्वरः सुखदुःखकारणं भवतीति । न चैवमपि प्रलयस्य न धर्माधर्मनिमित्तता सम्भवति । न हि तदानीं सुखं दुःखं वा विद्यते । मौढ्यापत्तेः । यद्यपि च प्रलयारम्भे दुःखं सम्भाव्येत, तथापि न तस्य पापनि-

मित्तता वक्तुं शक्यते । न हि युगपदेव सर्वेषां पापान्युद्भूतानीति सम्भावयितुं शक्यमिति साम्प्रतम् । यथा हि वसन्तादिषु युगपदेव पुष्पोद्गमदर्शनात् तद्वासनानामुद्बोधो युगपदेव कल्प्यते, यथा वा हेमन्तादिषु तुषारादिसम्पर्कजनितस्य दुःखस्य युगपदेव दर्शनात्तत्प्रयोजकस्य पापादेर्युगपदेवोद्बोधः कल्प्यते, एवं प्रलयारम्भे सर्वेषां दुःखोपजनस्य युगपदेव दर्शनात् तत्प्रयोजकपापोद्बोधस्य यौगपद्ये नानुपपत्तिः । प्रलये तु यद्यपि न दुःखादिकं, तथापि धर्माधर्मयोर्नायं फलप्रापणकाल इति अनुसन्धायेश्वरस्तदानीं भोगसाधनानि न सृजति । अतः सृष्टिस्थितिप्रलयसम्पादकोऽपीश्वरो न सावद्य इति । न च पुण्यपापाभ्यां सुखदुःखवैचित्र्योपपत्तेर्न वैषम्यादिदोष इति परिहारेऽपि पुण्यवतः कांश्चित् पापवतः कांश्चित् सृजतीति वैषम्यं पुनरपि प्राप्तमिति वाच्यम् । 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'त्यादिवचनानुसारेण पुण्यपापसृष्टावपि पूर्वपूर्वपुण्यपापापेक्षत्वात् ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

सृष्टेः प्रागविभागात् 'सदेव सोम्ये'ति वाक्यपर्यालोचनयैकत्वावगमात् नास्ति कर्म । तथा चाद्या सृष्टिः कथं विषमा स्यादिति शङ्काभागं व्याचष्टे—**सदेवेति** । यद्यपि नानया श्रुत्या सूक्ष्मावस्थं कर्मादि स्वरूपतो व्यावर्त्यते, तथाप्यापाततः प्रतीतार्थमादाय शङ्का । पूर्वकल्पकृतानां कर्मणां प्रलये सूक्ष्मावस्थानां विद्यमानत्वात् तदनुसारेण सृष्ट्यारम्भेऽपि वैषम्यमुपपद्यत इति परिहाराभिप्रायः ॥ ३५ ॥

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

**मुक्तानामपीति** । येन हि संसारस्यानादित्वं नोपेयते, तन्मते आद्यसर्गो निर्निमित्त एवास्थेयः । तथा चानन्तरसर्गस्यापि निर्निमित्तत्वसम्भवात् मुक्तानामविद्यादिसंसारनिमित्ताभावेऽपि संसारप्रसङ्गः कथं वारयितुं शक्य इति भावः। अकृताभ्यागमः अकृतयोरेव पुण्यपापयोस्सतोः सुखदुःखाभ्यागमः । **निर्निमित्तत्वादिति** । सर्गारम्भ इति शेषः । **न चाविद्येति** । मूलाविद्येत्यर्थः । **रागादीति** । रागद्वेषमोहाः । पुरुषं क्लिश्नन्तीति क्लेशाः । तेषां या वासना सूक्ष्मावस्था, तया आक्षिप्तं सहकृतं कर्म तदपेक्षेत्यर्थः । **न च कर्मान्तरेणेति** । कर्मपदं द्वितीयान्तम् । **न च धारयिष्यतीति** । यथा 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र तुषोपवापकाले कपालानां पुरोडाशसम्बन्धस्य वर्तमानस्याभावेऽपि भ-

विष्यत्पुरोडाशश्रपणाधारत्वमादाय पुरोडाशकपालत्वव्यपदेशः । एवमिहापि भविष्यत्प्राणाधारत्वमादाय सृष्ट्यारम्भकाले जीवत्वव्यपदेशो भविष्यतीत्यर्थः । **अनागताद्धि सम्बन्धादिति** । यत्र हि भूतभविष्यतोः सम्बन्धयोस्संभवः, तत्र भूतसम्बन्धेनैव व्यपदेशः । लोके हि अतीतधनोऽपि धनीति व्यपदेशभाक् भवति । न तु भविष्यद्धनोऽपि । अत एवा'ग्निहोत्रहवण्या हवींषि निर्वपती'त्यत्र यया हुतमग्निहोत्रं, सैवाग्निहोत्रहवणीति गृह्यते, न तु यया होष्यति । पवमानेष्टिषु तु हुताग्निहोत्राया अभावात् लोप एवाग्निहोत्रहवण्या इति स्वीक्रियते । पुरोडाशकपालस्थले तु भूतस्यालाभात् अगत्या भविष्यता निर्देश आश्रितः । **अभिनिष्पन्नत्वादिति** । अतीतस्थले प्रवृत्तिनिमित्तशालितया निर्णीतत्वेन तत्संस्कारसम्भवात् लोके व्यवहारः शीघ्रं प्रवर्तत इति अवर्तमानसम्बन्धस्थले भूतसम्बन्धस्यैव व्यवहारप्रयोजकत्वं स्वारसिकमिति भावः ॥ ३६ ॥

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥

# सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

स्वपक्षव्यवस्थापनोपसंहाररूपत्वात् पादान्ते सङ्गतिः । निर्गुणं ब्रह्म जगत उपादानमिति वदद्वेदान्तवाक्यं यन्निर्गुणं, तन्नोपादानं, यथा रूपादीति तर्कबाध्यं न वेति सन्देहे अस्य तर्कस्याभासत्वाभावात् बाध्यमेवेति शङ्कोपसंहारव्याजेन निराक्रियते—परमात्मनो निर्गुणत्वमसिद्धम् । कर्तृत्वोपयोगिसर्वज्ञत्वादिधर्मवत्त्वादुपादानत्वोपयोगिशक्तिरूपप्रपञ्चसूक्ष्मावस्थाश्रयत्वात् । परमार्थतो निर्गुणस्यापि मायोपाधिकास्सर्वेऽपि गुणास्सम्भाविता एव । तदिदमाह—**सर्वज्ञं सर्वशक्ति महामायं चेति** । अपि च यन्निर्गुणं, तन्नोपादानमिति तर्कोऽप्रयोजकः । प्रथमक्षणे निर्गुणस्यापि द्रव्यस्य स्वगुणान् प्रति उपादानत्वोपगमात् । न च द्रव्योपादानस्यैव सगुणत्वमिति नियमः । तार्किकद्रव्यपरिभाषाया एव निर्मूलत्वात् । निर्गुणेऽपि शब्दे ह्रस्वत्वाद्यारोपदर्शनेन विवर्तोपादानत्वे सगुणत्वस्य सर्वथा अनपेक्षत्वाच्च ॥ ३७ ॥

॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥

---

**इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां**
**ब्रह्मविद्याभरणाख्यायां द्वितीयस्याध्यायस्य**
**॥ प्रथमः पादः ॥**

ॐ

अथ

## ॥ द्वितीयाध्यायस्य द्वितीयः पादः ॥

# रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

नन्वस्मिन् पादे साङ्ख्यादिभिः प्रधानादिकारणतासाधका ये तर्का उपन्यस्ताः, तेषां तर्कैरेव निरासः क्रियते। अस्यार्थस्य कथं ब्रह्मनिरूपणपरे शास्त्रे सङ्गतिर्भवेदिति शङ्कते—यद्यपीति। इह हि ब्रह्मस्वरूपादिनिरूपणं मुमुक्षूणां यथा ब्रह्मज्ञानं भविष्यतीत्येतदर्थम् । न च ब्रह्मपक्षविरोधिनां पक्षाणां निरासं विना तदुपपद्यत इति ब्रह्मविचारेण स्वप्रयोजनसिद्धये परपक्षनिराकरणमप्यपेक्षितमिति तस्य शास्त्रसङ्गतिरिति परिहरति—तथापीति । पूर्वस्मिन् पादे साङ्ख्यादिभिर्वेदान्तानां ब्रह्मणि समन्वयनिराकरणाय ये तर्का उपन्यस्ताः, तन्निराकरणेन ब्रह्मणि वेदान्तसमन्वयो व्यवस्थापितः । अत्र पादे परमतं निराक्रियते । तत्र पौर्वापर्ये किं नियामकमित्याकाङ्क्षायामाह—वेदान्तार्थनिर्णयस्य चेति । ननु, साधनचतुष्टयशालिपुरुषाधिकारके शास्त्रे द्वेषप्रयुक्तपरमतनिराकरणं कथमुपपद्यतामिति शङ्कते—नन्विति । परमतनिराकरणं हि जयाय किञ्चित्, स्वपक्षरक्षणाय किञ्चित् । तत्राद्यमेव द्वेषप्रयुक्तम् । द्वितीयं तु तत्त्वज्ञानफलकम् । तथा च स्वपक्षविश्वासाधिक्यद्वारा तत्त्वज्ञानोपयुक्तं साङ्ख्यादितर्काभासतोपपादनं मुमुक्ष्वधिकारे शास्त्रे नासङ्गतमिति परिहरति—बाढमेवेति । साङ्ख्यानां प्रधानसाधकतर्कसङ्ग्राहकोऽयं श्लोकः—'भेदानां परिणामात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥' इति । अव्यक्तं कारणमिति सर्वत्र साध्यम् । एतच्छ्लोकोक्तं समन्वयादिति हेतुं विशदयति—घटशरावादय इत्यादिना । भिद्यन्त इति भेदाः कार्याणि बाह्याध्यात्मिकानि । तथा च कार्यं सुखदुःखमोहात्मकवस्तुपूर्वकं भवति । तदन्वितत्वात् । यत् येनान्वितं, तत् तदुपादानकं भवतीति सामान्यव्याप्तौ घटादिदृष्टान्तमभिप्रेत्योक्तं—यथा घटशरावादयो भेदा इति । अत्र च विशेषव्याप्तिरपि वक्तुं शक्यते । घटो हि येनाप्यते, तं प्रति सुखरूपः, यस्यापह्रियते, तं प्रति दुःखरूपः, येन न ज्ञायते, तं प्रति मोहापरपर्यायाज्ञानरूप इति । तत्र विशेषव्याप्तौ साधनं तावत् घटे प्रसिद्धम् । एवमेव हि बाह्यानामाध्यात्मिकानां च त्रिरूपतोपपादनीया । साध्यं तु सुखदुःखमोहात्मकाव्यक्तप्रकृतिकं भवतीति तदपि घटरूपे दृष्टान्ते प्रसिद्धमेव । इत्थं हि साङ्ख्यैरसत एव कार्यस्योत्पत्तिर्निरूप्यते—उत्पत्तेः प्रागपि मृदि घटो वर्तत एव । परं

तु सोऽव्यक्तो भवति । पिण्डावस्थया अभिभूतत्वात् । दण्डचक्रादिसामग्र्या तु पिण्डावस्थायां तिरोभूतायाम् अभिव्यक्तो भवति । न च प्राक्तिरोभूत एव घटो यदि दण्डादिभिरावरणाभिभवेनाभिव्यज्येत, तर्हि घटवदेव मृदि कपालाद्यवस्था अपि विद्यन्त एव । ता अपि पिण्डेन तिरोभूता इति वक्तव्यम् । न हि तासामप्यसतीनामेव दण्डप्रहारादिना घटाभिभवे अभिव्यक्तिरिति वक्तुं शक्यते । तथा च पिण्डावस्थायामपनीतायां घटवदेव कपालादिकमभिव्यज्येतेति वाच्यम् । साधनविशेषाणां फलबलेन किञ्चिदवस्थां प्रत्येवाभिव्यञ्जकत्वमुपेयते । तथा च दण्डादिना पिण्डावस्थातिरोभावेन घटावस्थाभिव्यज्यते । तथा च कपालाद्यवस्थास्तिरोधीयन्त इति न तासामभिव्यक्तिः । आविर्भावतिरोभावौ च प्रतियोगित्वानुयोगित्ववत् स्वरूपविशेषौ । तथा चोत्पत्तेः प्राक् सुखदुःखमोहात्मकस्याव्यक्तस्य घटस्य सत्त्वात् तत्पूर्वकत्वाच्च व्यक्तघटस्य दृष्टान्ते साध्यसाधनयोः प्रसिद्धिः । दृष्टान्ते च तादृश्यव्यक्तावस्था मृदाश्रयैव । अनेन दृष्टान्तेन महत्तत्त्वं पक्षीकृत्य सुखदुःखमोहात्मकाव्यक्तावस्थापूर्वकत्वे साध्यमाने तस्या अवस्थाया य आश्रयः, तत् प्रधानमेव भवति । भाष्ये सामान्यग्रहणं बाह्याध्यात्मिकानां पदार्थानां असाधारणोपादानान्यपि सुखदुःखमोहात्मकान्येव भवन्तीति तैरर्थान्तरता स्यादिति शङ्कानिराकरणार्थम् । तथा च घटशरावादिकार्यानुस्यूतस्वान्वितमृत्पूर्वकत्वं यथा घटस्य, एवं स्वान्वितसर्वकार्यानुस्यूतसुखदुःखमोहात्मकवस्तुपूर्वकत्वं साध्यमानं प्रधानमादायैव पर्यवस्यति । असाधारणकारणानां सर्वकार्यानुस्यूतत्वाभावेन सामान्यरूपत्वाभावात् । न चैवमपि यद्यत् कार्यं येन येन सामान्येनान्वितं, तत् तत्पूर्वकमिति व्याप्तिर्वक्तव्या । सा न सम्भवति । जातिरूपसामान्यान्वितत्वेऽपि तत्पूर्वकत्वाभावादिति वाच्यम् । द्रव्यरूपसामान्येनान्वितमिति विवक्षितत्वात् । तथा विमतं सोपादानकं, परिमाणादित्यनेन चानुमानेनोपादानं सिध्यत् कार्यसदृशं सुखदुःखमोहात्मकमेव सिध्यतीति न ब्रह्मणा अर्थान्तरता । नापि परमाणुभिः । तथात्वे अनेककारणकल्पना भवेत् । प्रधानपक्षे तु तदेकमिति । परिमाणादित्यनेन परिमितत्वमव्यापकत्वं विवक्षितम् । शक्तितः प्रवृत्तेरित्यनेन विमतं शक्तिरूपसूक्ष्मावस्थापूर्वकं भवति । कार्यत्वात् । घटवदिति महदादेराद्यकार्यस्य शक्तिपूर्वकत्वं सिध्यत्तस्याश्शक्तेराश्रयभूतं प्रधानमादाय पर्यवस्यति । निराश्रयशक्त्ययोगात् कारणकार्यविभागादविभागाद्वैश्वरूप्यस्येत्यंशस्यायमर्थः —विश्वरूपमेव वैश्वरूप्यं स्वार्थे ष्यञ् । विश्वरूपस्य कृत्स्नस्य कार्यस्याविभागात् । कारणे तिरोभावात् कार्यकारणविभागात्, कार्यस्य कारणादाविर्भावात् यदाविर्भवति तत् सूक्ष्मावस्थापूर्वकं भवति । यत् तिरोभवति, तत् सूक्ष्मावस्थान्तं भवति यथा कूर्माङ्गानि । तथा चाद्यन्ते च सूक्ष्मावस्थाश्रयतया यत्

सिध्यति, तदेव प्रधानमिति, तदाह—**तथा परिमाणादिभिरिति** । नन्वेतैस्तर्कैः साङ्ख्येन सत्त्वरजस्तमोगुणात्मकं कार्यसूक्ष्मावस्थाश्रयरूपमुपादानं सर्वस्य प्रधानं साधनीयं, तत् सिद्धान्तेऽपि स्वीक्रियते अविद्यामायादिपदाभिलपनीयम् । तथा च सिद्धसाधनम् । न च चेतनानधिष्ठितमेव प्रधानं उपादानतया साध्यते । तथा च नोक्तदोष इति वाच्यम् । एवंसति विमतं चेतनाधिष्ठिताचेतनपूर्वकम् । कार्यत्वादिति घटादिदृष्टान्तेनैव प्रतिरोधः । उच्यते—चेतनाधिष्ठानानुमानस्य पूर्वेण समबलत्वे हि प्रतिरोधस्स्यात, न तु तदस्ति । चेतनाधिष्ठानानुमानपक्षे हि अधिष्ठातेश्वरोऽतिरिक्तः स्वीकर्तव्य इति गौरवं, न तु चेतनानधिष्ठानानुमान इति । अनुमीयत इत्यनुमानं प्रधानं, तच्चेतनानधिष्ठितमेव कार्योपादानमिति, न । तथासति रचनायाः संस्थानस्य कार्यस्यानुपपत्तेरिति सूत्रं योजयन् चेतनाधिष्ठितमेवाचेतनमुपादानमिति साध्ये व्याप्तिं दर्शयति—**यदि दृष्टान्तबलेनैवेत्यादिना** । महदादिकार्यं चेतनाधिष्ठिताचेतनोपादानकमिति प्रतिरोधानुमाने पराभिप्रेतं गौरवमाशङ्क्य निराकरोति—**न च मृदादीति** । चेतनानधिष्ठितस्यैव प्रधानस्यानुमाने मृदादिस्वरूपमात्रं दृष्टान्तेऽनुसर्तव्यं, न तु कुलालोऽपि स्वरूपबाह्यः । तथाचातिरिक्तेश्वरकल्पनाप्रसङ्गाभावात् न गौरवमित्यभिमाने न किञ्चिन्नियामकमस्ति । तथासत्यतिलाघवात् उपादानमपि नानुमातव्यं भवेत् । अतिरिक्तप्रधानकल्पनागौरवादिति स्वभाववादप्रसङ्गः । यदि यत् कार्यं, तत् सोपादानकं लोके दृष्टमित्युपादानमनुमीयत इति प्रामाणिकं गौरवं न दोषाय, तथासति यत् कार्यं, तत् सकर्तृकमित्यपि लोके दृष्टमिति प्रामाणिकत्वादिदमपि गौरवं सोढव्यमित्यर्थः । एवं चेतनानधिष्ठानानुमाने सत्प्रतिपक्षमुद्भाव्य चेतनाधिष्ठानानुमानस्य प्राबल्यं दर्शयति—**न चैवंसतीति** । रचनानुपपत्तेश्चेति चकारो नोक्तहेतुसमुच्चयार्थः । पूर्वं कस्यचिद्धेतोरनुक्तेरित्याशङ्क्यानुक्तसमुच्चयार्थ इत्याह—**अन्वयाद्यनुपपत्तेश्चेति** । तथा च महदादिकार्यं सुखदुःखमोहात्मकप्रधानोपादानकम् । सुखाद्यन्वितत्वादिति हेतौ स्वरूपासिद्धिसूचनार्थः चकार इति द्रष्टव्यम् । ननु, विषयाणां सुखदुःखाद्यात्मकत्वं निरस्य तद्धेतुत्वाभ्युपगमे तत एव सुखदुःखाद्यात्मकत्वं भवेदित्याशङ्क्याह—**शब्दाद्यविशेषेऽपीति** । शब्दादीनां सर्वदा सर्वं प्रति सुखहेतुत्वं तावन्नास्ति । एक एव हि शब्दः कदाचित् कञ्चित् प्रति सुखाय भवति, कञ्चित् प्रति कदाचित् दुःखाय भवति । तत्र च वासनाविशेषः सहकारी । यस्य यस्मिन् वस्तुनि रमणीयत्ववासना यदा उद्बुद्धा भवति, तदा तत् सुखाय भवति । यदा त्वरमणीयत्ववासनोद्बोधो भवति, तदा दुःखाय भवति । अतो नैषां नियतं सुखदुःखादिहेतुत्वम् । अनियत-

सुखदुःखादिहेतुत्वं तु न सुखादिरूपत्वे प्रयोजकम् । यथा ह्यनिच्छाद्विषस्वरूपाणामपि घटादीनामिच्छादिजनकत्वम्, एवमसुखादिरूपाणामपि सुखादिजनकत्वोपपत्तेः । अपि च यत् यदन्वितं, तत् तदुपादानमिति नास्ति व्याप्तिः । जात्यन्वितानामपि तदुपादानत्वाभावात् । न च येन द्रव्येणान्वितं यत्, तत् तदुपादानमिति व्याप्तिः । द्रव्यपरिभाषाया अप्रयोजकत्वात् । तत्परिभाषालम्बनेऽपि सुखादीनामद्रव्यतया तदुपादानत्वासिद्धेश्च । एवं समन्वयादिति हेतुं निराकृत्य परिमाणादिति हेतुं निराकरोति—**तथा परिमितानामिति** । साङ्ख्येन परिमितत्वात् सोपादानकमिति साधने ब्रह्मणोपादानेनार्थान्तरतावारणाय परस्परसंयुक्तानेकद्रव्योपादानकत्वं साधनीयम् । न च तथापि परमाणुभिरर्थान्तरता । तेषामनेकत्वेन गौरवापत्त्या एकस्यैव प्रधानस्य त्रिगुणस्योपादानतया सिद्धिसम्भवादिति मनसि निधायोक्तं—**संसर्गपूर्वकत्वमित्यादि । परिमितत्वाविशेषादिति** । ननु, परिमितत्वं यदि सङ्ख्येयत्वमिति विवक्ष्येत, तदा गुणानामपि सङ्ख्येयत्वेन परिमितत्वात् भवेद्व्यभिचारः । न तु तथा विवक्ष्यते । अपि तु परिमितत्वमव्यापकत्वम् । गुणास्तु व्यापका इत्येव तेषामुपगमः। ततो न व्यभिचारः । न च प्रलये गुणानां सङ्कोचात् तदानीं तेषु अव्यापकत्वमस्तीति वाच्यम् । न हि प्रलये अव्याप्तिरूपो गुणानां सङ्कोच उपेयते, अपि तु व्यापकानामेव सतामभिभवः । यथा हेमन्तग्रीष्मयोरपि व्याप्यैव विद्यमानयोर्घर्महिमयोरभिभवः , ग्रीष्महेमन्तयोस्तूद्भवः, एवं गुणानामपि प्रलये अभिभवः , सृष्टौ त्वाविर्भाव इति चेत्, एवं तर्हि तत्तद्गुणाविर्भावस्याव्यापकतया तत्तद्गुणमात्रकार्यतया च संसृष्टानेकोपादानत्वाभावाद्व्यभिचार इति द्रष्टव्यम् । कारणकार्यविभागादित्यादितर्कं दूषयति—**कार्यकारणभावस्त्विति** । कार्यस्य कारणात् भावः अभिव्यक्तिरित्यर्थः ॥ १ ॥

## प्रवृत्तेश्च ॥२॥

**साम्यावस्थानात्प्रच्युतिरिति** । इयं साङ्ख्यानां परिभाषा—प्रलये त्रयो गुणास्साम्येन तिष्ठन्ति । न कस्यापि उत्कर्षः, नापि कस्यचिदपकर्षः । सेयं साम्यावस्थैव प्रधानमित्युच्यते । सर्गारम्भे तु स्वत एव गुणा उत्कर्षापकर्षरूपतां प्राप्नुवन्ति। तत्रोत्कृष्टं सत्त्वं रजस्तमसी अभिभूय ताभ्यां सहितं शान्तां स्वप्रवृत्तिमारभते। तत्र सत्त्वमङ्गि, रजस्तमसी अङ्गभूते । रज उत्कृष्टं सत्त्वतमसी अभिभूय ताभ्यां सहितं घोरां स्वप्रवृत्तिमारभते । तत्र रजः प्रधानं, सत्त्वतमसी अङ्गभूते । तम उत्कृष्टं मूढां स्वप्रवृत्तिमारभते । तत्र रजस्सत्त्वयोरङ्गत्वं, तमसोऽङ्गित्वम् । एवं परस्परमङ्गाङ्गिभावेन मेलने सति महदादिकार्यारम्भः । तत्र या प्रथमा प्रवृत्तिः प्रधानस्य,

सापि चेतनाधिष्ठानं विना न सम्भवति । किमुतानन्तरकार्यारम्भ इति । एवं च यथा प्राथमिकी प्रवृत्तिः चेतनाधिष्ठानपूर्विका, एवमुत्तरकार्यस्यापि या शक्तितः प्रवृत्तिः, सापि चेतनाधिष्ठानपूर्विकैवेति शक्तितः प्रवृत्तेरिति तर्कोऽप्ययुक्त एव । एवं सिद्धान्तिना चेतनाधिष्ठितत्वे साधिते स चेतनः व्यापारयुक्त एवाधिष्ठाता, उत तद्रहितः । नान्त्यः । निर्व्यापारस्याधिष्ठातृत्वायोगात् । आद्यस्तु न सम्भवतीत्याह—**नन्विति** । अत्र च यद्यपि चेतनस्यापीच्छायत्नादिरूपा प्रवृत्तिरधिष्ठातृत्वोपयोगिनी प्रत्यक्षेणैव दृष्टा । वक्ष्यति च सूत्रकारः—'कर्ता शास्त्रार्थवत्त्वादि'ति तथा च ईश्वरोऽपि 'सोऽकामयत इदं सर्वमसृजते'त्यादिश्रुतिपर्यालोचनया दृष्टानुसाराच्चाधिष्ठातृत्वोपयुक्तव्यापारयुक्त एवेति वक्तुं शक्यम् । तथापि जीवे व्यापारस्य दृष्टत्वाभावमुपेत्यैव परिहरति—**सत्यमिति** । तथा च अचेतनप्रवृत्तौ चेतनस्यापेक्षितत्वान्निर्व्यापारस्य च तस्यापेक्षितत्वानुपपत्तेः तदुपपत्तये चेतनेऽपि व्यापारः कल्प्यत इति गूढोऽभिसन्धिः । तमभिसन्धिमजानन्निव तावता किमुभयत्रापि प्रवृत्तिर्विवक्षिता, नेत्याह सांख्यः—**न त्वचेतनसंयुक्तस्येति** । ननु, चेतनाचेतनसंयोगे प्रवृत्तिर्दृष्टा । सा अचेतनस्यैव, न तु चेतनस्य । नापि चेतनप्रयुक्तस्येति सांख्यस्य गूढोऽभिसन्धिः । स कथमित्याशङ्कायां विमृशति साङ्ख्यः—**किं पुनरत्र युक्तमिति** । स एव निर्णयमाह—**नन्विति** । ननु, चेतनाचेतनसंयोगे अचेतनगता स्पन्दरूपा या प्रवृत्तिर्दृष्टा, सा चेतनस्येत्यस्माभिर्नोच्यते । अपि तु तादृशस्पन्दप्रयोजिका प्रयत्नादिरूपा प्रवृत्तिः चेतने अभ्युपेयेत्युच्यते । निर्व्यापारस्य चेतनस्य प्रवृत्त्युपयोगानुपपत्तेः । न चेष्टापत्तिः । तथासति मृतशरीरेऽपि चेष्टाप्रसङ्गादित्याशङ्क्याह साङ्ख्यः—**प्रवृत्त्याश्रयदेहादिसंयुक्तस्येति** । तथा च मृतशरीरे चेतनासंयोगः, जीवति शरीरे तु तत्संयोग इति वैलक्षण्यमित्येतावता एकत्र निर्व्यापारता, अन्यत्र सव्यापारता, न तु तावता व्यापारे चेतनस्याधिष्ठातृत्वम् । येन तत्रापि यत्नादिकं सिध्येत् । न हि सर्वस्याकाशसंयोग एव व्यापार इत्याकाशोऽप्यधिष्ठातेपेयत इति भावः । यो व्यापारो यस्य दृष्टस्तस्यैव सः, न तु तत्र प्रयोजकः तदतिरिक्तश्चेतनोऽपेक्षित इत्यत्र लोकायतभ्रमं संवादयति—**अत एवेति** । चेतनसम्बन्धे सत्येव जीवच्छरीरे प्रवृत्तिदर्शनात् मृतशरीरे च तदसम्बन्धे प्रवृत्त्यदर्शनात् अन्वयव्यतिरेकाभ्यां अचेतनप्रवृत्तौ चेतनस्याधिष्ठातृत्वमुपेयते । आकाशे त्वन्वयमात्रे सत्यपि व्यतिरेको नास्ति । अतोऽप्रयोजकत्वमित्यभिप्रायेण परिहरति—**अत्राभिधीयत इत्यादिना** । ननु, वेदान्तिनोऽपि चेतनयोर्जीवेश्वरयोरसङ्गचैतन्यमात्रस्वरूपयोः कथमधिष्ठातृत्वमित्याशङ्क्य सन्निधिमात्रेण तद्भविष्यतीति सदृष्टान्तमाह—**ननु, तव देहादिसंयुक्तस्ये-**

त्यादिना । यदि सन्निधिमात्रेणैव चेतनस्याधिष्ठातृत्वमुच्यते, तर्हि क्षेत्रज्ञसन्निधानादेव सर्गोपपत्तेः किमीश्वरेणेत्याशङ्क्योक्तं **सर्वज्ञस्सर्वशक्तिश्चेति** । लोके उपादानगोचरज्ञानादिमत एवाधिष्ठातृत्वदर्शनात् तादृशः परमेश्वर एवाद्यसर्गाधिष्ठाता सिध्यति, न तु क्षेत्रज्ञः । तस्यासर्वज्ञस्यासर्वशक्तेस्तदसम्भवात् । अयस्कान्तवदिति तु तात्कालिकं समाधानमिति भावः । **एकत्वात् प्रवर्त्याभाव इति** । उपलक्षणमेतत् निर्गुणस्य सर्वज्ञत्वादिकमित्यस्यापि । परमार्थतोऽद्वितीयस्य निर्गुणस्यापि आविद्यकं सद्वितीयत्वं सर्वज्ञत्वादिगुणयुक्तत्वं च भवतीति परिहाराभिप्रायः ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

यद्यत् कार्यं, तच्चेतनाधिष्ठिताचेतनोपादानकं, न तु चेतनानधिष्ठिताचेतनोपादानकमित्यस्य वत्सविवृद्ध्यर्थं क्षीरप्रस्रवे जलस्यन्दने च व्यभिचारशङ्कानिवृत्त्यर्थमिदम् । पयोऽम्बुनोरपि पक्षसमत्वान्न तत्र व्यभिचारशङ्का दोषावहेति परिहाराभिप्रायः । तयोस्सपक्षतामप्याह—**शास्त्रं चेत्यादिना** । साध्यपक्षनिक्षिप्तत्वात् पक्षसमत्वात् सपक्षत्वाच्चेत्यपि द्रष्टव्यम् । ननु, 'उपसंहारदर्शनान्नेति चेत् न क्षीरवद्धी'त्यत्र क्षीरस्य दध्याद्याकारपरिणामे बाह्यं साधनं नापेक्षितमित्युक्तम् । इह तु कार्यमात्रे उपादानस्वरूपात् बहिर्भूतस्याधिष्ठातुरपेक्षोच्यत इति विरोध इत्याशङ्क्याह—**उपसंहारदर्शनादिति** ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

**न तद्व्यतिरेकेण बाह्यं किञ्चिदपेक्ष्यमस्तीति** । ननु, धर्माधर्मापेक्षास्ति । इयं हि तन्मतस्थितिः—धर्मकार्यमधर्मेण प्रतिबध्यते । धर्मेण तु प्रतिबन्धकस्याधर्मस्य निरासः क्रियते । एवमधर्मकार्यं धर्मेण प्रतिबध्यते । अधर्मेण धर्मनिरासः क्रियते । तथा च प्रतिबन्धकनिरासाय धर्माधर्मापेक्षा, न तु साक्षादेव कार्य इति चेत् , तथासति प्रलये धर्माधर्मयोरपि सत्त्वात् प्रतिबन्धकनिरासे कार्यं स्यादेवेति प्रलयानुपपत्तिरेव । ननु, तर्हि वेदान्तिनोऽपि प्रलयानुपपत्तिः । प्रलयेऽपि धर्माधर्मयोस्सम्भवात् । न च तयोः परिपाकाभावात् न तदानीं सृष्टिरिति वाच्यम् । परिपाकाभावस्य साङ्ख्यमतेऽपि वक्तुं शक्यत्वादित्यत आह—**ईश्वरस्य त्विति** । लोके हि कार्योपयोगी परिपाकः चेतनाधीनो दृष्टः । तथा च सिद्धान्ते ईश्वरसिसृक्षावशाद्धर्माधर्मयोः पाकः सम्भवति । साङ्ख्यमते तदसम्भवात् न तयोः पाक उपपद्यत इति भावः ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

**स्वभावादेव क्षीराकारेण परिणमत इति** । तथा च क्षीराकारपरिणतियोग्यपाकविशेषस्य तृणादिगतस्य चेतनाधिष्ठानं विनापि दर्शनात् न पाके सर्वत्र चेतनापेक्षेति शङ्काभिप्रायः । **येनैव ह्युपयुक्तं तृणादीति** । तथा च तृणादेरपि क्षीरादिपरिणामयोग्यपाकार्थं धेनुचैतन्यस्यापेक्षितत्वात् न तत्र व्यभिचार इति परिहाराभिप्रायः ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

एवं साङ्ख्यमते जगद्रचना नोपपद्यते चेतनाधिष्ठानं विनेति 'पयोऽम्बुवच्चेत्तत्रापी'त्यन्तैस्त्रिभिः सूत्रैः प्रतिपादितम् । अनन्तरं द्वाभ्यां सूत्राभ्यां चेतनाधिष्ठानं विना सृष्टिप्रलयव्यवस्था नोपपद्यत इत्युक्तम् । अनेन तु सूत्रेण यत् साङ्ख्यैरुच्यते—चेतनानधिष्ठितमेव प्रधानं पुरुषप्रयोजनाय प्रवर्तत इति, तन्निराक्रियते । तन्मते पुरुषप्रयोजनस्यैव निरूपणासम्भवादिति । **भोगो वा स्यादिति** । भोग एव वा स्यादपवर्ग एव वा स्यात्, उभयं वेति विकल्पार्थः । **कीदृशो वानाधेयातिशयस्येति** । भोगो हि सुखदुःखसाक्षात्काररूपो धर्मः । सोऽसङ्गे पुरुषे न सम्भवति । **अनिर्मोक्षप्रसङ्गश्चेति** । भोगार्थमेव प्रवृत्तेरुपगमात् । **प्रागपि प्रवृत्तेरपवर्गस्येति** । अपवर्गो हि पुरुषस्य स्वरूपेणावस्थितिः, सा नित्यसिद्धेति भावः । **शब्दाद्यनुपलब्धिप्रसङ्गश्चेति** । मोक्षार्थमेव प्रवृत्तत्वात् । ननु, पुरुषस्य दृक्छक्तिरस्ति । प्रधानस्य सर्गशक्तिरस्ति । तदुभयसार्थक्याय प्रधानं प्रवर्तते । अन्यथा हि सर्गाभावात् सर्गशक्तिवैयर्थ्यं स्यात् । सृष्ट्यभावे च विषयाभावेन तत्प्रकाशाभावात् दृक्छक्तिरपि व्यर्था भवेत् । अत उभयसार्थक्याय सर्ग इति शङ्कते—**दृक्छक्तिसर्गशक्तीति** । **अनिर्मोक्षप्रसङ्ग एवेति** । ननु, बुद्धौ चैतन्यप्रतिबिम्बात् पुरुषेण भेदाग्रहे सति बुद्धिस्सुखदुःखाद्यात्मना परिणमते । **तद्दर्शनं भोगः** । श्रवणमनननिदिध्यासनैः विवेके उत्पन्ने अविवेकनिवृत्तौ तन्मूलसुखदुःखादिपरिणामाभावात्तद्दर्शनाभावेन स्वरूपावस्थानं मोक्ष उपपद्यत इति चेत्, न । सुखदुःखादिदर्शनस्य भोगस्य मोक्षोपायस्य बुद्धेर्विवेकस्य चासङ्गे पुरुषे असम्भवात् । न च भोगविवेकौ बुद्धिगतावेव पुरुषेण स्वस्मिन्नारोप्येते इति वाच्यम् । आरोपस्यापि असङ्गे पुरुषे असम्भवात् । न च सिद्धान्त इव द्वैतयाथार्थ्यवादिना अनृतस्यैव संसारस्य विवेकस्य तदारोपस्य वासङ्गे पुरुषे उपपत्तिरिति वक्तुं शक्यम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथापि ॥७॥

यदि चेतनाधिष्ठितमेवाचेतनं कार्यं रचयतीत्युच्यते, तथापि नालौकिक ईश्वरः कल्पनीयः । अपि तु क्षेत्रज्ञाधिष्ठितस्यैव प्रधानस्य कार्योत्पादकता भविष्यतीति शङ्कितुस्तात्पर्यम् । **निष्क्रियत्वात् निर्गुणत्वाच्चेति** । लोके हि चिकीर्षादिगुणयुक्तो यत्नाख्यान्तरक्रियावशात् बाह्यमचेतनं व्यापारयति चेतन इति प्रसिद्धम् । तत्र तु तदनङ्गीकारात् कथं पुरुषस्य प्रवर्तकतेति भावः ॥७॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

'व्यतिरेकानवस्थितेरि'ति सूत्रे प्रधानस्य साम्येनावस्थानरूपः प्रलयो नोपपद्यत इति उक्तम् । तत्रेयं परस्याशङ्का—अनुमानात् सिध्यत् प्रधानमव्यक्तात्मकं साम्येनावस्थितं प्रलयकालवर्त्येव सिध्यति । तथा च प्रमाणसिद्धस्य तस्य कथं निरास इति । तत्रोत्तरं सूत्रम् । **अनपेक्षस्वरूपाणामिति** । प्रलये गुणाः परस्परापेक्षा न भवन्ति । अङ्गाङ्गिभावेन सर्गारम्भे परस्परापेक्षा भवन्ति । तथा च निरपेक्षस्वरूपाणां सतां सापेक्षत्वापत्तौ स्वरूपनाशो भवेत् । अतोऽङ्गाङ्गिभावानुपपत्तिः । **बाह्यस्य च कस्यचित् क्षोभयितुरभावादिति** । साम्यावस्थातः प्रच्युतिसम्पादकः क्षोभकः । तथा च निर्निमित्तवैषम्यं नोपपद्यत इति ॥८॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

**चलं गुणवृत्तमिति चेति** । कदाचित् साम्यावस्था, कदाचिद्वैषम्यावस्थेति, चलस्वभावा गुणा इत्यर्थः । ज्ञशक्ति ज्ञानशक्तिम् ॥९॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

**क्वचित् सप्तेन्द्रियाणीति** । पञ्च कर्मेन्द्रियाणि, त्वगात्मकं ज्ञानेन्द्रियमेकमेव मनश्चेति सप्त । **क्वचिदेकादशेति** । पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्चैकादश । **क्वचिन्महत इति** । महत्तत्त्वात्तन्मात्राणां शब्दस्पर्शरूपरसगन्धानां सर्गम् । **क्वचित् त्रीणीति** । मनो, बुद्धिः, अहंकार इति । **क्वचिदेकमिति** । मनोरूपम् । साङ्ख्यः अद्वैतिमते प्रत्यक्षादिविरोधादसामञ्जस्यं शङ्कते—**नन्वौपनिष**

**दानामिति** । **तप्यतापकयोरिति** । तापो दुःखं, तदाश्रयस्तप्यः । दुःखहेतुः तृष्णादिस्तापकः । तयोरात्मोपादानकत्वेनात्मनस्सकाशात् पृथग्भावानभ्युपगमादित्यर्थः । सङ्ग्रहवाक्यं विवृणोति—**एकं हीति** । ततः किं, तत्राह—**यदि चैताविति** । **योऽपि जलवीचीति** । 'भोक्त्रापत्तेरविभागश्चेदि'ति सूत्र इत्यर्थः । अपि च तप्यतापकयोर्भेदो लोकप्रसिद्धः । सोऽपि नोपपद्यते । एकेन ब्रह्मणाऽभिन्नयोस्तयोः परस्परमभेदस्यावश्यकत्वादित्याह—**प्रसिद्धश्चायं तप्यतापकयोरिति** । जात्यन्तरभावो भेदः । स नोपपद्यत इति शेषः । तप्यतापकस्वरूपं, तयोर्भेदं च विवृण्वन् तयोरेकब्रह्माभिन्नत्वे न केवलं प्रत्यक्षादिविरोधः, अपि तु मोक्षोऽप्यनुपपन्न इत्याह—**तथा हीत्यादिना** । अर्थः सुखसाधनं, सुखं च । अनर्थो दुःखसाधनं, दुःखं च । वैषयिकं च सुखं दुःखपर्यवसायित्वाद्दुःखतुल्यम् । सर्वमेतत्तापकम् । तत्सम्बन्धी पुरुषः तप्यः । तथा च तप्यतापकयोर्भेदः एकेनात्मना तयोरभिन्नत्वेन नोपपद्यते । आत्माभिन्नत्वे च तयोरात्मस्वरूपान्तर्भावात् तस्य च ज्ञानेनोच्छेत्तुमशक्यत्वान्मोक्षानुपपत्तिरिति 'तथाहीत्यादेरत्रोच्यत' इत्यतः प्राक्तनस्य ग्रन्थस्यार्थः । परमार्थगत्या तप्यतापकभाव एव नास्ति । कस्यानुपपत्तिरद्वैतवादिनं प्रत्यापाद्यत इत्यभिप्रेत्य परिहरति—**अत्रोच्यते–नैकत्वादिति** । तर्हि तप्यतापकभावप्रसिद्धेः का गतिरिति पृच्छति—**क्व पुनरिति** । आविद्यकोऽयं तप्यतापकभाव इति वक्तुमुपक्रमते—**किं न पश्यसीति** । संहतत्वं मिलितत्वम् । परमार्थत इति शेषः । सत्त्वं बुद्धिगतम्सत्त्वांशः । स हि सुखादिदर्शनात्मना परिणमते । **तापकं रज इति** । बुद्धिगतो रजोंऽशः । स हि रागाद्युत्पादनेन दुःखहेतुः । **नित्यत्वाभ्युपगमादिति** । रजोगुणो हि तापकः । स च नित्यस्साङ्ख्यमते । यद्यपि सत्त्वरजसोस्तप्यतापकयोः शक्तिर्नित्या, तथापि न मोक्षानुपपत्तिः । यदा हि तमस उद्रेको भवति, तदा बुद्धेरात्मना सह विवेकग्रहो न भवति । तदा च सा रजोंऽशेन दुःखादिजनिका तापहेतुर्भवति । दुःखदर्शनात्मना परिणतं सत्त्वं तप्यं भवति । यदा तु सत्त्वोद्रेकेणात्मना सह विवेको बुद्धौ भवति, तदा अविवेकनिवृत्तौ निमित्ताभावात्तप्यतापकभावशक्तिमात्रावशेषो भवति । न तु दुःखादिकं तद्दर्शनं वा । स एव मोक्ष इति शङ्कते—**तप्यतापकशक्त्योर्नित्यत्वेऽपीति** । निमित्तं तमस उद्रेकः । तत्कृतसंयोगोऽविवेकः । तदपेक्षत्वात् फलजननाय । **अदर्शनस्य तमसो नित्यत्वाभ्युपगमादिति** । तथा च तमोगुणस्य नित्यतया नित्यमेवाविवेकस्स्यादित्यनिर्मोक्षः । उद्भूत एव तमोगुणोऽविवेकहेतुः । उद्भवस्य चानियतत्वात् नानिर्मोक्ष इत्याशङ्क्याभिभवस्यानियतत्वादभिभूतस्यापि तमसः पुनरुद्भवान्मुक्तानामपि बन्धस्स्यादित्यभिप्रेत्याह—**उद्भवाभिभवयोरनियतत्वादिति** ॥ १० ॥ ॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

# महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥११॥

वृत्तानुवादपूर्वकं वर्तिष्यमाणाधिकरणमवतारयति—**प्रधानकारणवाद इति** । अत्र तार्किकमतनिराकरणोपयोग्यधिकरणद्वयम् । तत्राद्याधिकरणतात्पर्यमाह—**तत्रादौ तावदिति । स प्रतिसमाधीयत इति** । यद्यपि स्वपक्षोद्भावितदोषसमाधानं पूर्वपाद एव सङ्गतम् । तस्यैव स्वपक्षोद्भावितदोषनिरासार्थत्वात् । अत्र तु पादे परपक्षनिरासपराणामेवाधिकरणानां सङ्गतिः, तथापि जगति प्रधानधर्माणां सुखदुःखमोहानामननुवृत्तेर्न प्रधानोपादानकत्वमिति पूर्वस्मिन्नधिकरण उक्तम् । तथासति ब्रह्मगुणस्य चैतन्यस्यापि अनुवृत्तिर्जगति नोपलभ्यत इति न जगतो ब्रह्मोपादानकत्वमिति प्रसक्तस्य चोद्यस्य निराकरणात् प्रासङ्गिकमत्रेदमधिकरणम् । न चेतनं ब्रह्म जगत्कारणं भवितुमर्हति, अपि तु स्पर्शादियुक्तस्य कार्यस्य भूम्यादेस्तादृशाः परमाणव एव मूलकारणम् । तत्र वायवीयपरमाणवो रूपादिषु मध्ये स्पर्शमात्रयुक्ताः । तेजःपरमाणवः स्पर्शरूपयुक्ताः । अप्परमाणवः स्पर्शरूपरसयुक्ताः । पृथिवीपरमाणवः स्पर्शरूपरसगन्धयुक्ताः । भूतत्रयपरमाणुगताः स्पर्शादयो नित्याः । पृथिवीपरमाणुगतास्त्वनित्याः पाकजाश्चेति । शब्दस्तु कार्यद्रव्यगतो न भवत्येव । तस्याकाशमात्रगतत्वात् । आकाशस्य च नित्यत्वं निरवयवत्वं चेति तेषां परिभाषा । **तदीययैव प्रक्रियया व्यभिचारयतीति** । यद्यपि सिद्धान्ते नित्यं ज्ञानं ब्रह्मरूपमेव, न गुणः । तत्तादात्म्यं च घटस्स्फुरतीति सिद्धमेव सर्वत्र जगति । वृत्तिरूपं तु ज्ञानमन्तःकरणावस्थाविशेषो द्रव्यमेव, नात्मगुणः । अतो ब्रह्मोपादानकत्वे प्रपञ्चस्य ब्रह्मगुणस्य प्रपञ्चे अनुवृत्तिः स्यादिति दोषो निरवकाश एव भवतीति वक्तुं शक्यं, तथापि तार्किकप्रक्रियामभ्युपगम्य तद्रीत्यैव समाधानं वक्तुमधिकरणमिति भावः । **एषा तेषां प्रक्रियेति** । कार्यद्रव्याणां समवायिकारणनाशादसमवायिकारणनाशाद्वा नाशः । तथा च तैस्तैः प्रलयनिमित्तैः अवयवानां तत्संयोगानां च नाशेन पृथिव्यादीनां परमाण्वन्तो नाशो भवति । परमाणूनां नित्यत्वात्ते यावत्प्रलयं कार्यद्रव्यरहिता एव भवन्ति । प्रलयान्ते चादृष्टवशात् परमाणुषु क्रियोत्पद्यते । तया परमाण्वोः संयोगो भवति । ततो द्व्यणुकमुत्पद्यते । तत्र परमाणुद्वयं समवायिकारणम् । तत्संयोगोऽसमवायिकारणम् । एवमुत्तरोत्तरकार्योत्पत्तिः । **परमाणुगुणविशेषस्तु पारिमाण्डल्यमिति** । परमाणुपरिमाणं पारिमाण्डल्यम् । तस्य न परिमाणान्तरारम्भकत्वम् । नित्यपरिमाणत्वात् मनोगतपरिमाणवत् आत्माकाशादिगतमहत्त्ववच्च । पारिमाण्डल्यरूपत्वाद्वा मनोगतपारिमाण्डल्यवत् । अन्यथा द्व्यणुकस्य

ततोऽपि सूक्ष्मत्वं भवेत्, परिमाणस्य स्वोत्कृष्टपरिमाणजनकत्वस्वाभाव्यात् । यथा हि कपालादिगतं महत्त्वं घटे स्वोत्कृष्टमहत्त्वं जनयति, तथा पारिमाण्डल्यमप्यतिशयितं पारिमाण्डल्यं जनयेदित्यर्थः । **यदा द्वे द्व्यणुके इत्यादि ।** ननु, तार्किकपरिभाषायां द्वयोर्द्व्यणुकयोर्नोपादानत्वम् । तत्कार्यस्य भोगानुपयुक्तत्वात् । तदपि हि न महद्भवेत् । कारणबहुत्वमहत्त्वप्रचयैर्हि कार्ये महत्त्वं वक्तव्यम् । तत्तु प्रकृते न सम्भवति । द्वयोर्द्व्यणुकयोर्महत्त्वबहुत्वे न स्त एव । प्रचयस्तु तूलपिण्डे तदारम्भकावयवानामेकदेशमात्रसंयोगश्शैथिल्यरूपो द्व्यणुके न सम्भवति । तदारम्भकपरमाण्वोः निष्प्रदेशत्वात् । तथा च द्व्यणुकद्वयकार्यस्य महत्त्वाभावेन द्व्यणुकद्वयमपेक्ष्य भोगविशेषाभावात्तदारम्भो व्यर्थ एव । चतुरणुकस्य महत्त्वदीर्घत्वाभ्युपगमादित्यपि नोपपद्यते । द्व्यणुकद्वयकार्ये चतुरणुके उक्तगत्या महत्त्वं नास्त्येव । दीर्घत्वं तु महत्त्वनियतं तदभावे नोपपद्यते । यदापि बहवः परमाणव इत्यादिना द्व्यणुकारम्भं विनैव बहूनां परमाणूनां महदारम्भकत्वोक्तिरपि न तत्परिभाषाप्रसिद्धा । बहूनां परमाणूनां हि संयोगो न सम्भवति, तदा हि परमाण्वन्तरसंयोगवत्येव परमाणोः पुनः परमाण्वन्तरसंयोगो वक्तव्यः । स चाव्याप्यवृत्तिरिति वक्तुं न शक्यते । परमाणूनां निष्प्रदेशत्वात् । व्याप्यवृत्तित्वे च पार्थिवाप्यपरमाण्वोरेकदेशावच्छेदेन समावेश आपतन्नोपपद्यते । न हि पार्थिवद्रवद्रव्यद्वयस्य घटादावेकत्रैव समावेशः । नापि द्वयोर्जलयोः । अपि च परमाणुद्वयसंयोगे सति द्व्यणुकारम्भकत्वं तावत् कारणसमावेशात् सिद्धम् । द्व्यणुकत्रयसमावेशे च महाकार्यजनकत्वमपि सिद्धमेव । तथा च कारणकारणजातीयस्य कार्यकार्यजातीयाजनकत्वमिति व्याप्त्या न बहूनां महाकार्यारम्भकत्वम् । न ह्यंशूनां पटकारणीभूततन्तुकारणांशुजातीयानां अंशुकार्यभूततन्तुकार्यपटजातीयारम्भकत्वं साक्षादेव दृष्टमिति चेत्, उच्यते—इयं तार्किकपरिभाषा अप्रयोजिकेति तथा भाष्ये उक्तम् । तथा हि—द्वयोर्द्व्यणुकयोर्भोगविशेषानुपयोगिकार्यजनकत्वं न सम्भवतीत्यसङ्गतम् । द्व्यणुकद्वयसंयोगे सति सामग्रीसद्भावेन प्राप्तस्य कार्यस्य प्रयोजनाभावमात्रेण निवारयितुमशक्यत्वात् । न हि द्वयोर्द्व्यणुकयोस्संयोग एव न सम्भवतीति निर्बन्धः सम्भवति । अपि च प्रयोजनाभावमात्रेण कार्यस्य सामग्रीसम्भवप्राप्तस्य निवारणे द्व्यणुकोत्पत्तिरपि न स्यात् । तस्य भोगानुपयुक्तत्वात् । साक्षादनुपयोगेऽपि त्र्यणुकोत्पत्तिद्वारा भोगोपयोगोऽस्तीति चेत्, द्व्यणुकद्वयारब्धस्यापि कार्यस्य स्थूलकार्यारम्भद्वारा भोगविशेषोपयोगस्सम्भवत्येव । द्व्यणुकद्वयारब्धस्य कार्यस्य महत्त्वदीर्घत्वाभ्युपगमोक्तिस्तु द्व्यणुकद्वयमपेक्ष्य तत् स्थूलमित्यभ्युपगन्तुं शक्यमित्यभिप्रायः । अतो नानुपप-

त्तिः । एवं बहूनां परमाणूनां संयोगे सति स्थूलकार्यारम्भोऽपि द्व्यणुकारम्भं विहायैव केन वारयितुं शक्यः । न च तेषां परमाणूनामेकदेशसमावेशो नोपपद्यत इति वाच्यम् । येनापि द्व्यणुकत्रयसमावेश उपेयते, तेनापि द्व्यणुकारम्भकैकपरमाणुसंयोगवत्येव तद्द्व्यणुकान्तर्गतपरमाणौ द्व्यणुकान्तरसंयोग उपेयः । द्व्यणुकद्वयसंयोगस्य संयोगजत्वात् कारणाकारणसंयोगात् कार्याकार्यसंयोगः । हस्तमस्तकसंयोगात् कायमस्तकसंयोगो यथेति हि तन्मर्यादा । तथा च यथैकस्मिन्नेव परमाणौ द्व्यणुकपरमाण्वोः समावेश उपेयते, तथैकस्मिन्नेव परमाणौ बहूनां परमाणूनां संयोगः किमिति नाभ्युपगम्यते । कारणकारणजातीयस्य कार्यकार्यजातीयानारम्भकत्वमिति नियमश्च न साधुः । अप्रयोजकत्वाद्व्यभिचाराच्च । तन्तुद्वयसंयोगे हि द्वितन्तुकसूत्रमारभ्यते, द्वितन्तुकैस्त्रिभिस्सूत्रैस्त्रिवृद्रज्जुः । कदाचित्तु तन्तुत्रयेणैव त्रिवृद्रज्जुरारभ्यते । तत्र कारणकारणजातीयानां तन्तुकार्यकार्यजातीयत्रिवृद्रज्ज्वारम्भकता दृष्टा । न च द्वितन्तुकसूत्रीकृतत्रिवृद्रज्जुमपेक्ष्य त्रितन्तुकत्रिवृद्रज्जुर्विजातीयैव । अतो न व्यभिचार इति वाच्यम् । तथासति द्व्यणुकत्रयारब्धात्त्र्यणुकात् परमाण्वारब्धत्र्यणुकस्यापि विजातीयत्वोपपत्त्या उक्तनियमविरोधाभावात् । तथा च तार्किकपरिभाषाया अप्रयोजकत्वद्योतनाय द्वयोर्द्व्यणुकयोर्बहूनां परमाणूनां परमाणुसहितानां वा द्व्यणुकानां स्थूलकार्यारम्भकत्वोक्तिर्भाष्ये उपपन्ना । सूत्रं योजयति—तदेवमिति । महद्दीर्घवदिति वतेरधस्ताद्ध्रस्वेति पदाध्याहारो द्रष्टव्यः । अत्र च यदि परमाणुभ्यां द्वाभ्यामणु ह्रस्वं च द्व्यणुकमारभ्यते, बहुभिर्द्व्यणुकैरेव त्र्यणुकमारभ्यते, तच्च महद्दीर्घमिति परिभाषानुसारेण सूत्रार्थो वर्णनीयः । तदा ह्रस्वाद्द्व्यणुकात् यथा महतो दीर्घस्य त्र्यणुकस्य उत्पत्तिः, यथा वा परिमण्डलात् परमाणोर्ह्रस्वस्य द्व्यणुकस्योत्पत्तिः, एवं चेतनात् ब्रह्मणो अचेतनस्य जगत उत्पत्तिरिति सूत्रार्थो द्रष्टव्यः । भाष्ये तु परिमण्डलात् सतः अणु ह्रस्वं द्व्यणुकं जायते, महद्दीर्घं च द्व्यणुकादिति योजनाकथनं तार्किकपरिभाषामनादृत्य । ननु, सूत्रे महद्दीर्घवदिति निर्देशः किं कर्मधारयसमासं महद्दीर्घपदयोरुपेत्य, उत द्वन्द्वसमासम् । नाद्यः । कर्मधारये 'आन्महतस्समानाधिकरणजातीययो'रिति सूत्रेण समानाधिकरणे पदे जातीयप्रत्यये च परस्मिन्महत आत्वविधानेन महादीर्घवदिति प्रसङ्गात् । नापि द्वितीयः । एकस्मिन्नेव महत्त्वदीर्घत्वयोस्सत्त्वेन धर्मिभेदाभावेन द्वन्द्वसमासाप्रवृत्तेः । पदार्थभेद एव हि द्वन्द्वः । ननु, 'चार्थे द्वन्द्वः' समानाधिकरणस्थले च पदार्थतावच्छेदकभेदेन तयोरितरेतरयोगश्चार्थो वर्तत एवेति किमिति पदार्थभेदनिर्बन्धो द्वन्द्वे । तथा च महद्दीर्घपदयोः समानाधिकरणत्वेऽपि पदार्थतावच्छेदकभेदाद्द्वन्द्वोपपत्तेः नात्वप्रसङ्ग इति चेन्न । 'शेषो बहुव्रीहिरि'ति सूत्राच्छेषग्रहणानुवृत्त्या कर्मधारयविष-

ये चार्थे द्वन्द्वाप्रवृत्तेर्महाभाष्ये व्यवस्थापितत्वात् । न च महद्दीर्घपदयोर्धर्मलक्षणा । तथा च पदार्थभेदादेव द्वन्द्वोपपत्तिरिति वाच्यम् । त्र्यणुकोपादानयोस्तयोर्ह्रस्वपरिमण्डलोपादानत्वाभावेन पञ्चम्यर्थानन्वयप्रसङ्गात् । न च ह्रस्वपरिमण्डलपदे अपि धर्मपरे । तथा च महत्त्वदीर्घत्वे प्रति ह्रस्वत्वपारिमाण्डल्ययोरसमवायिकारणत्वाभिप्राया पञ्चमी भविष्यतीति वाच्यम् । महत्त्वदीर्घत्वयोः स्वाश्रयोपादनगतबहुत्वमहत्त्वप्रचयासमवायिकारणत्वेन ह्रस्वत्वपारिमाण्डल्ययोस्तदनुपपत्त्या पञ्चम्यर्थानन्वयतादवस्थ्यात् । अतः कथं सूत्रयोजना ? उच्यते—महदितिपदेनान्या त्र्यणुकव्यक्तिरुच्यते, दीर्घपदेन चान्या । तथा च पदार्थभेदात् द्वन्द्व इति नात्वस्य महच्छब्दे प्रसक्तिः । न च महत्त्वदीर्घत्वयोर्नैयत्येन कथं तदाश्रयतया व्यक्तिद्वयं व्यवस्थितं शक्यं ग्रहीतुम् । न हीदं प्रमेयमभिधेयमिदमिति व्यवस्थितनिर्देश उपपद्यत इति वाच्यम् । यद्यपि महत्त्वदीर्घत्वे समनियते, तथापि परितस्स्थितैरवयवैर्यदारभ्यते, तद्वर्तुलं, चतुरश्रं वा महादेति व्यवह्रियते । यत्तु दक्षिणोत्तरभागसंयुक्तैर्वा प्राक्पश्चाद्भागसंयुक्तैर्वा अवयवैरारभ्यते, तत् सूक्ष्मं दीर्घं चेति व्यवह्रियते । सत्यपि महत्त्वे न तादृशलौकिकव्यवहारमाश्रित्य व्यवस्थितनिर्देशोपपत्तिः । **कारणबहुत्वादिति** । समपरिमाणैर्दृढसंयोगयुक्तैर्विषमसङ्ख्यैस्तन्तुभिरारब्धयोः पटयोरेको महान्, एकोऽल्प इति यद्वैषम्यं, तत् तन्तुसङ्ख्याधिक्यन्यूनताकृतमिति, तत्र बहुत्वस्य महत्त्वप्रयोजकता । समसङ्ख्यैर्दृढसंयोगयुक्तैर्विषमपरिमाणैरारब्धयोः पटयोः मध्ये एकस्य महत्त्वोद्रेकः तन्तुगतमहत्त्वोत्कर्षप्रयुक्त इति महत्त्वं प्रति कारणगतमहत्त्वस्य प्रयोजकता । तुल्यपरिमाणैः समसङ्ख्यैस्तन्तुभिश्शिथिलाशिथिलसंयोगयुक्तैरारब्धयोः पटयोः मध्ये एकस्य महत्त्वोत्कर्षः शिथिलसंयोगरूपप्रचयकृत इति प्रचयस्य महत्त्वोपयोगः । **तद्विपरीतमिति** । द्वाभ्यां परमाणुभ्यामारब्धे द्व्यणुके अणुत्वम् । तत्रोपादानभूतयोः परमाण्वोः बहुत्वमहत्त्वे न स्तः । परमाण्वोर्निरवयवत्वादेकदेशमात्रावच्छेदेन संयोगरूपप्रचयोऽपि न सम्भवति । अतोऽणुत्वं महत्त्वकारणविपरीतकारणप्रयुक्तम् । **एतेन दीर्घत्वह्रस्वत्वेति** । अणुत्वकारणमेव ह्रस्वत्वप्रयोजकं, महत्त्वकारणमेव दीर्घत्वकारणम् । अतस्तत्कारणं पृथक् न व्याख्यातव्यमिति । **संयोगाच्चेति** । समवायिकारणसंयोगस्य तार्किकमते द्रव्यमात्रे कारणत्वाभ्युपगमादिति भावः । तस्यैव त्वयं वैशेषिकपरीक्षारम्भ इति शिष्टापरिग्रहाधिकरणे कार्यद्रव्यं स्वन्यूनपरिमाणद्रव्यारब्धमिति नियममास्थाय परमाणव एवं मूलकारणं, न तु परममहद्ब्रह्मेति तार्किकाभ्युपगमो निराकृतः । इह तु कार्यगता विशेषगुणाः कारणगतविशेषगुणपूर्वका एवेति गन्धादिमदेव मूलकारणमिति यत्तार्किकेणाभ्युपगम्यते, तस्य निराकरणं क्रियत इति ।

ननु, यदि कार्यकारणयोर्विशेषगुणमादाय सालक्षण्यं विवक्षितं, कथं तर्हि कार्यकारणयोः परिमाणवैलक्षण्योक्त्या तस्य नियमस्य दूषणमुक्तं भवेत् । न च तर्हि कार्यकारणयोर्गुणत एव सालक्षण्यं निराकर्तव्यमिहास्तु, न तु विशेषेत्यपि । तथा च परिमाणस्य विशेषगुणत्वाभावेऽपि न क्षतिरिति वाच्यम् । तथासति 'न विलक्षणत्वादि'ति साङ्ख्यं प्रति साधितेनैव कार्यकारणयोर्वैलक्षण्येन इदमपि गतं स्यात् । न हि न्यायभेदाभावे वादिभेदमात्रेणापौनरुक्त्यमुपपद्यत इति चेत्, उच्यते—तार्किकैर्हि शब्दस्पर्शरूपरसगन्धसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः । तेषु शब्दादयः पञ्च, सांसिद्धिकद्रवत्वं स्नेहः बुद्ध्यादयोऽष्टौ भावनाख्यः संस्कारश्चेति विशेषगुणाः । तेषां च विशेषगुणत्वे तत्तद्द्रव्यमात्रगतत्वं प्रयोजकम् । न चैवं रूपरसस्पर्शानां विशेषगुणता न स्यात् । रसस्य पृथिवीजलसाधारणत्वात् रूपस्य पृथिवीजलतेजस्साधारणत्वात् स्पर्शस्य वायुसहितत्रितयसाधारणत्वादिति वाच्यम् । रूपादीनां हि न रूपत्वेन विशेषगुणता, अपि तु रूपस्य नीलत्वादिना । तत्र च धवलरूपव्यतिरिक्तानि रूपाणि पृथिवीमात्रासाधारणानि । धवलरूपं तु पाकजमेव पृथिव्याम् । तेजसि तु भास्वरम् । अप्सु तु अपाकजमभास्वरमिति तत्तद्रूपेणैव तस्य विशेषगुणता । मधुरव्यतिरिक्ताश्च रसाः पृथिवीमात्रवृत्तय एव । माधुर्यं तु पाकजं पृथिव्याम्, अपाकजं जल इति तेन रूपेण तस्य विशेषगुणता, तेजस्युष्णस्पर्श एव, जले शीतस्पर्श एव, पृथिव्यां पाकजानुष्णाशीतस्पर्शः, वायौ त्वपाकजानुष्णाशीतस्पर्शः इति तेनतेन रूपेण तस्य विशेषगुणतेति व्यवह्रियते । एतेषां चेत् केनचिदुपाधिना क्रोडीकृतानां तत्तद्द्रव्यमात्रवृत्तितया विशेषगुणत्वमुच्यते, तर्हि परिमाणस्याबाद्यवृत्तिपरिमाणत्वेन पृथिवीविशेषगुणत्वं शक्यते वक्तुमिति तद्वैलक्षण्यं सूत्रकृतोदाहृतम् । न च कयाचिज्जात्या क्रोडीकृतानां गुणानां तत्तद्द्रव्यमात्रवृत्तित्वं विशेषगुणत्वमिति वाच्यम् । तथासत्यपाकजाभास्वरत्वादीनां जातित्वाभावेन तेन रूपेण क्रोडीकृतस्य धवलत्वस्य पृथिवीविशेषगुणत्वाभावप्रसङ्गात् । अतो न परिमाणादिव्यावृत्तं रूपादिष्वनुवृत्तं विशेषगुणत्वं शक्यते परिभाषितुम् । अपि च कारणगतैर्विशेषगुणैः कार्येऽपि भवितव्यमिति नास्ति नियमः । सुरभ्यसुरभ्यवयवारब्धस्य विलक्षणरसावयवारब्धस्यावयविनो गन्धरसादिराहित्यं तार्किकैरुपेयते । गन्धादीनां व्याप्यवृत्तित्वाभ्युपगमेनैकदेशावच्छेदेनावयविवृत्त्यनुपपत्तेः चित्रगन्धाद्यनङ्गीकाराच्च । अतो न चेतनब्रह्मकार्ये जगति चैतन्यमापादयितुं शक्यम् । नापि कार्यगतैर्विशेषगुणैः कारणे भवितव्यमिति नियमः । येन गन्धादिमदुपादानमपि गन्धादिमदेव भविष्यतीत्यापा-

दनं प्रसरेत् । हरिद्राचूर्णारब्धेऽवयविनि रक्तिमदर्शनात् । नीलपीतद्रव्यारब्धे अवयविनि हरितवर्णदर्शनाच्च । अतो न विशेषगुणकृतमपि कार्यकारणयोः सालक्षण्यम् ॥ ११ ॥

॥ इति महद्दीर्घाधिकरणम् ॥२॥

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

अनन्तराधिकरणस्य प्रासङ्गिकत्वात्तेन सङ्गतिं विहायैव यदि निरधिष्ठाना कार्यरचना साङ्ख्यमते प्रसज्यते अतस्तस्य हेयत्वं, तर्हि तार्किकैरीश्वराधिष्ठितानामेव परमाणूनां समवायिकारणत्वोपगमात् न तस्य हेयत्वमिति प्रत्युदाहरणलक्षणा साङ्ख्याधिकरणेनास्य सङ्गतिर्द्रष्टव्या । स्वानुगतैः समवायेन स्वाधारभूतैः । **सोऽपकर्षपर्यन्तगतः परमाणुरिति** । न च जालकनिर्गतसौरकिरणेषु भासमानः शकलविशेष एव पर्यन्तगतोऽस्तु, किमिति तदनन्तरं द्व्यणुकं परमाणुश्च कल्प्यत इति वाच्यम् । तादृशशकलविशेषस्समवायिकारणारब्धः । महत्त्वे सति चाक्षुषत्वात् । न च तत्र महत्त्वासिद्धिः । तथात्वे चाक्षुषतैव न स्यात् । बाह्यद्रव्यप्रत्यक्षे महत्त्वसमानाधिकरणोद्भूतरूपस्य कारणत्वात् । न च महत्त्वे सति चाक्षुषत्वं समवायिकारणजन्यतायामप्रयोजकमिति वाच्यम् । तादृशशकले नाकाशादिवत् परममहत्त्वं, अपि तु घटादिवदपकृष्टमहत्त्वमुपेयम् । तथा च तादृशमहत्त्वस्य समवायिकारणगतबहुत्वादिप्रयुक्ततया समवायिकारणाभावे कथं तत्र महत्त्वं स्यात् । न च तन्महत्त्वं नित्यमेवास्तु । मध्यममहत्त्वमेव जन्यम् । तथा च मध्यममहत्त्व एव समवायिकारणगतसङ्ख्याद्यपेक्षेति वाच्यम् । महत्त्वस्य जन्यतायां ह्युत्कर्षापकर्षरूपजातिद्वययुक्तत्वं मध्यमत्वं न प्रयोजकम्, अपि त्वपकर्षरूपजातियुक्तत्वमेव । तथा चापकृष्टमहत्त्वाश्रयस्य द्रव्यस्य समवायिकारणारब्धत्वमावश्यकम् । तच्च समवायिकारणं सिध्यद्रूपादिमन्न्यूनपरिमाणं च सिध्यति । कार्यगतरूपाणामपाकजानां समवायिकारणगतरूपपूर्वकत्वनियमात् । तथा च त्र्यणुककारणतया द्व्यणुकसिद्धिः । तदपि द्व्यणुकं समवायिकारणारब्धं, महदारम्भकत्वात् । न चाप्रयोजकत्वम् । कारणबहुत्वाधीनं हि कार्ये महत्त्वम् । न च निरवयवानां परमाणूनां संयोग उपपद्यत इति सावयवत्वसिद्धौ समवायिकारणपूर्वकत्वावश्यम्भावात् । तथा च द्व्यणुककारणीभूतः परमाणुरेव पर्यन्तगत इति तार्किकाणामभिमानः । **भूतानि चत्वारीति** । आकाशस्य निरवयवत्वादिति भावः । **संयोगः कर्मापेक्ष इ-**

ति। संयोगो हि कर्मजः संयोगजश्चेति । संयोगजस्त्ववयवसंयोगपूर्वक एवेति निरवयवयोर्द्वयोः संयोगजसंयोगासम्भवात् कर्मज एव स उपेय इति भावः । परमाणुगतकर्मणो निमित्तं यदि नाभ्युपगम्यते, यदि वाभ्युपगम्यते, उभयथापि कर्माभाव इति सूत्रांशं योजयन्नाह—**कर्मणश्च कार्यत्वान्निमित्तमिति । प्रयत्नोऽभिघातादिर्वेति ।** शरीरगतस्य कर्मणः प्रयत्नः कारणं, क्वचित् अभिघातः संयोगविशेषः । यथा दूरान्निक्षिप्तस्य पाषाणादेः कुड्यादिसंयोगः । **एतेनाभिघाताद्यपीति** । आदिपदेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते । तत्राभिघात आद्यस्य कर्मणो निमित्तं न भवति । तस्य कर्मजन्यत्वात् । नोदनापि वाय्वादेर्वृक्षादिसंयोगरूपा कर्मनिमित्तैव नाद्यस्य कर्मणो निमित्तम् । कर्महेतुः संस्कारो द्विविधः—वेगः, स्थितस्थापकश्च । वेगः शरादिगतः उत्तरोत्तरगतिसन्तानहेतुः । स्थितस्थापकः संवेष्टितस्य कटादेः प्रसरणहेतुः । उभावपि कर्मजौ नाद्यस्य कर्मणो निमित्ततां गच्छतः । गुरुत्वद्रवत्वयोस्त्वाद्यकर्महेतुत्वाभ्युपगमे तयोः परमाणुषु सदातनत्वेन कर्मसातत्यप्रसङ्गः । अदृष्टस्य परमाणुगताद्यकर्मनिमित्तत्वपक्षे उभयथापीति सूत्रांशं योजयितुं विकल्पयति—**तत्पुनरिति । अस्त्यणूनां सम्बन्ध इति ।** संयोगरूप इत्यर्थः । **नियामकान्तराभावादिति** । न चादृष्टपरिपाको यदा भवति, तस्यामेव दशायां अदृष्टवदात्मसंयोगः परमाणुष्वाद्यकर्मनिमित्तमिति वाच्यम् । यथा हि रंहत्यधिकरणे वक्ष्यमाणस्य भूतसूक्ष्मरूपस्यादृष्टस्य द्रव्यतया फलादिमत्परिणातिविशेषरूपः पाकः, 'फलमत उपपत्ते'रिति सूत्रे वक्ष्यमाणस्येश्वरकोपप्रसादरूपस्यादृष्टस्योद्रेकः पाकः लौकिकपुरुषगतकोपप्रसादयोरिव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति' श्रुतिसिद्धकालविशेषभाविसिसृक्षानिमित्त इति वक्तुं शक्यं, नैवं तार्किकैरात्मगुणभूतस्यादृष्टस्य पाको वक्तुं शक्यते । गुणे द्रव्यादितुल्यपाकासम्भवात् कोपप्रसादयोरिव तार्किकाभिप्रेते अदृष्टे उद्रेकस्यापि अनुपलब्धचरत्वात् । अतः फलकालागमप्रतिबन्धककर्मान्तराभावसाहित्यमेव तन्मते पाकोऽदृष्टगत उपेयः । न च कालभेदेन तेनतेन कर्त्रानुष्ठितानां कर्मणां नानाविधकालानुभाव्यफलानां विचित्रविरुद्धकर्मप्रतिबद्धानां सृष्ट्यारम्भकाले युगपदेव फलकालागमः प्रतिबन्धकाभावश्च प्राप्त इति वक्तुं शक्यम् । न च सिद्धान्ते यथोक्तरूपाणां कर्मणां यथा युगपदेव कालविशेषभाविन्या ईश्वरसिसृक्षया पाकः सृष्ट्युपयोगी भवतीति कल्प्यते । तथा मयापि सृष्ट्यादिफलबलेन प्रलयकालावसानक्षणसम्बन्ध एव सृष्ट्युपयोगी कर्मपरिपाक इति वक्तुं शक्यम् । कल्पनायाः कार्यानुसारिपदार्थविषयत्वादिति वाच्यम् । एवं तर्हि श्रुतिस्मृतिसिद्धसृष्ट्याद्युपयोगिनी कल्पना तदविरोधे-

नैव सम्पादनीयेति द्व्यणुकादिक्रमं विहाय वियदादिक्रमेणैव सृष्टिं स्वीकुरु । न हि सर्गप्रलयादिकं विना प्रमाणान्तरेणावधारयितुं शक्यते । न च सृष्ट्यांशे तासां प्रामाण्यं, न तु स्रष्टव्यांश इत्यर्धजरतीयमुचितमिति भावः । **सर्वात्मना चेदुपचयानुपपत्तेरिति** । अयं भावः—लोके हि पिण्डद्वयसंयोगेन यदा स्थूलपिण्ड आरभ्यते, तदा द्वयोः पिण्डयोरेकैकेन पार्श्वेन संयोगे सति पार्श्वान्तराणामसंयुक्ततया अवस्थानादसंयुक्तपार्श्वस्थौल्यतारतम्येन तदारब्धे पिण्डे स्थौल्यतारतम्यमुपलभ्यते । अतः परमाणुकार्ये द्व्यणुकादौ अधिकपरिमाणसिद्ध्यर्थं कस्मिंश्चित् पार्श्वे परमाण्वोः संयोगः, केषु चिन्नेति वक्तव्यम् । न चैतन्निरवयवे परमाणाववकल्पते । अतः पार्श्वरूपावच्छेदकं विहाय व्याप्यवृत्तिः परमाण्वोस्संयोग आस्थेयः। तथा च कथं प्रथिमा भवेदिति । दृष्टविपर्ययप्रसङ्गश्चेत्येतदेव व्यक्तीकरोति—**प्रदेशवत इति** । परमाणुषु व्याप्यवृत्तिसंयोगजननार्थं, अव्याप्यवृत्तिसंयोगजननार्थं वोभयथापि कर्म न सम्भवतीति तृतीयां सूत्रांशयोजनां प्रदर्श्य प्रलयोपयोगिविभागसिद्ध्यर्थं दृष्टकारणकमदृष्टकारणकं वोभयथापि कर्म न सम्भवतीति चतुर्थीं सूत्रांशयोजनामाह—**एवं महाप्रलयेऽपीत्यादिना** । **न प्रलयप्रसिद्ध्यर्थमिति** । ननु, सर्वज्ञानोपरमरूपे प्रलये सुषुप्तिवत् भोगासम्भवेऽपि तदारम्भे मरणप्रयुक्ता वेदनास्त्येवेति तत्रादृष्टजन्यतोपपद्यत इति चेत्, सत्यं, तादृशमरणवेदनायाः शरीरमात्रनाशेनैवोपपन्नत्वात् न तदर्थं भूभूधरादिनाशोऽप्यपेक्षितः। 'अतस्तदभाव' इति सूत्रांशं योजयति—**तयोस्सर्गप्रलयोरिति** । तथा च तदभाव इत्यत्र तयोरभाव इति विग्रहः ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१३॥

ननु, समवायाभ्युपगमेन कथं परमाणुकारणतानिराकरणं, तत्राह—**द्वाभ्यां चाणुभ्यामिति** । द्व्यणुकसमवायिकारणतया हि परमाणुरुपेयते। समवायिकारणलक्षणं च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताशालित्वमिति चोच्यते । समवायाभ्युपगमस्य निर्मूलत्वे तद्घटितसमवायिकारणलक्षणासम्भवात्तत्त्वेनाभ्युपगतः परमाणुरपि निराकृतो भवतीति भावः । **समवायलक्षणेनान्येनैव सम्बन्धेनेति**। यथा हि तन्तुषु पट इति प्रतीत्या आधाराधेयभावनियामकस्तन्तुपटयोस्समवाय उपेयते, तथा तन्तवः पटसमवायिन इति प्रतीतिसम्भवात् समवायाधेयतानियामकोऽपि समवाय उपेयः । न च तन्तुपटाभ्यामसम्बद्धस्य समवायस्य तयोः कार्यकारणभावे घटकतोपपद्यते । तथा च तदर्थमपि कार्य-

कारणाभ्यां समवायस्य सम्बन्ध उपेय इति प्रसज्येतैवानवस्थेति । ननु, यदि समवायस्यापि सम्बन्धिभ्यां समवायस्स्वीक्रियेत, तदानवस्था भवेत्, न तु समवायस्य सम्बन्धिभ्यां समवाय उपेयते, अपि तु स्वरूपसम्बन्ध एव, अतो नानवस्थेति चेन्न। तथासति अवयवावयव्यादेरपि स्वरूपसम्बन्ध एवास्तु, किं समवायकल्पनया । न च स्वरूपसम्बन्धानां भिन्नभिन्नत्वेन गौरवादेक एव समवायः कल्पनीय इति वाच्यम् । स्वरूपाणां क्लृप्तत्वेनानेककल्पनस्यैवाभावात् । समवायस्त्वतिरिक्तः पदार्थः कल्पनीय इति गौरवम् । न च तथापि समवायस्वरूपं, तस्य च सम्बन्धत्वमिति द्वयमेव कल्पनीयम् । स्वरूपाणां तु बहूनां प्रत्येकं सम्बन्धत्वं कल्पनीयमिति बहूनि सम्बन्धत्वानि कल्पनीयानि, तथा च गौरवमिति वाच्यम् । अवयवावयव्यादीनां तत्तदभावप्रतियोगित्वादिना सम्बन्धत्वस्यापि क्लृप्तत्वात् । न च तथापि अभावादिकं प्रत्येकं प्रतीति सम्बन्धत्वं प्रतियोगित्वादिना क्लृप्तं, न तु अवयवावयव्यादेः परस्परानिरूपितं सम्बन्धत्वं क्लृप्तम् । निरूपकभेदेन सम्बन्धत्वानां भिन्नभिन्नत्वात् । न हि यदेव ज्ञाननिरूपितं विषयत्वसम्बन्धात्मकं घटस्वरूपं, तदेवाभावप्रतियोगित्वरूपं भवति । तथा चावयवनिरूपितमवयविनि स्वरूपसम्बन्धत्वं कल्पनीयम्, अवयविनिरूपितमवयव इति सम्बन्धत्वानेकतापत्त्या गौरवमिति वाच्यम् । यदि हि निरूपकभेदेन सम्बन्धत्वानि भिद्येरन्, तथासति समवायस्यैकत्वेऽपि घटकपालादिनिरूपकभेदात् सम्बन्धत्वानां तद्गतानामपि भेदापत्त्या समवायपक्ष एव पदार्थान्तरमधिकं कल्पनीयमिति गौरवं तदवस्थमेव । अपि च 'तन्तुषु पटः, नीलो घट' इत्यादिविशिष्टप्रतीतिनिर्वाहकतया समवाय एवास्थेय इति तार्किकाणामभ्युपगमः । न च समवायेऽभ्युपगतेऽपि पृथिव्यां रूपं, वायौ रूपं नास्तीति प्रतीतेर्व्यवस्था निर्वहति । रूपसमवायस्य वायावप्यविशिष्टत्वेन तद्व्यवस्थापकतया सर्वानुगतादेकस्मात् समवायाद्रूपसमवायादिरन्य एव स्वरूपसम्बन्धविशेषात्मकः पृथिव्यां रूपमित्यादिप्रतीतिप्रयोजकः । वायौ तस्याभावाद्वायौ रूपं नेति प्रतीतिश्चेत्यभ्युपगन्तव्यम् । तथा च तादृशस्वरूपसम्बन्धेनैव व्यवस्थार्थमवश्यं स्वीकर्तव्येन सर्वत्रावयव्यादिषु विशिष्टप्रतीतिनिर्वाहे किं द्रव्यगुणकर्मसामान्येषु सर्वेष्वेको नित्यस्समवाय इति कल्पनया । अपि च द्रव्यगुणयोः साधारणेऽपि समवाये द्रव्यस्य स्वातन्त्र्यं, गुणस्य च पारतन्त्र्यं प्रतीतिसिद्धम् । तन्निर्वाहश्च न समवायमात्रेण सिध्यति । परस्परनिरूपितसमवायस्य परस्पराधिकरणकत्वाविशेषात् । अपि तु द्रव्यनिरूपितमाधेयत्वं गुणे, गुणनिरूपितमाधारत्वं द्रव्य इति विशिष्याधाराधेयत्वाख्यस्वरूपविशेषसम्बन्धः स्वातन्त्र्यपारतन्त्र्यप्रतीतिव्यवस्थापकतया कल्पनीयः । तथा च तेनैव विशिष्टप्रतीतिनिर्वाहे किमर्थं समवायः कल्प्यते । न चात्मघटयोरुभयोरपि ज्ञानाधारत्वाविशेषेऽपि ज्ञानवानहं,

न घटः, अपि तु ज्ञानविषयो घट इति यत् प्रतीतिवैचित्र्यं, तत् सम्बन्धविशेषाधीनमिति घटवैलक्षण्येन ज्ञानाधारतया आत्मनि निर्वाहकः समवाय इति वाच्यम् । यथा हृदये मम ज्ञानं, न घट इति व्यवस्था हृदयादिगतज्ञानावच्छेदकताख्यस्वरूपसम्बन्धविशेषकारिता, एवमियमपि व्यवस्था ज्ञानगतात्मधर्मत्वाख्यस्वरूपसम्बन्धविशेषकारितेति न समवायकल्पनावसरः । न च ज्ञानात्मनोरेव धर्मधर्मिभावः, न ज्ञानघटयोरित्यत्र किं नियामकं, ज्ञानात्मनोरेव समवेतसमवायिभावः, न ज्ञानघटयोरित्यत्र वा किं नियामकम् । स्वभाव इति चेत्, धर्मधर्मिभावेऽपि तदेवोत्तरम् ॥ १३ ॥

## नित्यमेव च भावात् ॥ १४ ॥

प्रवृत्तिस्वभावाः कार्यजननस्वभावाः । निवृत्तिस्वभावाः पारिमाण्डल्यवदकारणत्वस्वभावाः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

यतः परो विभागो न सम्भवतीत्यनेनात्यल्पपरिमाणता परमाणूनां द्योतिता । रूपादीत्यादिपदेन रसादयो गृह्यन्ते । नन्वत्र तार्किकाभिमतान् परमाणून् पक्षीकृत्य तेषां यत् रूपादिमदल्पपरिमाणं, तन्मूलकारणमपेक्ष्य स्थूलमनित्यं चेति व्याप्त्या परमाणूनामपि अल्पपरिमाणत्वाद्रूपादिमत्त्वाच्च मूलकारणमपेक्ष्य स्थूलत्वमनित्यत्वं चापाद्यते । तदसङ्गतम् । परमाणूनां धर्मिग्राहकप्रमाणेन मूलकारणतयैव सिद्धतया तेषां मूलकारणान्तराभावेन तदपेक्ष्य स्थूलत्वादेरापादनासम्भवात् । अथाल्पपरिमाणवत्तया रूपादिमत्तया कार्यत्वमापाद्यते, न समवायिकारणजन्यतां चापाद्य स्वसमवायिकारणमपेक्ष्य स्थौल्यमनित्यत्वं च परमाणावापाद्यते, तदपि न सम्भवति । यदल्पपरिमाणं रूपादिमच्च, तत् कार्यमिति नियमे प्रयोजकाभावादिति चेत्, उच्यते—तार्किकेण हि त्र्यणुकादिपरिमाणस्य जन्यतायां महत्त्वापकर्षः प्रयोजक इत्युक्तं, तदपेक्षया लाघवात् द्व्यणुकपरिमाणानुगतत्वाच्च परिमाणापकर्ष एव प्रयोजक उपेयः । एवं रूपादीनां जन्यत्वेऽपि रूपत्वादिकमेव प्रयोजकमास्थेयम् । लाघवात् पृथिवीपरमाणुगतरूपाद्यनुगतत्वाच्च, न तु कार्यगतरूपत्वादिकम् । एवं च परमाणुगतपरिमाणस्यापि जन्यत्वे कारणगतसङ्ख्यापरिमाणादिकमपेक्षितम् । तथा परमाणुगतानामपाकजरूपादीनामपि जन्यत्वे सिद्धे तेषामपि कारणगतरूपाद्यपेक्षत्वात् परमाणुगतपरिमाणरूपाद्यसमवायिकारणसङ्ख्यापरिमाणाद्याश्रयतया परमाणुसमवायिकारणसिद्धौ तदपेक्षया परमाणोरनित्यत्वं स्थौल्यं च प्राप्नुवत् केन

वार्यते । न च तथासति तस्यापि रूपादिमत्त्वादल्पपरिमाणत्वाच्च कारणान्तरापेक्षा, एवं तस्यतस्येत्यनवस्थया मूलकारणमेव न सिध्येदिति वाच्यम् । अस्त्वेवं तार्किकमते । तथा चानवस्थापरिहारेण मूलव्यवस्थायै परममहद्रूपादिरहितं च ब्रह्मैव मूलकारणमास्थेयम् । कार्यं स्वन्यूनपरिमाणद्रव्यारब्धं, कारणगुणपूर्वका एव च कार्ये गुणा इति तार्किकपरिभाषा च प्रागेव निरस्ता । एवं परमाणूनामनित्यत्वं स्थौल्यं च तदीयपरिभाषानुसारेणैवापाद्य तैर्यत् परमाणूनां नित्यत्वे प्रयोजकमुपन्यस्तं, तद्दूषयितुमुपक्रमते— **यच्चेति** । सत् भावरूपम् । प्रागभावव्यावृत्त्यर्थमिदं विशेषणम् । **अनित्यमिति चेति** । नित्यरूपेण प्रतियोगिना विशेषतो योऽयं प्रतिषेधव्यवहारः अनित्यमिति, तस्य नित्यरूपे प्रतियोगिन्यसत्यभावः प्रसज्येत । अतो व्यवहारोपपत्तये नित्यं वस्तुन्यास्थेये परमाणुरूपं तत् सिध्यतीत्यर्थः । **प्रत्यक्षेणाग्रहणमविद्येतीति** । तथा चाप्रत्यक्षकारणत्वमविद्या चेत्यनेन विवक्षितम् । **द्व्यणुकनित्यतेति** । तत्कारणस्य परमाणोरप्रत्यक्षत्वात् । **अद्रव्यत्वे सतीति** । अकारणकत्वे सतीत्यर्थः । **तस्य च प्रागेवेति** । 'सदकारणवत्तन्नित्य'मित्यत्रेत्यर्थः । **कारणविभागादिति** । कारणपदं समवायिकारणपरम् । समवायिकारणनाशादसमवायिकारणनाशाच्च कार्यद्रव्यनाशः । द्रव्ये चावयवाः समवायिकारणं, तत्संयोगोऽसमवायिकारणम् । निरवयवे च परमाणौ नोभयं सम्भवति । तथा च अगृह्यमाणविनाशकारणत्वमविद्येत्यनेन नित्यत्वे कारणं विवक्षितमिति शङ्कार्थः । **नावश्यं विनश्यद्वस्त्विवाति** । अवयवसंयोगोऽसमवायिकारणमिति तार्किकपरिभाषा अप्रयोजिका । यद्यपि पटादिकार्यस्थले अनेकेषामवयवानां संयोग उपलभ्यते, तथापि नासौ पटकारणम् । तन्तुसंयोगस्य पटस्य च समानकालतादर्शनेन पूर्वापरीभावकल्पनस्य निर्मूलत्वात् । नापि संयोगनाशात् पटनाश इति कल्पयितुं शक्यते । तयोरपि समानकालत्वोपलम्भात् । घटादिकार्यस्थले तु न कपालद्वयसंयोगः घटोत्पत्तेः प्रागनुभूयते । न हि कुलालः कपालद्वयमारचय्य संयोजयति, अपि तु पिण्डमेव प्रथनविशेषेण घटतां नयति । नापि तत्र कपालद्वयसंयोगनाशो घटनाशहेतुः । मुद्गरप्रहारेण घटनाशसंयोगनाशयोर्युगपदेव जननात् । अत आरम्भवादस्य प्रतीतिविरोधित्वं युक्तिविरोधश्च 'युक्तेश्शब्दान्तराच्चे'त्यत्र दर्शितः । तथा चैकस्यैव द्रव्यस्योत्तरावस्थाप्राप्तिस्तदवस्थस्योत्पत्तिः पूर्वावस्थस्य च नाश इत्युपेयम् । तथा च परमाण्ववस्थां प्राप्तस्य मूलकारणस्य स्थूलावस्थाप्राप्तौ नाश उपपद्यते सृष्टिसमय एव । परमाणुदशायां च मूर्तत्वगन्धरूपाद्यवस्थां प्राप्तस्य मूलकारणस्य प्रलये कारणविशेषेण गन्धाद्यवस्थानाशेन सह मूर्तत्वावस्थाया अपि नाशसम्भवात् न परमाणुनित्यता सिध्यति ॥ १९ ॥

# उभयथा च दोषात् ॥ १६ ॥

कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनादिति । नन्वत्र मूर्त्युपचयशब्देन किं विवक्षितं, परिमाणाधिक्यं वा, गुणसमुदायोत्कर्षो वा । नाद्यः । न हि पृथिवीजलादीनां रूपादिगुणाधिक्यतारतम्यकृतं परिमाणाधिक्यं विद्यते, नापि तत्र रूपादिगुणाधिक्यतारतम्यं प्रयोजकम् । अपि त्ववयवसङ्ख्याधिक्यमेव । तथा च पृथिव्यादिपरमाणूनां चतुर्णां निरवयवानामवयवाधिक्याभावात् सत्यपि गुणसङ्ख्यावैषम्ये नापरमाणुत्वप्रसङ्गः । अत एव न द्वितीयः । गुणसमुदायाधिक्यस्य समुदायिनां गुणानामुपचयाधीनत्वेऽपि कार्ये गुणोपचयेन परिमाणाधिक्यस्याप्रसक्ततया परमाणूनामपि गुणोपचये सत्यपि परिमाणवैषम्याप्रसङ्गात् । उच्यते—तार्किकेण पृथिव्यादिद्रव्याणि धर्मिभूतानि । तेषां च रूपादयो गुणाः । तत्र च रूपत्वादीनि सामान्यानीति परिभाषाश्रीयते । सा तु न प्रतीत्यनुसारिणी । न हि रूपादिसमुदायातिरेकेण तदाश्रयभूतं द्रव्यं नाम किञ्चिदुपलभ्यते । ननु, घटस्य नीलं रूपं, रक्तं रूपं, गुडस्य मधुरो रस इत्येवमादिना व्यतिरेक उपलभ्यत एवेति चेन्न । न ह्ययं भेदप्रत्ययः । अपि तु सम्बन्धप्रत्ययः । तथाप्रत्ययश्चाभेदेऽपि दृश्यते । यथा घटस्य स्वरूपमिति । अपि च नीलो घट इत्यभेदोऽनुभूयत एव । न चायं नीलगुणवैशिष्ट्यप्रत्यय इति वाच्यम् । यथा ह्ययं घट इति प्रत्ययेन इदन्तास्पदे घटत्ववैशिष्ट्यमवगाह्यते, एवमनेनापि लौकिकानां प्रत्यक्षप्रत्ययेन पुरोवर्तिनि घटत्वास्पदे नीलत्ववैशिष्ट्यस्यैवावगाहनात् । न चास्य प्रत्ययस्य नीलो घट इति शब्दोल्लेखितया तत्समानविषयत्वं वक्तव्यम् । नीलशब्दश्च लुप्तमतुबन्तः । गुणवचनेभ्यो मतुपो लुगनुशासनात् नीलगुणविशिष्टं प्रतिपादयति । तथा च प्रत्यक्षमपि तत्समानार्थकं न घटे नीलगुणाभेदावगाहि । अभेदावगाहित्वेन द्रव्यगुणयोरभेदाभ्युपगमे च लुगनुशासनं व्यर्थमेव स्यात् । मतुपोऽप्रसक्तत्वादिति वाच्यम् । द्रव्यगुणाभेदपक्षे नीलादिपदानां तार्किकाभिमतनीलत्वादिसामान्यवाचकतोपगमेन नीलादिपदेभ्यो घटादिपदसामानाधिकरण्याय मतुपः प्रसक्तौ तल्लोपानुशासनेन सार्थक्योपपत्तेः नीलो घट इत्यादिवाक्येन नीलत्ववैशिष्ट्यस्यैव घटे प्रतिपादनात् नाभेदावगाहिप्रत्यक्षप्रतिकूलता शब्दोल्लेखस्य । तथा च गुणचतुष्टयसमुदाय एव पृथिवी, एवं गुणत्रयसमुदायो जलमिति पृथिव्यादीनामवयवाधिक्यात् स्वभावत एव परिमाणाधिक्यं, जलादिभ्यस्तत्परमाणूनामपि रूपादिगुणात्मकावयवाधिक्यात् परिमाणाधिक्यं प्राप्नोति । तथा च पुराणं—'आकाशशब्दमात्रं तु स्पर्शमात्रं समाविशत् । द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् । रूपं तथैवा-

विशतश्शब्दस्पर्शगुणावुभौ । त्रिगुणस्तु ततो वह्निस्सशब्दस्पर्शवान् भवेत् । शब्दस्स्पर्शश्च रूपं च रसमात्रं समाविशत । तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः । शब्दस्स्पर्शश्च रूपं च रसश्चेत् गन्धमाविशत् । संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् । तस्मात् पञ्चगुणा भूमिस्स्थूला भूतेषु दृश्यते । शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः । परस्परानुप्रवेशाद्धारयन्ति परस्परम् ॥' इति । आकाशादीनां शब्दादिरूपतां, तदाधिक्याच्च पृथिव्यादीनां स्थूलत्वं च दर्शयति । अत्र च द्विगुणस्तु ततो वायुरित्यादौ क्वचित् गुणगुणिनोर्भेदोऽपि प्रतीयते । तथाप्यभेदप्रतिपादनस्वरसत्वादस्य वचनजातस्य स निर्देश औपचारिको द्रष्टव्यः । एवं च द्रव्यरूपस्य धर्मिणोऽकल्पनाल्लाघवमपि भवति ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

सूत्रे चकारस्तार्किकप्रक्रियाया आभासताद्योतनार्थ इत्याह—अपि चेति । तार्किकैर्भावानां षोढा अवान्तरविभागः कल्पितः, स नोपपद्यत इत्याह—**तन्त्रार्थभूतान् षट्पदार्थानित्यादिना** द्रव्याधीनत्वं द्रव्यधर्मत्वम् । **द्रव्यभावे भावात् द्रव्याभावे चाभावादिति** । ननु, द्रव्यरूपे आश्रये स्थित एव यदि गुणस्य स्थितिः, न त्वन्यथा, तर्हि समवायमनङ्गीकुर्वद्भिर्वेदान्तिभिर्धर्मधर्मिभावनियामकं तादात्म्यमुपेत्य गुणगुणिनोर्भेद एव आश्रयणीयः, न तु द्रव्यपरिशेषेण गुणस्वरूपमेवापलपनीयम् । न हि गुणस्वरूपापलापे द्रव्ये सत्येव गुणस्य भाव इत्येवमन्वयादिकमुपपद्यते । अथोच्येत—द्रव्याधीनत्वं गुणानां तार्किकाभिमतमनूद्यते द्रव्यगुणयोस्स्फुटविवेकप्रयोजकविश्लेषाभावप्रदर्शनाय । तथा च स्फुटविवेकस्य घटादाविव द्रव्यगुणयोरभावेन किमिति भेदं स्वीकृत्य अनेकपदार्थकल्पनम् । अपि तु द्रव्यमेकमेव । तत्रैव नीलत्वादिसामान्यानि कल्प्यन्ताम् । तावतैव नीलो घट इति प्रतीत्युपपत्तेः । तदिदमुक्तं—**द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवतीति** । द्रव्यं मृदादि । संस्थानं घटत्वादि । आदिपदेन नीलत्वादिकं गृह्यते । तथा च मृदेव घटत्वाश्रया सती घट इति व्यवह्रियते । नीलत्वाश्रया सती नील इति व्यवह्रियते, न तु मृदतिरिक्तो घटो वा नीलगुणो वास्तीति तदा पूर्वसूत्रोक्तार्थविरोधः । तत्र हि गुणातिरेकेण द्रव्यं न कल्पनीयम्, अपि तु रूपादिष्वेव समुदितेषु पृथिवीत्वादिकमस्त्वित्युक्तम् । इह तु द्रव्यातिरेकेण गुणा न कल्पनीयाः । अपि तु द्रव्य एव नीलत्वादिकमस्त्वित्युच्यत इति चेत्, उच्यते—अनिर्वचनीयत्ववादिनां हि गुणपरिशेषे वा द्रव्यपरिशेषे वा न तात्पर्यम् , अपि तु लौकिकव्यवहारो यथाकथञ्चिदु-

पपद्यते, न तु तदर्थं द्रव्यं गुणः सामान्यमित्येषैव परिभाषा राजाज्ञेव परिपालनीयेति । ततश्च तार्किकपरिभाषामासताप्रतिपादनपरत्वादस्याधिकरणस्य तस्याश्च गुणपरिशेषे वा द्रव्यपरिशेषे वोभयथापि सम्भवान्न पूर्वोत्तरविरोधः । उक्तमाशयमजानानश्शङ्कते—**नन्वग्नेरन्यस्यापीति** । आशयमाविष्करोति—**सत्यं दृश्यत इति । भेदप्रतीतेरिति** । अग्निधूमयोर्विश्लिष्टतया स्फुटभेदप्रतीतेरित्यर्थः । **एतेनेति** । गुणे उक्तो न्यायः कर्मणि योजयितव्यः । न हि कर्मणोऽपि द्रव्यात् स्फुटविवेकोऽस्ति । तथा च चलति पक्षीत्यादिप्रत्ययः पक्षिण एव चलनत्वाश्रयत्वविषयः । चलत्यादिधातवोऽपि तत्तत्सामान्यवाचका एव । द्रव्यमात्रपरिशेषपक्षे च नीलत्वादिसामान्यान्युपगन्तव्यान्येव । न ह्यन्यथा घटो नील इति प्रतीतिरुपपद्यते । द्रव्यत्वनीलत्वसामान्यानङ्गीकारे हि घटो नील इति प्रतीतिः द्रव्यस्वरूपमात्रविषयोपगन्तव्या । तथा च कथं द्रव्यत्वनीलत्वरूपप्रकारविशेषोल्लेखः । कथं वा द्वयोश्शब्दयोरपर्यायता । तथा च वक्ष्यति—'स्वरूपबाह्यरूपापेक्षया अनेकशब्दप्रत्ययदर्शनादि'ति । तथापि द्रव्यमात्रपरिशेषेणातिरिक्ततया निराकरणीयेषु कर्मादिषु परिगणनं सामान्यस्य तार्किकाभिमतं यदनेकसमवेतं नित्यं सामान्यं, तदभिप्रायेण । विशेषसमवायौ तु न लोकवेदप्रसिद्धाविति तदभ्युपगमे तार्किकाणां प्रमाणविधुरत्वं स्फुटमेव । अतो भावभूतः पदार्थः षड्विध इति परिगणनमसङ्गतम् । अभावस्तु नाधिकरणातिरेकेण विद्यते । घटं प्रत्यनुयोगितया प्रतीयमानं भूतलमेव घटस्याभाव इत्येवोपपत्तेः । इदानीं द्रव्यगुणादिषु स्फुटविवेकराहित्यप्रयोजकतया स्वीकृतमयुतसिद्धत्वं निर्वक्तुमशक्यमिति प्रदर्शयितुं शङ्कते—**गुणादीनां द्रव्याधीनत्वमिति** । द्रव्यगुणयोर्भेदः प्रतीतिविरुद्धश्चेत्याह—**तस्येति** । गुणस्य द्रव्याभेदेनैव प्रतीयमानत्वादित्यर्थः । ययोरसम्बन्धो नास्ति, तयोः परस्परमयुतसिद्धत्वमित्याशङ्क्याह—**युतसिद्धयोरिति** । कदाचिदसम्बन्धेनापि वर्तमानयोः । अयुतसिद्धयोः कदापि सम्बन्धराहित्येनावर्तमानयोः । **प्राक्सिद्धस्येति** । समवायिकारणत्वेनाभिमतं हि कार्योत्पत्तेः प्राक् तेनासम्बद्धमेव भवति । तथा च कथं तयोरयुतसिद्धिः । ननु, द्वयोस्सम्बन्धिनोर्मध्ये एकस्य सम्बन्धिन उत्पत्तिमारभ्य नाशपर्यन्तमन्यतरसम्बन्धित्वेनैवावस्थानं ययोर्भवति, तयोरयुतसिद्धिः । तथा च कारणस्य प्राक्कार्यासम्बन्धित्वेनावस्थानेऽपि कार्यस्य कारणसम्बन्धितयैवावस्थानात् न तयोरयुतसिद्धत्वाभाव इति शङ्कते—**अथान्यतरेति** । **प्राक्कारणसम्बन्धात् कार्यसिद्धावभ्युपगम्यमानायामिति** । ननु, तार्किकमते कार्यमुत्पत्त्यनन्तरमुपादानेन सम्बध्यत इति नोपेयते, अपि तु सम्बद्धमेवोत्पद्यत इति । अतो न कार्यस्योत्पत्तिसमये कारणेनासम्बन्धात् अयुतसिद्धत्वाभाव इति चेत्,

उच्यते—कार्यस्य समवायिकारणे यस्सम्बन्धः, स नित्यो वा, जन्यो वा । नाद्यः । सम्बन्धिद्वयाश्रितस्य सम्बन्धस्याश्रयाभावेऽवस्थानायोगेन कार्यस्यापि सम्बन्धाश्रयतया नित्यमवस्थानप्रसङ्गात् । जन्यत्वे तु सम्बन्धिद्वयाश्रितसङ्ख्यादिवत् आश्रयद्वयजन्यत्वस्यावश्यम्भावेन कार्योत्पत्तिसमये सम्बन्धाभावात् न कार्यकारणयोरयुतसिद्धिः । **एकत्वेऽपि स्वरूपबाह्यरूपेति** । ननु, संयोगसमवायस्वरूपं बाह्यं सम्बन्ध्यन्तरनिरूपितम् । घटस्वरूपं तु न बाह्यनिरूपितम् । अतो घट इति संयोगः समवाय इति च शब्दप्रत्ययभेदेऽपि यथा देवदत्तस्य पिता यज्ञदत्त इति सामानाधिकरण्यप्रत्ययः, एवं भूतलसंयोगी घटः, रूपसमवायी घट इति प्रयोक्तव्ये समवायो घटः, संयोगो घट इति सामानाधिकरण्येन प्रयोगस्स्यात् । अभेदाभ्युपगमादिति चेन्न । संयोगादिपदानां तार्किकमतसंयोगत्वादिसामान्यपरतोपपत्तेः । एवं च घटस्य नीलं रूपमित्यादिव्यवहारोऽपि सामान्येष्वेव सञ्चारणीय इति न किञ्चित् सङ्कटम् । **यथा चैकापि सती रेखेति** । वामगत्या लिख्यमानानामङ्काभिधानानां रेखाणां मध्ये सदृशी विसदृशी वा प्रथमस्थानपतितैकद्वित्रादिसंज्ञां लभते, द्वितीयस्थानपतिता दशविंशत्यादिसंज्ञां, तृतीयस्थानपतिता शतसंज्ञां, चतुर्थस्थानपतिता सहस्रसंज्ञां, पञ्चमादिस्थाने पतिता अयुतादिसंज्ञामिति गणितमर्यादा । **अविद्यमानार्थकल्पनाया इति** । ननु, निष्प्रदेशेषु परमाणुषु प्रदेशभेदानारोप्याव्याप्यवृत्तिसंयोगसमर्थने ह्यसदर्थकल्पना स्यात्, न त्वेतदस्ति । अवच्छेदकभेदो हि संयोगेनाव्याप्यवृत्तावपेक्ष्यते, न तु प्रदेश एव । स तु सावयवेषु प्रदेशभेद एव भवति । निरवयवेषु तु दिग्भेद एव भविष्यति । तथा च किञ्चिद्दिगवच्छेदेन निरवयवानां संयोगः, किञ्चिद्दिगवच्छेदेनाभाव इति कानुपपत्तिरव्याप्यवृत्तितायाम् । अवश्यं च वृक्षकपिसंयोगस्थलेऽपीयं गतिराश्रयणीया । सावयवानां संयोगस्य तत्तदवयवसंयोगपूर्वकत्वेन कपिवृक्षारम्भकपरम्परानिविष्टपरमाणूनामपि संयोगस्यावश्यस्वीकर्तव्यत्वादिति चेत्, उच्यते—दिशामपि किं सम्बद्धानामवच्छेदकता, उतासम्बद्धानाम् । नान्त्यः । अतिप्रसङ्गात् । आद्ये तु संयोगेनावच्छेदकतोपगमे तत्राप्यवच्छेदकान्तरापेक्षायामनवस्था स्यात् । स्वरूपसम्बन्धेनावच्छेदकताभ्युपगमे तु अण्वात्ममनसामपि स एवास्तु । किं संयोगकल्पनया । तथाचाव्याप्यवृत्तिसंयोगकल्पना दुरुपपादा । **संश्लेषानुपपत्तिरिति** । एकसम्बन्ध्याकर्षणे यत्र सम्बन्ध्यन्तराकर्षणं, तत्र संश्लेषः । स तु सावयवानां जतुकाष्ठादीनां दृष्टः, न तु निरवयवैस्सावयवानाम् । अतो द्व्यणुकस्य सावयवस्य निरवयवेन परमाणुना स नोपपद्यते । **न हि कार्यकारणयोरिति** । ननु, कार्यकारणयोर्धर्म्यंशे भेदस्याश्रयाश्रयिभावस्य वा अनभ्युपगमेऽपि अवस्थांशे स वेदान्तवादिभिरप्यनिर्वचनीय उपेयत एव । तथा च तन्निर्वाहार्थं समवायोऽभ्युपगन्तव्यः

इति चेन्न । तावता सम्बन्ध उपगन्तव्यः । स तु स्वरूपसम्बन्ध एव भविष्यति, न तु समवाय इति भावः । **यथा घृतसुवर्णादीनामविभज्यमानावयवानामिति** । यद्यपि घृतादाववयविन्यवयवविभागपूर्विकैव द्रवत्वापत्तिरिति वक्तुं शक्यं, तथाप्यवयविनि यथा नैमित्तिकद्रवत्वम्, एवं परमाणावपि तदुपेयम् । द्रवत्वाभावदशायां च परमाणौ घनीभावोऽभ्युपेयः । स च द्रवत्वाभावोऽतिरिक्तं गुणान्तरमित्यन्यदेतत् । तथा च परमाणुगतघनीभावविनाशः,विभागं विनैव भवतीति तात्पर्यम् । **क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरमिति** । यद्यपि तार्किकैः क्षीरावयव्यारम्भकसंयोगनाशेन क्षीरे नष्टे क्षीरावयवैस्संयोगान्तरं प्राप्तैर्दध्यारभ्यत इत्युपेयते । यद्द्रव्यं यद्द्रव्यध्वंसजन्यं, तत्तदुपादानोपादेयमित्युपगमात्, एवं जलस्य हिमभावेऽपि शक्यं वक्तुं, तथापि नेयं तार्किकप्रक्रिया प्रतीत्यनुसारिणी । पूर्वसंयोगनाशतन्निमित्तादेस्तत्रानुपलम्भात् । परं तु यथा विद्यमान एव घटे पाकेन रूपरसान्तरोत्पत्तिः, एवं विद्यमान एव क्षीरे कठिनक्षीरन्यायेन कालादिना रूपान्तरस्य रसान्तरस्य चोत्पत्तौ तदेव क्षीरं दध्यवस्थां प्राप्नोतीत्येव कल्पयितुं युक्तम् । तथा च क्षीरमेव दध्यभवदिति प्रत्यभिज्ञानमप्युपपद्यते । परं तु कठिनक्षीरस्थले क्षीरत्वमभिव्यक्तम् । दधिस्थले तु वष्टितपटे तन्तुत्वस्येव क्षीरत्वस्यानभिव्यक्तिरिति ॥ १७ ॥

॥ इति तदभावाधिकरणम् ॥ ३ ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वृत्तानुवादपूर्वकमुत्तराधिकरणेनातीतस्याधिकरणस्य सङ्गतिमाह—**वैशेषिकराद्धान्त इति** । **अर्धवैनाशिक इति** । तार्किका हि शरीरादीनां सावयवानामनुक्षणं नाशमुपयन्तीत्यर्धवैनाशिकाः । तथा हि तन्मते परिमाणभेदाद्द्रव्यभेदः । शरीरस्य चाशितपीतयोः पाकेन प्रतिक्षणं केचिदवयवाः उपचिता एव भवन्ति । उपचितैरवयवैः पूर्वावयविसहितैः अन्य एवावयव्यारभ्यते । आरभ्यमाणस्य चावयविनः मलादिनिर्गमे घर्षणादौ च धातुवैषम्ये च केचिदवयवा विशीर्णा भवन्ति । यद्यपि चैवमुपचयापचयौ प्रतिक्षणं न स्फुटावुपलक्ष्येते, तथापि पक्षमासादिकालपर्यये स्फुटं शरीरे स्थौल्यकार्श्यादिदर्शनेन सूर्यचन्द्रगतिन्यायेन प्रतिक्षणमपि किञ्चिदुपचयादिकमुपेयम् । एवं भूभूधरवारिधराणामपि खननपूरणसेचनादिनावयवविश्लेषोऽवयवान्तरसंयोगश्चोपगन्तव्यः । एवं सर्वेषु सावयवेषु क्रियाविशेषैरवयवापचयोपचयौ ऊहनीयौ । अपचये चासमवायिकारणसंयोगनाशात् पूर्वावयविनाशः । उपचये च पूर्वावयविन्यवयवान्तरनिवेशायोगादपूर्वावयव्युत्पत्तिरिति सावयवानां प्रति-

क्षणमुत्पादविनाशौ तार्किकसम्मतावेव । न चैतावतापि कथं क्षणिकत्वस्य प्राप्तिः, क्षणचतुष्टयं क्षणपञ्चकं यावन्नाशादिनिमित्तं प्राप्तं भवति, तावत्पर्यन्तमवस्थानं तार्किकमते सम्भावितम् । बौद्धमते तु निर्निमित्ततया प्रतियोगिमात्राधीननाशाभ्युपगमात् क्षणिकत्वमावश्यकम् । अतः कथं सावयवानां पदार्थानामुपचयापचयाभ्यां भेदमुपयन् तार्किकः अर्धवैनाशिकस्स्यादिति वाच्यम् । उक्तगत्या सावयवेषु पदार्थेषु वाय्वभिघातादिरूपस्य यस्य कस्याप्यवयवविश्लेषनिमित्तस्य सम्भवेन क्षणिकत्वावर्जनेन सावयवनिरवयवरूपस्य प्रपञ्चस्य सावयवरूपेऽर्धे भागे क्षणादूर्ध्वं नाशोपपत्तेः तार्किकोऽर्धवैनाशिकः । अपि च सावयवानां परिमाणभेदात् भेदमिच्छता यदेव पूर्वेद्युर्मम शरीरं, तदेवाद्य वर्तते, सैवेयं भूः, त एवैते भूधरा इति प्रत्यभिज्ञानां सादृश्यादिदोषात् भ्रान्तित्वमुपेयम् । तथा च यत् सत्, तत् क्षणिकं, यथोत्पन्नविनष्टं वस्त्विति बौद्धानुमानस्य किं बाधकं तार्किकेण वक्तुं शक्यम् । प्रत्यभिज्ञैव हि स्थायित्वे मूलभूतं प्रमाणम् । सा तु भ्रान्तिकृता । अतो न तार्किकेण सावयवानामक्षणिकत्वमुपपादयितुं शक्यम् । **सर्ववैनाशिकराद्धान्त इति** । बौद्धानां मते भावभूतं सर्वं क्षणिकमिति ते सर्ववैनाशिकाः । **स च बहुप्रकार इति** । सर्वशून्यत्वविज्ञानमात्रास्तित्वपरोक्षबाह्यसहितान्तरास्तित्वापरोक्षबाह्यसहितान्तरास्तित्वरूपाश्चत्वारः सिद्धान्ता बौद्धस्य । अतो बहुप्रकारत्वम् । नन्वेकेन बुद्धेन कथं विरुद्धाश्चत्वारः सिद्धान्ता उपदर्शिता इत्यत आह—**प्रतिपत्तिभेदादिति** । यस्मिन्यस्मिन् काले यथायथा बुद्धस्य प्रतिभारूपा प्रतिपत्तिरभवत्, तदातदा तथातथा सूत्राणि रचितवानित्यर्थः । ननु, सर्वज्ञस्य बुद्धस्य न कालभेदेन विरुद्धा प्रतिभा सम्भवति । अतो निमित्तान्तरमेव वक्तव्यं विरुद्धार्थसूत्रप्रणयने । तथैव बौद्धैस्तदाशयो वर्णितः । बुद्धस्य हि माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञकाश्चत्वारश्शिष्याः । तत्र बौद्धेन प्रथमं यान् प्रति सर्वं शून्यमित्युपदिष्टं, ते माध्यमिकाः । ते हि गुरुणा यथोक्तं, तथैव श्रद्धया गृहीतवन्त इति नापकृष्टाः । पुनश्च तदुक्तस्यार्थस्य बुद्ध्यनुसारेणाक्षेपस्याकृतत्वान्नोत्कृष्टबुद्धय इति माध्यमिकाः । अन्यैस्तु शिष्यैः गुरुणा सर्वशून्यत्वे उपदिष्टे ज्ञानातिरिक्तस्य सर्वस्य शून्यत्वमस्तु, अस्तु नामेति गुरूक्तिर्योग इति बौद्धैः परिभाषितोपेता । तदुपरि च ज्ञानस्य तु शून्यत्वं न सम्भवति । तथात्वे जगदान्ध्यप्रसङ्गात् शून्यत्वासिद्धेरसम्भवाच्चेति बुद्धमते आचारत्वेन परिभाषित आक्षेपोऽपि कृत इति योगाचाराः विज्ञानमात्रास्तित्ववादिनः । तदनन्तरं अन्यैश्शिष्यैः प्रतीतिसिद्धस्य कथं शून्यत्वं वक्तुं शक्यम् । अतो ज्ञानवत् बाह्यार्थो-

ऽपि सन्न इत्युक्ते, तर्हि तथैवास्तु , परं तु सोऽनुमेयः, न तु प्रत्यक्ष इत्युक्ते तथाङ्गीकृत्यैवं शिष्यमतिमनुसृत्य कियत्पर्यन्तं सूत्रं भविष्यतीति तैः पृष्टम्। अतस्ते सौत्रान्तिकाः। अन्ये पुनः यद्ययं घट इति प्रतीतिबलात् बाह्योऽर्थ उपेयते, तर्हि तस्या एव प्रतीतेरपरोक्षत्वात् स कथं परोक्षः, अतो 'बाह्योऽर्थो न प्रत्यक्ष' इति भाषा विरुद्धेति आक्षिपन्। अतस्ते वैभाषिकाः। अतः शिष्यबुद्धिमनुसृत्यैव बुद्धेन तथातथार्था व्युत्पादिता इत्याशङ्कायां तर्हि तथैवास्त्वित्याह—**विनेयभेदा**द्वेति। **त्रयो वादिन** इति। सौत्रान्तिकवैभाषिकयोः परोक्षत्वापरोक्षत्वाभ्यां बाह्यार्थवैलक्षण्ये सत्यपि बाह्यार्थाभ्युपगन्तृत्वेनैकीकृत्य त्रय इत्युक्तिः। भूतं महाभूतानि पृथिव्यादीनि, भौतिकं गिरिनद्यादि, चित्तं ज्ञानं, चैत्तं सुखादि, भूतभौतिकं बाह्यं, चित्तचैत्तमान्तरं, धातुपदं पदार्थपर्यायः। **भौतिकं रूपादय** इति। रूपादीनां पृथिव्यादिकार्यत्वं सर्वसम्प्रतिपन्नम्। **चतुष्टये च पृथिव्यादिपरमाणव** इति। बौद्धमते आकाशो न भावमध्यपतितः, अपि त्वावरणाभाव इति भूतानि चत्वारि। खरः कठिनः, ईरणं चलनम्। **ते पृथिव्यादिभावेन संहन्यन्त** इति। यथा तार्किकमते परमाण्वादिभिः द्व्यणुकादिक्रमेण कार्यमारभ्यते, नैवं बौद्धमते, अपि तु परमाणुसमुदाय एव गिरिनद्यादिकं सर्वमिति भावः। एवं बाह्यं भूतभौतिकरूपं परमाणुसमुदायं निरूप्य आन्तरं पञ्चस्कन्धसमुदायं निरूपयति—**रूपे**ति। चित्तं चैत्तमिति पूर्वं सङ्ग्रहेणोक्तस्य विस्तरेण कथनमेतत्। रूपं नीलपीतादिरूपम्। यद्यपि तत् बाह्यं, तथापि ज्ञानविषयतया तस्याप्यान्तरत्वविवक्षा। अथवा स्थूलशरीरनिविष्टानि भूतान्येव नीलादिगुणकानि रूपम्। अत आन्तरत्वम्। विज्ञानपदेन अहमाकारमालयविज्ञानशब्दितं रूपादिविज्ञानं सविकल्पकं निर्विकल्पकं च प्रवृत्तिविज्ञानसंज्ञितं तत् सर्वं विवक्षितम्। वेदना सुखदुःखे, संज्ञा यज्ञदत्तादि, तदुल्लेखिसविकल्पकप्रत्ययो वा। द्वितीयपक्षे विज्ञानपदेन सविकल्पकप्रत्ययो न ग्राह्यः। संस्कारः रागद्वेषमदमानधर्माधर्मादयोऽर्थाः। इदं च सर्वं बाह्यमाभ्यन्तरं क्षणिकम्। न च तस्य क्षणिकत्वे प्रमाणाभावः। 'अयं घट' इति प्रत्यक्षं हि घटे वर्तमानत्वं विशेषणमवगाहते। वर्तमानत्वं चावर्तमानत्वस्य भूतभविष्यत्कालसम्बन्धस्य व्यावृत्तिरेव। यथा घटत्वादिकम् अघटव्यावृत्तिः। अन्यापोहरूपत्वात् सामान्यस्य तन्मते। तथा च प्रत्यक्षेणैव कालान्तरास्थायिताया विषयीकरणात् तात्कालिकत्वं क्षणिकत्वं सिध्यति। तथानुमानमपि—यत्सत्, तत्क्षणिकं, यथा उत्पन्नविनष्टम्। न चाप्रयोजकता। स्थायित्वे सत्त्वस्यैवानुपपत्तेः। अर्थक्रियाकारित्वं सत्त्वं, न तु जात्यादिरूपम्। स्थायित्वे च नार्थक्रियाकारिता सम्भवति। विक-

रूपासहत्वात् । स्थायित्वपक्षे हि दण्डादयः किमेकैककार्यजनने समर्थाः, उतानेककार्यजनने । नाद्यः । तथासत्येकस्माद्दण्डादेक एव घटस्स्यात्, न तु घटान्तरम् । न द्वितीयः । तथासति सर्वेऽपि दण्डजन्यत्वेन सम्मता घटाः युगपदेव स्युः । समर्थस्य विलम्बे नियामकाभावात् । अत एकैकक्षणवृत्तिदण्डादिः एकैककार्यजननसमर्थः प्रतिक्षणमुत्पत्तिविनाशशील इत्युपेयमिति तदभिमानः । न तु तन्मते स्थायी जीवो वेश्वरो वास्ति । ययोः परमार्थत ऐक्यं भवेत् । एवं तन्मतं निरूप्य तद्दूषणपरं सूत्रं योजयन्नेव सिद्धान्तमाह—अत्रेदमभिधीयत इत्यादिना । समुदायिनामचेतनत्वादिति । अयमर्थः—समुदायो ह्यनेकेषां पदार्थानां सन्निकर्षेण मेलनरूपोऽयं घट इत्यादिप्रतीत्युपपादक आस्थेयः । स तु परमाणूनां व्यापाराधीन उपगन्तव्यः । अचेतनव्यापारश्च चेतनाधीन एव दृश्यते । अतोऽचेतनानां समुदायिनां परमाणूनां स्वत एव तावन्न सम्भवति व्यापाराधीनं मेलनम् । ननु, स्वतोऽसम्भवेऽपि चेतनाधीनमेव मेलनमस्तु । अस्ति च बौद्धानां चेतनो जीवः । अतः कानुपपत्तिः समुदायापत्ताविति चेन्न । तन्मते हि न स्थिरो जीवो विद्यते । यद्व्यापाराधीनो भविष्यति समुदायः । अपि तु क्षणिकमहमिति विज्ञानमेव जीव इत्युच्यते, तस्य तु वृत्तिलाभः शरीराकारभूतसमुदायाधीन एव । तथा च क्षणिकजीवसिद्धौ शरीराकारसमुदायः, सति च शरीरे क्षणिकालयविज्ञानमित्यन्योन्याश्रयः । न च स्थिरस्य चेतनस्याभावेन तदधीनव्यापारासम्भवेन समुदायापत्त्यभावेऽपि स्वत एव परमाणुव्यापारेण मेलने सति समुदायापत्तिर्भविष्यतीति वाच्यम् । तथासति नित्यमेव परमाणुव्यापारप्रसङ्गेन सदैव समुदायापत्त्या प्रलयो न स्यात् । न च क्षणिकविज्ञानानामाशयसंज्ञकस्सन्तानः स्थिरोऽस्ति , तद्व्यापारेण परमाणूनां समुदायापत्तिर्भविष्यतीति वाच्यम् । आशयस्य सन्तानस्य सन्तानिभ्योऽन्यत्वे स एव स्थिरश्चेतनो जीव इत्यस्मत्पक्षसिद्धिः । अनन्यत्वे तु पूर्वोक्तोऽन्योन्याश्रयः । अपि च परमाणूनामपि क्षणिकत्वाभ्युपगमात् मेलनं न सम्भवति । परमाणूनां मेलनं परमाणुक्रियाधीनम् । तथा च स्वक्रियां प्रति परमाणूनां कारणत्वात् क्रियापूर्वक्षणे परमाणुभिर्भाव्यम् । क्रियाश्रयतया क्रियाक्षणेऽपि तेषामवस्थानमपेक्षितम् । एवं मेलनक्षणेऽपि । न हि मेलनाश्रयस्याभावे मेलनरूपा प्रवृत्तिरुपपद्यते । तथा च स्थिरपरमाणुसाध्या मेलनरूपा प्रवृत्तिः कथं तेषां क्षणिकत्वे भवेत् ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

भूभूवराङ्कुरादिसमुदायोपपत्तौ चेतनः प्रयोजको नोपलभ्यते । अतो न समुदायापत्तिश्चेतनाधीना । तथा च द्विविधोऽपि समुदायः चेतनं विनैव भविष्यतीत्यभिप्रायं शङ्काभागस्य दर्शयति—**यद्यपीति** । इतरेतरकारणत्वादिति कारणपदेन सौत्रः प्रत्ययशब्दो व्याख्यातः । कार्यं प्रत्येति जनकतया सम्बध्यत इति व्युत्पत्त्या प्रत्ययपदं कारणे परिभाष्यते । द्विविधो हि समुदायः प्राग्दर्शितः—बाह्य आभ्यन्तरश्च । तत्रान्तरसमुदायस्य चेतनस्य स्थिरस्याभावेऽपि सिद्धिं दर्शयति—**ते चाविद्यादय इति** । अनित्याशुचिषु क्षणिकेषु शरीराकारपरिणतेष्वनात्मसु भूतेषु नित्यशुचिस्थाय्यात्मबुद्धिरविद्या । ततो रागश्शरीरादौ, तद्विपरीते द्वेषः, तदर्थमैहिकामुष्मिको व्यापारः, सर्वगेतत्संस्कारः । आभ्यां च जन्मान्तरीयाभ्यामविद्यासंस्काराभ्यां गर्भगते शुक्लशोणितसमुदाये अहमित्यालयविज्ञानस्य वृत्तिलाभो विज्ञानम् । आलयविज्ञानसम्बन्धात् गर्भगतस्य शुक्लशोणितस्य कलिलबुद्बुदावस्था नामरूपम् । तदनन्तरं षण्णामिन्द्रियाणामायतनरूपशरीराकारेण गर्भगतस्यैव परिणामः षडायतनम् । गर्भगतस्यैव शरीरिणः शीतोष्णाद्यनुभवः स्पर्शः । तत्रैव सुखदुःखाद्यनुभवो वेदना । तद्गतस्यैव सुखप्रेप्सा दुःखजिहासा च तृष्णा । तदनुकूलो व्यापार उपादानम् । गर्भान्निर्गमनं भवः । तथोत्पन्नस्य जनकगतजात्यनुसारेण मनुष्यत्वादिकं जातिः । ततो जरा मरणम् । मुमूर्षोरिच्छोपहतिः शोकः । प्रतिहतेच्छस्य प्रलापः परिदेवनम् । बाह्येन्द्रियकृतविषयानुभवजनितं दुःखं दुःखम् । मानसविषयानुभवजनितं दुःखं दुर्मनस्ता । एवंजातीयका इत्यनेन ततो मरणं, लोकान्तरप्राप्तिः, पुनरागमनमिति विवक्षितम् । एवं च पूर्वपूर्वकारणानुसारेणोत्तरोत्तरकार्योत्पत्तेः चेतनव्यापारं विनैव सम्भवात् किं चेतनेनास्थिरेण प्रयोजनम् । नन्वालयविज्ञानस्य वृत्तिलाभार्थं शुक्लशोणिताख्यः समुदायोऽपेक्षितः । कथं तस्य चेतनव्यापारं विना सिद्धिः । अत आह—**अर्थाक्षिप्त इति** । सूत्रे उत्पत्तिमात्रनिमित्तत्वादित्यनेनाविद्यादीनामुत्तरोत्तरोत्पत्तौ निमित्तत्वमस्तु नामेत्युपगम्य मात्रपदेन तदाश्रयभूतस्य सङ्घातस्य सिद्धिर्वार्थते । तथा च अविद्यादीनामितरेतरोत्पत्तिव्यतिरेकेण स्वाश्रयं सङ्घातं प्रति अनिमित्तत्वात् न तत्सिद्धिरिति परिहारांशाभिप्रायमाह—**नेत्यादिना** शङ्काग्रन्थोक्तमर्थमनूद्य । किं पीनत्वान्यथानुपपत्त्या रात्रिभोजनवदविद्याद्यनुपपत्त्या सङ्घाताक्षेपः, उत अविद्यादिभिरेव सङ्घातस्योत्पत्तिरिति विकल्पं मनसि निधाय आद्यं समुदायासिद्ध्या दूषयति—**यदि तावदिति** । **तत्रेति** । नित्येष्वाश्रयाश्रयिभूतेषु अणुष्वभ्युपगम्यमानेषु भोक्तृषु च सत्स्वित्यन्वयः । आश्रयाश्रयिभूतेष्वित्यस्य उपकार्योपकारकभावं प्राप्तेष्वित्यर्थः । आश्रयाश्रयिशून्येषु आश्रयाश्रयित्वशून्येषु । अयं भावः—स्थिरेषु परमाणुषु यदन्वये परमाणूनां

सङ्घातापत्तिः, यद्व्यतिरेके च न, तदुपकारकम्, उपकार्याः परमाणवः, येन तत्कृतो भोगः प्रार्थ्यते, स तत्र कर्तेति ग्रहीतुं शक्यते । क्षणिकेषु तु परमाणुषु अन्वयव्यतिरेकग्रहस्यानेकक्षणसाध्यस्यासम्भवात् नोपकार्योपकारकभावो निर्धारयितुं शक्यः । नापि भोगकालानवस्थायिनः क्षणिकस्यालयविज्ञानस्य कर्तृत्वं सम्भवति । अतो न सङ्घातापत्तेः किञ्चिन्निमित्तं सम्भावयितुं वैनाशिकैश्शक्यमिति । द्वितीयमन्योन्याश्रयेण दूषयति—**अथायमभिप्राय इति** । ननु, पित्रोरुपसर्पणात् शुक्लशोणितसङ्घातः, तत्र चालयविज्ञानस्याविद्यासंस्काराभ्यां वृत्तिलाभ इति आध्यात्मिकसङ्घाते न काचिदनुपपत्तिः । न च पित्रोरपि क्षणिकतया याभ्यामन्नशनादिकमुपयुक्तं, तयोर्नष्टतया कथं शुक्लशोणितसङ्घातापत्तिहेतुत्वमिति वाच्यम् । क्षणिकत्वेऽपि सन्ततयोत्पद्यमानत्वादित्यभिप्रेत्य शङ्कते—**अथ मन्यसे सङ्घाता एवेति** । अनादित्वोक्त्या पूर्वपूर्ववर्तिसङ्घातादुत्तरोत्तरस्य शुक्लशोणितसङ्घातापत्तिद्वारा पुत्रसङ्घातस्योत्पत्तिरिति विवक्षितम् । मनुष्यपुद्गलस्य मनुष्यशरीरस्य । यथा हि पितृसदृश एव पुत्र उत्पद्यते, एवं पितृसङ्घाते मृते परलोकगामिसङ्घातः एतस्यैव सङ्घातस्य कार्यमिति वक्तव्यम् । तथा च सोऽपि पूर्वसङ्घातसदृश एवेति नियमे सति अत्र लोके मनुष्यः परलोकेऽपि मनुष्य एव भवेदिति न देवनारकादियोनिप्राप्तिः । अनियमाभ्युपगमे तु मनुष्यशरीरस्य क्षणिकस्य इहैव लोके हस्त्यादिभावापत्तिरिति दूषणमाह— **अनियमाभ्युपगमेऽपीति** । ननूत्पद्यमानाः प्रजाः पितृतुल्या एवोत्पद्यन्ते । मरणानन्तरं तु जायमानाः सङ्घाता धर्माधर्मवशेन सदृशा विसदृशा वेत्यनियमः । ततः पूर्वं तु प्रतिक्षणं जायमाना सङ्घाता एकस्मिन् सन्ताने सदृशा एवोत्पद्यन्त इत्यभ्युपगम्यते । अतो न काचिदनुपपत्तिरित्यत आह—**अपि चेति** । भवेदेष परिहारः, यदि परमते धर्माद्यर्था प्रवृत्तिरुपपद्येत, न तु सोपपद्यते, येन तत्तच्छास्त्रोक्तं कर्म क्रियते भोगापवर्गोपयोगि, स तदानीमेव नष्ट इति न तस्य भोगस्सम्भवति । अन्यकृतेन कर्मणा अन्यस्य भोगाभ्युपगमे त्वतिप्रसङ्गः । न च कार्यकारणभावोऽतिप्रसङ्गपरिहाराय कल्प्यते । यत्सन्तानान्तःपतितेन क्षणेन कर्म कृतं, तदन्तःपतितस्योत्तरक्षणस्य फलमिति । एवं मोक्षसाधनेष्वपि द्रष्टव्यमिति वाच्यम् । तथासति पितृकृताभ्यां स्वर्गापवर्गसाधनाभ्यां पुत्रस्यापि स्वर्गापवर्गौ स्याताम् । तत्सन्तानान्तःपातित्वाविशेषात् । एवमाध्यात्मिकसङ्घातः स्थिरं चेतनं विना नोपपद्यते । नापि बाह्यो घटादिसङ्घातः स्थिरं चेतनं विनोपपद्यते । घटकृतभोगकालानवस्थायिनो घटार्थं प्रवृत्त्यनुपपत्तेः । न च चेतनप्रवृत्तिं विनैव घटादिसिद्धिः प्रमाणानुरोधिनी । अङ्कुरादिषु घटादिद-

दृष्टान्तानुरोधादेव अस्ति कर्तेति कल्पनीयम् ॥१९॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

अविद्यादीनां पूर्वपूर्वस्योत्तरोत्तरहेतुत्वमुपेत्य सङ्घातापत्तिर्न सम्भवतीत्युक्तम् । इदानीं तु क्षणिकानां कारणत्वमेव न सम्भवतीति प्रतिपाद्यते—**उत्तरस्मिन् क्षण उत्पद्यमान इति** । बौद्धानां मते क्षणपदेन घटादिरेव पदार्थो व्यवह्रियते, न तु तदतिरिक्तः कश्चित् क्षणो नाम कालोऽस्ति। उत्पत्त्यव्यवधानेन च पदार्थानां नाशः । क्षणिकः पदार्थ इति व्यवहारस्तु भेदकल्पनया । निरुध्यते नश्यति। **निरुध्यमानस्य निरुद्धस्य वेति** । उत्तरक्षणोत्पत्तिकाल एव यस्याव्यवहितपूर्वक्षणस्य नाशः । स निरुध्यमानः पूर्वमेव नष्टो निरुद्धः । यथा च पूर्वमेव नष्टस्य उत्तरपदार्थे न कारणत्वम्, एवं तत्कालं नश्यतोऽपि न कारणत्वमित्यर्थः । ननु, पदार्थानां क्षणिकत्वेऽपि उत्तरं प्रति पूर्वस्य कारणत्वे नानुपपत्तिः । कार्याव्यवहितपूर्ववृत्तित्वं हि कारणत्वम् । तच्च कार्यकाले नश्यतोऽप्युपपद्यत इति शङ्कते—**अथेति** । कार्यानुकूलव्यापाराविष्टानामेव कारणानां कार्यजनकत्वम् । तथा च कार्योत्पत्तेः प्राग्व्यापाराश्रयतया व्यापारोत्पत्त्यनन्तरमपि कारणस्यावस्थानमपेक्षितम् । तत् क्षणिकत्वेऽनुपपन्नमिति परिहरति—**तथापीति** । ननूत्पत्तिव्यतिरेकेण कारणानां न व्यापारान्तरापेक्षेति न क्षणिकानां कारणत्वानुपपत्तिरित्याशङ्क्य मृदादीनामुपादानकारणानां कार्यकालेऽप्यनुगमदर्शनेन तेषां यावत्कार्यमवस्थानस्य कार्यस्थित्यर्थमपेक्षणाच्च क्षणिकवादे उपादानोपादेयभावोऽनुपपन्न एवेति परिहरति—**अथ भाव एवेत्यादिना** । **सर्वत्रैव तत्प्राप्तेरिति** । तथा च दण्डादिकं निमित्तकारणं, मृदादिकमुपादानकारणमिति व्यवस्थासिद्धये मृदादीनां कार्यानुरागोऽपेक्षणीय इति भावः । **वस्त्वन्तरमेवेति** । वस्तुनाऽसम्बन्धमिति यावत् । अवस्थान्तरमेवेति द्वितीयं कल्पनमनुवदति—**अथास्ति कश्चिदिति** । **एवमप्याद्यन्तेति**। आद्यन्तक्षणवर्तिन्योरवस्थयोराश्रयं विना अवस्थानायोगादिति भावः ॥२०॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥

पूर्वसूत्रे क्षणिकस्य पूर्ववर्तितामात्रेण हेतुत्वोपपत्तावपि उपादानता नोपपद्यत इत्युक्तम् । इदानीं हेतोः कार्यकालानवस्थायित्वे तदीयप्रतिज्ञाविरोधमापादयति—**क्षणभङ्गवाद इति** । असत्येव हेतौ कार्यकाल इति शेषः । **चतुर्विधानिति** । अधिपतिसहकारिसमनन्तरालम्बनप्रत्ययान्, चित्तं ज्ञानं, चैत्ताः सुखा-

दयः, अधिपतिः इन्द्रियं, तद्धि चक्षुरादिरूपं उत्पन्नस्य ज्ञानस्य रूपादिविषयतां नियच्छति । नियामकश्च लोके अधिपतिरित्युच्यते । सहकारी आलोकः, समनन्तरप्रत्ययः पूर्वज्ञानम्। बौद्धमते हि क्षणिकज्ञानसन्ततौ पूर्वज्ञानमुत्तरज्ञानस्य कारणं, तदेव च मन इत्युच्यते । आलम्बनं घटादिः, एतान् हेतून् प्रतीत्य प्राप्य। चक्षुरादिजन्यम् इष्टवस्तुगोचरं ज्ञानमेव सुखं, अनिष्टगोचरं दुःखमिति तन्मतम् । अतस्सुखादीनां चैत्तानामपि चतुर्विधहेतुजन्यत्वम्। एतस्याः प्रतिज्ञायाः हेतोः कार्यकालानुवृत्त्यभावे को विरोध इति चेत्, उच्यते—आलम्बनस्य हेतोः ज्ञानकालेऽपि वर्तनमपेक्षितम् । घटो हि गृह्यमाणो ज्ञानेन वर्तमानतया गृह्यत इति ज्ञानसमानकालत्वं तस्यायाति, हेतुतया च ज्ञानपूर्ववर्तित्वम् । न चैतत् क्षणभङ्गवाद उपपद्यते। यौगपद्यमन्यथेत्यंशं व्याचष्टे—**निर्हेतुकायां चोत्पत्तावित्यादिना। सर्वत्रेति**। सर्वदेत्यपि द्रष्टव्यम्। **ततो यौगपद्यमिति** । तथा च न क्षणिकत्वम् । इष्टापत्तौ प्रतिज्ञाविरोधमेव प्रकारान्तरेणाह—**तथापीति** । **संस्कारा इति** । तन्मते पूर्वक्षण एव हेतुभूतः संस्कारो वासनेति च व्यवह्रियते । कार्यं तु तद्विषयतया कर्मव्युत्पत्त्या संस्कारः । तथा च कार्यकारणात्मकं सर्वं भावरूपं क्षणिकमिति प्रतिज्ञार्थः ॥२१॥

## प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

त्रयादन्यदित्यत्र निर्दिष्टं त्रयं किमित्यपेक्षायामाह—**तदपि चेति** । **बुद्धिपूर्वकः किलेति** । घटं नाशयामीति बुद्ध्या दण्डाद्युद्यम्य क्रियमाणो घटनाशः प्रतिसङ्ख्यानिरोधः । सङ्ख्या बुद्धिः, प्रतिकूला सा प्रतिसङ्ख्या, तत्पूर्वको निरोध इति व्युत्पत्तेः । अयं सर्वलोकप्रसिद्धः स्थूलो विनाश इति तेषां परिभाषा। **विपरीत इति** । प्रतिक्षणं घटादीनां युक्त्या साध्यमानोऽकुशलैरवगन्तुमशक्यः सूक्ष्मो विनाशोऽप्रतिसङ्ख्यानिरोधः। **आवरणाभावेति**। आवरणं कुड्यादि। परस्तात् 'आकाशे चाविशेषादि'ति सूत्रे। **निरोधद्वयमिदानीं प्रत्याचष्ट इति** । यद्यपि प्रतिसङ्ख्यानिरोधः सिद्धान्तेऽप्युपगत एव, तथाप्यस्ति विशेषः । अवस्थानां विनाशेऽपि अवस्थावन्मृदादिकमनुस्यूतमिति न निरन्वयो विनाशस्सिद्धान्ते । बौद्धस्य तु न किञ्चिदप्यनुवर्तते, अपि तु निरन्वय एव घटादेर्नाश इति । **अविच्छिन्नहेतुफलभावेनेति** । ननु, दण्डादिप्रहारे सति चरमसन्तानिनाशात्पुनर्घटाजननेन सन्तानविच्छेदस्सम्भवत्येवेति चेत्, न । तावताप्यवस्थान्तरविशिष्टतया मृदोऽनुवर्तनात्

निरन्वयनाशायोगात् । **नापि भावगोचरौ सम्भवत इति** । अप्रतिसङ्ख्यानिरोधो घटादीनां वक्तुं न शक्यते । क्षणिकत्वकल्पनायाः प्रमाणविरुद्धत्वात् पक्षमासाद्यनन्तरमपि स एवायं घट इति प्रत्यभिज्ञाबलेन घटस्य स्थायित्वावगमात् । न च परिमाणभेदेन द्रव्यभेदादियं प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । न हि वैशेषिकादिवत् परिमाणभेदेन द्रव्यभेदः सिद्धान्ते उपेयते । अपि त्वग्निसंयोगेन स्थित एव धर्मिणि यथा पूर्वरूपनाशोत्तररूपोत्पत्ती, तथा अवयवोपचयापचयाभ्यां शरीरादौ धर्मिणि स्थित एव स्थौल्यकार्श्यावस्थयोरुत्पत्तिरिति । तथाचाबाधितप्रत्यभिज्ञाविरोधात् पदार्थानां क्षणिकत्वं नोपगन्तुं युक्तम् । न चायं घट इत्यनेन भूतभविष्यत्कालव्यावृत्तेरपि ग्रहणात् क्षणिकत्वमपि प्रमाणायातमिति वाच्यम् । अयं घट इति हि वर्तमानत्वं प्रतीतिक्षणवृत्तित्वरूपं गृह्यते, न तु कालान्तरावृत्तित्वम् । न च भूतभविष्यद्व्यावृत्तत्वमेव वर्तमानत्वम् । अन्यापोहरूपत्वात् सामान्यस्येति वाच्यम् । भावभूततया प्रतीयमानानामभावभूतान्यापोहात्मत्वानुपपत्तेः । अपि चैवंवदता भूतत्वादिकमपि वर्तमानत्वादिव्यावृत्तिरूपमेव वक्तव्यम् । तथा चान्योन्याश्रयः । नन्वेवमपि भावरूपवर्तमानत्वग्रहेऽपि तस्य विशेषणतया स्वविरुद्धधर्मव्यावर्तकत्वस्वभावत्वेन भूतभविष्यत्कालसम्बन्धव्यावर्तकता भविष्यतीति चेन्न । यथा हि घटवद् भूतलमित्यत्र घटवत्ता स्वावच्छेदेनैव घटाभाववत्तां व्यावर्तयति, चित्रघटे च नीलोऽयमिति प्रतीतिरपि स्वावच्छेदेनैव रूपान्तरसम्बन्धव्यावर्तिका, एवं वर्तमानत्वप्रतीतेरपि स्वविषयावच्छेदेनैव कालान्तरसम्बन्धव्यावर्तकतया स्वावच्छेदं विहाय घटे भूतत्वाद्यव्यावर्तकत्वात् । तथा च प्रत्यभिज्ञानुरोधेन स्थिर एव क्रमेण भूतवर्तमानभविष्यत्कालसम्बन्धे न काचिदनुपपत्तिरिति । प्रतिसङ्ख्यानिरोधस्तु घटादिष्वानित्येषूपेयत एव । तथापि नासौ निरन्वयः । अवस्थानन्वयेऽपि अवस्थावतोऽनुवृत्तिदर्शनात् । निरुपाख्यत्वं निस्स्वरूपत्वम् । तार्किकमते अभावः अभावत्वेनैव सस्वरूपः पदार्थविशेषः, सिद्धान्ते तु घटस्य नाशः क्षणिकः क्रियाविशेषो जन्मादिषड्भावविकारान्तर्गतः, कपालाद्यवस्थैव वा । बौद्धमते तु शशशृङ्गवत् निस्स्वरूपः । स तु न सम्भवति । घटो नश्यतीत्यादिप्रतीतौ कालादिसम्बन्धित्वेनोल्लिख्यमानस्य निस्स्वरूपत्वानुपपत्तेः । **अस्पष्टप्रत्यभिज्ञास्वपीति** । यत्रापामग्निसूर्याभ्यां शोषणं, तत्र किमपि नावशिष्यत इति भावः । **तदनुमानादिति** । अग्निशुष्कं तोयं धूमभावेन, सूर्यशुष्कं तोयं तत्किरणेषु च विद्यमानं मेघभावेन पुनः परिणमत इति कल्प्यत इति भावः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

**अविद्यानिरोध इति** । घटमहं जानामीत्येवमाकारं सविकल्पकं ज्ञानमेव तन्मते अविद्या। तन्निवृत्तौ निर्विकल्पकालयविज्ञानसन्ततिपरिशेष एव मोक्षः। स्वभावतो निर्विकल्पकमेवालयविज्ञानं, सविकल्पकता तु वासनाद्युपाधिसम्पन्नेत्येवमाकारं विचारपूर्वकमनुसन्धानं परिकरः । तत्परिपाके प्राथमिकविशुद्धालयविज्ञानोत्पत्तिः सम्यग्ज्ञानम् । **पूर्वस्मिन् कल्प इति** । यद्यप्यप्रतिसङ्ख्यानिरोध एव निर्हेतुकः परेणोपेयते, प्रतिसङ्ख्यानिरोधस्तु तत्तत्कारणविशेषायत्त एव, तथापि मुमुक्षोस्साधकस्य क्षणिकतया मोक्षकाले अवस्थानासम्भवेन साधने प्रवृत्त्ययोगात् परेणाविद्यायाः प्रतिसङ्ख्यानिरोधोऽपि निर्हेतुक एवोपेय इति आपाद्येदं दूषणं द्रष्टव्यम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

**आकशस्येदानीमिति** । निरुपाख्यत्वमित्यनुषङ्गः । **विप्रतिपन्नान् प्रतीति** । गुणत्वजात्याश्रयतया शब्दो गुण इति तार्किकपरिभाषा । गुणश्च साश्रयः । न च तस्य पृथिव्यादिराश्रयः । गन्धादिसामानाधिकरण्याप्रतीतेः । नाप्यात्मा । ज्ञानादिवन्मनोग्राह्यत्वापत्तेः । दिक्कालमनसां तु न विशेषगुणाश्रयत्वम् । अतस्तदाश्रयतया अतिरिक्तमेव किञ्चिद्द्रव्यं सिध्यतीति भावः । तार्किकपरिभाषामनङ्गीकुर्वाणं प्रत्याह— **अपि चेति** । **येनावरणाभावो विशेष्यत इति** । इहावरणमिह नेति आवरणतदभावाभ्यामतिरिक्त एवं देशविशेषः प्रतीयते । तस्य कथमावरणाभावरूपता भवेत् । नन्वयमावरणाभावाधिकरणतया प्रतीयमानो देशविशेषश्चक्षुरन्वयव्यतिरेकानुविधायी प्रातीतिकतया प्रत्यक्षः । आकाशश्चाप्रत्यक्षः । अतः कथमयं देशविशेष आकाशः स्यात् । अपि तु आलोक एवायं देशविशेषः । तस्य प्रत्यक्षत्वोपपत्तेः । न चात्र आलोक इति तदतिरिक्ततयैव प्रतीयमानस्य कथं तद्रूपता। अत्राकाशः, अत्रावकाश इति ततोऽपि व्यतिरिक्ततया प्रतीयमानस्य कथमाकाशरूपता । यदि त्वत्रावकाश इति प्रतीतिराकाशरूपदेशविशेषस्य आकाशाधिकरणत्वावगाहिनी भेदकल्पनया,तर्हि अत्रालोक इति प्रतीतिरप्यालोकरूपदेशविशेषविषया भेदकल्पनया भविष्यति । तथा चेहावरणाभाव इति प्रतीतावधिकरणतया भासमानो देशविशेष आलोकरूप एवेति कथमनया प्रतीत्या अतिरिक्ताकाशसिद्धिरिति चेत्, उच्यते–यथा हि कालस्स्वातन्त्र्येणाप्रत्यक्षोऽपि इदानीं घट इत्यादिषु सर्वासु प्रतीतिषु तत्तत्पदार्थसम्बन्धितया विषयः, एवमाकाशरूपदेशोऽपि

सर्वासु प्रतीतिषु इह पक्षी चलतीत्येवं तत्तत्पदार्थपृष्ठलग्नतया विषय इत्युपगमात् न तत्प्रत्यक्षानुपपत्तिः । इह पृथिवी, इह वायुः, इहालोक इति प्रतीत्या आलोकाद्यतिरेकोऽपि तस्य एषितव्यः । तथाप्रतीतेर्भेदकल्पनयोपपादितस्य क्लिष्टत्वात् । इहावकाश इत्यवकाशपदार्थस्त्वावरणाभाव एव । अत एव यत्र धान्यादिराशिरस्ति, तत्र नावकाशप्रत्ययः । आकाशरूपदेशविशेषप्रत्ययस्तु तत्रापि इह धान्यादिराशिरस्तीति भवत्येव । इहाकाश इति प्रतीतिस्तु नीलकटाहाकारे लोकानामाकाशत्वनिरूढेः तद्विषयोपपद्यते । अत इह देशे पक्षी, इहालोक, इहान्धकार इति प्रतीतिसिद्धो देशविशेष एवाकाशः । तस्यैव सूर्योदयाद्युपाधिभिः प्राक्त्वादिकल्पनमिति न तदतिरिक्ता दिगङ्गीकर्तव्या । अत आकाशस्य बौद्धाभिमतासत्त्वं प्रतीतिसिद्धदेशविशेषात्मकभावरूपताविरुद्धम् । **आकाशसन्निश्रय इति** । आकाशः सन्निश्रयः आधारो यस्य, स तथाभूतः । **अवस्तुत्वे न समञ्जसमिति** । अवस्तुनः आधारत्वानुपपत्तेरिति भावः ॥ २४ ॥

# अनुस्मृतेश्च ॥ २५ ॥

स्मृत्यनुभवयोः सामानाधिकरण्यमुपेयम् । वैयधिकरण्ये अतिप्रसङ्गात् । न च पूर्वानुभवजन्यसन्तानिप्रवाहान्तर्गत एव स्मृतिक्षणो, नान्यसन्तताविति नातिप्रसङ्ग इति वाच्यम् । तथासति पुत्रगतविज्ञानप्रवाहस्यापि पितृगतालयविज्ञानजन्यसन्तानिप्रवाहपतितत्वात् पित्रानुभूतं पुत्रोऽपि स्मरेत् । अतः स्मृत्यनुभवयोः सामानाधिकरण्योपपत्तये अनुभवितुः स्थिरत्वमास्थेयमित्यभिप्रायेण सूत्रं योजयति —**अनुभवमुपलब्धिमन्विति** । **कथं ह्यहमिति** । अनेन पूर्वदर्शनस्य वर्तमानदर्शनस्य च कर्तुरेकत्वेन प्रत्यभिज्ञानमनुस्मृतिरिति व्याख्यातम् । तथा च प्रत्यभिज्ञासिद्धमात्मनः स्थैर्यमिति भावः । पूर्वोत्तरदर्शनयोः कर्तुरैक्यप्रत्यभिज्ञानात् स्थैर्यमुक्त्वा पूर्वदर्शनस्येदानीन्तनस्मरणस्य च कर्तुरैक्यं प्रत्यभिज्ञायत इत्याह—**अपि चेति** । अदः मया स्मर्यमाणम् । **ततोऽहमदोऽद्राक्षीदिति** । अहं स्मरामि, सोऽद्राक्षीदिति अध्याहारेण योजनीयम् । आ उत्तमोच्छ्वासात् चरमोच्छ्वसमभिव्याप्य । **तं प्रति ब्रूयादिति** । किं सादृश्यं वस्तुतो विद्यमानं दोषमासाद्य 'स एवायमि'ति प्रत्यभिज्ञा भ्रमरूपा, उत सादृश्यविषयैवेयं प्रत्यभिज्ञा । नाद्यः । बाधकाभावेन भ्रमत्वकल्पनानुपपत्तेः । द्वितीये तु स एवायमित्युल्लेखोऽनुपपन्न इति दूषणे वक्ष्यमाणे सत्येव दूषणान्तरमाह—**तेनेदं सदृशमिति द्वयायत्तत्वादिति** । सादृश्यविषयत्वेऽपि किं धर्मिप्रतियोगिनिरूपितं तत् भासते, उत केवलमेव । नाद्यः । तथासति प्राक् प्रतियोगिज्ञानं यस्य वृत्तं, तस्यैव द्वितीयक्षणे तद्रूपितसादृश्यप्रत्य-

य इति क्षणिकात्मत्वभङ्ग इत्युक्त्वा द्वितीयं शङ्कते—**तेनेदं सदृशमिति** । प्रत्ययान्तरं प्रतियोग्याद्यनुल्लेखि सादृश्यमात्रंविषयम् । अयं पक्षो धर्मिप्रतियोग्युल्लेखविरोधीति दूषयति—**तेनेदं सदृशमितीति** । पदार्थत्रयाकारमेकमेवेदं ज्ञानम्, आकारभूतं च पदार्थत्रयमान्तरमेव, न बाह्यमस्ति । त्रितयाकारं च तद्विलक्षणकार्यैकोन्नेयशक्तिकात् पूर्वज्ञानादेव भवति, न तदर्थं प्रतियोगिज्ञानवानेकः स्थिरो द्रष्टा अपेक्षित इति विज्ञानवादिनश्शङ्कां मनसि निधाय परिहरति—**यदा हीति** । लोकसिद्धो बाह्यः पदार्थः । स्वपक्षसिद्ध्यादिकं हि स्वयमन्यः प्रतिपक्षी, हेतुः, पक्ष इत्यनेकबाह्यपदार्थसाध्यम् । तत् बाह्यपदार्थमनभ्युपगम्य विज्ञानमात्राभ्युपगमे नोपपद्यत इत्यर्थः । ननु, बाह्यपदार्थमुपेत्य प्रतियोग्यादिविशिष्टसादृश्यप्रत्ययोऽसत्यपि स्थिरात्मन्युपपादयितुं शक्य एव । एकसन्ततिपतितप्रतियोगिज्ञानात् सप्रतियोगिकपदार्थविषयोत्तरोत्तरप्रतीतिरित्युपगमादित्याशङ्क्याह—**एवमेवैषोऽर्थ इति** । सिद्धेऽहि प्रमाणेन क्षणिकविज्ञानमेवात्मेति पक्षे सर्वेयं क्लिष्टगतिः सम्पादनीया । न च क्षणिकत्वपक्षे किञ्चित्प्रमाणमस्तीति भावः । प्रत्यभिज्ञायाः सादृश्यविषयत्वमुपेत्येदमुक्तम् । सा तु पूर्वोत्तरकालावच्छेदेनैकत्वावगाहिनीत्याह—**न चेति** । **सादृश्यादिति** । विषयतया निमित्तत्वं पञ्चम्यर्थः । ननु, 'स एवायं केश' इत्यादिप्रत्यभिज्ञावत् भ्रमरूपेयं प्रत्यभिज्ञेत्याशङ्क्य तत्र बाधात् भ्रमत्वमुपेयते, एवमस्या अपि भ्रमत्वे नाहं स इति निश्चयरूपेण बाधेन भवितव्यम् । न च सोऽस्ति । यत्र हि 'स एवाहं न वे'ति संशयोऽपि नास्ति, तत्र किमु वक्तव्यं निश्चयरूपो बाधो नास्तीति मनसि निधायाह—**भवेदपि कदाचिदिति** ॥ २९ ॥

## नासतो दृष्टत्वात् ॥ २६ ॥

क्षणिकानां कार्यकालवृत्तित्वाभावेनोपादानत्वे निरस्ते अभाव एव उपादानमस्तित्वाशङ्कायामिदं सूत्रम् । **नानुपमृद्येति** । नञ्द्वयेन उपमृद्य प्रादुर्भावादित्यर्थलाभमभिप्रेत्य उदाहरति—**विनष्टाद्धीति** । **अविशेषादिति** । एकस्य मृत्पिण्डस्य कालक्रमेण जननीया यावन्तो घटाः, ते सर्वे युगपदेव भवेयुः । एवं कारणान्तरेष्वपि द्रष्टव्यम् । एतादृशतर्कोपस्कृतात् 'यत् सत्, तत् क्षणिक'मिति अनुमानात् पदार्थानां क्षणिकत्वसिद्धौ अभावस्यैवोपादानता न्याय्येति भावः । **कारणविशेषाभ्युपगम इति** । अनभ्युपगम्यमाने तु घटार्थिनां मृत्पिण्डादिषु प्रवृत्तिर्व्याहन्येतेति भावः । न च स्थिरत्वपक्षे युगपदेव सर्वकार्योत्पत्तिरित्यापादनं सम्भवति । कार्यविशेषस्य सहकारिविशेषायत्तत्वेन तेषां क्रमिकत्वात् कार्यक्रमोपपत्तेः । यत् सत्, तत्

क्षणिकमित्यनुमानं तु 'स एवायं मृत्पिण्ड' इत्यादिप्रत्यभिज्ञाबाधितमिति द्रष्टव्यम् । **स्वेन स्वेन रूपेणेति** । घटो हि मृद्रूपेण पारमार्थिकस्वरूपेण, पटश्च तन्तुस्वरूपेणान्वित उपलभ्यत इत्यर्थः । अन्यान्वितस्यान्योपादानकत्वे अतिप्रसङ्गमभिप्रेत्याह—**न चेति** । एतेन सौत्रान्तिकपक्षोऽपि निराकृतः । ते हीत्थं कल्पयन्ति—'अयं घट' इति चाक्षुपज्ञाने न वर्तमानो घटो विषयः । तस्य पूर्वक्षणे अभावेन ज्ञानजनकसन्निकर्षानाश्रयत्वात् । नापि सन्निकर्षाश्रयः पूर्वक्षणो विषयः । वर्तमानोल्लेखिज्ञानस्य पूर्वघटक्षणाविषयत्वात्, अपि तु सन्निकर्षाश्रयः स्वहेतुः पूर्वक्षणः स्वप्रतिबिम्बं ज्ञानाकारमर्पयति । स एवायं घट इति ज्ञानविषयः बाह्यस्तु प्रतिबिम्बस्य बिम्बपूर्वकत्वनियमात् अनुमेय इति । तन्निराकरणं तु यथा असतो नोपादानत्वम्, एवमसतः पूर्वक्षणस्य न प्रतिबिम्बार्पकता । लोके प्रतिबिम्बसमानकालानामेव मुखादीनां बिम्बत्वदर्शनादिति ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

स्पष्टमस्य भाष्यम् ॥ २७ ॥

इति समुदायाधिकरणम् ॥ ४ ॥

## नाभाव उपलब्धेः ॥ २८ ॥

सिद्धान्त्युद्भावितक्षणिकबाह्यार्थनिराकरणयुक्तीरुपजीव्य प्रवृत्तत्वादेतदधिकरणपूर्वपक्षस्य पूर्वेण सङ्गतिरिति दर्शयति—**एवं बाह्यार्थेत्यादिना** । **विज्ञानैकस्कन्ध इति** । क्षणिकं साकारं विज्ञानमेव परमार्थः, तदतिरिक्तं तुच्छम् । स्कन्धपदं पदार्थपरम् । ननु, ज्ञानातिरिक्तपदार्थानङ्गीकारे प्रमातृप्रमाप्रमाणप्रमेयरूपानेकपदार्थालम्बनो लोकव्यवहारः कथं सिध्येदित्याशङ्क्याह—**तस्मिंश्च विज्ञानवाद इति** । ज्ञानाकारो घटपटादिः प्रमेयम्, तदेव ज्ञानं प्रमा । पूर्वज्ञानं तज्जनकतया प्रमाणम् । आन्तरस्यैव ज्ञानाकारस्य घटादेर्बाह्यत्वं तु कल्पितम् । एवं तस्यैव ज्ञानभेदोऽपि कल्पितः । एवं तस्यैव ज्ञानस्य भेदेनाश्रयाश्रयिभावकल्पनात् प्रमातृता । तथा चैकस्यैव चन्द्रस्य द्वित्वादिवत् प्रमातृप्रमेयभावेन भेदव्यवहारोपपत्तौ न तस्य तात्त्विकत्वमास्थेयमिति तदभिमानः । ननु, घटपटादिरूपं प्रमेयं बाह्यमवगम्यते । कथं तदान्तरमित्युच्यते, अत आह—**सत्यपीति** । बाह्यार्थसत्त्ववादेऽपि विषयासम्बद्धस्य ज्ञानस्य विषयव्यवहाराजनकतया सम्बन्धे वक्तव्ये संयोगसमवाययोरनभ्युपगमादभेद एव बलादङ्गीकर्तव्यः । तथा चान्तरज्ञानाभिन्नस्य त-

स्यान्तरत्वमायाति । यथा चान्तराणामपि स्वाप्निकपदार्थानां बाह्यत्वं प्रतीयते दोषवशात्, एवं जाग्रत्पदार्थानामपि भविष्यति । ननु, यथात्मधर्मस्य ज्ञानस्य विषयेण समवायो नोपपद्यते, यथा च गुणत्वादेव संयोगो नोपपद्यते, एवं बाह्यान्तरत्वरूपविरुद्धधर्मसमवायादभेदोऽपि नोपपद्यते । तथा च अबाधितप्रतीतिसिद्धस्य बाह्यस्य सत्तामुपेत्य ज्ञानेन तस्य विषयविषयिभाव एव सम्बन्ध उपेय इत्यभिप्रेत्य शङ्कते—**कथं पुनरवगम्यत इति** । युक्तिबाधितस्य विषयस्य अबाधितत्वं तावद्वक्तुं न शक्यत इत्याह—**तदसम्भवादित्याहेति** । **स्तम्भादिप्रत्ययेति** । स्तम्भाद्याकारस्य प्रत्ययस्य स्तम्भादिरूपः स्थूल एवार्थः परिच्छेद्यः, न त्वतिसूक्ष्मः परमाणुः । स तु परमाण्वाकारज्ञानपरिच्छेद्य एव । न चायं परमाणुरित्येवं लौकिकानां ज्ञानमस्तीति भावः । **एवं जात्यादीन्यपीति** । जातिः किं कार्त्स्न्येन व्यक्तिषु वर्तते, उतैकदेशेन । नाद्यः । घटान्तरे जात्यनुपलम्भप्रसङ्गात् । न द्वितीयः । जातेर्निरवयवत्वात् । आदिपदेन स्तम्भादिः न परमाणुसमूहः, अपि तु तदारब्धोऽवयवीत्येवंविधाः कल्पनाः समवायादयश्च विवक्षिताः । तेषां निराकरणं तार्किकाधिकरणे सिद्धान्तिनैव दर्शितम् । यच्चोक्तं ज्ञानविषययोस्स्वरूपमेव सम्बन्धो भविष्यतीति, तत्राह—**अपि चेति** । विषयविषयिभाव एव नियामकं विना नोपपद्यते । तथा चास्य ज्ञानस्यायमेव विषय इति नियमाय ज्ञानाकारता अर्थस्योपेयेति भावः । ज्ञानगतं विषयसारूप्यरूपं विशेषमन्तरेणेत्यन्वयः । ननु, तर्हि ज्ञानाकारोऽपि विषयोऽस्तु, बाह्यश्च तथैवाङ्गीकृतः सौत्रान्तिकवैभाषिकाभ्यामित्यत आह—**अङ्गीकृते चेति** । **अर्थसद्भावेति** । बाह्यार्थसद्भावेत्यर्थः । **अपि च सहोपलम्भेति** । ननु, साहित्यस्य भेदापेक्षत्वात् ज्ञानेन सहोपलभ्यमानो विषयो ज्ञानभिन्न एवेति चेत्, न । एकोपलम्भनियमादित्यस्य विवक्षितत्वात् । एकोपलम्भविषयत्वादित्युक्ते समूहालम्बनरूपैकोपलम्भविषयत्वमस्ति घटपटयोः, न च तयोरभेद इति व्यभिचारवारणाय नियमपदम् । तथा च यत्रैकोपलम्भनियमः, तत्राभेदः । यथा द्वयोश्चन्द्रयोः कल्पितभेदयोरिति व्याप्तिसिद्धिः । यो यः प्रत्ययः, स बाह्यविषयरहितः । यथा स्वप्नादिप्रत्यय इति व्याप्त्यन्तरमाह—**स्वप्नादिवच्चेति** । ननु, बाह्यार्थानुपगमे एकस्मिन्नेव देवदत्तसन्ताने कदाचित् नीलाकारं, कदाचित् पीताकारमिति प्रत्ययवैचित्र्यं कथमुपपद्यते । बाह्यार्थाभ्युपगमे हि ज्ञानकारणीभूतविषयवैचित्र्यात् प्रत्यक्षज्ञानवैचित्र्यमुपपद्यते । अनुमितौ तु परामर्शवैचित्र्यात् शाब्दे त्वाकाङ्क्षावैचित्र्यात् । सर्वथापि साक्षात् परम्परया वा ज्ञानवैचित्र्यं बाह्यार्थवैचित्र्यकृतमेवेत्यभिप्रेत्य शङ्कते—**कथं पुनरिति** । **वासनावैचित्र्यादित्याहेति** । अयं भावः— पूर्वज्ञानं वासना, उत्तरज्ञानं वा-

स्यम् । तत्र पूर्वज्ञानं यदाकारं भवति, तदाकारमेव उत्तरज्ञानमिति नोपेयते । तथासति प्रत्ययवैचित्र्यानुपपत्तेः, किं तु नीलाकारादपि पूर्वज्ञानात् पीताकारज्ञानमित्यनियम एव । परं तु पीताकारमुत्तरज्ञानमुपलभ्य पूर्वज्ञानस्य तथाविधसामर्थ्यमुन्नीयते । न च तावता सर्वं नीलाकारं पीताकारज्ञानजनकं स्यादित्यापादयितुं शक्यम् । व्यक्तिभेदेन सामर्थ्यवैचित्र्यस्य फलबलेन कल्पनात् सर्वत्रापि कार्यकारणभावस्य फलबलकल्प्यत्वादिति । न च प्रवाहरूपेण सन्तन्यमानानां तत्तदव्यवहितपूर्वज्ञानानां वासनारूपाणां नीलपीताद्याकाराणां विचित्रतया नीलाकारादौ ज्ञाने अनुगतरूपं किञ्चित्कारणं न सम्पन्नमेवेति वाच्यम् । तत्सन्तानान्तर्गतं यदा कदाचित् पूर्वोत्पन्नं नीलाकारज्ञानम् उत्तरनीलाकारज्ञाने हेतुरित्यभ्युपगम्यते, तदेव च वासनापरिपाकहेतुरुच्यते । तथा च वासनायां एवं समानाकारत्वानियमः । परिपाकहेतोस्तु समानाकारत्वं नियतमेव । न च परिपाकहेतोर्यदाकदाचित् पूर्वोत्पन्नस्याव्यवधानेन पूर्ववर्तित्वासम्भवात् कथं कारणतेति वाच्यम् । मध्यवर्तिनां ज्ञानानां तज्जन्यसन्तनान्तर्गततया व्यापारतोपपत्तेः व्यवधायकत्वासम्भवात् । ज्ञानवैचित्र्यं वासनावैचित्र्यादर्थवैचित्र्याद्वेति सन्देहे वासनावैचित्र्यादेवेति भवतोच्यते । तत्र किं विनिगमकमित्याशङ्कायामुभयसम्मत्या क्वचित् क्लृप्तत्वमित्याह—**अपि चान्वयेति । तेऽपि हि सर्वलोकप्रसिद्धामिति** । प्रमातृप्रमाणप्रमेयफलानां भेदेनावभासमुपेत्यैव तदवभासस्य भ्रमत्वं हि त्वत्करणेन विवक्षितम् । असति प्रत्यये कस्य भ्रमत्वं प्रसाध्येत । अतो बाह्याभ्यन्तरप्रत्ययस्सर्वसम्प्रतिपन्नः । तस्य भ्रमत्वं परं बलवद्बाधकादवसेयम् । नच तदस्ति । अतः प्रमाणभूतात् प्रत्ययात् यद्यथावगम्यते, तत् तथैवेति अवधर्तव्यमिति न बाह्यस्यार्थस्य तुच्छतोपेयेति भावः । नन्वभिहितं—बाह्यार्थप्रत्यये किं बाह्योऽर्थः परमाणुः, उत तत्समूह इत्यादिविकल्पासहत्वं बाधकमिति शङ्कते—**नन्विति** । एतादृशबाधकोपन्यासो ज्ञानाकारत्वपक्षेऽपि वक्तुं शक्यत एव । ज्ञानाकारोऽप्यर्थः किं परमाणुरूपः, उत तत्समूह इति विकल्पासहत्वात् । तथा च यत्किञ्चित् कुतर्कमात्रेण सर्वस्याप्यपलपितुं शक्यतया ज्ञानाकारतापि न सिध्येत् । अतस्तत्तद्वादिकल्पितपरिभाषाणां तर्कपराहततया इदमित्थमिति निर्वचनासामर्थ्येऽपि शुक्तिरजतमिथ्यात्वापादकनेदं रजतमितिप्रत्ययवत् बाह्यार्थासत्त्वापादकबलवद्बाधकप्रत्ययाभावे कथं तस्य लोकप्रसिद्धस्यासत्त्वमुपेत्य ज्ञानाकारता अप्रसिद्धा कल्पयितुं शक्येति परिहरति—**नायं साधुरध्यवसाय इति । कथं व्यतिरेकाव्यतिरेकेति** । समूहपक्षेऽपि स समूहः परमाणुव्यतिरिक्तः, उताव्यतिरिक्त इति विकल्पैरित्यर्थः । ननु, विषयविष-

यिभावव्यवस्थासिद्ध्ये ज्ञानाकारता विषयस्योपेया । न च घटद्वयमुपलभ्यते । विषयविशिष्टोपलम्भश्च स्वाकारमादायोपपन्नः । अतो न बाह्यार्थकल्पने प्रमाणं किञ्चिदस्तीति पूर्वपक्ष्युक्तमनूद्य दूषयति—**न चेति** । विनाशोऽसत्त्वम् । **असति विषय इति** । न च वासनावैचित्र्यादेव तत्तद्विषयाकारतोपपन्नेत्युक्तमिति वाच्यम् । स्वप्रवृत्तिव्याघातात् । नीलाकारज्ञानस्यानुकूलतामवगम्य बाह्यनीलपदार्थस्य सम्पादने हि पुरुषः प्रवर्तते, तत् नीलाकारतायां बाह्यार्थानुपयोगे व्याहन्यत इति भावः । ज्ञानस्य साकारत्वमुपेत्येदमुदितं, तदेव नास्तीत्याह—**बहिरुपलब्धेश्चेति** । तथा च घटादिविषयितैव ज्ञानस्य घटाकारता, न तु घटाद्यभेद इति भावः । न च विषयविषयिभाव एव किं नियामकमिति शङ्कनीयम् । प्रत्यक्षे ज्ञानजनकेन्द्रियसन्निकृष्टत्वं, अनुमितौ परामर्शविषयलिङ्गव्यापकत्वं, शाब्दे शक्तिलक्षणान्यतरसम्बन्धेन प्रत्यासन्नत्वमित्येवंरूपेण व्यवहाराविसंवादिनो नियामकस्य सम्भवात् ! **उपायोपेयभावहेतुक इति** । विषयविषयिभावहेतुक इत्यर्थः । **अपि चेति** । समूहालम्बनस्थले विषया बहवः । ज्ञानमेकम् । तथा च बहुभिरेकस्याभेदो नोपपद्यत इत्युक्तं भवति । **तथा घटदर्शनमिति** । दर्शनत्वस्मरणत्वरूपविरुद्धधर्माक्रान्ततया ज्ञानयोर्भेदः । घटश्च विषय एक इति नाभेदो विषयज्ञानयोः । **अपि च द्वयोर्विज्ञानयोरिति** । विज्ञानवादिनो हि न स्थिरोऽनेकज्ञानावगाह्येक आत्मास्ति । क्षणिकानां च विज्ञानानां न परस्परविषयत्वम् । तथा चानेकज्ञानग्रहणजन्यज्ञानप्रमाणकानां विषयाणामसिद्धिः । तानेव विषयानाह— ततश्च विज्ञानभेदः ज्ञानं धर्मिप्रतियोगिभूतानेकविज्ञानग्रहणसाध्यम् । विज्ञानभेदग्रहाधीना च तत्प्रतिज्ञा । सर्वेषां ज्ञानानां क्षणिकत्वं सर्वाणि ज्ञानान्यगृहीत्वा न ज्ञातुं शक्यम् । आदिपदेन सर्वेषां ज्ञानानां साकारत्वं गृह्यते । स्वलक्षणमसाधारणो धर्मः । यथा नीलज्ञानस्य नीलाकारत्वमसाधारणत्वं च तस्य ज्ञानान्तराद्व्यावृत्तत्वे सति तज्ज्ञानवृत्तित्वं, तदपि नानेकज्ञानग्रहणं विना ज्ञातुं शक्यम् । सामान्यलक्षणं सर्वज्ञानानुगतो ज्ञानत्वधर्मः, तज्ज्ञानमप्यनेकज्ञानग्रहणसाध्यम् । पूर्वज्ञानं, वासना, उत्तरं वास्यम् , अविद्यारूप उपप्लवः अविद्योपप्लवः सविकल्पकज्ञानं , सद्धर्मो ज्ञानत्वम् , असद्धर्मो नरविषाणत्वादि, साकारज्ञानसन्ततिः बन्धः, निराकारज्ञानसन्ततिर्मोक्षः ।एतेषां च प्रतिज्ञाः परं प्रति कर्तव्याः । ताश्च पक्षसाध्यहेत्वादिज्ञानवता पुरुषेण कर्तुं शक्याः । न च तव मते तादृशः स्थिरः पुरुषोऽस्तीत्यसङ्गता एताः प्रतिज्ञाः । **स्वयमेवानुभूयत इति** । स्वस्य स्वयमेव विषयो भवतीत्यर्थः । **अत्यन्तविरुद्धां स्वात्मनि क्रियामिति** । विषयविषयिभावो हि लोके भेदघटित

एव दृष्टः । अतः स्वं प्रत्येव स्वस्य विषयत्वं विरुद्धम् । न च सर्वं ज्ञानं प्रमेयमितिज्ञाने स्वस्यापि विषयत्वमस्तीति वाच्यम् । तत्रापि तज्ज्ञानव्यक्तित्वाकारेण विषयित्वं, प्रमेयत्वादिना विषयत्वमित्यस्ति रूपभेदोऽवच्छेदकः । इह तु सैव व्यक्तिर्विषयीणी, विषयश्चेति विरोधः । एतेन बाह्यार्थाभ्युपगमेऽपि ज्ञानस्य स्वविषयत्वलक्षणं स्वप्रकाशत्वं निरस्तमित्याह—**न चार्थव्यतिरिक्तमिति** । ननु, विज्ञानस्य स्वविषयत्वं नाभ्युपगम्यते चेत्, ज्ञानान्तरवेद्यत्वमुपेयम् । तथासत्यनवस्था भवेत् । न चेयमनवस्था तदा दोषाय भवेत्, यद्यनवरतं विज्ञानधारैव प्रसक्ता भवेत्, न तु तदस्ति । यदा ज्ञानविषयकं ज्ञानमुत्पन्नं, तदा तत् प्रकाशते । अन्यदा त्वप्रकाशमानमेव तन्नश्यतीत्युपगमोपपत्तेरिति वाच्यम् । आन्तराणां हि ज्ञानसुखादीनां ज्ञानसुखत्वाकारेण निर्णीततैव सदा वक्तव्या । कदाचित् ज्ञातताभ्युपगमे हि घटादिवत् ज्ञानत्वादिना कदाचित् संशयोऽपि स्यात् । सुखस्याज्ञातस्यैव नाशसम्भावनया भोगापर्यवसानात् सुखसाधने निश्शङ्कं प्रवृत्तिश्च न स्यात् । तथा चोत्पन्नस्य ज्ञानादेरवश्यज्ञेयतया अनवस्थापरिहाराय ज्ञानसुखादीनां स्वप्रकाशत्वमास्थेयम् । एवंसत्येवैतावन्तं कालं ध्यायन्नेवासमिति अनुसन्धानं च सङ्गच्छत इत्यभिप्रेत्य शङ्कते—**ननु विज्ञानस्येति** । परिहरति—**तदुभयमिति** । भवेदेष दोषः । येषामनुव्यवसायगम्यं विज्ञानं, न तु स्वप्रकाशनित्यसाक्षिचैतन्याभ्युपगन्तॄणाम् । उत्पन्नानां ज्ञानादीनामनावृतसाक्षितादात्म्येनैवोत्पन्नतया सन्ततावभासोपपत्तेः । ननु, यदि साक्षिरूपं ज्ञानं नित्यसिद्धमुपेयते, तर्हि तेनैवान्तराणां सुखादीनामिव बाह्यानां घटादीनामपि अवभाससम्भवेनान्तःकरणवृत्तिरूपं जन्यज्ञानं किमर्थमुपेयत इति चेत्, उच्यते—सत्यपि साक्षिरूपज्ञाने बाह्यपदार्थव्यवहारस्यादर्शनेन तस्याप्यपेक्षितत्वात् । अथापि 'येन रूपं रसं गन्धं शब्दांस्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते ॥ तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति श्रुतिपर्यालोचनया नित्यचैतन्यावभास्ये विषये वृत्तेः क उपयोग इति वक्तव्यं, स उच्यते—यद्यपि नित्यचैतन्यावभास्यं विषयजातं तत्राध्यस्तं, तथापि जीवेश्वररूपेण तस्य विभागः कल्पितः । तत्र जीवत्वावच्छेदेनैवावरणं, नेश्वरस्वरूपेणेति ईश्वरः स्वरूपज्ञानेनैव नित्यसिद्धेन सर्वान्विषयानवगाहते । जीवस्य तु यत्रान्तःकरणं संसृज्यते, स एव विषयः तस्यानावृतो भवति । तथा च घटादिष्वन्तःकरणसंसर्गार्थं चक्षुरादिद्वारा निर्गतस्यान्तःकरणस्य दीर्घीभावोऽपेक्ष्यते । चक्षुरादिद्वारको योऽन्तःकरणस्य दीर्घतारूपो विकारः, सैव वृत्तिरित्युच्यते । तथा च चाक्षुषादिवृत्त्युद्भवात् प्रागप्यज्ञानोपहितस्य विज्ञानस्य घटादिविषयसम्बन्धे सत्यपि न घटावभासकता । स्वं प्रति घटस्यावृतत्वात् । वृत्त्या त्वावरणनाशे भवति घ-

टावभासकता । घटादिभिश्च वृत्तेः सम्बन्धः संयोगः, संयुक्ततादात्म्यमित्येवंरूपो यथासम्भवमूहनीयः । न हि तार्किकमते ज्ञानस्य गुणत्वमिव सिद्धान्ते ज्ञानस्य वृत्तिरूपस्य गुणत्वमुपेयते, येन संयोगो न भवेत्, अपि तु कुल्यातो निर्गतं दीर्घतापन्नं जलं यथा जलद्रव्यमेव भवति, एवं चक्षुरादिरश्मिद्वारेण निर्गतमन्तःकरणमेव द्रव्यं ज्ञानं, तस्य यथा संयोगाद्युपपत्तिः, एवम् आवरणं चाज्ञानकार्यं घटादिविषयं प्रमातृनिष्ठज्ञानोत्पत्तौ नश्यति । ज्ञाननाशे पुनरुत्पद्यते । परोक्षस्थले तु वृत्तिज्ञानस्य विषयेण संसर्गाभावात् नावरणनिवृत्तिः । अत एव रसादिमाधुर्ये शब्दतोऽवगतेऽपि न तत्र प्राकट्यं, जिह्वयास्वादने तु प्राकट्यमिति । तथा च बाह्येष्वर्थेषु आवरणतिरस्काराय वृत्तिनिर्गमोऽपेक्षितः । आन्तरेषु तु सुखादिष्वन्तःकरणविकारेष्वन्तःकरणोपहितसाक्षिसंसर्गस्य स्वतःप्रसिद्धतया न तदवभासाय वृत्तिरपेक्षिता । अतः आभ्यन्तराणामर्थानां साक्षिणैव केवलेनावभासः । तदाह—**विज्ञानग्रहणेति** । घटादिगोचरे विज्ञानरूपे ग्रहणे उत्पन्ने सति बाह्यविज्ञानस्य यः साक्षी वर्तते, तदाश्रितं बाह्यविज्ञानगोचरं यत् ग्रहणं, तन्नापेक्षितम् । सुखादिवत् वृत्तिरूपस्य ग्रहणस्यापि साक्षिणैव भानोपपत्तेरित्यर्थः । **स्वभाववैषम्यादिति** । धर्मिग्राहकमानेन आन्तरज्ञानादितदभावावभासकतयैव साक्षिसिद्धेः तस्योपलब्धृत्वमवभासकत्वम् । तद्विषयव्यवहारादिजनकत्वं स्वाभाविकमिति भावः । ननु, यदि जन्यं ज्ञानमुपेयते, तर्हि तदेव स्वप्रकाशमस्तु, किमतिरिक्तस्साक्षी कल्प्यत इत्यत आह—**स्वयं सिद्धस्येति** । प्रत्यभिज्ञादिप्रामाण्यात् नित्य आत्मावश्यमुपेयः । ततश्च तस्यैवैकस्य ज्ञानादिव्यवहारप्रयोजकता आस्थेया, न तु प्रत्येकं ज्ञानादीनां स्वप्रकाशत्वमास्थेयं, गौरवात् । स च घटपटादिगोचरज्ञानाद्यभावदशायामपि अवभासमानतया स्वप्रकाश इत्यप्युपेयम् । विस्तरेण चैतत् 'अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे'रिति भाष्यव्याख्यानावसर एव प्रपञ्चितम् । अपि च लोके जन्यं ज्ञानं स्वार्थतया पुरुषेण सम्पाद्यमानमुपलभ्यते । तदुद्देशेनेन्द्रियादिप्रेरणदर्शनात् । अतो यथा बाह्यो दीपादिः पुरुषशेषभूतः, एवं ज्ञानादिकमपि पुरुषशेषभूतमेव । तच्च विज्ञानवादिमते नोपपद्यत इत्याह—**किं चान्यदिति** ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥२९॥

**नचैवं जागरितोपलब्धमिति** । यद्यपि 'अथात आदेशो नेति नेती'त्यागमेन विद्वदनुभवेन च जाग्रदवस्थमपि बाध्यत एव, तथापि यथा स्वप्नस्य निस्स्वरूपतापत्तिरूपो बाधो विद्यमान एव प्रमातरि भवति, नैवं जाग्रत्प्रपञ्चस्य निस्स्वरूप-

तापत्तिरूपो बाधो विद्यमान एव प्रमातरि भवति, अपि तु प्रमात्रा सहैव भवतीति विशेषः । **अपि च स्मृतिरेषेति** । यद्यपि सिद्धान्ते शुक्तिरजतादितुल्यतात्कालिकस्वाप्नपदार्थगोचरं ज्ञानं साक्षिरूपमनुभवः, न तु तत्कालासतः स्वाप्नस्य पदार्थस्य ज्ञानं स्मृतिः, तथापि यथा प्रत्यक्षादिप्रमाणाजन्यत्वे सति संस्कारजन्यत्वं स्मृतेर्वर्तते, एवं स्वाप्नज्ञानस्यापीति स्मृतिपदं तत्रैव गौणं द्रष्टव्यम् । उपलब्धिपदं तु षट्प्रमाणजनितज्ञानपरम् । स्वप्नेऽर्थविसंवादस्तु व्यावहारिकार्थाभावात् द्रष्टव्यः । **अपि चानुभवविरोधप्रसङ्गादिति** । तथा च स्वप्नदृष्टान्तेन जाग्रत्प्रत्ययस्य निरालम्बनत्वसाधनं प्रत्यक्षादिप्रतीतिबाधितमिति भावः ॥२९॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

अनादित्वेऽप्यन्धपरम्परेति । यत्र हि द्वयोर्व्यक्त्योः कार्यकारणभावो गृहीतः, यथा बीजाङ्कुरयोः, तत्रान्योन्याश्रयपरिहाराय प्रवाहानादिताकल्पनं प्रमाणमूलम् । इह तु वास्यवासकयोः पूर्वोत्तरज्ञानयोः न लोकसिद्धः कार्यकारणभाव इति प्रवाहानादितया पूर्वपूर्वज्ञानवैचित्र्याधीनमुत्तरोत्तरज्ञानवैचित्र्यम् । यथा एकेन नीलं पय इत्युपदिष्टे कथं त्वया पयोनैल्यमवगतमिति पृष्टे ममान्धान्तरेणोपदिष्टं, तं प्रति पृष्टे तेनाप्यन्धान्तरेणैवोपदिष्टमित्यन्धपरम्परायामुपदिश्यमानायां नैल्यं नावस्थितं भवति पयसः, एवं भवेदित्यर्थः । यत् स्वप्नज्ञानवैचित्र्यं वासनानिमित्तमेवेति प्रतिपादितं, तदनूद्य दूषयति—**यावपीत्यादिना** । **विनार्थोपलब्ध्येति** । जाग्रत्प्रत्ययनिमित्ता हि स्वप्नवासना । जाग्रत्प्रत्ययाश्च बाह्यार्थवैचित्र्यादेव विचित्रा इति वासनावैचित्र्येऽपि बाह्यार्थ एव प्रयोजक इति भावः । **अपि च विनापि वासनाभिरिति** । अपूर्वार्थोपलम्भे हि न परिपाकहेतुसहिता वासना सम्भवतीति भावः । **अपि च वासना नाम संस्कारविशेषा इति** । स्वमतमर्यादयेदं द्रष्टव्यम् । परमते पूर्वविज्ञानस्यैव वासनात्वोपगमात् अहं जानामीति प्रतीतिबलेन ज्ञानस्यैवाश्रयता व्युत्पादनीया ॥३०॥

## क्षणिकत्वाच्च ॥३१॥

आलयविज्ञानमिति । अहमित्येवमाकारं ज्ञानमालयविज्ञानम् । **प्रवृत्तिविज्ञानवदिति** । नीलपीताद्याकारं ज्ञानं प्रवृत्तिजनकत्वात् प्रवृत्तिविज्ञानम् । **शून्यवादिपक्षस्त्विति** । ते हीत्थं वर्णयन्ति—बाह्यार्थः परमाणुर्वा, तत्समूहो वे-

त्येवमादिभिः विज्ञानवाद्युद्भावितैरेव दूषणैर्न सम्भवति । एवं विज्ञानवाद्यभिमतं क्षणिकविज्ञानमपि न सम्भवति । तेनापि ये बाह्याः पदार्थाः परेषामभिमताः, ते आन्तरा इत्युच्यन्ते, तथात्रापि ते आन्तराः किं परमाणुरूपाः, उत तत्समूहरूपा इत्यादिविकल्पासहत्वं स्थितमेव । आन्तरं बाह्यं वा सर्वं वस्तु युक्त्यसहत्वात् न सत् । नाप्यसत् । अपरोक्षतया प्रतीतेः । नापि सदसत्, विरोधात् । नापि सदसद्विलक्षणं, सद्विलक्षणत्वे असत्त्वावश्यम्भावात्, असद्विलक्षणत्वे सत्त्वावश्यम्भावात् । उभयविलक्षणं नैकं वस्तु सम्भवति । अतश्चतुष्कोटिविनिर्मुक्तमेव बाह्यमाभ्यन्तरं न परमार्थः । परमार्थतत्त्वं तु सर्वशून्यतैव । सैव सुगतस्य मुख्यसिद्धान्तः । अन्ये तु त्रयोऽपि वादाः मन्दबुद्धिसमाधानाय निरूपिता इति । अयं च वादः सद्रूपं परिशिष्यमाणं ब्रह्मैव तत्त्वमिति वैदिकमर्यादाविरुद्धो भवति । **सर्वप्रमाणविप्रतिषिद्ध इति** । शून्यपदेन सर्वप्रपञ्चातीतं भावरूपं किञ्चित् तत्त्वं विवक्षितम्, उताभावरूपम् । नाद्यः । तथासति वाचोयुक्त्यन्तरेण ब्रह्मवाद एवाश्रितः । यदि द्वितीयः पक्षः, तदा सर्वप्रमाणविरोधः । सर्वप्रमाणैः प्रपञ्च उपलभ्यमाने तदभाव एव तत्त्वमिति निरूपयितुमशक्यमिति दूषणस्य स्फुटतया तन्निराकरणाय न सूत्रकृता सूत्राण्यारचितानि । ननु, प्रत्यक्षादिप्रतीतिर्भ्रमरूपा भविष्यति । युक्तिबाधितत्वादिति चेत्, न । प्रत्यक्षादिप्रमाणविरोधे युक्तीनामेवाभासत्वोपपत्तेः । अपि च यत् युक्तिबाधितं, तदनृतमिति क्व दृष्टम् । शुक्तिरजतादौ दृष्टमिति चेत, तर्हि यदनृतं शुक्तिरजतादिकं दृष्टं, तत् साधिष्ठानमेव दृष्टं, यश्चाभावो दृष्टः, स सञ्ज्ञां प्रतियोग्यधिकरणाभ्यां निरूप्यमाण एव दृष्ट इति प्रपञ्चस्यानृतत्वे तदधिष्ठानं परमार्थभूतं किञ्चिदुपेयम् । तदिदमाह—**न ह्ययं सर्वप्रमाणसिद्ध इत्यादि** । अन्यत्तत्त्वं परमार्थभूताधिष्ठानम् । न चाभाव एवाधिष्ठानम् । तस्यापि धर्मिप्रतियोगिसापेक्षत्वेन तन्मात्रपरिशेषानुपपत्तेः । अपि चापवादबलेन प्रतीतेर्भ्रमत्वं वक्तव्यम् । अपवादश्च इदमिह नेति इदमिदं नेति वा अधिष्ठानपरिशेषेणैव । न च शून्यवादिनस्तत् सम्भवति । अभावाधिकरणानुपगमात् । अत उत्सर्गप्राप्तं प्रत्यक्षादिप्रतीतिप्रामाण्यं कथमपबाधितुं शक्यम् । तदाह—**अपवादाभाव इति** । तथा च प्रत्यक्षादिप्रमाणोपजीविनीनामेव युक्तीनामर्थसाधकत्वात्तद्विरोधिनीनामाभासत्वात् प्रबलस्य च प्रत्यक्षादिप्रमाणबाधकस्य शून्यवादानुसारिणोऽसम्भवान्न शून्यमेव तत्त्वमिति । यदि तु अयमपि सूत्रकृतैव निराकर्तव्यः, तर्हि तन्निराकरणपरतया 'सर्वथानुपपत्तेश्चे'ति सूत्रमावृत्त्या योजनीयम् ॥ ३१ ॥

## सर्वथानुपपत्तेश्च ॥३२॥

कृत्स्नसौगतपक्षनिराकरणपरतया सूत्रं योजयति—**किं बहुनेति** । ननु, सर्वज्ञस्य सुगतस्य नासम्बद्धप्रलापित्वं सम्भवति । तत्राह—**प्रद्वेषो वेति** ॥३२॥

इति उपलब्ध्यधिकरणम् ॥९॥

## नैकस्मिन्नसम्भवात् ॥३३॥

सङ्गतिं दर्शयन् वृत्तानुवादपूर्वकमुत्तराधिकरणमवतारयति—**निरस्त इति**। सुगता विमुक्तकच्छाः । तेषु निरस्तेषु मुक्तवसना बुद्धिसन्निहिता भवन्तीति प्रासङ्गिकी सङ्गतिरनेन सूचिता भवति । प्रतीतिसिद्धत्वात् यथा बाह्यार्थ उपेयते, तथा प्रतीतिसिद्धत्वादेव सदसदादिभङ्गैरनेकात्मकमपि वस्तु उपेयमिति दृष्टान्तसङ्गतिरपि द्रष्टव्या । **धर्मास्तिकाय इति** । अस्तिकायपदं पदार्थपरनामेति तदीयपरिभाषा । **सर्वेषामप्येषामवान्तरप्रभेदानिति** । जीवस्त्रिविधः—नित्यसिद्धः यथा आर्हतः तन्मतप्रवर्तकः । योगसिद्धः योगात्प्राक् बद्धश्च । यथान्ये जीवाः । अजीवो जीवभिन्नः । आस्रवादिबद्धर्मादिश्चाजीवस्यैव प्रपञ्चः । आस्रवसंवरनिर्जराः साधनभूताः; बन्धमोक्षौ साध्यभूतौ । आस्रव इन्द्रियाणां विषयेषु सञ्चारः, साध्वसाधुकर्मकृतः शरीरसम्बन्धो वा । संवरो बाह्याभ्यन्तरेन्द्रियनिग्रहः । निर्जरः तप्तशिलारोहणं केशोछुञ्छनमित्येवमादिः । आस्रवो बन्धहेतुः । बन्धः कर्माष्टकसम्बन्धः । साधुकर्माणि चत्वारि । असाधुकर्माणि चत्वारि । ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयं, आन्तरायिकं चेति । ज्ञानं मोक्षसाधनं नेति भावना ज्ञानावरणीयम्, आर्हततन्त्राभ्यासो मुमुक्षूणामनुपयुक्त इति भावना दर्शनावरणीयं, बहुषु तन्त्रेषु किं मोक्षसाधनमित्यनिर्धारणं मोहनीयं, मोक्षोपायविघातकमान्तरायिकम् । एतान्यसाधूनि । एतान्येव घातिकर्माणीत्युच्यन्ते । अथाघातिकर्मत्वेन परिभाषितानि साधुकर्माणि चतुर्विधानि—आयुष्कं, गोत्रिकं, नामिकं, वेदनीयं चेति । स्त्रीपुंसयोस्सम्बन्धे मिलितं शुक्लशोणितमायुष्कं, तस्य कललबुद्बुदाद्यवस्थात्मना परिणामशक्तिर्गोत्रिकम् । तथाशक्तिमतस्तस्य तदवस्थाप्राप्तिर्नामिकं, कललबुद्बुदाद्यात्मना परिणतस्य जाठराग्निसम्पर्केण पुण्यशरीरपरिणतियोग्या काठिन्यावस्था वेदनीयम् । चत्वार्यप्येतानि पुण्यवच्छरीरसम्बन्धितया साधुकर्माणीत्युच्यन्ते । अन्ये तु ज्ञानदर्शनसुखवीर्यगुणानां मोक्षे आविर्भविष्यतां जीवगतानां बन्धदशायां तिरोभावापादकानि चत्वारि घातिकर्माणीत्युच्यन्ते । शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखादिनिमित्तानि चत्वार्यघातीनी-

त्युच्यन्ते। यदा तु साध्वसाधुकर्मकृतशरीरसम्बन्ध एव आस्रवः, तदा तत्कृता शरीरसम्बन्धपरम्परैव बन्धः । आविर्भूतज्ञानादिगुणकस्य जीवस्य स्वरूपेणावस्थानं मोक्ष इति केचित् । अन्ये तु जीवस्योर्ध्वगमनं निरन्तरं मोक्षः । तत्राप्यवान्तरभेदः—केचित् किल स्वाभाविकं जीवस्योर्ध्वगमनं शरीरसम्बन्धात् प्रतिबद्धं, तद्वियोगे आविर्भवतीति वदन्ति । अन्ये तु चिरकालं शरीरनिमग्नस्य ततो निस्सरणप्रयुक्तं पञ्जरमुक्तस्य पक्षिण इव पङ्कलिप्तस्यालाबूफलस्य जलनिमग्नस्य पङ्कनिर्मोके इव सवितृकिरणसन्तप्तपक्वैरण्डबीजस्येव च भवति । जीवस्य च शरीरे अनेककालनिबद्धत्वात्तद्विनिर्मोककृतमूर्ध्वगमनं पुनरावृत्तिरहितमेव भवतीति । पुद्गलास्तिकायः षोढा—चत्वारि भूतानि, स्थावरं, जङ्गमं च । जीवस्योर्ध्वगमनकार्योन्नेयो द्रव्यविशेषो धर्मः । शरीरस्थितिकार्यानुमेयो द्रव्यविशेषोऽधर्मः । आकाशो द्विविधः । लोकाकाशः अलोकाकाशश्चेति । बद्धजीवाधारभूतो लोकाकाशः । मुक्तानामाधारभूतोऽलोकाकाशः । एतेषां सर्वेषां पदार्थानामेकरूपत्वनियमाभावबोधकयुक्तिसङ्ग्राहकं तदीयं वाक्यमुदाहरति—**सर्वत्र चेति** । **सप्तभङ्गीति** । सप्तानां नियमानां भङ्गस्सप्तभङ्गः, सोऽस्मिन् प्रतिपाद्यतया विद्यत इति सप्तभङ्गी, तमित्यर्थः । **स्यादस्तीति** । स्यादिति तिङन्तप्रतिरूपकमव्ययं कथञ्चिदित्यर्थे । घटपटादिकं वस्तु किं सदिति पृष्टे स्यादस्तीत्युत्तरं, कथञ्चित्सदित्यर्थः । एवमुत्तरत्राप्यसत्त्वाद्यनियमप्रतिपादकाः स्यान्नास्तीत्यादयो भङ्गाः । कथञ्चिदसत्, कथञ्चित् सदसत्, कथञ्चिदवक्तव्यः, अनिर्वचनीय इत्यर्थः । कथञ्चित् सत्त्वेनानिर्वक्तव्यः, कथञ्चिदसत्त्वेनानिर्वक्तव्यः, कथञ्चित्सदसत्त्वेनानिर्वक्तव्य इति क्रमेणार्थो द्रष्टव्यः । **एकत्वनित्यत्वादिष्वपीति** । कथञ्चिदेकः, स एव कथञ्चिदनेकः, कथञ्चिदेकानेकः, कथञ्चिदनिर्वचनीय इति प्रकारः एकत्वादिधर्मेषु तुल्यः । ततश्च सर्वस्यापि वस्तुन ऐकरूप्यनियमो नास्तीति तदभिमानः । युक्तिं चेमां वर्णयन्ति—यदि हि घटस्सद्रूप एव स्यात्, तदा तदुत्पत्त्याद्यर्थव्यापारोऽनर्थक एव स्यात्, असदेव चेत् स्यात्, कारणव्यापारेणापि सन्न भवेत्, अतः कारणव्यापारसार्थक्याय एक एव घटः कथञ्चित् सत्, कथञ्चिदसदित्युररीकरणीयम् । एवं च सत्त्वरूपे धर्मे अनैकान्त्यदर्शनात् तेन दृष्टान्तेन धर्ममात्रे अनैकान्त्यमास्थीयते । ननु, सत्त्वासत्त्वयोर्भावाभावरूपयोः कथमेकत्र समावेशः, कथं वा संयोगतदभावयोरेकत्र समावेशः । प्रमाणसिद्धत्वादिति चेत्, सत्त्वासत्त्वयोरपि उक्तयुक्तिसिद्धतया निवेशोऽङ्गीकर्तव्यः । ननु, संयोगतदभावयोर्विरुद्धयोरविरोधेन निवेशसिद्ध्यर्थमवच्छेदकभेद उपेयते मूलाग्ररूपः, एवं सत्त्वासत्त्वयोरपि देशकालरूपावच्छेदकभेदेन निवेशोपगमे तु नास्ति विवाद इति चेन्न । यदि संयोगत-

दभावयोर्मूलाग्रावच्छेदकभेदेन विरोधपरिहार आस्थेयः, तर्हि तस्मिन्नेव वृक्षे मूलं किमवच्छेदेन वर्तते, तदभावो वा किमवच्छेदेन, यदि तु अग्रावच्छेदेन मूलाभावः, तदभावावच्छेदेन मूलं, तर्हि अग्रतदभावौ तस्मिन्नेव वृक्षे किमवच्छेदेन वर्तेते, मूलतदभावावच्छेदेन वर्तने अन्योन्याश्रयः । विरोधपरिहारं विना एकस्यापि विरुद्धयुगस्यावस्थानासम्भवात् । अवच्छेदकान्तराश्रयेण च तस्याप्यभावेन सहवर्तनार्थम् अवच्छेदकान्तरापेक्षत्वे अनवस्था । एवं सत्त्वासत्त्वयोरपि विरोधपरिहारः न-देशकालभेदेनास्थातुं शक्यः । देशकालयोरपि सत्त्वासत्त्वनिवेशस्यावश्यकत्वात् । न हि घटासत्त्वकालः सर्वदा सन्नेव । नापि घटासत्त्वदेशः सर्वत्र सन्नेव । तथासति घटसत्त्वस्यैवासम्भवात् । तथा च देशकालयोरपि सत्त्वासत्त्वनिवेशसिद्धये देशकालान्तरोपगमेऽनवस्था । अतोऽकामेनावच्छेदकभेदं विहाय क्वचित् क्वचिद्विरुद्धधर्मसमावेश उपेयः । स सर्वत्रास्तु, किमवच्छेदकभेदकल्पनया । तथा च सर्वस्याप्यनेकान्तता समाश्रयणीया । तथा च साङ्ख्येन यत् सत्त्वैकान्त्यमुपगतं, तन्निवृत्तये आद्यो भङ्गः । शून्यवाद्युपगतासत्त्वैकान्त्यनिवृत्तये द्वितीयो भङ्गः । कालभेदेन सत्त्वासत्त्वे तार्किकोपगते, तदनैकान्त्याय चतुर्थो भङ्गः । वेदान्तिना अनिर्वचनीयत्वमुपगम्यते, तदनैकान्त्याय तृतीयो भङ्गः । सत्त्ववादिनं प्रति सत्त्वेनानिर्वचनीयत्वं पूर्वपक्षिणोद्भावितम् । असत्त्ववादिनं प्रति असत्त्वेनानिर्वचनीयत्वं पूर्वपक्षवादिनोद्भावितम् । सदसत्त्ववादिनं प्रति ताभ्यामनिर्वचनीयत्वं पूर्वपक्षवादिनोद्भावितम् । तदनैकान्त्यद्योतनायावशिष्टास्त्रयो भङ्गाः । **युगपत् सदसत्त्वादिविरुद्धधर्मसमावेश इति** । तथा च कालभेदेन सत्त्वासत्त्वयोर्निवेश एकस्मिन् धर्मिणि प्रतीतिसिद्धत्वादुपेयत एवेति सूचितं भवति । न चैतावता अनेकान्तवादसिद्धिः । अवच्छेदकभेदं विहायैव भावाभावनिवेशस्य तेनोपगमात् । न च देशकालादेरवच्छेदकस्य सत्त्वासत्त्वनिवेशे अवच्छेदकान्तरं न सम्भवतीत्युक्तं युक्तम् । तत्राप्यधुना घटकालः, अत्र घटदेशो, नान्यदा घटकालो, नान्यत्र घटदेश इति देशकालभेदेनैव सत्त्वासत्त्वावगमात् । न चाधुनेत्यादि कालाधिकरणीभूतः कालः, अत्र घटदेश इति घटदेशाधिकरणतयोल्लिख्यमानो देशश्च किं घटकालदेशाभ्यां अन्यौ, अनन्यौ वा । उभयथाप्यस्तु । न चाद्ये । तस्यतस्यापि कालदेशभेदानुसरणे अनवस्थेति वाच्यम् । प्रामाणिक्या अनवस्थाया अदोषत्वात् । न च द्वितीयेऽप्यात्माश्रयः । प्रतीतिसिद्धतया अभेदेऽप्याधारताख्यस्वरूपविशेषोपगमे बाधकाभावात् । तथा च स्वावच्छेदेन घटदेशकालौ स्तः । अन्यावच्छेदेन न स्त इति न सत्त्वासत्त्वयोः कदाप्येकस्मिन् धर्मिणि विनावच्छेदकभेदं निवेशोऽस्ति । एवं मूलाग्रयोरप्यभावो वृक्षे अवच्छेदकभेदेनैव द्रष्टव्यः । तत्राप्यूर्ध्वाधोदेशादेरवच्छेदकस्य सुलभत्वात् । एवं यत्र विरु-

द्धर्मसमावेश उपलभ्यते, तत्रावच्छेदकभेदेनैव विरोधपरिहारे सति निरङ्कुशं सर्वत्रानैकान्त्यमिति दूरनिरस्तं भवति । न हि नित्यमेव वस्तु अनित्यमित्युपलब्धम् । नाप्येक एव घटोऽनेक इति वक्तुं प्रामाणिकैश्शक्यम् । सर्वत्रानैकान्त्यमभ्युपगच्छतश्च स्वपक्षसंरक्षणमपि न स्यादित्याह—**एते सप्त पदार्था इति** । **मत्तोन्मत्तादिवदिति** । मत्तो मदिरादिकृतमदवान्, उन्मत्तः उन्मादात्मकरोगविशेषशाली । स्यादवक्तव्य इति भङ्गस्य यथाश्रुतार्थमादाय दूषयति—**न चैषां पदार्थानामिति** । लब्धरूपत्वे सति बाध्यत्वमनिर्वचनीयत्वं प्रमाणबलायातमैकान्तिकमेवेति न तदनेकान्तिकता । सङ्घाताः शरीरादिरूपाः । **अणुवादनिराकरणेनेति** । परमाणुवादिनो वैशेषिका बौद्धाश्च । ते तु प्रागेव निराकृता इत्यर्थः ॥ ३३ ॥

# एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

पूर्वसूत्रेण सर्वेषां पदार्थानां यदनैकान्त्यं दिगम्बरैरुक्तं, तन्निरस्तम् । इतः प्रभृति त्रिभिस्सूत्रैस्तदभ्युपगतं जीवस्य शरीरपरिमाणत्वं निरस्यते । सौत्रमकार्त्स्न्यपदं परिच्छिन्नत्वाभिप्रायं व्याख्याय तावता को दोष इत्यपेक्षायामाह—**घटादिवदनित्यत्वमिति** । परिच्छिन्नस्य सावयवत्वावश्यम्भावेनावयवजन्यत्वापत्त्या जन्यभावस्यानित्यत्वं प्राप्नोतीति भावः । प्रकारान्तरेणाकार्त्स्न्यं व्याचष्टे—**शरीराणां चेत्यादिना** । यदा हि पूर्वमल्पशरीरो जीवः अनन्तरं स्थूलशरीरं प्राप्नोति, तदा कृत्स्नस्थूलशरीराव्याप्तिरूपं जीवस्याकार्त्स्न्यम् । यदा तु पूर्वं स्थूलशरीरोऽनन्तरमल्पशरीरं प्राप्नोति, तदा कृत्स्नस्य जीवस्याल्पशरीरासम्मितत्वरूपमकार्त्स्न्यम् । **तेषां पुनरनन्तानां जीवावयवानामिति** । ननु, प्रतिघातो नाम एकदेशावच्छेदेनावर्तनं, यथा स्तम्भघटादीनां तदभ्युपगम्यते, एवं जीवावयवानाम् । न च महति शरीरे विद्यमानस्याल्पशरीरे समावेशो न स्यादिति वाच्यम् । यथा प्रदीपप्रभाया विरलावयवसंयोगेन महागृहोदरव्यापिन्या निबिडावयवसंयोगेनाल्पगृहव्याप्तिरुपलभ्यते, एवं स्थूलशरीरं प्रविष्टस्य जीवस्याल्पशरीरप्राप्तौ निबिडावयवसंयोगेन कृत्स्नशरीरव्याप्तिरुपपद्यत एवेति कथमाद्यविकल्पदूषणमुपपद्यते । प्रतिहन्यमानस्वभावानामपि स्तम्भकाष्ठादीनां वैरल्येन महत्यां शालायां निरुध्यमानानां नैबिड्येनाल्पशालायामपि कार्त्स्न्येन वृत्तिदर्शनादिति चेत्, उच्यते—प्रभान्यायेन स्थूलसूक्ष्मशरीरव्यापिता जीवस्य वक्तुं न शक्यते । तथात्वे विरलसंयोगेन महागृहोदरव्यापिन्या यथा मन्दप्रकाशता, एवं जीवस्यापि स्थूलशरीरे विरलतया विद्यमानस्याल्पं चैतन्यं भवेत् । यथा चाल्पगृहोदरे निबिडतया विद्यमाना या अधिकप्रकाशता, एवं जी-

वस्यापि अल्पशरीरे विद्यमानस्याधिकं चैतन्यं भवेत् । तथा च प्रतीतिविरोधः । न हि शरीरमहत्त्वे ज्ञानाल्पत्वं, शरीराल्पत्वे वा ज्ञानाधिक्यमिति दृष्टं, प्रत्युत वैपरीत्यमेव दृष्टम् । बाल्ये ज्ञानाल्पता, अनन्तरमधिकज्ञानता चेति । तथा च सर्वेष्वपि शरीरेषु निबिडावयवसंयोगेनैव जीवस्य वृत्तिराश्रयणीया । तथा च प्रतिहन्यमानस्वभावत्वे महति शरीरे निबिडावयवसंयोगेनैव विद्यमानस्याल्पशरीरेऽपि कृत्स्नस्य कथं वर्तनं भवेदिति तात्पर्यम् । शरीरपरिमाणस्यानन्तावयवत्वमुपेत्य दूषणमुक्तं, तदेव न सम्भवतीत्याह—**अपि चेति** ॥ ३४ ॥

उत्तरसूत्रमवतारयति—**अथ पर्यायेणेति** । पर्यायः क्रमः ।

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

**विक्रियावत्त्वे च चर्मादिवदनित्यत्वमिति** । अवयवोपचयापचयाभ्युपगमे हि वृद्ध्यपक्षयरूपौ तावद्विकारावुपगतावेव । तथा च नाशाख्योऽपि भावविकारोऽवश्यम्भावी । वृद्ध्यपक्षयशालिनो नश्वरत्वनियमादिति भावः । विकारादिभ्य इत्यत्र आदिपदगृहीतान् दोषानाह—**ततश्चेति** । मुमुक्षोर्नाशे हि मोक्षरूपं फलं कस्य स्यादिति भावः । **न च स निरूपयितुं शक्यत इति** । आत्मनिरूपणस्य च मोक्षहेतुत्वात् तदभावे मोक्षानुपपत्तिरिति भावः । साधारणस्सर्वेषां जीवानाम् । असाधारणः तस्यतस्य जीवस्य । 'न च स निरूपयितुं शक्यत' इति प्राक् सङ्ग्रहोक्तमर्थं विवृणोति—**किं चान्यदनवधृतस्वरूप इति** । यदि हि प्रदेशादिपरिमितो जीवः स्थिरः, ततोऽन्ये अवयवा जीवस्यागन्तुका इति किञ्चिन्निर्धारणकारणं भवेत्, तदा अवस्थितो निर्धारयितुं शक्यते । न च तदस्तीत्याह—**आगच्छतामपगच्छतां चेति** । उपसंहरति—**अत इति** । 'एवं चात्माऽकार्त्स्न्य'मिति सूत्रोक्ताकार्त्स्न्यदोषपरिहाराय न च पर्यायादप्यविरोध इति शङ्किते अनित्यत्वादिदोषा विकारादिभ्य इत्यंशेन प्रदर्श्यन्त इति व्याख्यातम् । इदानीं तु इमे शङ्कासमाधाने पूर्वसूत्र एव प्रदर्शनीये । अनेन तु सूत्रेण स्वरूपतः आत्मनोऽनित्यत्वेऽपि प्रवाहनित्यता भविष्यतीति न च पर्यायात्प्रवाहादनित्यत्वेऽपि न विरोध इति योजनया शङ्कां प्रदर्श्य विकारादिभ्य इत्यंशेन परिहारः प्रतिपाद्यत इत्याह—**अथवेति** । **विकारादिदोषप्रसङ्गादिति** । न च सन्ताननित्यतां वदतः स्वरूपेण विकारादिप्रसञ्जनं न दोषायेति वाच्यम् । शरीरसम्बन्धाधीनविकारस्यात्मनो मोक्षदशायां शरीरविगमे पुनर्विकारान्तराभावात् पूर्वविकारस्य च शरीरेण सहैव नष्टतया सन्तानस्यापि विच्छेदप्रसङ्गात ॥ ३५ ॥

ननु, पूर्वशरीरनाशेन तत्कृतस्य विकारस्य नाशेऽपि नात्मस्वरूपं नष्टम् । शरीरान्तराभावेन च पुनर्विकारान्तराभावेऽपि अविकृतमेवात्मस्वरूपं मोक्षेऽनुवृत्तं भविष्यतीति शङ्कानिवृत्त्यर्थं सूत्रम्—

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥

यदि ह्यन्त्यायां मोक्षदशायामविकृतमात्मस्वरूपमनुवर्तते, तर्हि तस्य किञ्चित् परिमाणमप्यस्ति । तदपि च नित्यमेव भविष्यति । शरीरान्तराभावेन पुनःपरिमाणान्तराप्रसङ्गात् । तथा च तेन दृष्टान्तेन मध्यमपूर्वावस्थागतमपि परिमाणं नित्यमेव भविष्यति । आत्मपरिमाणत्वाविशेषात् । न च तथासति सर्वेषां परिमाणानामात्मगतानां नित्यत्वमापादितं भविष्यति । एवं चोत्तरोत्तरपरिमाणकाले पूर्वपूर्वपरिमाणस्याप्यनुवृत्त्या भाव्यम् । तथा च कथमेकस्मिन्नात्मनि विषमाणां बहूनां परिमाणानां समावेशस्स्यादिति वाच्यम् । एवं तस्यात्मपरिमाणानि सर्वाणि समान्येव भवन्तु, कास्माकं क्षतिः । तदिदमाह—**एकशरीरपरिमाणतैव स्यादिति** । एकस्य शरीरस्य यादृशं परिमाणं, तादृशान्येव सर्वाणि परिमाणानि आत्मनि स्युरित्यर्थः । एवमात्मन्यनेकानि नित्यानि परिमाणानि स्युरित्यापादनपरतया सूत्रं योजयित्वा एकमेव परिमाणमात्मनि नित्यं स्यादिति आपादनपरतया सूत्रस्य योजनान्तरमाह—**अथवेति** । अन्त्यस्य हि परिमाणस्य परेणैव नित्यत्वमुपेतम् । तस्य नित्यत्वं तदैव भवेत्, यदि तत्प्रागभावाप्रतियोगि । प्रागभावप्रतियोगिनो भावस्य नित्यतानुपपत्तेः । तथाचान्त्यस्यैव परिमाणस्य पूर्वमप्यनुवृत्त्या भाव्यम् । न चैकपरिमाणाक्रान्ते अन्यपरिमाणनिवेशस्सम्भावितः । अतः सर्वदैकपरिमाण एव जीव इति कथं महदल्पशरीरेषु तस्य कार्त्स्न्यमिति भावः ॥ ३६ ॥

इति एकस्मिन्नसम्भवाधिकरणम् ॥ ६ ॥

## पत्युरसामञ्जस्यात् ॥ ३७॥

यथा पदार्थानां विरुद्धानेकरूपता न सम्भवति, तथैकस्यैवोपादानत्वं निमित्तत्वं च विरोधादेव न सम्भवतीत्याक्षिप्यते । अतः पूर्वेणास्याधिकरणस्य दृष्टान्तसङ्गतिः । ननु, सूत्रे पत्युरीश्वरस्यैवासामञ्जस्योद्भावनात् ईश्वरप्रतिषेध एव भाति, तत्र निमित्तमात्रत्वेनाभ्युपगतो यैरीश्वरः, तत्पक्षनिराकरणमत्र क्रियत इति कथमवगम्यत इत्यभिप्रायेण शङ्कते—**नुत्कथमिति** । पूर्वसूत्रसन्दर्भपर्यालोचन-

या तथावगम्यत इति परिहरति–'**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि**'त्यादिना । **तस्मादप्रकृतिरधिष्ठातेति** । नन्वत्र पूर्वपक्षे ईक्षत्यादिकं सकर्तृकं, कार्यत्वादित्यनुमानेनेश्वरस्सिध्यन् कर्तृत्वेनैव सिध्यति । कर्तुश्च लोके न द्रव्यं प्रत्युपादानत्वं दृष्टमित्यनुमानेन भूभूधरादिकर्तृत्वेन सिद्धस्येश्वरस्य न भूभूधराद्युपादानत्वं वक्तुं शक्यमिति न्यायो वक्तव्यः । एतन्निराकरणं शास्त्रयोनित्वसूत्रेण 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा'दिति सूत्रेण च सिद्धम् । शास्त्रयोनित्वसूत्रे हि परमात्मा नानुमानादिप्रमाणगम्यः, अपि तु शास्त्रैकसमधिगम्य इति व्यवस्थापितम् । प्रकृतिश्चेत्यधिकरणे च कर्तुरपि परमात्मन उपादानत्वं शास्त्रबलात् सिध्यतीति यश्चेतनः, स न द्रव्योपादानमिति व्याप्तिर्नादरणीयेति दर्शितम् । अतः कथं पुनरनुमानगम्यतया निमित्तकारणमेवेश्वरास्सिध्येदिति शङ्क्यते, उच्यते—'शास्त्रयोनित्वा'दित्यत्र त्वंपदार्थाभेदरूपस्य परमात्मनश्शास्त्रैकसमधिगम्यत्वे व्यवस्थापितेऽपि तत्पदार्थस्य केवलानुमानगम्यत्वमस्त्विति पुनश्शङ्कायां तदनुमानस्याभासत्वमिहैव व्यवस्थापनीयम् । प्रकृत्यधिकरणे तु प्रतिज्ञादृष्टान्तादीनां केवलनिमित्तत्वपक्षेऽपि नानुपपत्तिरिति न तेषामुपादानत्वसाधकतेत्याशङ्क्य तेषां उपादानत्वसाधकता व्यवस्थापिता । चेतनस्य नोपादानत्वमिति शङ्का त्वत्र निराकर्तव्यैव तत्रापकृष्टा । अतः केवलनिमित्तकारणेश्वरानुमाननिरासायेदमधिकरणमारम्भणीयम् । **केचित्तावत् साङ्ख्ययोगव्यपाश्रया इति** । सेश्वरसाङ्ख्ययोगौ । पुरुषो जीवः । इतरेतरविलक्षणाः सिद्धान्ते प्रधानमविद्या, सा चेश्वराध्यस्ता, तन्मते तु स्वतन्त्रा । पुरुषस्तु परमात्मस्वरूपस्सिद्धान्ते, तन्मते त्वत्यन्तभिन्नः । माहेश्वराः शिवप्रोक्तागमानुयायिनः लगुडीशपाशुपताः । **कार्यकारणेति** । पृथिव्यादीनि पञ्च तत्त्वानि, रूपादयः पञ्च गुणाश्चेति दशविधानि कार्याणि । कारणानि त्रयोदश–पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनो बुद्धिरहङ्कार इति त्रीण्यन्तःकरणानि । योगो ध्यानादिरूपः धर्मोपयुक्तव्यापारः । विधेयत्वाद्विधिः । स व्रतद्वाररूपेण द्विविधः । व्रतं भस्मस्नानभस्मशयनोपहारादि । भस्मस्नानं द्विविधं–नित्यं त्रिषवणकर्तव्यं जलस्नानप्रतिनिधिरूपमेकं, मलमूत्रोत्सर्जनादिषु निमित्तेषु कर्तव्यं जलशुद्धिप्रतिनिधिरूपमनुस्नानमपरम् । भस्मशयनं च गृहस्थगृहेभ्यो भिक्षित्वा अन्नवदानीतेन भस्मना कार्यम् । उपहारः षड्विधः हसितगीतनृत्तहुडुक्कारनमस्कारजपभेदेन । हसितं हासः । गीतं नृत्तं च गान्धर्वशास्त्रोक्तप्रकारेण । हुडुक्कारो जिह्वातालुसंयोगान्निष्पाद्यमानो वृषभनादसदृशो ध्वनिः । विजनप्रदेशे चत्वार्येतानि कर्तव्यानि । जपनमस्कारौ प्रसिद्धौ । द्वाराणि कायनस्पन्दनमन्दयानशृङ्गारणापितत्करणापितद्भाषणभेदेन षड्विधानि । असुप्तस्यैव सुप्तलिङ्गप्रदर्शनं कायनम् । वातव्याध्यभिभूत-

स्येव गात्रकम्पनं स्पन्दनम् । उपहतपादस्येव गमनं मन्दयानम् । रूपयौवनसम्पन्नां कामिनीं दृष्ट्वा अकामुकस्यैव कामुकवद्विलासप्रदर्शनं शृङ्गारणम् । अनुन्मत्तस्यैव उन्मत्तवदाचरणमपितत्करणम् । अभिज्ञस्यैव सतोऽनभिज्ञवन्निरर्थकशब्दोच्चारणमपितद्भाषणम् । क्राथनादीनि च गूढचर्योपयुक्तानि । दुःखान्तो द्विविधः—अनात्मकः, सात्मकश्च । सर्वदुःखानामत्यन्तोच्छेदरूप आद्यः । द्वितीयस्तु दृक्क्रियाशक्तिबललक्षणमैश्वर्यम् । दृक्छक्तिरेकापि पञ्चधा विषयभेदादुपचर्यते—दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पार्शनादिविषयं ज्ञानं दर्शनम् । अशेषशब्दविषयं ज्ञानं श्रवणम् । शास्त्रमनपेक्ष्यैव शास्त्रार्थगोचरं ज्ञानं मननम् । ग्रन्थतोऽर्थतश्चासन्दिग्धं ज्ञानं विज्ञानम् । सर्वज्ञत्वं प्रसिद्धम् । क्रियाशक्तिरेकापि त्रिविधोपचर्यते—मनोजवत्वं कामरूपित्वं विकरणधर्मित्वं चेति । निरतिशयशीघ्रगामित्वं मनोजवत्वम् । कर्मानपेक्ष्यैव स्वेच्छयानन्तशरीरेन्द्रियाधिष्ठातृत्वं कामरूपित्वम् । उपसंहृतशरीरेन्द्रियस्यापि निरतिशयितैश्वर्यशालित्वं विकरणधर्मित्वम् । पशुर्जीवः । पाशो मायादिरूपः । पशुपतिरीश्वरस्तु सृष्ट्यादिनिमित्तकारणं, स च निरतिशयस्वातन्त्र्यशालितया धर्माधर्मावनपेक्ष्य फलं प्रयच्छति । न च तथा सतीश्वरेच्छानुसारेणैव सुखदुःखादिप्राप्तिसम्भवात् धर्माधर्मयोः प्रवृत्तिनिवृत्ती न स्यातामिति वाच्यम् । धर्माधर्माभ्यामीश्वरानुग्रहकोपयोः सम्भावनया तत्र प्रवृत्तिनिवृत्त्योरुपपत्तेः । धर्माधर्मयोस्तु फलजननसामर्थ्यमीश्वरापेक्षमेव कृषिकर्मण इव पर्जन्यापेक्षमिति माहेश्वराणां मतम् । **तथा वैशेषिकादयोऽपीति** । परमाण्वादय एव समवायिकारणम्, ईश्वरस्तु सर्वविषयनित्यज्ञानेच्छाकृतिमान्निमित्तमेवेति प्रतिपादयन्ति तार्किकाः । **हीनमध्यमोत्तमभावेनेति** । माहेश्वरा हि जीवगतपुण्यपापाद्यनपेक्ष्यैव निरतिशयस्वातन्त्र्यशालितया फलं प्रयच्छतीति वदन्ति । तथा च जगति सुखदुःखवैचित्र्यदर्शनात् ईश्वरस्य सुखमात्रप्रदत्वमिति वक्तुमयुक्तम् । अतः पुण्यपापफलत्वेन सम्मते सुखदुःखे पुण्यपापे अनादृत्य प्रयच्छति चेत्, यस्मिन्ननुरागः, तस्मै सुखं प्रयच्छति, यस्मिन् द्वेषः, तस्मै दुःखं प्रयच्छतीत्येव वक्तव्यम् । करुणया फलप्रदत्वे तु दुःखं न प्रयच्छेत् । तथा च प्रपञ्चवैचित्र्यानुपपत्तिः । अत ईश्वरस्य वैषम्यादिदोषयुक्ततया अस्मदादिवदनीश्वरत्वं प्रसज्येतेति भावः । ननु, यथा सिद्धान्तिना पुण्यपापापेक्षत्वाद्वैषम्यादिदोषो नास्तीत्युच्यते, एवमस्माभिरप्युच्यत इति शङ्कते—**प्राणिकर्मापेक्षत्वादिति** । तदापि किं कर्मेश्वरानधिष्ठितमेव फलजनकम्, उतेश्वराधिष्ठितम् । आद्ये स्वाभ्युपगमविरोधः । कृषिकर्मणि पर्जन्यस्येव पुण्यपापयोरीश्वरापेक्षिताभ्युपगमात् ईश्वरकल्पनानर्थक्यप्रसङ्गाच्च । द्वितीये त्वीश्वरस्य पुण्यपापाधिष्ठातृत्वं पुण्यपापापेक्षम्, उतानपेक्षम् । नान्त्यः । नियामकं

विनैव कस्यचित् पुण्यं, कस्यचित् पापमधितिष्ठति चेत्, कथं न वैषम्यादिप्रसङ्गः। आद्ये त्वितरेतराश्रय इत्याह—**कर्मेश्वरयोरिति** । पुण्यपापयोरपि फलविशेषतया पश्वादिवत् पुण्यपापमपेक्ष्यैव ते ईश्वरः प्रयच्छतीति वक्तव्यम् । तथा च अन्योन्याश्रय इति भावः । ननु, पूर्वपुण्यपापे अपेक्ष्योत्तरे पुण्यपापे प्रयच्छतीश्वरः । अतो व्यक्तिभेदेन नान्योन्याश्रय इति शङ्कते—**अनादित्वादिति** । प्रवाहानादित्वादित्यर्थः । सिद्धान्ते हि पूर्वपूर्वपुण्यपापादिकमपेक्ष्योत्तरोत्तरपुण्यपापे, ताभ्यां च सुखदुःखे ईश्वरमपेक्ष्यैव भवत इति शक्यं वक्तुं श्रुतिस्मृत्यनुसारेण, त्वया तु ते अनादित्वैव वक्तव्यम् । तथा चाधुनिकयोरेव पुण्यपापयोः केन प्रमाणेन पुण्यपापनिमित्तत्वमुच्यते । न हि तत्रालौकिके प्रत्यक्षादिप्रसरः । तथा च प्रमाणविधुरतया प्रवाहानादित्वकल्पना अन्धपरम्परान्यायमेव प्राप्नोति, तदाह—**वर्तमानकालवदिति** । श्रुतिस्मृत्यनुसरणे तु तद्बलादेवेश्वरस्योपादानत्वमपि सिध्यति । यथा हि 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं, यमधो निनीषते' 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि'त्यादिश्रुतिस्मृतिवचनैरीश्वरस्य पुण्यपापादिकमपेक्ष्यैव पुण्यपापसुखदुःखादिरूपफलप्रदत्वं, तथा 'तदात्मानं स्वयमकुरुते' त्यादिवचनजातेन तस्योपादानत्वमपि सिद्धम् । असामञ्जस्यान्तरमाह—**अपि च प्रवर्तनेति** । प्रवर्तना यत्नः, स लक्षणं कार्यतया ज्ञापको येषां, ते दोषा रागादयः। स्वार्थवत्त्वात् स्वोद्देशविषयीभूतस्वप्रयोजनवत्त्वात् नित्यतृप्तत्वं न स्यादित्यर्थः । अपि च योगैः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर उपगम्यते । क्लेशाः रागद्वेषादयः । पुण्यपापात्मकं कर्म । सुखदुःखादिरूपं फलं विपाकः । रागादिवासना आशयः । एतैरसम्बद्धः । अत एव जीवविलक्षणः पुरुषविशेषः चेतनविशेष इति । चेतनश्चोदासीनः प्रवृत्तिरहितः । तथा च कथमीश्वरस्य प्रधानाधिष्ठातृत्वं तन्मते । तदधिष्ठातृत्वं हि तद्विषयकयत्नादिकमेव । न च तदुदासीनस्य सम्भवतीत्याह—**पुरुषविशेषत्वाभ्युपगमाच्चेति** ॥ ३७ ॥

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

**सर्वगतत्वादिति** । सर्वगते स्पन्दलक्षणं कर्म न सम्भवति । अतो न कर्मान्यः संयोगः। निरवयवत्वात् न संयोगजः । **आश्रयाश्रयिभावानिरूपणादिति**। मधर्मिभाव एव समवायः । अकार्यद्रव्याणां च न धर्मधर्मिभाव इत्यर्थः । **आगमाश्रयात् सर्वज्ञत्वासिद्धिरिति** । उत्तराधिकरणे प्रतिपाद्योऽयमर्थः इहास्पष्टः व स्पष्टो भविष्यति ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

अप्रत्यक्षत्वे हेतुः—रूपादिहीनामिति । बाह्यपृथिव्यादिपरिणामितया प्रधानं बाह्यम् । परमाणूनां च बाह्यत्वं स्पष्टमेव । बाह्यद्रव्यप्रत्यक्षे च महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं तादृशस्पर्शवत्त्वं च हेतुः । अतो न प्रत्यक्षम् । कर्तुरपरोक्ष एव च यत्नविषयो भवति । अतो न प्रधानादेर्यत्नविषयत्वरूपमधिष्ठेयत्वं सम्भवतीति तात्पर्यम् ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥४०॥

**यथा करणग्राममिति** । यद्यपि तार्किकप्रक्रियाश्रयणे करणग्रामाधिष्ठातृत्वं जीवस्य नास्त्येव । इन्द्रियगोचरयत्नाभावात् । इन्द्रियाणां विषयैस्सन्निकर्षापादनं तु तत्तद्गोलकानां प्रत्यक्षाणां यत्नविषयतया तेषु क्रियासम्पादनेन भवति, तथापि तेषु जीवाधिष्ठेयत्वं शङ्कोक्तमुपेत्यैव दूषणं वक्तुं शक्यत इति तात्पर्यम् । अभ्युपगमवादत्वं च 'तथापि नोपपद्यत' इत्यनेन सूच्यते । दूषणान्तरं वक्तुं प्रकारान्तरेण सूत्रद्वयं व्याचष्टे—**अन्यथा वा सूत्रद्वयमिति** । साधिष्ठान इत्यस्य व्याख्या—**सशरीर इति** ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥४१॥

इयत्तापरिच्छिन्नं सङ्ख्याविशेषयुक्तम् । ननु, प्रधानपुरुषेश्वराणां त्रयाणामन्तवत्त्वमस्तु । न च तावता त्रितयशून्यमेव जगत्स्यादिति शङ्कनीयम् । प्रवाहनित्यतोपपत्तेरिति पलायमानस्य शङ्कायामाह—**स्वरूपपरिमाणमपीति** । अल्पत्वमध्यमत्वादिकम् । ये हि सङ्ख्यावन्तो घटपटादयः, ते अल्पत्वादियुक्ता भवन्ति । तथा च व्यापकत्वाभ्युपगमविरोधः । **पुरुषगता च महासङ्ख्येति** । जीवगता परार्धादिसङ्ख्येत्यर्थः । **एवमितरेष्वपि क्रमेण मुच्यमानेष्विति** । तथा च प्रवाहाभ्युपगमेऽपि परार्धादिसङ्ख्याका एव जीवव्यक्तयः पर्यवस्यन्तीति तासां सर्वासां मोक्षे प्रवाहिनीनामभावे केषां प्रवाहस्स्यादिति भावः । **ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरिति** । न च विद्यमानपदार्थाग्रहण एवासर्वज्ञत्वम् । जीवादीनां च परार्धादिसङ्ख्या वा परिच्छिन्नपरिमाणता वा नास्तीति वाच्यम् । ये हि त्रित्वादिसङ्ख्यायुक्ताः, ते परार्धान्तसङ्ख्यान्तर्गता एव भवन्ति, परिच्छिन्नपरिमाणाश्च भवन्ति । यथा घटादय इति व्याप्तिदर्शनेन जीवादीनामपि तथात्वस्यावश्यकतया तदज्ञाने कथं सर्वज्ञता भवेदिति भावः । ननु, यदीश्वरः कर्ता स्यात्, तर्हि स्वेष्टसाधने रागवान् भवेत्, तत्प्रतिकूले द्वेषवान् भवेत् । स च स्वाधिष्ठेयैस्संयोगादियुक्त एव स्यात् । अधिष्ठेयं त-

स्यापरोक्षमेव भवेत्, परोक्षस्याप्यधिष्ठेयत्वे तु तत्कृतभोगवत्ता तस्य भवेत्, स च कर्तृतया भोगायतनशरीरवान् भवेत्, शरीरित्वादिना चान्तवान् भवेत्, असर्वज्ञश्चेति दूषणान्यापादितानि 'पत्युरसामञ्जस्या'दित्यादिभि'रन्तवत्त्वमसर्वज्ञता वे'-त्यन्तैः सूत्रैः । तानि न समीचीनानि । तथा हि—परमाण्वादिभिरीश्वरस्य संयोग उपेयते, एवं तद्गोचरमपरोक्षज्ञानमपि । उद्भूतरूपत्वादिकं तु जन्यप्रत्यक्ष एव कारणम् । ईश्वरस्तु धर्मिग्राहकप्रमाणेन नित्यापरोक्षज्ञानवानेव सिध्यति । धर्मिग्राहकप्रमाणबलादेव निरवयवोऽपि संयुक्त एव सिध्यति । अन्यानि च दूषणानि यदि पर्वतोऽग्निमान् भवेत् महानसतुल्यतया, तर्हि व्यञ्जनादियुक्तोऽपि भवेदिति दूषणतुल्यानि । अतो नेश्वरानुमानसावद्यता तैः सिध्यतीति चेत्, उच्यते—किं तावत् परेण धर्मिग्राहकमनुमानं विवक्षितम् । क्षितिः सकर्तृका । कार्यत्वादित्यनुमानमिति चेन्न । सकर्तृत्वे घटत्वादिकमेव प्रयोजकं, न तु प्रागभावप्रतियोगित्वं कार्यत्वम् । येनाङ्कुरादिसाधारण्येन कश्चन कर्ता सिध्येत् । न च घटत्वादीनामननुगततया सकर्तृकतायामनेकेषां गौरवात् प्रयोजकता न कल्प्यते, अपि तु लाघवात् कार्यत्वमेव, तर्हि कृत्यादीनामपि जन्यतायां कृतित्वादिकमेव लाघवात् प्रयोजकं, न तु जीवकृतित्वादिकम् । एवं शरीरजन्यतायामपि कृतित्वादिकमेव प्रयोजकं, न तु जीवकृतित्वादिकम् । अतश्चेश्वरेऽपि कर्तृत्वेनानुमिते जन्यकृत्यादिकं सिध्यतीति कथं तस्य अशरीरत्वम् । कृतिश्च रागादिनैव जायत इति रागादिकमपि तस्य प्रसज्यत एव । सर्वं च शरीरं पुण्यपापाधीनं भोगार्थमेव दृष्टमिति तस्य भोगोऽपि प्रसज्यत एव । संयोगश्च सर्वोऽप्यव्याप्यवृत्तिरिति निरवयवे परमाण्वादिसंयोगो न सम्भवति । परमाण्वादिगोचरं जन्यप्रत्यक्षमपि तस्य न सम्भवत्येव । अपि च नित्यकृत्यभ्युपगमे कथमीश्वरे चिकीर्षापरोक्षज्ञानयोः सम्भवः । कृतिजननद्वारा हि कार्ये तयोरुपयोगो वक्तव्यः । अतो न तार्किकाभिमतस्येश्वरस्य सिद्धिः । यश्च शरीरी, सोऽसर्वज्ञः जननमरणवांश्चेति असर्वज्ञोऽन्तवांश्च भवेदेव परपरिकल्पित ईश्वरः । यथा च कार्यं यत्, तत्सकर्तृकं, यश्च कर्ता, न स द्रव्योपादानमिति सामान्यतो दर्शनमात्रेणोच्यते, तथा य इयत्तापरिच्छिन्नास्तेऽन्तवन्त इति आपादयितुं शक्यमेव । न च 'रचनानुपपत्ते' श्चेत्यनेनानुमानादेवाधिष्ठाता दर्शितः, कथमिहानुमानं निराक्रियत इति वाच्यम् । तत्र हि लोकानुसारेणाचेतनप्रवृत्तिश्चेतनाधीनेत्येतावन्मात्रं दर्शितं, न तु स चेतनः अशरीरी सर्वज्ञत्वादिगुणयुक्तः परमेश्वर इत्यप्यनुमानादेव सिध्यतीत्युक्तम् । तावन्मात्रेणैव साङ्ख्यपक्षनिराकरणसिद्धेः । श्रुतिवशाच्च यथा तस्य सर्वज्ञत्वादिगुणजातं सिध्यति, तथा सर्वविवर्ताधिष्ठानत्वरूपमुपादानत्वमपि सिध्यति । अतो न युक्तिमात्रेण केवलाधिष्ठात्री-

श्वरप्रत्याशा कार्या ॥ ४१ ॥

इति पाशुपताधिकरणम् ॥ ७ ॥

## उत्पत्त्यसम्भवात् ॥४२॥

वृत्तानुवादपूर्वकं पाशुपताधिकरणेन पाञ्चरात्राधिकरणस्य सङ्गतिमाह—**येषामिति** । तथा च निमित्तकारणमेवेश्वर इति मतस्य श्रुतिविरोधेन परित्याज्यत्वेऽपि श्रुत्यविरुद्धं पाञ्चरात्रमतं न परित्याज्यमित्याक्षेपिकी सङ्गतिर्दर्शिता । अस्ति त्वंशान्तरं विसंवादस्थानमिति यदुक्तं, तत्स्पष्टीकरणाय तन्मतमाह—**तत्र भागवता इति** । भागवतपदं विष्णुभागवतपरम् । भगवान् षाड्गुण्ययुक्तः ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः । तत्र चेतनाचेतनात्मकसकलप्रपञ्चाहंभावोल्लेखितया सामान्यतो विशेषतश्च सर्ववस्तुगोचरः प्रत्ययो ज्ञानम् । जगत्प्रकृतिभावः शक्तिः । जगत् सृजतोऽस्य श्रमाभावः तिलकालकवदप्रयत्नेन स्वसृष्टसकलजगद्धरणं च बलम् । अप्रतिहतेच्छत्वमैश्वर्यम् । जगत्प्रकृतित्वेऽपि पयसो दधिभावेनेव विकाराभावो वीर्यम् । जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यं च तेजः । ततो ज्ञानबलोन्मेषेण सङ्कर्षणः, ततो वीर्यैश्वर्योन्मेषेण प्रद्युम्नः, ततः शक्तितेजस्समुन्मेषेणानिरुद्धो जायते । व्यूहः संस्थानम् । **सङ्कर्षणो नाम जीव इति** । सङ्कर्षणप्रद्युम्नानिरुद्धा इति जीवमनोऽहंकाराणां संज्ञेति यथाश्रुतपाञ्चरात्रानुसारेण प्रतीयते । **अभिगमनोपादानेज्यास्वाध्याययोगैरिति** । प्रातर्भगवन्मन्त्रजपस्तुतिनमस्कारादिकमभिगमनं, तदनन्तरं पूजार्थं पुष्पादिसम्पादनमुपादानं, ततः पूजनमिज्या, ततो भगवच्छास्त्रतदनुगुणपुराणागमश्रवणचिन्तनादिकं स्वाध्यायः, ततः सायंसन्ध्यावन्दनानन्तरं भगवति चित्तसमाधानं योगः । ननु, यदि श्रुत्यविरोधेन पाञ्चरात्रस्य प्रामाण्यमिष्टं व्यवस्थापयितुं,तर्हि कथं सङ्कर्षणस्य जीवस्य वासुदेवात् भगवत उत्पत्तिस्तत्र प्रतिपाद्यते । 'न जायते म्रियते वे'त्यादिश्रुतिभिर्हि तस्योत्पत्तिरेव निराक्रियते । कथं च जीवात् सङ्कर्षणात् प्रद्युम्नसंज्ञकस्य मनस उत्पत्तिः । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे' ति श्रुत्या मनसो ब्रह्मकारणकत्वावगमादिति चेत, तर्हि श्रुतिमूलतया माऽस्तु प्रामाण्यं, स्वातन्त्र्येणैव तस्य प्रामाण्यं भविष्यतीति शङ्कास्तु । न च वासुदेवप्रणीतस्य पाञ्चरात्रागमस्य पौरुषेयतया कथं स्वातन्त्र्येण प्रामाण्यमिति शङ्कनीयम् । जीवकृते हि पौरुषेये भ्रमप्रमादादिमूलत्वं सम्भवतीति न तस्य प्रामाण्यं स्वातन्त्र्येणाख्यातुं शक्यते । वासुदेवस्तु परमात्मा सर्वज्ञ इति न तत्प्रणीते तस्मिन् भ्रमप्रमादादिमूलताशङ्का सम्भवति । एवं च सर्वज्ञेन बुद्धिपूर्वं प्रणीतस्य पाञ्चरात्रस्यैव वेदमपेक्ष्यापि अधिकं प्रामाण्यं सिध्यति । वेदो हि तेनै-

वाबुद्धिपूर्वमारचितो निश्वसितवत् । तथा च तत्र प्रामाण्यं घुणाक्षरन्यायेन दैववशसम्पन्नम् । पाञ्चरात्रे तु सर्वज्ञेन तेनार्थालोचनपूर्वकं कृते न कोऽप्यंशः अप्रमाणमिति वक्तुं शक्यते । तथा च पाञ्चरात्रविरोधे वेदस्यैवार्थान्तरं कल्पनीयमिति । न च तथासति पाशुपतागमस्यापि शिवरूपेण भगवतोक्तत्वात् तेषामपि प्रामाण्ये परस्परप्रतिहतत्वात् कस्याप्यागमस्य प्रामाण्यं न स्यादिति वाच्यम् । शिवोऽपि न परमेश्वर इत्यप्यस्य पूर्वपक्षिणो भ्रमः । नन्वस्मिन् पादे युक्तिमात्रमाश्रित्य वादिभिर्यत् वेदान्तार्थविरोधिप्रमेयजातं व्यवस्थापितं, तन्निराकरणं प्रस्तुतं, न त्वागमानुसारेण यद्वेदार्थस्यान्यथाकरणं, तस्य निराकरणम् । तत्तु स्मृतिपाद एव सङ्गतम् । अतः कथमस्यागमानुयायिनो मतस्यात्र निराकरणे सङ्गतिरिति चेत्, यदि निमित्तमात्रतयेश्वरो न सम्मतः, तर्हि निमित्तोपादानभूत एवेश्वरः पाञ्चरात्रैरुपगत इति तन्मतं प्रामाणिकमस्त्विति पूर्वपक्षस्योपस्थितत्वात् प्रासङ्गिक्यत्र पादे सङ्गतिः । सिद्धान्तमारभते—**यत्तावदिति** । अयमत्र सिद्धान्ताभिप्रायः—अस्तु तावद्वेदमपेक्ष्याप्यधिकं प्रामाण्यं पाञ्चरात्रस्य, तथापि तन्न्यायेनैव शिवप्रोक्तानामप्यागमानां प्रामाण्यं प्राप्नोत्येव । श्रुतिस्मृतीतिहासपुराणप्रामाण्यादेकस्यैव परमात्मनो लीलया शिवविष्ण्वादिविग्रहयुक्ततावगम्यते । तथा च शिवो न परमेश्वर इति भ्रमो गौतमादिशापदोषसमुद्भवोऽवैदिकानामेव । तथा च 'प्रबलयोः परस्परं कलहेनासमुन्मेषे दुर्बलस्यैव समुन्मेष' इति बालाक्यधिकरणन्यायेन शैववैष्णवानां कलहेन प्रतिवातवशादसमुन्मेषे सति दुर्बलापि श्रुतिरेव समुन्मिषति । वस्तुतस्तु पाञ्चरात्रागमापेक्षया श्रुतिर्दुर्बलेत्येतदसङ्गतम् । श्रुतौ ह्यपौरुषेयतया वञ्चनादिकर्तृदोषमूलत्वशङ्का नैव सम्भवति । पाञ्चरात्रे तु प्रसक्ता सा शङ्का तत्कर्तुः परमाप्तत्वसर्वज्ञत्वाद्यनुसन्धानेन निरसनीया । वासुदेवस्य च सर्वज्ञत्वादिकं किमागमवशादेव निर्धार्यते, उत श्रुतिवशात् । आद्ये परस्पराश्रयः—पाञ्चरात्रप्रामाण्यनिर्धारणे सति वासुदेवः सर्वज्ञ इति निर्धारणं, तदीयसार्वज्ञ्यनिर्धारणे च उक्तशङ्कां विधूय प्रामाण्यनिर्धारणमिति । द्वितीये तु तत्प्रामाण्यनिर्धारणे श्रुतिरुपजीव्येति श्रुतेः प्रामाण्यमधिकं, तद्विरोधे पाञ्चरात्रस्य अप्रामाण्यमेव प्राप्नोति । तथा च श्रुतिविरुद्धजीवोत्पत्त्याद्यंशे तन्नादरणीयम् ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

**न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानमिति** । यद्यपि अनेकशिल्पपर्यवदातः कर्ता परश्वादिकमुत्पादयति, तथापि मनोरूपस्यान्तरस्य करणस्य जीवादुत्पत्तिर्न सम्भवति । अमनस्कस्याचेतनतया यत्नाद्यसम्भवेन कर्तृत्वायोगादिति तात्प-

र्थम् । न चैवंभूतामिति । प्रत्युत तद्विरुद्धामेव श्रुतिमुपलभामह इति द्रष्टव्यम् ॥४३॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥४४॥

अत्रोच्यते एवमपीति । यद्यप्यस्यां कल्पनायां सङ्कर्षणप्रद्युम्नानिरुद्धेषु जीवमनोऽहंकारपदसामानाधिकरण्यं पाञ्चरात्रगतमनुपपन्नमेव, तथापि तं दोषमाच्छाद्यैव दोषान्तरकथनमिति द्रष्टव्यम् ॥ ४४ ॥

ननु, पूर्वोक्तदोषपरिहारार्थमेवं कल्प्यते— चत्वारोऽप्येते यद्यपि परमात्मान एव, तथापि न तेषु जीवादिपदसामानाधिकरण्यविरोधः । सङ्कर्षणादिरूपेण जीवाद्यधिष्ठातृत्वस्य परमात्मनि कल्पनात् । वाय्वाद्यधिष्ठात्रीषु देवतासु वाय्वादिपदप्रयोगवत् जीवाद्यधिष्ठातृषु सङ्कर्षणादिषु जीवादिपदसामानाधिकरण्योपपत्तेः । अत एव नोत्पत्त्यसम्भवोऽपि । रामकृष्णादिरूपेणाविर्भाववत् सङ्कर्षणादिरूपेणापि परमात्मन आविर्भावसम्भवात् । सङ्कर्षणरूपेणाविर्भूतस्यैव परमात्मनः प्रद्युम्नरूपेणाविर्भावः, प्रद्युम्नरूपेणाविर्भूतादेव अनिरुद्धरूपेणाविर्भाव इति सङ्कर्षणात् प्रद्युम्नो जायत इत्युक्तेरपि न विरोधः । अत एव नानेकेश्वरकल्पनापि । व्यूहानां चतुष्ट्वपरिगणनं तु उपासनाविशेषाभिप्रायं भविष्यति । अतो न पाञ्चरात्रस्य वेदविरोधेनाप्रामाण्यमापादयितुं शक्यमिति शङ्कानिराकरणार्थं सूत्रम्—

## विप्रतिषेधाच्च ॥ ४५ ॥

जीवोत्पत्त्यादिगोचरस्य विरोधस्य यथाकथञ्चित् परिहारसम्भवेऽपि भूयानन्यो न्यायवेदार्थविरोधोऽस्ति, न स परिहर्तुं शक्यत इत्यभिप्रायेण सूत्रं व्याचष्टे —**विप्रतिषेध इति** । न्यायविप्रतिषेधमाह—**गुणगुणित्वेति** । एकस्यैव गुणत्वं गुणित्वं च विप्रतिषिद्धम् । आदिपदेन परिणाम्युपादानत्वेऽपि निर्विकारत्वमित्यादिकं गृह्यते । **इदं शास्त्रमधिगतवानित्यादीति** । आदिपदेन वेदोक्तगर्भाधानादिचत्वारिंशत्संस्कारवैपरीत्येनैव ब्राह्मणादीनां संस्कारप्रतिपादनं वेदनिन्दकपरिग्रहवैदिकसंस्कारवर्जनादिप्रतिपादनं च गृह्यते । तथाचात्यन्तवैदिकमार्गविरोधशालिनस्तस्य कथं प्रामाण्यम् । सर्वज्ञस्य वासुदेवस्य भ्रमासम्भवेऽपि व्यामोहार्थं बुद्धशास्त्रप्रणयनवत् पाञ्चरात्रस्यापि व्यामोहार्थं प्रणयनसम्भवात् । यत्तु तस्य एकायनशाखामूलत्वं कैश्चिदुक्तं, तत्तस्याश्शाखायाः पाञ्चरात्रसमानार्थायाः कुत्रापि वैदिकसमाजेषु प्रसिद्ध्यभावादनादरणीयम् । अवैदिकत्वं च तस्य भारत एव दर्शितं — 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ॥' इति प्रश्ने 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।

ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥' इति । एवं च यत् क्वचित् भारते पाञ्चरात्रप्रशंसावचनं, तत्पाञ्चरात्रोक्तानां संस्काराणां वैदिकाधिकारित्वाभ्युपगमे अनेकश्रुतिस्मृतिविरोधप्रसङ्गात् भारत एव च वैदिकप्रस्थानात् प्रस्थानान्तरत्वप्रतिपादनाच्च वैदिकमार्गात् परिभ्रष्टा ये पुरुषाः, तेषां पाञ्चरात्रोक्तेऽर्थे प्रवृत्तावुपयुक्तं भविष्यति । एवं 'भविष्यति प्रमाणं वै एतदेवानुशासन'मिति पाञ्चरात्रं प्रस्तुत्य यत् भावितया प्रामाण्यकीर्तनं, तत् कलौ वैदिकमार्गप्रच्युतेः प्राचुर्यात् प्राचुर्येण पाञ्चरात्रमार्गः प्रतीतः भविष्यतीत्येवमभिप्रायं व्याख्येयम् । अतो न स्पष्टवेदविरोधशालिनः पाञ्चरात्रस्य वैदिकपरिग्राह्यत्वमुपपद्यते । वेदविरोधरहितानां तु शैववैष्णवागमानां वैदिकपरिग्राह्यत्वे न काचिदनुपपत्तिः । पुराणादिवत्तेषामपि वेदमूलत्वेनैव प्रामाण्यसम्भवात् ॥४१॥

इति पाञ्चरात्राधिकरणम् ॥८॥

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां द्वितीय-
स्याध्यायस्य द्विती-
यः पादः ॥
ॐ

॥ अथ ॥

॥ द्वितीयाध्यायस्य ॥

॥ तृतीयः पादः ॥

---

# न वियदश्रुतेः ॥ १ ॥
# अस्ति तु ॥२॥

ननु, तृतीयतुरीयपादयोः भूतादीनामुत्पत्त्यादिकं चिन्त्यते। नास्याध्यायसङ्गतिः। वेदान्तसमन्वयविरोधिनो ये स्मृतितर्काः, तन्निराकरणमेव ह्यध्यायार्थः। न चाविरोधाध्यायोऽयम्, अस्मिन्नध्याये श्रुतीनामपि विरोधः परस्परं परिहरणीय एव। स पादद्वयेन परिह्रियत इति वाच्यम्। तथापि ब्रह्मविषयकवेदान्तसमन्वयपरिपन्थी यः श्रुतिविरोधः, स एव परिहर्तव्यः, न तु विरोधमात्रं, शास्त्रासङ्गतत्वप्रसङ्गात्। न च वियदाद्युत्पत्तिगोचरः श्रुतिविरोधः समन्वयपरिपन्थी। अतः किमर्थं परिहरणीयोऽस्मिञ्छास्त्रे। परिपन्थित्वे वा द्वितीयपादानन्तरं तद्विचारस्य का सङ्गतिरिति शङ्कां निराकुर्वन् तृतीयतुरीयपादार्थमाह—**वेदान्तेष्वित्यादिना**। यदि हि वियदाद्युत्पत्तिगोचरः श्रुतिसन्दर्भः वेदान्तगतो विरोधादप्रमाणं भवेत्, तदा तदेकवाक्यतापन्नानि ब्रह्मविषयवाक्यान्यप्यप्रमाणमिति शङ्का स्यात्। अतः स परिहरणीय एव। अन्येषां च वादिनां मतं परस्परविरोधात् श्रुतिविरोधाच्च निराकृतं, तर्हि वेदान्तानामपि परस्परविरोधादनादरणीयत्वमिति शङ्कायां प्रसक्तायां तन्निराकरणं द्वितीयपादानन्तरं सङ्गतमेव। अत्र तृतीयपादे भूतविषयश्रुतिविरोधः परिह्रियते, तत्प्रसङ्गात् परमेश्वरस्य जीवस्य चोत्पत्त्यादिप्रतिपादकानां वाक्यानां विरोधः परिह्रियते। तुरीयपादे तु प्राणगोचरश्रुतिविरोधपरिहारः, तत्प्रसङ्गागतं चान्यदपि किञ्चिद्विचारयिष्यते। **श्रुत्यर्थनिर्मलतायेति**। निर्मलत्वं चात्रास्य वाक्यस्यायमेवार्थ इति निर्धारणविषयत्वम्। अत्र पादद्वयेऽपि प्रथमं श्रुत्योः विरोधेनाप्रामाण्यमिति पूर्वः पक्षः। तदनन्तरमेकदेशिमतेन विरोधपरिहारः, ततः परं सिद्धान्तप्रतिपादनमिति क्रमः। **प्रथमं तावदाकाशमाश्रित्येति**। सृज्येषु मध्ये तस्य प्राथमिकत्वात् तद्विचार एव प्रथममिति भावः। **किमस्योत्पत्तिरस्तीति**। आकाशस्य छान्दोग्ये उत्पत्तिर्न श्रूयते। न च तत्र तैत्तिरीयकोक्त्या तदुत्पत्तिरुपसंहर्तुं शक्यते। क्वचिच्च नित्यत्वमपि श्रूयते। तैत्तिरीयके त्वाकाशस्योत्पत्तिरपि श्रूयते। एतेषां छान्दो-

ग्यादिवाक्यानां प्रामाण्यं सम्भवति वा, न वा । तदर्थं च विचार्यते-किमर्थविरोधोऽस्ति, नेति प्रथमं संशयः । यदा त्वर्थविरोधाभावं प्रतिपाद्य प्रामाण्यमुपपादयितुं शक्यते, तदा भाष्योक्तः संशय उत्पद्यते, नेतीति । ततश्च श्रुत्योर्विप्रतिषेध इति। एवं चादौ सूत्रद्वयं विरुद्धार्थकश्रुतिद्वयोपन्यासमुखेनाप्रामाण्यपूर्वपक्षोत्थापकमिति ध्वनितम् । एवं च 'गौण्यसम्भवादि'त्यारभ्य त्रिसूत्री अविरोधव्युत्पादनेन सिद्धान्त्येकदेशिमतप्रतिपादनार्था । प्रतिज्ञाहानिरित्यादिसूत्रद्वयं तु परमसिद्धान्तेनाविरोधसमर्थनार्थमिति द्रष्टव्यम् । ननु, वियत उत्पत्तेरश्रवणं सार्वत्रिकं वक्तुं न शक्यते । तैत्तिरीयके उत्पत्तिश्रवणात् । क्वचिदश्रवणं तु नाकाशस्योत्पत्तिं वारयितुं समर्थम् । उत्पत्त्युपसंहारसम्भवात् । अतः कथं विरोध इत्यभिप्रायेण शङ्कते —**नन्वेकवाक्यतेति । सकृच्छ्रुतस्येति** । आकाशोत्पत्त्युपसंहारे हि आकाशमसृजतेति वाक्यं 'तदैक्षत बहु स्यां प्रजायेये'ति वाक्ये तेजश्शब्दात् प्रागध्याहर्तव्यम् । तथा च कर्तृप्रतिपादकस्य तदितिप्रथमान्तस्याख्यातद्वयेनाकाङ्क्षायामावृत्तिस्स्यादिति भावः । ननु, यथा आवृत्तिर्न भविष्यति, तथैव वाक्यमध्याहरिष्याम इति शङ्कते—**ननु, सकृच्छ्रुतस्यापीति** । अस्मिन् पक्षे आवृत्त्यभावेऽपि तेजःप्राथम्यबाधो भवतीति परिहरति—**नैवमिति**। ननु, छान्दोग्ये वियतः उपसंहारपक्षेऽपि वियत्तेजसोर्युगपदेव प्रथमं सृष्टिं स्वीकरिष्यामः । तथा च तैत्तिरीयकेऽपि प्रथमस्थाने तेज उपसंहरिष्याम इत्याशङ्क्याह—**एतेनेति** । सङ्ग्रहवाक्यमेतत्, तद्विवृणोति—**तस्माद्वा इति** । तथा च तैत्तिरीयकात् वियद्वाय्वोरुपसंहारे सति तैत्तिरीयकश्रुत्यनुसारेण तृतीयस्थानत्वं तेजसः कल्पनीयम् । तथात्वेऽवगतप्रथमस्थानत्वभङ्गः । अतो नोपसंहारः सम्भवति । तथा च वियन्नोत्पद्यते । छान्दोग्ये तैत्तिरीयकवाक्यैकवाक्यताविरोधिनि तदुत्पत्तेरश्रवणात् । उपलक्षणमेतत् । 'वायुश्चान्तरिक्षञ्चैतदमृतमि'त्यादौ तदुत्पत्तिनिवारणाच्चेति प्रथमसूत्रेण विवक्षितम् । 'अस्ति त्वि'त्यनेन सूत्रेण तैत्तिरीयके वियत उत्पत्तिश्रवणं विवक्षितम् । ततश्च विरोधादप्रामाण्यमिति पूर्वपक्षः ॥१॥२॥

भवेदेवमप्रामाण्यं, यद्येकां श्रुतिमनुसृत्य श्रुत्यन्तरस्य नयनं न भवेत् । भवति तु तत् । अतो न विरोध इत्यभिप्रेत्य सिद्धान्तयति—**अस्मिन्विप्रतिषेध इति** ॥ तत्र छान्दोग्यश्रुतिमनुसृत्यैव तैत्तिरीयकश्रुतिर्व्याख्येयेत्येकदेशिमतं प्रथमतो दर्शयति—

## गौण्यसम्भवात् ॥३॥

ननूत्पत्तिप्रतिपादिका हि श्रुतिः । सा कथं वियन्नोत्पद्यते । कारणसामग्र्य-

सम्भवात् सृष्टेः प्रागाकाशराहित्यासम्भवात् तस्य जन्यत्वे विभुत्वासम्भवाच्चेति युक्तिभिर्गौणीत्युच्यते । श्रुतेः प्राबल्येन युक्तीनामाभासत्वोपपत्तेरित्याशङ्क्य न वयं युक्तिमात्रेणाकाशस्संभूत इति श्रुतिं गौणीं वर्णयामः, अपि त्वेतादृशोपपत्तिरूपतात्पर्यलिङ्गसचिवात् शब्दादित्याह—

## शब्दाच्च ॥४॥ इति॥

न ह्यमृतस्योत्पत्तिरिति । जन्यभावस्य नित्यत्वानुपपत्तेरिति भावः । आकाशशरीरमिति । शरीरपदं पूर्वपक्षशरीरं, सिद्धान्तशरीरमित्यादाविव स्वरूपपरम् । आकाश आत्मेत्यात्मपदमपि स्वरूपपरमेव । ब्रह्मण आकाशस्वरूपत्वोपचारे आलम्बनं श्रुत्यन्तरप्रसिद्धं विभुत्वं नित्यत्वं च पर्यवस्यतीति भावः ॥४॥

## स्याच्चैकस्यापि ब्रह्मशब्दवत् ॥५॥

**पदोत्तरमिति** । शङ्कापदानामुत्तरभूतमित्यर्थः । शङ्कापदान्येवाह— **स्यादेतदिति** । **आनन्दे च मुख्य इति**। 'आनन्दो ब्रह्मेति व्यजानादि'ति वाक्ये । **अत एव च ब्रह्मविज्ञानेनेति**। यथैकमेवेत्यवधारणं स्वकार्यापेक्षम्, अद्वितीयमिति तु द्वितीयोऽधिष्ठाता नास्तीत्येतत्परं वा, ब्रह्मविलक्षणं द्वितीयं नास्तीत्येतत्परं वा, तथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि ब्रह्मणि ज्ञाते तत्कार्यं कृत्स्नं ज्ञातं भवतीत्येतत्परं वा, अकार्यमपि ब्रह्मसदृशत्वात् ब्रह्मणि विदिते विदितप्रायमित्यभिप्रायं वा भविष्यतीति वियतो ब्रह्मकार्यत्वाभावेऽपि ब्रह्मज्ञाननान्तरीयकज्ञानत्वात्— सर्वविज्ञानप्रतिज्ञासङ्गतिरिति प्रकारान्तरमाह—**अपि चेति** ॥५॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥६॥

**न काचन मदिति** । मामविषयीकुर्वाणा क्वापि विद्या किमपि ज्ञानं नास्तीत्यर्थः । अत्रैकदेशेनोत्पत्त्यसम्भवरूपलौकिकोपपत्तिसहकृतात् ' आकाशवत् सर्वगतश्च नित्य ' इत्यादिशब्दादाकाशोत्पत्तिवचनम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च गौणं व्याख्येयमित्युक्तं, तदसङ्गतम् । आकाशोत्पत्तिवचनं हि उपक्रान्तानन्त्योपपादनार्थं प्रवृत्तम् । न तदन्यथानेतुं शक्यम् । एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि गतिसामान्यादिरूपानेकतात्पर्यलिङ्गोपेतं नान्यथा व्याख्यातुं श-

क्यम्। तानि च तात्पर्यलिङ्गानि भाष्ये प्रदर्शितान्येव। न चाकाशस्याकार्यत्वेऽपि अविद्यादिवत् ब्रह्मण्यध्यस्ततया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासङ्गतिरिति वाच्यम्। श्रुतिविरोधात्। श्रुत्या हि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुरि'त्याकाशस्य कार्यत्वप्रतिपादनेनैव प्रतिज्ञा समर्थ्यते। अतो न स्वकपोलकल्पनया प्रतिज्ञाव्याख्यानमुचितम्। न चैकदेशिनापि तात्पर्यग्राहिकोपपत्तिरुपन्यस्ता। सत्यमुपन्यस्ता, परं तु लौकिकोपपत्तिरूपात्तात्पर्यग्राहकाद्वैदिकमानन्त्यवाक्यैकवाक्यतादिरूपं तात्पर्यग्राहकं प्रबलमिति। एवमेकदेशिनोक्ते वियदुत्पत्तिश्रुतेर्गौणत्वे निरस्ते विरुद्धत्वात्तर्ह्यप्रामाण्यमेवास्त्विति पूर्वपक्षिणः प्रसक्तं चोद्यमनुवदति—यदुक्तमित्यादिना। परिहरति—**नैकवाक्यत्वादिति**। अयं भावः—विरोधे हि प्रसक्ते अपौरुषेयस्य वेदस्य तावदप्रामाण्यमङ्गीकर्तुमयुक्तम्। अतः प्रबलवचनानुसारेण दुर्बलस्यान्यथानयनमावश्यकम्। तत्र छान्दोग्यावगततेजस्सर्गप्राथम्यानुसारेण यदि वियत्पवनयोः सृष्टिरेव नास्तीत्युच्येत, तदा तेजसस्तृतीयस्थानत्वमवगतं बाध्येत, वियत्पवनयोः सृष्टिश्रुतिश्चेति। न चैकमनुरुध्यानेकबाधो न्याय्यः। तेजसश्च छान्दोग्ये सृष्टिप्राथम्यं न श्रौतम्। अपि तु प्रथमपाठेनार्थादवगम्यते। न चार्थिकमर्थमनुसृत्य शब्दार्थबाधो न्याय्यः। अपि च प्राथम्यं सर्गधर्मः। सर्गस्तु पदार्थः। न च धर्मभूतेन प्राथम्यात्मना क्रमेण पदार्थस्य सर्गस्य बाधो न्याय्यः। अतः प्रबलया तैत्तिरीयश्रुत्या छान्दोग्यश्रुतिरेवान्यथा नेयेति। न केवलं तैत्तिरीयकश्रुतिपर्यालोचनयैवात्र वियत उपसंहारः, अपि तु छान्दोग्यगतैकविज्ञानेन सर्वविज्ञानप्रतिज्ञयाप्यपेक्षित इत्याह—**अपि च छान्दोग्य इति**। एकदेशिनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादेर्यदन्यथानयनं कृतं, तदनूद्य दूषयति—**यच्चोक्तमित्यादिना**। **न सम्यक् विज्ञानं स्यादिति**। क्षीरोदकयोः संसृष्टयोः यत् क्षीरमिति क्षीरत्वप्रकारकं ज्ञानं, तदुदकांशे भ्रम एव। उदकस्य क्षीरोपादेयत्वाभावेन परमार्थगत्या क्षीरस्वरूपत्वाभावात्। एवं वियद्ब्रह्मणोरुपादानोपादेयत्वमनङ्गीकृत्यैव यदि संसृष्टत्वमात्रमङ्गीक्रियेत, तदा ब्रह्मात्मना वियद्ग्रहणमपि असम्यग्दर्शनं स्यादित्यर्थः। ऐन्द्रजालिककृत्यं मायेत्युच्यते। कविकृतमसद्वर्णनमलीकमित्युच्यते। चोरादिकृत्यं वञ्चनमित्युच्यते। **न तदपूर्ववादिति**। एकविज्ञानेन यत्किञ्चिद्विज्ञानस्य लोकसिद्धत्वेनोपदेशानपेक्षणात्। अपि चैवं येनाश्रुतमित्यत्राश्रुतादिशब्दाः 'कस्मिन्नु भगवो विज्ञाते सर्वमि'त्यादौ सर्वपदं च सङ्कुचितं स्यादिति उपसंहारव्याजेनाह—तस्मादिति ॥ ६ ॥

# यावद्विकारं तु विभागो लोकवत् ॥७॥

यत्तावदुक्तमेकदेशिना—वियन्नोत्पद्यते, असम्भावितकारणकत्वादिति, तत्प्रतिपक्षोऽनेन सूत्रेण प्रतिपाद्यते । तत्र यावत्पदं व्याप्त्यर्थकम् । तथा च विकारव्याप्यो विभागः सर्वः, यथा घटादिगतो विभाग इति सूत्रार्थमभिप्रेत्याह—**यावदिति** । ननु, यद्याकाशस्य विभक्तत्वेन हेतुना विकारत्वं साध्यते, तर्हि ब्रह्मणोऽपि प्रपञ्चभेदप्रतियोगित्वेन विकारत्वं प्रसज्येतेति शङ्कते—**नन्वात्मापीति** । 'न आत्मन आकाश' इत्यादिपरिहारस्यायमभिप्रायः—यो विभक्तः, स विकार इत्युत्सर्गः सति बाधके त्यज्यते । आकाशे तु बाधकाभावात् किमर्थं परित्यक्तव्यः । तावतापि ह्यसम्भावितत्वात् आकाशे समवाय्यसमवायिनिमित्तकारणानां तन्नोत्पद्यत इति तार्किकयुक्तिः प्रतिपक्षिता भवत्येव । न ह्ययं नियमस्तार्किकेणाप्यास्थातुं शक्यते । ध्वंसस्य कारणत्रयाभावेऽपि जन्यत्वाभ्युपगमात् । न च भावविषयोऽयं नियम इति वाच्यम् । शुक्तिरजतादेर्भावस्यापि द्रव्यद्वयसंयोगरूपासमवायिकारणं विनैवोत्पत्तिदर्शनात् । निराकृता चेयं तार्किकाभिमता आरम्भप्रक्रिया वैशेषिकाधिकरणे । ततश्च ब्रह्माविद्यादीनामकार्यत्वस्य श्रुतिस्मृतिन्यायसिद्धतया यद्विभक्तं, तत् कार्यमित्युत्सर्गबाधे न काचिदनुपपत्तिः । निरात्मकम् आगमापायरहितोपादानरहितं स्यात् । तथा च ब्रह्मणोऽपि कार्यत्वे नाशसम्भवात् शून्यपरिशेष एवेति न्याय उत्सर्गबाधकः । शून्यवादमुपेत्यैवात्मनो जन्यत्वमङ्गीकुर्वाणं प्रत्यात्मा नोत्पद्यते, आत्मत्वात् स्वप्रकाशत्वाच्च, व्यतिरेकेण घटवदित्यनुमानमाह—**आत्मत्वादेवेत्यादिना** । तत्र हि प्रत्यक्षादीनीत्यादिवाक्येनात्मसु स्वप्रकाशत्वहेतुव्यावृत्तिर्दर्शिता असिद्धिनिरासाय । न ह्यात्मात्मन इति वाक्येन सङ्ग्रहोक्तमात्मनः स्वप्रकाशत्वं विवृणोति—**आत्मा त्विति** । प्रमाणादीनां व्यवहारः अवभासः, तं प्रति तादात्म्येनाश्रयत्वात् चक्षुरादिजन्यज्ञानात् प्रागेवात्मा स्वप्रकाशतया सिध्यतीत्यर्थः । अपि च शून्यतोपगमे तस्य साक्षात्कारः कस्यचिदपेक्षितः । तथा च य एव शून्यद्रष्टा परिशिष्यते, स एवात्मेति सिध्यतीत्याह—**य एव निराकर्तेति** । न च निराकरणद्रष्टुरभावेऽप्यधुनैतदनुमीयते । अतः परं सर्वनिराकरणं भविष्यतीति वाच्यम् । तथाविधलिङ्गाभावेनानुमानासम्भवादिति भावः । ननु, क्षणिकत्वादात्मनः प्रतिक्षणं तस्य निराकरणमित्याशङ्क्य प्रत्यभिज्ञया स्थायितासिद्धेर्न क्षणिकत्वमित्यभिप्रेत्याह—**तथाहमेवेति** । फलं तु परमसिद्धान्ते आकाशस्य अविद्याशबलितब्रह्मकार्यतया आकाशादिक्रमेण प्रपञ्च-

सृष्टिं ध्यात्वा आकाशस्याविद्यायां लयो ध्यातव्य इति प्रणवालम्बनेषु निष्प्रपञ्च-योगेषु सिध्यति । एकदेशिमते तु नैतत् सिध्यतीति द्रष्टव्यम् ॥ ७॥

इति वियदधिकरणम् ॥ १ ॥

## एतेन मातरिश्वा व्याख्यातः ॥८॥

अतिदेशनिवर्त्यां विशेषाशङ्कां दर्शयितुं शङ्कते—ननु, वायोराकाशस्य चेति । सत्यमेवमेतदिति । अयमभिप्रायः—'वायुश्चान्तरिक्षं चैतदमृत'मिति श्रुतिरमृता देवा इति वचनवत् उपचारत इति यत् पूर्वाधिकरणे उक्तं, तदाकाशांश एव युक्तं, न तु वाय्वंशेऽपि शक्यं वक्तुम् । बृहदारण्यके हि 'म्लोचन्ति ह्यन्यादेवता न वायुः सैषानस्तमिता देवता यद्वायुरि'ति विशिष्य वायोरभ्यासेनास्तमयप्रतिषेधः प्रतिपाद्यते । न चाभ्यासेन प्रतिपाद्यमानोऽर्थः औपचारिक इति कल्पयितुं युक्तम् । न चात्र वाक्ये देवतायाश्चेतनायाः अस्तमयप्रतिषेधः प्रतिपाद्यते, न तु भूतस्येति वाच्यम् । 'ज्वलिष्याम्येवाहमित्यग्निर्दध्रे' इत्यादिपूर्ववाक्ये ज्वलनादिलिङ्गेनाग्न्यादिभूतं प्रस्तुत्य 'म्लोचन्ति ह्यन्या देवता' इति हि देवतापदं तत्र प्रयुक्तम्, एवमिदमपि पदं वायुपदसामानाधिकरण्यात् भूतपरं भविष्यति । चेतनपरत्वनिर्बन्धे वा भूतविशिष्टचेतनपरमित्येव वक्तव्यं, न तु निष्कृष्टवाय्वभिमानिदेवतापरम् । अतो विशेषणे भूतांशेऽपि अस्तमयप्रतिषेधो लभ्यत इति विशेषाशङ्का । अयमत्र परिहाराभिप्रायः—इदमपि वाक्यमनेन ह्येतत्सर्वं वेदेत्येकविज्ञानेन सर्वविज्ञानं प्रस्तुत्य तदुपपादनाय सृष्टिं प्रक्रम्य तत्प्रसङ्गागतस्य तस्य वायोरुपासनां प्रदर्शयितुमियं स्तुतिः । ततश्च यथा 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा, न वे'ति फलसंशयप्रतिपादकं वाक्यं 'स्वर्गकामो यजेते'ति प्रधानवाक्यानुरोधेनातीकाशवाक्यैकवाक्यतापन्नं तद्विधिस्तुत्यर्थं सदौपचारिकम्, एवमिदमपि प्रधानसर्वविज्ञानप्रतिज्ञानुरोधादौपचारिकं द्रष्टव्यम् ॥८॥

इति मातरिश्वाधिकरणम् ॥ २ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥९॥

सङ्गतिं दर्शयति—वियत्पवनयोरिति । 'सर्व आत्मानो व्युच्चरन्ती'ति श्रूयते आत्मन उत्पत्तिः, 'न चास्य कश्चिज्जनिता न चाधिप' इति उत्पत्तिप्रतिषेधश्च । अतः श्रुत्योर्विरोधः । न च 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य' इत्यत्रात्मोत्पत्तिः परिहरिष्यते । ततस्तेन पौनरुक्त्यमस्येति वाच्यम् । 'सर्व एत आत्मानो व्युच्चरन्ती'ति श्रुते-

जीवपरत्वं स्वीकृत्य तत्र विरोधः परिहरिष्यते । इह तु परमात्मपरत्वमुपेत्य विरोधपरिहारः क्रियते । तत्र परमात्मा जन्यो भवति । कारणत्वात् । आकाशादिवदिति उपपत्तिसहकृता 'सर्व एत आत्मान' इति श्रुतिः प्रबला, तदनुसारेण 'न चास्य कश्चिदि-त्याद्युत्पत्तिप्रतिषेधाः 'वायुश्चान्तरिक्षं चैतदमृत'मितिवत् गौणा व्याख्येयाः । न च ब्रह्मणः कारणासम्भवः । ब्रह्मान्तरस्य कारणत्वसम्भवात् । तस्याप्यन्यत्, तस्याप्यन्यदिति पूर्वपूर्वकारणानवस्था तु प्रमाणसिद्धत्वात् न दोषः । ब्रह्मण एकत्वादिप्रतिपादनं तु जात्याद्यभिप्रायं यथाकथञ्चिन्नेयमित्येकदेशिमतम् । परमसिद्धान्तमाह—**न खलु ब्रह्मण इति**। ब्रह्मणो ह्युत्पत्त्यादिसर्वविकारप्रतिषेधपरा बह्वयः श्रुतयोऽनेकतात्पर्यलिङ्गोपेताः नैकया श्रुत्या अन्यथयितुं शक्याः । अतः क्वाचित्कोत्पत्तिप्रतिपादनमेवौपाधिकोत्पत्त्यभिप्रायं व्याख्येयम् । या च तदुपबृंहणायोपपत्तिरुक्ता—कारणत्वात् ब्रह्मापि जन्यमिति, तस्या उपपत्त्यन्तरेण प्रतिघातमाह—**सन्मात्रं हि ब्रह्मेत्यादिना** । **असत्यतिशय इति** । मृद्घटयोरुपादानोपादेययोर्वैलक्षण्यं दृष्टम् । अतोऽत्यन्तसालक्षण्ये कार्यकारणभावो नोपपद्यत इति भावः । **मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसङ्गादिति** । प्रमाणसिद्धे हि कार्यकारणभावे अनवस्था न दोषाय । इह तु नास्ति प्रमाणम् । उक्तानुमानस्याप्रयोजकत्वात् श्रुतिबाधितत्वात् 'सन्मात्रं ही'त्यादिभाष्योक्तविकल्पासहत्वाच्च । एकदेशिमते ब्रह्मावाप्तिर्मोक्षोऽपि न निरतिशयपुरुषार्थः । जन्यस्य ब्रह्मणो नाशसम्भवात् । सिद्धान्ते तु तत्सिद्धिः ॥ ९ ॥

इति असम्भवाधिकरणम् ॥ ३ ॥

# तेजोऽतस्तथा ह्याह ॥ १० ॥

भूतोत्पत्तिविचारे ब्रह्मण उत्पत्तिः सङ्गतिविशेषेण प्रसक्तत्वात् निरूपिता, पुनस्सैव निरूप्यते । वियद्वायुतेजसां क्रमेण सृष्टेः प्रतिपादनात् वायुविचारानन्तरं तेजोनिरूपणम् । **श्रुतिविप्रतिपत्तौ सत्यामिति** । तथा चाप्रामाण्यमिति पूर्वः पक्षः । एकदेशिमतमाह—**प्राप्तं तावदिति । वायोरनन्तरमग्निस्सम्भूत इतीति** । ननु, 'वायोरग्निः, अग्नेराप' इत्याद्या पञ्चमी कारकविभक्तिरेवोपेया । 'तस्माद्वा एतस्मादात्मन' इत्यादिकारकविभक्तिसमभिव्याहारात् । क्रमार्थत्वे तूपपदविभक्तिस्स्यात् । सा तु दुर्बला । श्रुतक्रियापदव्यतिरेकेण पदान्तराध्याहारसापेक्षत्वात् । दर्शितश्चात्र पदान्तराध्याहारः—वायोरनन्तरमग्निः सम्भूत इति । ततश्च वाय्वादिपूतरेषु कार्येषु पूर्वपूर्वसृष्टवियदादिविशिष्टब्रह्मण एवोपादानत्वमिति चेत्,

उच्यते—तथासति हि तज्जलानित्यादिषु वचनेषु बहुषु यत् ब्रह्मणो नैरपेक्ष्यमवगतं, तत् बाध्येत । स्पष्टं च ब्रह्मव्यतिरिक्तस्योपादानस्य व्यावर्तनं दृश्यते—'सर्वाणि ह्वा इमानि भूतानि आकाशादेव समुत्पद्यन्त' इति । अत्र ह्याकाशशब्दो ब्रह्मपर इति व्यवस्थापित'माकाशस्तल्लिङ्गादि'त्यत्र । अतोऽनेकश्रुत्यनुग्रहायाकाशाद्वायुरित्याद्याः पञ्चम्यः आनन्तर्यप्रतिपादिका इति तात्पर्यमुच्यते । तेजोऽत इत्यनेन वायुरप्याकाशाज्जायत इति सूचितः । न्यायसाम्यात् । **तदधिकारे पृथिव्या इति** । पृथिव्या ह्योषधीः प्रत्युपादानत्वं प्रत्यक्षसिद्धं न प्रत्याख्यातुं शक्यमिति भावः । **अपादानपञ्चम्यैवैषेतीति** । न चोदाहृतश्रुतिविरोधात् पञ्चमीस्वारस्यं परित्याज्यमित्युक्तमिति वाच्यम् । 'एतस्माज्जायते प्राण' इत्यादौ हि ब्रह्मणो नैरपेक्ष्यं न श्रुतम् । एवकाराश्रवणात् । न च 'व्रीहिभिर्यजेते'त्यादावेवकाराश्रवणेऽपि नैरपेक्ष्यमुपेतमिति वाच्यम् । वाक्यगतिपर्यालोचनया तस्योपेतत्वात् । तद्धि वाक्यं व्रीहिनियमपरं सत् यागे व्रीह्याद्यवियोगं प्रतिपादयति । व्रीहिस्वरूपस्य वचनं विनैव प्राप्तत्वात् । द्रव्यान्तरसमुच्चये च तदंशे व्रीहिवियोगो भवेत् । अतोऽर्थात्तत्र इतरनिवृत्तिरवगम्यते । प्रकृते त्वपञ्चीकृतवाय्वाद्युपादानं शास्त्रैकसमधिगम्यमिति शास्त्रबलेन यावन्ति तत्रोपादानान्यवगम्यन्ते, तावतां समुच्चय एव न्याय्यः । आकाशादेवेत्येवकारस्तु न निरङ्कुशमितरकारणानि व्यावर्तयितुं समर्थः । घटादिषु मृदादिकारणानां प्रत्यक्षसिद्धत्वात् वियदादिष्वपि 'मायां तु प्रकृतिं विद्यादि'ति श्रुतिसिद्धमायायाः सत्त्वाच्च । अतः स्वसदृशमूलकारणान्तरव्यवच्छेदार्थ एव स इति न वाय्वादिषु श्रुतिस्वारस्यप्राप्ताकाशादिसमुच्चयो निराकरणीयः । **पारम्पर्यजत्वेऽप्यविरोधादिति** । यद्यपि ब्रह्मणो वाय्वादिषूत्तरकार्येषु न परम्परयैव कारणत्वम् । यथा घटे कुलालस्य पितुः, अपि तु यथा मृदाहरणादीनि घटकारणानि सम्पाद्य तत्सचिवः कुलालो घटं करोतीति घटकारणकारणस्यापि तस्य घटं प्रत्यपि साक्षादेव जनकत्वं, तदुपादानगोचरकृतिशालित्वात्, तथा ब्रह्मणोऽपि वाय्वादिकारणवियदादिजनकस्यापि वाय्वादौ साक्षादेवोपादानत्वं कर्तृत्वं च वायुस्सन्नित्यादितादात्म्योपलम्भात् । 'इदं सर्वमसृजते'ति श्रुत्या सर्वकर्तृत्वस्य 'ऐतदात्म्यमिदं सर्वमि'ति सर्वोपादानत्वस्याविशेषेण प्रतिपादनाच्च , तथापि कारणकारणत्वमस्तीत्येतावता पारम्पर्यजत्वोक्तिः । तावतैव दृष्टान्तमाह—**तस्याश्शृतमिति** । तस्याः गोः, शृतं दुग्धम् । तस्या दधीत्यादौ षष्ठी पारम्पर्यसम्बन्धे । अत्रैकदेशिमते ब्रह्मण एव सकाशाद्वाय्वादेः सृष्टिश्चिन्तनीया , तत्रैव प्रलयश्चिन्तनीयः । सिद्धान्ते तु वियदादिक्रमेणापि सृष्टिश्चिन्तयितुं शक्यते, तथा वाय्वादेः वियदादिषु लयः क्रमेण ब्रह्मणीत्यपि चिन्तयितुं शक्यम् । सद्वंश्यत्वमात्रमपेक्षत इत्यभ्युच्चयोक्तिः । सर्वस्य भावजातस्य साक्षात् ,

प्रणाड्या चेश्वरवंश्यत्वादिति ह्युक्तम् ॥ १० ॥

इति तेजोऽधिकरणम् ॥ ४ ॥

## आपः ॥ ११ ॥

पूर्वसूत्रगतपदानुवृत्त्या सूत्रं व्याचष्टे—**अतस्तथेत्यादिना** । **अपो नान्तरयामीति** । तासां परित्यागे हि 'इदं सर्वमसृजते'ति 'अग्नेराप' इति च श्रुत्योर्विरोधादप्रामाण्येन पूर्वपक्षे अपामग्निविरोधित्वेन तत्प्रकृतित्वासम्भवात् अग्नेराप इत्यानन्तर्यार्थिकैव पञ्चम्यगत्या स्वीकार्येति विशेषाशङ्कानिवारणं न सूचितं भवेत् । अतस्तच्छङ्कायास्त्रिवृत्कृताग्नेरपां च विरोधे सत्यपि अत्रिवृत्कृतयोरप्तेजसोर्विरोधो नास्तीति परिहारसूचनाय क्रमप्राप्ता आपोऽपि सूत्रिता इति भावः ॥ ११ ॥

इति अबधिकरणम् ॥ ५ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नमि'ति क्वचित्, अन्यत्र च 'ता आप ऐक्षन्त बह्व्यस्स्याम प्रजायेमहीति ता अन्नमसृजन्ते'त्याम्नायते । अतश्श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे एकदेशिमतमाह—**प्राप्तं तावदिति** । अन्नशब्दो यद्यपि 'भिस्सा स्त्री भक्तमन्धोऽन्नमि'ति कोशानुसारेणौदने रूढः, तथापि 'तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवती'ति वाक्यशेषाम्नातं वर्षणाधीनभूयिष्ठत्वं व्रीहियवाद्योषधीष्वेव स्वरसमित्योषधीपर एवान्नशब्दः 'ता अन्नमसृजन्ते'त्यत्र प्रतीयते । एवमेव च 'अद्भ्य एव तदध्यन्नाद्यं जायत' इति आद्यमिति पदं च सङ्गच्छते । न हि तदन्नशब्दस्य विशेषणम् । ओदनादेरदनीयत्वाव्यभिचारात् । अनदनीयस्याप्यन्नस्याब्जन्यत्वेन व्यावर्तयितुमशक्यत्वाच्च । तस्मात् 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति वाक्यमिवाद्यशब्दोऽप्यन्नशब्दस्य योगप्रदर्शनपर एव । अत इह ओदनानोदनसाधारण्येनादनयोग्यं सर्वमन्नशब्देन ग्राह्यमित्यभिप्रेत्य व्रीहियवादि वेत्युक्तम् । न चैवंसति 'अद्भ्यः पृथिवी । पृथिव्या ओषधय' इति वाक्यं विरुध्येत । उपसंहारसम्भवात् । ननु, तर्हि सिद्धान्त्येकदेशिमतयोः को विशेषः । येनापि हि सिद्धान्तिनान्नशब्दस्ता अन्नमसृजन्तेति पृथिवीलक्षक इत्युच्यते, तन्मतेऽपि आपः पृथिवी ओषधय इत्येव सृष्टिक्रमः । येनाप्येकदेशिनोपसंहारः स्वीक्रियते, तन्मतेऽपि अयमेव क्रम इति चेत्, उच्यते—एकदेशिमते पृथिव्या उपसंहारेऽपि यथा तेजसि वियत्पवनयोरुपसं-

हारेऽपि न साक्षात् ब्रह्मजन्यत्वं विरुध्यते, एवमोषध्यादावन्ने 'ता अन्नमसृजन्ते'ति श्रुतिप्रामाण्यात अपञ्चीकृतानामपामपि साक्षादेव कारणत्वमुपपद्यते। सिद्धान्ते त्वन्नशब्दस्य पृथिवीलक्षकतया अपञ्चीकृतानामपामन्नाद्ये कारणत्वग्राहकप्रमाणाभावात् पृथिव्यादिद्वारैवोपयोग इति विशेषः। **पृथिव्येवेयमन्नशब्देनेति**। अन्नशब्दरूढिर्हि एकदेशिनापि वाक्यशेषानुसारिणा परित्यक्तव्यैव। तथा चामुख्यार्थग्रहणे प्रसक्ते अधिकाराद्यनेकप्रमाणानुसारेणैकं वाक्यशेषमवधूयान्नशब्दः पृथिवीलक्षक एव ग्राह्यः। अधिकारादयश्च भाष्ये प्रपञ्चिताः—**अधिकारस्तावदित्यादिना। तदप्यपां शर इति।** तत्तत्राप्सु सृष्टासु सतीषु तासां यश्शरः क्षीरस्य मण्ड इव य ईषद्धनीभूतो विकार आसीत्, स समहन्यत इतस्ततो विप्रकीर्ण एकीभावं प्राप्य कठिनोऽभवत् विकार एव पृथिवीसंज्ञां प्राप्तवानित्यर्थः। यद्यपीदं वाक्यं हिरण्यगर्भसृष्टिप्रतिपादकत्वात् स्थूलानामेवापां स्थूलां पृथिवीं प्रति कारणत्वं प्रतिपादयति, 'ता अन्नमसृजन्ते' ति वाक्यं तु सूक्ष्मभूतसृष्टिप्रतिपादकं, तदनन्तरं त्रिवृत्करणप्रतिपादनात, तथापि यदा स्थूलानामपां स्थूलां पृथिवीं प्रत्येव साक्षात्कारणत्वं, न तु व्रीहियवादावन्ने, तदा अपञ्चीकृतानामपां साक्षादेव व्रीहियवादावन्ने कारणत्वं दूरनिरस्तमेव भवतीति तदुदाहरणं प्रकृतोपयुक्तं भवत्येव। एकदेश्युदाहृतवाक्यशेषगतिमाह—**वाक्यशेषोऽपीति**। यथा पार्थिवं व्रीहियवादि वृष्टिरूपाब्जन्यम्, एवं तज्जातीया पृथिव्यपि सूक्ष्माभ्योऽद्भ्यो जायत इति सम्भावनार्थोऽयं वाक्यशेष इति भावः। एकदेशिमते व्रीहियवादिलयानुसन्धानं पृथिव्यादिलयक्रमेणापि कर्तुं शक्यम्। साक्षादपि अपञ्चीकृतास्वप्सु कर्तुं शक्यम्। सिद्धान्ते तु पृथिव्यादिलयक्रमेणैवेति फलविशेषः ॥ १२ ॥

इति पृथिव्यधिकरणम् ॥ ६ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

नन्वत्र भूतानां वियदादीनामुत्तरोत्तरभूतेषु यथाश्रुत्युपादानत्वे व्यवस्थापिते वियदादीनां तर्हि ब्रह्मवदेवान्यानधिष्ठितानामुपादानत्वमस्त्विति शङ्कायां प्राप्तायां तन्निराकरणार्थमिदमधिकरणमिति भाष्यपर्यालोचनया प्रतीयते। अचेतनानां प्रवृत्तिर्निरधिष्ठातृका नोपपद्यत इति शङ्कायां च 'ता आप ऐक्षन्ते'त्यादिश्रुतिपर्यालोचनया भूतानां चेतनत्वावगमात् यथा चेतनस्य ब्रह्मणो जगद्रचनायां न चेतनान्तरापेक्षा, एवं भूतानामपि जगद्रचनायां न चेतनान्तरापेक्षेति

प्रतीयते । नैतदुपपद्यते । भूतानां चेतनकार्यप्रवृत्त्यादिराहित्येनाचेतनत्वात् । 'तत्तेज ऐक्षते' त्यादिश्रुतिस्तु गौणी इतीक्षत्यधिकरण एव दर्शितम । उच्यते– 'ता आप ऐक्षन्ते' त्यादिश्रुतिर्मुख्यैवास्तु, न गौणी । शास्त्रप्रामाण्यात् । अस्मदादिभिर्दुर्विभाव्यं भूतानामपि चैतन्यमस्त्विति शङ्कको मन्यते । तथा चायमधिकरणार्थः– 'आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति । तदपोऽसृजते' ति श्रुतिः, 'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । सतपस्तप्त्वा । इदं सर्वमसृजते' ति श्रुतिश्च विरुद्धे । एका किल भूतानामुत्तरोत्तरभूते कर्तृत्वं प्रतिपादयति । द्वितीया तु सर्वत्रेश्वरस्य कर्तृत्वं प्रतिपादयति । न चेश्वरः सर्वत्र साधारणकारणं, तत्तद्भूतं तु विशेषकारणमिति कर्तृद्वयसमावेशोऽस्त्विति वाच्यम् । कर्त्राकाङ्क्षाया विशेषावगतेनैव कर्त्रोपशमे सति समुच्चयकल्पनाया अयोगादिति मन्यते । तथा चाप्रामाण्यमिति पूर्वपक्षे एकदेशिमतमीश्वरकर्तृत्वप्रतिपादिकायाः श्रुतेः पारम्पर्येऽप्युपपत्तेर्न विरोध इति । नचैवंसति प्रत्यक्षदृष्टकुलालादिभिरेव घटादौ कर्त्राकाङ्क्षानिवृत्तेर्न तत्रेश्वरस्य कर्तृत्वं भवेत् । प्रत्यक्षदृष्टेन राज्ञैव परिपालनोपपत्तेः न परमेश्वरस्य सर्वपरिपालकतापि स्यादिति वाच्यम् । इष्टापत्तेः । सर्वकर्तृत्वप्रतिपादिकायाः श्रुतेः पारम्पर्येणैवोपपत्तेरुक्तत्वात् । एवं सर्वविषयनियन्तृत्वश्रुतिरपि पारम्पर्यणैवोपपद्यते । न चैवंसति 'नान्योऽतोस्ती 'ति श्रुतिरीश्वरातिरिक्तस्य द्रष्टृत्वं वारयन्ती भूतानां द्रष्टृत्वाभ्युपगमे बाध्येतेति वाच्यम् । तस्या जीवब्रह्माभेदप्रतिपादनपरत्वेन भूतानां द्रष्टृत्वव्यावर्तने तात्पर्याभावात् । एवं चैकदेशिमते सगुणेषूपासनेषु ध्येयं सर्वकर्मत्वादिकं पारम्पर्येणैवेति फलं द्रष्टव्यम् । **आकाशाद्वायुरिति** । नन्वत्र कर्तृत्वं भूतानां नावगम्यते । आकाशादित्यादिपञ्चम्या उपादानार्थकत्वादिति चेन्न । 'ता आप ऐक्षन्ते' तिश्रुत्यर्थोपसंहारे सति कर्तृत्वस्याप्यवगन्तुं शक्यत्वादिति भावः । अयमत्र सिद्धान्ताभिप्रायः–कार्यमात्रे ईश्वरस्य कर्तृत्वं श्रुतिस्वारस्यात साक्षादेवावगम्यते, एवं नियन्तृत्वमपि । न चैतत् परित्यक्तुं शक्यम् । न चैकेनोपपत्तौ नान्यनिवेशः सम्भवतीति वाच्यम् । न हि वयमीश्वरस्य कर्तृत्वं युक्त्या कल्पयामः । येनेत्थं शङ्का भवेत् । अपि तु शास्त्रवशेनोपगच्छामः । अतो यथाशास्त्रमुपगमो न्याय्यः । शास्त्रमाह— **तथाहि शास्त्रमिति** । एवं च यद्यपि भूतानां चैतन्यं भवेत्, तथापीश्वरस्य सर्वकर्तृत्वं न व्यावर्तयितुं शक्यम् । परमार्थतस्तु तदेव नास्ति । 'नान्योऽतोऽस्ति द्रष्टे'ति श्रुतिसहकृतेन प्रवृत्त्यादिराहित्यलिङ्गेन तदचेतनत्वावधारणात् । न च 'नान्योऽतोऽस्ती'ति जीवब्रह्मैक्यमाहत्य प्रतिपादयति, अपि तु द्रष्ट्रन्तरनिषेधमुखेन तत्र पर्यवस्यति । तथा च यदि

भूतानामपीक्षितृत्वमुपगतं भवेत्, तदोत्पत्त्यादिविकारशालिनां तेषां ब्रह्मान्यत्वावश्यम्भावाद्वाक्यं विरुध्येत। अचेतनत्वे तु भूतानां द्रष्टुर्जीवस्य स्वरूपैक्यसम्भवान्नानुपपत्तिरिति। न च भूतानां चेतनत्वेऽपि स्वरूपतोऽपि मिथ्यात्वसम्भवेन निषेधो नानुपपन्न इति वाच्यम् । तथासति 'नान्योऽतोऽस्ती'त्येवोपपत्तौ द्रष्टृग्रहणवैयर्थ्यात् । अतस्सत्येव द्रष्टरि तस्यान्यत्वनिषेधपरमेतद्वाक्यं, तद्भूतानां द्रष्टृत्वे अनुपपन्नं भवेत्। तेषु विद्यमानस्य ब्रह्मान्यत्वस्य धर्मिसमानसत्ताकत्वेन सत्स्वेव तेषु निषेधायोगात् अपञ्चीकृतभूतानां चेतनत्वेन संहन्यमानानामपि तेषां चेतनत्वावश्यम्भावेन चेतनाचेतनव्यवस्थोच्छिन्नैव स्यात्। अतः 'ता आप ऐक्षन्ते'ति वाक्यं गौणं वा, तत्तदवच्छिन्नस्य ब्रह्मणः ईक्षितृत्वप्रतिपादकं वा भविष्यतीत्येव श्लिष्यते। यतस्तदभिध्यानात् कामनादिरूपात् सर्वं जगत् भवति । अतस्स ईश्वर एव सर्वत्र साक्षादेव कर्ता, न तु वियदादिभूतानि कर्तॄणि । परमेश्वरः कर्तेत्यत्र प्रमाणमाह—तल्लिङ्गादिति। सूत्रार्थः । **प्रकृतत्वाच्च सत इति** । तथा च 'तत्तेज ऐक्षते'त्यादौ तत्पदानां प्रकृतब्रह्मपरामर्शकत्वात् तत्सामानाधिकरण्येनापि तेजआदिशब्दास्तत्तदवच्छिन्नब्रह्मपरा इत्यभ्युच्चयः। फलं परमसिद्धान्ते सर्वकर्मत्वादिकं साक्षादेव परमेश्वरस्येति तथैव सगुणेषूपासनेषु ध्येयम् ॥ १३ ॥

इति तदभिध्यानाधिकरणम् ॥ ७ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

नात्र श्रुतिविरोधशङ्का, किं तूत्पत्तिक्रमे निरूपिते तत्प्रसङ्गात् प्रलयक्रमोऽपि निरूप्यत इति सङ्गतिमाह—**भूतानामुत्पत्तिक्रम इति** । **तत्रानियमोऽविशेषादिति** । लोके हि पटदाहादिस्थले युगपदेव कार्यकारणयोर्लयो दृश्यते । घटादिलयस्तु कारणपरिशेषेणेति न लोकानुसारेण नियम आस्थातुं शक्यते । कारणपरिशेषेणैव कार्यलय इति वा, प्रथमं कारणमेव नश्यतीति वेति भावः । यदि तूत्पत्तौ क्रमनियमदर्शनात् लयेऽपि नियतक्रमेण भाव्यमिति निर्बन्धः, तदा लयक्रमाकाङ्क्षोत्थापिकाया उत्पत्तिप्रतिपादकश्रुतेः सन्निहितत्वाद्बैदत्वेन प्रत्यासन्नत्वाच्च लयप्रतिपादकश्रुतेः क्रमाकाङ्क्षोत्पत्तिक्रमेणैव पूरणीयेति मनसि निधायाह—**अथवेति** । यद्यपि लोके पटदाहादिस्थले कार्यकारणलये यौगपद्यं दृष्टं, तथापि नोत्पत्तिक्रमवत् लये दृष्टः क्रमः । न हि समवायिकारणनाशानन्तरं कार्यं नश्यतीति दृष्टम् । लोके कारणपरिशेषेणोपादेयं नश्यतीति तु दृष्टम् । श्रुतावपि 'सदेव सोम्येदमग्र आसीत् यत्र त्वस्य सर्वमात्मैवाभूदि'त्युपादानभूतब्रह्मपरिशेषेणैव सर्वकार्यलयो दृष्टः।

अतस्तदाश्रयानुगुण्याय प्रथमं पृथिवी नश्यति, अनन्तरमाप इत्यादिरूपेण लये क्रम आश्रयणीयः । कार्यकारणयोर्युगपन्नाशाभ्युपगमे वा कारणस्य पूर्वं, पश्चात् कार्यस्येति क्रमाभ्युपगमे वा ब्रह्मणोऽपि नाशोऽभ्युपगन्तव्यस्स्यात् । अत उत्पत्तिवैपरीत्येनैव लये क्रम आस्थातव्य इत्यभिप्रेत्य सिद्धान्तयति—**विपर्ययेण त्विति** । उक्तमर्थं पुराणवचनेनोपबृंहयति—**जगत्प्रतिष्ठेति** । स्थावरजङ्गमात्मकस्य जगतः प्रतिष्ठा उपादानं 'वायुराकाशमप्येति तच्चाव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते ॥' इत्यपि द्रष्टव्यम् ॥ १४ ॥

इति विपर्ययाधिकरणम् ॥ ८ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

सूत्रे विज्ञानपदमन्तःकरणे शक्तमप्यजहल्लक्षणया बाह्यान्तःकरणपरम् । तथा च आत्मानमाकाशं चान्तरा समनस्कानीन्द्रियाणि क्रमेण उत्पद्यन्ते । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' ति पाठक्रमाल्लिङ्गादिति शङ्काभागं योजयन्नस्याधिकरणस्य पूर्वप्रवृत्तेनाक्षेपिकीं सङ्गतिं वक्तुं वृत्तं कीर्तयति—**भूतानामुत्पत्तिप्रलयाविति** । सृष्टौ प्रथम आकाश इति यत् पूर्वग्रन्थे स्थितं, तदिहाक्षिप्यते । 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इति श्रुतेः 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' ति श्रुतेश्च विरोधादप्रामाण्यमिति पूर्वपक्षे यथा छान्दोग्ये तेजःप्राथम्यमाकाशवायूपसंहारेण बाधितम्, एवं तैत्तिरीयकगताकाशप्राथम्यमपीन्द्रियमनउपसंहारेण बाधनीयमित्येकदेशितम् । सूत्रे विज्ञानपदेन मनोग्रहणसम्भवेऽपि पुनर्मनोग्रहणमाथर्वणश्रुत्युपसंहारार्थम् । **यदि तावत् भौतिकानीति** । तथा च भौतिकानामिन्द्रियाणां भूतोत्पत्त्यनन्तरमेवोत्पत्तेरङ्गीकरणीयत्वेनार्थक्रमानुसारात् आथर्वणगतः पाठक्रमो बाध्यत इति भावः। **अन्नमयं हि सोम्य मन इति** । ननु, 'अन्नमशितं त्रेधा विधीयत' इत्युपक्रम्य 'योऽणिष्ठस्तन्मन' इति 'आपः पीतास्त्रेधा विधीयन्त इति चोपक्रम्य 'योऽणिष्ठः स प्राण' इति 'तेजोऽशितं त्रेधा विधीयते' इति चोपक्रम्य 'योऽणिष्ठः सा वागि'ति चोक्त्वोपसंहृतम् —'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि'ति । ततश्चाशितानामन्नाप्तेजश्शब्दितघृतादीनां सूक्ष्माः परिणामा मनआदय इत्यर्थः प्रतीयते । एवं चाशनात् प्रागेव मनआदीनां सद्भावो वर्णनीयः मनादिवियुक्तस्याशनासम्भवात् । प्राक्सिद्धानां च न मुख्यं परिणामत्वं सम्भवतीत्यन्नाद्युपचितत्वमात्रे-

ण तत्परिणामत्वोक्तिरियम् । तथा च कथमनेन भौतिकत्वं सिध्येत् । न च 'यः प्राणः, स वायुरि'ति श्रुतिगतसामानाधिकरण्येन वायुतादात्म्योपलम्भाच्च वायुकार्यस्य सतः प्राणस्य वायुविकारत्वं तावदास्थेयम् । तथा च तस्याम्मयत्वं तदाप्यायितत्वरूपमेवोपगम्यते । मनसश्चान्नोपचितत्वस्य वाचश्च तेजउपचितत्वस्य श्रुत्या प्रतिपादनात् उपचितत्वरूपेण वाङ्मनसयोरन्नतेजोविकारत्वे सिद्धे उपादानापेक्षायां सर्गकालेऽपि तयोरन्नतेजोजन्यत्वमेव कल्प्यत इति वाच्यम् । तावतापि सर्वेषामिन्द्रियाणां भौतिकत्वासिद्धेरिति चेत्, उच्यते—मनःप्राणवाचां भौतिकत्वसिद्धौ 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुरि'त्यादिपाठक्रमः मनआद्यंशे तावत् बाधनीयः । तथा च तस्मिन्नंशे अध्ययनोपयुक्त एवायं क्रम इति वक्तव्यं, न तु तदनुसारेणोत्पत्तिक्रमव्यवस्थापि । तथा चावैरूप्याय सर्वांशेऽप्ययमुत्पत्तिक्रमनियामको न भविष्यतीत्येवोपेयम् । खादीनां तु नैतत्पाठानुसारेण क्रमोत्पत्तिरभ्युपगम्यते, अपि तु तैत्तिरीयादिषु पूर्वपूर्वभूतस्योत्तरोत्तरकारणत्वप्रतिपादनानुसारेण । किं च बाह्यान्तःकरणानां कार्यतायां स्थितायां कारणापेक्षायां मनआदिषु भौतिकत्वाम्नानं स्थालीपुलाकन्यायेन सर्वेषां भौतिकत्वे लिङ्गं भविष्यति । नन्विन्द्रियाणां भौतिकत्वे भूतोत्पत्त्यैव तत्सृष्टेः सिद्धत्वात् पृथक्सृष्टिकथनं व्यर्थमित्याशङ्क्याह—**व्यपदेशभेदोऽपीति** । पक्षान्तरमाह—**अथ त्विति** । अस्मिन्नपि पक्षे यः प्राणः, स वायुरिति स्पष्टसामानाधिकरण्येन वायुविकारत्वं प्राणस्योपेयमेव । इन्द्रियाणां त्वभौतिकत्वेऽपि प्रथममिन्द्रियाणि, अनन्तरं भूतानीति पाठक्रमानुसारेण न स्वीक्रियते । पाठक्रमस्योत्पत्तावविवक्षितत्वात् । न च 'खं वायुर्ज्योतिरापः पृथिवी'त्यंशे क्रमोत्पत्तिकानामेव पाठादिन्द्रियानन्तरं भूताम्नानमप्युत्पत्तिक्रमनियामकं स्यादिति वाच्यम् । प्रश्नोपनिषदि 'खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मन' इति भूतानन्तरमिन्द्रियसृष्ट्याम्नानेन पाठस्याव्यवस्थितत्वादिति भावः ॥ १९ ॥

इति अन्तराविज्ञानाधिकरणम् ॥ ९ ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

जीवोपकरणेष्विन्द्रियेषु निरूपितेषु जीवो हृदयमागत इति प्रासङ्गिकी पादसङ्गतिः । जीवनिरूपणस्य श्रुतिविरोधपरिहारार्थत्वादध्यायसङ्गतिः स्पष्टैव। त्वंपदार्थशोधनस्य ब्रह्मैक्यप्रतिपत्त्युपायतया शास्त्रसङ्गतिः । ब्रह्म हि नित्यं ज्ञान-

स्वरूपं विभु असङ्गं च । अतस्तदैक्याय जीवस्यापि नित्यत्वादिकं वक्तव्यम् । तत्र प्रथमतोऽधिकरणद्वयेन नित्यत्वम्, अनन्तरं ज्ञानरूपत्वमेकेनाधिकरणेन, ततो विभुत्वमेकेन, ततस्त्रिभिरधिकरणैर्जीवस्य कर्तृत्वं परमेश्वराधीनमुपलभ्यते, तदाविद्यकमिति परमार्थतो जीवोऽसङ्ग इति प्रतिपाद्यते । तदनन्तरं भेदाभेदप्रतिपादकश्रुतिविरोधपरिहारमुखेन जीवब्रह्मणोरभेदः स्फुटीकरिष्यत इत्यापादमधिकरणानां सङ्गतिर्द्रष्टव्या । अत्र जीवोत्पत्तिं निमित्तीकृत्य जातकर्मादिविधायकस्य शास्त्रस्य 'न जायते म्रियते वे'त्यादिजीवोत्पत्तिनिषेधकस्य च विरोधेनाप्रामाण्यमिति पूर्वपक्षे जातो देवदत्त इति प्रत्यक्षोपोद्बलितजातकर्मादिश्रुत्यनुसारेण जीवोत्पत्तिरङ्गीकर्तव्या । तदनुत्पत्तिप्रतिपादकवचनानि त्वविवक्षितानीत्येकदेशिनि प्राप्ते जीवस्योत्पत्तावङ्गीक्रियमाणायामन्त्येष्ट्यादिविधायकवाक्यपर्यालोचनया मृतो देवदत्त इति प्रत्यक्षोपोद्बलितकृतकत्वलिङ्गकानित्यत्वानुसन्धानसनाथया जीवनाशोऽप्यङ्गीकर्तव्यस्स्यात् । ततश्च कृत्स्नविधिनिषेधशास्त्रव्याकोप इति शरीरोत्पत्तिनाशोपाधिकावेव जीवोत्पत्तिविनाशव्यपदेशाविति न जीव उत्पद्यते, नापि विनश्यति, अपि तु नित्य एवेति सिद्धान्तः । जीवापेतं जीववियुक्तमिदं शरीरम् । 'स वा अयं पुरुष' इति । योऽयं विज्ञानमयः प्राणेष्वित्यादिना निरूपितो जीवः स इति परामृश्यते अयमहमितिप्रत्यक्षासिद्धः । तत्र लोकसिद्धस्य जायमानत्वव्यपदेशस्यार्थं श्रुतिराह—जायमानः शरीरमभिसम्पद्यमानः । शरीरेण संयुज्यमानत्वमेव जायमानत्वमिति तदर्थः । 'स उत्क्रामन् म्रियमाण' इत्यनेन मृतोऽयमिति लौकिकव्यवहारः शरीरोत्क्रान्तिविषयत्वेन व्याख्यातः । अस्मिन्नधिकरणे श्रुतिपर्यालोचनया जीवस्य नित्यत्वं व्यवस्थापितम् । श्रुतिप्रामाण्यमनभ्युपगच्छतः चार्वाकस्य निराकरणेन तन्नित्यत्वम् 'एक आत्मन' इत्यधिकरणे भविष्यति । ननु, उत्तराधिकरणेऽपि जीवोत्पत्तिर्निराकरिष्यते । अतो व्यर्थमेतदधिकरणमित्याशङ्क्याधिकरणद्वयप्रतिपाद्यविभागेन दर्शयति—परस्मादिति ॥१६॥

इति चराचरव्यपाश्रयाधिकरणम् ॥ १० ॥

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥१७॥

अग्निविस्फुलिङ्गादिनिदर्शनैरिति । तां श्रुतिमुत्तरत्रोदाहरिष्यति—'अपि च यथाग्नेः क्षुद्रा विस्फुलिङ्गा' इत्यादिना । **अविकृतस्यैव परस्य ब्रह्मण इति ।** 'अनेन जीवेनात्मनानुप्रविश्ये'त्यादौ । तथा च विरोधे न श्रुतीनां प्रामाण्यमिति पूर्वपक्षे एकदेशिमतमाह—**प्राप्तं तावदुत्पद्यत इति ।** तथा च शरीरवज्जीवस्योत्पत्तिविनाशाभावेऽपि कल्पादौ वियदादिवज्जीव उत्पद्यते, प्रलये च न-

श्यतीत्यभ्युपेयम् । एकविज्ञानेन सर्वविज्ञानोपोद्बलितस्य जीवोत्पत्तिवाक्यस्य प्रबलत्वेन न जायत इत्यादिवाक्यानां शरीरवत् कल्पमध्ये पुनःपुनर्न जायत इत्येवंपरत्वोपपत्तेः । 'अविनाशी वा अरेऽयमात्मा' इत्यादिवाक्यमपि तथैव व्याख्येयम् । न चास्मिन्पक्षे पारलौकिकशास्त्रफलानुपपत्तिः । यावत्प्रलयं शास्त्रीयफलस्य परलोकगमनेन भोगसम्भवात् । नन्वेवं तत्त्वमसीत्यभेदप्रतिपादनमसङ्गतं स्यात् इत्याशङ्क्य एकदेशिमते तद्वाक्यं गौणमेव व्याख्येयमित्याह—**न चाविकृतः परमात्मैवेति** । 'यावद्विकारं तु विभागो लोकवदि'ति न्यायेनापि जीवस्य कार्यत्वमित्याह—**विभागाच्चेति** । 'सर्व एत आत्मानो व्युच्चरन्ती'ति बृहदारण्यके माध्यन्दिनानामयं पाठः । काण्वानां सर्व एत आत्मान इति वाक्यं न पठ्यते । कौषीतकिशाखायामपि अग्निविस्फुलिङ्गदृष्टान्तेन सृष्टिक्रमे नेदं वाक्यं पठ्यते । तस्मात् पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्ग इत्येकदेशिमतम् । 'यथा सुदीप्तादि'ति मन्त्रो हि मुण्डके 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी'तिमन्त्रात् प्रागेव पठ्यत इति पाठानुसारेण वियदुत्पत्तेः प्रागेव जीवस्योत्पत्तिर्वक्तव्या । ततश्चेन्द्रियादिभिर्यथोक्तक्रमभङ्गाभावेऽपि जीवे न यथोक्तवियत्सृष्टिक्रमभङ्गस्स्यादिति जीवोत्पत्तिविषयकाधिकरणद्वयस्या'न्तरा विज्ञानमनसी' इत्यधिकरणेन सङ्गतिर्द्रष्टव्या । जीवस्योत्पत्तौ उपगतायां नाशोऽप्युपगन्तव्य इति कृतहानाकृताभ्यागमदोषप्रसङ्गात् निर्विकारत्वादिप्रतिपादकानेकवचनविरोधाच्च नास्योत्पत्तिः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तु स्वरूपैक्येनैवोपपन्ना । विभक्तत्वहेतुस्त्वसति बाधक एव विकारत्वसाधकः न जीवस्योत्पत्तिं साधयति । उत्पत्तिप्रतिपादकं क्वचित्कवचनं तु विज्ञानाद्युपाधितादात्म्याध्यासेन तन्मयस्य जीवस्य तदुत्पत्त्योत्पत्तिप्रतिपादनपरमित्यभिप्रेत्य सिद्धान्तयति—**नात्मा जीव इत्यादिना । प्रज्ञानघन एवैतेभ्य इति** । इदं वाक्यं मैत्रेयीब्राह्मणगतं वाक्यान्वयादित्यधिकरण एव व्याख्यातम् । 'अत ऊर्ध्वं विमोक्षायैव ब्रूही'ति मोक्षरूपं फलमुपक्षिप्यासङ्गत्वादिवचनेन सर्वविशेषप्रत्याख्यानपूर्वकं योऽयं विज्ञानमय इति प्रस्तुतस्यैव जीवस्य एष सर्वेश्वर इत्यादिना ब्रह्मभावः प्रतिपाद्यत इत्याह—**अत ऊर्ध्वमिति** ॥१७॥

॥ इति नात्माश्रुत्यधिकरणम् ॥ ११ ॥

## ज्ञोऽत एव ॥ १८ ॥

**वादिविप्रतिपत्तेरिति** । श्रुतिविप्रतिपत्तेरप्युपलक्षणम् । 'विज्ञानात्मा पुरुषः' 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्रे'ति च साक्षादेव ज्ञानरूपताम्नायते । ज्ञानस्वरूपब्रह्माभेदश्रुतेश्च ज्ञानरूपतावगम्यते । 'एष हि द्रष्टा श्रो-

ते'त्यादिवचनैः ज्ञानाश्रयताप्यवगम्यते । ज्ञानस्वरूपत्वे च जीवस्य गुणत्वापत्त्या ज्ञानाश्रयता नोपपद्यते । अतः श्रुतीनां विरोधेनाप्रामाण्येन पूर्वपक्षे एकदेशिमतमाह —**आगन्तुकमात्मन इति** । ज्ञानरूपताप्रतिपादिकास्तु श्रुतयोऽर्शआद्यचमुपेत्य ज्ञानवत्ताप्रतिपादिका इति व्याख्येयम् । सुषुप्त्यादिषु चैतन्यानुपलम्भोपपत्तिसहकृताया 'एष हि द्रष्टे'त्यादिश्रुतेः प्रबलत्वात् ब्रह्मणोऽपि न ज्ञानरूपता । 'यस्सर्वज्ञ' इति वचनानुसारेण ज्ञानवत्तावगमात् । 'सत्यं ज्ञानमनन्त'मिति वाक्ये ज्ञानपदं त्वर्शआद्यजन्तमेव । तथा हि—इदं ज्ञानपदमन्तोदात्तं पठ्यते । न तदजन्ततां विनोपपद्यते । केवलल्युडन्ततायां हि ज्ञाधात्वाकारस्य 'लिती'ति सूत्रेणोदात्तत्वे सति ल्युडादेशस्यानेत्यस्याकारयोः शेषनिघातेनानुदात्तत्वे च सति अनादेशाकारस्य ज्ञाधात्वाकारस्य च एकादेशो भवन् 'एकादेश उदात्तेनोदात्त' इति सूत्रेण उदात्तो भवति । तदनन्तरममः 'अनुदात्तौ सुप्पिताव्वि'त्यनुदात्तत्वे सति 'अमि पूर्व' इत्येकादेशः स्थानेऽन्तरतमपरिभाषया अनुदात्त एव भवेदिति तस्य 'उदात्तादनुदात्तस्य स्वरित' इति स्वरितता प्राप्नोति । तथा च यथा काठके 'संज्ञानं विज्ञान'मिति स्वरितान्तं पठ्यते, एवमिदमपि स्वरितान्तमेव पठ्येत । तथा चान्तोदात्ततासिद्धये अजन्तता आश्रयणीया । तस्मिन् हि सति 'यस्ये'ति सूत्रेण भस्य इवर्णावर्णयोर्लोपस्स्यादीकारे तद्धिते च पर इत्यर्थकेन ज्ञानपदेऽन्त्याकारलोपे सति अजन्ततायामपि ज्ञानेत्येव स्थिते 'चित' इति सूत्रेण अचोऽकारस्य उदात्तत्वे सति शेषनिघातेन चानुदात्तत्वे सति ज्ञानेति प्रातिपदिकमजन्तं मध्यानुदात्तमन्तोदात्तं पर्यवस्यति । ततोऽमि पूर्व इत्येकादेशोऽपि 'एकादेश उदात्तेनोदात्त' इति उदात्त एव भवति । अतस्सत्यं ज्ञानमिति वाक्यं ब्रह्मणो ज्ञानवत्तां प्रतिपादयति । तदनुसारेण विज्ञानमानन्दं ब्रह्मेत्यादिवचनान्यपि ज्ञानवत्तापराण्येव, न तु ज्ञानरूपतापराणि । तथा च ब्रह्माभेदबोधकेभ्योऽपि वाक्येभ्यो न जीवस्य ज्ञानरूपतासिद्धौ प्रत्याशा कार्या । **परस्य ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातमिति** । सत्यं ज्ञानमित्यादौ हि ज्ञानपदं नाजन्ततया ज्ञानवत्ताप्रतिपादकम् । ज्ञानपदस्य भावार्थकतया प्रसिद्धस्याजन्ततामुपेत्य ज्ञानवत्ताप्रतिपादकतायाः क्लिष्टत्वात् । प्रत्ययद्वयाभ्युपगमे च प्रक्रियागौरवमपि प्रसज्यते । शक्यते चैकमेव प्रत्ययमुपेत्य प्रसिद्ध्यनतिक्रमेणान्तोदात्ततासमर्थनम् । ज्ञाधातोरौणादिको बाहुलकेन नप्रत्ययः । तस्य भावार्थत्वमति बाहुलकादेव । अजन्ततावादिनापि हि ज्ञानपदस्य अर्शआदिगणे आहत्य पाठाभावेनाकृतिगणत्वस्याश्रयणीयत्वात् । नप्रत्ययस्य चाकार 'आद्युदात्तश्चे' ति सूत्रेणोदात्ते धात्वाकारस्य शेषनिघातेनानुदात्तत्वे सति 'अमि पूर्व 'इत्येकादेशोऽप्युदात्त एवावतिष्ठते । अतस्सत्यं ज्ञानमित्यादिवाक्यपर्यालोचनया ब्रह्मणो ज्ञानरूपत्वं निष्प्रत्यूहमेव । असुप्तः अपरिलुप्तज्ञानस्वभावः ।

सुप्तान्वागादीन्मनोमात्रतया स्थितान् अभिचाकशीति स्वाभाविकेन प्रकाशेन व्यवहारयोग्यतां नयति । अत्र स्वप्ने स्वाप्नरथादिव्यवहारोपयुक्तं ज्योतिः स्वयमेव भवतीति । न हि विज्ञातुरिति । ननु, नेयं श्रुतिरात्मनो नित्यज्ञानस्वरूपतां साधयति, अपि तु तद्धर्मभूतानां दृष्ट्यादीनामेव नित्यत्वं प्रतिपादयति । तथा च 'यो वेदेदं जिघ्राणी'त्यादिवाक्यं गन्धादिगोचरज्ञानाश्रयतयैवात्मानमुपलक्षयति, न तु ज्ञानस्वरूपतयेति कथमिदं ज्ञानस्वरूपतायां प्रमाणमुपन्यस्यत इति चेत्, उच्यते—'न हि द्रष्टु'रित्यादिवाक्यं दृष्ट्यादीनां नित्यत्वं प्रतिपादयद्यथाश्रुतार्थं ग्रहीतुमशक्यम् । दृष्ट्यादीनां लोके 'दर्शनाय चक्षुरि'त्यादिश्रुतिषु च जन्यतया प्रसिद्धेः । न च दृष्ट्यादीनां जन्यत्वेऽपि 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इति वाक्यप्रतिपाद्यं विज्ञानं नित्यमस्त्विति वाच्यम् । विज्ञानशब्दस्यापि 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित'मित्यादौ वृत्तिविशेषे प्रयोगेणेहापि दृष्ट्यादिवृत्तिप्रायपाठेन विज्ञानवृत्तिपरत्वावश्यम्भावात् । अपि चेह द्र रिति षष्ठी न धर्मधर्मिभावसम्बन्धपरा । तथासति द्रष्टुरित्यादिनिर्देशवैयर्थ्यापत्तेः । दृष्ट्यादयो हि द्रष्टुरेव धर्मा अव्यभिचरिता इति व्यावर्त्याभावात् । न ह्यद्रष्ट्रादिधर्मभूताः केचन दृष्ट्यादयो वर्तन्ते । यद्व्यावर्तनार्थं द्रष्टुरित्यादिविशेषणं सार्थकं भवेत् । एवम् 'अथ यो वेदेदं जिघ्राणी'त्याद्या अपि यथा 'यतो वा इमानि भूतानि जायन्ते' इत्यादि ब्रह्मणस्तटस्थलक्षणं, तद्वज्जीवस्य तटस्थलक्षणमिति वक्तव्यम् । तत्र यदि ज्ञानाश्रयमात्रतया बाह्येभ्यो व्यावृत्ततया आत्मा लिलक्षयिषितस्स्यात्, तदा 'यो वेद, स आत्मे'त्येतावदेव पर्याप्तम् । इदं जिघ्राणीत्यादिविशेषणमनर्थकमेव स्यात् । तस्मान्न हि द्रष्टुरित्यादेरेवमर्थो वक्तव्यः । द्रष्टुरित्यादौ तादात्म्यसम्बन्धे षष्ठी । घटस्य स्वरूपमित्यादिवत् । तथा च द्रष्टुः स्वरूपभूता या दृष्टिरित्याद्यर्थो लभ्यते । एवंहिसति द्रष्टुरित्यादिविशेषणं सार्थकं भवति । चक्षुरादिजन्यान्तःकरणपरिणामभूतदृष्टिव्यावर्तकत्वात् । दृष्ट्यादिशब्दाश्चात्मस्वरूपभूतेऽपि तत्तद्वृत्त्युपधानेन प्रयोक्तुं शक्यन्त एव । तथा च श्रुतिः—'संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा ज्ञप्तिस्स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति प्रज्ञानं ब्रह्मे'ति । अतो दृष्ट्यादिवृत्त्युपलक्षितस्यात्मस्वरूपभूतज्ञानस्यैव नित्यताप्रतिपादकं 'न हि द्रष्टुरि'त्यादिवाक्यजातम् । एवंसत्येव पूर्वसन्दर्भापेक्षितार्थसमर्पकतापि सिध्यति । 'हृद्यन्तर्ज्योतिः पुरुषः अत्रायं पुरुषस्स्वयंज्योतिर्भवती'त्यात्मनो बाह्याभ्यन्तरवस्तुव्यवहारोपयुक्तज्योतिस्स्वरूपत्वेनाव्यभिचरितप्रकाशत्वे उपक्षिप्ते असङ्गस्वभावतया प्रतिपादिते च धर्मभूतज्ञानमादायाव्यभिचरितप्रकाश-

त्वायोगात् अव्यभिचरितप्रकाशत्वे सिद्धे 'न बाह्यं किञ्चन वेद नान्तर'मिति सुषुप्तौ बाह्याभ्यन्तरवेदनप्रतिषेधात्तद्रूपस्याप्यात्मनो नाशशङ्कायां 'यद्वैतं न पश्यती'ति वाक्यम् । तस्य च सुषुप्तौ यत् बाह्याभ्यन्तरवेदनराहित्यं प्रतिपादितं, तन्नात्मस्वरूपभूतज्ञाननिषेधाभिप्रायेण, अपि तु जाग्रत्स्वप्नयोर्बाह्याभ्यन्तरद्वैतसम्भवात्तत्सम्पर्केणात्मनः तद्वेदनरूपता भवति । सुषुप्तौ तु द्वैताभावात् तत्सम्पर्काभावेन तद्वेदनरूपता नास्तीत्यभिप्रायेणेत्येवमर्थत्वं स्फुटमेव । तत्र चोपपत्तिरूपतया इदं वाक्यं प्रवर्तते—'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत' इत्यादि । तत्र धर्मज्ञाननित्यताप्रतिपादनं न प्रकृतोपयुक्तम् । अतो 'न हि द्रष्टुरि'त्यादिषष्ठ्यास्तादात्म्याभिप्रायत्वात् प्रकृते तदुदाहरणं युक्तमेव । 'अथ यो वेदे'त्यादिवाक्येष्वपि अथ यो वेदेदं जिघ्राणीत्यादिविशेषणस्यायमभिप्रायः—पूर्वसन्दर्भे य एषोऽक्षिणि पुरुषो दृश्यत इत्यादिपर्यायेषु जाग्रदाद्यवस्थोपलक्षितस्यात्मनः 'एष आत्मेति होवाचे'त्यात्मत्वमुक्त्वा 'एतदमृतमभयमेतद्ब्रह्मे'ति ब्रह्मत्वमुक्तम् । तत्रेयमाकाङ्क्षा—कोऽसावात्मा, यस्य ज्ञानस्वरूपब्रह्माभेदः प्रतिपाद्यत इति । तत्र नित्यज्ञानस्वरूपतया आत्मानं लक्षयितुम् 'अथ यो वेदेदं जिघ्राणी'ति वाक्यं प्रवर्तते । तत्र 'यदीदं यो वेदेत्ये'वोच्येत, तदा तार्किकाभिमतः अनित्यज्ञानाश्रय एवात्मा सिध्येत, तन्माभूदिति गन्धादिगोचरज्ञानावभासकतया आत्मा लक्ष्यते । गन्धादिगोचरज्ञानानां हि उत्पत्तिमारभ्य ज्ञाननैयत्यात् जन्यज्ञानेन तदनुत्पत्तेः तदवभासकं नित्यं ज्ञानं सिध्यतीति स एवात्मा । न च यो वेदेति गन्धादिगोचरज्ञानाश्रयतायाः प्रतिपादनात् नित्यज्ञानाश्रयतैवात्मनस्सिध्येदिति वाच्यम् । तावता प्रकृताकाङ्क्षानिवर्तनासम्भवात् ज्ञानरूपब्रह्माभेदस्य नित्यज्ञानरूपतयैवोपपादनीयत्वात् । अतो वेदेति निर्देशः सत्ता सतीतिवत् तादात्म्येन वा नित्यज्ञानरूपस्यैवात्मनो वृत्त्युपाधिकभेदकल्पनया वा द्रष्टव्य इति न काचिदनुपपत्तिः । **गन्धादिविषयविशेषपरिच्छेदार्थत्वादिति** । परिच्छेदो वृत्तिरूपो जन्यः । तत्र चक्षुरादीनामुपयोग इत्यर्थः । गन्धाय गन्धगोचरवृत्त्यर्थम् । दर्शनाय चक्षुः, श्रवणाय श्रोत्रमित्यादिसमभिव्याहारात् । **आभासीभवतीति** । ज्ञानस्य गुणतया ज्ञानाश्रयता न स्यादित्येवंरूपस्तर्कः श्रुतिविरोधादाभास इत्यर्थः । तथा च ज्ञानरूपस्याप्यात्मनः चक्षुरादिजन्यवृत्त्याश्रयतया अहं पश्यामीत्यादिव्यवहारः, 'एष हि द्रष्टे'त्यादिश्रुतयश्चोपपन्ना इति भावः । सूत्रे 'ज्ञोऽत' इति तु 'घञर्थे कविधान'मिति भावार्थककप्रत्ययान्तः ज्ञानस्वरूप इत्यर्थः ॥ १८ ॥

॥ इति ज्ञाधिकरणम् ॥ १२ ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

अत्र सूत्रे श्रवणादितिपदमणुरितिपदं चाध्याह्रियते । अयञ्चाध्याहारो 'नाणुरतच्छ्रुते'रित्युत्तरसूत्रपर्यालोचनया लभ्यते । तत्र हि महत्त्वश्रुतेरणुत्वं निषिध्यते । तच्च तदैव सम्भवति । यदि कयाचिच्छ्रुत्या अणुत्वं प्रागुक्तं भवेत् । 'ततश्च एषोऽणुरात्मा चेतसा वेदितव्य इति 'अङ्गुष्ठमात्रो रवितुल्यरूप' इति 'स वा एष महानज आत्मे'ति च विरुद्धपरिमाणप्रतिपादकानां श्रुतीनामुपलम्भादप्रामाण्येन पूर्वपक्षे मध्यमपरिमाणत्वोपगमेऽनित्यत्वप्रसङ्गात् व्यापित्वोपगमे चोत्क्रान्त्याद्यनुपपत्तेरुत्क्रान्त्यादिश्रवणात् अणुर्जीवोऽङ्गीकर्तव्य इत्येकदेशिमतप्रतिपादकमिदं सूत्रमित्यभिप्रेत्याह— **उत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणोजीव इतीति** । स जीवः, सहैवैतैः इन्द्रियैस्सह । अत्र तदेत्यध्याहारः ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥२०॥

अचलतोऽपीति । यद्यप्युत्क्रान्तिरूर्ध्वगमनरूपा क्रिया नाचलतः सम्भवति, तथापि ग्रामादयमुत्क्रान्त इति ग्रामस्थ एव स्वाम्यनिवृत्तिमात्रेण प्रयोगदर्शनात् स्वाम्यनिवृत्तिरेवोत्क्रान्तिशब्दार्थ इति कश्चिद्वदेत्, तदभ्युपेत्यैवाणुत्वसाधनाय इदं सूत्रम् । वस्तुतस्तु उत्क्रान्तिरूर्ध्वगमनक्रियैव । ग्रामादुत्क्रान्त इति प्रयोगस्तु गौण इति द्रष्टव्यम् । **गमेः कर्तृस्थक्रियत्वादिति** । कर्तृगतोत्तरदेशसंयोगाधायिका क्रिया केवलस्य गमेरर्थः । आङ्पूर्वकस्य तु पूर्वदेशसंयोगाधायिका क्रियार्थः । तथा च कर्तृगतसंयोगाधायिका क्रिया प्रतिपाद्या यस्य, तत्त्वादित्यर्थः । गत्यागत्युपपादकतयाम्नाता मरणकालोत्क्रान्तिरपि क्रियारूपेत्याह—**सत्योश्चेति** । उत्क्रान्तेः क्रियारूपत्वे हेत्वन्तरमाह—**देहप्रदेशानां चेति** । 'एष आत्मा निष्क्रामती'त्युपक्रम्य चक्षुषो वेत्यादिवाक्यमाम्नातम् । उत्क्रान्तेस्स्वाम्यनिवृत्तिरूपत्वे हि चक्षुरादीनामवधित्वं न स्यात् । **स एता इति** । मरणकाले तेजोमात्रा इन्द्रियाणि गृहीत्वा हृदयदेशं प्राप्नोति जीव इति शरीरमध्ये हृदयदेशे गतिश्श्रूयते । **शुक्रमादायेति** । स्वप्नकाले इन्द्रियगणमादाय नाडीप्रविष्टस्य जीवस्य पुनर्जाग्रदारम्भे शुक्रं भास्वरमिन्द्रियगणमादाय पुनस्स्थानं चक्षुरादिगोलकरूपमेतीति आगतिः शरीरमध्ये प्रतिपाद्यते । एते अपि गत्यागती अणुत्वसाधिके ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

नन्वाकाशादिवदिति । 'सत्यं ज्ञानमनन्तमि'ति वाक्यद्वयं परवि-

षयमस्तु, 'स वा एष महानज आत्मे' ति तु कथं परविषयम् । अवस्थाद्युपन्यासलिङ्गेन जीवस्यैव तत्र प्रस्तुतत्वादित्याशङ्क्य परमेश्वरोऽपि तत्र प्रस्तुतो वर्तत इत्यभिप्रेत्याह—**विरजः पर इति** । ननु, 'विरजः पर आकाशा'दित्यत्र परमात्मनः प्रस्तुतत्वेऽपि 'स वा एष महानज आत्मे'त्यत्र तद्ग्रहणं नोचितम् । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेष्वि'ति जीवस्यैव तत्राम्नानादिति शङ्कते—**ननु, योऽयं विज्ञानमय इति** । परिहरति—**शास्त्रदृष्ट्येति** । ननु, सिद्धान्ते जीवब्रह्मणोरभेदोपगमात् परमार्थगत्या ब्रह्मात्मस्वरूपतया जीवो व्यापक इतीदं वाक्यं शास्त्रदृष्ट्या योजयितुं शक्यम् । अणुत्ववादिना तु अभेदो जीवपरयोर्नाङ्गीक्रियते । कथं तन्मते शास्त्रदृष्ट्यापि जीवे महत्त्वं वक्तुं शक्यमिति चेत्, उच्यते—केचित् किलैकदेशिनो मुक्तौ जीवब्रह्मणोरभेद इति मन्यमाना जीववाचकैश्शब्दैः ब्रह्म लक्षयितुं शक्यमिति मन्यते । तन्मतानुसरणे मुक्तौ ब्रह्माभेदो भविष्यतीति शास्त्रदृष्टिमनुसृत्य वामदेवपदेन तदभेदं प्राप्स्यमानं ब्रह्म लक्षयित्वा यथा सर्वात्मकं निर्दिश्यते, एवमिहापि विज्ञानमयादिपदैः ब्रह्म लक्षयित्वा महत्त्वनिर्देश इत्यर्थो ग्राह्यः । अन्ये तु शरीरवाचकानां शरीरिपर्यन्तताव्युत्पत्तेः जीवस्यापि ब्रह्मशरीरतया तद्वाचकैः विज्ञानमयादिपदैर्वामदेवपदेनैव ब्रह्म लक्ष्यत इति ब्रह्मण एवायं महत्त्वोपदेशः । जीवादिपदानां ब्रह्मपर्यन्तताज्ञानमेव शास्त्रदृष्टिरिति मन्यन्ते ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥२२॥

पूर्वमुत्क्रान्त्याद्यनुपपत्त्या जीवस्याणुत्वमुक्तम् । अनेन सूत्रेण साक्षादेवाणुत्वप्रतिपादिका श्रुतिरुपन्यस्यते । महतोऽवयविनः सकाशात् अल्पमवयवमुद्धृत्य मानमुन्मानम् । तदाह—**वालाग्रेति** । वालः केशः । **आराग्रेति** । आरा सूचीविशेषः, तदग्रं प्रमाणमस्य स आराग्रमात्रः ॥ २२ ॥

उत्तरसूत्रमवतारयति—**नन्वणुत्वे सत्येकदेशस्थस्येति** ।

## अविरोधश्चन्दनवत् ॥२३॥

सौत्रं दृष्टान्तं व्याख्याय स्वयं प्रकारान्तरेण सर्वाङ्गीणशैत्याद्युपलब्धिमणुत्वपक्ष उपपादयति—**त्वक्सम्बन्धाच्चेति** । त्वगात्मसंयोगो हि सुखादौ कारणं, तस्य त्वग्द्वारा कृत्स्नशरीरगतत्वात् कारणानुसारेण सर्वाङ्गीणवेदनादिकमुपपद्यत इत्यर्थः ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि॥२४॥

सूत्रव्यावर्त्यां शङ्कामाह—अत्राहेति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥२५॥

प्रकारान्तरानुसरणं किमर्थमित्याकाङ्क्षायां चन्दनदृष्टान्ते अस्वरसं दर्शयति—स्यात्कदाचिदिति । ननु, ज्ञानगुणस्य सर्वशरीरव्याप्त्या सर्वाङ्गीणोपलब्ध्युपपत्तावपि सुखादीनां कथं सर्वाङ्गीणत्वाभ्युपपत्तिरिति चेत्, एवं मन्यते—यथा सिद्धान्ते अन्तःकरणं सङ्कोचविकासशीलं सुखादिपरिणाम्युपेयते, एवमात्मनि ज्ञानाख्यो गुणः सङ्कोचविकासशीलः सुखादिपरिणाम्युपेयत इति तस्य सुखाद्यात्मना सर्वाङ्गीणविकासादिकमुपपद्यते ॥ २५ ॥

तेजोद्रव्यमेव प्रभेत्यत उत्तरं पठतीति । यद्यप्येकदेशिना ज्ञानस्य सङ्कोचादिपरिणामाभ्युपगमात् तदपि प्रभावत् द्रव्यमेवेत्यपि वक्तुं शक्यम् । गुणत्वव्यवहारस्तु तस्यात्मपरतन्त्रतामात्रेण, तथापि गुणस्य द्रव्यविश्लेषो नास्तीति तार्किकपरिभाषा अप्रयोजिकैवेति प्रदर्शयितुं गुणत्वमुपेत्यैव परिहरति—

## व्यतिरेको गन्धवत् ॥ २६ ॥ इति ॥

## तथा च दर्शयति ॥२७॥

चैतन्येन गुणेनेति । अणोर्हृदयायतनस्य स्वत एव लोमनखाग्रव्याप्तेरसम्भवादिति भावः ॥ २७ ॥

## पृथगुपदेशात् ॥२८॥

नन्वात्मप्रज्ञयोः पृथगुपदेशमात्रेण कथं गुणेनैव व्यापित्वं सिध्यतीत्याशङ्क्य नात्र पृथगुपदेशमात्रं हेतुः, अपि तु प्रज्ञायाः शरीरसमारोहणरूपायां व्याप्तौ करणत्वेन पृथगुपदेशो हेतुर्विवक्षित इत्याह—प्रज्ञया शरीरमिति । तदैषां प्राणानामिति । स्वापकाले प्राप्ते स्वप्नदशायां विज्ञानेन स्वधर्मेण प्राणानामिन्द्रियाणां विज्ञानशक्तिं गृहीत्वा विज्ञानपरिशेषेणैवेन्द्रियकवृत्तिलयमापाद्येति यावत् । 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति वाक्यशेषः । नन्वत्र वाक्ये ज्ञानगुणेनात्मनो व्याप्तिरिति न प्रतिपादितमत आह—एतमेवाभिप्रायमिति । अनेन वाक्येनात्मनो

ज्ञानाख्यः कश्चित् गुणः करणीभूतोऽस्तीति सिध्यति । तथा च तेनैव सर्वशरीरव्याप्त्यादिकमपि सिध्यतीत्यर्थाल्लभ्यत इत्यर्थः ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

**तथा च स वा एष महानज आत्मेति** । यथा च यावन्मुक्ति जीवब्रह्मणोर्भेदः, मुक्तौ त्वभेद इत्येकदेशिप्रक्रिया, शरीरवाचकानां शरीरिपर्यन्तत्वव्युत्पत्तिश्च निर्मूला , तथा प्रथमाध्याय एव विवेचितम् । अपि चेह प्राणेषु हृदीत्यादिजीवलिङ्गानुसारेण योऽयं विज्ञानमय इत्युपक्रमगतजीवपरवाक्यसाम्येन चास्य वाक्यस्य जीवपरत्वमेव वक्तव्यम् । तत्र सर्ववशित्वादिप्रतिपादनं तु ब्रह्माभेदविवक्षयेति 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र प्रतिपादितम् । अतः स वा एष महानज इति न परमेश्वरस्य महत्त्वं प्रतिपादयति । **कण्टकतोदनेऽपीति** । यदि हि त्वगात्मसंयोयस्य दुःखादिकारणस्य त्वग्द्वारा कृत्स्नशरीरव्यापितया जाह्नवीहृदनिमज्जनादिस्थले सर्वाङ्गीणसुखादिकं समर्थ्येत, तथासति कण्टकत्वक्संयोगस्यापि दुःखनिमित्तस्य त्वग्द्वारा कृत्स्नशरीरव्यापितया सर्वाङ्गीणवेदना स्यात् । अतो यदवच्छेदेनात्मन इष्टानिष्टवस्तुसंयोगः, तदवच्छेदेनैव शरीरे सुखदुःखाद्युत्पत्तिस्समर्थनीया । तथाभ्युपगमे तु नाणुवादिनो जाह्नवीहृदनिमज्जनस्थले सर्वाङ्गीणसुखोत्पत्तिस्समर्थयितुं शक्यते । अणोरात्मनः सर्वाङ्गावच्छेदेन जाह्नवीजलसंयोगासम्भवादिति भावः । **बुद्धेर्गुणेनेति** । आराग्रमात्रत्वस्यावरत्वस्य च जीवगतस्य बुद्धिगुणाराग्रमात्रत्वावरत्वोपाधिकतया बुद्धेर्गुणेनेति व्यपदेशः । आत्मसत्ताधीनत्वाच्च आत्मगुणेनेति व्यवहारः । **चक्षुराद्यनवगाह्यत्वेनेति** । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । एषोऽणुरात्मा चेतसा वेदितव्य' इति पाठक्रमः । ततश्च 'यस्मिन् प्राणः पञ्चधा संविवेशे'ति जीवलिङ्गं भेदाभिप्रायम् । अतोऽणुत्वव्यपदेशोऽत्रान्तःकरणोपाधिक एव । अत 'एवैषोऽणुरात्मा चेतसा वेदितव्य' इति मन्त्रे उत्तरार्धे 'प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मे'ति विशुद्धेऽन्तःकरणे आत्मनो व्यापकत्वं दर्शयति । विपूर्वस्य भवतेर्व्याप्त्यर्थत्वात् । **यथा प्राज्ञस्य परमात्मन इति** । यथा हि परमात्मनोऽणीयस्त्वम् 'अणीयान् व्रीहेर्वे'त्यादौ श्रूयते, एवमुत्क्रान्तिरपि श्रूयते — 'तद्यथानस्सुसमाहितमुत्सर्जद्यायादेवमेवायमात्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याती'ति हि जीवेन सह प्राज्ञशब्दोदितपरमात्मन उत्क्रान्तिराम्ना-

ता। तथा 'गुहां प्रविष्टावि'त्यादौ परमात्मनो गुहाप्रवेशोऽप्याम्नातः । न ह्येतत्सर्वं मुख्यमात्मनि सम्भवति । यदि तु परमात्मनोऽणुत्वाभ्युपगमे तस्य सर्वोपादानत्वं न सम्भवतीति तदौपाधिकमुपेयते, तर्हि जीवस्यापि सर्वाङ्गीणसुखादिकमणुत्वे न सम्भवतीति तदौपाधिकमस्तु । ननु, सिद्धान्ते न सुखादिकं जीवस्य धर्मः, अपि त्वन्तःकरणस्य । एकदेशिमतेऽपि आत्मधर्मभूतनित्यज्ञानधर्मः। तयोश्च सङ्कोचविकासशीलतया सर्वाङ्गीणविकासे तादृक्सुखादिकमणोरपि जीवस्योपपद्यत इति चेत्, अहं सुखीत्यात्मधर्मतया प्रतीयमानं सुखादिकं अन्तःकरणादेर्धर्म इति आत्मनो निर्विकारत्वसमर्थनाय वक्तव्यम् । तथासति ब्रह्मैक्याय जीवस्यानन्त्यमुपेयमित्यणुत्वादिवादा अप्यौपाधिका एवोपगन्तव्याः । अपि चाणोरीश्वरस्य सर्वोपादानत्वमुपपद्यत एव । न हि निर्विकारस्य परमात्मनः साक्षात् परिणामित्वमेकदेशिना वक्तुं शक्यम् । अपि तु तच्छक्तिभूतमायाया विकारित्वं, परमात्मनस्तु विकारिमायाधारतयोपादानत्वमुपेयम् । ततश्चाणुत्वेऽपि परमात्मनो जीवस्येव सङ्कोचविकासशीलस्वधर्मभूतज्ञानं प्रति दीपप्रभान्यायेन परिणामिमायां प्रति आधारतोपपत्तेः सर्वोपादानत्वसिद्ध्यर्थं महत्त्वस्याप्यनपेक्षणात् । यदि तु सिद्धान्तानुसारेण सर्वाधिष्ठानत्वं सर्वोपादानत्वं विकाराव्यापिन आत्मनो न सम्भवतीत्युच्यते, तथासत्यहं सुखीति प्रतीत्यात्मन्यपि सुखाद्यधिष्ठानत्वस्यावश्यकतया अव्यापिनस्तदसम्भवात् तस्यापि विभुत्वमुपेयमेव । अतो जीवविभुत्वप्रतिपादकानां वचनानां जीवब्रह्मैक्योपपादनायाम्नातानामन्यथानेतुमशक्यतया अणुत्वादिवादा औपाधिका एव व्याख्येयाः । न च तेषाम् औपाधिकत्वाभ्युपगमे 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति प्राणोत्क्रान्तिव्यतिरेकेण पृथगुत्क्रान्त्याम्नानमनुपपन्नं स्यात् । न हि विभोर्जीवस्य स्वातन्त्र्येणोत्क्रान्तिस्सम्भवतीति वाच्यम् । न ह्यत्र विशुद्धस्यैव जीवस्य तमुत्क्रामन्तमित्युत्क्रान्तिराम्नायते, अपि तु बुद्धिविशिष्टस्यैव । प्राणोऽनूत्क्रामतीति उत्तरवाक्ये प्राणवायोर्बाह्येन्द्रियाणामेव च ग्रहणोपपत्तेः ॥ २९॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥

सन्निधानादिति । योऽयं विज्ञानमय इति पूर्ववाक्ये विज्ञानपदेन बुद्धेरुपादानान्माध्यन्दिनशाखायां च 'सधीस्स्वप्नो भूत्वा इमं लोकमतिक्रामती'ति उत्तरवाक्येऽपि बुद्धिराम्नायते। अतस्सैव स समान इत्यत्राकाङ्क्षानिवृत्तये सम्बध्यते । लेलायति चेष्टते । ननु, ध्यायती' वेतिवाक्ये आत्मनो ध्यानादिकर्तृसादृश्यं

प्रतिपाद्यते, तावता कथमेतस्य वाक्यस्य यावदात्मभावि मन इत्येतदुपपादकता भवेदित्याशङ्कयाह—**एतदुक्तं भवतीति** । ध्यातर्येव जीवे ध्यातृसादृश्योपपादानं तस्य ध्यातृत्वाभावविवक्षयैव । यथा स्वप्नवृत्तान्तकथनपरे अद्राक्षमिव गिरिशृङ्गमित्यादौ । तथा च ध्यातृत्वाभावतात्पर्येणानेन वाक्येन ध्यातृत्वस्य मिथ्यात्वसूचनात् अस्वाभाविके तस्मिन्नुपाध्यपेक्षायामन्तःकरणमेव 'स समान' इति वाक्येनोपाधिः समर्प्यते । ध्यातृत्वादेश्च यावन्मोक्षमनुवर्तनात्तदुपाधेरपि भवति यावन्मोक्षमनुवर्तनमिति ॥ ३० ॥

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥३१॥

**अविद्यात्मकबीजेति** । 'सति सम्पद्य न विदुरि'त्यत्र जाग्रद्देशोत्पत्स्यमानज्ञानप्रागवस्थारूपस्यावेदनस्य तत्र दर्शिततया तदात्मना सर्वेषां कारणानामवस्थानमुपपद्यत इति भावः ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥३२॥

**अनेकधा तत्रतत्रेति** । 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च '। विज्ञानसारथिर्यस्तु', 'चित्तं वाव सङ्कल्पाद्भूय ' इत्यादौ । **संशयादिवृत्तिकं मन इति** । ' कामस्सङ्कल्प' इत्युपक्रम्यैतत्सर्वं मन एवेत्यत्र । एवं निश्चयवृत्तिर्बुद्धिरित्यत्रापि यथासम्भवं वचनमुदाहार्यम् । ननु , विषयेन्द्रियसन्निकर्षे सत्यपि ज्ञानकादाचित्कत्वदर्शनात् यत्समवधानाभावात् ज्ञानकादाचित्कत्वं , तन्मन इत्यभ्युपगन्त्रापि इन्द्रियमनस्संयोगस्य कादाचित्कत्वमदृष्टविशेषायत्तमित्येव वक्तव्यम् । तथा च ज्ञानकादाचित्कत्वस्यापि तेनैवोपपत्तेः किमित्यलौकिकं किञ्चिदन्तःकरणं कल्पनीयमित्यत आह—**तथा च श्रुतिरिति** । तथा च ज्ञानकादाचित्कत्वस्यान्तःकरणसमवधानासमवधानाभ्यां श्रुत्यैव प्रतिपादनात् नात्र किञ्चिदाशङ्कनीयं भवतीति तात्पर्यम् ॥ ३२ ॥

इति उत्क्रान्त्यधिकरणम् ॥ १२ ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

पूर्वाधिकरणेन सङ्गतिमाह—तद्गुणसारत्वाधिकारेणैवेति । अत्र 'यजेत दद्यात् बोद्धा कर्ता असङ्गोऽह्ययं पुरुषः असङ्गो न हि सज्जते योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती'त्यादिवाक्यानां कर्तृत्वादिसंसारतदभावप्रतिपादकानां परस्परविरोधादप्रामाण्यमिति पूर्वपक्षे साङ्ख्यः एकदेशी मन्यते—आत्मनः कर्तृत्वं नास्त्येव । शशशृङ्गवत् । कर्तृत्वादिप्रतिपादकवचनानि तु बुद्धिविषयाण्येव सन्त्यात्मनि सिंहो माणवक इतिवदुपचारात् कर्तृताप्रतिपादकानि । अकर्तृत्वादिप्रतिपादकवचनानि तु मुख्यया वृत्त्या आत्मपराणीति व्यवस्था आश्रयणीया । अतो न विरोध इति । तत्र सिद्धान्तमाह—कर्ता चायामिति । अहं करोमीति कर्तृत्वं चेतनस्योपलभ्यते । श्रुतावपि आत्मादिपदसमभिव्याहारेणाम्नातं कर्तृत्वं न जघन्यवृत्त्या व्युत्पादयितुं युक्तम् । न च तथासति असङ्गत्वादिवचनविरोधः । साङ्ख्यस्याप्यसङ्गात्मनि कथं बुद्धिसम्बन्धः । यदि तु स काल्पनिकः, तथासति कर्तृत्वादिकमपि काल्पनिकमस्तु । अतो न संसारतदभावप्रतिपादकानां वचनानां विरोध इति भावः ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

विहारस्सञ्चारः । स जीवः स्वप्नावस्थायाममृत एव सन् यत्र कामं यथाकाममीयते सञ्चरति ॥ ३४ ॥

## उपादानात् ॥ ३५ ॥

उपादानं ग्रहणम् ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

सौत्रं न चेन्निर्देशविपर्यय इत्यंशं व्याख्यातुं शङ्कते—नन्विति ॥ ३६ ॥

## उपलब्धिवदनियमः ॥ ३७ ॥

स्वतन्त्रस्यापि इष्टानिष्टकरणं प्रतिबन्द्या समर्थयते—यथायमात्मेति । साङ्ख्येनापि ह्युपलब्धृत्वमात्मन एवेति स्वीकृतमिति भावः । स्वीकारं परित्यजति सा-

ङ्क्यः—**उपलब्धावपीति । हेतूपादानादिति** । बुद्ध्येति शेषः । किमात्मनो नित्यायां स्वरूपभूतायां हेत्वपेक्षोच्यते, जन्यायां वा । नाद्यः । नित्याया हेत्वनपेक्षत्वादित्याह—**विषयप्रकल्पनेति** । आत्मस्वरूपभूतस्य ज्ञानस्यानावृततया विषयैस्सह यः संसर्गः, तदर्थमपरोक्षस्थले हेतूपादानं, न स्वरूपलाभार्थमित्यर्थः । ननु, तथापि जन्यज्ञाने हेत्वपेक्षास्त्येव । अतो नात्मनः स्वातन्त्र्यमुपलब्धौ । एवं क्रियायामपि भविष्यतीत्याशङ्क्याह—**अपि चेति** । अत्यन्तं सहायानपेक्षम् । ननु, यदि सहायापेक्षा, तदा कथं स्वातन्त्र्यलक्षणं कर्तृत्वमत आह—**न च सहायापेक्षस्येति** । कारकान्तराप्रयोज्यत्वे सति इतरकारकप्रयोक्तृत्वेन क्रियाशून्यत्वमेव हि स्वातन्त्र्यापरपर्यायं कर्तृत्वम् । तच्च सहायापेक्षस्य न विरुध्यते । तथा च प्रवृत्ताविष्टसाधनताज्ञानादेः सहकारिणोऽपेक्षिततया यत्रानिष्टसाधनेऽपीष्टसाधनताभ्रान्तिः, तत्रेच्छापूर्वकमेवानिष्टफला प्रवृत्तिरुपपद्यत इति न काचिदनुपपत्तिः । बुद्धिकर्तृत्ववादिनापि ह्यनिष्टफला प्रवृत्तिरेवमेवोपपादनीया ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

**ततश्च संज्ञामात्रे विवादस्स्यादिति** । अन्तःकरणातिरिक्तस्य कर्तुरुक्तगत्या भवतापि स्वीकारात सिद्धान्तिनापि तस्यैवार्थस्य साधनीयत्वादिति भावः । ननु, सिद्धान्तिनापि कामादिवृत्त्युपादानत्वमन्तःकरणस्यैवोपेयते । तथा च तस्यैव कामादिकं प्रत्याश्रयतया कर्तृत्वं प्राप्नोति । जीवस्यापि हि कामादिवृत्त्याश्रयतामात्रेणैव कर्तृत्वं प्रसाधनीयं, न तु तदनुकूलकृत्याश्रयतया । कृतीच्छाविषयककृत्यन्तरस्य जीवे अभावात् । अतश्च बाह्यव्यापारानुकूलकामकृत्याश्रयतयाभ्युपगतस्य बुद्ध्यादिपदप्रतिपाद्यस्यान्तःकरणस्य कथं कर्तृत्वं निरस्यत इति चेत्, उच्यते—सिद्धान्ते कामादीन् प्रति बुद्धेरेव केवलाया नोपादानत्वम्, अपि तु यथा वियदादिकं प्रति माया परिणामिनी, ब्रह्म विवर्तोपादानम्, एवं कामादीन् प्रति बुद्धिः परिणामिनी, जीवचैतन्यं विवर्तोपादानमिति बुद्धिशबलितस्य जीवस्यैवाश्रयता । अहन्त्वमपि शबलस्यैव धर्म इत्यहं करोमीत्यादयः प्रत्ययाः शबलितविषया एव । मनसः करणत्वं तु जीवचैतन्यस्य कामाधिष्ठानता मनउपाधिनेत्यवगन्तव्यम । एवंसत्येव 'ह्येष हि द्रष्टा श्रोते'त्यादीनि जीवकर्तृत्वप्रतिपादकानि एतत्सर्वं मन एवेत्यादीनि मनस उपादानत्वप्रतिपादकानि 'मनसा ह्येष पश्यति मनसा शृणोती'त्यादीनि मनसः करणत्वप्रतिपादकानि 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती'त्यादीनि जीवस्य कामाद्यसंस्पृष्टतावचनानि चोपपन्नानि भवन्ति ॥ ३८ ॥

## सामाध्यभावाच्च ॥ ३९ ॥

नन्वत्र भाष्ये समाधिपदार्थत्वेन श्रवणादीन्युदाहृतानि । नेदमुपपद्यते । पतञ्जलिना हि देशबन्धश्चित्तस्य धारणा नाभिचक्रहृदयपुण्डरीकादिदेशेषु अन्यस्मिन् वा चित्तैकाग्र्योपयुक्ते विषये चित्तस्य स्थापनं धारणा । तत्र प्रत्ययैकतानता ध्यानं धारणाविषये विजातीयप्रत्ययानन्तरितप्रत्ययधारासम्पादनं ध्यानमिति ध्यानं लक्षयित्वा तदेवार्थनिर्भासं स्वरूपशून्यमिव समाधिरिति ध्यानमेव ध्यानध्यात्रादिनिर्भासांशे अस्फुटं ध्येयवस्तुन्येव स्फुटतया निर्भासमानं यदा भवति, तदा समाधिरित्युच्यत इति प्रतिपादितम् । अतः कथं श्रवणादिकं समाधिस्स्यादिति चेत्, उच्यते—पातञ्जलोक्तमर्थं विहायैव चित्तस्यात्मनि सम्यगाधानं समाधिरिति यौगिकमर्थं स्वीकृत्य श्रवणादिकमपि समाधिशब्दार्थतयोदाहृतम् ॥३९॥

इति कर्त्रधिकरणम् ॥१४॥

## यथा च तक्षोभयथा ॥४०॥

आत्मनः आध्यासिकं कर्तृत्वमुपेत्य कर्तृत्वतदभावप्रतिपादकानां वचनानां विरोधे परिहृते पुनरेकदेशिनः कस्य चिदित्थं चोद्यं—नाध्यासिकमात्मनः कर्तृत्वम्, अपि तु पारमार्थिकमेव । अकर्तृत्वप्रतिपादकानि तु वचनानि मोक्षदशायां कर्तृत्वस्य शक्तिमात्रावशिष्टतया फलमुखत्वाभावात्तदभिप्रायाण्येव भवन्तीति विषयविभागेन कर्तृत्वतदभावप्रतिपादकवचनजातविरोधपरिहारे सम्भवति प्रत्यक्षादिप्रतिपन्नस्य तस्याध्यासिकत्वकल्पनानुपपत्तेरिति तन्निराकरणेन कर्तृत्वस्याध्यासिकत्वं व्यवस्थापयितुमिदमधिकरणम् । **निमित्तानामपि शक्तिलक्षणेनेति** । निमित्ताभावान्मोक्षे फलमुखं कर्तृत्वं नास्तीति वक्तुमशक्यम् । न हि सतां निमित्तानां निरन्वयनाशः सम्भवति, अपि तु सूक्ष्मावस्थारूपशक्त्यवशेष एव तेषां नाशो वक्तव्यः । तथा च निमित्तानामपि शक्त्यात्मना विद्यमानानामुद्भवसम्भवात् कर्तृत्वमप्युद्भूतं भवेत् । अतो मोक्षानुपपत्तिरित्यर्थः । **अपि च नित्यशुद्धात्मेति** । न चेदमात्मप्रतिपादनमवस्थाविशेषनिबन्धनमिति योजयितुं शक्यम् । वर्तमाननिर्देशेन बन्धदशायामेव विशुद्धत्वपर्यवसानात् । न च तत्र लक्षणाश्रयणमुचितम् । उपनिषत्सु जीवप्रतिपादनप्रदेशे सर्वत्र तत्तत्सांसारिकधर्मप्रतिषेधप्रतिपादनस्य गतिसामान्यन्यायेनैव तात्पर्यवत्तयावगतस्यान्यथानेतुमशक्यत्वात् । श्रुतयश्च तथाविधाः समन्वयाध्याय एव विवेचिताः । **स्वप्नजागरितयोरिति** । 'स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा' स्वप्नान्तः स्वप्नावस्था । 'स वा एष एतस्मिन् बुद्धान्ते रत्वा

चरित्वा ' बुद्धान्तो जाग्रदवस्थेति स्वप्नजागरितयोस्सञ्चारं निरूप्येदमाम्नातं बृहदारण्यके ज्योतिर्ब्राह्मणे—'तद्यथास्मिन् आकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तस्संहत्य पक्षौ सङ्घयाय समीचीननीडायैव ध्रियते, एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यतीति, तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'ति च। तद्यत्सुप्तौ प्राप्यं प्राज्ञात्मकं तदस्य जीवस्य स्वरूपम् । कीदृक्तदित्यतो विशिनष्टि—**अकाममिति** । तत्र हेतुः—**आत्मकाममिति** । आत्मा स्वरूपमेव तस्य काम्यम् । अनेन सुखरूपतां तस्योपक्षिपति। स च नित्याप्त इत्याह—**आप्तकाममिति** । शोकान्तरं शोकवर्जितम् । एषा सुप्तौ प्राप्यं यत् स्वरूपं, सा परमा अर्चिरादिमार्गात्मिका गतिः सम्पत् ब्रह्मलौकिकादिविभूतिः । लोकः ब्राह्मादिः । सुप्तप्राप्यरूपस्य गतित्वादिप्रशंसायामालम्बनमाह—**एषोऽस्य परम आनन्द इति** । परमानन्दप्राप्त्यर्थत्वात् गत्यादीनां तस्मिन् प्राप्ते सर्वे प्राप्ता एव भवन्ति गत्यादय इति प्रशंसातात्पर्यम् । तथा च ज्योतिर्ब्राह्मणगतवाक्योपन्यासः स्वप्नजागरितयोः बुद्धिसंयुक्तत्वात् आत्मनः संसारः, सुप्तौ तदभावात्तु स्वभावभूतपरमानन्दात्मनैवावस्थितिः । अतो न सङ्गः स्वाभाविक आत्मनः, अपि तु बुद्ध्युपाधिक एवेत्यस्मिन्नर्थे पर्यवसित इति । वाचाश्चित्तस्य उत्तरोत्तरः सन्तन्यमानतयाग्रे जायमानः क्रमः कार्यम् । ' तथा च विज्ञानं यज्ञं तनुत ' इतिवाक्यमेतच्छ्रुत्यैकार्थ्याय बुद्धिविषयमेवेति भावः । नन्वहङ्करोमीत्यादिप्रत्यक्षेणाहन्ताश्रयस्य कर्तृत्वमुपलभ्यते । अहन्ताश्रयश्च जीव एव । अतः कथं तस्य कर्तृत्वं नास्तीत्युच्यत इत्यत आह—**अहङ्कारपूर्वकमपीति** । उपलब्धुः शुद्धस्य साक्षिणः। **उपलभ्यमानत्वादिति**। तथा च दृश्यतया जडेनाहङ्कारेण शबलितस्यैवाहमित्युल्लेखान्न विशुद्धस्य कर्तृत्वसाधकमहं करोमीतिप्रत्यक्षमिति भावः ॥ ४० ॥

इति तक्षाधिकरणम् ॥ १९ ॥

## परात्तु तच्छ्रुतेः॥ ४१ ॥

पूर्वाधिकरणेन सङ्गतिं दर्शयितुं वृत्तं कीर्तयति—**यदिदमविद्यावस्थायामिति** । ननु, ब्रह्माभेदोपयोगिजीवशोधनपेटिकायां जीवस्य ब्रह्माधीनकर्तृत्वनिरूपणं न सङ्गतमिति चेत, सत्यं , तथापि कर्तृत्वस्याध्यासिकत्वे निरूपिते तत्प्रसङ्गात् 'ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यादिस्वातन्त्र्यप्रतिपादकानां 'य आत्मानमन्तरो यमयती'ति परमात्मायत्तत्वप्रतिपादकानां च वचनानां विरोधेनाप्रामाण्यशङ्कायाः

प्राप्तायाः परिहार इहैव क्रियत इति प्रासङ्गिकी पेटिकासङ्गतिः । तत्रैकदेशी मन्यते—ज्योतिष्टोमादिकर्तृत्वं हि ज्योतिष्टोमाद्यनुकूलकृतिचिकीर्षादिशालित्वादि । तथासत्येवेष्टसाधनताबोधकविधिसार्थक्यम् । न चैतदीश्वरस्य प्रेरकत्व उपपद्यते । न हि वाय्वादिः प्रेरयन् पुरुषेच्छादिकमपेक्षते । तथा च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिबहुशास्त्रानुसारेणान्तर्यामित्वप्रतिपादकानां क्वाचित्कानां पदानां प्रशंसापरत्वमेव युक्तम् । तदिदमुक्तं—तदेव चेत् कर्तृत्वमीश्वरापेक्षं स्यात्, किंविषयमीश्वरस्य सापेक्षत्वमुच्येतेति । सापेक्षत्वे जीवकर्तृत्वस्यैव लोपेन धर्माधर्मानिष्पत्तेरिति भावः । अकृताभ्यागमश्चैवमिति । धर्माधर्मयोरनिष्पत्तावित्यर्थः । लोके हि द्विविधः प्रेरको दृष्टः । वाय्वादिकमिच्छामनुपसृत्यैव प्रेरयति । आचार्यादिस्तु इष्टसाधनतां बोधयन्निच्छामुपसृत्यैव प्रेरयति । ततश्च प्रत्यक्षेण जीव इच्छादिपूर्विकायाः प्रवृत्तेरुपलब्धेः ज्योतिष्टोमादिशास्त्राच्च ईश्वरस्य प्रेरकतेच्छोपहारेणैव कल्प्यत इति शास्त्रद्वयमुख्यतोपपत्तौ नान्तर्यामिशास्त्रं प्रशंसामात्रार्थं कल्पनीयमित्यभिप्रेत्य सिद्धान्तयति—एतां प्राप्तिं तुशब्देनेति ॥ ४१ ॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥

ननु, यदीश्वरस्य जीवगतधर्माधर्मापेक्षत्वात् न वैषम्यनैर्घृण्यादिप्रसक्तिः, तथासति सर्गादौ धर्माधर्मयोरसम्भवात् कथमीश्वरस्य प्रेरकता । अत आह—अपि चेति ॥ ४२ ॥

इति परायत्ताधिकरणम् ॥ १६ ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

पूर्वाधिकरणेन सङ्गतिमाह—जीवेश्वरयोरुपकार्योपकारकभाव उक्त इति । 'तत्त्वमस्ययमात्मा ब्रह्मे'त्यादीनां जीवब्रह्मैक्यप्रतिपादकानां 'य आत्मनि तिष्ठन्नात्मनोऽन्तर' इत्यादीनां नियन्तृनियन्तव्यभावेन जीवब्रह्मणोर्भेदसूचकानां वचनानां विरोधादप्रामाण्येन पूर्वपक्षे अभेदप्रतिपादकानां वचनानां मुख्यार्थत्वे उपगते भेदप्रतिपादकानि वचनानि क्लेशेन नेयानि । 'नाहं सर्वज्ञ' इति प्रत्यक्षबाधश्चाप्र-

यणीयः । अत उभयानुग्रहायाभेदप्रतिपादकवचनान्येव भाक्तानि व्याख्येयानीत्येकदेशिमते प्राप्ते सिद्धान्तः—प्रत्यक्षं तावद्दुर्बलं नाभेदश्रुत्यन्यथानयने समर्थम्। नियन्तृनियन्तव्यभावादिना भेदप्रतिपादिकाश्च श्रुतयोऽद्वैतविषयोपक्रमोपसंहारैकरूप्याद्यनेकतात्पर्यलिङ्गावधृतनिर्विशेषप्रत्यगभिन्नब्रह्मप्रकरणान्तर्गतव्यावहारिकभेदावलम्बिन्योऽद्वैतानुसारेण व्याख्येया इति सिद्धान्तः । अग्निविष्फुलिङ्गवदिति प्रदर्शनार्थं बिम्बप्रतिबिम्बमहाकाशघटाकाशदृष्टान्तानाम् ॥ ४३ ॥

## मन्त्रवर्णाच्च ॥४४॥

ननु, 'पादोऽस्य विश्वा भूतानी'त्यत्र भूतशब्दवाच्यानामाकाशादीनां ब्रह्मांशत्वावगमात् कथं जीवस्यानेन ब्रह्मांशत्वमवगन्तुं शक्यमत आह—अत्र भूतशब्देनेति ॥ ४४ ॥

## अपि च स्मर्यते ॥४५॥

ननु, जीवेश्वरयोरैक्याभ्युपगमे कथमीशित्रीशितव्यभाव इत्यत आह—**निरतिशयेति** । सर्वज्ञत्वादय उत्कृष्टोपाधयः परमात्मनः सन्ति । किञ्चिज्ज्ञत्वादयः हीनोपाधयो जीवस्येति उपपद्यत ईशित्रीशितव्यभाव इति ॥ ४५ ॥

नन्वभेदवादिन इयं धर्मव्यवस्था कथमिति शङ्कयोत्तरसूत्रमवतारयति—**अत्राहेति** ।

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा । मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध' इति मायिकस्य भेदस्य जीवेश्वरात्मना एकस्मिन्नेव चैतन्ये श्रुत्या प्रदर्शिततया धर्मव्यवस्थोपपद्यत इति परिहाराभिप्रायः ॥४६॥

## स्मरन्ति च ॥४७॥

सप्तदशकेनापीति । ज्ञानकर्मेन्द्रियाणि दश , पञ्च प्राणाः, मनो बुद्धिरिति लिङ्गशरीरात्मकः सप्तदशको राशिः । बाह्यः दुःखाद्यसंसर्गस्वभावो न जैवैर्दुःखैर्लिप्यते ॥ ४७ ॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४८॥

पूर्वसूत्रेण लौकिकानां सुखदुःखादीनां व्यवस्थोपपादिता । अनेन तु वै-

दिकानां धर्माणां व्यवस्था प्रतिपाद्यते । अनुज्ञा विधिः । परिहारो निषेधः । ननु, सम्यग्दर्शनं देहातिरिक्तात्मदर्शनं, तद्वतश्चेन्नाधिकारः । तथासति देहात्मैक्यज्ञानवतोऽप्यनधिकारात् शास्त्रं बाधितमेव स्यादिति शङ्कते--शरीरव्यतिरेकदर्शिन एवेति । सम्यग्दर्शिनो द्विविधाः—देहातिरिक्तात्मदर्शिनः केचित् । तेषां कर्मस्वधिकारो न वार्यते । अन्ये त्वसङ्गब्रह्मात्मतादर्शिनः । ते तु सम्यग्दर्शिनो नाधिक्रियन्त इत्याह—न तत्संहतत्वाभिमानादिति । सङ्ग्रहवाक्यं विवृणोति—सत्यमिति ॥४८॥

## असन्ततेश्चाव्यतिकरः॥ ४९॥

जीवेश्वरयोः धर्मव्यवस्थासिद्धावपि जीवभेदासम्भवात् जीवानां परस्परं धर्मा न व्यवस्थितास्स्युरिति शङ्कानिराकरणार्थमिदं सूत्रम् । जीवोपाधीनामज्ञानान्तःकरणादीनां भिन्नभिन्नतया जीवनानात्वमप्यौपाधिकं कल्पितमस्तीति जीवधर्माणामपि न परस्परं साङ्कर्यमिति परिहाराभिप्रायः ॥ ४९ ॥

## आभास एव च ॥५०॥

'अंशो नानाव्यपदेशा'दिति सूत्रोक्तं जीवस्य परमेश्वरांशत्वं 'प्रकाशादिव'दिति सूत्रेणौपाधिकावच्छेदनिबन्धनमिति प्रतिपादितम्।अनेन तु सूत्रेण बिम्बप्रतिबिम्बभावनिबन्धनमिति प्रतिपाद्यते । ननु, चाक्षुषोपाधावेव चाक्षुषस्य प्रतिबिम्बो दृष्टः । अत्र त्वन्तःकरणं वाऽज्ञानं वोपाधिरचाक्षुष एव । तत्र कथमचाक्षुषस्य ब्रह्मणो जीवरूपेण प्रतिबिम्बस्स्यादिति चेन्न । अप्रयोजकं नियममुपेत्य 'यथा ह्ययं ज्योतिरात्मा विवस्वा'निति श्रुतिस्वारस्यप्राप्तस्य प्रतिबिम्बभावस्य निराकरणानुपपत्तेः । अपि च चाक्षुषस्यैव प्रतिबिम्ब इति नोपपद्यते । अचाक्षुषस्यापि शब्दस्य प्रतिबिम्बदर्शनात्। न च तादृशस्थले शब्दान्तरोत्पत्तिरेव, न तु शब्दप्रतिबिम्ब इति वाच्यम् । गोपुरादिशब्दप्रतिफलनप्रदेशे वर्णपदादियुक्तशब्दजनकस्य कण्ठादिप्रदेशस्याभावेन वर्णात्मकशब्दजननासम्भवात् । न च कण्ठादिप्रदेशे उत्पन्नस्य ध्वनेः वीचीतरङ्गन्यायेन प्रतिफलनप्रदेशं प्राप्तस्य तत्र वर्णाभिव्यञ्जकता भविष्यतीति वाच्यम् । तथासत्याद्यध्वनिप्रदेशावच्छेदेनैव वर्णप्रतिध्वनिसाक्षात्कारापत्तेः । वीचीतरङ्गन्यायेन हि जनिताः शब्दाः आद्यप्रदेशावच्छेदेनैव प्रतीयन्ते । अतश्च गोपुराद्यवच्छेदेन प्रतीयमानस्य मूलशब्दत्वासम्भवात् तदवच्छेदेन प्रतीतिसिद्धये प्रतिबिम्बतैवाश्रयणीया । न च तथासति समुद्रादिगतशब्दानां जलादिशब्दत्वेनाकाशशब्दत्वासम्भ-

वात् प्रतिध्वनेरपि प्रतिबिम्बतयारोपितत्वाङ्गीकारे आकाशासाधारणः शब्दः सिद्धान्ते दुर्लभ एव स्यादिति वाच्यम् । वीचीतरङ्गन्यायेन मध्योत्पन्नानामेव शब्दानामाकाशशब्दत्वसम्भवात् अधिष्ठानातिरेकेणोपाध्यन्तर्गततया प्रतीयमान आरोप्यविशेष एव प्रतिबिम्ब इत्युच्यते । भवति च प्रतिशब्दस्तादृशः वर्णात्मकस्य शब्दस्याव-च्छेदकतया कण्ठताल्वादिकमेवाश्रय इति गोपुरादिष्ववच्छेदकतासम्बन्धेन त-स्यारोप एवोपेयः । आद्यशब्दादधिष्ठानात् भेदेन च स प्रतीयत इति भवति प्र-तिबिम्बः । ततश्चाक्षुषस्यैव प्रतिबिम्ब इत्यपि न नियमः । ततश्चाचाक्षुषस्यात्मनः प्र-तिबिम्बत्वे नानुपपत्तिः । ननु, चैतन्यं स्वरूपत एकमेव जीवेश्वरात्मनोपाधिको भेद इति तदवलम्बना धर्मव्यवस्थेति क्लेशः किमर्थमाश्रीयते । वस्तुगत्यैव जीव-नानात्वमीश्वरभेदश्चास्त्विति ये मन्यन्ते, तेषामपि क्लेश एवेति दर्शयति—येषां त्विति । जीवाणुत्वमुपेत्य भेदवादिनां सर्वाङ्गीणसुखाद्यनुपपत्तिरुक्तैव । साङ्ख्याः काणादाश्च जीवविभुत्वमुपेत्यैव जीवभेदः परमार्थ इति वर्णयन्ति । तेषां मते दोष इदानीमुच्यते—तत्र साङ्ख्यं प्रति सुखदुःखात्मकप्रधानपरिणामस्य सर्वजीवसा-धारण्यं स्यात् । विभूनां जीवानां सुखदुःखपरिणामप्रदेशे सन्निधानाविशेषादित्या-पादिते प्रधानस्य प्रवृत्तिः पुरुषार्था । स च पुरुषार्थो भोगमोक्षरूपः । ततश्च यं प्रति असमाप्तो भोगः, तं प्रति सुखाद्यात्मना परिणमते । यस्य तु समाप्तो भो-गः, तं प्रति न तथा परिणमत इति सर्वजीवसन्निध्यविशेषेऽपि प्रवृत्तिवैचित्र्याद्य-वस्था भविष्यतीति स एव शङ्कते—स्यादेतदिति । पुरुषकैवल्यार्थत्वादिति भोगार्थत्वादित्यस्याप्युपलक्षणम् । नैतत्सारमिति । अयं भावः—प्रधानादि-प्रवृत्तिवैचित्र्यं हि सुखदुःखादिरूपमेव, नान्यत्किञ्चिदुपपद्यते । तच्च सर्वेषामा-त्मनां सन्निहितमिति स्वप्रकाशेष्वात्मसु कस्यचिद्भासते, कस्यचिन्नेति कथं निर्मूला व्यवस्था आश्रयितुं शक्येति । काणादानां मते आत्ममनस्संयोगः सुखादावसमवा-यिकारणम् । प्रत्येकं च मनसां सर्वैरात्मभिः संयोगो विभुत्वादवर्जनीय एवेति त-ज्जनितं सुखादिकं सर्वात्मसमवेतमेव भवेदिति न व्यवस्था स्यादित्याह—काणा-दानामपीति ॥ ५० ॥

ननु, मनस्संयोगस्य सर्वसाधारणत्वेऽपि यददृष्टारब्धः मनस्संयोगः, तस्यैव सुखजनको भविष्यति, नान्यस्येति शङ्कापरिहारार्थतयोत्तरसूत्रमवतारयति—स्या-देतददृष्टनिमित्त इति ॥

## अदृष्टानियमात् ॥५१॥

अदृष्टं हि कृत्यादिजन्यम् । तज्जनकस्यात्ममनस्संयोगस्य सर्वसाधारणत-

या एकेन पुण्ये पापे च क्रियमाणे सर्वैरपि कृतमेव भवतीति नादृष्टमपि व्यवस्थापयितुं शक्यमित्याह—कारणादीनामपीति ॥ ९१ ॥

## अभिसन्ध्यादिष्वपि चैवम् ॥५२॥

अदृष्टन्यायस्याभिसन्ध्यादिषु कर्मोपयोगिज्ञानचिकीर्षादिष्वतिदेशार्थमिदं सूत्रम् ॥ ९२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥५३॥

शरीरप्रतिष्ठेन मनसेति । मनसोऽणुत्वेन शरीरात् बहिर्मनोयोगो नास्तीति भावः । शरीरावच्छिन्नोऽपीति । एतस्यैवात्मनः प्रदेश एतस्मिञ्छरीरे प्रविष्टः, नान्यस्येति व्यवस्था तार्किकैरुपगन्तुमशक्येत्यर्थः। नन्वेकस्मिन् शरीरे सर्वेषामात्मनां प्रविष्टत्वेऽपि शरीरावच्छेदेन जायमानाः आत्मधर्माः शरीरस्वामिन एव भवन्ति, नान्यस्येत्याशङ्क्याह—शरीरमपीति । नन्वेकस्मिन् शरीरे बहूनामात्मनां प्रविष्टत्वेऽपि तच्छरीरस्वामित्वेन प्रसिद्धस्यात्मनः प्रदेश एव तत्रत्यसुखादिसमवायितायोग्यः, नान्यात्मप्रदेश इति शङ्कायां देवदत्तशरीरस्थितिप्रदेशे यज्ञदत्तशरीरप्राप्तौ तस्यापि तत्र सुखादिदर्शनात् तत्रत्यो यज्ञदत्तात्मप्रदेशो न सुखाद्ययोग्य इत्याह—प्रदेशविशेषाभ्युपगमेऽपीति । ननु, तत्प्रदेशावच्छेदेन तस्यादृष्टं नास्तीत्याशङ्क्याह—समानप्रदेशस्यापीति । उक्तमर्थं विवृणोति—तथा हीति । यदि च यत्प्रदेशावच्छेदेनादृष्टं, तदवच्छेदेनैव सुखादिकमित्यभ्युपगम्यते, तदा दोषमाह—स्वर्गादीति । सुखादीनां व्यवस्थितत्वं लोकसिद्धम्। तत्र व्यवस्थाप्रयोजकं किंचित् सर्ववादिभिर्वक्तव्यम् । तत्र साङ्ख्येनैवं वक्तुं शक्यं—बुद्धिपरिणामः सुखम्। सुखव्यक्तिविशेषे च बुद्धिविशेषस्यैवोपादानत्वम् । ततश्च यस्यां बुद्धौ यस्य जीवस्य प्रतिबिम्बः, तद्बुद्धिपरिणामभूतं सुखादि तस्यैव भोग्यम् । न च सर्वात्मसन्निधौ विद्यमानायामेकस्यैवात्मनः प्रतिबिम्ब इति नियन्तुमशक्यमिति वाच्यम् । एकस्या बुद्धेरेकात्मप्रतिबिम्बग्राहित्वमिति नियमकल्पनोपपत्तेः । अतो न साङ्ख्यमते अव्यवस्था । नैयायिकमते तत्तत्सुखव्यक्तिविशेषे आत्मविशेषस्यैवोपादानत्वमित्युपगमान्न सर्वेषां सुखानां सर्वात्मसमवायिता प्रसज्यते । तत्तत्समवेतं च सुखं तस्य तस्य भोग्यम् । अतो न भोगसाङ्कर्यम् । सिद्धान्तेऽपि ह्येवमेव वक्तव्यम् । अन्तःकरणोपहितो जीव इति पक्षे तस्य परिच्छिन्नत्वसम्भवेऽपि अज्ञानोपाधिको जीव इति पक्षे अज्ञानानां व्यापकतया तदुपाधिकानां जीवानां व्यापकत्वावश्यम्भावादित्या-

शङ्कयाह—**तस्मादात्मैकत्वपक्ष इति** । अयं भावः—यदि लोकसिद्धव्यवस्थोपपादनाय इत्थं व्यवस्थाश्रीयते, तथासति श्रुतिसिद्धाद्वैतसमर्थनाय चैतन्यभेदोऽपारमार्थिको मायोपाधिक इत्युपेत्यास्मदुक्तैव व्यवस्थाश्रयणीया । अन्यथा श्रुतिविरोधरूपस्य दोषस्य प्रसङ्गादिति ॥

॥ अंशाधिकरणम् ॥ १७ ॥

**इति श्रीमद्भगवत्पादीयभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां**
**द्वितीयस्याध्यायस्य तृतीयः पादः**

॥ ॐ ॥

---

॥ ॐ ॥
॥ अथ ॥
॥ द्वितीयस्याध्यायस्य ॥
॥ चतुर्थः पादः ॥

---

# तथा प्राणाः ॥ १ ॥

पूर्वोत्तरपादयोः पौर्वापर्यनियामकं सम्बन्धं वक्तुं द्वयोः पादयोरर्थं संगृह्णाति —**वियदादिविषयेत्यादि** । भूतोत्पत्त्यादिविषयश्रुतिविरोधे परिहृते भूतकार्याणामिन्द्रियादीनामुत्पत्त्यादिगोचरश्रुतिविरोधः परिह्रियत इति अर्थयोः कार्यकारणभावः पौर्वापर्ये नियामक इति भावः । प्रलयेऽपि प्राणस्थितिप्रतिपादकानां प्राणोत्पत्तिप्रतिपादकानां च वचनानां विरोधादप्रामाण्यमिति पूर्वपक्षे 'ऋषयो वाव तेऽग्रे सदासी'दिति प्रलयेऽपि प्राणस्थितिप्रतिपादिकायाः श्रुतेः अन्यथानेतुमशक्यत्वात् प्राणानामुत्पत्तिप्रतिपादिका श्रुतिः जीवोत्पत्त्यादिप्रतिपादकश्रुतिवत् गौणी व्याख्येया । न च ऋषिशब्दानुसारेण प्राणशब्दः 'सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ती'त्यत्रेव ब्रह्मप्रतिपादकः । ऋषिशब्दस्य प्रकृष्टज्ञानशालिचेतनवाचकत्वादिति वाच्यम् । ब्रह्मण एकत्वेन बहुवचनान्तयोः ऋषिप्राणपदयोः ब्रह्मपरत्वासम्भवात् एकमृषिपदमनुसृत्य द्वयोर्बहुवचनश्रुत्योः प्राणपदस्य च जघन्यवृत्त्याश्रयणानौचित्यात् । अतस्तस्यास्त ऋषयस्सप्त तीर इत्यत्रेव ऋषिपदमेव प्राणेषु मुख्यं भविष्यतीति एकदेशिमतमाह—**अथवेति** । **पुनरुक्तं भवेदिति** । अपि चैवंसतीदं सूत्रं पूर्वशेष एव स्यादिति नास्य पादान्तरान्तर्गतिस्स्यादिति द्रष्टव्यम् । **जीवस्य ह्यनुत्पत्तिराख्यातेति** । जीवस्योपमानतया तथाशब्देन परामर्शो हि यथा जीवो नोत्पद्यते, एवं प्राणा अपि नोत्पद्यन्त इत्यर्थो वर्णनीयः । तथासति नेदं पूर्वपक्षसूत्रमिति वक्तुं शक्यम् । उत्तरसूत्रे तुशब्दाद्यदर्शनात् । सिद्धान्तसूत्रत्वे तु अर्थविरोधः । श्रुतिस्वारस्येन प्राणानामुत्पत्तेरेव सिद्धान्ताभिमतत्वात् । तदिदमुक्तं—**प्राणानां तूत्पत्तिरिति** । यथा वियदादय उत्पद्यन्ते, एवं प्राणा अपीति सूत्रयोजनामभिप्रेत्य व्यवहितानां वियदादीनां कथं सौत्रेण तथाशब्दान्तर्गततच्छब्देन परामर्श इत्यपेक्षायां जैमिनिसूत्रदृष्टान्तमुखेन तमर्थमुपपादयन् पक्षान्तरमाह—**अथवेति** । 'पानव्यापच्च तद्व'दिति सूत्रगतेन तत्पदेन परामृश्यमानोऽर्थः उपमानभूतो व्यवहितः । तथा हि—

शेषलक्षणे 'दोषात्त्विष्टिर्लौकिके स्यात् शास्त्राद्धि वैदिकेन दोषस्स्यात्' तैत्तिरीयास्समामनन्ति–'प्रजापतिर्वरुणायाश्वमनयत, स स्वां देवतामार्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत्ततो वै स वरुणपाशादमुच्यत, वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति, स एवैनं वरुणपाशान्मुञ्चती'ति। प्रजापतिर्वरुणायाश्वं दत्वा सम्प्रदानभूततया स्वदेवतारूपं वरुणं प्राप्तवान् वरुणपाशशब्दोदितं जलोदररोगं प्राप्तवान् । ततस्स वारुणं चतुष्कपालेष्टिं कृत्वा तस्माद्रोगान्मुक्तवान् । अतोऽन्योऽपि यः कश्चित् अश्वं प्रतिगृह्णाति ददाति तं वरुणो गृह्णाति जलोदररोगयुक्तं करोति । तत्परिहारार्थमवश्यं देयाश्वसमसङ्ख्यान्वारुणान् चतुष्कपालान् निर्वपेदित्येवमर्थतास्य वाक्यस्य उपक्रमस्वारस्यानुसारेण स्थास्यति । तथा चाश्वदानं निमित्तभूमस्मिन्नधिकरणे विचार्यते–वारुणं चतुष्कपालेष्टौ किं लौकिकं प्रीत्यादिना सुहृदादिभ्यः कृतमश्वदानं निमित्तम् , उत पौण्डरीकादिषु कृतं वैदिकं दक्षिणारूपमश्वदानं निमित्तमिति संशयः । तत्र पूर्वः पक्षः–वरुणो वा एतं गृह्णातीति अश्वदाने दोषः। स च दोषो 'न केसरिणो ददाती'ति निषेधविषये लौकिक एव युक्तः। शास्त्रीयस्यानिषिद्धतया तत्र दोषसंसर्गायोगात् । अतो लौकिकमेवाश्वदानं निमित्तमिति । सिद्धान्तस्तु नानेनैव वाक्येनाश्वदाने कृते दोषो भवति, तत्र चेयं वारुणेष्टिरित्यर्थद्वयं बोधयितुं शक्यम् । वाक्यभेदात् । अतो दोषसङ्कीर्तनमर्थवादः वारुणेष्टेरवश्यकर्तव्यताद्योतनार्थः । ननु, स्तुत्यर्थमपि प्राप्तो दोषोऽनुवदितव्यः । तत्र केन प्रमाणेन प्राप्तिरिति चेत् , उच्यते—'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छदि'त्युपक्रमवशादन्यस्याप्यश्वदाने कृते वरुणग्रहः प्राप्तो भवतीत्यर्थोऽवगम्यते । स च सन्वासन्वा भवतु । तावन्मात्रमालम्बनं कृत्वा स्तुतिप्रवृत्तौ न काचिदनुपपत्तिः । अथवा 'अग्निमिव खलु वा एष प्रविशति योऽवान्तरदीक्षामुपैती'त्यत्र लोकप्राप्त एवाग्निप्रवेशः उपमानत्वेनोपादीयते । एवमत्रापि वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णातीति लोकप्राप्त एव वरुणग्रहः उपमानत्वेन कीर्त्यते । उपमानत्वं पारमार्थिकम् । इवशब्दादेरश्रवणात् । तथा च वरुणग्रहतुल्यमश्वदानमित्यर्थे सति वरुणग्रहे सति चिकित्सेव, अश्वदाने सति वारुणेष्टिः कर्तव्येत्यर्थो लभ्यते । पक्षद्वयेऽपि दोषकीर्तनान्वयो वैदिकेऽश्वदाने सम्भवत्येव। न चैवं विनिगमनाविरहाल्लौकिके वैदिके चाश्वदाने इयमिष्टिः स्यादिति वाच्यम् ।लौकिके पुरुषार्थत्वं, वैदिके क्रतुशेषतत्येकस्य वाक्यस्यैव क्रतुवाक्यैकवाक्यतातदभावाभ्यां वैरूप्यप्रसङ्गात् । तथा चान्यतरार्थत्वे वक्तव्ये वैदिकत्वेन प्रत्यासन्नं वैदिकमेवाश्वदानमुपस्थितं भवतीति तदेवेह निमि-

त्तम् । तथा च सूत्रम्—'अर्थवादोऽनुवादत्वात् तस्माद्यज्ञे प्रतीयेते'ति । तदनन्तरं च पुनर्विचारः—'योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयादि'ति वाक्येन किमत्र दातुरधिकारः प्रतिपाद्यते, उत प्रतिग्रहीतुरिति । तत्र पूर्वपक्षः—प्रतिगृह्णातेः प्रतिग्रह एव स्वारस्यात् न दातुरिष्टिरिति । न च प्रजापतिर्वरुणायाश्वमनयदिति दातारमुपक्षिप्य 'स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपदि'ति तस्यैव कर्तृताप्रतिपादनेनोपक्रम एव दातुरित्यवगतेः तदनुसारेण प्रतिगृह्णातिर्दान एव लाक्षणिको भविष्यति, षड्भिर्हलैः कर्षतीत्यादाविव णिजर्थगर्भो वा भविष्यति—प्रतिग्राहयतीति । तथा च दातुरेवेष्टिरिति वाच्यम् । 'स स्वां देवतामार्छदि'त्यत्र स्येन तच्छब्देन प्रजापतेः दातुर्वा, वरुणस्य प्रतिग्रहीतुर्वा परामर्श इति सन्दिग्धतया उपसंहारानुसारेण वरुणस्यैव परामर्श इत्युपपत्तेः । तदिदमाह सूत्रकारः—'अचोदितं च कर्म भेदादि'ति । दातुरचोदितं कर्म प्रतिग्रहेण कर्तुर्भेदात् विशेषणादित्यर्थः । सिद्धान्तस्तु 'सा लिङ्गादार्त्विजे स्यात्' । ऋत्विजां सम्बन्धी आर्त्विजः यजमानः, तस्मिन्नेवेयमिष्टिः स्यात् । उपक्रमरूपाल्लिङ्गात् । न चोपक्रमस्य सन्दिग्धार्थता । 'स एतं वारुणं चतुष्कपालमपश्य'दित्यत्र विद्यमानेन तत्पदेन प्रजापतिरिति प्रथमान्तेन स्वसमानविभक्तिकेन प्रस्तुतस्य 'स पर्यदीर्यते' त्यादिसर्वनामपरामृष्टस्य प्रजापतेरेव परामर्शस्य स्वरसतोऽवगम्यमानत्वात् । अतो दातुरेवेयमिष्टिः । तदनन्तरं 'पानव्यापच्च तद्व'दित्यधिकरणम् । 'यस्सोमं वमिति यस्सोमवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपे'दिति सोमवमने निमित्ते आम्नातश्चरुः किं लौकिकं धातुसाम्यार्थं सोमपानं कृतं, तत्र वमने सतीयमिष्टिः, उत वैदिकसोमपाने कृते यद्वमनं, तत्र वा । तत्र पूर्वपक्षसूत्रमेतत्—'पानव्यापच्चे'ति । अत्राश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षार्थः तत्पदेन परामृश्यत इति व्यवहितपरामर्शकता । यथा पूर्वपक्षे वारुणेष्टिर्लौकिकेऽश्वदाने भवतीत्युक्तं, तद्वदियमपीष्टिर्लौकिकसोमवमन एवेति । वैदिकं हि सोमपानं सोमप्रतिपत्त्यर्थं, ततश्च पानानन्तरं जातेऽपि वमने प्रतिपत्तिरूपस्य कार्यस्य वैकल्याभावात् इन्द्रियेण वीर्येण व्यृध्यते यस्सोमं वमितीति दोषकीर्तनस्य नान्वयः । लौकिके सोमपाने सति वमनानन्तरम् इन्द्रियवीर्यक्षयरूपो दोषः सम्भवति । वमने सतीन्द्रियवीर्यशोषस्य दर्शनेन धातुसाम्यरूपफलानिष्पत्तेः । सिद्धान्तस्तु वमने सति प्रतिपत्तिवैगुण्यमस्त्येवेति वमने सतीन्द्रियवीर्यशोषो जायमानो दोषत्वेन कीर्तयितुं शक्यत एव । 'शिवो मे सप्तर्षीनुपतिष्ठस्व मामे वाङ्नाभिमति गा' इति मन्त्रे सम्यग्जरणपर्यन्तस्य सोमपानस्यैव प्रतिपत्तित्वावगमात् लौकिक एव च सोमपाने वमनद्वारा अन्तर्गतदो-

षनिर्हरणेन धातुसाम्यसम्पादकतया वैद्यकोक्तेः जायमानाया इन्द्रियवीर्यग्लानेरङ्गीकृततया दोषत्वेन कीर्तनं नोपपद्यत इति वैदिकमेव वमनं निमित्तमिति वियदधिकरणसिद्धान्तयुक्तिं वक्तुमाकाङ्क्षामुत्थापयति—**कः पुनरिति** । न चैवंसति वियदधिकरणेनैव गतार्थता । 'ऋषयो वाव ते अग्रे सदासी'दिति श्रुतिगतिनिरूपणार्थत्वात् ॥ १ ॥

## गौण्यसम्भवात् ॥ २ ॥

**अवान्तरप्रकृतिविषयं त्वेतदिति** । 'असदेवेदमग्र आसी'दिति वाक्यं प्राणानां प्रलये सद्भावं प्रतिपादयत् न महाप्रलयविषयम्, अपि त्वग्निसाधनानां शर्करादीनां सृष्टिं वक्तुं प्रवृत्तमिदं वाक्यमवान्तरप्रलयविषयं योजयितुं शक्यम् । तत्रावान्तरप्रकृतेर्हिरण्यगर्भस्य विद्यमानतया तदीयानां प्राणानां सम्भवति सत्त्वम् । एकत्वावधारणमपि हिरण्यगर्भकार्याभिप्रायं भविष्यति ॥ २ ॥

## तत्प्राक्छ्रुतेश्च ॥ ३ ॥

**यथा सर्वाणि भूतानि व्युच्चरन्तीत्ययमिति** । 'सर्वे एत आत्मानो व्युच्चरन्ती'त्यत्रात्मनि सम्बन्धे तु गौणत्वं 'नात्माश्रुते'रिति न्यायप्राप्तं निवारयितुं न शक्यमिति द्रष्टव्यम् ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

**अथ भाक्तमिति** । 'अन्नमयं हि सोम्य मन' इत्यादिवाक्यं प्राक्सिद्धानामेव मनआदीनामन्नादिसम्बन्धादुपचितत्वमात्रप्रतिपादनपरमित्यर्थः ॥ ४ ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

**मुख्यं प्राणमिति** । प्राणा द्विविधाः—मुख्याः, गौणाश्च । प्राणापानादयो मुख्याः । चक्षुरादयोऽमुख्याः । पूर्वस्मिन्नधिकरणे चक्षुरादीनां गौणानां प्राणानामुत्पत्तिर्निरूपिता । श्रेष्ठश्चेत्यधिकरणे मुख्यप्राणोत्पत्तिनिरूपणं भविष्यति । गौणानां प्राणानां सङ्ख्यास्मिन्नधिकरणे निरूप्यत इति समानविषयत्वं पूर्वोत्तराधिकरणयोस्सङ्गतिः । उत्पत्तिमपेक्ष्य सङ्ख्याया बहिरङ्गत्वादानन्तर्यम् । **क्वचित्सप्तेति** । द्वे चक्षुषी, द्वे श्रोत्रे, द्वे नासिके, एका वागिति । **क्वचिदष्टाविति** । घ्राणरसनवाक्चक्षुश्श्रोत्रमनोहस्तत्वच इति । **ग्रहत्वेनेति** । यथा पिशाचादिग्रहाविष्टः पुरुषः का-

र्थमकार्यं वा न जानाति, एवमिन्द्रियैराकृष्टोऽपि पुरुषः कार्याकार्यविकलो भवतीति तेषां ग्रहत्वम् । अतिग्रहा विषयाः । इन्द्रियप्रवृत्तेर्विषयाधीनत्वात् । क्वचिन्नव 'सप्त वै शीर्षण्याः प्राणाः, द्वाववाञ्चौ' पूर्वोक्ताः सप्त शीर्षण्याः 'पायूपस्थाववाञ्चौ' । क्वचिद्दश—'नव वै पुरुषे प्राणाः' पूर्वोक्ताः नाभिर्दशमी' । क्वचिदेकादशेति । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्मेन्द्रियाणि । आत्मशब्दो मनःपरः ; इन्द्रियसमभिव्याहारात् । क्वचिद्द्वादशेति । बाह्येन्द्रियाणि, हृदयमनोभ्यामन्तःकरणं द्विविधम् । यद्यपि सर्वेषां स्पर्शानां त्वगेकायनमिति मैत्रेयीब्राह्मणाम्नातैकायनप्रक्रियायां त्वगादिशब्दाः स्पर्शादिविशेषलयाधारतया स्पर्शादिसामान्यलक्षका इति वाक्यान्वयाधिकरणे प्रतिपादितं, तथापि लक्षणार्थं मुख्योऽप्यर्थः प्रतिपादनीय इति तावन्मात्रेणेन्द्रियसङ्ख्यापि लब्धा भवतीति तात्पर्यम् । क्वचिच्च त्रयोदशेति । यद्यपि प्रश्नोपनिषदि 'चक्षुश्च द्रष्टव्यं चे' ति सन्दर्भे पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, मनोबुद्धिरहङ्कारश्चित्तमिति चतुर्विधमन्तःकरणं, तेजः, प्राणश्चेति षोडश पर्यायाः समाम्नाताः । तत्र तेजःप्राणयोरिन्द्रियबहिर्भावेऽपि चतुर्दशेन्द्रियाणि प्राप्नुवन्ति, तथापि त्रयोदशत्वं चतुर्दशत्वस्याप्युपलक्षणम् । ततश्च श्रुतीनां प्राणसङ्ख्याप्रतिपादिकानां विरोधादप्रामाण्यमिति पूर्वपक्षे एकदेशिमतमाह—प्राप्तं सप्तैव प्राणा इति। विशेषिताश्चेत इति । शीर्षण्याः प्राणाः सप्तेति नात्र प्राणानां शीर्षण्यानां सप्तत्वं प्रतिपाद्यते । प्रसिद्धार्थप्रतिपादने वचनवैयर्थ्यापातात्, अपि तु ये शीर्षण्याः सप्त, त एव प्राणा इति । तथाचाशीर्षण्यानां प्राणत्वव्युदासात् वचनं सार्थकमिति भावः । एवं 'सप्त वै शीर्षण्या' इति श्रुत्यनुसारात् लाघवप्रथमोपस्थितिभ्यां च सप्तत्वं प्राणानामवधार्य अष्टत्वादिसङ्ख्या वृत्त्यभिप्राया भविष्यतीत्युक्तम् । तत्र यदीत्थमुच्यते—अधिकसङ्ख्यायां न्यूनसङ्ख्याया अन्तर्भावात् सप्तत्वादिसङ्ख्यैवावयुत्यानुवाद इति, तदाप्येकादशैवेन्द्रियाणीति न सिद्धान्त्यभिमतार्थसिद्धिः । प्रश्नोपनिषत्पर्यालोचनया चतुर्दशत्वस्यैव प्रसङ्गादिति द्रष्टव्यम् ॥ ५ ॥

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

न त्वेकादशभ्यः कार्यजातेभ्य इति । चक्षुरादीनि हि करणानि 'रूपाद्युपलब्धिसकरणिका, क्रियात्वात् भिदावदि'त्यनुमानसिद्धानि श्रुत्यानूद्यन्ते । ततश्च श्रुतीनां मिथः कलहे प्रसक्ते यस्यां श्रुतौ मुख्यार्थायां गृह्यमाणायां रूपाद्युपलब्धिरूपं कार्यमुपपादितं भवेत्, तदनुसारेणेतरा श्रुतिर्व्याख्येया । तत्र यदि 'सप्त वै शीर्षण्याः प्राणा' इति श्रुतिर्मुख्यार्था स्वीक्रियेत, तथासति चक्षुःश्रोत्रघ्राण-

रूपाणि ज्ञानकरणानि, वाग्रूपमेकं कर्मेन्द्रियमिति सिद्धावपि स्पर्शरसोपलब्धिगमनादानविसर्गानन्दानां च कर्मणां करणाकाङ्क्षा पूरिता न स्यात् । न हि चक्षुषैव रसोपलब्धिस्सम्भवति । अन्धस्यापि रसोपलब्धिदर्शनात् , सचक्षुष्कस्याप्युपहतरसनस्य रसोपलब्ध्यदर्शनात् । एवमन्यास्वप्युपलब्धिषु यथायथं तत्तदिन्द्रियाणामन्वयव्यतिरेकौ द्रष्टव्यौ । अतः कार्यानुसारेणैकादशैव करणानि, एकमेव चान्तःकरणं सङ्कल्पनिश्चयाहङ्कारस्मरणरूपावान्तरकार्यविभागेन मनोबुद्धिरहङ्कारश्चित्तमित्यभिधीयते । तदभिप्रायं चतुर्दशत्वम् । न हि चक्षुर्व्यतिरेकेऽप्यन्धादेर्यथा रसोपलब्धिः, एवं मनोव्यतिरेकेऽपि अहमिति वृत्तिः । येनाहङ्कारो मनोव्यतिरिक्त एव सिध्येत् । तथा च स्मृतिरपि—'इन्द्रियाणि दशैकं चे'ति । स्थानभेदाद्भेद इति । चक्षुश्श्रोत्रघ्राणानां गोलकद्वित्वात् प्रत्येकं द्वित्वं, न तु स्वभावत एव चक्षुरादीनां द्वित्वम् । कार्यवैलक्षण्याभावात् । एकमेव चक्षुरादिकं सावयवं गोलकद्वये व्यासक्तं भवति । अत एव च काणस्य हीनं चक्षुरिन्द्रियमिति न सम्यग्रूपोपलब्धिः । यथा खञ्जस्य न सम्यग्गमनम् । यच्चोक्तं सप्त वै शीर्षण्याः प्राणा इति वाक्यमपूर्वार्थलाभायाशीर्षण्यानां प्राणत्वव्यावृत्त्यर्थमिति, तन्न । प्रमाणबलेनेन्द्रियाणामधिकानां सिद्धत्वेन व्यावृत्तेरसम्भवात् । अपि चायं 'वसवस्त्वा धूपयन्त्वि'त्यादिना आम्नातानां सप्तानां मन्त्राणामुखाधूपने विनियोजकस्य सप्तभिर्धूपयन्तीति विधेरर्थवादोऽयं—'सप्त वै शीर्षण्याः प्राणाः शिरो वा एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान् दधाती'ति । न चात्र स्तुत्यर्थं शीर्षण्यानां छिद्राणां सप्तत्वं कीर्त्यतो वाक्यस्य क्लेशेनाशीर्षण्यानां प्राणत्वव्यावृत्तिपरता कल्पयितुमुचिता । प्राप्तानुवादेनैव स्तुतिसम्भवात् । अस्मिन् पादे सप्तदशकराशिरूपाल्लिङ्गशरीरात् जीवं विवेचयितुं तदवयवभूताः प्राणा निरूप्यन्ते । तत्र पादाद्यधिकरणपूर्वपक्षे प्राणानामनुत्पत्तौ जीववन्नित्यत्वेन विवेकस्तेषां जीवात् न सम्यक् सिध्यति । सिद्धान्ते तु नित्यत्वानित्यत्वविरुद्धधर्माक्रान्ततया जीवप्राणयोर्विवेकः सिध्यति । एतदधिकरणपूर्वपक्षे तु प्राणानां सप्तत्वे तेभ्य एव जीवातिरेकोऽनुसन्धेयः । तद्वृत्तिभूतानामितरेषां विवेकस्तु तत एवार्थसिद्धो भवति । सिद्धान्ते तु एकादशानामपि स्वतन्त्रतया सर्वेभ्य एव विवेकः स्वातन्त्र्येणानुसन्धेय इति सूत्रद्वयस्य वर्णकान्तरमाह—इयमपरेति । पूर्ववर्णके एकादशेन्द्रियाणीति यदुक्तं, तदुपेत्यैव तेषु मध्ये जीवेन सह कत्युत्क्रामन्तीत्यत्र विचार्यते—क्वचिद्धि चक्षुर्घ्राणरसनवाक्छ्रोत्रमनस्त्वग्विज्ञानान्यष्टावुपक्रम्य तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीत्याम्नातम् । तत्र सर्वशब्दः प्रकृतत्वाच्चक्षुरादिपर इति मनोविज्ञानयोरेकत्वात् सप्तानामेवोत्क्रान्तिः प्रतीयते । 'दशेमे पुरुषे प्राणा आत्मैकादशः, ते यदास्माच्छरीरादुत्क्रामन्त्यथैनं रोदयन्ती'ति वचनपर्यालोचनया ए-

कादशानामुत्क्रान्तिः प्रतीयते । ततश्च विरोधादप्रमाणमिति पूर्वपक्षे लाघवात् सप्तानामेवोत्क्रान्तिः । उत्क्रम्यमाणानामेकादशत्वप्रतिपादिका तु श्रुतिस्तेषामेव सप्तानां वृत्त्यभिप्राया भविष्यतीत्येकदेशिमतं व्युत्पादयति—**सप्तैव प्राणास्स्युरिति।** उत्क्रामन्तीति शेषः । न चैवंसति हस्तादीनां सहोत्क्रान्त्यभावे लोकान्तरगतस्यादानादिकार्यं कथं स्यादिति वाच्यम् । अभिनवानामेव तत्रोत्पत्तिसम्भवात् हस्तादीनां ग्रहत्वोक्त्या मोक्षपर्यन्तं बन्धसम्पादकतया अनुवृत्तिसूचनात् केषांचिदिन्द्रियाणां मरणकाले मोक्षः, पुनः परलोके अभिनवानामुत्पत्तिरिति कल्पनैव गौरवपराहतेति सिद्धान्तमाह—**हस्तादयस्त्वपर इति । पुर्यष्टकेनेति ।** ज्ञानेन्द्रियं कर्मेन्द्रियं प्राणादिप्रभेदो भूतसूक्ष्माणीति चत्वारि पञ्चकानि, चतुर्विधमन्तःकरणं, अविद्या कामः कर्म चेति पुर्यष्टकम् । **प्रदर्शनार्थं च सप्तानामिति ।** 'यथा स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते । अथारूपज्ञो भवती'त्युपक्रमः। यत्र यस्यां मुमूर्षादशायां चाक्षुषश्चक्षुरधिष्ठितो जीवः पराङ् पराङ्मुखतया हृदयदेशमायाति, अथ तदा अरूपज्ञो भवति एकीभवति चक्षुरवच्छिन्नं चैतन्यं हृदयपुण्डरीकावच्छिन्नेन सह एकीभवतीति उपपादयन् चक्षुरभिमानमात्रपरित्यागविषयोऽपि यथाश्रुतः प्रतीयमानः सर्वेन्द्रियाभिमानपरित्यागोपलक्षणम्, एवं केषाञ्चिदिन्द्रियाणां ग्रहणं सर्वेन्द्रियोपलक्षणार्थमिति । प्रयोजनं पूर्वपक्षे अननूत्क्रामत्स्विन्द्रियेषु जीवस्य वैलक्षण्यं स्फुटमिति विवेकोऽयुक्तः। सगुणोपासनेषु चोत्क्रान्तिध्यानकाले सप्तानामेवोत्क्रान्तिर्ध्येया । सिद्धान्ते तु सर्वेषामपि मोक्षपर्यन्तं जीवेन सह संश्लेषेण स्फुटविवेचनत्वाभावात् सर्वेन्द्रियेभ्यः जीवस्य विवेकायात्यन्तं यत्न आस्थेयः । सगुणोपासनेषु च सर्वेषामुत्क्रान्तिर्ध्येया ॥ ६ ॥

॥ इति सप्तगत्यधिकरणम् ॥ २ ॥

## अणवश्च ॥ ७ ॥

पूर्वाधिकरणे प्राणानामुत्क्रान्तिरुक्ता । सा तेषां विभुत्वान्नाञ्जसीत्याक्षिप्यत इति सङ्गतिः । 'ते यदास्माच्छरीरादुत्क्रामन्तीति तए ते सर्व एव समास्सर्वेऽनन्ता' इति श्रुतेश्च विरोधादप्रामाण्यम् । न हि विभूनामुत्क्रान्तिस्सम्भवति । एवं पूर्वपक्षे श्रुतीनां परस्परकलहेनानिर्णायकत्वे सति साङ्ख्यस्मृत्यनुसारेण प्राणानां विभुत्वमेवाश्रयणीयम् । तादृशस्मृत्यनुसाराच्चानन्त्यश्रुतिर्मुख्यार्था । उत्क्रान्तिश्चास्मिञ्छरीरे कार्याक्षमत्वाभिप्रायेत्येकदेशिमताभिप्रायः । सिद्धान्तमाह—**अणवश्चेति ।** प्राणानामुत्क्रान्त्यादिकं हि तत्र तत्र प्रदेशे बहुधाम्नायते । आनन्त्यं तु

क्वचिदेव, तदपि 'स यो हैताननन्तानुपास्त' इति वाक्यशेषपर्यालोचनयोपासनार्थं कल्पितमित्येव प्रतीयते । अतो न प्राणानां महत्त्वम् । सौक्ष्म्यपरिच्छेदाविति। सौक्ष्म्यम् अतीन्द्रियत्वं, परिच्छिन्नत्वं मध्यमपरिमाणत्वम् । साङ्ख्यानां मते अहङ्कारकार्याणीन्द्रियाणि । अहङ्कारस्य विभुत्वात्तान्यपि विभूनि । न च तथासति सर्वत्र दर्शनादिकार्योपलब्धिप्रसङ्गः । शरीरावच्छिन्नेन्द्रियप्रदेशस्यैव ज्ञानादिकार्यकरत्वादिति । तदाशङ्कते —**सर्वगतानामपीति** ॥ ७ ॥

॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

# श्रेष्ठश्च ॥८॥

इन्द्रियाणामुत्पत्तिं प्रतिपाद्य तत्प्रसङ्गात्तेषां सङ्ख्यादिकमपि विचारितम् । इदानीमिन्द्रियोत्पत्तिन्यायः मुख्यप्राणोत्पत्तावतिदिश्यते इति तेनैवास्य सङ्गतिः । **नासदासीय इति** । नासदासीदितिशब्दमारभ्य प्रवृत्तं नासदासीयम । 'एतस्माज्जायते प्राण' इति श्रुतेः 'आनीदवातमि'तिश्रुतेश्च विरोधादप्रामाण्यमिति पूर्वः पक्षः। ऋषयो वाव ते अग्रे सदासी'दिति श्रुतिरवान्तरकल्पविषया न प्राणानां महाप्रलये स्थितिं प्रतिपादयतीत्युक्तम् । नात्र तथावक्तुं शक्यम् । 'नासदासीन्नो सदासी'दिति वचनानुसारेण परोक्षापरोक्षकृत्स्नकार्यनिषेधावगमेन महाप्रलयपरत्वावसायान्नेदं वाक्यमवान्तरप्रलयविषयं व्याख्यातुं शक्यमिति विशेषाशङ्का । मुख्यप्राणस्याप्यनेकश्रुत्यनुसारेण कार्यत्वावश्यंभावादानीदवातमिति वाक्यं ब्रह्मपरम् । अवातमिति विशेषणं हि वायुतादात्म्यापन्ने मुख्यप्राणे क्लिष्टम् । वायुभिन्नत्वस्य वायुराहित्यस्य वा तत्रासम्भवात् । ब्रह्मणि तु प्रलये वायुरूपकार्याभावादुपपन्नम् । अत आनीदिति पदं जीवनरूपं प्राणनं प्रतिपादयत् स्वरूपसत्तातिरेकेण ब्रह्मणः प्रलये अन्यस्य प्राणनस्यासम्भवादासीदित्यर्थकं, स्वधापदं च मायापरमिति द्रष्टव्यम् । पूर्वपक्षे अजन्यत्वजन्यत्वाभ्यां जीवप्राणयोर्विवेको निर्धारयितुं न शक्यते । सिद्धान्ते तु सम्भवति तथा निर्धारणमिति ॥८॥

॥ इति प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥

# न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

एवं मुख्यप्राणमिन्द्रियाणि च निरूप्य इदानीं तेषां धर्मधर्मिभावो वा स्वातन्त्र्यं वेति निरूप्यते । तत्र क्वचिद्वायुप्राणयोरभेदः श्रुतिषु प्रतिपाद्यते । पृथगुत्पत्त्युपकार्योपकारकप्रतिपादनमुखेन तयोर्भेदः प्रतिपाद्यते । तथा च विरोधादप्रामाण्यशङ्कायां स्मृत्यनुसारेणैकदेशी साङ्ख्यो मन्यते—वायुप्राणयोर्नाभेदः । नाप्युपादानोपादेयभावः, अपि तु प्राणस्सर्वेषामिन्द्रियाणां क्रिया । तथा च प्राणस्य वा-

योर्भेदसूचकानि वचनानि मुख्यान्येव वायुरूपताप्रतिपादकानि चलद्रूपतया गौणानि भविष्यन्तीति । तदिदमाह—**अथवा तन्त्रान्तरीयेति** । यथा वायोः पृथगुपदेशान्न बाह्यवायुरेव प्राणः, एवं प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति मुख्यस्य प्राणस्य गौणेभ्यः प्राणेभ्यः पृथङ्निर्देशान्नेन्द्रियवृत्तिरपि प्राणः । साङ्ख्यस्मृतिस्तु श्रुतिविरोधादनादरणीया । 'यः प्राणस्स वायुरि'ति सामानाधिकरण्यं तु वायुविकारत्वात् प्राणस्योपपद्यत इति सिद्धान्तयति—**अत्रोच्यत इत्यादिना । प्राण एव ब्रह्मणश्चतुर्थ इति** । अध्यात्मं मनोब्रह्मेत्युपासीतेति मनसि ब्रह्मदृष्टिं विधाय तदेतत् ब्रह्म चतुष्पादित्युपक्रम्य वाक्प्राणश्चक्षुश्श्रोत्राणि चतुरः पादान् प्रतिपाद्य प्राणाख्ये पादे गुणं विधातुमिदं वाक्यम् । ज्योतिषा प्राणव्यवहारोपकारिदैवतेन, भाति लब्धस्वरूपतया अभिव्यक्तो भवति, तपति स्वव्यवहारसमर्थो भवति । **न हि करणव्यापार इति** । न च वृत्तिवृत्तिमतोरीषद्भेदस्यापि सम्भवात् पृथगुपदेशोपपत्तिरिति वाच्यम् । तमुत्क्रामन्तमित्यादौ हि प्राणोत्क्रान्त्यधीनोत्क्रान्तिमत्त्वेन इन्द्रियाण्याम्नायन्ते, नेदं प्राणस्येन्द्रियवृत्तित्वे उपपद्यते । एतस्माज्जायत इत्यादौ च इन्द्रियोत्पत्तिव्यतिरेकेण प्राणस्योत्पत्तिराम्नायते । न च वृत्तिमद्व्यतिरेकेण वृत्तेरुत्पत्तिराम्नातुमुचिता । धर्मरूपाया वृत्तेर्धर्मिणैव सिद्धत्वात् । एवं प्राणाधीनशरीरास्थितिकत्वादिना प्राणस्येन्द्रियभेदेनाम्नानमुदाहर्तव्यम् । **प्रत्येकमेकैकेति** । चक्षुरादीनां हि रूपाद्यालोचनरूपा प्रत्येकवृत्तिरन्वयव्यतिरेकाभ्यामवधार्यते । चक्षुरन्वये तदन्वयात् चक्षुर्व्यतिरेके तद्व्यतिरेकाच्च, नैवं प्राणवृत्तौ व्यतिरेक उपपादयितुं शक्यते । अन्धादेश्चक्षुरादीनां प्रत्येकमभावेऽपि प्राणव्यापारदर्शनादिति भावः । **पञ्जरचालनानुरूपैरिति** । मिलितैः पक्षिभिः पञ्जरचलने जननीये प्रत्येकपक्षिगता व्यापाराः पञ्जरचलनानुकूलाः । रूपाद्यालोचनरूपाः प्रत्येकं चक्षुरादिव्यापारास्तु न तदनुगुणाः । सुषुप्तौ तेषां सर्वेषामभावेऽपि प्राणनदर्शनादिति भावः । **तथा प्राणस्य श्रेष्ठत्वेति** । भगवन्नेधि त्वं नश्श्रेष्ठोऽसीति प्राणं प्रति चक्षुरादिवचनात्तस्य श्रेष्ठत्वं, यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यादि वागादिभिस्स्वस्वगुणस्य प्राणं प्रत्युपहरणाच्च तेषां प्राणं प्रति गुणाभावोऽवगम्यते । तथा हि 'अनेकविधा विभूति'रिति तत्सर्वं परे देवे मनस्येकीभवतीत्यादिवाक्येन सुषुप्तौ मनश्शब्दोदिते जीवे इन्द्रियाणां लयं प्रतिपाद्य प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीत्याम्नातम् । तथा वागादीन्यनुक्रम्य तानि मृत्युश्श्रमो भूत्वोपयेमे । अथेममेव नाप्नोद्योऽयं मध्यमः प्राण इति चाम्नायते । प्राणो वा व संवर्ग इत्यादिना च वागादिलयाधारत्वरूपं संवर्गत्वं च प्राणस्याम्नातम् । 'मातेव पुत्रान् रक्षस्वे'ति च प्राणं प्रतीन्द्रियाणां वचनम् ॥९॥

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥१०॥

**प्राणसंवादादिष्विति** । प्राणसंवादे अथ ह प्राणा अहंश्रेयसे व्यूदिर इति अस्मासु मध्ये कश्श्रेष्ठ इति कलहः, तन्निर्धारणार्थं प्रजापतिसमीपे गमनं, प्रजापतिवचनाच्छ्रेष्ठत्वावधारणमित्यादिकमाम्नातम् । इदं च प्राणस्यापि जीवोपकरणत्व एव सङ्गच्छते । समानस्कन्धानां हि विवादादिकं लोके दृष्टम् । प्राणसंवादादीत्यादिपदेन 'चक्षुश्च द्रष्टव्यं चे'तीन्द्रियप्रघट्टक एव प्राणश्च विधारयितव्यं चेत्याम्नानं सङ्गृह्यते । सहशिष्ट्यादिभ्य इति सौत्रादिशब्दार्थमाह—**आदिशब्देनेति** । संहतत्वं शरीरादिवत् पञ्चीकृतभूतकार्यत्वम् । **विषयान्तरमिति** । यथा चक्षुरादीनां ज्ञेयं रूपादिकम्, एवं प्राणस्यापि ज्ञेयं किञ्चिद्वक्तव्यमित्यर्थः ॥१०॥

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥११॥

**अकरणत्वादिति** । ज्ञानकरणत्वाभावादित्यर्थः । पापिष्ठतरं निर्जीवम् । तत्र तद्वृत्तिमात्रहीनत्वं वागुत्क्रमणे मूकत्वं, चक्षुरुत्क्रमणेऽन्धत्वमेवंरूपेण ॥११॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥१२॥

**प्राग्वृत्तिरिति** । बहिर्नासिकातो निस्सरणवृत्तिः । अवाग्वृत्तिरन्तराकर्षणवृत्तिः । तथा च छान्दोग्ये 'यः प्राणिति स प्राणो योऽपानिति सोऽपान' इति । **व्यानस्तयोस्सन्धाविति** । तथा च छान्दोग्य एव 'अथ यः प्राणापानयोस्सन्धिः स व्यान' इत्युपक्रम्य अतो यान्यन्यानि वीर्यवन्ति कर्माणि, तानि करोती'त्युक्तम् । समानः एतावाहुती भुक्तपीते समं नयतीति समान इति प्रतिपाद्येष्टफलमेवोदान' इति स्वर्गादिरूपेष्टफलस्य उत्क्रमणेन प्रापकत्वात्तत्त्वेनोपचरित उदानः प्रश्नोपनिषदि । तत्त्वमभिप्रेत्याह—**उदान इत्यादिना** । **प्रमाणविपर्ययेति** । प्रमाणं यथार्थज्ञानं, भ्रमः संशयसाधारण्येनान्यथाज्ञानं, विपर्ययः विकल्पः शशशृङ्गइत्येवंरूपः असत्ख्यातिः । विपर्ययविकल्पयोर्विषयसत्त्वासत्त्वाभ्यां विशेषः । निद्रा योगमते ज्ञानाभावेन मनसोऽवस्थानम् । सिद्धान्ते तु मनसस्सूक्ष्मावस्था । स्मृतिः प्रसिद्धा ज्ञानविशेषरूपा ॥ १२ ॥

॥ इति वायुक्रियाधिकरणम् ॥ ९ ॥

## अणुश्च ॥१३॥

प्राणं प्रस्तुत्य 'समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैस्समोऽनेन सर्वेण'-

ति अनेकधा परिमाणप्रतिपादनेन विरोधात् अप्रामाण्यमिति पूर्वपक्षे **यथा महत** आकाशस्य औपाधिकम् अल्पपरिमाणं, स्वाभाविकं विभुत्वम्, एवं प्राणस्यापि स्वाभाविकं महत्त्वं, मशकादितुल्यता त्वौपाधिकीति एकदेशिपूर्वपक्षे सिद्धान्तमाह—**अणुश्चायमिति । इतरप्राणवदिति ।** तथा च 'अणवश्चे'ति सूत्रे यथेन्द्रियानन्त्यश्रवणमुपासनार्थमिति परिहारो दर्शितः, तथात्रापि समोऽनेन सर्वेणेति श्रुतिरप्याधिदैविकप्राणाभिप्रायेण व्याख्येया । न च तथासति अणवश्चेत्यनेनास्य गतार्थता। तत्र उपासनार्थमानन्त्यश्रवणमित्युक्तम्, इह त्वाधिदैविकं तदिति परिहारभेदकथनात् । अयं च परिहार इन्द्रियानन्त्येऽपि तुल्यः । अपि चेह सर्वत्र प्राणस्याकाशन्यायेनैकत्वमाशङ्क्यते—'समो मशकेने'त्यादिकं तु औपाधिकमिति । परिहारस्तु प्राणनानात्वस्य प्रत्यक्षसिद्धत्वेन एकत्वे प्रमाणाभावात् मध्यमपरिमाण एव प्राणः सङ्कोचविकासशाली मशकस्य तावन्मात्रपरिमाणः हिरण्यगर्भस्य त्रैलोक्यशरीरस्य सर्वेण सम इति न विरोधः श्रुतीनाम्। **सौक्ष्म्यपरिच्छेदाविति ।** त्वगिन्द्रियग्राह्यस्यापि प्राणस्य सौक्ष्म्यमचाक्षुपत्वाभिप्रायम् । **समः प्लुषिणेति ।** प्लुषिः सूक्ष्मकीटविशेषः ॥ १३ ॥

इति मुख्यप्राणाणुत्वाधिकरणम् ॥ ६ ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिना अग्न्याद्यधिष्ठितत्वं वागादीनां प्रतीयते । 'यदि वाचाभिव्याहृतमि'त्यादिना अग्न्यादिनिरपेक्षमेव जीवं प्रति अभिव्यवहरणादिकरणत्वं प्रतीयते । अतो विरोधादप्रामाण्यमिति पूर्वपक्षे एकदेशिमतं प्रतिपादयति—**प्राप्तं तावदिति । अतः स्वमहिम्नैवैषां प्रवृत्तिरिति ।** अग्निर्वाग्भूत्वेति वाक्यं तूपासनाभिप्रायेण यथाकथञ्चिन्नेयम् । यथाश्रुतार्थत्वे देवताभोक्तृतापत्तिरूपस्य बाधकस्य प्रदर्शितत्वादिति मन्यते । **स वै वाचमेवेति ।** स प्राणः प्रथमाम् उद्गानकर्मणि प्रधानभूतां वाचं वागिन्द्रियावच्छिन्नामग्निदेवताम् अत्यवहत् वागिन्द्रियपरिच्छेदमतीत्य प्रापितवान् । प्राप्यं विशदयितुं वाक्यं—**सा यदेति ।** मृत्युं वागिन्द्रियं परिच्छेदकृतमप्रतिरूपवदनादिकम् । **अग्निरभवदिति ।** प्राणदेवताभेदेन उद्गातुरुपासनया यजमाने हिरण्यगर्भतां प्राप्ते आध्यात्मिकवागादिपरिच्छेदस्य नष्टत्वाद्यजमानशरीरगतो वाचि विद्यमानोऽग्निः परिच्छेदं विहायाग्निरूपेणावस्थितोऽभवदित्यर्थः । **सर्वत्र चाध्यात्माधिदैवतविभागेनेति ।** यथा मनो ब्रह्मेत्यध्यात्ममुपक्रम्य वाक्प्राणचक्षुश्श्रोत्राणि पादा दर्शिताः । 'आकाशो ब्रह्मे'ति अधिदैवतमुपक्रम्य अग्निवाय्वादित्यदिशः पादाः प्रदर्शिताः । अ-

न्यत्र चाग्निना वाचा चक्षुषादित्येन वायुना प्राणेन मनसा चन्द्रेणेति अध्यात्मम-धिदैवतं च सामानाधिकरण्यं निर्दिष्टम् । एकदेशिना शक्तस्याधिष्ठातारं विनैव कार्यजनकत्वमित्युत्सर्ग उक्तः । स यथा अनडुदादिषु अधिष्ठातुः प्रत्यक्षेण गृहीतत्वात् परित्यज्यते, तथा प्रकृते श्रुत्या देवताधिष्ठितत्वस्य गृहीतत्वात् परित्याज्य इत्याह—**यदुक्तं स्वकार्य** इत्यादि ॥ १४ ॥

देवतानामधिष्ठातृत्वे जीवस्य भोक्तृत्वं न स्यादिति द्वितीयं बाधकं परिहर्तुं सूत्रमवतारयति—**यदप्युक्तमिति** ।

## प्राणवता शब्दात् ॥ १५ ॥

**अथ यत्रेति** । यन्निमित्तीकृत्य यद्भोगार्थमिति यावत् । आकाशं चक्षुर्गोलकावकाशं लक्षयित्वा चक्षुस्सम्बद्धं स चक्षुरुपाधिस्सन् चाक्षुष इत्युच्यते । तस्य भोक्तुर्दर्शनाय चक्षुरित्यर्थः ॥ १५ ॥

## तस्य च नित्यत्वात १६ ॥

**पुण्यमेवामुं गच्छतीति** । 'यद्यपि ह्यन्नोपासकस्य सर्वेषां भूतानामात्मा भवती'ति वाक्येन सर्वात्मत्वे प्रतिपादिते सर्वदुःखप्राप्त्या ह्यन्नोपासनमनर्थायैवेति शङ्कायां त्रैलोक्येऽहंभावेन सर्वात्मत्वे सत्यपि स्वकृतं पुण्यफलमेवायं भुङ्क्ते, प्रजाभिः कृतं तु पापं प्रजा एव भुञ्जते । यतो देवान् प्रति पापं न गच्छतीत्यनया श्रुत्या प्रतिपाद्यते, न तु प्रजाकृतपुण्यफलभोक्तृत्वं देवतासु प्रतिषिध्यते, तथापि 'न ह वै देवा'निति वचनेन पापफले देवतानां प्रतिषिद्धे न्यायतौल्यात् पुण्यफलमपि प्रतिषिद्धं भवत्येव । सर्वेणापि स्वकृतस्यैवोपभोग्यत्वात् । अतो न प्रजानां भोगेन देवतानां सम्बन्धः । प्रयोजनं पूर्वपक्षे केवलेभ्य एवेन्द्रियेभ्यो विवेकोऽनुसन्धेयः, सिद्धान्ते देवतासहितेभ्यः इत्यादि ॥ १६ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ७ ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

इन्द्रियाणि स्वतन्त्रपदार्थभूतानि सिद्धवत्कृत्य तत्र देवताधिष्ठानं प्रतिपादितम् । इदानीं प्राणवृत्त्यतिरेकेण तानि न स्वतन्त्राणि । ततश्च प्राणदेवतयैवाधिष्ठानसम्भवान्न देवतान्तराधिष्ठानमपेक्षितमिति पूर्वोक्तार्थ आक्षिप्यत इति सङ्गतिः । 'हन्तास्यैव सर्वे रूपमसामे'त्यादिश्रुतेः एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे-

त्यादिवचनस्य प्राणातिरिक्तेन्द्रियाणां स्वतन्त्रोत्पत्त्यादिप्रतिपादनस्य च विरोधादप्रामाण्यमिति पूर्वपक्षे एकदेशिमतमाह—**मुख्यस्यैवेतर इति । मुख्यमितरांश्चेति** । 'श्राम्यति वाक्, श्राम्यति चक्षुः, श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राण' इति वाक्येनेत्यर्थः । न च प्राणवृत्तित्वे इन्द्रियाणां तदुत्पत्त्यैवोत्पत्तेस्सिद्धतया पृथगुत्पत्तिकथनं व्यर्थं स्यादिति वाच्यम् । तथासति मनस्सर्वेन्द्रियाणि चेत्यत्र इन्द्रियशब्देनैव मनसोऽप्युत्पत्तेस्सिद्धतया तस्यापि इन्द्रियान्तर्गतिर्न स्यात् । यदि च तत्रेन्द्रियपदं मनोव्यतिरिक्तविषयं, तर्ह्येतस्माज्जायते प्राण इत्यत्र प्राणपदं प्राणनादिवृत्तिविशिष्टपरमिति चक्षुरादिवृत्तिविशिष्टत्वाकारेणोत्पत्तिकथनार्थमिन्द्रियग्रहणं भविष्यति । 'त इन्द्रियाणी'ति सूत्रस्य ते चक्षुरादयः प्राणादन्यत्र प्राणात्तत्त्वान्तराणीति प्रतिज्ञा, पुनः श्रेष्ठादन्यत्रेति पदावृत्त्या प्राणादन्यत्रेन्द्रियाणीति । तद्व्यपदेशादिति हेतुलाभः इतिशब्दाध्याहारेण । तद्व्यपदेशादित्यत्र तत्पदं च 'न वियदश्रुते'रित्यारभ्य 'संज्ञामूर्तिक्लृप्ति'रित्यध्यायान्तं प्रस्तुताया उत्पत्तेः परामर्शकम् । तथा चोत्पत्तिव्यपदेशादित्यर्थलाभे सति तावन्मात्रोक्तौ प्राणे व्यभिचारः । उत्पत्तिव्यपदेशे सत्यपि प्राणात्तत्त्वान्तरत्वाभावात् । अतोऽवशिष्टो भागः । तथा च प्राणोत्पत्तिं निरूप्य पुनरिन्द्रियशब्दमुपादायेन्द्रियोत्पत्तिप्रतिपादनं भवति प्राणात्तत्त्वान्तरतासाधकमित्यर्थमभिप्रेत्य सिद्धान्तमाह—**एवं प्राप्त इति** । व्यपदेशभेदादित्यत्र भेदशब्दोपात्तं व्यपदेशगतं विशेषं व्युत्पादयितुं पृच्छति—**कोऽयमिति । इन्द्रियाणीत्युच्यन्त इति** । एतस्माज्जायत इत्यनेनान्वयितव्येति शेषः । अयं च शेषःश्रुतावेवमित्युत्तरभाष्यपर्यालोचनया लभ्यते । न च पृथगुत्पत्तिप्रतिपादनस्वारस्येन प्राणादिन्द्रियाणां स्वातन्त्र्यावगमस्य प्रबलं किञ्चित् बाधकमस्ति । येन क्लेशेन व्याख्यायेत । पूर्वपक्ष्युक्तं च बाधकं परिहरिष्यते—**स्मृतौ त्वेकादशेति** । 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यादौ । ततश्च प्रबलबाधकानुसारेण इन्द्रियमनसोः पृथग्व्यपदेशो गोबलीवर्दन्यायेनाश्रीयत इति भावः ॥ १७ ॥

## भेदश्रुतेः ॥ १८ ॥

इदं सूत्रं प्राणेन्द्रिययोः प्रकरणभेदोपन्यासपरतया व्याचष्टे—**भेदेन चेति** । देवासुरसङ्ग्रामकल्पनया उपक्रमं कृत्वा इन्द्रियाण्येव देवत्वेन विवक्षित्वा असुरजयार्थमिन्द्रियान्तरैर्वागादिष्वौद्गात्रे कर्मणि कर्तृत्वे प्रेरितेष्वसुरैर्वागादीनां स्वस्यैव समीचीनवदनादिकं भवत्वित्यासङ्गलक्षणं छिद्रं दृष्ट्वा पाप्मना वेधस्संपादितः । अतो वागादिष्वद्याप्यनृतवदनमुपलभ्यत इत्येवं सर्वाणीन्द्रियाण्यसुरनिक्षिप्तपाप्मना विद्धानीति निरूप्य पृथगासन्य आस्ये भवः प्राणः मुख्यः स्वस्यैव कल्याणवदनं

भवत्वित्यभिषङ्गरहिततया असुरैर्वेद्धुमशक्यतया प्रतिपादितः । तत्र च निन्दाप्रकरणेन वागादय उपक्षिप्ताः, स्तुतिप्रकरणे न च प्राण उपक्षिप्त इति स्पष्टः प्रकरणभेदः । तदिदमाह—ते ह **वाचमूचुरित्यादिना** । **मनो वाचं प्राणमिति** । यत्सप्तान्नानीत्युपक्रम्य सर्वैर्भुज्यमानमेकं द्वयं हुतं प्रहुतं पयश्चैकं पश्वर्थमिति चत्वारि प्रदर्श्य त्रीण्यात्मने सृष्ट्वा हिरण्यगर्भः कल्पितवानिति सङ्ग्रहेणोक्त्वा कानि त्रीणीत्यपेक्षायां मनो वाचं प्राणमित्यादि वाक्यं मनसो वाचश्च प्राणवृत्तित्वेन सप्तत्वत्रित्वादिकमाञ्जसमुपपद्यते ॥ १८ ॥

## वैलक्षण्याच्च ॥ १९ ॥

**स एव चैक इति** । 'तानि मृत्युश्श्रमो भूत्वा उपयेम 'इति चक्षुरादीनां श्रमरूपमृत्य्वाप्तत्वमुक्त्वा अथेममेव नाप्नोद्योऽयं मध्यमः प्राण इति तद्राहित्यं मुख्यस्य प्राणस्योक्तम् । तथा प्राणस्येन्द्रियाणां चास्मासु मध्ये कश्श्रेष्ठ इति विवादमुपक्रम्य यस्मिन्नुत्क्रान्ते शरीरस्य कुणपता भवति, स श्रेष्ठ इति निर्धारणानन्तरं चक्षुरादिषूत्क्रान्तेष्वन्धत्वादिकमेव प्राप्तं, प्राणस्यानुत्क्रान्तत्वात् देहस्य शवता तु नाभवत्, प्राणोच्चिक्रमिषायां सर्वेषामेवेन्द्रियाणामुत्क्रान्तिप्रसक्त्या सह देहस्य शवता प्रसक्तेति प्राणसंवादे प्रतिपादितम् । तदाह—**तस्यैव चेति** ।**तस्मात्तद्विरोधेनेति**। वागादीनां प्राणवृत्तित्वे हि तानन्योन्येनास्पर्धन्तेति प्राणस्येन्द्रियाणां स्पर्धयोपक्रमो विरुध्येत । न हि वृत्तीनामाश्रयेण सह स्पर्धाप्रसक्तिरस्ति । परतन्त्रस्वभावत्वात् । तथा वागादीनां पृथग्वचनादिकार्यकरत्वं प्राणसंवादे च प्राणस्य शरीरे स्थितावपि वागादीनामुत्क्रान्तिप्रतिपादनं च विरुध्येत । न हि वृत्तीनामपि पृथग्वदनवृत्तिस्सम्भवति । नापि स्थित एवाश्रय उत्क्रान्तिस्सम्भवति । अतस्तद्रूपताभानं गौणमिति आरोपिततया च तद्रूपतया प्राणशब्दभाक्त्वमपि गौणमेव भविष्यति । अत्र च प्रथमसूत्रेण प्राणस्येन्द्रियाणां च पृथगुत्पत्त्याम्नानं, द्वितीयेन भिन्नप्रकरणत्वं, तृतीयेन सुप्तौ प्राणस्य जागरूकता, इन्द्रियाणां विलीनवृत्तिकत्वमित्यादिरूपं वैलक्षण्यं स्वातन्त्र्ये दर्शितम् । अतो न सूत्राणां पुनरुक्तता । 'न वायुक्रिये ' इत्यधिकरणे प्राणस्येन्द्रियवृत्तित्वं नास्तीति दर्शितम् । अस्मिन्नधिकरणे इन्द्रियाणां प्राणवृत्तित्वाभावः प्रतिपादित इति विभागः । प्रयोजनं पूर्वपक्षे इन्द्रियाणां प्राणवृत्तित्वात् नाहं प्राणिमीति प्राणस्य विवेकेनैवार्थात् सिद्धो विवेक इति न पृथक् तदनुसन्धानम् । सिद्धान्ते तु स्वतन्त्रतयार्थसिद्धत्वाभावात् नाहमन्ध इत्यादिना पृथगिन्द्रियेभ्योऽपि त्वंपदार्थो विविभक्ततया अनुसन्धेयः ॥ १९ ॥ इति इन्द्रियाधिकरणम् ॥ ८ ॥

# संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥

वियदादिसृज्यव्यापारोत्पत्तौ प्राप्तस्य श्रुतिकलहस्य समाधानानन्तरं स्रष्टृव्यापारोत्पादनायां प्राप्तस्य श्रुतिकलहस्य समाधानमत्र क्रियत इति सङ्गतिः । **सेयं देवतेति** । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'ति प्रकृता परमात्मरूपा देवतैक्षत । ईक्षणमेवाभिनयति—हन्तेति । 'बहु स्यां प्रजायेये'ति यत्सङ्कल्पितं बहुभवनं, तत्तेजोऽबन्नेषु सूक्ष्मेषु सृष्टेष्वपि न कार्त्स्न्येन सम्पन्नमिति द्योतयति । तिस्रो देवताः परोक्षत्वात् सूक्ष्माणि तेजोऽबन्नान्येव । नाम सूर्यश्चन्द्र इत्यादि । तत्तत्प्रवृत्तिनिमित्तसंस्थानादियुक्तं रूपम् । व्याकरवाणि विस्पष्टं करवाणि । **त्रिवृतमिति** । तेजोऽबन्नानि प्रत्येकं द्वेधा विभज्य द्विधाभूतानामेकैकमर्धं पुनर्द्विधा विभज्य पुनरपि द्विधाकृतमंशद्वयं तेजसोऽबन्नयोः अपां तेजोऽन्नयोरन्नस्याप्तेजसोश्च निक्षिप्यैकैकं भूतं त्रितयरूपं करिष्यामीत्यर्थः । अत्र च जीवेनात्मनानुप्रविश्येति वचनानुसारेण जीवरूपं प्राप्तस्यैव परमात्मनो नामरूपस्रष्टृत्वमवगम्यते । तद्धेदं तर्हि अव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियेतेत्यत्र तु पारमेश्वररूपेणैवेति विरोधादप्रामाण्ये सद्विद्यागतवाक्यानुसारेण जीवरूपतां प्राप्तस्यैव नामरूपव्याकर्तृत्वम् । तद्धेदमिति तु परम्पराभिप्रायं भविष्यति । तथा च जीव एव नामरूपव्याकर्तेति पर्यवसितम् । नन्वनेन जीवेनेत्यत्र जीवरूपतां प्राप्तस्य कर्तृता कुतोऽवगम्यते । आख्यातेन हि देवतागतमेव कर्तृत्वं प्रतिपाद्यते । हन्ताहमिति प्रस्तुताया देवताया एव व्याकरवाणीत्युत्तमपुरुषेण सम्बन्धात् । न च अनेन जीवेनेति तृतीया जीवस्य कर्तृतां प्रतिपादयति । अहंपदोपात्ताया देवताया एव कर्तृतयान्वयेन कर्त्रन्तरानपेक्षणात् जीवस्य कर्तृतयान्वये वा तस्यैवाख्यातेनाभिधानप्रसक्त्या अनभिहिताधिकारीयतृतीयानुपपत्तेः । न च यथा देवदत्तेन यज्ञदत्तः पाचयतीत्येकवचनान्ताख्यातस्थले प्रयोज्यप्रयोजकरूपकर्तृद्वयस्यान्वयः । प्रयोजककर्तुराख्यातेनाभिधानेऽपि तदनभिहिते प्रयोज्यकर्तरि तृतीया च भवति, एवं व्याकरवाणीत्येकवचनान्तेऽपि प्रयोज्यप्रयोजकभावेन कर्तृद्वयस्याप्यन्वयोऽस्तु । प्रयोज्यकर्तुराख्यातेनानभिहितत्वात्तत्र तृतीयाप्यस्तु । तथा च तृतीयाबलादेव जीवस्य व्याकरणे कर्तृत्वमिति वाच्यम् । युक्तं णिच्प्रयोगस्थले धातुना प्रयोज्यव्यापारस्य णिच्प्रत्ययेन विशेष्यतया प्रयोजकव्यापारस्य चाभिधाने आख्यातेन णिजर्थकर्तृशक्तेरेवाभिधानात्तत्रैकवचनं, विशेषणीभूतव्यापारं प्रति च कर्तृत्वेन प्रयोज्यस्यान्वये तद्गतकर्तृशक्तेराख्यातेनानभिधानात्तत्र तृतीया च, नैवं विशेषणविशेष्यभावेन व्यापारद्वयमभिहितमस्ति । येन कर्तृद्वयस्यान्वयेऽप्याख्यात एकवचनं, प्रयोज्यकर्तरि च तृतीया लभ्येत, इत्य-

भिप्रेत्य शङ्कते—कुत इति । परिहरति—अनेन जीवेनेति । अयं भावः—अनेन जीवेनेति न कर्तृतृतीया, अपि तु करणतृतीया । चेतनस्य व्याकरणं प्रति करणत्वं प्रयोज्यकर्तृत्वेनैव पर्यवस्यति । यथा चारेण शत्रुसैन्यं सङ्कलयानीत्यत्र सैन्यसङ्कलने चारस्य करणत्वं प्रयोज्यकर्तृतयैव प्रयोजकव्यापारत्वेनाध्यारोपिते सैन्यसङ्कलने प्रकृष्टोपकारकत्वात्, एवं व्याकरणस्य जीवगतस्यैव प्रकृते देवतायामध्यारोपात्तत्प्रयोज्यस्य जीवस्य करणत्वविवक्षया तृतीया भविष्यति । न च तथासति व्याकरवाणीत्यस्याध्यारोप्य देवतायास्साक्षात्कर्तृत्वं व्याख्याने क्लिष्टता । व्याकरणेऽवगम्यमानस्य साक्षात्कर्तृत्वस्यानध्यारोपेणैव व्याख्यानसम्भवादिति वाच्यम् । तथासत्यनेन जीवेनेत्यस्य वैयर्थ्यापत्तेः । तथा च तत्सार्थक्यायाध्यारोप एवोचितः । वरं हि वैयर्थ्यमपेक्ष्य लक्षणाध्यारोपाश्रयणम् । तथा च महाभूतात्मकसृष्टौ तन्नामधेये चेश्वरस्य साक्षादेव कर्तृत्वेऽपि त्रिवृत्करणानन्तरभाविषु भौतिकसूर्यचन्द्रादिरूपेषु तन्नामधेयेषु च जीवस्यैव साक्षात्कर्तृत्वं, परमात्मनस्तु कुलालपितृवत् जीवद्वारकमेव कर्तृत्वमित्येकदेशिनोऽभिप्रायः । ननु, जीवस्य चन्द्रसूर्यादिनामरूपेषु कर्तृत्वं न सम्भवतीत्याशङ्क्याह—अपि चेति । भौतिकेषु शकटादिनामरूपेषु मनुष्याणां कर्तृत्वं प्रसिद्धमेव। चन्द्रसूर्यादिषु भौतिकेषु प्रजापत्यादिजीवानां कर्तृत्वं भविष्यति। तथाचानेन जीवेनेत्यत्र जीवसामान्यरूपेण भौतिकेषु त्रिवृत्कृतेषु नामरूपेषु कर्तृत्वेऽभिहिते यथासम्भवं तत्तद्विशेषकर्तृतया जीवविशेषाणां पर्यवसाने न काचिदनुपपत्तिरिति भावः । उपदेशादिति । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति णिच्प्रयोगाभावेन देवताया एव साक्षात्कर्तृत्वं प्रतीयते । न तदध्यारोपेण नेतुमुचितम् । न चानेनेति व्यर्थम् । जीवस्य करणत्वं हि नावश्यं प्रयोज्यत्वेनैव समर्थनीयम् । अपि त्वध्ययनेन वसतीत्यत्रेवोद्देश्यतयापि नामरूपव्याकरणे जीवस्य करणत्वमुपपद्यते। जीवभोगार्थं हि नामरूपसृष्टिः । अथवा शरेण हन्तीत्यत्र शरव्यापारस्य हननानुकूलत्वाद्यथा शरस्य करणत्वम्, एवं नामरूपव्याकरणे जीवव्यापारस्यादृष्टस्योपयोगात् जीवस्य करणत्वनिर्देश उपपद्यते । ततश्च जीवेनेत्यस्य व्याकरवाणीति प्रधानक्रियान्वयेऽपि न काचित् सिद्धान्तिनः क्षतिः । भाष्ये तु वस्तुगतिमनुरुध्य प्रविश्येत्यनेवान्वयः प्रतिपादितः । आनन्तर्यादिति । नन्वानन्तर्यं सन्निधिलक्षणं व्याकरवाणीति प्रधानक्रियाकाङ्क्षया बाध्यताम् । न । प्रवेशक्रियाया अपि साकाङ्क्षत्वात् । व्यापकस्य हि परमात्मनः कथं शरीरादौ प्रवेश इत्येतस्यामाकाङ्क्षायां सन्निहितमनेन जीवेनेत्यौपाधिकं खिल्यभावमुपहरत् प्रविश्येत्यनेन सम्बध्यते । प्रवेशक्रियासम्बन्धेऽपि न जीवेनेत्येषा कर्तृतृतीया । तत्र यदि तावज्जीवब्रह्मणोर्भेदविव-

क्षा, तदा न जीवस्य प्रवेशे कर्तृतोपपद्यते । 'समानकर्तृकयोः पूर्वकाल' इति विहितक्त्वान्तक्रियायां प्रधानक्रियाकर्त्रन्वयस्यावश्यकतया तेनैव कर्त्राकाङ्क्षाया उपरतत्वात् । अथात्मनेति विशेषणस्वारस्यात्तत्त्वमसीति प्रधानवाक्यानुगुण्याच्चाभेदविवक्षैवोपेयते, तत्र जीवेनेत्यस्याप्यंशस्य कर्तृतयान्वयविवक्षायां जीवात्मा सन्ननुप्रविश्येत्येव स्यात् । व्याकरवाणीत्यनेनैव कर्तृशक्तेरभिहितत्वात् । ननु, व्याकरवाणीत्यनेन व्याकरणक्रियाशक्तिरेवाभिहिता, न तु प्रवेशक्रियाकर्तृशक्तिराभिहिता। तथा जीवरूपापन्नाया देवतायाः प्रवेशक्रियाकर्तृताबोधनार्थं तृतीया प्रसज्यत एव। दृश्यते हि किञ्चित्क्रियानिरूपितकारकशक्तेरभिधानेऽपि क्रियान्तरनिरूपितां तामभिधातुं विभक्तिः । यथा प्रासादे शेत इति । अत्र सौधगतायाः प्रासादक्रियाधिकरणशक्तेर्घञा अभिधानेऽपि तत्रैव शयनाधिकरणतां प्रतिपादयितुं सप्तमी । उच्यते—यदि तावत् क्त्वाप्रत्ययस्य कर्तृप्रतिपादकतापक्षः, तदा प्रसक्तिरेव नास्ति तृतीयायाः । अर्थक्रियाद्वयकर्तुरेकत्वमेव तदर्थः । एकत्वे तु कर्तोपलक्षणं, तदापि न तृतीया प्राप्नोति । क्त्वाप्रत्ययान्तक्रियायां कर्त्रन्वयस्यार्थिकत्वाच्छाब्दान्वयस्थल एव चानभिहिताधिकारविभक्तिप्राप्तिः । अत एव च देवदत्तोऽनुलिप्तस्स्नात्वा भुङ्क्ते इत्यादौ अनुलिप्तत्वविशेषणविशिष्टस्य स्नान एवान्वये तात्पर्यगत्या विद्यमानेऽपि शाब्दान्वयस्य भोजनक्रियागतत्वान्न तृतीयेति सिध्यति । अन्यथा लिप्तेनेति स्यात्। ततश्च जीवस्याभेदविवक्षया कर्तृत्वेनान्वयाभ्युपगमे प्रथमान्ततैव स्यात् । तस्मात् प्रवेशान्वितायां देवतायामैश्वररूपव्यावृत्तिगमकतया जीवेनेत्येतदित्थंभूतलक्षणतृतीयान्तमित्येव क्षिप्यते । तेन तत्कृतमपीति । इदं च प्रौढ्योक्तम् । परमार्थतो जीवब्रह्मणोरेकत्वे व्यवहारदृष्ट्या भेदमुपेत्य पारमेश्वरेणैव सर्वज्ञादिरूपेण नामरूपव्याकर्तृत्वमिति प्रतिपादनार्थं प्रकृताधिकरणप्रवृत्तेः । तत्सिद्धं नामरूपे व्याकरवाणीत्येतदौपचारिकं माभूदिति परमेश्वर एव नामरूपयोस्साक्षाद्व्याकर्तेति । न चैवंसति अस्मिन्वाक्ये जीवेनात्मनानुप्रविश्येति व्यर्थम् । नामरूपव्याकरणं जीवभोगार्थमिति ज्ञापनार्थत्वात् । अपि च नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति समभिव्याहारात् त्रिवृत्करणकर्तैव नामरूपयोर्व्याकर्तेति प्रतीयते । त्रिवृत्करणे च न प्राजापत्यादीनामपि उत्कृष्टजीवानां कर्तृत्वं सम्भवति । तेषामपि शरीरपरिग्रहस्य त्रिवृत्करणाधीनत्वात् शरीरं विहायापि तेषां कर्तृत्वं सम्भवतीत्येतत्तु न प्रमाणवत् । अपकृष्टजीवानां तु तत्करणसम्भावनैव नास्ति । अतो नामरूपव्याकरणं जैवमिति मनसि निधाय त्रिवृत्कुर्वत इति सौत्रनिर्देशसूचितमर्थमाविष्करोति—**त्रिवृत्करणपूर्वकमेवेदमिति** । ननु, त्रिवृत्करणं महाभूतानां सर्गादावुत्पन्नानां यदाद्यं, तत्रैव जीवस्य कर्तृत्वं न सम्भवति । इह तु नामरू-

पञ्चीकरणानन्तरभावि यत्त्रिवृत्कृतानां सतामेव भूतानां पुनस्सूर्यचन्द्रादिरूपेण त्रिवृत्करणं, तत्प्रतिपाद्यते । 'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमि'ति क्रमपाठात्। नामरूपव्याकरणमपि चेदं स्थूलविषयमित्यनुपदमेव वक्ष्यतीत्याशङ्क्यार्थक्रमानुसारेण पाठक्रमं बाधित्वा त्रिवृत्करणं पूर्वं, पश्चान्नामरूपव्याकरणमित्यभिप्रेत्य त्रिवृत्करणपूर्वकमित्युक्तम् । अयं भावः—इह हि महाभूतानां सृष्टिमुक्त्वा आद्यं त्रिवृत्करणं नोक्तम् । अतो व्याकरणवाक्ये निर्दिश्यमानं त्रिवृत्करणं महाभूतविषयमेव । पाठव्यत्यासस्तु सङ्कल्पवाक्ये नामरूपव्याकरणस्योद्देश्यतया द्रष्टव्यः । उद्देश्यं हि प्रथमं सर्वत्र निर्दिश्यते । अतो नामरूपे व्याकरवाणीत्युद्देश्यं निर्दिश्य तत्साधनाय त्रिवृत्करणं निर्दिशति । तदनन्तरं तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति । ननूत्तरत्र सूर्याग्न्यादिरूपेण त्रिवृत्करणस्य प्रतिपादनात् प्राजापत्यादिसृष्ट्यनन्तरभाव्येवेदं त्रिवृत्करणं निर्दिश्यते, न तु सूक्ष्मभूतसृष्ट्यव्यवहितोत्तरभावि । तथा च श्रुतिः—'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'ति त्रिवृत्करणमुक्त्वा 'यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीही'ति तद्व्युत्पादनमुपक्षिप्याग्निसूर्यादिभावेन पुरुषान्तर्गत्या च त्रिवृत्करणं प्रतिपादयति—'यदग्ने रोहितं रूपमि'त्यादिना, 'यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्ये'त्यादिना च । अत्र चाधिदैविके अध्यात्मं च त्रिवृत्करणे प्राजापत्यादिजीवस्य कर्तृत्वमुपपद्यत एवेति शङ्कानिरासाय सूत्रम् । सूत्रार्थं विशदयन्नवतारयति—**तच्च त्रिवृत्करणमित्यादिना** । अयं भावः—यद्यप्युत्तरत्राग्न्यादिषु त्रिवृत्करणं निर्दिश्यते, तथाप्युपक्रान्तं त्रिवृत्करणं न तावन्मात्रविषयम् । तासां त्रिवृतं त्रिवृतमिति साकल्येन सृष्टानां भूतानां त्रिवृत्करणोपक्रमात् । अग्न्यादिनिर्देशस्तु वाक्यशेष उदाहरणमात्रम् । न च कार्त्स्न्येन त्रिवृत्करणे प्राजापत्यादिजीवानां कर्तृत्वमुपपद्यत इति । तदिदमाह—**अनेन चाग्न्याद्युदाहरणेनेति** । अग्न्यादयो हि तैजसाः पदार्था लोके प्रसिद्धाः । तत्राबन्नयोस्समावेशदर्शनं भौमत्वेन प्रसिद्धेषु भूगोलकादिषु आम्भसत्वेन प्रसिद्धेषु समुद्रादिषु च भूतान्तरसंसर्गप्रदर्शनस्योपलक्षणम् । **यदु रोहितमिवेति** । यथाग्नौ रोहितं रूपं तैजसम्, एवमनुक्तस्थलेऽपि रोहितशुक्लकृष्णानि तेजोऽबन्नरूपाण्यूह्यानीत्यर्थः । **यद्वविज्ञातमिवेति** । यत् उ इति छेदः । उस्समुच्चये । यच्चान्यद्रोहितत्वादिना विशिष्य ज्ञातुमशक्यं, तदपि भूतत्रयसमाविष्टमेव द्रष्टव्यमित्यर्थः ॥ २० ॥

**अपरं त्रिवृत्करणमिति** । अग्न्यादिष्वधिदैवं भूतत्रयमेलनरूपं त्रिवृत्करणमुक्तम् । 'पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवती'त्यत्र तु भुक्तस्यान्नादेः पुरी-

षादिभावेन त्रिधा विभागप्रतिपादनमित्यर्थः ॥

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ २१ ॥

स्थविष्ठो धातुः स्थूलो भागः । अणिष्ठः सूक्ष्मः । शरीरे च भूतत्रयविभागप्रतिपादने सति अर्थाच्छरीरं भूतत्रयसमाविष्टमिति प्रतिपादनात् आध्यात्मिकं त्रिवृत्करणं प्रतिपादितं भवति । सूत्रे मांसादीत्यादिपदेन पुरीषमनसोर्ग्रहणम् ॥२१॥

आशङ्कितं च किञ्चिद्दोषं परिहरिष्यन्निति यत् प्रागुक्तं, तद्विशदयति—अत्राहेति ॥

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

विशेषस्य भाव इति । स्वार्थे चायं भावप्रत्ययः । 'धातुः प्रसादान्महिमानमीशं भूमैव सुखमि'त्यादिवत् ॥२२॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वैतानन्दस्य कृतौ शारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

ॐ

॥ अथ ॥

# ॥ तृतीयाध्यायः ॥

---

उमाकलितवामाङ्गमुत्तंसितसुधाकरम् ।

करुणोल्लसितापाङ्गं शरणं यामि शङ्करम् ॥ १ ॥

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

सङ्गतिं दर्शयन्वृत्तवर्तिष्यमाणलक्षणयोस्सुखावबोधार्थं सङ्कलयति—द्वितीयेऽध्याय इत्यादिना । अयं भावः—प्रथमाध्यायोक्ते वेदान्तानां ब्रह्मणि समन्वये द्वितीयाध्यायेन विरोधः परिहृतः स्मृत्यादीनाम् । तथा चाध्यायद्वयेन वेदान्तप्रमाणकतया ब्रह्म प्रतिष्ठापितम् । तृतीयाध्यायेन तु तत्प्राप्तौ उपायः प्रतिपाद्यत इति सङ्गतिः । न ह्यप्रतिष्ठिते ब्रह्मस्वरूपे तत्प्राप्तावुपायः क इति जिज्ञासावसरः । तत्र च 'पुरुषार्थोऽतश्शब्दादि' त्यधिकरणेन तत्प्राप्तौ तत्साक्षात्कार एवोपाय इति प्रतिपाद्यते । साक्षात्कारसाधनं वैराग्यं जीवस्य गत्यागतिप्रपञ्चपरेण प्रथमपादेन समर्थ्यते । ब्रह्मसाक्षात्कारश्च तत्त्वमसीत्यादिवाक्यजन्य इति तस्य तत्त्वंपदार्थज्ञानायत्ततया द्वितीयपादे जीवावस्थानिरूपणपरैरधिकरणैस्त्वंपदार्थो विविच्यते, 'न स्थानत' इत्याद्यधिकरणैर्ब्रह्मतत्त्वनिरूपणपरैस्तत्पदार्थः । 'फलमत उपपत्तेरि'ति पादान्त्याधिकरणेन तु ईश्वरानुग्रहस्तत्र कारणमिति प्रतिपाद्यते । तृतीयपादेन तु गुणोपसंहारानुपसंहारतदुपयोगिविद्याभेदाभेदप्रपञ्चनपरेण उपासनाजनिताचित्तैकाग्र्यलक्षणं ब्रह्मसाक्षात्कारसाधनं निरूप्यते । चतुर्थपादेन च 'पुरुषार्थोऽत' इत्यधिकरणं विहायावशिष्टैरधिकरणैर्ज्ञाने बहिरङ्गसाधनानि कर्माणि, अन्तरङ्गसाधनानि सन्न्यासशमदमादीनीति निरूपणाय तेषां विधीनां प्रभेदा विचार्यन्ते । अध्यायान्त्याधिकरणेन चोत्पन्ने सम्यग्ज्ञाने मुक्तिरूपस्य फलस्य प्रतिबन्धकाभावापेक्षानियतत्वाभावः प्रतिपाद्यते । तथा च कृत्स्नेन तृतीयाध्यायेन सपरिकरं मोक्षसाधनतया ब्रह्मसाक्षात्कारो व्युत्पाद्यते । प्रसङ्गात् गुणोपसंहारपादे लोकायतनिराकरणं च भविष्यति । प्राणपादे च जीवोपकरणानां प्राणानामुत्पत्तिर्निरूपिता । रंहतिपादेन च प्राणादिविशिष्टस्य गतिर्निरूप्यत इति द्वितीयान्त्यपादेन

तृतीयाद्यपादस्यान्तरालिकोऽपि सम्बन्धोऽस्ति । कृत्स्नाया अपि मोक्षोपायप्रवृत्ते-रैहिकामुष्मिकफलवैराग्यायत्ततया प्रथमतस्तदेव दृढीक्रियत इत्याह—**तत्र प्रथमे तावदिति** । पञ्चाग्निविद्याश्रितस्य विचारस्य वैराग्यपर्यवसायित्वं तदुपसंहार-पर्यालोचनयावगम्यत इति दर्शयति—**तस्मादिति** । यतः पापिनां सुखगन्धोऽपि नास्ति । पुण्यवतां तु देवभृत्यत्वादिप्रयुक्तस्सुखगन्धो यद्यपि वर्तते, तथाप्युत्क्रान्तिप्रमुखा गर्भवासान्ता दुःखपरम्परा दुष्परिहरा, तस्मादित्यर्थः । विवादविषयं निष्कृष्टमुभयसम्मतमर्थं दर्शयति—**जीवो मुख्यप्राणेति । अथैनमेते प्राणा अभिसमायन्तीत्येवमादेरिति** । अयमर्थस्तत्र व्युत्पादितः—यथा राजानं ग्रामात् ग्रामान्तरं जिगमिषुं भृत्या अनुगच्छन्ति, एवमेव ते प्राणा जीवस्य मरणकालागत-मोहानन्तरं लोकान्तरं जिगमिषन्तस्तमनुगता भवन्ति । 'स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्ववक्रामति । तेजोमात्रा इन्द्रियाणि । ततश्च बाह्यविज्ञानलोपे सति जीवस्य पारलौकिकफलगोचरः कर्मबलायातः प्रत्ययविशेषो जायते । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । विद्योपासना । पूर्वप्रज्ञा अतीतमनुष्यमर्कटादिजात्युचितव्यवहारवासना । तद्यथा तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति । यथा तृणजलूका एकस्य तृणस्याग्रभागमागत्यान्यदाक्रमणं स्थानं तृणमासाद्य पूर्वस्मात्तृणादात्मानमुपसंहरति, एवमेव जीवः पूर्वशरीरं विमुक्तप्राणमचेतनमापाद्यान्यदाक्रमणस्थानं शरीरमासादयति । तदनन्तरं यथा सुवर्णकारः किञ्चित्सुवर्णमादाय समीचीनमाभरणमुत्पादयति, एवमेवायमात्मान्यत् नवतरं कल्याणतरं रूपं शरीरं कुरुत इत्यन्तेन प्रतिपादितम् । उक्तेऽर्थे उपपत्तिमाह—**धर्माधर्मेति** । अनुत्क्रान्तस्य हि न स्वर्गनरकादिगमनं सम्भवति । उत्क्रान्तिश्च विभोर्जीवस्य नेन्द्रियाद्युपाधिविनाकृतस्य सम्भवति । अत उपपत्तिबलादपि प्राणादियुक्तस्य जीवस्योत्क्रान्तिरुक्ष्या । नन्विन्द्रियपरिष्वङ्गस्य स्वीकृततया भूतसूक्ष्मपरिष्वङ्गसिद्ध एव । इन्द्रियाणां सूक्ष्मभूतरूपत्वादित्यतो विशिनष्टि—**देहबीजभूतैरिति** । स्थूलदेहबीजभूतैरित्यर्थः । तथा चेन्द्रियातिरिक्तं यत् स्थूलशरीरं, तत्सूक्ष्मावस्थानि यानि भूतानि, तद्विषयस्संशयः । अयमत्र पूर्वपक्षाशयः—उक्तभूतपरिष्वङ्गो जीवस्य किं श्रुतितः, आहोस्विन् न्यायतः । नाद्यः । 'स एतास्तेजोमात्रा' इत्यादौ तदश्रवणात् । चन्द्रलोकारोहावरोहप्रतिपादकवाक्यपर्यालोचनयापि न सिध्यति । तद्धीत्थमाम्नायते—'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षम् अपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन् यावत्सम्पातमुषि-

त्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तत् भूय एव भवती'ति । अत्र हीष्टादिकारिणां धूमाद्यातिवाहिकदेवताभिश्चन्द्रलोकं प्रति गमनं तेषामेवाकाशादिक्रमेण पुनरवरोहः । नात्र तेषामारोहतां भूतपरिष्वङ्गप्रतिपादकः कश्चिच्छब्दोऽस्ति । अतो न श्रुतिपर्यालोचनया तत्सिद्धिः । **वाक्यशेष इति** । एकीभवति न पश्यतीत्याहुरित्यादिना । न द्वितीय इत्याह—**सुलभाश्चेति** । इतो हि भूतमात्राभिस्सह गमनं तस्मिन् लोके भोगोपयोगिशरीरारम्भाय । तत्तु तस्मिन्नेव लोके विद्यमानैर्भूतैस्सिद्धमिति वृथैतो भूतानां नयनम् । 'तदन्तरप्रतिपत्तावि'ति सूत्रे 'मांसादिभौममि'ति सूत्रगतमांसादिपदेनोपस्थितं शरीरं तत्पदेन परामृश्यते । तदाह—**देहान्तरप्रतिपत्ताविति** । **प्रश्ननिरूपणाभ्यामिति** । अयं भावः—'वेत्थ यथा पञ्चम्यामाहुताावि'ति श्वेतकेतुमारुणेयं प्रति प्रवाहणेन जैवलिना पृष्टे सति श्वेतकेतुना नोत्तरितं, पुनश्च तत्पित्रा आगत्य प्रवाहणः पृष्टः, तं प्रति द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपानग्नीन् कल्पयित्वा श्रद्धासोमवृष्ट्यन्नरेतोरूपाणि च आहुतिद्रव्याणि कल्पयित्वा श्रद्धादीनां द्युलोकादिषु याः प्राप्तयः, तत्राहुतित्वं च कल्पयित्वा श्रद्धादीनां चाहुतीनां सोमराजवृष्ट्यन्नरेतोगर्भरूपाः परिणामाः प्रतिपादिताः । आदित्यादीनां च समिदादिभावः कल्पितः । अनन्तरं च 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्युपसंहृतम् । अतोऽयं सन्दर्भः पञ्चाग्निविद्यापर एव । तथा च तद्य इत्थं विदुरिति तस्या एव विद्याया अर्चिरादिना ब्रह्मप्राप्तिं फलं कथयति । अस्यां चोपासनायां द्युलोकादिषु श्रद्धादिशब्दप्रतिपाद्यानामपां प्राप्तिरालम्बनभूता कुतश्चित् प्रमाणात् स्वसिद्धिमपेक्षते । तच्च प्रमाणं चन्द्रलोकारोहतदवरोहप्रतिपादकं वाक्यमेव, सोमराजवृष्ट्यन्नादिभावप्रत्यभिज्ञानात् । ततश्च पञ्चाग्निविद्यावाक्ये अबादिपदैरिष्टादिकारिणां द्युलोकादिप्रक्षेप्यत्वेन प्रतिपादनमपेक्षितम् । तच्च तदैव सम्भवति । यद्यारोहावरोहवाक्ये अविशिष्टा इष्टादिकारिणो विवक्षिता भवेयुः । न ह्यन्यथाबादिपदैरजहल्लक्षणया तेषां समर्पणं भवति । अतो वाक्यद्वयपर्यालोचनया भूतसूक्ष्मपरिष्वक्तस्यैव रंहणमिति । तच्च भूतसूक्ष्ममग्निहोत्रादिकाले हुतं द्रव्यमेव । ननु, यद्यद्भिः परिवेष्टनं जीवस्यैतस्मिन्नेव शरीरेऽङ्गीक्रियते, तथासति पारलौकिकशरीरसम्बन्ध एतद्देहावस्थितिकाल एव प्राप्त इत्यायाति । तच्च 'तद्यथा तृणजलायुके'ति श्रुतिविरुद्धम् । तथा हि श्रुत्या यथा जलूका पूर्वसम्बद्धतृणस्यान्तं प्राप्य तृणान्तरेण सम्बध्यते, तथा जीवः पूर्वदेहं विहाय देहान्तरं

प्राप्नोतीति प्रतिपाद्यते। तथा च दृष्टान्तस्वारस्यात् पूर्वदेहावसान एव देहान्तरप्राप्तिरिति प्रतीतेः कथमेतस्मिन्नेव शरीरे देहान्तरबीजभूतसूक्ष्मभूतपरिष्वङ्ग इति शङ्कते—**नन्वन्या श्रुतिरिति**। **तत्राप्यपरिवेष्टितस्यैवेति**। अयं भावः—पूर्वतृणत्यागसमय एवोत्तरतृणग्रहणमित्यंशेन दृष्टान्तसाम्यं न विवक्षितम्। अपि तु यथा जलूका तृणान्तरग्रहणकाले दीर्घीभूता तृणद्वयसंलग्ना भवति, तथा जीवोऽपि पूर्वदेहत्यागकाले भूतसूक्ष्मपरिणामभूतस्थूलदेहभावनया सम्बद्धो दीर्घीभूत इव भवतीत्येतावत् साम्यं विवक्षितमिति। ननु, पारलौकिकशरीरे भावना न सम्भवति। सा हि प्रत्ययावृत्तिरूपा। पारलौकिके च मरणकाले प्रत्यय एव कुत इति शङ्कानिराकरणार्थं कर्मोपस्थापितेत्युक्तम्। एवं श्रुत्यनुसारेण स्वपक्षं निरूप्य मतान्तराणि निरस्यति—**एवमिति**। या विकल्पनास्तास्सर्वा एवानादर्तव्या इत्यन्वयः। साङ्ख्यानां कल्पनामाह—**व्यापिनामिति**। वृत्तिलाभस्तच्छरीरप्रदेशावच्छेदेन ज्ञानादिकार्यजनकता। नैयायिककल्पनामाह—**केवलस्यैवेति**। येषां मते आत्मनो बाह्येन्द्रियाणां च विभुत्वं, मनस्त्वल्पं, तन्मतमाह—**मन एव वा केवलमिति**। दिगम्बरकल्पनामाह—**जीव एवेति**। इत्येवमाद्या इत्यनेन क्षणिकानामात्मादीनां पारलौकिकशरीरावच्छेदेन उत्पत्तिरिति बौद्धानां देहातिरिक्तस्यात्मनोऽभावात् परलोकगतिरेव नास्तीति लोकायतस्य च कल्पना संगृह्यते। **तत्र कथं सामान्येनेति**। ननु, शरीरस्य पाञ्चभौतिकतया अत्राप्छब्दो भूतान्तराणामुपलक्षको भविष्यति। अत्र हि पुरुषवचस इत्यनेनापां पुरुषपदप्रतिपाद्यत्वं कथं भवतीति विवक्षितम्। अपां च पुरुषपदप्रतिपाद्यता न साक्षात्, अपि तु शरीराकारेण परिणतानामेव। तथा च कथमापः शरीराकारपरिणता इति प्रश्नार्थो भवति। केवलानां चापां शरीराकारपरिणत्यसम्भवात् भूतान्तरोपलक्षकत्वमुचितमेवेति चेत्, भवेदेतदेवं, यदि शरीरस्य पाञ्चभौतिकता भवेत्, न तु तदस्ति। तथासत्येकस्मिन्नेव शरीरे पृथिवीत्वादिनिवेशस्यावश्यकतया पृथिवीत्वादिजातिसाङ्कर्यं भवेत्। न च शरीरस्यैकभूतारब्धत्वे यदि जातिसाङ्कर्यपरिहारायाङ्गीक्रियते, तदा अवकाशसमीरणोष्मप्रस्वेदगन्धात्मना उपलम्भो न स्यादिति वाच्यम्। यथा सुवर्णस्य तैजसत्वेऽपि उपष्टम्भकभूतान्तरवशात् पीतत्वादिप्रत्ययः, तथा पार्थिवादिषु शरीरेष्वपि भूतान्तराणामुपष्टम्भकतया तत्तद्धर्मप्रतीतिरुपपद्यते ॥ १ ॥

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २॥

त्रिवृत्करणपक्षमुपेत्याह—**त्र्यात्मिका हीति**। पञ्चीकरणपक्षे तु पञ्चात्मकत्वं

द्रष्टव्यम् । त्र्यात्मकश्च देह इति । न च जातिसाङ्कर्यापत्त्या त्र्यात्मकत्वं त्यक्तुमुचितम् । भूतत्वमूर्तत्वयोराकाशे मनसि च परस्परात्यन्ताभावसमानाधिकरणत्वेऽपि घटादौ समावेशदर्शनेन पृथिवीत्वादीनामपि क्वचित् परस्परात्यन्ताभावसमानाधिकरणत्वेऽपि शरीरे समावेशोपपत्तेः । न च धर्माणां परस्परासामानाधिकरण्येऽपि परस्परात्यन्ताभावसमानाधिकरणजातित्वं प्रयोजकम् । जातित्वं चावच्छेदककोटाववश्यं निवेशनीयमेव । अन्यथा घटान्यत्वपटान्यत्वयोरपि घटपटयोः परस्परात्यन्ताभावसमानाधिकरणयोः कुड्यादावनिवेशापत्त्या तस्य घटत्वादिप्रसङ्गादिति वाच्यम् । धर्माणां परस्परासामानाधिकरण्यस्य किञ्चिदवच्छेदेन ग्रहणं विनानुपपत्तेरभावेन तथावच्छेदककल्पनाया एव निर्मूलत्वात् । यत्र हि कार्यत्वकारणत्वव्यापकत्वव्याप्यत्वशक्तत्वशक्यत्वादौ व्यक्तिविशेषगततया ग्रहणे न व्यक्त्यन्तरेऽपि प्रवृत्त्यादिकमुपलभ्यते, तत्र ह्यवच्छेदककल्पनमावश्यकम् । न चात्रापि गोत्वे गृहीते नायमश्व इति प्रतीतिर्दृश्यते । अतो गोत्वाश्वत्वयोर्विरुद्धत्वं परस्परासामानाधिकरण्यमुक्तावच्छेदकेनैव ग्राह्यमिति वाच्यम् । तथासति सास्नादिमत्त्वकेसरादिमत्त्वयोरुपाध्योरपि विरुद्धत्वस्यावच्छेदकापेक्षत्वेन जातिवदस्याप्यवच्छेदककोटौ निवेशो न भवेत् । न च यथोपाधीनां विरुद्धत्वं तेन तेन विशेषरूपेणैवाननुगतेन गृह्यते, तथा जातीनामपि गोत्वाश्वत्वादीनां तत्तद्विशेषरूपेणैव विरुद्धत्वं ग्राह्यम् । एवं च गोत्वमश्वत्वविरुद्धमित्येवंरूपेणाप्तादिभ्योऽवगच्छत एकधर्मज्ञाने धर्मान्तराभावज्ञानमुपपद्यत इति न तदर्थमुक्तावच्छेदककल्पना । अपि च नेदं जातिगतासामानाधिकरण्यसामान्येऽवच्छेदकम् । जातेर्यत्किञ्चित्सामानाधिकरण्यनियमेन तत्सामान्याभावस्य तत्राभावात् । परस्परासामानाधिकरण्यं तु नानुगतम् । येनानुगतमवच्छेदकमपेक्षेत । असामानाधिकरण्यस्य परस्परत्वं नाम उपात्तधर्मिद्वयगतत्वे सति उपात्तधर्मिभ्यामेव निरूपितत्वम् । उपात्तानां चानुगतत्वाभावात् कथं तद्धटितं तदनुगतं स्यात् । न च जातिगतजात्यसामानाधिकरण्यमवच्छेद्यम्, अतो नाननुगम इति वाच्यम् । व्यापकजातौ व्याप्यजात्यसामानाधिकरण्यसत्त्वेऽपि तत्रावच्छेदकस्याभावात् । अवच्छेदकस्यापि परस्परत्वघटितत्वेनाननुगमस्यापरिहार्यत्वाच्च सुवर्णघटे परस्परात्यन्ताभावसमानाधिकरणयोर्घटत्वसुवर्णत्वयोः सत्त्वेनावच्छेदकस्यापि अवच्छेद्याधिकवृत्तित्वात् । न च सौवर्णो घट एव न भवति, अपि तु घटप्रतिकृतिरिति वाच्यम् । तत्रापि घट इति व्यवहारस्य जलाहरणादिकार्यस्य च दर्शनेन घटत्वाभावस्य वक्तुमशक्यत्वात् । यदि च सुवर्णत्वव्याप्यं घटत्वाद्यन्यदेव, पृथिवीत्वव्याप्यघटत्वाद्यन्यदेवेति न जातिसाङ्कर्यं, तथासति महाभूतगतपृथिवीत्वाद्यपेक्षया शरीरत्वव्याप्यं पृथिवीत्वादिकमन्यदेवेति नात्रापि जातिसाङ्कर्यम् । अतो न शरीरस्य पाञ्चभौतिकत्वं प्रमाणबलायातं प्रत्याख्यातुं शक्यम् । तथा च श्रुतिरपि—'पृथिवीमय

आपोमयो वायुमयस्तेजोमय आकाशमय' इत्यात्मनः पृथिव्यादिविकारत्वं प्रतिपादयन्ती साक्षादात्मनि पृथिवीत्वादिविकारत्वस्यासम्भवात् देहैक्याध्यासमाश्रित्य प्रवृत्ता देहस्य पाञ्चभौतिकत्वमुपहरति। अतो युक्तमुक्तं त्र्यात्मकश्च देह इति ॥२॥

ननु, यदि पञ्चाग्निविद्यावाक्यपर्यालोचनया भूतसूक्ष्मविशिष्टस्य जीवस्य रंहणं, तदा दक्षिणमार्गगामिनामेव भूतपरिष्वङ्गस्सिध्यति । पञ्चाग्निविद्याया दक्षिणमार्गालम्बनत्वात्, न तूत्तरमार्गगामिनां, नापि नरकयायिनामित्यत आह—

## प्राणगतेश्च ॥३॥

अयं भावः—जीवद्दशायां हि चक्षुरादीनां प्राणानां गमनागमनादिकं देहाश्रयाणामेव दृष्टम् । मरणानन्तरमपि लोकान्तरगमनं तेषां श्रुतं मार्गत्रयसाधारण्येन । अतस्तदपि देहाश्रयाणामेव वक्तव्यम् । तत्र च यावल्लोकान्तरप्राप्ति स्थूलभूतानामसम्भवात् सूक्ष्मभूतरूपमेव प्राणगत्युपपादकं शरीरं कल्पनीयम् । पञ्चाग्निविद्यावाक्यं च स्थालीपुलाकन्यायेन मार्गत्रयरंहणेऽपि भूतसूक्ष्मसंपरिष्वङ्गज्ञापकं भविष्यति । तथा च 'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन वै ॥' इति वचनं पुर्यष्टकान्तर्गतभूतसूक्ष्मसंपरिष्वङ्गमामोक्षं दर्शयति ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

**वातं प्राण इत्यादिनेति**। आदिपदेन चक्षुरादित्यं दिशश्श्रोत्रं पृथिवीं शरीरमोषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीति गृह्यते । यत्र यस्मिन् काले अस्य पुरुषस्य वागादय अग्न्यादीन् प्रति गच्छन्ति, तदायं पुरुषः क्व किमालम्बनः परलोकाय भवतीति याज्ञवल्क्यं प्रत्यार्तभागस्य प्रश्नः । तथा चानया श्रुत्या वागादिप्राणानामग्न्यादिगमनप्रतिपादनात् 'तमुत्क्रामन्त'मिति श्रुत्या च जीवेन सह गमनप्रतिपादनादुत्क्रान्तिविषयश्रुतीनां मिथो विगानेन स्वार्थतात्पर्यासम्भवात् न जीवस्य श्रुत्यनुसारेण उत्क्रान्तिर्निरूपयितुं शक्यत इति शङ्ककस्य हृदयम् । प्रसक्ते हि विरोधे यदि लक्षणादिना विरोधं परिभूय विवक्षितार्थत्वं सम्भवति, तदा नात्यन्तमविवक्षितार्थत्वमुचितम् । तथा च क्व लक्षणाश्रयणमित्याकाङ्क्षायां वनस्पतीन् केशा इत्यादौ दृष्टविरोधपरिहाराय लक्षणाया अवश्याश्रयणीयतया तत्प्रायपठितमग्निं वागप्येतीत्येतदेव लाक्षणिकं भविष्यति,

न तु तमुत्क्रामन्तमित्यादीत्यभिप्रायेण परिहरति—**भाक्तत्वादित्यादिना**। तथा च 'अग्निं वागप्येती'त्यादौ वागादिपदानि वागाद्यवच्छिन्नतत्तद्देवतांशलक्षकाणि । मरणकाले वागाद्यवच्छिन्नदेवतांशः निरवच्छिन्ने अग्न्यादिस्वरूपे अप्येति उपाधिकृतं भेदं विहायैकतां गच्छतीति वाक्यार्थः ॥ ४ ॥

## प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

**यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्विति** । श्रद्धाहुतेः सोमराजाख्यं परिणाममुक्त्वा अनन्तरं चत्वारोऽग्नयः 'पर्जन्यो वाव गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षस्सम्भवति पृथिवी वाव गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति पुरुषो वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतस्सम्भवति योषा वाव गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भस्सम्भवती'तीत्थं प्रतिपादिताः । ततश्च पञ्चाग्निविद्यायां रंहतां जीवानां स्वर्गलोके सोमभावश्रवणात्तदनन्तरं च वर्षादिभावप्रतिपादनात्तेषां स्वर्गलोकमारभ्यैव भूतपरिष्वङ्गस्सिध्येत् । स्वर्गलोकगमनात्प्राक्तु श्रद्धापदेन प्रतिपादनाच्छ्रद्धादिविशिष्टस्यैवेत उत्क्रान्तिस्सिध्येत् । अतो भूतपरिष्वक्तस्येत आरभ्य उत्क्रमणमिति पञ्चाग्निविद्यावाक्यपर्यालोचनया न सिध्यति। न च 'पञ्चम्यामाहुतावापः पुरुषवचस' इत्युपक्रमोपसंहारपर्यालोचनया पञ्चस्वप्याहुतिष्वपां सम्बन्धावगमाच्छ्रद्धापदमब्लक्षकमिति वाच्यम् । एतादृशोपक्रमोपसंहारपर्यालोचनया हि न पञ्चस्वपां सम्बन्धः प्रतीयते, अपि तु पञ्चमी या रेतोरूपा आहुतिः, तत्रैवापां सम्बन्धः प्रतीयते । अतो न तदनुसारेण श्रद्धापदं लक्षणया नेयम् । त- **स्मादयुक्त इति** । 'पञ्चम्यामाहुता'विति वचनपर्यालोचनया श्रद्धाशब्दो लक्षणया व्याख्यातुमयुक्त इत्यर्थः । **एवं ह्यादिमध्यावसानसङ्गानादिति** । अयं भावः—उपक्रमे पञ्चम्यामाहुतावापः पुरुषवचस इत्यत्रापां शाब्दो यद्यपि पुरुषवचस इत्यत्रान्वयः, तथापि पञ्चम्यामाहुतावित्यत्र कस्याहुतावित्यपेक्षायां सन्निधानादपामित्येव विपरिणम्यते । अत्राहुतेश्च पञ्चमत्वायान्यासां चतसृणामाहुतीनामपेक्षायां सजातीयैनैव सङ्ख्यापूरणमिति न्यायात्ता अप्यबाहुतय इत्येवावगम्यते । तथा चोपक्रमे तावत् पञ्चस्वप्याहुतिष्वबनुवृत्तिरवगता भवति। एवमिति तु पञ्चम्यामाहुतावापः पुरुषवचस इत्युपसंहारेऽपि पञ्चस्वाहुतिष्वपामनुवृत्तिरवगम्यते । अपि च तत्र 'इति तु पञ्चम्या'मितीतिशब्दः पूर्वप्रकृतप्रकारपरामर्शी । ततश्च श्रद्धादिपर्यायोक्तस्सर्वोऽप्यपामेव पुरुषपरिणतिप्रकार इत्यवगम्यते । तच्च तदैव सङ्गच्छते । यद्याप एव सोम-

राजादिपरिणतिक्रमेण पञ्चमाहुतौ पुरुषवचसो भवेयुः । तथा चोपक्रमोपसंहारपर्यालोचनया पञ्चस्वाहुतिष्वपामनुवृत्तेस्स्वरसतोऽवगमात्तदनुरोधाय श्रद्धाशब्दस्याप्स्वेवं लक्षणोपेया । एवंसत्यादिमध्यावसानसङ्गानं भवतीति श्रद्धापदेनापां लक्षणायां शक्यसम्बन्धमाह—**श्रद्धाकार्यं चेति** । मुख्यार्थग्रहणेऽनुपपत्त्यन्तरमाह—**न च श्रद्धाख्य इति** । न चेयं लक्षणा अप्रसिद्धेत्याह—**श्रद्धाशब्दश्चेति** । कार्यकारणसम्बन्धेन लक्षणामुक्त्वा गौणीमप्याह—**तनुत्वमिति** । प्रकारान्तरेण लक्षणामेवाह—**श्रद्धापूर्वकेति** । अस्मै पुरुषाय, सन्नमन्ते सम्पादयन्ति । स्वच्छसलिलापूरिततीर्थाद्यवलोकने हि स्नानादिपावनक्रियासु चेतः प्रसीदतीति प्रसिद्धमेतत् ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥

**श्रुतिसामान्यादिति** । ननु, 'तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा सम्भवती'ति स्वर्गं प्राप्तास्वप्सु सोमराजभावेन परिणतासूपासनाया आहुतिद्रव्यत्वं, तत्प्राप्तावाहुतित्वं, तदाधारस्य द्युलोकस्याग्नित्वमित्यादि कल्प्यते । तत्रालम्बनसमर्पकमिष्टादिकारिणामारोहावरोहप्रतिपादकवाक्यमिति तत्पर्यालोचनयात्र जीववैशिष्ट्यमपां सिध्यति, एतत्पर्यालोचनया चारोहतामबादिवैशिष्ट्यमिति । तदेव च वाक्यमत्रालम्बनसमर्पकमित्यत्र नियामकं च द्युलोकं प्राप्तानामिष्टादिकारिणामेष सोमो राजेति सोमभावस्यारोहवाक्ये प्रतिपादनात् पञ्चाग्निविद्यावाक्ये च द्युलोकं गतानामपां सोमराजभावेन परिणामप्रतिपादनादुभयत्र सोमराजपदस्य ऐकार्थ्यपर्यवसानमिति वक्तव्यम् । तत्तु न सम्भवति । एष सोमो राजेति वाक्ये हि एतत्पदं नेष्टादिकारिणां परामर्शकम् । 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासत' इति तेषां बहुवचनान्ततयैव प्रस्तुतत्वात् । एष इति चैकवचनान्तम् । अत आकाशाच्चन्द्रमसमित्येकवचनान्ततया सन्निधावुपात्तश्चन्द्र एव तेन परामृश्यते । सोमराजत्वं च चन्द्रस्यैव प्रसिद्धम् । तद्देवानामन्नमित्युत्तरवाक्यमपि 'प्रथमां पिबते वह्नि'रित्यादिशास्त्रानुसारेण चन्द्र एव स्वरसम् । ततश्च धूमादिमार्गेणारोहतां सोमराजभावस्यानवगमात् कथं वाक्यद्वयपर्यालोचनयाभिमतार्थसिद्धिरिति चेत्, उच्यते—वाजसनेयके हि 'अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति, ते धूममभिसम्भवन्ती'ति इष्टादिकारिणां धूमादिमार्गप्राप्तिपूर्वकं पितृलोकाच्चन्द्रमिति चन्द्रप्राप्तिमभिधायाम्नायते—'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानम् आप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ती'ति । अत्र च ते चन्द्रं प्राप्येति तत्पदेन प्रथमाबहुवचनप्रस्तुतानिष्टादिकारिणः परामृश्य तेषामेवान्नत्वं देवभक्ष्यत्वं च प्रतिपाद्यत इति उररीकरणीयम् । तदैक-

रूप्याय च्छान्दोग्येऽप्येष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्तीति देवान्नत्वं देवभक्ष्यत्वं च तेषामेव वक्तव्यम् । तदुपपत्तये एष सोमो राजेति पूर्ववाक्येऽपि तेषामेव परामर्शो वक्तव्यः । यद्यपि ते बहुवचनेन प्रस्तुताः, तथापि प्रथमाविभक्त्युपात्तानामेव एष इति प्रथमान्तेन परामर्शसम्भवे आकाशाच्चन्द्रमसमिति द्वितीयया प्रस्तुतस्य चन्द्रस्य परामर्शो न युक्तः । बहुत्वेपि विभक्त्यर्थगुणभूतस्यैकत्वस्य जात्यभिप्रायेण नयनोपपत्तेः। देवान्नत्वं देवभक्ष्यत्वं च तेषामुत्तरसूत्रे प्रतिपादयिष्यति। सोमराजपदमपि तेषु देवभोग्यत्वगुणयोगेन वा, अमृतमयशरीरत्वगुणयोगेन वोपपद्यते । अतो न सोमराजपदप्रत्यभिज्ञानुपपत्तिः। अपि च पर्जन्याग्निं प्रस्तुत्य तस्मिन्नेतस्मिन्नग्नौ देवास्सोमं राजानं जुह्वति तस्या आहुतेर्वर्षस्सम्भवतीत्युच्यते । चन्द्रलोकादवरोहवाक्येऽपि 'मेघो भूत्वा प्रवर्षती'ति वर्षभावः प्रतिपाद्यते । तथा चावरोहवाक्यप्रत्यभिज्ञापि। तत्सिद्धं वाक्यद्वयपर्यालोचनया भूतसम्परिष्वक्तरंहरणम्। **आहुत्योऽपूर्वरूपा इति** । यद्यपि सिद्धान्ते ईश्वरप्रसादादिरूपमपूर्वं, मीमांसकादिमते आत्मगतोऽतिशयविशेषः। न तद्रूपत्वं सूक्ष्माणामाहुतीनां, तथापि तत्सहकृतत्वात्तद्रूपोपचारः । **ततस्ता इत्यादि** । ननूत्क्रान्तिसमय एव भूतसूक्ष्मं तत्तन्नाडीविशेषनिष्क्रमणरूपफलदानेन सह जीवमावेष्टयति, न त्वन्त्येष्ट्यनन्तरमेव, सत्यं, तथापि स्वर्गादिरूपफलदानमन्त्येष्ट्यनन्तरमेवेति भावः । ननु, रंहतो जीवस्य भूतसूक्ष्ममाहुतिरूपमिति विशेषः कुतो निर्धार्यत इत्याशङ्क्य षट्प्रश्ननिरूपणे आहुतीनामुत्क्रान्त्यादिप्रतिपादनात तथावसीयत इत्याह —**तथा चेति** । अग्निहोत्राहुतीः प्रक्रम्य जनकेन याज्ञवल्क्यं प्रति 'न त्वेवैनयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न च पुनरावृत्तिं न लोकं प्रत्युत्थायिनं च वेद'त्यज्ञाने उद्भाविते याज्ञवल्क्येन तथेत्युक्ते जनकेनैव षट् प्रश्ना निरूपिताः। 'ते वा एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशतस्तेऽन्तरिक्षमाहवनीयं कुर्वाते वायुं समिधं मरीचिमेव शुक्रामाहुतिं तेऽन्तरिक्षं तर्पयतः ते दिवमाविशतः ते दिवमाहवनीयं कुर्वाते समिधमादित्यं चन्द्रमसमेव शुक्रामाहुतिं ते दिवं तर्पयतस्ते तत आवर्तेते' इति प्रक्रम्य पृथिवीं पुरुषं योषितं चाहवनीयत्वेन परिकल्प्य संवत्सरादींश्च समिदादित्वेन प्रतिपाद्य योषिदग्नेः यः पुत्रो जायते, स लोकं प्रत्युत्थायीति निरूपितम् । अत्र चाहुत्योरेवारोहावरोहप्रतिपादनात् आपः पुरुषवचस इत्यत्राप्छब्द आहुतिरूपाप्पर इति निर्धार्यते । **ते चन्द्रं प्राप्यान्नं भवन्तीति**। ते इष्टादिकारिणः यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति भक्षयन्ति, एवमेवैनांस्तत्र भक्षयन्तीत्यन्वयः । पुनःपुनराप्यायनं कृत्वा पुनःपुनरपक्षयं कृत्वा भक्षयन्ति । अत्र क्रियासमभिहारस्य क्रियाद्वयसमुच्चयस्य च विवक्षितत्वाल्लोट् । तथा च पाणिनिसूत्रं—'क्रियासमभि-

हारे लोट् समुच्चयेऽन्यतरस्यामि'ति । 'लोटो हिस्वावि'ति सूत्रेण सूत्रद्वयविहितलोट-स्स्थाने हिस्वावादेशौ नियम्येते । परस्मैपदिभ्यो हिः, आत्मनेपदिभ्यस्स्वः । ननु, क्रियासमभिहारविवक्षायां 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकेन लोडन्तस्य द्विर्भाव आम्नातः । 'यथाविध्यनुप्रयोगः पूर्वस्मिन्नि'ति सूत्रेण पूर्वस्मिन् क्रियासमभिहारे लोट्प्रकृतेरनुप्रयोगश्च विहितः । यथा खादखादेति खादति पुनःपुनः खादतीत्यर्थः । कथं तदभाव इह, कथं च अपक्षीयस्वेति कर्मलकारः । येन यगात्मनेपदयोस्सम्भवः । सोमं राजानमिति द्वितीयाश्रवणेन भक्षयन्तीत्यनुप्रयोगे कर्तृविवक्षया अपक्षीयस्वेत्यत्र कर्तृलकारावश्यम्भावादिति चेत्, उच्यते—न केवलमिह क्रियासमभिहारः, अपि तु समुच्चयविवक्षापि । समुच्चये द्विर्भावो नाम्नातः । अनुप्रयोगश्च 'समुच्चये सामान्यवचनस्ये'ति क्रियाद्वयान्वयितया साधारणार्थकस्य धातोरेवाम्नातः । यथा धानाः खाद, सक्तून् पिबेत्येवमभ्यवहरतीति, खादनपानरूपं तृप्त्यनुकूलं व्यापारं करोतीत्यर्थः । उभयविवक्षायां च 'विप्रतिषेधे परं कार्य'मिति सूत्रेण समुच्चयप्रयुक्तमेव कार्यं प्रकृते भवतीति सामान्यवचनस्य भक्षयतेरनुप्रयोगो द्विर्भावाभावश्च सिध्यति । भक्षणं चाप्यायनापक्षययोस्साध्यतयान्वितं भवति सामान्यम् । अपक्षीयस्वेति कर्मप्रयोगस्तु छान्दसो भविष्यति ॥ ६ ॥

## भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥७॥

**पञ्चाग्निविद्यामिहात्मविद्येत्युपचरतीति** । पञ्चाग्निविद्याया अपि आहुतिपरिवेष्टितजीवविषयत्वेनात्मविद्यात्वादिति भावः । **वाक्यतात्पर्यावगमादिति** । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचस' इत्युपक्रमात् 'अथ य एतान् पञ्चाग्नीन्वेदे'त्युपसंहाराच्च कृत्स्नमिदं पञ्चाग्निविद्याप्रकरणमित्यवगमात्तन्मध्येऽपि त्रयाणां मार्गकथनपूर्वकं केवलकर्मिणां देवान्नत्वप्रतिपादनं तन्निन्दाद्वारा पञ्चाग्निविद्यास्तुत्यर्थमवसीयते । ततश्च देवान् प्रति भृत्यादिभावेन विद्यमानानां केवलकर्मिणां देवभक्ष्यत्वाद्युपचारो नानुपपन्न इति भावः । जितलोकानां पितृलोकप्राप्तिसाधनैः कर्मभिर्जितः पितृलोको यैस्ते जितलोकाः । कर्मदेवपदं श्रुतिरेव व्याचष्टे—'ये कर्मणे'ति । अत्र—'तदन्तरप्रतिपत्तावि'तिसूत्रेणासंपरिष्वक्तस्यैव रंहणमिति शङ्काया निराकृतत्वाच्छङ्करमते सकलबन्धनिदानदेहस्य मरणकाल एव वियोगाद्वैराग्यस्य यन्मान्द्यं, तदात्मज्ञानविमुखानामामोक्षं तस्य बन्धनागारस्यानुवृत्तिप्रतिपादनेन निराक्रियते । 'अग्न्यादिगतिश्रुते'रिति सूत्रेण श्रुतीनामु-

त्क्रान्तिविषयाणां परस्परकलहेन उत्क्रान्तेरेवाभावात् स्वर्गनरकाभावे न पापेषु वैराग्यमिति शङ्का श्रुतिविरोधपरिहारेण उत्क्रान्तिसमर्थनान्निराक्रियते । 'अश्रुतत्वादि' ति सूत्रेण रंहतां न देवान्नत्वम्, अपि तु तान् प्रति चन्द्रस्यैवान्नत्वमिति न काम्यकर्मसु वैराग्यमिति शङ्का रंहतां देवान्नत्वं भृत्यादिरूपेणेति कर्मिणामिहापि कर्मकर्तृत्वेन देवपारतन्त्र्यं, परलोकेऽपि भृत्यत्वादिना तदिति दुःखं कर्मेति प्रतिपादनेन निराकृता । अतो वैराग्यपर्यवसायितास्याधिकरणस्य ॥ ७ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ।८।

पूर्वाधिकरणे विद्याकर्मपूर्वप्रज्ञापरिग्रहवतां भूतसूक्ष्मपरिष्वङ्गिनां रंहणमित्युक्तम् । अवरोहतां तु कर्मास्ति वा, न वेतीह विचार्यते । ततश्च पूर्वाधिकरणोपक्षिप्तकर्मगतविशेषचिन्तनात्सङ्गतिः । यावत्सम्पातं कृतस्य कर्मणस्समाप्तिपर्यन्तं स्वर्गलोक उषित्वा । **निरनुशया इति** । अनुशयस्स्वर्गार्थं यत् कर्म कृतमिह लोके, तद्व्यतिरिक्तं कर्म, यच्च स्वर्गभोगानन्तरमस्मिन्नपि लोके भोगसम्पादकं किञ्चित् कर्म, तदंशोऽपि । **तेषां यदा तत्पर्यवैतीति** । 'अथैममेवाकाशमभिनिष्पद्यन्त' इति श्रुतिशेषः । ननु, यावत्सम्पातमुषित्वेत्यत्र वाक्यशेषो भवति—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्नथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्नि'ति । रमणीयचरणास्सुकृतिनः रमणीयां ब्राह्मणादियोनिमापद्येरन्निति यत्, तदभ्याशो ह क्षिप्रमेव, एवं कपूयचरणाः पापिनोऽपि । ततश्चावरोहतां पुण्यपापानुसारेण शुभाशुभयोनिप्राप्तेः प्रतिपादनाद्यावत्सम्पातमिति वाक्यं स्वर्गोपभोगजनकं यावत् कर्म वर्तते , तस्य कृत्स्नस्य फलं स्वर्गेऽनुभूयेत्येवंपरतया व्याख्येयमिति चेत्, न । 'यावत्सम्पातमि' त्युपक्रमस्य उपसंहारानुसारेण क्लिष्टार्थत्वायोगात् । अत उपसंहार एव तदनुसारेण यथाकथञ्चिद्व्याख्येयः । तदिदमाह—**स्यादेतदित्यादिना** । **कर्मण इति** । अस्मिन् लोके पुनः कर्म कर्तुमायातीत्यर्थः । कृत्स्नस्यैव कर्मणः परलोकेऽनुभव इत्यत्र न्यायमाह—**अपि चेति** । प्रायणं मरणम् । न चैवंसत्यवरोहतां निमित्ताभावात् सुखदुःखवैचित्र्यदर्शनमनुपपन्नं भवेदिति वाच्यम् । कर्मणां क्षयेऽपि कर्मजनिताया वासनाया अनुवर्तमानतया पापवासनावासिता दुःखिनः पापनिरताश्च भवन्ति , पुण्यवासनावासितास्सुखिनः पुण्यनिरताश्च भवन्ति । रमणीयचरणाः कपूयचरणा इति

श्रुतिरपि वासनाभिप्रायैव । तथा हि प्रत्यक्षा श्रुतिरित्यादि । यावत्सम्पातमित्युपक्रमो हि न यथाश्रुतो व्याख्यातुं शक्यः । स्वर्गस्थे हि जीवे सञ्चितानि विचित्राणि कर्माणि सन्ति, कानि चित्तस्मिन्नेव काले स्वर्गोपभोगयोग्यानि, कानिचित्तु कालान्तरे, अन्यानि मनुष्यादिशरीरोपभोगयोग्यानि। कर्मणां नानायोनिफलारम्भप्रतिपादकशास्त्रादयमर्थोऽवगम्यते । न चैतानि सर्वाणि तस्मिन्नेव काले स्वर्गे उपभोक्तुं शक्यन्ते । अतश्शास्त्रान्तरपर्यालोचनयैव सङ्कुचद्वृत्तिरुपक्रमः । तथा चोपसंहारपर्यालोचनयावगम्यमानोऽवरोहतामनुशयस्तद्भावो न तेन बाधितुं शक्यते । न च वासनामात्रेण शुभाशुभयोनिप्राप्तिरुपपद्यते । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'ति शास्त्रेण कर्मविशिष्टाया एव वासनायां फलारम्भकत्वावगमात् । न च रमणीयचरणाः कपूयचरणा इत्यादौ पुत्रभार्यादिकृतकर्मानुसारेणैव योनिप्राप्तिरित्युच्यते । श्रूयते हि पुत्रादिकृतश्राद्धाद्यनुसारेण पितुः फलप्राप्तिरिति वाच्यम् । सर्वेषां कर्मफलानां स्वर्ग उपभोग इति वदतः पूर्वपक्षिणो मते अन्यकृतमनुपभुक्तफलं कर्मावशिष्टमस्तीति वक्तुमशक्यत्वात्, रमणीयचरणा इति बहुव्रीहिणा साक्षात्सम्बन्धिन एव कर्मणः प्रतीयमानतया अन्यकृतकर्मपरत्वकल्पनायोगाच्च । तथा च स्वर्गार्थं यत् कर्म कृतं, तस्यैव साकल्येन तत्रोपभोगप्रतिपादनपरं यावत्सम्पातमित्यादि शास्त्रम् । सौत्रं दृष्टपदं श्रुत्यभिप्रायं व्याख्याय भोगवैचित्र्यदर्शनपरतया व्याचष्टे—दृष्टश्चायमिति । अभ्युदयः स्वर्गादिः, प्रत्यवायो दुःखादिः, वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचर्यादयः, ये स्वकर्मनिष्ठाः, ते प्रेत्य परलोके विशिष्टानि उत्कृष्टानि देशादीनि मेधान्तानि येषां, ते तथाविधा इति बहुव्रीहिः । एवं स्वमते यत्स्वर्गसाधनं कर्म, तस्य कृत्स्नस्य स्वर्गे अनुभवेन क्षये सति अवशिष्टैः कर्मभिः अवरोह इति प्रतिपादितम् । मतान्तरे तु अमुमर्थं पूर्वपक्षं कृत्वा स्वर्गार्थकर्मण एवावशिष्टेन केनचिदंशेन इहावृत्तिरिति वर्णयन्ति, तन्मतमाह—केचित्तावदाहुरिति । यथा किल कश्चिदिति । अनेनैतन्मतेऽवशिष्टेन भागेन यथापूर्वमुपभोगाभावस्य दर्शनादित्यभिप्रायम् अत्र मते सौत्रदृष्टपदं व्याख्यातं भवति । स्मृतिश्च 'ततश्शेषेणेति' द्रष्टव्या । स्वर्गार्थात्कर्मण अवशिष्टेन भागेनेति तदर्थः । तत्रेयमनुशयविभागश्रुतिरिति । न च तवापि मते स्वर्गादवरोहतां रमणीयकपूयानुशयाभ्युपगमे तेषां विशिष्टदेशेत्यादिना समीचीनफलप्रतिपादनं स्मृतिगतं विरुध्येत । कृत्स्नस्यैव कर्मणः स्वर्गार्थस्य परलोक एव प्रक्षयाभ्युपगमे च शेषपदमपि विरुध्येतेति वाच्यम् । स्वर्गादवरोहन्तो ये रमणीयचरणाः, तदभिप्रायेयं स्मृतिर्भविष्यति । शेषपदमपि स्वर्गेऽनुपभुक्तं यदन्यफलो-

पयोग्यवशिष्टं, तदभिप्रायम् । **तस्मादामुष्मिकफले कर्मजात उपभुक्त इति** । इदं चामुष्मिकस्य कर्मणः कात्स्न्येन परलोके उपभोगाभिधानं यच्छास्त्रानुसारेण परलोकमात्रफलकं कर्मावगतं, तदभिप्रायम् । यत्तु लोकद्वये फलप्रदत्वेनैकमेव कर्म शास्त्रतोऽवगतं, तस्य केन चिदंशेन इहाप्युपभोगो न वार्यते । **ततस्स्वर्गनरकतिर्यग्योनिष्विति** । प्रायणस्य कृत्स्नकर्माभिव्यञ्जकत्वपक्षे प्रायणानन्तरं यैस्स्वर्गादियोनिः प्राप्ता, न तु कर्माविकृतमनुष्ययोनिः, तेषां स्वर्गादियोनिषु स्थितानां पुण्यपापानविकृतत्वान्नोत्तरशरीरासिद्ध्यर्थं कर्मानुष्ठानं सम्भवति । प्राचीनानां च कर्मणां स्वर्गादिशरीर एव क्षय इति पुनश्शरीरारम्भो निमित्ताभावान्न भवेदिति भावः । **अनेकजन्मनिमित्तत्वं स्मर्यमाणमिति** । 'श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छती'त्यादौ । **न च दृष्टफलस्येति** । तात्कालिकवृष्ट्यादिफलत्वं हि कारीर्यादेश्शास्त्रादवगम्यते । 'यथेतमनेवञ्चे'ति सौत्रांशं व्याचष्टे—**ते चावरोहन्त इति** । ननु, सूत्रकृता श्रौतो यथेतमित्यंशः अनेवंविधत्वस्यापि लक्षकतया किमिति व्याख्यायते । तत्प्रतिपादनस्य प्रकृतानुपयोगित्वादिति चेन्न । यथोपक्रमगतो यथेतमितिशब्दो धूमादिगमनपर्वापेक्षया अन्येषामपि अभ्रादिपर्वणां कीर्तनात् पूर्वोक्तानां राज्यादिगमनपर्वणां चाकीर्तनादुत्तरवाक्यपर्यालोचनया अनेवंविधत्वस्योपलक्षको भवति, एवं यावत्सम्पातमित्युपक्रमोऽपि 'तद्य इह रमणीयचरणा' इत्युपसंहारानुसारेण स्वर्गार्थं यत्कर्म कृतं, तन्मात्रविषयो भविष्यतीति दृष्टान्तविधया प्रकृतोपयोगसम्भवादिति दिक् ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥

सन्ध्यावन्दनादिः पादप्रक्षालनादिश्चाचारः । तथा च रमणीयचरणा इत्यादिपर्यालोचनया शुभाचारात्समीचीनयोनिरवगम्यते । कपूयचरणा इति वचनेन तु उच्छिष्टसम्पर्कादिदुराचारादसद्योनिरवगम्यते । अतः कथं चित्रोद्भिदादिकं ब्रह्महत्यादि चानुशयस्स्यादिति शङ्कितुरभिमानः । **यतोऽनुशयोपलक्षणार्थेति** । सौर्यादीनां ब्राह्मणादियोग्यब्रह्मवर्चसादिफलाम्नानाच्चित्रादीनां च मनुष्ययोग्यपश्वादिफलाम्नानात् ब्रह्महत्यादीनां च कपूययोनिफलत्वप्रतिपादनात् कर्मणामपि सदसद्योनिफलकत्वे प्रामाणिके सति चरणपदं कर्मणामप्युपलक्षकं भविष्यतीति भावः ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥१०॥

आचारहीनं न पुनन्ति वेदा इति । वेदाः वैदिकानि कर्माणि, आचारहीनं न पुनन्ति स्वफलभाजं न कुर्वन्ति । तथा च प्रयाजादिवदाचारस्य कर्माङ्गत्वमिति भावः । अथवा स्वर्गादिप्रतिबन्धकाहरहरुपचीयमानपाप्मनिवृत्तिरूपपुरुषसंस्कारद्वारा सन्ध्यावन्दनादीनामुपयोगः । 'आपश्शुन्धन्तु मैनसः यदह्ना पापमकार्षम् अहस्तदवलुम्पतु' इत्यादिमन्त्रलिङ्गादित्यभिप्रायेणाह—पुरुषार्थत्वमप्याचारस्येति ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥११॥

ननु, यद्याचरतिः कर्मसामान्यवाचकः, तदा 'आचारहीनं न पुनन्ति वेदा' इत्यत्रापि कर्मसामान्यग्रहणमेव स्यादित्याशङ्क्याह—आचारोऽपि धर्मविशेष एवेति । तथा च चरतेः कर्मसामान्यवाचकत्वेऽपि आचारपदस्य कर्मविशेषवाचकत्वे न क्षतिः । व्यपदेशभेदास्त्विवति । 'यथाकारी यथाचारी'त्यादौ आचरतेस्सदाचारादिपरत्वात् करोतिस्तद्व्यतिरिक्तपरः । प्रयोजनं पूर्वपक्षे बन्धकस्य कर्मणः अवरोहतामभावाद्वैराग्यमान्द्यं, सिद्धान्ते तु आमोक्षं तदनुवृत्तेः देवभृत्यत्वादिरूपक्षुद्रफलस्यापि तस्य सन्ध्यावन्दनाद्यनेकक्लेशयुक्तत्वाच्च ततो वैराग्यम् ॥ ११ ॥

॥ इति कृतात्ययाधिकरणम् ॥ २ ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥१२॥

यावत्सम्पातमुषित्वा 'प्राप्यान्तं कर्मणस्तस्ये'त्येवमादेः स्वत एव सङ्कोचसहिष्णुतया वचनान्तरानुसारेण स्वर्गार्थकर्ममात्रपरतास्तु । 'ये वै के चास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'त्यस्य त्वसङ्कुचितार्थत्वे न किञ्चिद्बाधकमस्ति । अतो नास्य सङ्कोचकल्पना युक्तेति प्रत्यवस्थानात् सङ्गतिः । अस्य वचनस्येष्टादिकारिविषयत्वे चानिष्टादिकारिणां शरीरारम्भोऽपि न स्यादित्याह—देहारम्भोऽपीति । नन्विष्टादिकारिणामनिष्टादिकारिणां च चन्द्रमण्डलप्राप्त्या तुल्यभोगत्वे पापात् कस्यापि निवृत्तिर्न स्यात् । पुण्याभावेऽपि स्वर्गप्राप्तिसम्भावनया पुण्येऽपि प्रवृत्तिर्न स्यादित्याशङ्क्य पापिनां पञ्चसङ्ख्याहुतिसम्पादनाय चन्द्रमण्डलारोहणमात्रं, न तु तत्र भोगोऽपीति परिहरति—इष्टादिकारिणामित्यादिना ॥ १२ ॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

अनेन सूत्रेण भोगाभावात् पापिनां चन्द्रगमनं नास्तीति प्रतिपाद्यते । ततश्च तेषां भोगाय यमप्राप्तिरेव । नन्वारोहानन्तरं यमयातनानुभवः, तदनन्तरमवरोहः । कथं सूत्रे आरोहावरोहावुभावपि यमयातनानुभवानन्तरं निर्दिश्येते, इत्याशङ्क्याध्याहारेण सूत्रं योजयति—ते तु संयमनमित्यादिना । तथा चेतो यमसदनारोहानन्तरं संयमनेऽनुभूय ततोऽवरोहन्तीत्येकं साध्याहारं सूत्रवाक्यम् । एवंभूतावितरेषामारोहावरोहावित्यपि वाक्यान्तरमिति द्रष्टव्यम् । 'वैवस्वतं सङ्गमनं जनानां सङ्गमनं प्राप्यं हविषा प्रीणयते'ति वाक्यशेषः । यथा चेदं वचनं सामान्यतस्सर्वेषामपि जनानां यमप्राप्तिं कथयदपि 'न सांपराय' इति वचनानुसारेण प्रमत्तनास्तिकादिपरतया व्याख्यायते, तथा 'चन्द्रमसमेव ते सर्वे' इत्यपि वचनम् 'अथ य इमे ग्राम इष्टापूर्ते' इति वचनानुसारेण ये वै केचिदिष्टादिकारिण इत्येवं व्याख्येयम् ॥१३॥

## स्मरन्ति च ॥१४॥

सुगमम् ॥१४॥

## अपि च सप्त ॥१५॥

न च सप्तानां नरकाणां पातालगतत्वेन पापिनां तत्र गमने कथं यमपुरप्राप्तिरिति वाच्यम् । यमसदनं गत्वा तेषां यमानुज्ञयैव पातालप्रवेशात् ॥१५॥

## तत्रापि च तद्व्यापारादविरोधः॥१६॥

स्पष्टम् ॥ १६ ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७॥

प्रयोजनाभावेऽपि 'ये वै के च' इति श्रुतिपर्यालोचनया सर्वेषां चन्द्रप्राप्तिरस्त्विति शङ्कानिराकरणार्थं सूत्रम् । 'असौ स्वर्गो लोकः इतो गच्छद्भिः यथा न पूर्यते, तथा वेत्थ किं'मिति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः । तेन च प्रतिवचनेऽनुक्ते तस्यैव प्रवाहणस्य वाक्यम्—अथैतयोः पथोरिति । एतयोर्विद्याकर्मप्राप्ययोरुत्तरदक्षिणमार्गयोर्मध्ये केनापि यानि न सम्बध्यन्ते, तानीमानि सर्पकीटादीनि भूतानि पुनःपुनरसकृदावर्तमानानि जायस्व म्रियस्व भवन्ति । समुच्चये लोट् , तस्य स्वादेशः ।

अत्र श्रुतिगतैतत्पदार्थकथनपरः 'विद्याकर्मणोरि'ति सूत्रभागः। तदाह—**एतयोः पथोरिति । विद्याकर्मणोरित्येतदिति ।** इदं चैतयोरित्यस्य पथोरित्यस्य च वैयधिकरण्यविवक्षया । एतयोरित्यत्र प्राप्यत्वं षष्ठ्यर्थः। 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदि दन्दशूकमि'ति वाजसनेयकपर्यालोचनया सामानाधिकरण्यविवक्षायां तु एतयोरित्यनेनैव विद्याकर्मप्राप्यत्वेन पथोः परामर्शः । तेनैव रूपेण तयोः प्रकृतत्वात्। प्रतिपदे प्रतिपत्तिसाधने । ननु, तुशब्देन सर्वे चन्द्रमण्डलं न गच्छन्तीति साध्ये दर्शिते तत्र हेतुर्वक्तव्यः । श्रुत्यर्थकथनस्य तु न प्रकृतोपयोग इत्याशङ्कय प्रकृतत्वाद्विद्याकर्मणोरित्येतदेतयोरित्यनेन विवक्षितमिति श्रुत्यर्थे दर्शिते अर्थाद्धेतुर्लभ्यत इत्याह—**एतदुक्तमिति** । तथा च मार्गद्वयप्रतिषेधेन पापिनां क्षुद्रजन्तुताप्राप्तेः प्रतिपादनान्न तेषां धूमादिना चन्द्रमण्डलगमनमित्यर्थस्सिध्यति । ननु, साक्षादेव हेतौ वक्तव्ये अर्थकथनव्याजेन सूत्रकृता किमिति हेतुः प्रतिपाद्यत इति चेत्, उच्यते—एतयोः पथोरित्यत्र न पापिनां मार्गद्वयस्य प्रतिषेधः । तथासति प्रकृतमार्गद्वयप्रतिषेधान्मार्गान्तरस्य चानिर्देशान्मार्गाभावेन पापिनां गतिरेव न स्यात् । 'न चैतत् तृतीयं स्थान'मिति मार्गप्रतिपादकम् । स्थानपदस्य भोगभूमिप्रतिपादकतया मार्गप्रतिपादकत्वासम्भवात् क्षुद्रजन्तूनां मार्गत्वासम्भवाच्च । अत एतयोः पथोरित्यत्र पथिन्शब्दः प्रापकत्वगुणयोगेन कर्मविद्यापरः। तथा च ये विद्याकर्मणोरनधिकृताः, तेषां क्षुद्रजन्तुतेति श्रुत्यर्थे सति मार्गद्वयस्य पापिनः प्रत्यप्रतिषेधाच्चन्द्रमण्डलं गत्वा ततोऽवरुह्य पापिनां क्षुद्रजन्तुतेति कल्पनायां नानुपपत्तिरिति शङ्कानिराकरणार्थं श्रुत्यर्थकथनव्याजेनार्थाद्धेतुर्दर्शितः । अयमत्र परिहारार्थः—एतयोरित्यनेनैव विद्याकर्मणोः परामर्शान्न पथोरित्यनेनापि तयोर्ग्रहणम् । पौनरुक्त्यात् पथोरित्यस्य मुख्यवृत्त्यैव ग्रहणसम्भवे गौणत्वकल्पनानुपपत्तेश्च । न च तथासति पापिनां मार्ग एव न स्यादिति शङ्कनीयम् । स्थानपदस्यैव मार्गलक्षकत्वोपपत्तेः । एतत् तृतीयं स्थानमिति हि मार्गद्वयनिरूपितं तृतीयत्वं स्थानपदार्थस्योच्यते। सङ्ख्यापूरणं च गुहाधिकरणन्यायात् सजातीयेनैवेति स्थानपदस्य मार्गलक्षकत्वमुचितमेव । तेषां च क्षुद्रजन्तूनां मार्गत्वमप्युपपन्नमेव । यथा हि धूमादिपर्वाणि उत्तरोत्तरभूमिप्रापकत्वेन स्थितानि, एवं क्षुद्रयोनयोऽपि उत्तरोत्तरक्षुद्रयोनिप्रापिकाः। पापिनामनेकक्षुद्रयोनिप्राप्तेश्शास्त्रसिद्धत्वात् । परं तु धूमादिषु मार्गपर्वसु न भोगः । क्षुद्रजन्तुषु तु भोगोऽप्यस्तीति द्योतनाय मार्ग एव स्थानशब्दः प्रयुक्तः ॥ १७ ॥

## न तृतीये तथोपलब्धेः ॥ १८ ॥

ननु, 'आपः पुरुषवचस' इत्यत्र पुरुषपदं मनुष्यामनुष्यसाधारणम् । तत्पुरो-

वादे 'तद्य इह रमणीयचरणाः, तद्य इह कपूयचरणा' इति प्रस्तुत्य ब्राह्मणादियोनिवत् श्वादियोनेरपि प्रतिपादनात् । अत आह—**अपि चेति** ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

ऋषेः कस्यचिद्द्रोणे स्कन्नं रेतो द्रोणाचार्यरूपेण परिणतमिति न तस्य योषिदाहुतिः । धृष्टद्युम्नोऽग्निमध्यान्निर्गतः, द्रौपदी वेदिमध्यान्निर्गता, सीता भूमेर्निर्गतेति तेषां योषित्पुरुषविषये द्वे अपि आहुती न स्तः ॥ १९ ॥

## दर्शनाच्च ॥ २० ॥

जरायुः गर्भवेष्टनचर्म । तत्र जाता मनुष्यादयः, अण्डजाः पक्ष्यादयः, स्वेदजा मत्कुणादयः, उद्भिज्जाः भूमिमुद्भिद्य जाताः वृक्षादयः । **त्रीण्येव बीजानीति** । अण्डजादीनामेव पूर्वेषामुत्तरोत्तरान् प्रति बीजत्वम् ॥ २० ॥

## तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥

स्वेदस्योष्मादिकृतशोकजन्यत्वेन स्वेदजं संशोकजशब्देन विवक्षितम् । तस्य तृतीयेन उद्भिज्जशब्देन श्रुतौ सङ्ग्रहः कृतः । प्रयोजनं पूर्वपक्षे पापिनामपि यथाकथञ्चित् स्वर्गप्राप्तेर्विद्यमानतया पापान्नातिवैराग्यम् । सिद्धान्ते तु भोगाभावेऽपि स्वर्गदर्शनमपि पापिनां नास्तीति ततोऽत्यन्तवैराग्यम् ॥ २१ ॥

अनिष्टादिकार्यधिकरणम् ॥३॥

## तत्साभाव्यापत्तिरुपपत्तेः ॥२२॥

श्रुतौ चन्द्रमण्डलारोहणानन्तरमवरोहः प्रतिपादितः । अतः श्रौतक्रमानुसारेणारोहं निरूप्यापादसमाप्तेरवरोहप्रकारो निरूप्यते— **एवं हि श्रुतिर्भवतीति** । ननु, 'वायुर्भूत्वा धूमो भवती'त्युत्तरवाक्यपर्यालोचनयावरोहतां धूमादिभावावगमेऽपि 'यथेतमाकाशमाकाशाद्वायु'मिति वाक्येन निवर्तन्त इत्यनुषङ्गयुक्तेनानुशयिनामाकाशवायुप्राप्तेर्भेदेनावगमात्तदनुसारेणौपसंहारिको वाय्वादिभावो न मुख्यः । अपि चानुशयिनां जीवानां कथं वाय्वादिभावः । न हि तेषां वाय्वाद्याकारेण परिणामस्सम्भवति । अपरिणामित्वादिति चेत्, उच्यते—'आकाशं प्रति निवर्तन्ते, वायुं प्रति निवर्तन्त' इति वाक्याभ्यां या अवरोहतामाकाशवायुप्राप्तिरवगम्यते, सा द्वेधा सम्भ-

वति तादात्म्येनाकाशादिप्राप्तौ अन्यथा वा। तत्र वायुप्राप्तेः 'वायुर्भूत्वा धूमो भवती'ति उत्तरवाक्ये तादात्म्येनानुवादात् सन्दिग्ध उपक्रमः तादात्म्यविषयतया व्यवस्थाप्यते । जीवस्यापरिणामित्वेऽपि भूतसूक्ष्मस्याकाशाद्यात्मना परिणामे सति तदैक्याध्यासमापन्नो जीवश्शक्यते निर्देष्टुं—वायुर्भूत्वा धूमो भवतीति। न ह्यन्यस्यान्यभाव इति। भवेदेतदेवं पूर्वपक्ष्युक्तम् । यदि प्राक्सिद्धादाकाशादाकाशान्तरात्मनानुशयिनां परिणाम इह प्रतिपाद्येत । अत्र तु यथेतमेतमिति वाक्यपर्यालोचनया ये गमनकाले विद्यमाना आकाशादयः, तद्भावः प्रतीयते । न च प्राक्सिद्धाकाशात्मना अनन्तरं परिणामस्सम्भवति । जायमानमपेक्ष्य प्राक्सिद्धस्य भिन्नत्वात् । अतो मुख्यार्थानुपपत्त्या लक्षणाश्रयणीयेति भावः । प्राक्सिद्धाकाशात्मभावमुपेत्यापि दूषणमाह—**आकाशादिस्वरूपेति** । प्राक्सिद्धाकाशोपमर्देन वायुभावे ह्याकाश एव न भवेदिति भावः । एतावताप्याकाशसमो भवतीत्यर्थलाभः कुत इत्यपेक्षायामाह—**विभुत्वाच्चाकाशेनेति** । पूर्वपक्षे भूतसूक्ष्मस्याकाशाद्यात्मना परिणामे सत्याकाशाद्यभिमानिदेवतानामिवावरोहतामनुशयिनामाकाशादिशरीरकत्वसम्पत्तेस्सम्भवति भोग इति न वैराग्यम् । सिद्धान्ते त्ववरोहतां भूतसूक्ष्मस्य तथापरिणामाभावात् जाड्यमेवानुवर्तत इति काम्यकर्मणां भोगान्ते पुनर्जाड्यमनेककालमनुभाव्यमिति वैराग्यसिद्धिः ॥ २२ ॥

इति तत्साभाव्यापत्त्यधिकरणम् ॥४॥

## नातिचिरेण विशेषात् ॥२३॥

पूर्वाधिकरणप्रतिपादिते अनुशयिनामाकाशादिसादृश्ये विशेषचिन्तनात् सङ्गतिः । **किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनेति** । यथा व्रीह्यादिभावानन्तरमतिचिरं प्राग्योन्यापत्तेरवस्थानम्, एवं व्रीह्यादिभावात् प्रागाकाशादिसाम्येनापि किमतिचिरं व्रीह्यादाविवावस्थानम्, उत व्रीह्यादिसाम्यापेक्षया अल्पकालावस्थानमिति संशयार्थः । **तत्रानियम इति** । ननु, 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त' इति व्रीह्यादिभावं प्रतिपाद्यातो वै खलु दुर्निष्प्रपतरमिति वाक्यमाम्नायते । तत्र च व्रीह्यादिभ्यो दुःखेन निस्सरणमिति यद्यपि यथाश्रुति प्रतीयते, तथापि प्राग्योन्यापत्तेः दुःखस्यासम्भवाच्चिरकालता दुरुपसर्गेण प्रतिपादनीया । ततश्च व्रीह्यादिभ्यो निस्सरणं चिरकालेनेत्यर्थे सति ततः प्राचीनेभ्यो निस्सरणमल्पेन कालेनेति सिध्यतीति चेन्न । भवेदेतदेवं, यद्यतो वै खलु दुर्निष्प्रपतरमित्यत्रातएव व्रीह्यादिभावादेव दुःखेन निस्सरणमिति परिसङ्ख्यार्थमेतद्वाक्यं भवेत् । न तु तथा वचनव्यक्तिर्विवक्षिता । अपि तु व्रीह्यादिष्ववस्थानोक्त्यनन्तरं योन्यापत्तौ प्रतिपादितायां व्रीह्यादिभ्यो निस्सर-

णस्यार्थसिद्धतया चिरमचिरं वा तत्रावस्थाय निस्सरणमित्यनियमे प्राप्ते चिरेणैव ततो निस्सरणमिति नियमप्रतिपादनात् व्रीह्यादौ चिरमचिरं वेति अनियमव्यावृत्ति-र्लभ्यते, न त्वाकाशादिषु चिरावस्थानव्यावृत्तिः । तथा च व्रीह्यादिभावश्चिरमचिरं वेत्यत्र नियामकाभावादनियम एव । न चैवमप्यतो वै खलु दुर्निष्प्रपतरमित्यत्रैकस्य तकारस्य छान्दसत्वेन लुप्तत्वाद्दुर्निष्प्रपततरमित्यतिशयितविलम्बेन निस्सरणमित्यर्थः प्रतीयते । तथा च किमपेक्षयातिशयेन इत्यपेक्षायामाकाशादिभ्य इति सन्निधानात् प्रतीयते । ततश्च व्रीह्यादिभ्य आकाशादिषु अवस्थानमल्पकालमित्यर्थात् सिध्यतीति वाच्यम् । दुर्निष्प्रपतरमित्यत्र तकारलोपो वा छान्दसः, रेफोपजनो वा छान्दस इत्यत्र नियामकाभावात् । अपि चेह तरप्प्रत्ययो न प्रवर्तते । 'द्विवचनविभज्योपपदे तरबीयसुना'विति सूत्रेण द्विवचनान्ते विभजनीये चोपपदे सत्येव तरबीयसुनोर्विधानात् । यथा देवदत्तयज्ञदत्तयोर्मध्ये देवदत्त आढ्यतरः, माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति । न चात्र प्रकृते तदुभयमस्ति । अतो नात्र तरपोऽवकाश इति रेफोपजन एव छान्दस उपेयः । अतो व्रीह्यादिभावात् प्रागनियम इति पूर्वपक्षः । **तकार एकश्छान्दस्येति** । अयमर्थः—यदि रेफोपजनोऽङ्गीक्रियेत, तदा अर्थविशेषो न लभ्यते । तरप उपगमे तु अतिशयरूपार्थाधिक्यं लभ्यते । अतस्तरप्प्रत्ययमुपेत्य तकारलोप एव छान्दस उपेयः । न च द्विवचनान्तस्य विभक्तव्यस्य वोपपदस्य वाभावात्तरपोऽनुपपत्तिः । शब्दतस्तदुपादानाभावेऽपि सन्निधानेनाकाशादिभ्य इत्यवगन्तुं शक्यत्वात् । शब्दत अनुपात्तत्वेऽपि गम्यमानेनापि विभक्तव्येन तरप्प्रत्ययस्य 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'त्यत्र दर्शनात् । अत्र हि विद्याविहीनात् कर्मणो विद्यायुक्तं कर्म वीर्यवत्तरमित्यर्थो विवक्षितः । तथा चात इत्यनेन सन्निहितानां व्रीह्यादीनां परामर्शादाकाशादिभ्यो यन्निष्क्रमणं, तदपेक्षया व्रीह्यादिभ्यो निष्क्रमणमत्यन्तविलम्बेनेत्यर्थे सत्याकाशादिष्ववस्थानं व्रीह्यादिष्ववस्थानमपेक्ष्याल्पकालमिति सिध्यति । वस्तुतस्तु दुर्निष्प्रपतरमित्यत्र तकारलोपो न कल्प्यत एव । डप्रत्ययान्तत्वे पतेष्टिलोपसम्भवात् । 'पञ्चम्यां जनेर्ड' इत्यत्रा'न्येभ्योऽपि दृश्यत' इति वार्तिकेन धात्वन्तरेभ्योऽपि डप्रत्ययस्यानुशिष्टत्वात् तत्र दृशिग्रहणमुपपदान्तरेभ्योऽपि भवतीति द्योतनायेति वृत्तिकारेणोक्तत्वाच्च 'कृत्यल्युटो बहुलमि'ति सूत्रे बहुलग्रहणं ये प्रत्यया येन येनोपाधिना विहिताः, ते तदभावेऽपि प्रयोगानुसारेण भवन्तीत्युपगमाच्च । तथा च दुर्निष्प्रपतरमिति तरपोऽभ्युपगमे न काचिदनुपपत्तिः । न च तरप उपगमेऽपि अतो वै खलु दुर्निष्प्रपतरमित्यत्रात इत्यनेनाकाशादीनामपि परामर्शात्सर्वेभ्योऽप्यतिविलम्बेन निष्क्रमणं प्रतीयते । कथमाकाशादिकमपेक्ष्य व्रीह्यादिभ्योऽत्यन्तविलम्बेन निष्क्रमणम् इत्य-

र्थलाभ इति वाच्यम् । आकाशादिकमपेक्ष्य व्रीह्यादीनां सन्निहिततरत्वादाकाशादीनामपि परामर्शे तरबर्थातिशयप्रतियोग्यलाभप्रसङ्गाच्चात इत्यनेन व्रीह्यादीनामेव परामर्शो न्याय्यः । आकाशादिष्वल्पकालमवस्थानमिति व्युत्पादनव्याजेन व्रीह्यादिसाम्यमापन्नस्य यत्ततो निष्क्रमणं, तदतिविलम्बेनेति व्यवस्थापनाद्वैराग्यपर्यवसायिता ॥ २३ ॥

इति नातिचिराधिकरणम् ॥ ९ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

पूर्वस्मिन्नधिकरणे आकाशादिभ्यो वर्षान्तेभ्यः निष्क्रमणमपेक्ष्य व्रीह्यादिभ्यो निष्क्रमणमतिविलम्बेनेति व्रीह्यादिभावे विशेषः प्रतिपादितः । तथासत्याकाशादिसाम्यापत्तिरूपादाकाशादिभावाद्व्रीह्यादियोन्यापत्तिरेव व्रीह्यादिभाव इत्यपि विशेषोऽस्त्विति दृष्टान्तमुखेन प्रत्यवस्थानात् सङ्गतिः । ननु, वायुर्भूत्वा धूमो भवतीत्यादौ मुख्यार्थं परित्यज्यापि अमुख्यवृत्त्या वायुसदृशो भूत्वेत्येवमादिरूपेण व्याख्येयमित्युक्तम् । एवमत्रापि 'त इह व्रीहियवा ओषधिवनस्पतय' इत्यादावपि व्रीह्यादिसंश्लिष्टा भवन्तीत्यमुख्यार्थता किं न स्यादत आह—**स्थावरभावस्य चेति** । व्रीह्यादिषु कश्चिदुपभोक्तापेक्षितः । तथा चापेक्षानुसारेण प्रकृते मुख्यार्थत्वमुपेयम् । न च तत्र जीवान्तरमेव भोक्तृ भविष्यति । स्वर्गादवरोहन्तस्तु तत्संश्लिष्टा भवन्त्विति वाच्यम् । तथाकल्पनायां प्रमाणाभावात् । आकाशादिस्थले तु यथेतमिति वाक्यपर्यालोचनया प्राक्सिद्धानामेवाकाशादीनामवगमात्तद्भावापत्तेरनुशयिनामसम्भवाद्वाय्वादिपदानां सादृश्यलक्षणोपेता । इह तु व्रीह्यादिपदानां व्रीह्यादिसंश्लिष्टतालक्षणायां न किञ्चिन्नियामकमस्ति । अनुशयिनां व्रीह्यादिशरीरापत्तेरसम्भवात् । न चेह जीवान्तरैरधिष्ठिता एव व्रीह्यादयः व्रीह्यादिपदैरुपादीयन्ते । येनानुशयिनां तच्छरीरापत्तिरनुपपन्ना स्यात् । न चास्मिन् प्रकरणेऽनुशयिनां यत्र शरीरग्रहणमाम्नातं 'तद्य इह रमणीयचरणा रमणीयां योनि'मित्यादौ, तत्र तदुपयुक्तं पुण्यादिकं कीर्तितम् । इह तु व्रीह्यादिभावे तदुपयुक्तं पापं न कीर्त्यते । अतो नात्र शरीरग्रहणं विवक्षितमिति वाच्यम् । 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त' इत्यस्य यथाश्रुतार्थत्वसिद्धये शरीरापत्तौ सिद्धायां तदुपयुक्तस्य पापस्याक्षेपोपपत्तेः शब्दत एव तस्य कीर्तनमपेक्षितमिति निर्बन्धस्त्वप्रयोजकः । अपि च 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासत' इति तदुपयुक्तं कर्मापि कीर्तितमस्ति । ननु, पुण्यरूपस्य तस्य कथं क्लेशसम्पादकव्रीह्यादियोनिप्रापकता । अत आह—**पशुहिंसादियोगाचे-**

ति । 'न हिंस्यादि'ति वाक्येन कृत्स्नाया हिंसाया अनिष्टसाधनताबोधनेन यागीयहिंसाया अनिष्टसाधनतया तद्युक्तस्येष्टादेस्स्थावरत्वापत्तिः फलं नानुपपन्नम् । ननु, 'न हिंस्यादि' ति वाक्येन न कृत्स्नाया अपि हिंसाया अनिष्टसाधनता बोध्यते, अपि तु पुरुषार्थीया एव । न हिंस्यादित्यत्राख्यातस्य कर्तृवाचकत्वमते शब्दादेव पुरुष उपस्थितो भवति, तदवाचकत्वपक्षे त्वाख्यातार्थभावनाक्षेपात् । तथा च निषेधोपस्थिते बलवदनिष्टसाधनत्वे कस्यानिष्टसाधनमित्यपेक्षायामुपस्थितत्वात् पुरुषस्येति सम्बध्यते । एवमेवानूदितेष्टसाधनतायामपि कस्येष्टसाधनमित्यपेक्षायां पुरुषस्येष्टसाधनमित्यपि सम्बन्धो भवति । निषेधस्थले हि अनिष्टगतबलवत्तानिरूपणापेक्षितविधिशक्त्युपस्थितेष्टसाधनत्वानुवादेनैवानिष्टसाधनता बोध्यते । तथा चायमर्थस्सम्पन्नः—पुरुषस्येष्टसाधनत्वेन प्रसिद्धा या हिंसा, सा तस्य बलवदनिष्टसाधनमिति । न चैवंसति हिंसोद्देशेन बलवदनिष्टसाधनताविधिपरे वाक्ये उद्देश्यायाः हिंसायाः कथं पुरुषेष्टसाधनत्वं विशेषणम् । उद्देश्यविशेषणस्य परिसङ्ख्याफलकत्वेनान्याय्यत्वादिति वाच्यम् । यत्र ह्युद्देश्यविशेषणं परिसङ्ख्यामात्रफलकं, तत्रैव तदन्याय्यम् । यथा ग्रहं संमार्ष्टीति । तत्र ह्युद्देश्यतावच्छेदकस्य विधेयव्याप्यताया व्युत्पत्तिसिद्धत्वेन ग्रहत्वावच्छिन्नस्य सर्वस्य सम्मार्गसम्बन्धित्वावगमात् एकत्वविशेषणं ग्रहान्तरव्यावृत्तिमात्रफलकमिति तन्न विवक्ष्यते । यत्र तूद्देश्याकाङ्क्षापूरणार्थं विशेषणं भवति, तत्र तद्विवक्ष्यत एव । यथा 'यस्योभयं हविरार्तिमार्छेदि'ति । अत्रार्तधर्मिविशेषापेक्षित्वाद्धविषो विवक्षितत्वम् । एवं च प्रकृतेऽपि कस्येष्टसाधनमिति उद्देश्यांशे अपेक्षाया उत्थितत्वात् पुरुषस्येत्युपस्थितं विवक्ष्यते । उपस्थितिमूलक एव च निषेध्यनिषेधयोस्समानविषयकत्वन्यायः । अत एव 'नानृतं वदेदि'ति क्रतुप्रकरणपठितस्य वाक्यस्य क्रत्वर्थानृतवदने क्रत्वर्थतयैव प्रतिषेधपरत्वं प्रतिषेधस्य क्रत्वर्थत्वम् । पुरुषार्थत्वं नाम क्रतूपकारकत्वं पुरुषोपकारकत्वं च । प्रतिषेधस्यापि क्रत्वर्थत्वं पुरुषार्थत्वं च क्रतुपुरुषानिष्टबोधकतैव । तथा च 'नानृतं वदेदि'ति क्रतुप्रकरणगते वाक्ये क्रतोरुपस्थिततया निषेधोपस्थिते अनिष्टसाधनत्वे कस्येत्यपेक्षायां क्रतोरिति सम्बन्धवदनूदितेष्टसाधनत्वेऽपि कस्येत्यपेक्षायां क्रतोरित्येव सम्बध्यते । क्रतोरिष्टः क्रतूपकारः, अनिष्टं तु क्रतुवैगुण्यं । तथा 'न हिंस्यादि'ति निषेधस्य पुरुषार्थत्वात् प्रतिषेध्या हिंसापि पुरुषार्थैव भवतीति क्रतुगताया हिंसायाः प्रतिषेधाविषयत्वान्न तस्याः प्रत्यवायकरता । न च प्रतिषेध्यप्रतिषेधयोः समानविषयत्वं न नियतम् । दीक्षितो न ददाति, न जुहोतीत्यादौ प्रतिषेधस्य क्रत्वर्थत्वेऽपि प्रतिषेध्यानां दानादीनां पुरुषार्थत्वस्योपेतत्वादिति वाच्यम् । बाधकवशेन तत्र समानविषयत्वपरित्यागेऽपि अन्यत्र तत्त्यागस्यानुचितत्वात् । दीक्षितो न ददातीत्यादौ

प्रकरणात् प्रतिषेधस्य क्रत्वर्थत्वं तावदवश्यंभावि । तत्र यदि प्रतिषेध्या दानादयश्शास्त्रेण क्रत्वर्थतया बोधिता एव स्वीक्रियेरन्, तदा विधिप्रतिषेधयोस्समानविषयत्वेन षोडशिग्रहवद्दानादीनामपि विकल्पस्स्यात्, स मा भूदिति उपस्थितस्यापि क्रतोः प्रतिषेध्यांशे सम्बन्धो नापेयते । अपि तु ये पुरुषार्थतया क्रतुबहिष्कृता एव दानहोमादयः प्रसिद्धाः, त एवानूद्यन्ते । तथा च प्रतिषेधप्रतिषेध्ययोर्भिन्नविषयत्वाद्विकल्पो न भवति । अनृतवदनस्य तु क्रतूपकारकस्य ऋत्विगानत्याद्युपयोगिनः अधिकां दक्षिणां दास्यामीत्येवंवञ्चनोक्त्यादिरूपस्य शास्त्रं विनैव सिद्धत्वात् समानविषयत्वेऽपि निषेध्यनिषेधयोर्न विकल्पः प्रसज्यत इति न तत्रोत्सर्गः परित्यज्यते । एवं न हिंस्यादित्यत्राप्युपस्थितस्य पुरुषस्य परित्यागे कारणं नास्तीति पुरुषार्थाया एव हिंसाया अनेन प्रतिषेधात् क्रत्वर्थाया हिंसायाः कथं प्रत्यवायकरत्वमुच्यत इति चेत्, भवेदेतदेवम् । यदि नानृतं वदेदित्यत्र क्रत्वर्थविशेषणेन क्रत्वनुपयुक्तस्यानृतवदनस्य यथा व्यावृत्तिः, एवं न हिंस्यादित्यत्र पुरुषार्थत्वविशेषणेन क्रतूपकारिण्या हिंसाया व्यावृत्तिर्भवेत्, न तु तदस्ति । क्रत्वर्थाया अपि हिंसायाः क्रतूपकारमुखेन पुरुषाभिलषिततया व्यावृत्तेरसम्भवात् । ननु, साक्षात्पुरुषाभिलषितसाधनभूतैव हिंसा पुरुषविशेषणेनोपस्थाप्यते, न तूपकारमुखेन पुरुषोपयुक्तेति चेत्, न । तथासति शत्रुवधादेरपि द्रव्यप्राप्त्यादिद्वारैव पुरुषाभिलषितसाधनतया तेषामपि ग्रहणं न स्यात् । क्रतुबहिर्भूतायाः पुरुषाभिलषितसाधनं संगृह्यत इत्यत्र तु न किञ्चिन्नियामकमस्ति । तथा चाख्यातोपस्थितपुरुषं प्रतीष्टसाधनतयोपगता या हिंसा, सा सर्वापीह निषेध्येति यागीयहिंसाया अपि पुरुषेष्टसाधनतया तस्या अपि निषेधविषयता भवत्येव । अत एव 'यो ब्राह्मणायापगुरेत्तं शतेन यातयात् तस्मात् ब्राह्मणाय नापगुरेते'तिवाक्यं यद्यपि क्रतुप्रकरणगतं, तथापि नापगुरेतेति निषेधोपात्तमनिष्टं किमित्यपेक्षायां तं शतेन यातयेदिति वाक्योपस्थितशतयातनाख्यनरकविशेषस्य वाक्येन समर्पणात् क्रतुप्रकरणबाधेन निषेधस्य पुरुषार्थत्वान्निषेध्यापगोरणस्यापि उपस्थितपुरुषार्थत्वस्थितौ क्रतूपयुक्तं तदनुपयुक्तं वा यावदपगूरणं तत्सर्वं निषेध्यमुपेयते । पुरुषार्थत्वविशेषणस्य क्रतूपयुक्तव्यावर्तकत्वे तु क्रतूपयुक्तब्राह्मणापगूरणं प्रत्यवायकरं न भवेत् । न च वाच्यं क्रतूपयुक्ताया अपि हिंसायाः यदि निषेधोऽभ्युपगम्येत, तथासति 'न हिंस्या'दिति निषेधस्य निषेध्यसमानविषयकतानियमात् क्रत्वर्थताप्युपेया भवेदिति एकस्यैव वाक्यस्य क्रत्वर्थपुरुषार्थनिषेधबोधकतया स्वातन्त्र्यपारतन्त्र्यलक्षणं वैरूप्यं भवेदिति निषेध्यनिषेधयोस्समानविषयकत्वमिति न्यायो ह्युपस्थितिमूलकः । न हिंस्यादिति वाक्ये तु क्रतूपस्थापकं प्रकरणादिकं किञ्चित् प्रमाणं नास्तीति कथं क्रतुशेषता स्यात् । क्रत्वर्थहिंसा तु पुरुषार्थ-

त्वेन क्रोडीकृतेति न तस्या व्यावृत्तिः । निषेधबोधिता पुरुषानिष्टसाधनता तु नरकविशेषप्रतिपादकवाक्यशेषे तमादाय पर्यवसिता भविष्यति , तदभावे तु विश्वजिन्न्यायेन दुःखसामान्यमादाय पर्यवासिता भविष्यतीति न न हिंस्यादित्यस्य क्रतुवैगुण्ये पर्यवसानम् । येन क्रत्वर्थता भवेत् । स्यादेतत् । यदि क्रत्वर्थः पश्वालम्भो हिंसा भवेत्, तदा खलु 'न हिंस्या'दिति निषेधविषयत्वात् प्रत्यवायकरो भवेत् । हिंसात्वं तु तस्य न सम्भवति । पशुं प्रकृत्य हि श्रूयते—'हिरण्यशृङ्ग ऊर्ध्वं स्वर्गं लोकमेती'ति । तथा च यागीयपशुप्राणवियोगानुकूलव्यापारस्य पश्वनुग्रहार्थतावगमात् न तस्य हिंसात्वम् । हिंसनीयाननुग्राहकस्यैव व्यापारविशेषस्य हिंसात्वात् । तथा च श्रुतिः पशुं प्रकृत्यैव—'न वा उवेतन्म्रियसे न रिष्यसी'ति । न रिष्यसि न हिंस्यसे इति यावत् । अतो यागीयपश्वालम्भो न प्रत्यवायकर इति । न स्यात् । प्राणवियोगफलोपहितस्तदनुकूलो व्यापारो हिंसा । यागीयपश्वालम्भोऽपि भवति तथेति कथं न हिंसा । यथा हि व्रणिनो व्रणच्छेदनादिकं तदनुग्राहकमपि छेदनं भवत्येव । न तत्र तदनुग्राहकं यन्न भवति छेदनादि, तदेव छिदिधात्वर्थ इति कल्प्यते, एवमत्रापि न हिंसनीयानुग्रहरहितं यत्प्राणवियोजनं, सैव हिंसेति कल्पयितुमुचितम् । ततश्च यदि यागीयपशोर्हिरण्यशृङ्ग इत्यादिवचनानुसारेण स्वर्गप्राप्तिः प्रतीयते, तदा सा भवतु नाम।देवताधिकरणोक्तन्यायेनार्थवादात् प्रतीयमानस्याप्यर्थस्योपगमात् । 'न वा उवेतन्म्रियसे न रिष्यसी'त्यादिवाक्यप्रतिपाद्यं तु तदालम्भस्याहिंसात्वं स्तुत्यर्थमारोप्यत इत्येवोचितम् । प्रवृत्तिनिमित्तसद्भावेन तस्य हिंसात्वावश्यम्भावात् । तथा च 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य' इति वाक्यं यागीयपश्वालम्भस्य हिंसात्वमभ्यनुजानाति । तीर्थं विहितस्थलं, ततोऽन्यत्रेत्यर्थः । यदि यागीयपश्वालम्भो हिंसैव न भवेत्, तदा अन्यत्र तीर्थेभ्य इति व्यर्थमेव भवेत् । अहिंसन्नित्येव तद्व्यावृत्तिसिद्धेः । ननु, यदि हिंसानिषेधः अन्यत्र तीर्थेभ्य इति वचनानुसारेण विहितव्यतिरिक्तविषयः प्रतीयते, तदा कथं यागीयहिंसायाः प्रत्यवायकरतेति शङ्केति चेत्, न ह्यत्र पूर्वपक्षिणा हिंसाया एव प्रत्यवायकरतेत्येतावन्मात्रं विवक्षितम्, अपि त्विष्टादिकं कर्माङ्गानुसारेण प्रत्यवायकरम् । ततश्च हिंसायाः प्रत्यवायकरत्वाभावेऽपि वाजपेयादिषु सुराग्रहादीनां प्रत्यवायकरतास्त्येव । तस्माद्युक्तमुक्तं 'पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्ते'रिति । न च यागाङ्गानां पशुहिंसादीनामनिष्टकारित्वे तत्र कस्यापि प्रवृत्तिर्न स्यादिति वाच्यम् । यथा द्रव्यव्ययादिना यागतदङ्गादीनामनिष्टफलकत्वेऽपि यागजनितफले रागवशात् प्रवर्तते, एवं पश्वाद्यालम्भस्य प्रत्यवायकरत्वेऽपि यागफलेऽत्यन्तरागवशात् प्रवृत्त्युपपत्तेः । इयांस्तु विशेषः—द्रव्यव्ययादिना प्राप्तमनिष्टं प्रत्यक्षादिप्रमाणकं, पश्वालम्भादौ

प्रत्यवायकरता तु 'न हिंस्यात्सर्वा भूतानि' 'न सुरां पिबे'दि त्यादिशास्त्रसिद्धा। अतो न प्रवृत्त्यनुपपत्तिः । यथाकाशादिषु वर्षणान्तेष्विति । भोगोपयोगिव्रीह्यादियोन्यापत्तिर्हि तदुत्पादककर्माभिव्यक्त्या। तत्र च 'शरीरजैः कर्मदोषैर्याति स्थावरतां नर' इत्यादिशास्त्रसिद्धः पापविशेष एव कर्म । तदभिव्यक्तिश्च वर्षधाराभिः पतनकाले नास्तीत्यवगम्यते। यदि तदभिव्यक्तिरधुना स्यात्, तदा 'यो यो ह्यन्नमत्ति योयो रेतस्सिञ्चति तद्भूय एव भवती'त्येतदनन्तरं 'तद्य इह रमणीयचरणा' इत्यादिनेव वर्षणानन्तरमपि पापादिकं कीर्त्येत। तत्त्वाकाशादिपर्यायेष्विव व्रीह्यादिपर्यायेष्वपि न कीर्त्यते । अतो ज्ञायते—नात्रावरोहतां पुण्यपापाभिव्यक्तिरस्ति, किं तु रेतस्सिग्भावानन्तरमेव पुण्यपापाभिव्यक्तिरिति । ततश्चानभिव्यक्तकर्मभिर्व्रीह्यादियोन्यापत्तेरसम्भवादन्यैर्जीवैरधिष्ठितेष्वेव व्रीह्यादिष्वनुशयिनां जाड्यप्रायतया संश्लेषमात्रम् । एवंसत्येव व्रीह्यादीनां लवनादिषु तदभिमानिनां जीवानामुत्क्रमणेऽपि संश्लिष्टानामनुशयिनां तेष्वनुवृत्तिरुपपद्यते । जडतया लवनादिकृतवेदनाभावात् । लवनाद्यनन्तरमप्यनुशयिनां तत्रानुवृत्तिः रेतोभावेन गर्भप्रवेशायापेक्षिता । तदाह—अपि चेति । ततश्च व्रीह्यादियोनिप्रयोजकपुण्यपापाद्यभिव्यक्तेरस्यां दशायामभावात् 'योयो ह्यन्नमत्ति योयो रेतस्सिञ्चति तद्भूय एव भवती'-त्रिवाक्यशेषानुसाराच्च 'त इह व्रीहियवा' इत्यादिकमपि वायुर्भूत्वेत्यादिवदमुख्यवृत्त्यैव व्याख्येयम् ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥२५॥

'अथ य इमे ग्रामे' इत्यादौ इष्टादेः कर्मणः स्वर्गप्राप्त्यर्थमभिव्यक्तेः प्रतिपादनात्तच्छेपभोगार्थं व्रीह्यादिभावो भविष्यति । तस्य च पशुहिंसादियोगेनानिष्टफलकत्वमुपपद्यत इति शङ्कानिराकरणार्थम् एतत्सूत्रमित्याह—यत्पुनरुक्तमिति । अपवादोऽग्नीषोमीयं पशुमालभेतेति । ननु, कथमपवादः । हिंसासामान्यस्य न हिंस्यादिति वाक्येन बलवदनिष्टसाधनत्वे बोधिते 'अग्नीषोमीयं पशुमालभेते' तिविधिना यागीयपशुहिंसाविशेषस्य बलवदनिष्टाननुबन्धित्वबोधनादपवादतेति चेत्, न । अङ्गविधीनां विनियोगमात्रतात्पर्यकत्वेन बलवदनिष्टाननुबन्धित्वबोधने तात्पर्याभावात । यो हि पुरुषप्रवर्तको विधिः, तेन प्रवृत्तिसिद्धये बलवदनिष्टाननुबन्धित्वमपि तात्पर्यतो बोध्यते । अङ्गविधयस्तु न पुरुषप्रवर्तकाः, अपि त्वङ्गानां प्रधानविनियोगतात्पर्यकाः । तत्सिद्धये चेष्टसाधनत्वमेव तात्पर्यगत्या तैः प्रतिपादनीयम्। तस्मिन् बोधिते किं तदिष्टमिति विशेषाकाङ्क्षायां प्रकर-

णादिना क्रतूपकार इत्यवगमे सति विनियोगसिद्धेः विधिशक्त्योपस्थितस्यापि बलवदनिष्टाननुबन्धित्वस्यानुवादमात्रविषयत्वात् तत्रापि तात्पर्यमिति निर्बन्धे प्रकरणादिना क्रतुवैगुण्यानापादकत्व एव बलवदनिष्टाननुबन्धित्वपर्यवसानाच्च न हिंसानिषेधप्राप्तपुरुषानिष्टसाधनताव्यावृत्तिरिति चेत्, उच्यते—अङ्गविधीनां प्रधानविध्येकवाक्यत्वे सति प्रवर्तकेन प्रधानविधिना बलवदनिष्टाननुबन्धित्वं बोध्यमानं साङ्गे प्रधाने अन्वेतीति तदभिप्रायेण'मपवादोऽग्नीषोमीयं पशुमालभेते'ति भाष्योक्तिः । तेन च पुरुषं प्रत्येव बलवदनिष्टाननुबन्धित्वं बोध्यते । न च तथापि प्रधानविधिः कृत्स्नाङ्गान्वितप्रधानस्य बलवदनिष्टाननुबन्धित्वं बोधयन् पश्वालम्भव्यतिरिक्तेष्वङ्गेषु चरितार्थः । न हिंस्यादिति निषेधोऽपि यागीयहिंसाव्यतिरिक्तस्थले चारितार्थः । कथमेतयोर्मध्ये क्रतुविधेरपवादत्वमिति वाच्यम् । एवं सति यागविधेः निरवकाशत्वाभावेऽपि विशेषविषयत्वं नापैति । अग्नीषोमीयविध्येकवाक्यतापन्नप्रधानविधेः विशिष्य पश्वालम्भे बलवदनिष्टसाधनताभावबोधकत्वात्, विशेषविषयेण च वाक्येन सामान्यप्रतिपादकस्य वाक्यस्य सङ्कोचो लोकव्युत्पत्तिसिद्धः । यथा हरीन्द्रावित्यादौ विशेषविषयेण 'अकःसवर्णे दीर्घ' इत्यनेन 'इको यणची'त्यस्य । न चैवं विशेषवचनस्याग्नीषोमीयं पशुमालभेतेति विध्येकवाक्यतापन्नस्य प्रधानविधेः बलवदनिष्टसाधनत्वाभावप्रतिपादकस्य बलवत्त्वनिषेधमात्रेण पर्यवसानोपपत्तेर्न हिंस्यादिति निषेधस्यानिष्टसाधनतापर्यवसाने न काचिदनुपपत्तिरिति वाच्यम् । तथासति न हिंस्यादित्यस्य विहितहिंसायामनिष्टसाधनतामात्रबोधकता, रागत एव प्राप्तायाम् अविहितहिंसायां तु बलवदनिष्टसाधनत्वबोधकतेति वैरूप्यं स्यादिति । अपि च न हिंस्यादिति वाक्यं बलवदनिष्टजनकत्वबोधकमपि न तावन्मात्रे पर्यवस्यति । अपि तु वाक्यशेषस्य फलविशेषसमर्पकस्य सत्त्वे तमादाय पर्यवस्यति, तदभावे तु यथा विश्वजिद्वाक्यमिष्टसाधनताबोधकं सुखसामान्यस्वर्गमादाय पर्यवस्यति, एवमिदमपि बलवद्दुःखरूपनरकसामान्ये पर्यवस्यतीति कथं बलवदनिष्टाननुबन्धित्वबोधकविधिपर्यालोचनया यत्किञ्चिदनिष्टजनकतायां पर्यवसानम् । तस्मात् बलवदनिष्टजनकत्वतदभावबोधकयोः सामान्यविशेषवचनयोर्विरोधे विहितेतरविषयत्वमेव सामान्यवाक्यस्योपेयम् । न चैवंसति श्येनादीनां प्राणवियोगानुकूलव्यापारत्वेन हिंसारूपाणामपि सतां विहितत्वेन प्रत्यवायकरता न स्यात् । हिंसानिषेधस्य विहितेतरविषयत्वादिति वाच्यम् । श्येनादिषु निन्दाश्रवणेन शिष्टविगानदर्शनेन प्रायश्चित्ताम्नानेन च तेषां प्रत्यवायकरत्वे प्रमाणसिद्धे सत्यनाम्नातप्रायश्चित्तविहितेतरविषयत्वस्य न हिंस्यादिति निषेधवाक्ये कल्पनात् श्येनादिविधीनामपि इष्टसाधनताबो-

धमात्रपरत्वमेव कल्प्यते, न तु बलवदनिष्टाननुबन्धित्वबोधकतापि । न च श्येनादीनां निषेधविषयत्वेन नरकजनकत्वाभ्युपगमे कथं तेषु प्रवृत्तिस्स्यादिति वाच्यम् । यथा आस्तिककामुकस्य निषेधमुल्लङ्घ्यापि रागौत्कट्यात् परदारादिषु प्रवृत्तिः, एवं शत्रुविषयकद्वेषौत्कट्यात् श्येनादिषु प्रवृत्तिर्निषेधमुल्लङ्घ्यापि भविष्यति । इयांस्तु विशेषः—परदारातिचारादिषु इष्टसाधनता शास्त्रं विनैवावगम्यते, श्येनादिषु तु शत्रुवधार्थत्वं 'श्येनेनाभिचरन्यजेते'ति शास्त्रादवगतम् । तत्सिद्धमनाम्नातप्रायश्चित्तासु विहितहिंसासु दोषराहित्यम् । एवं वाजपेयगतसुराग्रहादिष्वपि द्रष्टव्यम् । 'न सुरां पिबे'दित्यादिनिषेधानामप्युक्तन्यायेन विहितेतरविषयत्वादुक्तन्यायसिद्धमेवार्थम् 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य' इत्यादिवचनान्यनुवदन्ति प्रकृतन्यायमुपोद्बलयन्ति । एवं च यत् क्वचिद्वैधहिंसानिन्दाप्रतिपादकवचनं पुराणादिषु, तद्वैदिकहिंसाप्रतिपादनपरवचनप्रतिबद्धं सत्प्रकृताधिकरणपूर्वपक्षन्यायमूलं नादर्तव्यम् । निवृत्तिमार्गस्तुतिपरं वा व्याख्येयम् । तत्सिद्धम्—'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासत' इत्यत्रोपात्तस्येष्टादेर्व्रीहियोनिफलकत्वासम्भवात् अन्यस्य च तदुपयोगिनः कर्मणोऽनुपादानाद्व्रीह्यादिषु अनुशयिनां संश्लेषमात्रम् ॥ २५ ॥

## रेतस्सिग्योगोऽथ ॥ २६ ॥

यथा रेतस्सिग्भावोऽनुशयिनस्तत्संश्लेष एव, एवं तत्प्रायपाठात् व्रीह्यादिभावोऽपि तत्संश्लेष एवेत्यभिप्रायः ॥ २६ ॥

## योनेश्शरीरम् ॥ २७ ॥

योनिप्राप्त्यनन्तरमेव साध्वसाधुशरीरप्राप्तिप्रतिपादनान्न ततः प्राक्छरीरप्राप्तिः । अतोऽपि व्रीह्यादिषु संश्लेष एवेत्यभिप्रायः । प्रयोजनं पूर्वपक्षे पुण्यकर्मण इष्टादेः व्रीह्यादिफलकत्वे अत्यन्तं हेयतेति चित्तशुद्ध्यर्थिनामपि तत्र प्रवृत्तिर्न स्यात् । सिद्धान्ते तु तन्नास्तीति व्युत्पाद्यते । तद्व्युत्पादनव्याजेन च रेतसा सह गर्भगोलकप्रवेशपर्यन्तं कर्मिणां स्वर्गादवरूढानां मूर्छिततया अवस्थानमिति 'रेतस्सिग्योगोऽथे'त्यादिसूत्रद्वयेन प्रतिपाद्यते । तत्र च यद्यपि स्वर्गादवरूढानां व्रीह्यादिसंश्लेषपर्यन्तं झटिति निस्सरणं, तथापि व्रीह्यादिसंश्लेषानन्तरं गर्भगोलकप्रवेशोऽतिविलम्बितः । यदि हि व्रीह्यादयोऽनुशयविशिष्टाः पुरुषेणानुपयुक्ता एव नाशं प्राप्नुयुः, ततः पुनरपि समुद्रादिप्रवेशानन्तरं जलधरावकृष्टानां वर्षणेन व्रीह्यादिभावः । उपयु-

क्ता अपि व्रीह्यादयो यदि षण्डादिभिस्संश्लिष्यन्ते, तदा योनिप्राप्तिर्दुर्लभा । रेतस्सिक्सम्पर्केऽपि यदि वन्ध्यायोनिसम्पर्कः, यदि वा ऋतुं विनैव सम्पर्कः, तदापि न शरीरप्राप्तिः । अतो दैववशादेव रेतस्सिग्भावानन्तरमवन्ध्यासु ऋतुमतीषु सम्पर्केण शरीरप्राप्तिर्गर्भयातनानुभवानन्तरमेव कर्मणां वक्तव्येति कष्टा कर्मफलगतिरिति सूचनाद्वैराग्यपर्यवसायिता ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम् ॥६॥

इति

**श्रीमद्भगवत्पादीयभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां**

**तृतीयस्याध्यायस्य प्रथमः पादः ।**

ॐ

---

॥ अथ ॥

॥ तृतीयाध्याये द्वितीयः पादः ॥

# सन्ध्ये सृष्टिराह हि ॥ १ ॥

वृत्तवर्तिष्यमाणपादयोरर्थमनुवदन् सङ्गतिं सूचयति—**अतिक्रान्त इत्यादिना** । **तस्यैवावस्थाभेद इति** । 'न स्थानतोऽपी'त्यतः प्राक्तनैरधिकरणैरिति शेषः । इदं च 'न स्थानत'इत्यादिभिः क्रियमाणस्य तत्पदार्थविचारस्याप्युपलक्षणम् । तथा च महावाक्यप्रतिपाद्याभेदनिरूपकपदार्थविचारः पादार्थः । तत्र च पूर्वपादविचारफलभूतं वैराग्यमधिकारिविशेषणमिति वैराग्योपयोगिविचारानन्तरं पदार्थशोधनोपयुक्तो विचारः क्रियत इति प्रथमद्वितीयपादयोर्हेतुहेतुमद्भावस्सङ्गतिरिति भावः । प्रबोधो जागरावस्था । यद्यप्यारम्भणाधिकरणे चैतन्यातिरिक्तानां सर्वेषामनृतत्वं श्रुतिन्यायैर्व्यवस्थापितं, तथापि यथा प्रबोधे व्यावहारिका घटादयः, तथा स्वप्नेऽपि व्यावहारिकाः, उत शुक्तिरजतादिवत् प्रातिभासिका इति संशयार्थो द्रष्टव्यः । **द्वयोर्लोकस्थानयोरिति** । यद्यपि पूर्वं प्रबोधानन्तरं स्वप्नः, ततस्सुषुप्तिरित्युत्सर्गानुसारेण प्रबोधसम्प्रसादस्थानयोस्सन्धौ भवतीति द्वितीया सन्ध्यपदव्याख्या उपपद्यते, इहलोकपरलोकस्थानयोर्द्वयोस्सन्धौ भवमित्याद्या तु व्याख्या नोपपद्यते । 'स्वे शरीरे यथाकामं परिवर्तते कण्ठे स्वप्नं विनिर्दिशेदि'ति वचनपर्यालोचनया शरीरमध्य एव स्वप्नावस्थावगमेन इहलोकपरलोकसन्धिस्थानत्वाभावात् । उच्यते—इहलोकपरलोकसन्धिस्थानत्वमौपचारिकं श्रुतावेव दर्शितं—'तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्चे'ति । स्वप्नावस्थायां हि ऐहिकानपि पदार्थान् कदाचित् पश्यति, पारलौकिकानपि पदार्थान् कदाचित्पश्यति । ग्रामद्वयसन्धिस्थितोऽपि पुरुषः ग्रामद्वयस्थान् पदार्थान् पश्यति । तथा चोभयत्र विद्यमानपदार्थदर्शनानुकूलस्थानत्वगुणेन स्वप्नावस्थाया उभयसन्धिस्थानत्वमुपचरितम् । **यतः प्रमाणभूता श्रुतिरेवमाहेति** । सृजत इति निर्देशो हि लोके सत्यानामेव घटादीनामुत्पत्त्यनुकूले व्यापारे प्रयुज्यते । कर्तृत्वनिर्देशोऽपि सत्यपदार्थस्रष्टर्येव भवति । न हि शुक्तिरजतादिषु रजतं सृष्टमिति निर्देशो वर्तते । नापि तद्भ्रमशालिनि अयं तस्य कर्तेति निर्देशोऽस्ति । अतः 'सृजत इति स हि कर्ते'ति निर्देशाच्च तथ्यैव सृष्टिः ॥ १ ॥

# निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

परमेश्वरसृष्टानां वियदादीनां पारमार्थिकत्वं दृष्टम् । तथा स्वाप्नानामपि पदार्थानामीश्वरसृष्टत्वस्य श्रुत्या प्रतिपादनात्तेषामपि सत्यत्वं भविष्यतीति प्रतिपा-

दनायैतत्सूत्रम् । ननु 'य एष सुप्तेष्वि'ति श्रुताविच्छाविशेषाणामेव ईश्वरसृष्टत्वस्य स्वप्ने प्रतिपादनात् कथं तत्रत्यानां पदार्थानां सत्यता स्यादित्याशङ्कयात्र कामपदं काम्यमानवस्तुपरम् । तथा च काम्यमानानां स्वप्नावस्थागतानां पुत्रपश्वादीनामीश्वरसृष्टत्वं सिध्यतीति प्रतिपादयति—**ननु, कामशब्देनेत्यादिना** । नन्वेवमपि कथमस्य वाक्यस्येश्वरपरत्वं, येन तस्य स्वाप्नपदार्थस्रष्टृता सिध्येत् । युक्तं तु सुप्तिसम्बन्धात् पुत्रादिकाम्यमानवस्तुसम्बन्धाच्च जीवलिङ्गाज्जीवपरत्वम् । अत आह—**प्राज्ञं चैतं निर्मातारमिति** । तथा च य एष सुप्तेषु जीवेषु तदन्तर्यामितया तामवस्थां नियमयन् जागर्ति, यश्च स्वप्ने काम्यमानानां पुत्रादीनां निर्माता, स परमेश्वर इति श्रुतेरर्थः । एतस्माच्च कठवल्लीवाक्यात् 'स हि कर्ते'ति बृहदारण्यकगतमपि वाक्यमीश्वरपरमेव योजनीयम् । तथा च सृजत इत्यादिनिर्देशादीश्वरकर्तृकत्वाच्च स्वप्नस्य सत्यत्वसिद्धौ 'न तत्र रथा न रथयोगाः रथे योजनीया अश्वादयः, न पन्थानो भवन्ती'तिनिषेधवाक्यं स्वप्नसृष्टेः प्राक् स्वप्नरथादीनामभावं प्रतिपादयति, न तु रथादिसृष्टिकाल एव । येन स्वाप्नानां मिथ्यात्वं भवेत् । 'अथ रथान्रथयोगानि' त्यथशब्देनानन्तर्यार्थकेन पूर्वं रथाद्यभावः, अनन्तरं रथादिसृष्टिरित्यवगमात् । स्वप्नसत्यत्व एव 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंस'इति मन्त्रोऽपि सङ्गच्छते । कुलायात् शरीरादिति यावत् । यत्र कामोऽस्य वर्तते, तत्र ईयते गच्छतीति । यदि स्वप्नोऽनृतो भवेत्, तदा तस्य शरीरमध्य एवोपपत्तेः शरीरात् बहिर्गमनं न प्रतिपाद्येत । अनृतपदार्थानामुचितदेशाद्यनपेक्षणात् । न च 'स्वे शरीरे यथाकामं परिवर्तत' इति श्रुतिविरोधः । पूर्वशरीरस्य शयनदेश एव विद्यमानतया शरीरान्तरेणैव बहिर्गमनस्य वक्तव्यत्वात् । स्वे शरीर इत्यनेन च पूर्वशरीरस्थताप्रतिपादनादिति वाच्यम् । बहिर्निर्गतस्यापि स्वाप्नशरीरस्य स्वशब्दार्थतोपपत्त्या तस्य पूर्वशरीर एव स्वप्न इत्यनिर्धारकत्वात् । यानि ह्येव जाग्रत् पश्यति, तानि तत्सदृशानि सुप्तस्स्वप्नावस्थः । जाग्रत्सदृशत्वं च स्वाप्नानां तथ्यरूपत्वमिति भावः ॥ २ ॥

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

अत्र तुशब्दः पूर्वपक्षोक्तहेतूनां पारमार्थिकत्वसाधकताव्यावर्तकस्सन् स्वप्नसत्यत्वव्यावर्तकः । मात्रशब्दस्तु साक्षादेव सत्यताव्यावर्तकः । अतो न पौनरुक्त्यम् । मायाशब्दो ह्यैन्द्रजालिकगन्धर्वादिसृष्टेष्वनृतेष्वेव प्रयुज्यते । अतस्सोऽनृ-

तवचनः । न हि सुप्तस्य जन्तोरित्यादि । ननु, जाग्रद्दशायां विद्यमानस्य शरीरस्य क्षणमात्रेणानेकयोजनातिलङ्घनसामर्थ्याभावेऽपि स्वाप्नशरीरस्य तथा भविष्यति । ईश्वरसङ्कल्पाधीनस्य तस्य विचित्रशक्तित्वसम्भवात् । अत एव चार्गलितदेशे शयानस्स्वाप्नेन शरीरेणापि कवाटाद्युद्धाटनं विना कथं बहिर्निर्गच्छेदिति शङ्का न कार्या । कवाटादीनं तदप्रतिघातकत्वकल्पनात् । यत्र च प्रत्यागमनवर्जितस्स्वप्नो भवति, तत्र देशान्तर एव स्वाप्नशरीरादुत्क्रान्तस्येश्वरसङ्कल्पवशात्पुनः पूर्वशरीरे प्रवेशो भविष्यतीति कल्प्यते । पार्श्वस्थानां शयनदेश एवोपलम्भस्तु नानुपपन्नः । पूर्वशरीरस्य शयनदेश एव विद्यमानत्वात् । कुरुदेशादीनामन्यथाभावोऽपि न विरुध्यते । स्वाप्नानां तेषामीश्वरसङ्कल्पसृष्टानां पूर्वतनेभ्यो भिन्नत्वाज्जाग्रद्वस्तुजातस्य च तदानीं दर्शनं नोपेयते। स्वाप्नानां चक्षुरादीनां जाग्रद्वस्तुग्रहणासामर्थ्यात् । 'स्वे शरीर' इत्यादिश्रुत्यविरोधश्च प्रागेव दर्शितः । यश्च स्वप्ने कालविसंवादः—दिवसे सुप्तस्य रात्रिदर्शनं, रात्रौ सुप्तस्य दिवसदर्शनमित्येवंरूपः, स वर्षान्तरे सुप्तस्य वर्षान्तरे चेद्दर्शनं, तदा नानुपपत्तिः । तथा हि लवणार्णवपरिवृतस्य लक्षयोजनविस्तृतस्य जम्बूद्वीपस्य मध्ये विद्यमानो मेरुस्तस्य परितो विद्यमाना भोगभूमिरिलावृतं वर्षम् । तस्य दक्षिणतो हरिकिंपुरुषभारताख्यानि त्रीणि वर्षाणि । पश्चिमतः केतुमालाख्यमेकं वर्षम् । उत्तरतो रम्यकहिरण्मयकिंपुरुषाख्यानि त्रीणि वर्षाणि । पूर्वतो भद्राश्वसंज्ञकमेकं वर्षम् । तत्र मेरुं प्रदक्षिणीकुर्वत आदित्यस्य किरणा यत्र यदा प्रसरन्ति, तदा तत्राहरिति व्यवहारः । यत्र यदा मेरुणा तत्प्रसरो व्यवधीयते, तदा तत्र रात्रिरिति व्यवहारः । तथा च भारते वर्षे दिवससमयेऽपि केतुमालादौ सूर्यकिरणव्यवधानेन रात्रिरुपपद्यते । भारते च वर्षे रात्रिसमयेऽपि केतुमालादौ दिवसस्सम्भवति । अतो भारते वर्षे शयानस्य रात्रौ केतुमालादौ दिवसदर्शनं नानुपपन्नम् । भारते रात्रौ शयानस्य तत्रैव स्वप्ने दिवसदर्शनमपि न विरुद्धम् । स्वाप्नपदार्थानां जाग्रद्दशापदार्थेभ्योऽन्यत्वेन तदानीं स्वप्नदशाभाविसूर्यकिरणानामप्रसरेण रात्रिकालत्वसम्भवात् । एवं मुहूर्तमात्रेण स्वप्ने वर्षपूगातिवहनमपि नानुपपन्नम् । देवादिकालोपाधिभ्यः मनुष्यादिकालोपाधीनामिव जाग्रत्कालोपाधितः स्वप्नकालोपाधीनां विलक्षणत्वोपगमात् । एवमन्यदपि स्वप्ने निमित्तेन्द्रियादिकं जाग्रद्दशातो विलक्षणमेवेश्वरसङ्कल्पाधीनं भविष्यति । अतो न काचित्स्वप्नस्य सत्यत्वेऽनुपपत्तिरिति चेत् ,उच्यते—इयं शरीरदेशकालवस्तुजातस्यान्यथात्वेन स्वप्ने कल्पना तदा भविष्यति, यदि तत्सत्यताग्राहकं किञ्चित् प्रबलं प्रमाणं भवेत् । न च तदस्ति । सृष्टिश्रुतिस्तावत् प्रमाणं नोपपद्यते । 'न तत्र रथा' इति वाक्येनैव तद्बाधप्रतिपादनात् । तत्र हि न तत्र रथाद्यो भवन्ति, रथादीन् सृजत इत्याख्यातेन रथादिसृष्टेः रथाद्यभावस्य च समानकाल-

त्वावगमेन सृष्टेः प्राक् रथाद्यभाव इति कल्पयितुमशक्यत्वात् तदनुसारेणाथशब्दस्य देवदत्तो गतः, अथ च यज्ञदत्त इत्यादाविवाभावकाल एव सृष्टिसमुच्चयार्थत्वेऽप्युपपत्तेः । दृश्यते चानृतेऽपि सृज्यत्वनिर्देशः—ऐन्द्रजालिको वृक्षादीन् सृजतीति । ईश्वरसृष्टत्वमपि न सत्यत्वसाधकम् । सर्वस्रष्टुस्तस्य शुक्तिरजतादावपि स्रष्टृत्वोपगमात् । बहिष्कुलायश्रुतिस्तु ईश्वरसङ्कल्पानुसारेण विचित्रां स्वप्नसृष्टिमभ्युपगच्छतोऽपि न प्रयोजनवती । स्वाप्नानां पदार्थानामीश्वरसङ्कल्पानुसारेणैव शरीरमध्येऽपि सम्मानसम्भवात् । अतस्स्वे शरीर इति कण्ठे स्वप्नं विनिर्दिशेदिति च शरीरमध्य एव स्वप्नप्रतिपादकश्रुतिविरोधात् सा श्रुतिरमुख्यार्थैव भाष्योक्तरीत्या व्याख्येया । न च स्वे शरीर इति वाक्यं स्वप्नावस्थासम्पन्नशरीरान्तरेऽप्युपपन्नमिति वाच्यम् । तथासति स्वशब्दवैयर्थ्यापत्तेः । सर्वस्यापि स्वभोगोपयोगिनश्शरीरस्य स्वीयत्वेन शरीरे यथाकामं परिवर्तत इत्युक्त्यैव तदर्थसिद्धेः । अतः स्वशब्दः प्रागेव सिद्धं यत्स्वशरीरं स्वप्नावस्थापरिदृश्यमानाच्छरीरादित्येतदर्थको वक्तव्यः । अतो नैतेषां वचनानां स्वप्नसत्यत्वसाधकता भवति । तन्मिथ्यात्वं तु बाधानुसारेण मानोरथिकपदार्थवल्लोकसिद्धमेव, न तत्र रथा इत्यादिश्रुतिसम्मतं च । अत एव 'उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्नि'ति श्रुतिर्मिथ्यात्वद्योतकेनेवशब्देनैव स्वप्नपदार्थान् प्रतिपादयति । तदेवाविद्यया मन्यत इति च तस्याविद्यकत्वं ब्रवीति । अतो मायामात्रत्वमेव स्वप्नस्योचितम् । अपि च येन स्वप्ने जाग्रत्पदार्थेभ्यो विलक्षणा एव शरीरादाय उपेयन्ते, तेनापि तेषु जाग्रत्पदार्थभेदज्ञानं भ्रम इत्येव वक्तव्यम् । ततश्च स्वप्ने किञ्चिज्ज्ञानं भ्रमः, किञ्चित् सत्यमिति किमर्धजरतीयेन ॥३॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥४॥

ननु, स्वप्नमिथ्यात्वमतेऽपि स्वप्ने यदा देवदत्तादिरागत्य श्वस्तव महान् लाभो भविष्यतीति वदति । उत्थितश्च महान्तं लाभमाप्नोति । तादृशस्थले स्वप्नस्य सत्यत्वमुपेयम् । तथा च कथं सर्वेषां स्वप्नानां मिथ्यात्वमित्याशङ्कानिराकरणार्थं सूत्रम् । तादृशस्थलेऽपि स्वप्नस्य सूचकत्वमेव, न तु तदानीं देवदत्तादिवदनं पारमार्थिकम् । स्वप्ने मां प्रति त्वया इत्थमुक्तमिति प्रश्ने देवदत्तस्य विसंवाददर्शनादिति परिहारार्थः । यदा कर्मसु काम्येष्वारब्धेषु सत्सु मङ्गल्याभरणादियुक्तां स्त्रियं स्वप्नेषु पश्यति, तेषु काम्यकर्मसु फलस्य समृद्धिं जानीयात, स पुरुषः एनं स्वप्नद्रष्टारं हन्ति मरणसूचक इति यावत् । सत्यार्थगन्धिनः सत्या ये मन्त्रदेवतादयः,

तत्सदृशाविषयाः । यच्च पूर्वपक्षिणोऽभिमतं—स हि कर्तेति वाक्यमीश्वरस्य कर्तृतां प्रतिपादयतीति, तदसन् । ततः पूर्वसन्दर्भे योऽयं विज्ञानमयः प्राणेष्वित्यारभ्य जीवस्यैव प्रस्तुतत्वात् 'स्वप्नेन शारीरमभिप्रहत्ये'त्याद्युत्तरश्लोकसन्दर्भेऽपि जीवस्यैव प्रस्तोष्यमाणत्वात् कथं स हि कर्तेति मध्यगतेन वाक्येन ईश्वरस्य कर्तृत्वं प्रतिपादयितुं शक्यम् । न च जीवस्य स्वप्ने उपादानादिगोचरज्ञानाद्यदर्शनात् कथं स्वाप्नपदार्थान् प्रति कर्तृत्वनिर्देश इत्याशङ्क्याह—**भाक्तं व्याख्यातमिति** । अपि 'चात्मैवास्य ज्योतिर्भवती'त्युपक्रान्तस्यात्मनस्स्वयञ्ज्योतिष्ट्वस्य स्वप्नावस्थां प्रदर्श्य 'अत्रायं पुरुषस्स्वयञ्ज्योतिर्भवती'त्युपसंहृतत्वात् स्वप्नावस्थोपन्यास आत्मस्वयञ्ज्योतिष्ट्वनिर्धारणार्थ इति वक्तव्यम् । स्वप्नावस्थोपन्यासस्य स्वयञ्ज्योतिष्ट्वव्युत्पादन एवमुपयोगो वक्तव्यः—जागरितव्यवहारो ह्यादित्यादिपरमार्थप्रकाशसाध्यो लोकदृष्ट्यावगतः । स्वाप्नोऽपि व्यवहारः पारमार्थिकप्रकाशसाध्य एव वक्तव्यः । तदानीं चादित्यादीनां पारमार्थिकज्योतिषामभावात् परमार्थ ज्योतिर्व्यवहारोपयुक्तमात्मैव परिशिष्यत इति । तत्र यद्यादित्यादिकमपि पारमार्थिकमुपगम्येत, परमार्थत्वेनात्मज्योतिःपरिशेषो दुर्लभस्स्यात् । अतः प्रधानप्रतिपाद्यस्वयञ्ज्योतिष्ट्वानुसारेणापि स्वप्नस्यानृतत्वमुपेयमित्याह—**अपि चेति** । स्वयं विहत्य जाग्रच्छरीरं निश्चेष्टमापाद्य स्वयन्निर्माय स्वप्नशरीरं स्वेन भासा वासनारूपेण स्वेन ज्योतिषा स्वरूपभूतेन । **प्रसिद्धानुवादादिति** । य एष सुप्तेष्विति यच्छब्दयोगादनुवादत्वमवगम्यते । तत्र च पुरोवादो बृहदारण्यकं स्वयं विहत्येत्यादि स्वप्नवाक्यमेव । तथा च पुरोवादानुसारेणास्य जीवपरत्वे सुप्तेषु व्यापाररहितेषु चक्षुरादिषु य एष जीवो जागर्ति अविपरिलुप्तस्वरूपप्रकाश एव सन्नास्ते इत्यर्थो द्रष्टव्यः ॥४॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥

ननु, स हि कर्तेति यदि जीवपरं, तदापि किमर्थमौपचारिकं व्याख्यायते । तस्यापि सर्वज्ञसत्यसङ्कल्पादिविशिष्टपरमात्माभिन्नतयोपादानादिगोचरप्रत्यक्षादिपूर्वकमेव स्रष्टृत्वं सम्भवतीति सूत्रव्यावर्त्यां शङ्कां दर्शयति—**अथापि स्यादिति** । **ज्ञात्वा देवमिति** । देवं ज्ञात्वा वर्तमानस्य पुरुषस्य सर्वेषां पाशानामविद्यादीनां हानिर्भवति, क्षीणैः क्लेशैः पाशशब्दोदितैः जन्ममृत्युप्रहाणिः, जन्मादेरविद्यादिक्लेशजन्यत्वात् । एवं निर्विशेषविद्याफलं प्रदर्श्य सविशेषविद्याफलं प्रदर्श्यते—**तस्याभिध्यानादिति** । परमात्मनस्सविशेषस्य साक्षात्कारपर्यन्ताद्ध्यानाद्देहपातानन्तरं विश्वै-

श्वर्यं स्वभोगोपयुक्तानां सर्वेषामैश्वर्यम् । तच्च तृतीयं, 'तृतीयस्यामितो दिवी'तिवचनानुसारेण लोकत्रयपक्षमाश्रित्य तृतीयस्थानभूतब्रह्मलोकाभिव्यञ्जयत्वात् । अनन्तरं तत्त्वसाक्षात्कारे सति केवल आप्तकाम इति क्रममुक्तिः प्रतिपादिता ॥५॥

## देहयोगाद्वा सोऽपि ॥६॥

ननु, जीवगतसत्यसङ्कल्पादितिरोभावो न स्वप्ने सम्भवति । येन स हि कर्तेति गौणं व्याख्यायेत, तदानीं स्थूलशरीराभिमानाभावादित्यभिप्रायेण शङ्कते—**कस्मादिति** । सूत्रेणोत्तरमाह—**सोऽपि त्विति** । तदानीं स्थूलशरीराभिमानाभावेऽपि लिङ्गकारणशरीराभिमानस्य सत्त्वादुपपद्यते तिरोधानमिति तात्पर्येण देहपदं देहत्रयपरतया व्याचष्टे—**देहेन्द्रियेति** । आदिपदमविद्यात्मककारणशरीरसङ्ग्रहार्थम् । अधिकरणार्थमुपसंहरति—**तस्मादिति** । अत्र सिद्धान्ते स्वप्नस्य मिथ्यात्वसिद्धौ तदानींतनैः शरीरेन्द्रियादिभिरसंस्पृष्टत्वं जीवस्य सिध्यति, तद्दृष्टान्तेन जाग्रत्यपि तस्य तदसंस्पृष्टत्वं सिध्यतीति त्वंपदार्थशोधनोपयोग्ययं विचारः । पूर्वपक्षे तु नैतत्सिध्यति ॥६॥

इति सन्ध्याधिकरणम् ॥ १ ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥७॥

स्वप्नसुषुप्त्यवस्थयोः क्रमस्य लोकसिद्धत्वात्तत्क्रमेणाधिकरणक्रम इत्यभिप्रेत्याह—**स्वप्नावस्था परीक्षितेति** । **तद्यत्रैतदिति** । पूर्वं ब्रह्मलोकमार्गभूतादित्यकिरणसम्पर्को नाडीनां प्रतिपादितः, तत्परामर्शार्थस्तच्छब्दः । तस्मिन्नादित्यकिरणसम्पृक्तत्वे सत्येव नाडीनामयमपरो महिमा, यत्सुप्तिस्थानत्वमिति तात्पर्यम् । यत्र काले एतत्सुप्तः एतत्स्वापाख्यं कृतवान्, समस्तः सम्यगन्तःकरणादिकं विहायास्तः क्षिप्तः ब्रह्मणि, अत एव सम्प्रसन्नः अन्तःकरणादेर्लीनत्वेन तत्कृतकालुष्याभावात् स्वप्नं न विजानाति । आसु पूर्वोपक्रान्तासु नाडीषु सृप्तो गतो भवति । पुरीतति हृदयपरिवेष्टने चर्मविशेषे, प्राणे ब्रह्मणि, अन्तर्हृदय आकाशः ब्रह्माख्यः । नाड्यादीनीत्यादिना पुरीतद्ब्रह्मणोर्ग्रहणम् । **परस्परापेक्षयेति** । नाडीनां मार्गत्वेन उपयोगः, पुरीततः प्राकारस्थानापत्तिः, पर्यङ्कस्थानापत्तिस्तु हार्दाकाशस्येति नाडीपुरीतद्ब्रह्मणां परस्परापेक्षत्वम् । ननु, मार्गादिभावेन नाड्यादीनामुपयोगात् किमिति भिन्नस्थानता तेषां कल्प्यत इत्यभिप्रेत्य शङ्कते—**कुत इति** । परिहरति—**एकार्थत्वादिति** । अयं भावः—यथा 'व्रीहिभिर्यजते यवैर्यजेते'ति तृतीयानिर्देशस्योभयत्र तुल्यतया यागसाधनत्वेनावगतयोर्व्रीहियवयोर्यागनिर्वृत्त्याख्यैकप्रयोजनकत्वेन विकल्पः, एवमत्रापि 'नाडीषु सृप्तो भवति, पुरीतति शेते, य एषोऽन्तर्हृदय आकाशस्तस्मि-

न्छेत' इति सप्तमीनिर्देशेन स्वापं प्रति तुल्यतयाधिकरणत्वावगमेन प्रयोजनैक्याद्विकल्प एव युक्तः । न तत्र नाड्यादीनां मार्गत्वादिकल्पनया समुच्चये किञ्चिन्नियामकमस्ति । ननु, न सतिसप्तमीनिर्देश इति । 'यद्यपि य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेत' इति सदाख्य आकाशे सप्तमीनिर्देशोऽस्त्येव, तथापि 'सता सोम्ये'त्यत्रापि 'स यथा शकुनिस्सूत्रेण प्रबद्धो दिशंदिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव सोम्यैतन्मनो जीवाख्यं दिशंदिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेव ब्रह्माख्यमुपश्रयत इति वाक्यशेषपर्यालोचनया सप्तम्यर्थं लम्भयितुमियमाशङ्का । नाडीपुरीतद्ब्रह्मणां समुच्चयं वदतस्सिद्धान्तिनोऽयमभिप्रायः—नाडीषु सुप्तो भवतीत्यादिवाक्यपर्यालोचनया सुप्तौ तावन्नित्यं नाड्यादीनां सम्बन्धः प्रतीयते । विकल्पे च नाड्यादीनां नित्यवत्सम्बन्धाभावाद्वाक्यं बाधितं स्यात् । व्रीह्यादिषु तु गत्यन्तराभावान्नित्यतयावगम्यमानानामपि व्रीहीणां पाक्षिकत्वमुपगतम् । पुरोडाशद्रव्यकत्वेनैवोत्पत्तिवाक्यपर्यालोचनयावगते हि यागे व्रीहीणां पुरोडाशनिर्वृत्तिद्वारा यागसाधनत्वं वक्तव्यम् , तत्तु द्वारं यवेष्वपि तुल्यम् । तथा च पुरोडाशनिर्वृत्तिरूपस्य प्रयोजनस्यैकत्वात्तन्निर्वृत्तौ द्वारभेदस्याप्यलाभेन पुरोडाशप्रकृतिद्रव्यतया भिविष्टयोर्व्रीहियवयोर्युक्तो विकल्पः । न च व्रीहियवाभ्यां पुरोडाशकरणे नित्यतावगमो न बाधितस्स्यादिति वाच्यम् । तथासति 'व्रीहिभिर्यजेत यवैर्यजेते'ति शास्त्रद्वयमप्यत्यन्तबाधितं भवेत् । 'व्रीहिभिर्यजेते'ति व्रीहिपदप्रयोगे हि केवलव्रीहिनिर्वर्त्यः कृत्स्नः पुरोडाशः प्रतीयते । एवं यववाक्येऽपि घृततैलाभ्यां मिश्रिताभ्यां पक्वेऽपूपादौ घृतेन पक्वोऽपूप इति प्रयोगदर्शनेन व्रीहिभिर्यजेतेत्यादावपि कैवल्यावगमस्य व्युत्पत्तिसिद्धत्वात् । तथा च यथा नीवारादिद्रव्यव्यावृत्तिरस्माद्व्रीहिवाक्यादुपेयते, एवं द्रव्यान्तरमिश्रितव्रीहिव्यावृत्तिरपि केवलानां नियमादवगम्यते । अतो वाक्यद्वयस्वारस्यानुरोधेन विकल्प एवोपेयः । अयं च विकल्पः यत्र द्वारभेदस्सम्भवति, तत्र नोपेयते । यथा 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयती'ति, यथा वा 'यदाग्नेयोऽष्टाकपाल' इत्यादिवाक्येन पुरोडाशद्रव्यकेऽवगते यागे व्रीहीणां निवेशः । अत्र द्वारभेदसम्भवात् बर्हिषां साक्षाद्धविराधारत्वं, वेद्यास्तु हविराधारबर्हिराधारत्वं, पुरोडाशस्य साक्षाद्यागोपयोगः, व्रीहीणां तु पुरोडाशप्रकृतितया । न चैवंसति बर्हिर्धारणादौ वेद्यादीनां नैरपेक्ष्यावगमबाधः । स्वद्वारभूते कार्ये नैरपेक्ष्याद्विकल्पं विनैव च वाक्यद्वयनिर्वाहे सम्भवति नित्यतावगमेन बाधेन विकल्पाङ्गीकरणमन्याय्यम् । अपि च यत्र शास्त्रद्वयसन्निपातेन विकल्प उपेयते, तत्र एकैकस्मिन् शास्त्रे चातुर्दोष्यप्रसङ्गेनाष्टौ दोषाः प्रभवन्ति । तथाहि—यदा यवैरनुष्ठानं,

तदा व्रीहिशास्त्रे प्रामाण्यप्रयोजके निर्दोषत्वादौ सत्यपि प्रामाण्यपरित्याग एको दोषः, प्रामाण्याभावप्रयोजके च प्रामाण्यानुपलम्भे असत्यपि प्रामाण्याभावाभ्युपगम इति द्वितीयो दोषः, पुनश्च यदा व्रीहिभिरनुष्ठानं, तदा यवशास्त्रे पूर्वोक्त दोषद्वयं, व्रीहिशास्त्रे तु परित्यक्तप्रामाण्याभ्युपगमः, स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ, एवं प्रयोगद्वयेन व्रीहिशास्त्रे चत्वारो दोषाः। यवशास्त्रे दोषद्वयम्। पुनश्च यदा यवैरनुष्ठानं, तदा यवशास्त्रे परित्यक्तप्रामाण्याभ्युपगमः, स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम्, एवं प्रयोगद्वयेनाष्टौ दोषाः प्रभवन्ति । एवं च नाडीपुरीतद्ब्रह्मणां वेदिबर्हिर्न्यायेन प्रासादपर्यङ्कन्यायेन च समुच्चये सम्भवति न पाक्षिकबाधापादको विकल्प उपगन्तुं युक्तः । अपि चेह शास्त्रत्रयसन्निपाताद्विकल्पे प्रत्येकं चातुर्दोष्याद्द्वादश दोषाः प्रभवेयुः । तथाहि—यदा नाड्यां शयनं, तदा पुरीतद्ब्रह्मवाक्ययोः प्रत्येकं प्राप्तप्रामाण्यपरित्यागाप्राप्ताप्रामाण्यस्वीकाररूपं दोषद्वयमिति चत्वारो दोषास्सम्पन्नाः । यदा पुरीतति शयनं द्वितीयपर्याये, तदा पुरीतद्वाक्ये परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयं, नाडीवाक्ये तु प्राप्तप्रामाण्यपरित्यागः, अप्राप्ताप्रामाण्यस्वीकारश्चेति दोषद्वयं, तृतीयपर्याये यदा ब्रह्मणि शयनं, तदा ब्रह्मवाक्ये परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयं, यदा चतुर्थपर्याये नाडीषु शयनं, तदा नाडीवाक्येऽपि परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम्, आहत्य चतुर्भिः पर्यायैस्त्रिषु शास्त्रेषु द्वादश दोषाः पर्यवसिताः । एवं शास्त्रचतुष्टयसन्निपातविकल्पे षोडश दोषा ऊह्याः । ननु, 'दर्भैस्तृणीत हरितै'रित्यादिवचनानुसारेण वेदिबर्हिषोः समानविभक्तिनिर्देशे सत्यपि समुच्चय उपेतः। 'प्रासादे शेते पर्यङ्के शेत' इति लौकिकवाक्ये तु दृष्टत्वादेव समुच्चय उपेतः । न केवलं सम्भवमात्रेणेत्याशङ्क्य समुच्चये सम्भवत्यनेकदोषयुक्तः पापीयान्विकल्पो नोपेय इति समाधाने सत्यपि प्रकृते समुच्चयप्रतिपादकं वचनमप्यस्तीत्याह—**तथा च श्रुतिरिति** । ननु, 'तासु तदा भवति । अथास्मिन् प्राण एवैकधा भवती'ति वचनानुसारेण मार्गत्वेन नाडीनां ब्रह्मणा समुच्चयोऽस्तु नाम । 'नाडीषु सृप्तो भवती'त्यत्र तु केवलानामेव नाडीनां सुप्तिस्थानत्वं प्रतिपाद्यताम्। किमिति वाक्यान्तरानुसारेण इहापि मार्गाभिप्राया सप्तमी व्याख्यायते । तत्राह—**अपि चेति** । तथा च स्तुतिपरेऽस्मिन्वाक्ये शास्त्रान्तरप्रसिद्धमेव नाडीनां सुप्तिस्थानत्वमनुवदनीयमिति इयं सप्तमी मार्गत्वाभिप्रायैवेति तात्पर्यम् । 'नाडीषु सृप्तो भवती'त्यत्रापि समुच्चयोऽवगम्यते । तेजःपदस्य ब्रह्मपरत्वादिति पक्षान्तरमाह—**अथ वेति** । नाडीनां नयः नाडीनां सुप्तिस्थानत्वप्रतिपादक-

श्शब्दः । एवं नाडीब्रह्मणोस्समुच्चयं श्रुतिबलान्निरूप्य ब्रह्मपुरीततोरपि समुच्चयं श्रुतिबलादेव दर्शयति—**तथा पुरीततोऽपीति । 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इत्येकवाक्यतोपादानादिति** । तथा च नाडीषु सुप्तो भवतीति सप्तम्युपात्तानां नाडीनां तृतीयया प्रत्यवसर्पणमार्गत्वावगमात् तास्ववस्थानं मार्गत्वकृतमेव । नन्वस्तु मार्गत्वं नाडीनां, तथापि पुरीतत्परिवेष्टिते हृदयाकाशे नाडीद्वारा पुरीततस्सकाशाज्जीवस्सुप्तये गच्छतीत्ययमर्थो न सिध्यति । येन 'पुरीतति शेते य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति वाक्यद्वयं प्राकारे शेते प्रासादगतपर्यङ्के शेत इति वाक्यतुल्यतया नीयेत । 'ताभिः प्रत्यवसृप्ये'ति वाक्यं ह्येवमाम्नायते—'यदा सुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । अत्र हि हृदयप्रविष्टस्य जीवस्य नाडीद्वारा परावृत्य हृदयात् पुरीततं प्रति गमनं शयनायावगम्यते । हृदयात्पुरीततमिति प्रत्यवसृप्येति वचनद्वयस्वारस्यात् । ततश्च प्रासादान्निर्गत्य ततो बहिरेव प्राकारगतकक्ष्याविशेषे शयाने राज्ञि प्रासादगतपर्यङ्के शेत इति वचनमिव पुरीतति शयाने जीवे 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति वचनं न सङ्गच्छते । अतः पुरीतद्ब्रह्मणोर्विकल्प एव सुषुप्तावुपेय इति चेत्, उच्यते—'ताभिः प्रत्यवसृप्य पुरीतति शेत' इत्यत्र कस्मादवसृप्येत्याकाङ्क्षायामश्रुतोपादानविशेषः कल्पनीयः । तत्र हृदयादिति वक्तुं न शक्यते । स्वप्नानन्तरभावितया हि शयनमस्मिन्वाक्ये निरूप्यते । 'स यत्रैतत्स्वप्नया चरति स्वप्नावस्थया ते हास्य लोका' इत्युपक्रम्य सप्रपञ्चां स्वप्नावस्थां निरूप्य 'अथ यदा सुप्तो भवति यदा न कस्यचन वेदे'ति तदनन्तरभावितया सुप्तिमुपक्रम्य तद्विवरणार्थं हिता नाम नाड्य इति वाक्यमाम्नातम् । अतस्स्वप्नावस्थायां यत्र स्थितः, ततः पुरीततमागत्य तत्र शेत इति वाक्यार्थो वर्णनीयः । स्वप्नस्थानं हृदयात्परितो विद्यमाना नाडीविशेषा एव, न हृदयमिति शास्त्रान्तरे प्रसिद्धम् । तथा च ताभ्यस्स्वप्नवहननाडीभ्यो हृदयमारभ्य पुरीतत्पर्यन्तं लग्ना या हितनाड्यो वर्तन्ते, तन्मार्गेण पुरीतति शेत इत्युक्ते 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति वाक्यानुसारेण पुरीतत्परिवेष्टितहृदयपुण्डरीकान्तर्गते परमात्मनि शेत इति पर्यवसानान्नानुपपन्नम् । न चैवंसति प्रत्यवसृप्येति परावृत्तिप्रतिपादनमनुपपन्नम् । नाडीनां च हृदयावधिकं पुरीततं प्रत्यभिप्रस्थानकथनं च व्यर्थं भवेदिति वाच्यम् । प्रत्यवसृप्येति न परावृत्तिप्रतिपादनम्, अपि तु प्रतिसुषुप्तमवसृप्येत्यर्थो विवक्षितः । हृदयात्पुरीततमिति वाक्यं तु द्वासप्ततिसहस्राणीति सङ्ख्याप्रतिपादकवाक्यवत् स्वरूपकथनमात्रपरम् । न तु हृदयात्पुरीततं प्रति गच्छतीति प्रतिपादनतात्पर्यकम् ।

स्वप्नावस्थानन्तरभाविकथनपरोपक्रमविरोधात् । अतो न पुरीतद्ब्रह्मणोस्समुच्चये काचिदनुपपत्तिः । ननु, 'सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना सम्परिष्वक्त' इति च सत्प्राज्ञसम्बन्धः सुप्तौ प्रतीयते । कथं ब्रह्मसम्पत्तिरेव नियतेति शङ्कायामाह—**सत्प्राज्ञयोश्चेति** । किं च सोपाधिकस्यैव जीवस्य नाडीपुरीतदाधेयत्वसम्भवादुपाधीनां च सुप्तौ लीनत्वेन नाड्याधारत्वं वक्तुमप्यशक्यमित्यभिप्रेत्याह—**अपि चेति** । ननु जीवस्यान्तःकरणप्रसराधीनो विषयावभासः सुप्तौ चान्तःकरणस्यहृदयपुण्डरीके स्वगोलके लीनवृत्तिकत्वाद्विषयसम्बन्धिप्रसराभावेनाविज्ञानमुपपद्यते । किमत्र ब्रह्मसम्पत्त्येति शङ्कते—**उपाधिगतमेवेति** । प्रयोजनं पूर्वपक्षे लीनोपाधिकस्यापि जीवस्य सुप्तौ कदाचित् ब्रह्मसम्पत्त्यभावात् औपाधिक एव जीवब्रह्मणोर्भेद इति सम्भावयितुमशक्यम् । सिद्धान्ते तु नियमेन ब्रह्मसम्पत्त्या सुप्तिदृष्टान्तेनौपाधिक एव जीवब्रह्मणोर्भेद इति शक्यं सम्भावयितुम् । तदिदमाह—**तेन तु विज्ञानेनेति** । 'स्वप्नजागरितव्यवहारे'त्यनेनाधिकरणस्य त्वम्पदार्थशोधनपर्यवसायिता दर्शिता । स्वप्नमिथ्यात्वप्रतिपादनेन हि जाग्रत्स्वप्नगतबाह्येन्द्रियादिभिरेवात्मनोऽसंसृष्टत्वं सिध्यति । स्वप्नेऽप्यन्तःकरणस्य यथापूर्वमनुवृत्तेः । सुप्तौ तु स्थूलसूक्ष्मोपाधेः कृत्स्नस्याप्यभावेन व्यभिचरितत्वात् न तत्सङ्ग आत्मनस्स्वाभाविक इति सिध्यतीति ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥८॥

ब्रह्मण एव नियमेन सुप्तिस्थानत्वे नियमेन ततः प्रबोधकथनमपि सङ्गच्छते । नाडीनां सुप्तिस्थानत्वे तु ततोऽप्युत्थानप्रसक्त्या ब्रह्मावधिकबोधनियमो न स्यादिति ॥ ८ ॥

इति तदभावाधिकरणम् ॥ २ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥

पूर्वाधिकरणेन सङ्गतिमाह—**तस्याः पुनरिति** । पूर्वाधिकरणप्रतिपादितां सुप्तिमवलम्ब्येह विचारप्रवर्तनात् सङ्गतिः । **न स एव पुनरुत्थातुमिति** । ननु, य एव सुप्तस्स एव उत्तिष्ठतीति लोकप्रसिद्धं कथं पूर्वपक्षिणाऽपलप्यते । अथ लोकप्रसिद्धमपि सुप्तस्यैवोत्थानं सुप्तौ ब्रह्मसम्पत्तिमभ्युपगच्छता उपपादयितुमशक्यमित्यभिप्रायः, तदपि न सम्भवति । सुप्तावपि सूक्ष्मेण रूपेण पुण्य-

पापादेरज्ञानस्य चोपगमेन सिद्धान्तिना सुप्तस्यैव पुनरुत्थानमित्युपपादयितुं शक्यत्वात्। यदि तु सुप्तौ ब्रह्मैक्यमुपगच्छता अज्ञानादिपरिशेषः उपपादयितुं न शक्यते । यथा हि सुप्तौ 'अथास्मिन् प्राण एवैकधा भवती'त्यादिवाक्यैर्ब्रह्मैक्यं प्रतिपाद्यते, तथा सर्वद्वैतोपशमोऽपि प्रतिपाद्यत एव । सुप्तिं प्रकृत्य 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि'ति 'सलिल एको द्रष्टाद्वैतो भवती'ति चात्ममात्रपरिशेषस्यापि प्रतिपादनात् 'अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवती'ति पुण्यादिनिवृत्तेरपि प्रतिपादनाच्च । अतस्सुप्तावज्ञानाद्यवस्थानासम्भवात् मुक्तस्येव ब्रह्मैक्यमापन्नस्य सुप्तस्य पुनरुत्थानं न सम्भवतीत्यभिप्रायः । तथासति कथमनियमपूर्वपक्षः। अन्य एवोत्तिष्ठतीत्येव हि पूर्वपक्षयितुमुचितम् । ईश्वरो वेति कोटिश्चात्यन्तनिरालम्बना । पुण्यपापनिमित्तस्य जाग्रद्रूपेणोत्थानस्येश्वरे असम्भवादिति चेत्, उच्यते—व्यवस्थितविकल्पन्यायेनानियमपूर्वपक्षः।यदि ब्रह्मैक्यं सुप्तावुपगम्यते, तन्मुक्ताविवात्यन्तिकमेव वर्णनीयमिति अन्यस्यैवोत्थानं तदा वक्तव्यम्।यदि तु सिद्धान्ते स्फुटीकरिष्यमाणैः कर्मानुस्मृतिशब्दविधिभिस्सुप्तस्यैवोत्थानमवगम्यते, तदा पूर्वोक्तं ब्रह्मात्मैक्यं परित्यज्य नाडीषु पुरीतति वा जीवस्य शयनमङ्गीक्रियतामिति । अन्योत्थानपक्षे हि अपूर्वस्यैव कस्य चिज्जीवस्य पुण्यपापादिकं विनोत्थानं वक्तव्यम्, तद्वदीश्वरस्यापि पुण्यपापादिरहितस्य उत्थानमस्त्विति सम्भवमात्रेण इयं कोटिः । अयमत्र सिद्धान्ताभिप्रायः—पूर्वाधिकरणोक्ता ब्रह्मसम्पत्तिस्तावन्नान्यथाकर्तुं शक्यते। परं तु मुक्ताविव सा नात्यन्तिकी। अन्तःकरणदेहाद्युपाध्यवच्छिन्नस्यैवांशस्य तदुपाध्युपगमेन स्वरूपावस्थानाभ्युपगमात् । अज्ञानोपाधिकस्तु भेदस्तदापि अनुवर्तत एव । 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानाति सति सम्पद्य न विदुः अनृतेन हि प्रत्यूढा' इत्यादिवाक्यैरेतावन्तं कालं सुखमस्वाप्सं न किञ्चिदवेदिषमिति प्रतिबुद्धानुसन्धानेन च सुप्तावज्ञानपरिशेषोपगमात् कर्मानुस्मृतिशब्दविधिभ्यश्च प्रलय इव पुण्यपापादीनामपि संस्कारात्मनावस्थानोपगमात् । 'अनन्वागतं पुण्येने'त्यादिवाक्यं तु तस्यां दशायां पुण्यादिकार्यभोगाभावाभिप्रायं व्याख्येयम्। 'न तु तद्द्वितीयमस्ती'त्यादिद्वैतनिषेधकानामपि वाक्यानां सुप्तौ विद्यमानस्यापि द्वैतस्य दर्शनायोग्यत्वादविद्यमानप्रायं तदित्यभिप्रायो द्रष्टव्यः । ततश्चाज्ञानतत्कार्यवासनाविशिष्टतया सुप्तौ विद्यमानस्य जीवस्य पुनर्भोगप्रापककर्मोद्बोधनेनोत्थाने न काचिदनुपपत्तिरिति। प्रतिन्यायं सुप्तस्य जागरणार्थं हृदयान्निर्गमनं न्यायः, प्रतिनिर्गमनं, प्रतियोनि आद्रवति योनिस्तत्तदिन्द्रियगोलकम् । तथा च यस्येन्द्रियस्य यत् गोलकं, तत्प्रति तत्तदिन्द्रियद्वारा स एव जीवः आगच्छतीत्यर्थः । अत्र च 'स वा एष एतस्मिन् सम्प्रसाद' इ-

ति सुप्तं प्रकृत्य बुद्धान्तायाद्रवतीति प्रतिपादनात् सुप्तस्यैवोत्थानमवगम्यते । अहरहः ब्रह्म हार्दं, ब्रह्मैव लोक इति कर्मधारयः । अत्राहरहरिति वीप्साबलादेकस्यैवानेकसुप्तिसम्बन्धोऽवगम्यते । ततश्च सुप्तस्यैव पुनरुत्थानं सूचयति । ते सुप्ता व्याघ्रादिषु मशकान्तेषु मध्ये यद्यद्रूपेण भवन्ति सुप्तेः प्राक्, ते पुनरुत्थितास्तत्तद्रूपेण भवन्ति सामस्त्येन भवन्ति । बीजाङ्कुरन्यायेनेति । कार्योपाध्यभिप्रायमेतत् । अत्र पूर्वाधिकरणोक्तायास्सत्सम्पत्तेरेवाक्षिप्य व्यवस्थापनात् पूर्वाधिकरणप्रयोजनमेवात्रापि प्रयोजनं द्रष्टव्यम् ॥ ९ ॥

इति कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

पूर्वोक्तायां सुप्तौ मूर्छाया अन्तर्भावानन्तर्भावविचारात् सङ्गतिः । **अस्तु तर्हि सुप्त इति** । अयमेवात्र मुख्यः पूर्वपक्षः । अन्यच्छङ्कामात्रम् । ननु, 'मुग्धेऽर्धसम्पत्ति' रित्यत्र सुप्तौ यावती ब्रह्मसम्पत्तिः, ततोऽर्धं मूर्छायां ब्रह्मसम्पत्तिरिति प्रतीयते । नेदमुपपन्नम् । अन्तःकरणाद्युपाधेः सुप्ताविव मूर्छायामपि लीनत्वेन सुप्तिमूर्छयोर्ब्रह्मसम्पत्तेस्तुल्याया एवोपगन्तुं न्याय्यत्वादित्यभिप्रेत्य शङ्कते—**कथं पुनरर्धसम्पत्तिरिति**। 'मुग्धेऽर्धसम्पत्तिरि'त्यत्र ब्रह्मणार्धसम्पत्तिः सुप्तिमपेक्ष्येत्यर्थो न विवक्षितः, अपि तु सुप्तेनार्धसम्पत्तिरित्यर्थो विवक्षितः । तथा च मुग्धस्य सुप्तेन सह निस्संज्ञत्वादिकं किञ्चित्सादृश्यं भवतीत्यर्थः पर्यवसितः । ब्रह्मसम्पत्तिस्तु सुप्तिमूर्छयोस्तुल्यैवेति परिहरति—**अत्रोच्यत इति** । प्रयोजनं पूर्वपक्षे अवस्थाभ्यस्त्वंपदार्थस्य विवेकेऽनुसन्धीयमाने सुप्तिमपेक्ष्य मूर्छातः पृथग्विवेकः नानुसन्धेयः । सुप्तावन्तर्गतत्वेन सुप्तिविवेकेनैव सिद्धत्वात् । सिद्धान्ते तु सुप्तेस्सकाशान्मूर्छाया भिन्नत्वात् पार्थक्येन विवेकोऽनुसन्धेयः ॥ १० ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

इत आरभ्यापादपरिसमाप्तेस्तत्पदार्थो विविच्यते । महावाक्ये त्वंपदार्थमुद्दिश्य तत्पदार्थो विधीयते । ततश्चोद्देश्यस्य प्रथमनिर्देशार्हत्वात् त्वंपदार्थशोधनपेटिकानन्तरं तत्पदार्थशोधनपेटिका भवति । नन्वत्र ब्रह्मणस्सविशेषत्वस्यानृततया परमार्थतो निर्विशेषमेव ब्रह्मेति प्रतिपाद्यते । तथा चेदमारम्भणाधिकरणेनैव गतार्थम् । यदि तु तत्र निर्विशेषताप्रतिपादकागमस्य लौकिकमानविरोधमाशङ्क्य तेषां दुर्बलताप्रतिपादनेन व्यावहारिकता प्रतिपाद्यते, इह तु सविशेषत्वनिर्विशेषत्वप्रतिपादकयोर्वाक्ययोरेव श्रौतयोर्विरोधपरिहारेण निर्विशेषत्वं व्यवस्थाप्यत इति

न पौनरुक्त्यं, तदायं विचारः श्रुतिविरोधपरिहारार्थयोर्वियत्प्राणपादयोरेव कर्तव्यः स्यादिति चेत्, उच्यते—इहाप्यध्याये महावाक्यार्थज्ञानसाधनतया पदार्थशोधनस्य कर्तव्यत्वप्राप्तेः तत्पदार्थशोधनप्रसङ्गेन निर्विशेषसविशेषत्वप्रतिपादकश्रुतिविरोधपरिहारस्येहापि सङ्गतत्वात् । **उभयलिङ्गा इति** । लिङ्ग्यते प्रतिपाद्यते इति व्युत्पत्त्या लिङ्गपदमर्थपरम् । **उभयलिङ्गमिति** । ब्रह्मणस्सविशेषत्वं निर्विशेषत्वं चेत्युभयमपि स्वाभाविकम्, उत एकमेव स्वाभाविकम् । यदाप्येकं स्वाभाविकं, तदापि सविशेषत्वं निर्विशेषत्वं चेति विमर्शार्थः । **अस्तु तर्हि स्थानत इति** । ननु, यदि पृथिव्याद्युपाधिकं ब्रह्मणः पृथिव्याद्यात्मत्वमुपगम्यते, तदौपाधिकस्य तस्य स्फटिकारुण्यादिवत् मिथ्यात्वमेव प्राप्नोतीति न सिद्धान्ताद्विशेष इति चेत, मैवम् । औपाधिकस्य द्विविधत्वात् । किञ्चिद्धि स्फटिकारुण्यादिकमौपाधिकमनृतं, चूर्णाद्युपाधिकन्तं हरिद्रादीनां लौहित्यं सत्यमिति । ततश्च प्रकृते औपाधिकस्यापि सविशेषत्वस्य सत्यत्वसम्भवेन सविशेषागमस्यानृतवस्तुविषयतायुक्ता । अस्थूलादिवाक्यानि तु अनौपाधिकस्थूलत्वादिनिषेधपराणीति पूर्वपक्षी मन्यते । **तदपि नोपपद्यत इति** । अयमभिप्रायः—अन्यत्रौपाधिकस्य सत्यत्वदर्शनेऽपि प्रकृते सविशेषत्वं पारमार्थिकमिति वक्तुं न शक्यते । निषेधवाक्यविरोधापत्तेः । न च तान्यनौपाधिकनिषेधपराणीति शक्यं वक्तुम् । तथासत्यध्याहारप्रसङ्गादिति ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

यत्तावदुक्तम्—अस्थूलादिवाक्यैरस्थूलत्वादेस्स्वरूपेणैव निषेधः प्रतीयते । ततश्च स्थूलादिपदानामनौपाधिकस्थूलत्वादिप्रतिपादकतामुपेत्य तादृशस्य स्थूलत्वादेर्निषेध इत्यर्थकता अध्याहारादिदोषग्रस्तत्वादयुक्तेति, तन्नोपपद्यते । तथाहिसति सविशेषताप्रतिपादकानि वचनानि निरालम्बनान्येव स्युः । स्वरूपत एव सविशेषतानिषेधाभ्युपगमात् । अतस्सविशेषताप्रतिपादकवचनसार्थक्याय निर्विशेषताप्रतिपादकानि वचनानि अध्याहारादिना योजनीयानि । वरं हि वाक्यान्तरानर्थक्यमपेक्ष्य लक्षणाद्याश्रयणमिति शङ्काभिप्रायः । **यश्चायमस्यां पृथिव्यामिति** । 'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मध्वि'ति वाक्यपूर्वकमिदं वाक्यमाम्नायते । अस्यै पृथिव्या इति षष्ठ्यर्थे चतुर्थी । यश्चायमस्यां पृथिव्यामित्यत्र चकारेण पूर्ववाक्यगतं मधुत्वं पार्थिवस्य शारीरस्य च पुरुषस्य प्रतिपाद्यते। तथा च यश्चेति यत्पदप्रतिनिर्देशाय सोऽपि सर्वेषां भूतानां मध्वित्यनुषङ्गाध्याहारौ द्रष्टव्यौ । मधुत्वमुपकारकत्वम् । अयमेवेत्यादिवाक्यशेषेण पृथिव्याद्याधिदैविकपुरुषस्याध्यात्मिकस्य शारीरस्य च परमात्माभेदः प्रतिपाद्यते ॥ १२ ॥

# अपि चैवमेके ॥ १३ ॥

पूर्वसूत्रं जीवब्रह्मभेदनिषेधश्रुतिसङ्ग्रहार्थत्वेन व्याख्यायेदं सूत्रं ब्रह्मणि प्रपञ्चनिषेधकश्रुतिसङ्ग्रहार्थत्वेन व्याचष्टे—**अपि चैवं भेददर्शनेति** । अयमत्र सूत्रद्वयाभिप्रायः — उपक्रमोपसंहारैकरूप्यादितात्पर्यलिङ्गैर्निष्प्रपञ्चब्रह्मैक्यप्रतिपादनपराः श्रुतयः न लक्षणादिभिः कदर्थयितुं शक्यन्ते । ततश्च प्रबलाभिर्निष्प्रपञ्चब्रह्मलिङ्गाभिर्यदि सप्रपञ्चब्रह्मलिङ्गानां प्रपञ्चांशे असदर्थता भवति । भवतु नाम । दृष्टं हि 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानथ खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे'ति 'पयसाग्निहोत्रं जुहोती'त्यत्र जर्तिलगवीधुकपदप्रतिपाद्यारण्यतिलगोधूमयवागूमात्रविधायिवाक्ययो रनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे'ति निषेधोन्नायकवाक्यपर्यालोचनया असदर्थकत्वम् । यदि तु तत्र विधिवाक्यस्य जर्तिलगवीधुकयवाग्वोर्होमसाधनतापरत्वमुपेत्य निषेधश्चानाहुतिवाक्येन पुनरुपेयेत, तदापि विकल्प एव तत्र फलमिति वक्तव्यम् । स च निषेधवाक्यं विनैव सिध्यति । जर्तिलगवीधुकयवागूपयसां त्रयाणां विकल्पं विना निवेशासम्भवात् । तथा चानाहुतिवाक्यं व्यर्थमेव भवेदिति तदनुसारेण विधिनिषेधयोः पयस्स्तुतिपरत्वमुपेयते । ग्राम्यारण्यपशुहिंसाभावेन प्रशस्तयोरपि यवाग्वोः पयोऽपेक्ष्यानाहुतित्वमिति । एवंचसति कृत्स्नमेकवाक्यमपि भविष्यति । ततश्च यवागूवाक्यस्य तात्पर्यविधुरे मुख्यार्थे प्रामाण्याभावात्तदंशे असदर्थकत्वेऽपि न दोषः । तात्पर्यविषयीभूते प्राशस्त्यविशिष्टे पयोहोमे प्रामाण्योपपत्तेरित्युच्यते, तदा प्रकृतेऽपि परमते स्वाभाविकस्थूलत्वादिनिषेधपराणामस्थूलादिवाक्यानां वैयर्थ्यमेव । शास्त्रानुसारेण हि परमात्मस्वरूपमवधारणीयम् । शास्त्रेण च सत्यज्ञानानन्दात्मकं परमात्मस्वरूपं प्रतिपादितं, न ततस्स्थौल्यादिकं परमात्मनि प्रसज्यते । सृष्टिवाक्यपर्यालोचनया तु पृथिव्यादितादात्म्योपाधिकमेव स्थौल्यादिकं प्रसक्तम् । ततश्चानौपाधिकस्थौल्यादिनिषेधे अप्रसक्तप्रतिषेधत्वान्निषेधसन्दर्भो व्यर्थ एव स्यादिति सृष्टिवाक्यपर्यालोचनया प्रसक्तं यादृशं स्थौल्यादिकं, तादृशमेवात्रापि प्रतिषेध्यम् । यथा च विधिनिषेधाभ्यां जर्तिलादिवाक्ये स्तुतिविशेषलाभः, एवमत्रापि अध्यारोपापवादाभ्या निष्प्रपञ्चब्रह्मत्वप्रतिपत्तिलाभः । तमेव च निष्प्रपञ्चं तात्पर्यविषयीभूतमर्थमादाय एकवाक्यत्वं प्रामाण्यं चोपपद्यते । एतेन 'सत्यकामस्सत्यसङ्कल्पः हिरण्यश्मश्रुर्हिरण्यकेश' इत्यादिगुणविशेषविधायकवाक्यपर्यालोचनया 'असङ्गो न हि सज्जते साक्षी चेता केवलो निर्गुणश्च अस्थूलमनणिव'त्यादीनि वाक्यानि सामान्येन निषेधविषयकाणि विहितेतरविषयाणि भविष्यन्तीति शङ्कापि परास्ता । तात्पर्यलिङ्गोपगृहीतानामसङ्गत्वादिवाक्यानां सङ्कोचा-

नुपपत्तेः । अपि च निर्गुण इत्यस्य सत्यकामत्वादिविहितेतरनीलपीतादिगुणनिषेधपरत्वे असङ्ग इत्यस्य च दोषराहित्यपरत्वे 'अस्थूलमनण्वि'त्यादीनां च कर्मनिमित्तस्थूलत्वादिनिषेधपरत्वे वाक्यानां वैयर्थ्यमेव । अलौकिके परमात्मनि विहितव्यतिरिक्तानां गुणानामप्रसक्तत्वात् । एवं दोषाणामपि न तत्र प्रसङ्गः । प्रमाणाभावादेव । विशेष्य च 'निरवद्यं, निरञ्जनमि'ति दोषाः प्रतिषिद्धाः । तत्र किं प्रयोजनम् । 'असङ्गो न हि सज्जत' इत्यस्पष्टवाक्येनापहतपाप्मेत्यादिना पुण्यपापसंसर्गस्यात्मनि प्रतिषेधेन तन्निमित्तकस्य स्थौल्यादेरप्रसङ्गेनास्थूलादिवाक्यमपि तन्निषेधे व्यर्थमेव भवेत् । अपि चास्थूलादिवाक्यमपि अविशेषेणैव स्थूलत्वादिनिषेधपरम् । तस्य कथं हिरण्यश्मश्रुत्वादिवाक्यपर्यालोचनया सङ्कोचः कर्तुं युक्तः । अपि च वस्तुप्रतिपादनपरेषु वाक्येषु यत्रयत्र गुणास्सृष्टिर्वा प्रतिपाद्यते, तत्र गुणानां प्रतिषेधोऽपि भवति—केषाञ्चिद्विशेषेणैवावशिष्टानां सामान्येन । तानि च वाक्यानि प्रथमाध्याय एव सप्रपञ्चं विवेचितानि । कथमेवं गतिसामान्याद्युपबृंहितानां लक्षणादिना व्यर्थतापर्यवसाय्यर्थकतोपगन्तुं शक्यते । तस्माद्विधिनिषेधप्रमाणयोर्विरोधे इदं रजतं नेदं रजतमित्यादौ निषेधमानस्य विधिज्ञानाप्रामाण्यापादकताया उत्सर्गतो लोकसिद्धत्वादिहापि गुणविधिवाक्यानां मुख्यार्थे तात्पर्याभावकल्पनया असदर्थकताभ्युपगमो नानुपपन्नः । वस्तुतस्तु निषेधबाधितानामपि वेदान्तगुणविधीनां नासदर्थकतेति 'प्रकाशवच्चावैयर्थ्य'मित्यादिनानुपदमेव प्रतिपादयिष्यतीति ॥ १३ ॥

ननु,निर्विशेषप्रकरणगता ये गुणविधयः, तेषामस्तु निषेधवाक्यैकवाक्यत्वात् बाधः। तत्रोपक्रमादिलिङ्गैर्निषेधवाक्यानां विधिवाक्यार्थबाधकता, उत्सर्गेण च निर्विशेषतात्पर्यकत्वावधारणात् । दहरशाण्डिल्यादिविद्यावाक्येषु तु निषेधा न श्रूयन्ते । अतस्तेषां गुणवैशिष्ट्यतात्पर्यकत्वात् प्रसज्यत एव सगुणता ब्रह्मण इति शङ्कां निराकर्तुमुत्तरसूत्रमवतारयति—कथं पुनरित्यादिना ।

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

**तेष्वसति विरोध इति** । दहरादिवाक्यानि हि न गुणवैशिष्ट्यतात्पर्यकाणि, अपि तु गुणवैशिष्ट्येन ब्रह्मोपासनातात्पर्यकाणि । तथा चान्यपराद्वाक्यात् गुणो ब्रह्मणि देवताधिकरणन्यायेन समर्थनीयः । स च प्रमाणान्तराविरोध एव प्रवर्तते । तथा च निर्विशेषतात्पर्यकवाक्यान्तरविरोधे सति उपासनापराद्वाक्यात् न ब्रह्मणि गुणवैशिष्ट्यं तात्त्विकं सिध्यतीति भावः ॥ १४ ॥

यस्सर्वज्ञ इत्यादिवाक्यानां व्यावहारिकगुणजातप्रतिपादकतया न निर्विष-

यतेति प्रतिपादनार्थं सूत्रम्—

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

प्रकाशस्येव ब्रह्मणोऽपि सविशेषत्वाकारप्रतिपादकवाक्यानामवैयर्थ्यमिति तदर्थः ॥ १५ ॥

सर्वनिषेधावधिभूतस्य ब्रह्मणः किं स्वरूपमित्याकाङ्क्षायां तत्प्रतिपादनार्थं सूत्रम्—

## आह च तन्मात्रम् ॥ १६ ॥

अत्र पूर्वसूत्रगतप्रकाशशब्दार्थत्वेन प्रस्तुतज्ञानं तत्पदेन परामृश्यते । यद्यपि पूर्वसूत्रे प्रकाशशब्दार्थ आदित्यादिप्रभारूप एव वाक्यार्थान्वयी, तथापि वाक्यार्थान्वयितया प्रस्तुत एवार्थस्तत्पदेन परामर्शनीय इति न नियमः । वाक्यार्थानन्वयिनोऽपि पदोपस्थितस्यार्थस्य सर्वनाम्ना परामर्शदर्शनात् । यथा—'नालीकासनमीश्वरश्शिखरिणां तत्कन्धरोत्थायिनो गन्धर्वाः पुनरेतदध्वचरिते चक्रे तदुद्धारकः । पत्री तत्प्रभुवैरिणां परिवृढो जीवा च यस्याभवज्जीवान्तेवसतां रिपुक्षयविधौ देवाय तस्मै नमः ॥' इत्यादौ । अयमस्यार्थः—जीवस्य बृहस्पतेरन्तेवसतां शिष्याणां देवानां रिपोस्त्रिपुरस्य क्षयविधौ यस्य शिखरिणां पर्वतानामीश्वरो मेरुः नालीकानां शराणामासनं धनुरभवत , तस्य नालीकं पद्ममासनं यस्य ब्रह्मण', कन्धरायां ग्रीवायामुत्थानशीलाः, ये वेदाः, ते गन्धर्वा हया यस्याभवन्, पुनश्चैतेषां गन्धर्वाणां प्रसिद्धानामध्वाकाशस्तत्र चरितं गमनं ययोस्तौ सूर्यचन्द्रौ रथचक्रे यस्याभूतां, तस्य चक्रस्य सुदर्शनाख्यस्य उद्धारको विष्णुः पत्री शरो यस्याभवत्, तेषां पत्रिणां पक्षिणां प्रभोर्गरुडस्य वैरिणां नागानां परिवृढस्स्वामी स वासुकिः जीवा ज्या च यस्याभवत्, तस्मै देवाय शिवाय नमः । अत्र नालीकासनादिशब्दैरुपस्थितः पूर्वपूर्ववाक्यार्थान्वयी अन्य एवार्थः, तत्कन्धरोत्थायिन इत्यादौ सर्वनामपरामर्शनीयश्चान्य इति । तन्मात्रमिति मात्रपदेन 'सत्यं ज्ञानमनन्तं ब्रह्म प्रज्ञानघन एवे'त्यनन्तपदेनैवकारेण च प्रतिपाद्या रूपान्तरव्यावृत्तिस्संगृहीता ॥ १६ ॥

एवं वेदान्तगतगुणविधितन्निषेधवाक्यानां विरोधः गुणानामनृतत्वान्नास्तीति न्यायेन प्रतिपादितम् । सम्प्रति सप्रपञ्चत्वानृतत्वप्रतिपादिकाभिश्श्रुतिस्मृतिभिरेवास्मदुक्तरीत्या विरोधः परिहृत इति प्रतिपादनार्थं सूत्रं—

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

वाचारम्भणश्रुतिस्तावत् प्रपञ्चमिथ्यात्वप्रतिपादिकेत्यारम्भणाधिकरणे प्रप-

ञ्चितम् । 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्तीत्यथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य'मिति श्रुतिरपि सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्विरोधं सप्रपञ्चत्वस्यानृततया परिहरति । अयं ह्यस्य वाक्यस्यार्थः— 'द्वे वाव ब्रह्मणो रूपे'इत्यादिना मूर्तामूर्तात्मकं कृत्स्नं प्रपञ्चं पूर्वं प्रतिपाद्य 'अथात आदेश' इति तन्निषेधोऽभिधीयते 'नेति नेती'ति । निषेधवाक्यार्थं स्वयमेव श्रुतिराह—न ह्येतस्मादिति । एतस्मान्नेतिनेत्यादिष्टादन्यत् परं यतो नास्ति, अतो नेतीति । न चैवंयोजनायाम् 'अन्यत् पर'मिति शब्दद्वयं नापेक्षितम् । एकेनैवाभिमतार्थसिद्धेः । अतः पदद्वयसार्थक्याय एतस्मान्नेतिनेतीत्यादिष्टादन्यत्परमुत्कृष्टं नास्ति, अपि तु सर्वोत्कृष्टं ब्रह्मेति योजनया सर्वोत्कृष्टत्वगुणो विधीयते । अथवा एतस्मात् प्रपञ्चात् ब्रह्मणोऽन्यत् उत्कृष्टं नास्तीति योजनया पूर्वोक्त एवार्थो विधीयते । तदनुसारेण च 'अथात आदेशो नेतिनेती'ति पूर्ववाक्येऽपि न सप्रपञ्चता पूर्वसन्दर्भगता निषिध्यते, अपि तु मूर्तामूर्तात्मकं ब्रह्मणो रूपमित्युक्त्वा तावन्मात्रमेव ब्रह्मणो रूपमिति शङ्कायां नेति नेतीति वाक्येन तावन्मात्रमेव ब्रह्मणो गुणजातं न भवतीत्यादि प्रतिपाद्यते । इतिपदेनार्थादुपस्थितायास्तावन्मात्रतायाः प्रतिषेधाय परामर्शादिति वाच्यम् । ब्रह्मणोऽन्यदुत्कृष्टं नास्तीति योजनायामप्यन्यपदस्य वैयर्थ्यम्, अस्मिन्नेवोत्कृष्टत्वप्रसक्तेः । द्वितीययोजना त्वत्यन्तक्लिष्टा । एतस्मादित्यस्यासन्निहितप्रपञ्चपरामर्शकताभ्युपगमात् ब्रह्मण इत्यध्याहाराच्च । नेति नेतीत्यत्र चेतिशब्दो मूर्तामूर्तात्मकमेव रूपद्वयं स्वरसतः परामृशति, न तु तन्मात्रत्वम् । तद्धि मूर्तामूर्तद्वयातिरिक्तगुणान्तररहितत्वं, तस्यासंशब्दितत्वात् । अतः पूर्वोक्तैव योजना समीचीना । न च सिद्धान्तेऽपि अन्यपदवैयर्थ्यम् । तस्यान्यत्वेन भासमानमित्येवंपरिणतिसम्भवात् । तथा च ब्रह्मणोऽन्यत्वेन भासमानं यत् परमन्यद्वस्तुजातं, तद्यतो नास्ति, अतो नेतीत्युच्यत इत्येवंयोजनैव युक्ता । तत्र च मूर्तामूर्तात्मकस्य रूपद्वयस्य ब्रह्मण्येव विद्यमानत्वेन तत्रैव तत्प्रतिषेधः कथमित्यपेक्षायां सत्यस्य सत्यमिति नामधेयमाम्नातम् । तद्विवरणार्था श्रुतिः 'प्राणा वै सत्यं तेषामेष सत्य'मिति । प्राणा इन्द्रियाणि, विषयाणामप्येतदुपलक्षणम् । अत्र सविषयेन्द्रियात्मककृत्स्नप्रपञ्चसत्यत्वापेक्षया ब्रह्मसत्यत्वमधिकं प्रतीयते । राजराजो मन्मथमन्मथ इत्यादौ तथादर्शनात् । ततश्च प्रपञ्चसत्यत्वं 'सन् घटः सन् पट' इत्येवंरूपेण यत् प्रतीयते, तन्न स्वाभाविकम्, अपि तु सद्रूपब्रह्माध्यस्तत्वोपाधिकम् । ब्रह्मणस्तु सत्यत्वं स्वाभाविकमिति प्रपञ्चस्य स्वभावतोऽनृततया न निषेधानुपपत्तिरि'त्यथ नामधेय'मित्यादिवाक्यशेषेण प्रतिपाद्यते । प्रपञ्चमिथ्यात्वप्रतिपादिकां स्मृतिमुदाहरति—तथा च विश्वरूपधर इति । एवं 'ज्ञा-

नस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूत' इति 'ज्ञानस्वरूपमत्यन्तानिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितमि'ति 'द्वैतिनोऽतथ्यदर्शिन' इति 'ज्ञानं यथा सत्यमसत्यमन्य'दिति सहस्रशः प्रपञ्चानृतत्वप्रतिपादकान्युक्तामेव व्याख्यामुपोद्बलयन्ति । न च यदि निर्विशेषमेव ब्रह्म श्रुतिस्मृत्योरभिमतं, तदा तत्र विशेषानुपन्यस्य तेषां निषेधेन मिथ्यात्वं किमर्थं प्रतिपादनीयम् । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति विशेषानुपन्यास एव युक्त इति वाच्यम् । 'आम्नातस्यार्थं वक्तुं प्रभवामः, नाम्नातं पर्यनुयोक्तु'मिति न्यायात् । अपि च निर्विशेषस्य परमात्मनः अध्यारोपापवादाभ्यामेव बोधनं कर्तुं शक्यं, न तु प्रकारान्तरेणेति न प्रक्षालनाद्धि पङ्कस्येति न्यायः प्रकृते प्रवर्तते । तस्माच्छ्रुतिस्मृतिन्यायानुसारिभिः परमार्थतो निर्विशेषमेवात्मतत्त्वमुपगन्तव्यम् । जीवब्रह्मभेदाभेदश्रुतिविरोधोऽपि भेदानृतत्वप्रतिपादनेन श्रुत्यैव परिहृत इति प्रतिपादयति 'अत एव चोपमा सूर्यकादिवदि'त्यादि त्रिसूत्री ॥ १७ ॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

ज्योतिरात्मा ज्योतिस्स्वरूपः, उपाधिना जलरूपेण, भेदरूपः भेदेन रूप्यते प्रतीयत इति भेदरूपः भिन्न इति यावत् । देवः परमात्मा, एवमुपाधिकृतापारमार्थिकभेदवान् भवति क्षेत्रेष्वविद्यादिषु एकधा ईश्वररूपेण बहुधा जीवरूपेण ॥ १८ ॥

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

यथा सूर्यादीनामुपाधिष्वन्तर्भूतत्वेन वृद्धिह्रासभाक्त्वम्, एवं परमात्मनोऽप्युपाध्यन्तर्भावपूर्वकमेव उपाधिगतवृद्धिह्रासादिभाक्त्वमस्ति । अतो विवक्षितमंशमादाय दृष्टान्तदार्ष्टान्तिकयोस्सारूप्यस्य विवक्षितत्वान्न पूर्वोक्ताशङ्का कार्येति सूत्रं योजयन् परिहरति—युक्त एव त्वयमिति ॥ २० ॥

## दर्शनाच्च ॥ २१ ॥

पूर्वसूत्रोक्तस्य देहाद्युपाध्यनुप्रवेशस्य श्रुत्या समर्थनार्थमिदं सूत्रम् । पुरः-

शरीराणि 'पुरस्स पक्षी'त्यत्र पुर इति पुरस्तादर्थे । पक्षी भूत्वा जीवो भूत्वा । तैत्तिरीयके आनन्दमयपर्याये जीवस्य पक्षित्वरूपणात् । एवं स्वयं 'न स्थानतोऽपी'त्यादीनि 'दर्शनाच्चे'त्येवमन्तानि सूत्राणि परमात्मनो निर्विशेषत्वव्यवस्थापकतयैकाधिकरण्येन व्याख्यातानि। अन्ये तु 'न स्थानतोऽपीत्यारभ्यारूपवदेव हि तत्प्रधानत्वा'दित्येवमन्तानि सूत्राणि परमात्मनो निर्विशेषत्वव्यवस्थापकतयैकमधिकरणम् । 'प्रकाशवच्चावैयर्थ्य'मित्यादीनि तु परस्परभिन्नसत्ताज्ञानरूपं परं ब्रह्मेति पूर्वपक्षे परस्पराभिन्नसत्यज्ञानात्मकं परं ब्रह्मेति व्यवस्थापयितुमपरमधिकरणमिति वदन्ति । तन्मतमाह—**अत्र केचिद्दे अधिकरणे इति । किं सल्लक्षणम्, उत बोधलक्षण**मिति परेषां सिद्धान्तकोटिः । अत्र च सद्बोधाभिन्नं अखण्डस्वरूपमित्यर्थो विवक्षितः । **उतोभयलक्षण**मिति पूर्वपक्षकोटिः । तत्र पूर्वपक्षसूत्रं—'प्रकाशवच्चावैयर्थ्य'मिति । प्रकाशवत् ज्ञानवत् चकारात्सत्तावच्च सत्यं ज्ञानमनन्तमिति श्रुतिद्वयावैयर्थ्यादिति तदर्थः । 'आह च तन्मात्र'मित्यारभ्य सिद्धान्तसूत्राणि । तन्मात्रं ज्ञानमात्रम् । आह श्रुतिर्ब्रह्म । मात्रपदं ज्ञानस्य सत्पदार्थभेदव्यावृत्त्यर्थम् । तथा च सत्यज्ञानात्मकमखण्डं ब्रह्मेति सिद्धान्तः । एतस्याधिकरणस्य 'न स्थानतोऽपी'त्यनेन गतार्थतामाह—**सर्वथापीति**। किं सल्लक्षणम्, उत बोधलक्षणमिति यथाश्रुते दूषणमाह—**न च सल्लक्षणमेव ब्रह्मेत्यादिना** । एवं यथाश्रुतसिद्धान्तकोटौ खण्डितायां यदि पलायमानस्सिद्धान्ती पूर्वपक्षकोटिमेवावलम्बेत, तत्राह—**नाप्युभयलक्षणामिति** । अथाखण्डं ब्रह्मेत्येव सिद्धान्तो विवक्षितः, तर्हि तादृशसिद्धान्तप्रतिपादनानुकूलाश्शब्दाः कोटिप्रदर्शनकाले नोल्लिखिता इति दूषयति—**अथ सत्त्वेवेति** । अत्र हि त्रिकोटिकसंशये अखण्डार्थत्वकोटिर्नोल्लिखितेति भावः । नन्वाद्याभ्यां कोटिभ्यामखण्डार्थत्वकोटिरेव विवक्षिता लक्षणया । न च तत्र 'न स्थानतोऽपी'त्यनेन गतार्थत्वं, सप्रपञ्चनिष्प्रपञ्चवाक्यविरोधपरिहारार्थं तदधिकरणम्, इदं तु सत्यादिवाक्यस्याखण्डार्थत्वव्यवस्थापनायेति चेत्, न । तथापि लक्षणवाक्यानामखण्डार्थत्वव्यवस्थापनार्थेन 'जन्माद्यस्य यत' इत्यनेन गतार्थत्वादिति भावः । स्वमते निर्विशेषप्रकरणगता ये गुणविधयः, तेषां निषेधवाक्यशेषतया निष्प्रपञ्चब्रह्मप्रतीतिपरत्वमुक्तम् । ये तु दहराद्युपासनाप्रकरणगता गुणविधयः, तेषां तत्तद्गुणविशिष्टोपासनापरत्वमिति व्यवस्था दर्शिता । अन्ये तु वदन्ति—'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्यैरमृतत्वकामस्य साक्षात्कारो निष्प्रपञ्चब्रह्मगोचरो विधीयते । तादृशसाक्षात्कारश्च प्रपञ्चप्रविलयं विना नोपपद्यत इति प्रपञ्चप्रविलयद्वारा निष्प्रपञ्चब्रह्मसाक्षात्कारोपयोगिनिष्प्रपञ्चब्रह्मोपासनं विधीयते । तत्र चोपासनाविधिशेषतया अस्थूलादिवाक्यानि मुख्ययैव वृत्त्या निष्प्रपञ्चं ब्रह्म प्रतिपादयन्ति । तत्प्रकरणगता गुणविधयश्च तच्छेषतया

दहरादिवाक्यान्यपि निष्प्रपञ्चब्रह्मप्रतिपत्तिपराणि। तेषां यद्यपि साक्षात्सत्यकामत्वादिविशिष्टब्रह्मप्रतीतिपरतावगम्यते, तथापि सत्यकामादिशब्दा लक्षणया असत्यकामत्वादिव्यावृत्तिप्रतिपादनद्वारा निष्प्रपञ्चे ब्रह्मणि पर्यवस्यन्तीति। तन्मतमनुवदति—**यदप्याहुरिति** । यद्यपि द्रष्टव्यादिवाक्यानां साक्षात्कारविधिपरत्वम् उपासनाविधिशेषत्वेनैव निष्प्रपञ्चं ब्रह्म समर्प्यत इत्येतत्समन्वयसूत्र एव निराकृतं, तथापि दहरादिप्रकरणगतान्यपि सत्यकामत्वादिवाक्यानि निष्प्रपञ्चब्रह्मप्रतीतिपराणीत्येतान्निराकरणार्थोऽयं सन्दर्भः । **विनिगमनकारणवचनम् अनवकाशं स्यादिति** । केभ्यश्चिद्वाक्येभ्यः सप्रपञ्चब्रह्मावगमे सति निष्प्रपञ्चवाक्यविरोधे प्रसक्ते निष्प्रपञ्चवाक्यप्राबल्ये कारणं वक्तव्यम् । सप्रपञ्चवाक्याभावे तु तत्कथनमसङ्गतमेव । अतस्सूत्रविरुद्धेयं कल्पनेति भावः । दहरादिवाक्येषु सप्रपञ्चत्वविवक्षायां तात्पर्यग्राहकं लिङ्गमाह—**फलमपीति** । सप्रपञ्चनिष्प्रपञ्चवाक्यानां भिन्नप्रदेशपठितानां परस्पराकाङ्क्षारहितानामेकवाक्यतापि न सम्भवतीत्याह—**कथं चेति** । सर्वेषामेकब्रह्मसम्बन्धित्वेनाकाङ्क्षामुत्थाप्यैकवाक्यता कल्प्यत इति शङ्कते—**एकनियोगप्रतीतेरिति** । अस्थूलादिवाक्येषु दहरादिवाक्येषु च ब्रह्मोपासननियोगस्तावत्प्रतीयते। तत्र च लाघवात् ब्रह्मोपासनानियोगस्सर्वत्रैक एव कल्पनीय इति एकनियोगप्रतिपादकतया सर्वेषां ब्रह्मवाक्यानामेकवाक्यता। यद्यपि दर्शपूर्णमासनियोगापेक्षया प्रयाजावान्तरनियोगो भिन्न एव, तथाप्युभयत्राधिकारयुक्तो नियोग एक एवेति पृथगाख्यातश्रवणेऽपि यथा प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यता कल्प्यते, एवं ब्रह्मवाक्येष्वपि भविष्यतीति भावः। **ब्रह्मवाक्येषु नियोगाभावादिति**। यद्यपि प्रयाजवाक्ये अधिकारिणोऽश्रवणेन तदाकाङ्क्षायां दर्शपूर्णमासवाक्येन तस्यैकवाक्यता युक्ता। दहरादिवाक्येषु तु पृथगधिकारश्रवणेनाकाङ्क्षाभावात् नास्थूलादिवाक्यैरेकवाक्यताकल्पनं न्याय्यम् । लाघवात् । ब्रह्मसम्बन्धि सर्वमुपासनमेकमिति त्वत्यन्तासङ्गतम्। 'नाना शब्दादिभेदा'दिति न्यायविरोधात्।अन्यथा ज्योतिष्टोमदर्शपूर्णमासादिनियोगोऽपि लाघवादेक एव स्यादिति वेदान्तानामुपासनापरत्वेऽपि न सर्वत्र नियोगैक्यं वक्तुं शक्यं, तथापि निष्प्रपञ्चं ब्रह्मोपासनाविधिशेषतया बोध्यत इत्यप्यसङ्गतमिति दर्शयितुं समन्वयसूत्रोक्तं स्मारितम्। अपि च निष्प्रपञ्चवाक्येषु नियोगोपगमे तस्य विषयः किं साक्षादेव प्रपञ्चप्रविलयः, उत साक्षान्निष्प्रपञ्चोपासनमेव विषयः। प्रपञ्चप्रविलयस्तु नियोगविषयफलमिति मनसि निधाय विकल्पयति—**किंविषयश्चेति** । आद्यं शङ्कते—**नन्विति**। ननु, प्रपञ्चविलयोपगमे तदात्मकस्य ब्रह्मणोऽपि विलयस्स्यादिति शङ्कायामाह—**ब्रह्मस्वभावो हीति** । प्रपञ्चब्रह्मणोर्हि न स्वरूपैक्यम्, अपि तु ब्रह्मस्वभावः प्रपञ्चः तत्रारोपित इति यावत्। ब्रह्मस्वभावः पारमा-

र्थिकं स्वरूपं यस्य प्रपञ्चस्य स तथाभूत इति विग्रहः । यदि घृतकाठिन्यप्रविलयवत् प्रपञ्चप्रविलयो विवक्षितः, तदा तस्य पुरुषकृत्यसाध्यतया न नियोगविषयत्वं साक्षात्सम्भवतीत्याह—**यदि तावद्द्रियमाणोऽयमिति** । अविद्याध्यस्तः प्रपञ्चः निष्प्रपञ्चोपासनया विलीयत इत्युपगमेऽपि तस्य पुरुषकृत्यसाध्यत्वात् पुरुषकृतिसाध्योपासनैव नियोगविषय इत्यापतति । प्रविलयस्तु फलमिति वक्तव्यम् । तदपि नोपपद्यते । आरोपितप्रपञ्चस्याधिष्ठानतत्त्वज्ञाननिवर्त्यत्वात् तत्त्वज्ञानस्य च सिद्धस्वरूपपरैरेव वाक्यैरुपपत्तेः न नियोगपरत्वमिति भावः । ननु, शाब्दब्रह्मावगममात्रेण प्रपञ्चप्रविलयासिद्धेश्शब्दात् ब्रह्मावगत्या ततो निष्प्रपञ्चोपासनं प्रविलयाय भविष्यतीति शङ्कते—**नन्वावेदिते ब्रह्मणीति** । न निष्प्रपञ्चब्रह्मतत्त्वावेदनेनैवेति । अयं भावः—येषां मते तावच्छब्दादेवापरोक्षं, तान् प्रति शाब्देन प्रपञ्चप्रविलयो नास्तीति वक्तुमशक्यम् । परं तु प्रतिबन्धापायार्थमुपासनमपेक्षितं, न तु तावतोपक्रमाद्यवधारितब्रह्मप्राधान्यानां वेदान्तवाक्यानां नियोगशेषतया ब्रह्मसमर्पकता वक्तुं शक्यते । ननु यन्मते शब्दात् परोक्षमेव ज्ञानं मानससाक्षात्कार एवाविद्यानिवृत्तिद्वारा मोक्षोपयुक्तः, तेषां मते वेदान्तानां स्वजन्यज्ञानमादाय प्रयोजनवत्त्वासम्भवात् उपासनाजनिते मानससाक्षात्कारे उपासनाद्वारैवोपयोगो वक्तव्य इत्यावश्यकमुपासनाविधिशेषत्वम् उपक्रमाद्यवगतमपि ब्रह्मप्राधान्यं निष्प्रयोजनत्वादेव परित्यक्तव्यमिति चेत्, न । तन्मतेऽप्युपासनाजनितसाक्षात्कारगताप्रामाण्यशङ्काविधूननेन शाब्दज्ञानस्य सप्रयोजनत्वात् नोपक्रमाद्यवगतं ब्रह्मप्राधान्यं हातव्यम् । ब्रह्मप्रधानानामपि वाक्यानामुपास्यसमर्पणेनार्थिकमुपासनाविध्युपकारकत्वं न बाध्यते । प्रवृत्तिस्तु निर्विशेषवाक्यानां ब्रह्मप्रतिपादनोद्देशेनैव, न तु ब्रह्मविषयकोपासनानियोगे प्रतिपत्त्युद्देशेनेति द्रष्टव्यम् । यच्चैकदेशिभिरुच्यते—'द्रष्टव्य' इत्यादावपि दर्शनं विधीयत इति, तदपि न । दर्शनस्य कृत्यसाध्यत्वेनाविधेयत्वादित्याह—**द्रष्टव्यादिशब्दा अपीति** । यद्यपि लोके इदं पश्येदमाकर्णयेत्यादौ द्रष्टव्यश्रोतव्यविषयकावधानाख्यो व्यापारो दर्शनश्रवणोपकारको विधेय इति वक्तुं शक्यम् । द्रष्टव्य इत्यत्र तु उपायविधिरपि वक्तुं न शक्यते । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति सन्निध्याम्नातैरेव वाक्यैरुपायविधिलाभात्, तथापि श्रवणादिष्वेव प्रवृत्त्यतिशयं जनयितुं दर्शनार्हत्वेनात्मा स्तूयते । ननु, सत्यज्ञानानन्दात्मकं ब्रह्मेति ज्ञानस्य वेदान्तैरेव सिद्धत्वेन तस्याविधेयत्वेऽपि तस्य प्रकारान्तरेण ब्रह्मज्ञानान्नियमोऽस्त्विति पलायमानस्य शङ्कायामाह—**न चेति** । तत् किं प्रमा, उत न । आद्योऽनुपपन्न इत्याह—**न च प्रमाणान्तरेणेति** । द्वितीयमनूद्य दूषयति—**यदि पुनरिति** । स्वयमेव कृतिं विनैव । भ्रान्तिः अनाहार्यरूपा । त-

था चाहार्यस्यानाहार्यस्य वा ज्ञानस्यान्यथाकारस्याप्रमात्वं तावत् उपगन्तव्यम् । तत्राप्यनाहार्यस्य विधेयत्वमेव न सम्भवति । आहार्यस्य तु विधेयत्वसम्भवेऽपि नामृतत्वकामस्तत्राधिकारी । 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति वचनानुसारेण तत्त्वज्ञानस्यैवामृतत्वसाधनत्वावगमादिति भावः ॥ २१ ॥

इति उभयलिङ्गाधिकरणम् ॥ ९ ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥

अयमत्र विषयः—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'ति ब्रह्मणो रूपद्वयं प्रस्तुत्य 'तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चे'ति वाक्येन भूतत्रयात्मकं ब्रह्मणो रूपं मूर्तमिति निरूप्य तत्कार्यत्वेनादित्यमण्डलं निरूपितं 'तस्य मूर्तस्यैष रसो य एष तपती'ति वाक्येन । यद्यप्यादित्यमण्डलं पञ्चीकृतपञ्चभूतकार्यं, तथापि त्रयाणां भूतानामतिस्पष्टत्वसाम्येन तत्कार्यत्वमादित्यमण्डलस्य दर्शितम् । 'अथामूर्तं वायुश्चान्तरिक्षं चे'ति भूतद्वयममूर्तत्वेन प्रतिपाद्य तत्कार्यत्वेन चादित्यमण्डलान्तर्वर्तिपुरुषो निरूपितः 'तस्यामूर्तस्यैष रसो य एष एतस्मिन् मण्डले पुरुष' इति । यद्यपि चादित्यमण्डलान्तर्वर्तिपुरुषश्चेतनो न साक्षात् भूतकार्यं, तथापि तच्छरीरस्य भूतकार्यत्वात्तदभेदोपचारेण सोऽपि भूतकार्यत्वेन निरूप्यते । तच्छरीरमपि यद्यपि पञ्चभूतकार्यं, तथाप्यस्पष्टत्वसामान्यात् वाय्वाकाशकार्यत्वमुक्तम् । एवमुक्तं मूर्तामूर्तप्रपञ्चमित्यधिदैवतमिति देवतासम्बन्धित्वेनोपसंहृत्याथाध्यात्ममिति शरीरान्तर्गततया मूर्तामूर्तनिरूपणं प्रस्तुत्येदमेव मूर्तं यदन्यत् प्राणात् यश्चायमन्तरात्मन्नाकाशात् योऽयमन्तरात्मन् शरीरे आकाशस्तस्मात् यदन्यदित्यर्थः ।' इति वाक्येन शरीरारम्भकं तेजोऽवन्नात्मकमाध्यात्मिकं मूर्तं निरूप्य तत्कार्यत्वेन चक्षुर्गोळकं निरूपितम् । 'तस्य मूर्तस्यैष रसो यच्चक्षुरि'ति गोलकस्य पाञ्चभौतिकत्वेऽपि स्पष्टत्वाभिप्रायं भूतत्रयकार्यत्वम् । 'अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश' इति शरीरं वायुमाकाशं चामूर्तत्वेन निरूप्य तत्कार्यत्वेन लिङ्गशरीरं निरूपितम् । अस्पष्टत्वसामान्यात् । 'तस्यैतस्यामूर्तस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुष' इति लिङ्गशरीरस्य पुरुषपदप्रतिपाद्यता च पुरुषतादात्म्येन । यद्यपि च तत्सर्वशरीरव्यापि, तथापि तदभिमानिनो हिरण्यगर्भस्यादित्यरूपस्य 'इन्द्रो हवै नामैष योऽयं दक्षिणेऽक्षन् पुरुष' इति शास्त्रेण द-

क्षिणाक्षिस्थानत्वावगमात्तदभेदोपचारेण लिङ्गशरीरमपि दक्षिणाक्षिस्थानत्वेन निरूपितम् । तदनन्तरं च 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथा सकृद्विद्युत्तमि'ति नानारूपतया लिङ्गशरीरं निरूपितम् । महारजनं हरिद्रा, कुसुम्भं वा, तेन रक्तं वासो माहारजनं, पाण्डु श्वेतम्, अविलोमविकारभूतं कम्बलादिकमाविकम् । यो वर्षास्वतिरक्तवर्णतया आविर्भवति कीटविशेषः, स इन्द्रगोप इति, विद्युत्तं विद्युत् सकृदुदिता विद्युदित्यर्थः । अमुमर्थं संगृह्णाति—**द्वे वावेत्यादिना दर्शयित्वेत्यन्तेन** । **प्रकृतत्वाविशेषादुभयं प्रतिषेधतीति** । ननु, सर्वासूपनिषत्सु ब्रह्म प्रतिपाद्यते । तस्यापि प्रतिषेधे तत्प्रतिपादनमनर्थकं स्यात् । अतो ब्रह्मप्रतिषेधेन पूर्वपक्षो नोपपद्यत इति चेत्, न । यथा हि शास्त्रप्रतिपाद्यस्यैव सप्रपञ्चत्वस्य प्रतिषेधमुपेत्याध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थत्वात् सप्रपञ्चत्वाम्नानं न व्यर्थमित्युच्यते, एवं ब्रह्मप्रतिपादनमपि निषेधवाक्यैकवाक्यतापन्नमध्यारोपापवादाभ्यां शून्यताप्रतिपादनपरं भविष्यतीति न व्यर्थम् । एवं च पूर्वाधिकरणोक्तार्थदृष्टान्तेनात्र पूर्वपक्षप्रवर्तनात् तेन सङ्गतिर्द्रष्टव्या । यदि तु निरधिष्ठाननिषेधानुपपत्त्या न शास्त्रस्य शून्यतापरत्वं वक्तुं शक्यमिति निर्बन्धः, तदा ब्रह्मप्रतिषेधेन प्रपञ्चपरिशेषताऽस्तु । यथा च श्रुतिषु प्रपञ्चप्रतिषेधकवाक्यैकवाक्यतापत्त्या सप्रपञ्चत्वप्रतिपादनं निष्प्रपञ्चत्वप्रतीतिपरमुपेयते, एवं ब्रह्मप्रतिपादनमपि निषेधैकवाक्यतापत्त्या निरात्मताप्रतिपत्तिपरमेव किं न स्यादिति पूर्वपक्षिणोऽभिमानः । तदिदमाह—**अथवा ब्रह्मैव रूपवदिति** । अयमत्र सिद्धान्ताभिप्रायः—प्रतिप्रकरणं प्रपञ्चनिषेधावगमेन सप्रपञ्चत्वमतात्त्विकमुपेयते । न चैवं ब्रह्मणः प्रतिषेधो भवति । 'अथात आदेशो नेति नेती'ति वाक्यं तु यदि स्वरसतो ब्रह्मनिषेधावबोधकं भवेत्, तदापि अनेकवाक्यविरोधो मा भूदिति प्रपञ्चनिषेधवियतयैव सङ्कोचनीयम् । वस्तुतस्तु इदमपि वाक्यं न स्वारस्येन ब्रह्म प्रतिषेधतीति प्रतिपादयति—**'ब्रह्म ते ब्रवाणीत्युपक्रमविरोधादिति** । ननु, नायं मूर्तामूर्तब्राह्मण उपक्रमः, अपि तु अजातशत्रुब्राह्मणे । अतः कथं तदनुसारेणैतस्य ब्रह्मप्रतिषेधे तात्पर्यं नास्तीति वक्तुं शक्यमिति चेत्, उच्यते—अजातशत्रुब्राह्मणे ह्युपसंहारो भवति—'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमि'ति । तदनन्तरं च शिशुब्राह्मणं प्राणोपासनाविषयम्, अनन्तरं च मूर्तामूर्तब्राह्मणं, तदन्ते च पुनः पठ्यते—'अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमि'ति । अतोऽयमर्थोऽवगम्यते—अजातशत्रुब्राह्मणे वक्तव्यत्वेन प्रस्तुतस्य ब्रह्मणो यत्सत्यस्य सत्यत्वमुक्तं, तत्र प्रथमशब्दोदितप्राणालम्बनमुपासनं प्रसङ्गाच्छिशुब्राह्मणे निरूप्य

यत् परमसत्यत्वं ब्रह्मणो द्वितीयेन सत्यपदेनोपक्षिप्तं, तत् प्रपञ्चप्रतिषेधेन प्रदर्शयितुं मूर्तामूर्तब्राह्मणमिति। अतः तदन्तर्गतेन नेति वाक्येन ब्रह्मप्रतिषेधो नोपपद्यत इत्युपक्रमपर्यालोचनया श्रुत्यन्तरपर्यालोचनया च ब्रह्मप्रतिषेधासम्भवमुक्त्वा प्रकृतपरामर्शकेतिशब्दपर्यालोचनयापि ब्रह्मप्रतिषेधो न सम्भवतीति. सौत्रप्रकृतशब्दसूचितमर्थं विशदयति—**तदेतदुच्यत इति** । ननु, 'तस्य हैतस्य रूपमि'ति वाक्येन लिङ्गशरीरस्य नानारूपत्वमुच्यते । तत् कथं, न हि लिङ्गशरीरे उद्भूतं किञ्चिद्रूपमस्ति । अत आह—**वासनालक्षणमिति** । नीलपीतादिगोचरजाग्रदनुभवजनिता लिङ्गशरीरे वासना विद्यन्ते । ता एव 'यथा माहारजनं वास' इत्यादिनोपमीयन्त इति भावः । **लोकप्रसिद्धं त्विदमिति** । यद्यपि मूर्तामूर्तात्मकस्य प्रपञ्चस्य स्वरूपेण लोकप्रसिद्धत्वेऽपि श्रुतिं विना न ब्रह्मस्वरूपतया निर्णयस्सम्भवति । तथापि कार्यस्य कर्त्रुपादानापेक्षायां लाघवादुपादानकर्त्रोरेकत्वेनैव सम्भावितत्वात् तावन्मात्रेण सृष्टयादिवाक्यैरनुवादे सति निर्णीतता भवतीति सम्भावनासिद्धं मूर्तामूर्तप्रपञ्चस्य ब्रह्मरूपत्वं 'द्वे वावे'तिवाक्येनानूद्यते निषेध्यत्वाय जर्तिलयवागूहोमवाक्यवदिति भावः । **किमन्यद्ब्रह्मेति जिज्ञासा स्यादिति** । प्रतिषिद्धात् परिगणितादन्यत् यदवशिष्टं प्रतिषिद्धं, तत् किं परमार्थत एव ब्रह्मणो रूपमिति शङ्का स्यात् । वीप्सया सर्वप्रपञ्चनिषेधे तु जडस्य विषयस्यानृतत्वात्ताद्विनिर्मुक्त एव प्रत्यगात्मेति निर्णयेन प्रागुक्तशङ्कोन्मिषतीत्यर्थः । 'ततो ब्रवीति च भूय' इति सूत्रशेषं 'न ह्येतस्मादि'ति वाक्यशेषाभिप्रायेणाथ नामधेयमिति वाक्यशेषाभिप्रायेण च व्यवस्थया योजयति—**यत इत्यादिना** । न ह्येतस्मादित्यादिवाक्यस्य यदा एतस्मादथात इति वाक्यप्रस्तुतादन्यज्जडजातं न ह्यस्तीति कृत्वा नेतीत्यादेशः, परं तु ब्रह्मास्तीति योजना, तदा ततो ब्रवीतीति सूत्रशेषः न ह्येतस्मादिति वाक्यविषयः । यदा तु न ह्येतस्मादिति वाक्यस्य एतस्मादिति नेत्येवंरूपादादेशादन्यत् परमादेशनं नास्तीति योजना, तदा ततो ब्रवीतीति, सूत्रशेषः अथ नामधेयमित्यादिश्रुतिवाक्यशेषविषयो द्रष्टव्य इति व्यवस्था ॥२२॥

## तदव्यक्तमाह हि ॥ २३ ॥

ननु, यदि प्रतिषिद्धसर्वप्रपञ्चं ब्रह्म, तर्हि सन् घट इत्यादिप्रतीतिषु सप्रपञ्चतया कथं सद्रूपब्रह्मावभासः । युक्तं तु निष्प्रपञ्चतयैव भानमिति सूत्रव्यावर्त्यां शङ्कामाह—**यत्तत्प्रतिषिद्धादिति** । यद्यपि सन् घट इति भासते ब्रह्म, तथापि अविद्यादिदोषवशात्तत् सप्रपञ्चतया भासते । निष्प्रपञ्चं तु तत्स्वरूपमविद्यादिदोषर-

हितान्तःकरणेनावगन्तव्यम् । अतस्तदविद्यादिदोषवतां व्यक्तं न भवतीति परिहारतात्पर्यमाह—उच्यत इति । नान्यैर्देवैरन्यैरिन्द्रियैः । यदा ह्येवैष इति । दृश्यं बाह्यं घटपटादिकं, निरुक्तं शब्दैकगम्यं धर्माधर्मादिकम् । आत्म्यम् अहमिति आत्मतादात्म्येन गृह्यमाणं स्थूलसूक्ष्मशरीरं, निलयनं सर्वकार्यलयाधारभूतम् अव्यक्तं, तैर्विनिर्मुक्ते अभयं यथाभवतितथा प्रतिष्ठां साक्षात्कारं लभत इत्यर्थः ॥ २३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

**संराधनं च भक्तिध्यानप्रणिधानादीति** । भक्तिः माहात्म्यज्ञानपूर्वकस्नेहाख्योऽन्तःकरणवृत्तिविशेषः, ध्यानमवधानेन प्रत्ययावृत्तिः, ताभ्यां परमात्मनि चित्तस्य प्रणिधानं स्थापनम् । खानि छिद्राणीन्द्रियाणि, पराञ्चि बाह्यविषयतया व्यतृणत् हिंसितवान् स्वयंभूः परमात्मा । तस्मात्सर्वोऽपि जन्तुः पराङ् बाह्यप्रधान एव सन् पश्यति, नान्तरात्मानं पश्यति । धीरत्वमेव विशदयति—**आवृत्तचक्षुरिति** । निगृहीतेन्द्रिय इति यावत् । ज्ञानस्यान्तःकरणस्य प्रसादो विवेकाविर्भावः, तेन विशुद्धसत्त्वः न्यक्कृतरजस्तमोवृत्त्या सत्त्वांशप्रधानो भवति यदा पुरुषः ततो ध्यायमानो निष्कलं पश्यति । युञ्जाना ध्याननिष्ठा यं ज्योतिः पश्यन्ति, तस्मै योगात्मने योगगम्याय नमः ॥ २४ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

जीवब्रह्मणोरौपाधिकानृतभेदाभ्युपगमात् संराध्यसंराधकभाव उपपद्यत इत्यभिप्रायेण सूत्रं योजयति—**यथा प्रकाशेति** । सूत्रे प्रकाशादिवदिति षष्ठ्यन्ताद्वतिः । प्रकाश आरोपितरूपेणावभासः । अवैशेष्यमारोपितविशेषरूपस्य परमार्थतोऽभावः, कर्म उपाधिः । तथा चायमर्थः—प्रकाशादेरिवोपाधौ ब्रह्मणोऽप्यारोपितरूपेण प्रकाशः अवैशेष्यं च उपपद्यते । इयं च व्यवस्था तत्त्वमस्याद्यभ्यासात् उपगन्तव्येति ॥ २५ ॥

## अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

सूत्रे अनन्तेनेत्येतदनन्तरं जीवस्यैकतेति पदाध्याहारेण सूत्रं योजयति—**अतश्चेत्यादिना** ॥ २६ ॥

इति प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥२७॥

जीवब्रह्मणोर्भेदाभेदश्रुती भेदाभेदयोः पारमार्थिकत्वमुपेत्यैव व्याख्येये । यथा एकस्याहेरहित्वेनाभेदः, तस्यैव कुण्डलावस्थापन्नस्य प्रांशुत्वावस्थापन्नात् भेदश्च पारमार्थिक एव , एवं ब्रह्मणोऽपि चैतन्यरूपेणाभेदः, जीवत्वेश्वरत्वरूपेण भेदश्च पारमार्थिक इति केचिद्वदन्ति । तन्मतमाह–**तस्मिन्नेव संराध्यसंराधकभाव इति** ॥२७॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥२८॥

पूर्वसूत्रे एकस्यैव चैतन्यस्यावच्छेदकभेदात् भेदाभेद इत्युक्तम् । अनेन तु जीवचैतन्यमीश्वरचैतन्यं च परमार्थतो भिन्नमेव । अभेदनिर्देशस्तु चैतन्यरूपत्वसामान्येन द्रष्टव्यः । यथा आदित्यस्य तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्स्वरूपसाजात्येनाभेदनिर्देश इति प्रतिपाद्यत इत्याह—**अथवेति** ॥२८॥

## पूर्ववद्वा ॥२९॥

पारमार्थिकभेदावलम्बनयोर्द्वयोरपि पक्षयोश्श्रुतिस्मृतिविरुद्धत्वात् औपाधिकोऽनृतो भेदः, अभेदस्तु पारमार्थिक इति या 'प्रकाशादिवच्चावैशेष्यमि' ति सूत्रेण व्यवस्था दर्शिता, सैव समीचीनेति सूत्रार्थमाह–**यथा वा पूर्वमिति । प्रकाशाश्रयन्यायेन वैकदेशभूत इति** । यथा प्रभा आदित्येन संसृष्टतया आदित्यैकदेश इव भवति, एवं जीवोऽपि नियन्तव्यत्वादिना तेन संसृष्टस्तदेकदेश इवेति भावः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

न केवलं तत्त्वमस्याद्यभेदाभ्यासादेव पारमार्थिको जीवब्रह्मणोरभेदः, अपि तु निषेधकशास्त्रादपि तथैवावधार्यत इति सूत्रं व्याचष्टे—**इतश्चैष एव सिद्धान्त इति** ॥ ३० ॥

इति अहिकुण्डलाधिकरणम् ॥

## परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥३१॥

पूर्वाधिकरणेन सङ्गतिमाह—**यदेतन्निरस्तेति** । ननु, सर्वद्वैतविवर्जितं सर्वाधिष्ठानभूतं परमात्मतत्त्वमिति सकलश्रुतिस्मृतितदनुगुणन्यायैर्व्यवस्थापितम् । तथा च ततः परमपि किञ्चित्तत्त्वमस्त्विति शङ्कायाः कथमुन्मेष इत्याशङ्क्याह—**कानिचिद्वाक्यानीति** । सेत्वादिव्यपदेशानां ब्रह्मणि गतिं वक्तुम् अयमारम्भ इति भावः । यद्यपि 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरि'ति मन्त्रगतस्य सेतुशब्दस्य ब्रह्मणि गतिर्व्युत्पादितैव । तेनैव न्यायेन 'एष सेतुर्विधरण' इत्यादावपि सेतुपदगतिर्वक्तुं शक्यत एव, तथापि तस्मिन्नधिकरणे सेतुपदस्य ब्रह्मण्येव गतिप्रतिपादनं नावश्यकम् । पूर्ववाक्यप्रस्तुत इतरवाग्विमोकपूर्वके आत्मज्ञानेऽपि तद्वृत्तेरुपपत्तेः । अतोऽस्मिन्नधिकरणे ब्रह्मणोऽन्यत्र नेतुमशक्यानां सेतुपदानां या गतिः वक्तव्या, सा तत्रानूदितेत्येव वक्तुं शक्यम् । उन्मानादिव्यपदेशानां च तत्र गतिर्नोक्ता । अतस्सेतून्मानसम्बन्धभेदव्यपदेशानां ब्रह्मणोऽन्यदपि किञ्चित्तत्त्वमस्तीति सूचयतां गतिं वक्तुमिदमधिकरणमारम्भणीयम् । **जलसन्तानविच्छेदकरे मृदादिप्रचय इति** । जलगतिविच्छेदहेतुभूते संस्थानविशेषेण परागर्वाक्तिरस्संसृष्टतया स्थिते मृदादिसमुदाय इत्यर्थः । जाङ्गलं परतीरगतं भूविशेषम् । उन्मानं कैश्चिदवयवैरवच्छिन्नतया प्रतिपादनम् । **चतुष्पादिति** । गवादीनां चतुर्षु पादेषु प्रत्येकमग्रतो द्वौ, पश्चाच्च द्वौ खुराविति षोडशकलत्वम् । खुरद्वयमेकैकं शफमिति अष्टाशफत्वं च अवयवविशेषैः प्रसिद्धम् । तेभ्यश्च गवादिभ्योऽन्यदपि तत्त्वं प्रसिद्धम् । एवं ब्रह्मण्यपि चतुष्पादष्टाशफं षोडशकलमिति व्यपदेशात्तस्य सावयवत्वम् । ततश्चान्यत् किञ्चित्तत्त्वमस्तीत्युपेतव्यम् । **कार्षापणादीति** । वराटकानामशीत्यैकः पणः । षोडश पणाः कार्षापणम् । सेतुव्यपदेशबलात् ब्रह्मातिक्रम्य प्राप्तव्यमन्यत् तत्त्वमस्तीति गम्यते । ब्रह्मणश्चतुष्पात्त्वादिव्यपदेशबलादतोऽधिकं किञ्चिद्वस्त्वस्तीति गम्यते । जीवब्रह्मणोस्सम्बन्धाभिधानात् ब्रह्मणोऽन्यत् जीवाख्यं तत्त्वमस्तीति गम्यते । अन्तरादित्यवाक्यपर्यालोचनया ब्रह्मणोऽन्यदक्ष्याधारं किञ्चित्तत्त्वमस्तीति गम्यते । अतोऽद्वितीयं ब्रह्मतत्त्वमिति सिद्धान्तो न सङ्गच्छत इति पूर्वपक्षः ॥ ३१ ॥

## सामान्यात्तु ॥ ३२ ॥

सेतुसामान्यात् ब्रह्मणि सेतुशब्दोपपत्तेर्नानेकश्रुतिसिद्धं ब्रह्मणोऽद्वितीय-

त्वं हातव्यमिति सूत्रं योजयन् सिद्धान्तमाह—**तुशब्देनेत्यादिना** । ननु, विधारकत्वगुणेन सेतुश्रुतेर्ब्रह्मण्युपपत्तावपि सेतुं तीर्त्वेति ब्रह्मणोऽतिक्रमणीयत्वमवगम्यते । अतः कथं तस्यापरिच्छिन्नत्वमित्याशङ्क्याह—**तरतेरतिक्रमासम्भवादिति** । आनन्त्यश्रुतिविरोधात् अतिक्रमणीयत्वानुपपत्तिरिति भावः । प्राप्तिरपि सगुणस्य देशविशेषोपाधिकभेदनिबन्धना, निर्विशेषे तु प्राप्तिश्रवणमभेदाभिप्रायमेवेति द्रष्टव्यम् ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥३३॥

चतुष्पादष्टाशफं षोडशकलमिति ब्रह्मणि कल्पना विकारद्वारोपासनार्थेति श्रुतिवशादेवावगम्यते । तथा हि—'चतस्रो दिशः प्राच्यादयश्चतस्रः कला' इत्युक्त्वा 'एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम स य एतमेवं चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्त' इति पृथिव्यन्तरिक्षद्युसमुद्राश्चतस्रः कला उक्त्वैष वै सोम्य चतुष्कलः पादो ब्रह्मणः अनन्तवान्नाम स य एतमेवं विद्वाननन्तवानित्युपास्त' इत्यग्निसूर्यचन्द्रविद्युतश्चतस्रः कला इत्युक्त्वा 'एष वै सोम्य ज्योतिष्मान्नाम स य एतमेवं विद्वान ज्योतिष्मानित्युपास्त' इति प्राणचक्षुश्श्रोत्रमनांसि चतस्रः कला उक्त्वा 'एष सोम्यायतनवान्नाम स य एतमेवं विद्वानुपास्त' इति च विकारद्वारकचतुष्पात्त्वेनैवोपास्यत्वश्रवणात् । पादवदिति श्रौतार्थनिदर्शनाभिप्रायेण व्याचष्टे—**यथा मनआकाशयोरिति** । 'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति तदेतत् ब्रह्म चतुष्पादि'त्युपक्रम्याध्यात्मं वाक्प्राणचक्षुश्श्रोत्राणि चत्वारः पादा अधिदैवतं अग्निवाय्वादित्यदिशश्चत्वारः पादा आम्नाताः । लौकिकनिदर्शनाभिप्रायेण व्याचष्टे—**अथवेति** ॥ ३३ ॥

## स्थानविशेषात् प्रकाशादिवत् ॥३४॥

सुप्तौ 'सता सोम्येति' निर्दिश्यमाना सत्सम्पत्तिरभेदरूपा, न भेदघटितसम्बन्धरूपा । येनातिरिक्ततत्त्वास्तित्वशङ्का स्यात् । अभेदस्य स्वाभाविकत्वेऽपि सुप्तावेव विशिष्य निर्देशस्तु भेदोपाधेस्तदानीमुपशान्तत्वादित्याह—**सम्बन्धव्यपदेशे तावदयमर्थ इति** । 'य एषोऽन्तरादित्ये य एषोऽक्षिणी'त्यादिनावगम्यमानो भेदोऽपि मण्डलाद्युपाधिनिबन्धन इति प्रतिपादयति—**तथाभेदव्यपदेशोऽपीति** ॥३४॥

## उपपत्तेश्च ॥३५॥

'सता सोम्ये'त्यभेदप्रतिपादनमेवेत्यत्रोपपत्तिमाह—स्वमपीतो भवतीति ।
भेदनिर्देशोऽप्यौपाधिक इत्यत्रोपपत्तिमाह—तथाभेदोऽपीति ॥ ३५ ॥

## तथाऽन्यप्रतिषेधात् ॥३६॥

स एवाधस्तादित्यादौ एवकारबलात अन्यप्रतिषेधोऽवगम्यते । यस्मात् परमात्मनः उत्कृष्टं निकृष्टं वा अन्यत् किञ्चिन्नास्ति , तेनेदं पूर्णं पुरुषेण सर्व-मित्यन्वयः ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३७॥

तथान्यप्रतिषेधे ह्यसतीति । नन्वन्यवस्तुप्रतिषेधेन त्रिविधपरिच्छेद-शून्यतारूपमानन्त्यमुपपद्यतां नाम, सर्वगतत्वं सर्ववस्तुभिस्तादात्म्येन सम्बद्धत्वं , तत्तु द्वितीयस्य वस्तुनोऽसत्त्वे कथमुपपद्यत इति चेन्न । न ह्यन्यप्रतिषेधेन द्वि-तीयवस्तुनोऽत्यन्तासत्त्वं ब्रूमः , अपि त्वारोपितत्वम् । ततश्चाधिष्ठानस्य ब्रह्म-णस्स्वस्मिन्नारोपितेन द्वैतजातेन तादात्म्योपपत्तेस्सर्वगतत्वमुपपद्यत इति तात्पर्यं सूत्रभाष्ययोः। अणुत्वे सर्ववस्तूपादानत्वानुपपत्तिः, मध्यमपरिमाणत्वे सावयवत्वमिति परिशेषात् सर्वगतत्वसिद्धिरिति न्यायः ॥ ३७ ॥

इति पराधिकरणम् ॥ ७ ॥

## फलमत उपपत्तेः ॥३८॥

इयता प्रबन्धेन यस्तत्त्वंपदार्थयोर्विवेको दर्शितः, स सर्वज्ञात् सर्वशक्तेः परम-कारुणिकात् परमेश्वरादेव भवतीति प्रतिपादनार्थमिदमधिकरणमिति पूर्वाधिकरणैरस्य सङ्गतिर्द्रष्टव्या। ननु, निर्विशेषस्य परमात्मनः कथं फलदातृत्वं, तदुपयोगिसर्वज्ञत्वादि-कल्याणगुणाकरत्वं चेत्याशङ्क्याह—तस्यैवेति। परमात्मनः स्वशक्तिमायाविलासरूप-मनन्तकल्याणगुणाकरत्वं सिद्धान्तेऽप्युपगतमिति भावः। इष्टानिष्टेति। इष्टं स्वर्गादिकं देवानाम्, अनिष्टं क्षुत्पीडादिरूपं पश्वादीनां, मिश्रं तु सुखदुःखयोस्समतयोपभोगरूपं मनुष्याणामिति विभागः। ईश्वरानपेक्षात् कर्मणो वा फलम् ईश्वराद्वा कर्माराधिता-त्फलमिति सन्देहे सिद्धान्तेनोपक्रमः—फलमत उपपत्तेरिति । सर्वाध्यक्षः अ-न्तर्यामितया सर्वप्रेरकः। अनेन विशेषणेन कर्मणः फलजनकतासामर्थ्योद्बोधः पर-मात्मायत्त इति सूचितम् । सृष्टिस्थितिसंहारेति । विचित्रायां सृष्टौ वैषम्यनै-र्घृण्यादिदोषपरिहाराय ईश्वरस्यापि कर्मापेक्षेति दर्शितम् । तथा च ईश्वरकर्म

णी परस्परोपकारके इति सिध्यति। देशकालविशेषाभिज्ञत्वादित्यनेन यथा सेवादिफलं राजाधीनं देशकालानुरूपं व्यवस्थया दृष्टम्, एवं कर्मफलमपि चेतनायत्तमेवापेक्षितमिति दर्शितम्। येनापि केवलस्यैव कर्मणः फलजनकता कल्प्यते,तेनापि फलजनने कर्मणो द्वारं किञ्चित्कल्पनीयम्।तच्च नापूर्वम्, अपि त्वीश्वरप्रसाद एवेतीश्वराराधनरूपतैव कर्मण उपेयेति वक्तुमुपक्रमते—**कर्मणास्त्वित्यादिना**। अन्वक्षविनाशिनः प्रत्यक्षविनाशिनः।ननु, कारणं विनैव कार्यमस्त्वित्यत आह—**अभावादिति**। स्वकालं स्वोत्पत्त्यव्यवहितोत्तरकालम्। ननु, तर्हि तदानीमेव स्वर्गाद्यनुभवस्स्यादित्यत आह—**तत्फलमिति**। न हि सुखदुःखोत्पत्तिरेव फलम्, अपि तु सुखदुःखानुभव एवेति परिहरति—**यत्कालं हीति** । **चेतनेनाप्रवर्तितस्येति**। लोके हि दण्डचक्रादीनां चेतनव्यापारविषयीभूतानामेव स्वकार्यजनकता दृष्टा । अतोऽपूर्वस्यापीश्वरव्यापारविषयीकृतस्यैव फलजनकतोपेया । न च जीवेनान्यथासिद्धिः । तस्य कर्मानुरूपफलाभिज्ञत्वाभावात् । तथा चावश्यापेक्षिते ईश्वरे राजादिदृष्टान्तेन ईश्वरप्रसाद एव द्वारमिति नापूर्वं कल्पनीयम् ॥ ३८॥

## श्रुतत्वाच्च ॥३९॥

अन्नादः अन्नं समन्तात् ददातीति अन्नादः। वसु दीयमानं अनेनेति वसुदानः ॥ ३९॥

एवं सिद्धान्तेनोपक्रम्य पूर्वपक्षमाह--

## धर्मं जैमिनिरत एव ॥४०॥

**तत्र विधिश्रुतेरिति**। अयमर्थः—'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादावयं वाक्यार्थः —ज्योतिष्टोमनामकयागकरणिका भावना स्वर्गकामस्येष्टसाधनमिति। तथा च लिङुपस्थापितामिष्टं किमित्यपेक्षायाम् इच्छाविषयतया स्वर्गकामपदेन विशिष्योपात्तस्स्वर्ग एवेति सिद्धौ यागकरणको भावनाख्यो व्यापारः स्वर्गसाधनमिति पर्यवस्यति। भावनां प्रति यागस्य करणत्वं च भावनाभाव्ये प्रकृष्टोपकारकत्वमेव। तथा च यागोऽपि स्वर्गजनक इति सिध्यति। इदं च सर्वं लिङेष्टसाधनत्वे बोधित एव सिध्यतीत्युक्तं—'विधिश्रुतेर्विषयभावोपगमादि'ति। विधिश्रुतिर्लिङ्, तद्विषयभावः तत्समभिव्याहृताख्यातप्रतिपाद्यत्वम् । ननु भावनाया भाव्यापेक्षायां धातुना साध्यरूपतयोपस्थितस्समानपदोपात्तश्च याग एव भाव्यः किं न स्यात् । न चैवंसति इष्टसाधनताबोधकश्रुतिविरोधः । यागस्येष्टत्वाभावादिति वाच्यम् । भावनायां साध्यत्वेनान्वययोग्यस्य इष्टविशेषस्योपस्थित्यभावेन लिङ्श्रुतेरविवक्षितार्थत्वोपपत्तेः । न च स्वर्ग-

स्तथा । तस्य पुरुषविशेषणतया सिद्धरूपेणोपस्थितस्य इष्टत्वेऽपि भावनायां भाव्यत्वेनान्वयानर्हत्वादित्यत आह—**अन्यथापीति** । इष्टसाधनतयावगत एव पुरुषप्रवृत्तेरतथाभूते यागे प्रवृत्तिर्नोपपद्यते । तथा च 'यजेत स्वर्गकाम' इत्युपदेशो व्यर्थ एव भवेत् । न च तद्युक्तम् । न चेह यागस्य भावनोद्देश्यतयान्वययोग्यताया विधिप्रकृतिप्रत्ययात्मकसमभिव्याहारेण यागस्य भावनान्वयो भवति । ततः प्रागेव समानप्रत्ययोपात्तमिष्टमेव भावनाभाव्यमित्यवगम्यते । तच्चेष्टं किमित्यपेक्षायां स्वर्गकामपदेन पर्यवसानमात्रमेवोपेयते, न तु स्वर्गपदार्थस्य शाब्दो भावनान्वयः । येन पदार्थान्तरविशेषणत्वं विरोधि भवेत् । अक्रियारूपस्यापि स्वर्गस्योद्देश्यतया भावनासाध्यत्वे नानुपपत्तिः । उद्देश्यता च तस्य कामपदसमभिव्याहारात् सिध्यतीति भावः । **कर्मणो वा सूक्ष्मा काचिदिति** । यदि तु कर्मणः फलजनकत्वोपपत्तये अवान्तरव्यापारकल्पना, तदा कर्मण एव सूक्ष्मावस्था पूर्वम् । यदि तु फलस्य जन्यत्वोपपत्तये अपूर्वकल्पनं, तदा तस्यैव प्रागवस्था अपूर्वम् । सर्वथापि श्रुतयागस्वर्गसाध्यसाधनभाव उपपद्यते । येनापि चेश्वरस्य फलप्रदत्वमुच्यते, तत्प्रसादश्चावान्तर व्यापारः, तेनापि कर्मणः फलहेतुत्वमवश्यमुपेयमेव । अन्यथा वैषम्यनैर्घृण्यप्रसङ्गात् । कर्मजन्येश्वरप्रसादं वदताप्यपूर्वं द्वारमुपेयमेव । अन्यथा कर्मानुष्ठानानन्तरमेवेश्वरप्रसादसम्पत्त्या तदानीमेव फलमपि स्यात् । तथा च सत्यावश्यके अपूर्वे तेनैव फलोपपत्तौ ईश्वरतत्प्रसादकल्पनं गौरवपराहतम् । 'अन्नादो वसुदान' इत्यादिवचनं तु तत्तदुपासनविधेरर्थवादो भविष्यति । सेवादौ राजप्रसादादेर्द्वारता तु दृष्टत्वादुपेयते । ईश्वरप्रसादस्य द्वारत्वे तु न तथाविधं किञ्चन प्रमाणमस्तीति पूर्वपक्षिणो हृदयम् ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

अयमत्र सिद्धान्ताभिप्रायः—भवेदीश्वरतत्प्रसादाभ्युपगमे गौरवम् । यदि तत्कल्पनीयतोपेयेत । ईश्वरस्तावत् श्रुतिस्मृतिप्रमाणासिद्धत्वात् न कल्पनीयः । तस्य फलदातृत्वमपि भाष्योदाहृतश्रुतिस्मृतिवचनैः सिद्धम् । तस्य कर्माराध्यत्वमपि 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष ह्येव सर्वे देवा' इति कर्माराधनीयसकलदेवात्मकत्वात् सिद्धम् । 'यज्ञेन यज्ञमयजन्त देवा' इति वचनमपि यागाराधनीयत्वं परमात्मनः प्रतिपादयति । स्मृतिरपि—'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इत्याद्या कर्माराध्यत्वं प्रतिपादयति । आराधने चाराधनीयप्रसादस्य द्वारत्वं प्रसिद्धमेव । न चैवं कर्मानन्तरमेवेश्वरप्रसादे सति तदानीमेव फलं स्यादित्यपि शङ्कनीयम् । प्रसन्नस्यापि परमेश्वरस्य देशकालौचित्येन फलसम्पादकत्वो-

पपत्तेः । ईश्वरतत्प्रसादकर्माराध्यत्वस्य प्रमाणसिद्धत्वात्तत्र गौरवं न दोषावहम् अपूर्वापेक्षाद्वेति त्वनादरोक्तिः । तदभ्युपगमेऽप्याराधनीयप्रसादस्यावश्योपगमनीयत्वात् । यथा च विहिताचरणादीश्वरस्य प्रसादः, तथा निषिद्धाचरणादीश्वरस्य कोपो भवतीत्यपि द्रष्टव्यम् । 'एष ह्येव साधु कर्म कारयति एष ह्येवासाधु कर्म कारयती'-ति कर्मकारयितृत्वमवगम्यते । 'यमेभ्यो लोकेभ्य उन्निनीषते यमधो निनीषत' इति तस्य शुभाशुभफलसम्पादकता चावगम्यते । न चैतेषां वचनानामर्थवादत्वं न्याय्यम् । अतः फल उपपत्तेरित्येव पक्षस्समीचीनः ॥ ४१ ॥

इति फलाधिकरणम् ॥८॥

**इति श्रीमद्भगवत्पादीयभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां**
**तृतीयस्याध्यायस्य द्वितीयः पादः ।**

॥ ॐ ॥

---

अथ

# तृतीयाध्याये तृतीयः पादः

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥

पूर्वस्मिन् पादे तत्त्वंपदार्थौ दर्शितौ। इह पादे वाक्यार्थो निरूप्यत इति पादयोः पौर्वापर्यम् । ननु, वेदान्तवाक्यार्थः उपक्रमादिलिङ्गैस्समन्वयलक्षण एव निरूपितः। अतः पुनर्निरूपणं कीदृग्विधम् । यदि तु समन्वयलक्षणे ब्रह्म वा, जीवादिकं वा वाक्यार्थ इति सन्दिह्य ब्रह्मैव वाक्यार्थ इति प्रतिपादितम् । इह तु वाक्यार्थीभूतं ब्रह्मैतावद्विशेषणविशिष्टमिति निर्धारणोपयोगिगुणोपसंहारात्मको वाक्यार्थो निरूप्यत इत्युच्यते, तदपि नोपपद्यते । निर्विशेषे वाक्यार्थे विशेषणानामभावात् । अथोच्येत—निर्विशेष वाक्यार्थे विशेषणानामभावेऽपि तत्तदाशङ्कानिवृत्त्युपयोगीन्युपलक्षणानि सन्त्येव । तदुपसंहारोऽत्र निरूप्यते, तथा-'प्यानन्दादयः प्रधानस्ये'त्येवमादीनि कानिचिदेवाधिकरणानि निर्विशेषविषयाण्यत्र पादे सङ्गतानि स्युः । अन्यानि तु सगुणोपासनाविषयाण्यत्र पादे न सङ्गतानि। तेषां निर्विशेषवाक्यार्थे उपयोगाभावात् । यदि चित्तैकाग्र्यसम्पादनपापाकर्षणद्वारा सविशेषोपासनानां निर्विशेषवाक्यार्थज्ञानोपयुक्तत्वात् गुणोपसंहारप्रसङ्गेन सविशेषवाक्यार्थज्ञानोपयोगिगुणोपसंहारो निरूपितः सविशेषोपासनासिद्धये, तथापि गुणोपसंहार एवैकः पादार्थ इति वक्तुं न शक्यते । विद्याभेदाभेदयोरपीह चिन्तनीयत्वादिति चेत, उच्यते—गुणोपसंहार एव पादार्थः। तदुपयोगितया सर्वशाखासु विद्याया अभेदः प्रतिपाद्यते । विद्यानां भेदप्रतिपादनं तु अभेदापवादेनेति न पादार्थभेदः। तदुच्यते– **सगुणब्रह्मविषयेति** । ननु, निर्विशेषाया अक्षरविद्याया अपि शिरोव्रतसत्त्वासत्त्वाभ्यां भेदाशङ्कायां तस्य स्वाध्यायधर्मत्वं व्यवस्थापयिष्यते । तथा च रूपभेदाभावेऽपि धर्मविशेषेण निर्विशेषविद्यायामपि भेदाशङ्का सम्भवतीति चेत्, उच्यते—रूपभेदनिमित्ता भेदाशङ्का नास्तीत्यत्रैव भाष्यस्य तात्पर्यं, तथार्थसंयोगरूपाख्याविशेषैर्निर्विशेषविद्याया अभेदसाधने सम्भवत्यपि चोदनाविशेषात्तत्र सम्भवतीति द्रष्टव्यम् । **प्रसिद्धं ज्योतिरादिष्विति** । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति श्रूयते। तत्र सन्देहः—एतेन यजेतेत्यनेन प्रकृतं ज्योतिष्टोममेवानूद्य तस्य सहस्रदक्षिणाख्यो गुणो विधीयते । ज्योतिरादीनि च तस्यैव नामानि। अथवा ज्योतिरादिनामकानि त्रीणि कर्माणि प्रकृतात् ज्योति-

ष्टोमात् भिन्नानि । तान्येव सहस्रदक्षिणाविशिष्टतया एतेनेत्यादिवाक्येन विधीयन्त इति । तत्र पूर्वपक्षः—यजेतेति प्रकृतकर्मप्रत्यभिज्ञानात् नाम्नां चाख्यातपरतन्त्रतया ज्योतिरादीन्यपि प्रकृतस्य कर्मणो नामधेयानि । एकस्याप्यनेकनामत्वं तु लोकसिद्धमेव, घटकलशाद्यनेकपर्यायदर्शनादिति । सिद्धान्तस्तु—भवेदेतदेवं, यदि ज्योतिरादिनामानि आख्यातपरतन्त्राणि भवेयुः । तानि त्वाख्यातासामानाधिकरण्येन प्रथमान्ततया पृथगेव श्रुतानि उपक्रम एव शब्दभेदादर्थभेदं सूचयन्ति । यथा ह्येकस्य शब्दस्यानेकार्थत्वमन्याय्यम् । अष्टदोषदुष्टविकल्पप्रसरात्, एवम् एकस्यार्थस्यानेकशब्दत्वमन्याय्यम् । तथा चोपक्रम एवार्थैष ज्योतिरित्यादिनिर्देशबलादर्थभेदे सिद्धे सति कोऽसौ ज्योतिरादिपदैरर्थो विवक्षित इति विवक्षायामेतेन सहस्रदक्षिणेन यजेतेति वाक्येन यागरूपोऽसाविति निर्धार्यते । तथा च प्रथमोपनिपतितभेदानुसारेण चरमोपजातमभेदसाधकं प्रत्यभिज्ञानं परित्यज्यत इति नामानुसारेण कर्मभेदो व्यवस्थापितः पूर्वतन्त्रे । **तैत्तिरीयकमित्यादि** । ननु, तैत्तिरीयकादीनि शाखानामान्येव, न तु तत्प्रतिपाद्यविद्यानामानि । विद्यासु च प्रयोगो लक्षणयैव । न च विनिगमनाविरहादुभयनामत्वमिति वाच्यम् । विद्यानामेकशाखागतानां बहुत्वात् तन्नामत्वे अनेकार्थत्वं प्राप्नोति, शाखायास्त्वेकत्वान्नानार्थता प्रसज्यत इति शाखानामत्वमेव न्याय्यम् । तच्छाखाप्रतिपाद्यतासम्बन्धेन विद्यासु तु लक्षणेत्यनन्यलभ्यत्वाभावान्न शक्यतेति कथं तैत्तिरीयकादिनामभेदाद्विद्यानां भेद इति चेत्, उच्यते—पाणिन्यनुशासनपर्यालोचनया हि तैत्तिरीयकादिपदानां विद्यानामत्वमपि प्रतीयते । तित्तिरिशब्दात् 'तेन प्रोक्तमि'त्यर्थे 'तित्तिरिवरतन्तुखण्डिकोखाच्छणि'ति सूत्रेण छण्प्रत्यये सति 'छन्दोब्राह्मणानि च तद्विषयाणी'ति प्रोक्तप्रत्ययान्तस्याध्येतृवेदितृप्रत्ययान्ततानियमात् 'तदधीते तद्वेदे'ति अणि 'प्रोक्ताल्लुगि'ति सूत्रेणाणो लुकि तित्तिरिणा प्रोक्तमधीयते तैत्तिरीया इति रूपं शाखाध्येतृवाचि सिध्यति । ततो 'गोत्रचरणाद्वुञि'ति सूत्रेण 'तस्येदमि'त्यधिकारपठितेन वुञ् । शाखाध्येतृवाची शब्दश्चरण इत्युच्यते । अयं च वुञ् 'चरणाद्धर्माम्नाययोरि'ति वार्तिकेनार्थविशेषे नियमितः । तथा च तैत्तिरीयाणां धर्म आम्नायो वोभयमपि तैत्तिरीयकम् । एवं वाजसनेयकशब्दोऽपि । वाजमन्नं सनिर्भागोऽस्येति विग्रहे इकारान्तात् वाजसनिशब्दा'दितश्चानिञ' इति सूत्रेण ढकि वाजसनेयेन प्रोक्तमित्यर्थे 'शौनकादिभ्यश्छन्दसी'ति णिनि ततोऽध्येतृप्रत्ययस्य लुकि वाजसनेयेन प्रोक्तमधीयते वाजसनेयिन इति स्थिते 'गोत्रचरणादि'ति वुञ् । शटस्य गोत्रं शाट्यः । गर्गाद्यञ् 'यञिञोश्चे'ति यूनि फक् । शाट्यायनेन प्रोक्तमित्यर्थे प्राग्दीव्यतीयोऽण् । ततोऽध्येतृप्रत्ययस्य लुकि शाट्यायनेन प्रोक्तमधीयते शा-

त्स्यायना इत्येव स्थिते वुञ् । कूधूमिना प्रोक्तमधीयते कौधूमाः । वुञ् । कौधूमकम् । तथा च तैत्तिरीयकादिशब्दा 'श्चरणाद्धर्माम्नाययोरि'ति वार्तिकपर्यालोचनया तत्तच्छाखिधर्मत्वेन प्रवृत्तिनिमित्तेन विद्यानामपि वाचका इत्युपेयमेव । **वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यादिष्विति** । अयमर्थः—' वाजिभ्यो वाजिनमि'ति वाक्यं वैश्वदेव्यामिक्षेति वाक्यप्रतिपाद्यादन्यदेव कर्म विदधाति, उत द्वाभ्यां वाक्याभ्यामेकमेव कर्म विधीयत इति सन्देहे पूर्वः पक्षः—एकमेव कर्मोभयत्र । नन्वामिक्षोत्पत्तिशिष्टा, तद्धितप्रत्ययरूपश्रुत्यवगतविश्वदेवसम्बन्धा च । तथा च प्रबलयामिक्षयावरुद्धे वैश्वदेवयागे कथं वाजिनस्य निवेशस्स्यादिति चेत्, न । अत्र हि वाक्यद्वयेऽपि यागो न श्रुतः, अपि तु कल्पनीयः । तथा चोभयोर्वाक्यैकवाक्यतामुपेत्य लाघवादुभयद्रव्यविशिष्ट एक एव यागः कल्प्यत इति वाजिनामिक्षयोरुभयोरपि तुल्यकालमेव यागसम्बन्धावगमान्नात्रोत्पत्तिशिष्टत्वमामिक्षायाः, वाजिनस्योत्पन्नशिष्टत्वमिति वक्तुं शक्यते । यथाच वाजमन्नमामिक्षा येषां ते वाजिन इति व्युत्पत्त्या वाजिपदोक्तानां विश्वदेवानां वाजिनसम्बन्धो वाक्यीयः, एवं वैश्वदेव्यामिक्षेत्यत्रामिक्षासम्बन्धोऽपि तेषां वाक्यीय एव। पदान्तरोपात्तत्वादामिक्षायाः। यद्यपि विश्वे देवा देवता अस्येति विग्रहवाक्यानुसारात् तद्धितेनाप्यामिक्षाभिधीयते, तथाप्यामिक्षापदसमभिव्याहाराभावेन तद्धितमात्रस्य तस्मिन्नर्थे पर्यवसानं भवति । अत एकस्मिन्नेव यागे आमिक्षावाजिनयोस्समुच्चयो, विकल्पो वेति । सिद्धान्तस्तु वैश्वदेवीति वाक्यविहिते कर्मणि वाजिनस्य विकल्पेन समुच्चयेन वा निवेशासम्भवात् वाजिनद्रव्यको यागोऽन्य एव। तथाहि—यद्यप्यत्र द्रव्यदेवतासम्बन्धानुसारेण यागः कल्पनीयः, तथाप्यवगतो द्रव्यदेवतासम्बन्धो यथोपपद्यते, तथैव कल्पनीयः, न तु तद्विरोधेन । वैश्वदेवीति पदेन च विश्वदेवदेवतोत्पत्तिकाल एवामिक्षावरुद्धा अवगम्यते । आमिक्षापदस्य च केवलस्य श्रुतत्वाद्द्रव्यान्तरनिरपेक्षैव सावगम्यते । नियमपरं च द्रव्यपदम् । अत उत्पत्तिशिष्टामिक्षावरुद्धो देवतासम्बन्धः । न तत्रोत्पन्नशिष्टस्य वाजिनस्य विकल्पसमुच्चयाभ्यां निवेशस्सम्भवति , असहायत्वनियमयोर्बाधापत्तेः । यद्यपि च पदान्तरमपेक्ष्य तद्धितपर्यवसानं, तथापि तेन देवताविशिष्टं द्रव्यमभिधीयत एव । सर्वनाम्नामिव पदान्तरं तु तदभिधेयस्य प्रकृततासम्पादनार्थम् । न चैतावता देवताविशिष्टामिक्षा तद्धितस्याशक्येति वक्तुं शक्यते । अतो वैश्वदेव्यामिक्षेति वाक्यावगतद्रव्यदेवतासम्बन्धानुसारेण कल्प्यो यागः केवलया नियमितया मिक्षयावरुद्ध एव कल्प्यत इति तत्रासम्भवन्निवेशो वाजिनगुणस्स्वनिवेशयोग्यं कर्म भिनत्ति । ननु, यद्यप्युत्पत्तिशिष्टामिक्षा श्रौती च, तथापि वचनानुसारेण तां बाधित्वा वाजिननिवेशो भवेदेव । वाजिपदेनामिक्षाविशिष्टान्विश्वदेवाननूद्यैव वाजिनस-

म्बन्धविधानात् । सति वचने श्रौतोत्पत्तिशिष्टप्राबल्यन्यायानवतारात् । न च वाजिपदं योगेन विश्वान् देवान् प्रतिपादयति, रूढ्या अश्वम् । अतो रूढिप्राबल्याद्वाजिपदं न विश्वदेवप्रतिपादकमिति वाच्यम् । रूढिमपेक्ष्यापि उपस्थितयोगस्य प्रबलत्वात् । अतो न कर्मभेद इति चेत्, उच्यते—यद्यपि वाजिपदं विश्वदेवप्रतिपादकं, तथापि न पूर्ववाक्यावगतामिक्षाबाधः । कर्मान्तरविधौ अबाधेनैव वाक्यद्वयप्रवृत्तिसम्भवे बाधकल्पनानवतारात् । आमिक्षाया नित्यत्वनिरपेक्षत्वे च निरवकाशे । 'वाजिभ्यो वाजिन'मिति वाक्यं तु कर्मान्तरविधिनापि सावकाशम् । अतोऽपि न बाधः पूर्ववाक्यस्य । न चात्रोपस्थितत्वमात्रेण योगस्य प्राबल्यम् । असति निर्वचने क्लिष्टयोगस्योपस्थितस्यापि हेयत्वात् । न ह्यत्र मण्डपानकर्तृत्वं मण्डपपदमिव वाजिनपदमामिक्षाविशिष्टान् विश्वदेवान् क्लेशेन प्रतिपादयति । तस्माद्वाजिपदोद्देश्याश्वदेवताकं वाजिनद्रव्यकमन्यदेव कर्मेति । **केचिच्छाखिन इति** । वाजसनेयिनां छन्दोगानां च द्युपसर्जन्यपृथिवीपुरुषयोषितोऽग्नयस्समाना एव । वाजसनेयिनां तु अन्योऽग्निरपि 'तस्याग्निरेवाग्निरि'त्यादिना पुनराम्नायते । न च तस्य छान्दोग्य उपसंहारस्सम्भवति । 'अथ ह य एवमेतान् पञ्चाग्नीन् वेदे'ति पञ्चत्वसङ्ख्याविरोधात् । ततश्च छान्दोग्यगतायां पञ्चाग्निविद्यायामसम्भवन्निवेशेन षष्ठाग्निना वाजसनेयकगता विद्या भिद्यते । एवं प्राणविद्यायामपि वाजसनेयिनां छन्दोगानां च वाक्चक्षुश्श्रोत्रमनोरूपाश्चत्वारः प्राणास्समाना एव । परं तु वाजसनेयके रेतोरूपोऽधिकः प्राण आम्नायते । यद्यपि चात्रोपसंहारोपगमेन विद्यैक्यं वक्तुं शक्यं, तथापि पुनरुक्तिदोषपरिहाराय विद्याभेदे स्वीकर्तव्ये तदुपष्टम्भकतया प्राणविद्यायां रूपभेदोऽप्युपन्यस्त इति द्रष्टव्यम् । धर्मविशेषः अङ्गविशेषः । आशङ्कितः शाखान्तराधिकरणपूर्वपक्षसूत्रे । **कारीर्यादिष्विति** । कारीरिवाक्यान्यधीयानास्तैत्तिरीयाः भूमौ भोजनमाचरन्ति । नाचरन्त्यन्ये । तथाग्निमधीयानाः केचिच्छाखिनः उपाध्यायस्योदकुम्भमाहरन्ति । नाहरन्त्यन्ये । एते च धर्माः अध्ययनद्वारा तत्तच्छाखोक्तधर्मोपकारकतया पर्यवस्यन्ति । एवंसति शाखाभेदेन कर्मभेद उपगन्तव्यः । अन्यथा ह्येकस्मिन्नेव कर्मणि भूभोजनादिजन्योपकारापेक्षानपेक्षेति विरुद्धमापद्येत । **आथर्वणिकानामिति** । 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमि'ति आथर्वणिकानामक्षरविद्यायां शिरस्यङ्गारपात्रधारणाख्यं शिरोव्रतमाम्नातम् । अन्येषां तु नाम्नातम् । अतो भवेच्छाखाभेदेन निर्विशेषविषयाया अप्यक्षरविद्याया भेद इति शङ्का । न च शिरोव्रतस्य वाजसनेयिभिरुपसंहारश्शक्यः । तस्य आथर्वणिकमात्राधिकारित्वात् । **एवं पुनरुक्त्यादयो भेदहेतव इति** । पुनरुक्तिरभ्यासः । यथा 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'ति । अत्र सन्देहः—

किं पञ्चभिरेतैर्वाक्यैः एकमेव कर्म विधीयते, उत प्रत्याख्यातं भिन्नं भिन्नं कर्म विधीयत इति । तत्र पूर्वपक्षः—यथा हि यजति जुहोति ददातीति भिन्नप्रवृत्तिनिमित्तधातुबलात् प्रत्ययप्रतिपाद्याया भावनाया विशेषणीभूतधात्वर्थभेदात् भेदो भवति, नैवमत्र भेदः भावनाया वक्तुं शक्यते । सर्वत्र यजतिधातोरेव श्रवणात् । तथा च प्रत्यभिज्ञया पञ्चस्वपि वाक्येष्वेकमेव कर्म । न च एकेनैव वाक्येनैकस्य कर्मणो विधानसम्भवात् वाक्यान्तरवैयर्थ्यपरिहाराय कर्मभेद उपगन्तव्य इति वाच्यम् । पूर्ववाक्यविहितकर्मानुवादेनोत्तरवाक्यानां स्तावकतया वैयर्थ्याभावात् । न च पूर्ववाक्यं विधायकम्, उत्तरवाक्यान्यनुवादकानीत्यत्र विनिगमनाविरहः । स्वाध्यायविधिपरिगृहीतपाठक्रमानुसारेण पूर्वाम्नातवाक्यार्थावगमदशायां प्राप्तत्वाभावेन विधिशक्तिकुण्ठनाभावात् उत्तरवाक्यार्थावगमकाले पूर्ववाक्यतः प्राप्तिसम्भवेन विधिशक्तिकुण्ठनात् । अतो मन्त्रवर्णप्राप्तदेवतानुवादेनोत्तरवाक्यानि स्तावकानि, पूर्ववाक्यं तु समिन्नामककर्मविधायकमिति । सिद्धान्तस्तु—सर्वत्र विधिस्वारस्यात् तादर्थ्यसम्भवे नानर्थप्रायस्तुतिपरत्वं कल्पयितुं शक्यम् । सम्भवति चात्र प्रत्यभ्यासं कर्मभेदाभ्युपगमेन विधिः । न चात्र भेदकासम्भवः । प्रकृत्यर्थस्य एकरूपत्वादिति वाच्यम् । विधेरेव भेदकतासम्भवात् । प्रथमतो ह्येतावदवगतं—पूर्ववाक्यप्रतिपाद्यस्यैव पुनरुत्तरवाक्येन प्रतिपादने 'अग्निहोत्रं जुहोती'ति वाक्यप्रतिपाद्यस्यैव दध्ना जुहोतीत्यादिवाक्येन प्रतिपादने गुणविधिलाभवदिह कस्यचिदर्थस्यालाभाद्वाक्यसार्थक्याय पूर्ववाक्यप्रतिपाद्यात् कर्मणः उत्तरवाक्यप्रतिपाद्यं कर्म विजातीयमेवेति । ततश्च तद्वैजात्याभिव्यञ्जकं किमित्यपेक्षायां तत्तद्वाक्यार्थव्यवस्थितेतिकर्तव्यताविशेषबोधकैर्वाक्यैस्तन्निर्धारणं भवतीत्यनन्यप्रयोजनवाक्यावृत्तौ कर्मभेद एव । तथा च शाखाभेदेन पञ्चाग्निविद्यायाः प्रतिपादनस्य निष्प्रयोजनत्वापत्त्याभ्यासात् भेद एवोपेयः । पुनरुक्त्यादयइत्यादिशब्देन समाप्त्यशक्त्यन्यार्थदर्शनानि गृह्यन्ते । तथाहि— छान्दोग्ये प्रणवोपासनसमाप्तिः 'ओङ्कार एवेदं सर्वमि'त्यनेन व्यवह्रियते । माण्डूक्ये तु 'ओमित्येतदक्षरं सर्वमि'ति सार्वात्म्यं प्रतिपाद्य पुनश्च कांश्चित् गुणान् प्रतिपाद्यानन्तरं समाप्तिर्व्यवह्रियते । उभयत्र च विद्यैक्ये सति माण्डूक्याम्नातानामन्येषां गुणानां छान्दोग्ये उपसंहारावश्यम्भावात् सार्वात्म्यान्त एव समाप्तिव्यवहारो विरुध्येत । यदि च सर्वासु शाखासु विद्यैक्यं भवेत, तदा सर्वशाखाध्ययनपूर्वकं तत्तच्छाखाम्नातगुणावधारणेनैवानुष्ठानं वक्तव्यं । न चैतच्छक्यते । सर्वशाखाध्यनपूर्वकं कृत्स्नगुणावधारणस्य पुरुषायुषेणाप्यसम्भवात् । अतोऽशक्तेरपि शाखाभेदेनोपासनाभेदः । तथान्यार्थदर्शनमपि 'नैतदचीर्णव्रतोऽधीत' इति वाक्येनाथर्वणोपनिषच्छ्रीर्णशिरोव्रतेनैवाध्ययनं कर्तव्यमित्यवगम्यते । अन्यासां

तु शाखानां तदभावेऽप्यध्ययनमवगम्यते । न चैतत्सर्वशाखासु विद्यैक्य उपपद्यते । न हि सैवोपासना चीर्णव्रताध्ययनपूर्वकमेव गृहीता सती फलं प्रयच्छति, तदभावेऽपि फलं प्रयच्छतीति युक्तम् । अतश्चीर्णव्रताध्ययनपूर्वकमनुष्ठीयमाना विद्या शाखान्तरविहितविद्यातो भिन्नत्येवोपेयम् । 'सर्ववेदान्तप्रत्ययमि'ति सिद्धान्तसूत्रे प्रत्ययपदं कर्मसाधनम् । तथा च सर्ववेदान्ते प्रतीयमानानि विज्ञानान्यनूद्य एकवचनसामर्थ्यादवगतमेकत्वं विधीयत इति सिद्धान्तप्रतिज्ञालाभमभिप्रेत्याह—**सर्ववेदान्तप्रत्ययानीति** । सर्वास्वपि शाखासु वैदिकानां 'तदेवेदं कर्म, तदेवेदमुपासनमि' ति प्रत्यभिज्ञाबलादेकत्वं सिध्यतीति वक्तव्यम् । तत्र प्रत्यभिज्ञाजनकं चोदनाद्यैकरूप्यम् । तत्र चोदना प्रतिपादकश्शब्दः, अर्थसंयोगः प्रयोजनसम्बन्धः, रूपं कर्मसु अग्निहोत्रादिषु द्रव्यादिकम्, उपासनासूपास्यम्, आख्या नामैतेषामैकरूप्यं प्रत्यभिज्ञाजनकम् । अथ वा चोद्यत इति चोदना प्रयत्नः, तस्यैकरूप्यं तुल्येन शब्देन प्रतिपाद्यत्वम् । तदभिप्रेत्याह—**यथैकस्मिन्नग्निहोत्र इति** । एवं चोदनाद्यैकरूप्यसिद्धप्रत्यभिज्ञाबलेन सर्वासु शाखासु अग्निहोत्राद्यैक्यवद्विद्यानामपि ऐक्यमिति सिद्धान्तं साधयित्वा पूर्वपक्ष्युद्भावितान् भेदहेतून् निराकरोति—**ये तु नामरूपादय इति** । 'न नाम्ना स्याचोदनाभिधानत्वादि'ति शाखान्तराधिकरणसिद्धान्तसूत्रान्तर्गतं कौथुमककाठकादिनाम्नामग्निहोत्रादिभेदकतानिराकरणार्थं सूत्रम् । कौथुमकवाजसनेयकादिनाम्ना भेदो न स्यात् । तस्य चोदनाभिधानत्वात् शाखानामत्वात् । ननु 'चरणाद्धर्माम्नाययोरि'ति वार्तिकानुसारेण कर्मनामत्वमपि तस्योक्तमिति चेत्, न । 'अनेकमन्यपदार्थे' इत्यन्यपदार्थे बहुव्रीह्यनुशासनस्येवास्यापि लाक्षणिकार्थपरत्वात् । अस्तु वा कर्मनामत्वं, तथापि ज्योतिरादिनामवदस्य न भेदकतोपपद्यते । ज्योतिरादिनामान्युत्पत्तिविधिगतानि प्रथमत एव भिन्नतया कर्मावगमयन्ति । तैत्तिरीयकादिनामानि तु श्रुतिबहिर्भूतान्यध्यापकसंप्रदायागतानि न कर्मण उत्पत्तिसमय एव भेदमवगमयन्ति, अपि तूत्पत्तिविधिप्रत्यभिज्ञावधृतैक्ये कर्मणि पश्चान्निपतन्ति न प्रथमावगतमैक्यं बाधितुमुत्सहन्ते । एवं च 'न नाम्ना स्यादचोदनाभिधानत्वादि'ति पाठः क्वचित् कोशे दृश्यमानोऽस्मिन्नर्थे योज्यः । अचोदनाभिधानत्वादुत्पत्तिचोदनागताभिधानत्वाभावादिति । यथा च तैत्तिरीयकादिनाम्नां न कर्मभेदकत्वम्, एवं विद्याभेदकत्वमपि नास्ति । अपि च यदि तैत्तिरीयकादिनामभेदात् विद्याभेदो वा, कर्मभेदो वोपेयेत, तथासति तच्छाखागतानां कर्मणां विद्यानां च तैत्तिरीयकादिनामाभेदात् अभेदोऽपि स्यात् । तत्र चेच्छब्दान्तराद्यवगतभेदानुसारेण नामैक्यं बहूनामुपगम्यते, चोदनाद्यविशेषावगतैक्यानुसारेणैकस्य बहुनामत्वमप्युपगन्तुं न्याय्यम् ॥ १ ॥

रूपभेदात् पञ्चाग्निविद्या च्छान्दोग्यवाजसनेयकयोः भिद्यत इति यत्पूर्वपक्षिणोक्तं, तत्परिहारार्थं सूत्रमवतारयति—इहापीति ।

## भेदान्नेति चेन्नैकस्यामपि ॥ २॥

**यद्यपि षष्ठस्याग्नेरित्यादि** । अत्र भाष्ये छान्दोग्यवाजसनेयकयोर्द्युपर्जन्यादीनां पञ्चानामग्नीनां प्रत्यभिज्ञानात् विद्यैक्ये सिद्धे सति षष्ठस्याग्नेष्षोडशिग्रहणाग्रहणवत् विकल्पो भविष्यति, परं तु स व्यवस्थितः—वाजसनेयिनां षडग्नयः, छन्दोगानां तु नेति । ततश्च छान्दोग्यगतस्य 'अथ य एवमेतान् पञ्चाग्नीन्वेदे'ति पञ्चसङ्ख्याम्नानस्य न विरोध इत्येकः प्रकारः प्रदर्शितः । 'पठ्यतेऽपि चे'त्यादिवाक्येन छान्दोग्येऽपि श्मशानाग्निरुपास्यत्वेनाम्नात इत्युभयत्रापि षडग्न्युपासनमेवेति पक्षान्तरं दर्शितम् । 'वाजसनेयिनस्तु साम्पादिकेषु' इत्यादिना छान्दोग्ये वाजसनेयके च पञ्चैवाग्नय उपास्यत्वेन प्रतिपाद्यन्ते । छान्दोग्ये 'तं प्रेतं दिष्टमि'ति षष्ठाग्निप्रतिपादनं वाजसनेयके तस्याग्निरेवाग्निरित्यादिप्रतिपादनं चानुवादमात्रमिति पक्षान्तरं दर्शितम् । ननु, यदि षष्ठस्याग्नेर्नोपास्यत्वं, कथं तर्हि तस्याग्निरेवाग्निरित्यादिना तत्रापि समिदादिकं वाजसनेयके समाम्नातमित्याशङ्क्याह—**साम्पादिकेष्विति** । सम्पत् आरोपः, तेन कल्पितास्साम्पादिकाः द्युलोकाद्योऽग्नयः । तथा च तस्याग्निरेवाग्निरित्यादिना प्रसिद्धानामेवाग्न्यादीनामग्नित्वादिप्रतिपादनमिह द्युलोकादिष्विवोपासनोपयुक्तमग्न्यादिकं नास्तीति द्योतनाय । अतोऽयं नोपास्य इति श्रुतितात्पर्यमिति भावः । 'पठ्यतेऽपि चे'ति वाक्येन य उभयत्रापि षडग्नय उपास्या इति पक्षो दर्शितः, तत्राभिमतिं द्योतयन् अमुं पक्षं समर्थयते—**अथाप्युपासनार्थ इति** । विकल्पपक्षस्तावत् अष्टदोषदुष्टतया न समञ्जसः । अनुवादपक्षोऽपि व्यर्थतादोषग्रस्त इति भावः । **न विधिसमवायिनीत्यदोष इति** । ननु, पञ्चाग्निविद्यायां स्पष्टो विधिर्नोपलभ्यते । अपि 'त्वसौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिदि'ति सिद्धवदाम्नानानुसारेण विधिरुन्नेयः । तथा च 'अथ य एतान् पञ्चाग्नीन् वेदे'ति पञ्चत्वसङ्ख्याकीर्तनानुसारेण तद्विशिष्टानामेवाग्नीनामुपास्यत्वविधिरुन्नीयतामिति चेत्, न । वाजसनेयके तस्याग्निरेवाग्निरित्यादिना षष्ठस्याग्नेरपि आम्नाततया तस्याप्यग्नेरुपास्यत्वावश्यम्भावे पञ्चत्वसङ्ख्यायाः अविधेयत्वोन्नयनात् । अतस्सा कल्पिताग्न्यभिप्रायानूद्यत इत्येवोपगन्तव्यमिति भावः । 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेदे' त्यादिनाम्नातायाः प्राणविद्यायाः छान्दोग्यवाजसनेयकयोः प्रत्यभिज्ञयैक्ये सति रेतोरूपः प्राणो वाजसनेयक आम्नातः छान्दोग्ये उपसंहर्तव्य इत्याह—**एवं प्राणसंवादादिष्वपीति** ॥ २ ॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥

समाचारशब्दः आथर्वणिकानां वेदाध्ययनाङ्गव्रतोपदेशपरग्रन्थनाम। तस्मिन् ग्रन्थे तथात्वेनाध्ययनाङ्गव्रतत्वेन शिरोव्रतस्याम्नानात् स्वाध्यायस्याध्ययनस्य अङ्गं शिरोव्रतमिति 'स्वाध्यायस्य तथात्वेन समाचार' इति सूत्रांशं योजयति—**स्वाध्यायस्यैष धर्म इति**।'स्वाध्यायधर्मत्वप्रतिज्ञायामेवाधिकाराच्चे'ति हेत्वन्तरम्। तद्व्याचष्टे—**नैतदचीर्णव्रतोऽधीत इति चेति**। ननु, 'नैतदचीर्णव्रतोऽधीत' इति वचनानुसारेण समाचारग्रन्थगते'दमपिवेदव्रतत्वेनव्याख्यातमि'तिवचनानुसारेण च भवतु शिरोव्रतस्याध्ययनाङ्गत्वम्। इदमेवाथर्वणवाजसनेयकगताक्षरविद्याया एकत्वे नोपपद्यते। न ह्येकैव विद्या शिरोव्रतयुक्ताध्ययनगृहीता सती फलजननसमर्था, तदभावेऽपि फलजननसमर्थेति विरुद्धरूपान्वयिनी शक्योपगन्तुम्। यदि तु आथर्वणिकानां शिरोव्रतविशिष्टाध्ययनपूर्विकैव फलवती विद्या, 'अन्येषां तु तदभावेऽपी'ति व्यवस्थितविकल्पाभ्युपगमान्न विरोधः, तदापि 'तेषामेवैतां ब्रह्मविद्यां वदेते'ति वाक्येन साक्षाद्ब्रह्मविद्याङ्गत्वमेव तस्यावगम्यते। अतः कथं विद्यैक्यमिति शङ्कते—**नन्विति**। **सङ्कीर्येतेति**। न सङ्करः शक्यते उपगन्तुम्। शिरोव्रतस्याथर्वणिकमात्राधिकारिकत्वात्। अतो विद्याभेद एव विरोधपरिहारायोपगन्तव्य इति भावः। **ग्रन्थविशेषापेक्षमिति**। तथा चाथर्वणोपनिषत्प्रतिपाद्यत्वेनैव रूपेण शिरोव्रतस्य ब्रह्मविद्याङ्गत्वं, न स्वरूपेणेति पर्यवस्यति। एवं चैतदुपनिषदध्ययनोपायाम् अक्षरविद्यां ये सम्पादयन्ति, तेषामेव शिरोव्रतापेक्षा, नान्येषामिति न सर्वेषां तदपेक्षा। अतो न विद्याभेदः। एकस्यामेव विद्यायां शिरोव्रततदभावयोः व्यवस्थयोपपत्तेः। शिरोव्रतमाथर्वणिकानामेव, नान्येषामिति व्यवस्थापि तस्याध्ययनविशेषसंयोगादेव उपपादनीयेत्यभिप्रेत्याह—**तथैवायमपि धर्म इति**। इयता प्रबन्धेन विद्याभेदकतया पूर्वपक्ष्युद्भावितेषु नामरूपधर्मविशेषपुनरुक्तिसमाप्तिभेदान्यार्थदर्शनाशक्तत्वेषु नामरूपधर्मविशेषान्यार्थदर्शनानि परिहृतानि। समाप्तिभेदोऽपि न विद्याभेदसाधकः। छान्दोग्यमाण्डूक्यादिषु प्रणवसार्वात्म्यादिना समाप्तिव्यवहारोऽस्यां शाखायामेतावन्त्येवाङ्गानीत्यभिप्रायः, न त्वस्या उपासनाया एतावन्त्येवाङ्गानीत्यभिप्रायः। शाखाभेदेन पुनरुक्तिरपि न भेदापादिका। अभ्यासाधिकरणे अनन्यप्रयोजनायाः पुनरुक्तेरेव भेदसाधकतोपगमात्। शाखाभेदे तु 'स्वाध्यायोऽध्येतव्य' इति विधौ स्वशब्दोपादानेन पितृपितामहादिपरम्परागतशाखाध्ययनेनैव तस्य विधेश्चरितार्थतया शाखान्तराध्ययने नियमाभावात् शाखाभेदेन पुनःपुन

राम्नानस्य तत्तच्छाखाध्यायिपुरुषबोधनोपयुक्ततया निष्प्रयोजनत्वाभावात् । अत एवाशक्तिरपि नास्ति । यदि हि सर्वशाखाध्ययनपूर्वकमेवाङ्गजातमवगन्तव्यमिति निर्बन्धो भवेत्, तदा सर्वशाखाध्ययनस्य कर्तुमशक्यतया सकलाङ्गोपसंहारेणाशक्यं विद्यैक्ये अनुष्ठानं भवेत् । तत्तु नास्त्येवेत्युक्तम् । अतस्स्वशाखोक्तान्यङ्गान्यध्ययनपूर्वकं ज्ञात्वा शाखान्तरोक्तान्यङ्गानि तत्तच्छाखाध्यायिभ्यो वा महर्षिप्रणीतकल्पविशेषेभ्यो वाङ्गान्तराणि ज्ञातुं शक्यन्त एव । अतो विद्यैक्ये न काचिदनुपपत्तिः ॥ ३ ॥

## दर्शयति च ॥ ४ ॥

**सर्ववेदान्तेषु विद्यैकत्वोपदेशादिति** । ननु, सर्वेषु वेदेषु वेद्यैकत्वप्रतिपादनं विद्यैक्ये कथं लिङ्गम्? इत्थं—यथा ह्येकस्यैव ब्रह्मणश्शाखाभेदेनाम्नानेऽपि पुनरुक्तिर्दोषाय न भवति । बोद्धृपुरुषभेदात्, एवं विद्यैक्येऽपि न पुनरुक्तिर्दोषायेति दृष्टान्तविधया वेद्यैक्यं विद्यैक्यावगमकं भवति । **सिद्धवदुपादानमिति** । तद्ध्युपसंहारं द्योतयत् विद्यैक्यं द्योतयति । वाजसनेयकगतस्य प्रादेशमात्रत्वस्य छान्दोग्ये उपसंहाराभावे सिद्धवदुपादानानुपपत्तेः । **प्रायदर्शनन्यायेनेति** । यथा शाखाभेदेऽप्युक्थ्यादीनां न भेदः, एवमुक्थ्यादिसन्निधौ समाम्नातानामुपासनानामपि न शाखाभेदेन भेदः ॥ ४ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

**इदं प्रयोजनसूत्रमिति** । विद्यैक्ये सत्यर्थसिद्धे उपसंहारे पुनस्सूत्रकरणं शङ्काविशेषनिवर्तनाय । अत्रेयं शङ्का—अस्तु शाखाभेदेन दहरशाण्डिल्यादिविद्यानामैक्यम् । अथापि शाखान्तरोक्ता गुणा अन्यत्र नोपसंहरणीयाः । यदि हि शाखान्तरोक्तानां गुणानां शाखान्तरे उपसंहारश्श्रुतिसम्मतो भवेत्, तदा एकस्यां शाखायां ये गुणाः उक्ताः, तेषु मध्ये कमपि गुणं शाखान्तरे तस्यामुपासनायां न प्रतिपादयेत्, उपसंहारसम्भवात्, अपि त्वन्यत्रानुक्तानेव गुणान् प्रतिपादयेत् । तथा च सम्भवदुपसंहाराणामपि गुणानां प्रतिपादनमनुपसंहारं द्योतयति । न च शाखान्तरोक्तानामपि गुणानामनुपसंहारे सर्वाङ्गजन्योपकाराभावात् विद्या फलवती न भवेत् । विनियोगानुसारेण तेषामपि गुणानामुपकारकत्वावगमादिति वाच्यम् । पुनराम्नानानुसारेणैवं कल्प्यते—यस्यां शाखायां यावन्तो गुणा आम्नाताः, तच्छाखिनां तस्यामुपासनायां तावद्भिरेव गुणैरखण्डोपकारनिष्पत्तिरिति । अपि च

शाखान्तरोक्तगुणानामुपसंहारे अस्यां शाखायां येन क्रमेण गुणा अनुसन्धेया इत्याम्नानतोऽवगम्यते, स क्रमोऽपि बाधितस्स्यात् । गुणान्तरावापे क्रमवैपरीत्यावश्यंभावात् । अतो विद्यैक्येऽपि नोपसंहार इति । अत्रायं परिहाराभिप्रायः—शाखान्तरोक्तानामेव गुणानां शाखान्तरे पुनराम्नानं नोपसंहाराभावं गमयति । तद्धि शाखान्तराम्नातविद्याप्रत्यभिज्ञाद्वारा विद्यैक्यगमकम् । अतस्तदभावे विद्यैक्यस्यैवाज्ञानेन गुणोपसंहारासम्भवात् न सम्भवत्प्राप्तिकं तदाम्नानम् । अपि क्रमविरोधादनुपसंहारः । क्रमो हि पाठक्रमाख्यसन्निधिविशेषप्रमाणकः पदार्थधर्मश्च । गुणास्तु शाखान्तरगतश्रुत्यादिप्रमाणकाः क्रमधर्मिणश्च । अतो गुणोपसंहारानुसारेण क्रमबाध एव न्याय्य इति । ननु, कर्मभेदेऽपि दर्शादिगतानामङ्गानां पश्वादिषु प्राप्तिर्दृष्टा । एवं विज्ञानानां भेदेऽपि अन्यदीया गुणा अन्यत्र प्राप्यन्तामित्यत आह—**प्रकृतिविकारेति** । यत्र हि श्रुत्यादिप्रमाणकः प्रकृतिविकारभावो भवति, तत्रान्यस्या अपि प्रकृतेर्धर्माः विकारे भवन्ति । विज्ञानानां तु न तथा प्रकृतिविकारभावः । मानसप्रत्ययविशेषाणां तेषामाम्नातैरेव गुणैरनुष्ठानस्य कर्तुं शक्यतया इतिकर्तव्यताकाङ्क्षाराहित्येन तन्मूलचोदनालिङ्गादिकल्प्यातिदेशाप्रवृत्तेरिति भावः । **अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्च इति** । शङ्काविशेषनिराकरणेनेति भावः ॥५॥

इति उपसंहाराधिकरणम् ॥३॥

# अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥

अधिकरणद्वयेन सप्रयोजनं निरूपितस्य विद्यैक्यस्यात्रापवादः क्रियत इति सङ्गतिः । देवाः सात्त्विकावस्थानि चक्षुरादीन्द्रियाणि, असुरान् राजसतामसावस्थानीद्रियाणि । वाजसनेयके 'देवाश्चासुराश्च त एषु लोकेष्वस्पर्धन्ते'ति देवासुरशब्दोदितानामिन्द्रियाणां कलहमुपक्रम्य 'हन्तासुरान् यज्ञ उद्गीथेनात्ययामे'ति उद्गीथाश्रयणेनासुरात्ययाभिप्रायं च देवानां प्रदर्श्य त्वन्न उद्गायेत्येवंरूपेण वाग्घ्राणचक्षुश्श्रोत्रमनसामुद्गातृत्वेन नियोगे तैस्तथेति प्रतिज्ञापूर्वकमौद्गात्रकर्मकरणे च प्रतिज्ञाते तदारम्भे च सति असुराणां तच्चेष्टावगमात्तैर्वागादयोऽसुरपाप्मना अप्रतिरूपवदनादिना विद्धा इति वागादीन्निन्दित्वा अथ हेममासन्यमास्ये भवं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायदिति प्राणस्योद्गातृत्वप्रार्थने तेन चाङ्गीकृते पुनः प्राणं प्रत्यपि वागादिवदेव पाप्मवेधाभिप्रायमात्रेणासुराणां स यथा श्मशानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुरित्यश्मलोष्टनिदर्शनेनासुरविध्वंसनं च प्रतिपाद्य 'ततो देवा अभवन् परासुरा' इति प्राणाश्रयाद्देवैरसुराः पराभूता इति प्रतिपादितम् । छान्दोग्येऽपि 'देवासुरा हवै यत्र संयेतिर'

इत्यादिना इन्द्रियसङ्ग्रामाद्युपवर्णनं वाजसनेयकवदेव सर्वं कृतं, परं तु तत्र वागादयो नोद्गातृत्वेनाम्नाताः, अपि तूद्गीथत्वेन। तेषां चासुरपाप्मवेधेन निन्दापूर्वकं मुख्यप्राणस्याप्युद्गीथत्वमेवाम्नातम् । 'अथ ह य एवायं मुख्यः मुखे भवः प्राणस्तमुद्गीथमुपासाञ्चक्रिर' इति । आख्यायिकातात्पर्यमाह—**उभयत्रापि चेति** । छान्दोग्ये उद्गीथालम्बनं प्राणोपासनमवगम्यते, वाजसनेयके उद्गात्रालम्बनमिति तु विशेषः । 'अन्यथात्वं शब्दादिति चे'दित्यन्तस्सूत्रांशस्सिद्धान्त्याक्षेपप्रदर्शनार्थः । तं व्याचष्टे—**ननु न युक्तमित्यादिना।** नाविशेषादित्यंशस्तन्निराकरणेन पूर्वपक्षप्रदर्शनार्थः । तं व्याचष्टे—**नैष दोष इति । अविशेषस्यापि बहुतरस्येति** । ननु, बहुतरांशप्रत्यभिज्ञानेन उद्गीथालम्बनत्वोद्गात्रालम्बनत्ववैषम्यं बाधनीयम् । भूयोऽनुग्रहस्य न्याय्यत्वादिति पूर्वपक्ष्यभिमतं न समीचीनम् । यत्र हि समकक्ष्याणामेव भूयस्त्वाल्पत्वं, तत्रैव भूयोऽनुग्रहन्यायः । अत्र तु स्तुत्युपयोगितया अर्थवादोपात्तानामेव भयसामर्थ्यानां प्रत्यभिज्ञा। उपास्यस्य तु प्रधानस्योद्गीथस्य उद्गातुश्च नास्ति प्रत्यभिज्ञा, अपि तु वैषम्यात् प्रत्यभिज्ञाविच्छेद एवेति उपास्यभेदादवगम्यमानं विद्ययोर्भिन्नत्वं नार्थवादावगतार्थसादृश्येन हातुं शक्यमिति चेत्, न। उपास्यस्याप्युभयत्र प्रत्यभिज्ञानात् । छान्दोग्ये वाजसनेयके चोभयत्रापि हि प्राणांशेनास्त्युपास्येऽपि प्रत्यभिज्ञानम्। उद्गीथांशेनापि प्रत्यभिज्ञानमाह—**वाजसनेयकेऽपि चेति।** तथा च विद्यैक्ये सति वाजसनेयके उद्गीथोद्गात्रोस्समुच्चयाच्छान्दोग्येऽप्युद्गात्रुपसंहारेण समुच्चयो द्रष्टव्यः ॥६॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥

अयमत्र सिद्धान्ताभिप्रायः—यद्यप्युपास्यांशेऽपि प्राणमादायास्ति प्रत्यभिज्ञानं, तथापि नात्र प्राणस्य प्राधान्येन उपास्यत्वम्, अपि तु प्राणदृष्ट्या कर्माङ्गयोरेव उद्गीथोद्गात्रोरुपास्यत्वम्। यथा चैतत्, तथा 'आदित्यादिमतयश्चाङ्ग उपपत्ते' रितिचातुर्थिकाधिकरणे स्पष्टं भविष्यति। ततश्चाप्रधानप्राणांशमादाय प्रत्यभिज्ञानं नाभेदसाधकम् । प्रधानोपास्यांशमादाय प्रत्यभिज्ञाविच्छेदेन भेदावगमात् । यदपि पूर्वपक्षिणोभयत्राप्युद्गीथस्योपास्यत्वावगमादभेदो विद्ययोरित्युक्तं, तदपि न सम्भवति । छान्दोग्ये ह्युद्गीथावयव ओङ्कार उपास्यः, वाजसनेयके तु नावयवलक्षणायां प्रमाणमस्तीति प्रतिपादयितुं छान्दोग्यगतमुपक्रममनुसन्धत्ते—**छान्दोग्ये तावदिति। उद्गीथावयवस्योङ्कारस्येति** । एतच्चोत्तराधिकरणे स्पष्टं भविष्यति । ननु 'ओमित्येतदक्षरमुद्गीथमुपासी' तेति वाक्ये उद्गीथपदमवयवलक्षणयोङ्कारपरमस्तु। अक्षरपदसामानाधिकरण्यात् । 'प्राणमुद्गीथमुपासाञ्चक्रिर' इ-

त्यत्र तूद्गीथपदस्योङ्कारपरत्वे किं नियामकमित्याशङ्क्योमित्येतदक्षरमिति वाक्यप्रस्तुत एवोङ्कारे रसतमत्वापयितृत्वसमृद्धिगुणकान्युपासनान्युक्त्वाऽनतिवृत्ताधिकारमेवोङ्कारं 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'ति पुनः परामृश्य 'प्राणमुद्गीथमुपासाञ्चक्रिर'इति वाक्यप्रवृत्तेरत्रोद्गीथशब्द ओङ्कार एवेति निर्धार्यत इत्यभिप्रेत्याह—**रसतमत्वादीति** । एवं वाजसनेयके उद्गीथस्योपास्यत्वप्रतिपादनेऽपि सकलैव तत्र भक्तिर्गृह्यत इति वैषम्यं प्रतिपाद्य तत्रोद्गीथस्य प्राणदृष्ट्योपास्यत्वमेव नास्तीत्याह–**यदपीति**। 'एष ह वा उद्गीथ' इति वाक्यं न प्राणदृष्ट्योद्गीथस्य उपास्यत्वं प्रतिपादयति। अपि तूपक्रमानुसारेणोद्गातरि द्रष्टव्यत्वेन प्रस्तुतस्य प्राणस्य 'यथा सोयास्याङ्गिरस' इत्यादिभिर्वाक्यैरयास्याङ्गिरसत्वं बृहस्पतित्वं ब्रह्मणस्पतित्वं सामत्वमित्येवमादयो गुणाः प्राणस्य सर्वशरीरव्याप्तिरूपसर्वात्मत्वालम्बनाः प्रतिपादिताः, तद्वदुद्गीथत्वमपि प्राणस्य प्रतिपादयति । अत एव वाक्यशेषे उद्गीथशब्दस्य निर्वचनं प्राण एव दर्शितं – 'प्राण एवोत् प्राणेन हीदं सर्वमुत्तब्धं वाग्गीथोच्च गीथा चोद्गीथ' इति। ननु, 'एष ह वा उद्गीथ' इति वाक्यपर्यालोचनया मा स्तूद्गीथस्योपास्यत्वं, 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामे'त्युपक्रमानुरोधादुद्गीथस्योपास्यत्वसिद्धौ 'अथ हेममासन्यं प्राणमूचुस्त्व न उद्गाये'ति वाक्ये कर्तृप्रतिपादकमुद्गायेतिपदमुद्गानकर्मण्येवोद्गीथे सौकर्यातिशयविवक्षया भविष्यतीत्याशङ्क्याह–**सकलभक्तिविषय च एव तत्राप्युद्गीथशब्द इति**। अस्तूक्तगत्या वाजसनेयकेऽप्युद्गीथस्योपास्यत्वं, तथापि छान्दोग्य ओङ्कार उद्गीथावयव उपास्यः, वाजसनेयके तु कृत्स्न इत्यस्ति भेदः। वस्तुतस्तु 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामे' त्यत्रोद्गीथस्य न प्राणदृष्ट्योपास्यत्वमवगम्यते । अपि तु प्रकृतोपासनाफलभूतासुरात्ययसाधनत्वमात्रमवगम्यते । तत्तु प्रकृतोपासनाया यज्ञान्तर्गतौद्गात्रकर्ममध्ये कर्तव्यतयाश्रयत्वेनोद्गीथस्य प्रविष्टत्वादुपपद्यत इति न तदनुसारेण भूयसामुद्गातृवाचकानां पदानां लक्षणा न्याय्या । अस्तु वा उद्गीथस्यापि उपास्यत्वं, तथापि समुच्चयोपपत्त्या उपक्रमोपसंहारविरोधाभावान्नोद्गातेत्यस्यासकृदभ्यस्तस्य लक्षणोचिता । उद्गातरि प्राणदृष्टावालम्बनं वक्तुं शङ्कते—**न च प्राणस्येति** । **तथाह्यभ्युदयवाक्ये पशुकामवाक्ये चेति** । एवमाम्नायते—'विवा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताचन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि' ति । अत्रायमनुष्ठानक्रमः- दर्शे अमावास्यायामेव दर्शार्थं वेद्यग्निप्रणयनादिकं कर्तव्यम् । तत्र यदि चतुर्दश्यामेवामावास्याभ्रान्त्या वेद्यादिकं कृतं, तत्रेदं प्रायश्चित्तप्रतिपादकम् वाक्यम् ।

तस्यार्थः—यस्य यजमानस्य हविर्निर्वापे सति पुरस्ताच्चन्द्रोदयो भवेत्, स 'त्रेधे'त्यादिवाक्यप्रतिपाद्यं कर्म कुर्यादिति । तत्र संशयः—किमनेन वाक्येन प्रतिपाद्यते ? किं प्रकृताद्दर्शात् कर्मान्तरमेव, उत तस्यैव नैमित्तिको विकृतः प्रयोग इति । तत्र पूर्वः पक्षः—यदि दर्शस्यैव विकारोऽनेन विधीयेत, तदा ये मध्यमा इति प्रथमवाक्येऽग्न्यनुवादेन दातृत्वगुणविधानात् पुरोडाशप्रकृतिभूतानां च तण्डुलानां मध्यमत्वगुणविधानात् वाक्यभेदः । यदि तु मध्यमानुद्दिश्याग्निदेवतासम्बन्धमात्रं विधीयत इत्युच्यते, तदापि मध्यमानामग्निसम्बन्धः अग्नेश्च दातृत्वगुणसम्बन्ध इति वाक्यभेदः । एवं द्वितीयवाक्ये स्थविष्ठानामिन्द्रसम्बन्धः, तस्य च प्रदातृत्वगुणसम्बन्धः, प्रणीताकार्ये दधिपुनश्चरुत्वं विधेयमिति अत्यन्तं वाक्यभेदः । एवं तृतीयवाक्येऽपि शिपिविष्टगुणो विष्णुरूपा देवता अणिष्ठानां च शृताधिकरणत्वं चरुत्वं च विधेयमिति वाक्यभेदः । अतः प्राप्तदर्शानुवादेन निमित्ते सति गुणरूपो विकारो विधीयत इति वक्तुं न शक्यते । अपि च प्राप्ते दर्शत्रिके तण्डुला अग्न्यर्थं सम्पादिताः । शृतं दधि चेन्द्रार्थम् । तत्र यदि 'ये स्थविष्ठा' इति वाक्येन इन्द्रसम्बन्धः, येऽणिष्ठा इति वाक्येन विष्णुशिपिविष्टसम्बन्धश्च विधीयेत, तदोत्पत्तिशिष्टदेवतावरुद्धे देवतान्तरनिवेशो वक्तव्यः । तदपि न न्याय्यम् । अतो द्रव्यदेवताविशिष्टमपूर्वं नैमित्तिकं विधीयते । अपूर्वं च कर्मानेकगुणविशिष्टं विधातुं शक्यत इति न वाक्यभेद इति । सिद्धान्तस्तु सत्यपि वाक्यभेदादौ प्राप्तस्य दर्शस्य नैमित्तिकविकारो विधीयते ; श्रुतिस्वारस्येन कर्मैक्यावगमात् । तत्र यद्युत्पत्तिशिष्टन्यायेन इन्द्रादेस्तण्डुलादिषु न निवेश इति प्रकृते वक्तुं न शक्यते । उत्पत्तिशिष्टस्यापि अग्न्यादेर्नित्यतया नैमित्तिकेनोत्पन्नशिष्टेनापीन्द्रादिना बाधसम्भवात् नित्यनैमित्तिकयोर्मध्ये नैमित्तिकस्य प्रबलत्वात्, तथापि वचनेनाप्युत्पत्तिशिष्टानां देवतानां हविस्सम्बन्धोऽपनीयत इति उत्पत्तिशिष्टन्यायाशङ्कावकाश एव प्रकृते नास्ति । 'त्रेधा तण्डुलान्विभजे' दिति वाक्यं हि न तण्डुलानां मध्यमादिभावेन त्रिप्रकारविभागपरम् । ये मध्यमा इत्याद्युत्तरवाक्यैरेव त्रेधा देवतात्रिध्यनुसारेण तदर्थस्य प्राप्तत्वात् । अतोऽर्थान्तरं किञ्चिद्वक्तव्यम् । तच्च किमित्यपेक्षायां लाघवाद्विभजेदित्येतावन्मात्रं विधीयते । कस्य विभाग इत्यपेक्षायां स्ववाक्योपात्तानां तण्डुलानामन्वयस्य वैयर्थ्यपराहतत्वाद्विभागसामर्थ्यादेव संयुक्तं किञ्चिद्विभागान्वयीति सामान्यतोऽवगमे सति प्रकृतदर्शान्वितानामेव द्रव्याणां ये मध्यमा इत्यादिवाक्ये यत्पदश्रवणेनानुवादावगमात् तेषां च देवतान्तरसम्बन्धकरणात् तदुपपत्तये पूर्वदेवतापनयोऽपेक्षित इति देवताभिस्संयुक्तं दर्शद्रव्यं देवताभ्यो विभजेदित्यर्थस्सिध्यति । त्रेधा तण्डुलानिति तु हविष एवावयुत्यानु-

वादः। यद्यपि 'ये मध्यमा' इत्यादिवाक्यैर्यच्छब्दघटितैः प्रकृतद्रव्यानुवादेन नैमित्तिकदेवतासम्बन्धविधानादेव पूर्वदेवतापनयस्सिध्यति, तथापि दर्शे केषाञ्चिदुपांशुयाजस्यापि सत्त्वात्तदीयहविषो देवतान्तरविधानाभावात् सामर्थ्येन पूर्वदेवतापनयो न प्राप्नोतीत्याज्यस्य पूर्वदेवतापनये वचनं सार्थकम् । अतो न प्रकृतहविषां देवताविधानमनुपपन्नम् । प्रकृतकर्मप्रत्यभिज्ञानाच्च सत्यपि वाक्यभेदे तत्रैव गुणविधानं न्याय्यम् । तत्र यद्यपि सन्निधिमात्रकृतं प्रत्यभिज्ञानं न वाक्यभेदाभ्युपगमेन कर्मैक्यसाधनक्षमं, तथापि लिङ्गान्तरसहकृतं भवत्येव तत्साधकम् । तथा हि श्रूयते–'यदि बिभीयादभिमोदेष्यती'ति महारात्रे हवींषि निर्वपेत्फलीकृतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न यद्यभ्युदियात्तेनातच्य प्रचरेद्यदि न तेन ब्राह्मणान् भोजयेदि'ति। अस्यार्थः—चतुर्दश्यामेवामावास्याभ्रमात् दर्श आरब्धः। अतश्चन्द्रमा मामभिमुख उदेष्यति, उत स्वकाल एवेति सन्दिहानस्य यद्यकालोपक्रमप्राप्तकर्मवैगुण्यनिमित्तं भयं भवेत्, तदा अर्धरात्रे हविर्निरुप्य फलीकरणान्तं कृत्वा तूष्णीमासीत, पेषणादिकं तु द्रव्यविशिष्टस्य कर्मणः विधीयमानतया तत्र न कुर्यात्, सायन्दोहसम्पादितं च दधि द्वेधा कुर्यात् । तत्र यदि चन्द्रोदयो भवेत्, तदा स्वकालकर्तव्यदर्शार्थं सायन्दोहसम्पाद्यं यद्दधि , तदुपयोग्यातञ्चनार्थमर्धं निदध्यात्, अर्धान्तरं वेद्यामेव निदध्यात्, न त्वातञ्चनार्थम् । यद्युदयो भवेत्, तदा आतञ्चनार्थं स्थापितेन दध्ना सायन्दोहं पुनरातच्य स्वकाले दर्शं कुर्यात्, यद्युदयो न भवेत् , ततोऽविगुणस्य निर्वृत्ततया पुनःकरणानपेक्षणात् आतञ्चनाभावेन प्रतिपत्त्यपेक्षं स्थापितं दधि ब्राह्मणभोजनेन प्रतिपादयेत् । अत्राभ्युदयपक्षे पुनरातञ्चनविधानं पूर्वपक्षे नोपपद्यते । यदि हि दर्शस्स्वकाले पुनरारम्भणीयस्स्यात्, तदा सायन्दोहेन पुनर्दधिसम्पादनायातञ्चनमपेक्षितमिति इदं वाक्यं तत्र पूर्वप्रयोगसम्पादितदधिशेषेणैवातञ्चनं कार्यमिति नियमाय भविष्यति । तच्च सिद्धान्ते शक्यते वक्तुम् । अकालारब्धस्य दर्शप्रयोगस्य विकृतस्य समापनेन पूर्वं सम्पादितस्य दध्नो विकृतप्रयोगोपयुक्तत्वात् पुनस्सङ्कल्पमारभ्य नित्यप्रयोगस्य स्वकाले कर्तव्यतया तत्र सायन्दोहेन दधिसम्पादनस्यावश्यकत्वात् । ननु, पूर्वपक्षेऽपि अकालोपक्रान्तस्य दर्शस्य परित्यागेन पुनर्नैमित्तिकस्य कर्मान्तरस्य सङ्कल्पप्रभृतिसकलाङ्गयुक्तस्य समापनानन्तरं स्वकाले दर्श आरम्भणीयः । तत्र सायंदोहेन दध्नस्सम्पादनाय पुनरातञ्चनं प्राप्तमिति पूर्वशेषेण आतञ्चनं कार्यमिति नियमपरत्वं सम्भवत्येव । न च तथापि पूर्वं सम्पादितस्य दध्नो नैमित्तिके कर्मान्तरे अविनियुक्तत्वेन विद्यमानतया तेनैव स्वकालकर्तव्यदर्शसिद्धेः पुनर्दधिसम्पादनायातञ्चनं न प्रसज्यत इति वाच्यम् । अकालसम्पादितस्य दध्नो विगुणतया तस्य दर्शाङ्गत्वानुप-

पत्तेरिति चेत्, न । यद्यपि पूर्वं कर्म अकाल आरब्धं, तथापि तत्समापनीयमेव । ततश्च कालापराधदोषस्य नैमित्तिकेन कर्मणा परिहृततया स्वकाले पूर्वारब्धस्यैव दर्शस्य परिसमाप्तिः प्रसज्यते । तत्र च पूर्वसम्पादितमेव दध्यादिकं हविः प्रायश्चित्तपरिहृतकालदोषं सम्पन्नमस्तीति पुनरातञ्चनाप्राप्तेर्वाक्यमिदमनुपपन्नं भवेत् । न च पूर्वसम्पादितं हविः अभ्युदये निमित्ते विधीयमाने कर्मान्तर उपयुक्तमिति वाच्यम् । कर्मान्तरविधिपक्षे द्रव्यविशिष्टस्य कर्मणो विधीयमानतया तत्र द्रव्यस्योपादेयत्वेन पूर्वकर्मशेषभूतं द्रव्यं ग्राह्यमित्यत्र प्रमाणाभावेन द्रव्यस्यान्यस्यैव सम्पादनीयत्वात् । तथा च 'ये मध्यमास्स्युरि'त्यादिवाक्यगतं यत्पदमपि पूर्वपक्षिणा क्लेशेनैव व्याख्येयम् । सिद्धान्ते तु प्रकृतद्रव्योद्देशेनैव निमित्ते देवताविधानपरत्वाद्वाक्यस्य न काचिदनुपपत्तिः । अतः कर्मैक्यस्य प्रमाणासिद्धतया ये मध्यमा इत्यादिषु वाक्येषु वाक्यभेदापत्तिर्न दोषाय । अपि च सान्निधिकृतप्रत्यभिज्ञानुसारेण कर्मैक्यावगमस्य वाक्यैकत्वरक्षणाय बाधोऽस्तु नाम । सन्निधेर्वाक्यमपेक्ष्य दुर्बलत्वात् । इह तु न केवलं सन्निधिमात्रेण दर्शस्य प्रत्यभिज्ञा, अपि तु दर्शद्रव्यमेवाभ्युदयनिमित्तके कर्मण्यङ्गमिति द्रव्यैक्येन उपोद्बलिता । तच्च कर्मभेदे नोपपद्यते। अन्यशेषभूतस्यान्यत्राङ्गत्वकल्पनायाः क्लिष्टत्वात् । दार्शिकद्रव्यमेवेहाङ्गमिति तावद्येमध्यमा इत्यादौ यत्पदेनावगम्यत इति स्फुटमेव । तथा 'फलीकृतैस्तण्डुलैरुपासीते'ति फलीकरणान्तं कृत्वा चतुर्दशीसन्देहे सति तूष्णीं स्थेयमित्यपि तथावगमयति ; फलीकरणानन्तरं पेषणादौ सति तण्डुलत्वलोपेन चरुसम्पत्तिर्न स्यादिति हि तस्य तात्पर्यम् । यदि द्रव्यान्तरमेवाभ्युदयेष्टौ स्यात्, तदा पूर्वसम्पादितानां तण्डुलानां रक्षणं वृथैव स्यात् । तथा द्वेधा कृतस्य दध्नोऽभ्युदयाभावपक्षे आतञ्चनार्थं स्थापितस्य पुनःकर्मणोऽप्रसङ्गात् प्रतिपत्त्यपेक्षस्य ब्राह्मणभोजनेन प्रतिपत्तिः प्रतिपाद्यते–'तेन ब्राह्मणान् भोजयेदि'ति, न त्वर्धान्तरस्य । अभ्युदयपक्षे यदि ह्यभ्युदयेष्टिः कर्मान्तरं, तदा पूर्वस्यैव दध्नो ग्रहणे प्रमाणाभावादन्यार्थमुपात्तस्य चान्यत्र विनियोगानुपपत्तेः तस्यापि प्रतिपत्तिरपेक्षितेति सापि प्रतिपाद्येत । अतो ज्ञायते–अभ्युदयेष्टिर्न कर्मान्तरं, तदेव च दध्यत्रोपयुज्यत इति । तथा श्रृते चरुमिति श्रृतशब्दोऽपि संस्कृतस्य पयसो वाचकः । तथा च प्रातर्दोहसम्पादनीयं यद्दार्शिकप्रयोगाङ्गं, तदेव श्रृतपदार्थ इति दर्शद्रव्यमेवाभ्युदयेष्टावङ्गम् । अन्यथा 'आदित्यः प्रायणीयः पयसि चरुरिति'वत् विष्णवे शिपिविष्टाय पयसि चरुमित्येव स्यात् । तथा च द्रव्यमुखेन सम्पन्नायाः प्रत्यभिज्ञाया अनन्यथासिद्धतया ये मध्यमा इत्यादिवाक्येऽपि एकवाक्यताबाधेन दर्शविकृतप्रयोगपरतैव वाक्यस्योपेयेति दार्शिकद्रव्येष्वपनीत

देवताकेषु देवतान्तरविधिरेवायमित्यभ्युदयवाक्ये प्रतिपादितम् । पशुकामवाक्यं त्वेवमाम्नायते—'यः पशुकामस्स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमि'ति। तत्र सन्देहः—किमिदमपि वाक्यं दार्शिककर्मद्रव्य एव देवताविधिपरम्, उत द्रव्यदेवताविशिष्टकर्मान्तरविधिपरमिति। तत्र ये स्थविष्ठा इति द्रव्यमुखेन प्रकृतकर्मप्रत्यभिज्ञानादभ्युदयवाक्यमिव प्रकृतकर्मण्येव देवताविधिपरमिति पूर्वः पक्षः । सिद्धान्तस्तु अमावास्यामिष्ट्वेति प्रकृतस्य कर्मणः क्त्वाप्रत्ययेन समाप्तिद्योतनात्तत्र देवतान्तरविधानमनुपपन्नमिति द्रव्यदेवताविशिष्टकर्मान्तरविधिरेव।'ये स्थविष्ठा' इत्यादौ यत्पदं तु लोकप्रसिद्धानामेव तण्डुलानामनुवादकं भविष्यति । शृतशब्दोऽपि पयोमात्रलक्षक इति । तथाचाभ्युदयवाक्यस्य पशुकामवाक्यस्य च छायातौल्येऽपि यथा पूर्वदेवतापनयादिबलात्तत्र पूर्वस्मिन्नेव कर्मणि विधिरन्यत्रेष्ट्वेति समाप्तिप्रतिपादनात् कर्मान्तरविधिरित्यर्थवैषम्यमाश्रितं, तथा छान्दोग्यवाजसनेयकयोर्देवासुरसङ्ग्रामादिप्रतिपादनतौल्येऽप्युपास्यवैलक्षण्याद्विद्याभेद एवोपेयः। **यथा परमात्मदृष्ट्यध्याससाम्येऽपीति।** अन्तरादित्यविद्यायामुद्गीथः परमात्मदृष्ट्योपास्यः, आकाशविद्यायामप्युद्गीथ एव परमात्मदृष्ट्योपास्यः, तथापि यथा गुणभेदादुपासनयोः भेदः, तथात्रापि प्रधानोपास्यभेदात् भेद इति सौत्रनिदर्शनार्थः । नन्वक्ष्यादित्यविद्याया आकाशविद्यायाश्च यद्यप्यसाधारणगुणा बहवो विलक्षणाः, तथापि उत्पत्तिविध्यैक्यादैक्यं प्राप्नोति।उद्गीथाध्याये हि रसतमत्वाप्तिसमृद्धिगुणोपासनाविधयः अनन्तरं प्राणदृष्टिविधानमधिदैवताध्यात्मभेदेन ततोऽमृताभयादिदृष्टिविधानं, ततोऽन्तरादित्यविद्या, ततः आकाशविद्या, सर्वत्रापि 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्येक एवोपासनोत्पत्तिविधिः , अन्ये सर्वे गुणविधय इति । यदि तु तत्राधिकारिभेदेन गुणानां फलानां प्रतिपादनात् प्राप्ते कर्मणि तस्यतस्य वाक्यस्य नानागुणानां फलानां च बोधकत्वे वाक्यभेदस्स्यात्, 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'त्येवमादिना पृथगधिकारकरणञ्च व्यर्थं स्यात्, तथापि तस्यैवोत्पन्नस्योपासनस्यैते तत्तद्गुणफलविशिष्टस्य प्रयोगस्य विधयो भवन्तु, न तूत्पत्तिविध्यैक्ये विद्याभेदो वक्तुं शक्यते । न च 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति नोत्पत्तिविधिः, अपि तु वक्ष्यमाणासूपासनासूद्गीथावयवत्वविशिष्टप्रणवरूपालम्बनविधिरिति वाच्यम् । तथासत्युपासीतेत्यत्र धातुपारार्थ्यं प्रसज्येत । अपि च वक्ष्यमाणासूपासनासु यद्ययमालम्बनविधिस्स्यात्, तथासति प्राप्तोपासनानुवादेनोमित्येतदक्षरमालम्बनं तस्मिंश्चालम्बने उद्गीथपदेनोद्गीथावयवत्वं विधेयम्। उत्तराधिकरण उद्गीथपदस्य उद्गीथावयवपरताया वक्ष्यमाणत्वात् । एवंसति

वाक्यभेदः । न च नात्रोंकाररूपमालम्बनं विधीयते, अपि तु वक्ष्यमाणानामुपासनानां 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'ति अधिकारानुसारेणैव ओङ्कारे प्राप्ते तदनुवादेनोद्गीथावयवत्वमात्रं विधीयत इति वाच्यम्। अन्तरादित्यादिवाक्येषु तथाधिकाराभावेन तत्रोङ्कारस्याप्राप्तत्वात्। येषु च वाक्येषु तथाधिकारोऽस्ति, तत्रोद्गीथस्यापि श्रवणेनो'मित्येदक्षरमुद्गीथमुपासीते'ति वाक्याभावेऽपि उद्गीथावयवत्वलाभसम्भवात्। अतोऽयमुत्पत्तिविधिरेव। तदैक्याच्च कथमाकाशविद्याया अन्तरादित्यविद्याया भेद इति चेत्, उच्यते— अस्योत्पत्तिविधित्वेऽपि देवासुरसङ्ग्रामाख्यायिकानः प्राक् ये रसतमत्वादयो गुणाः फलानि च प्रतिपादितानि, तत्सम्बन्ध्येवायं प्राणविद्यायां 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'ति पृथगधिकारकरणात् तदारभ्यान्यः, एवम् उपासनाविधिः, एतद्विधिशेषत्वे तस्येत एवाक्षरालम्बनत्वलाभात् पृथगधिकारो व्यर्थ एव स्यात्। तथा चो'मित्येतदक्षरमित्युत्पन्नस्योपासनस्य 'आपयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त' इति आप्तिगुणविशिष्टः कामापयितृत्वफलकः एकः प्रयोगः, 'समर्धयिता हवै कामानां भवती'ति समृद्धिगुणविशिष्टः कामसमर्धयितृत्वफलकः अपरः प्रयोगः। रसतमत्वगुणे तु विशिष्य फलाश्रवणेऽपि अनुक्तफलेषु सामान्यतः फलप्रतिपादकेन 'यदेव विद्यये'ति वाक्येन कर्मसमृद्धिः फलं सिध्यति। प्राणाद्युपासनानि तु भिन्नान्येव, एतद्विध्यसंस्पर्शात्। तदनन्तरं चान्तरादित्यादिविद्याः समाम्नाता इति न तत्रोत्पत्तिविध्यैक्यम्। अस्तु वोद्गीथाध्याये वक्ष्यमाणानि यान्युपासनानि प्रस्तावादिविरुद्धालम्बनानवरुद्धानि, तेषां सर्वेषामुत्पत्तिविधिरयं, तथापि नोपासनानामैक्यं प्रसज्यते। पृथगुत्पत्तिविधिसिद्धभेदानामेवायं तन्त्रेण संग्रहोपक्रमः। एतस्य संग्रहरूपता च 'तस्योपव्याख्यान'मिति वाक्येनोत्तरसन्दर्भस्यैतद्विवरणतयावतारणादवगम्यते। 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'ति तु मध्ये समाम्नानमस्यैव सर्वत्रानुवृत्तिद्योतनाय। एवञ्चान्तरादित्यादिविद्यासु विशिष्याक्षरग्रहणाभावेऽपि एतदुपक्रमानुसारादेव तास्वप्युद्गीथावयवप्रणवालम्बनत्वं सिध्यति। प्राणविद्यातः प्रागेवानुवृत्तिरोमित्येतदिति वाक्यस्येति पक्षे तु न सिध्यति। अपि च तस्मिन्नप्ययमुपक्रमो व्यर्थः। रसतमत्वादिगुणेष्वपि 'ओमित्येतदक्षरमुद्गीथमि'ति वाक्यपर्यालोचनयैव प्रणवालम्बनत्वसिद्धेरित्यलं प्रपञ्चेन। परोवरीयान् परश्चासौ वरश्चेति परोवरः निपातनादोत्वम्। अतिशयेन परोवरः परोवरीयान् ॥७॥

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥** स्पष्टम् ॥८॥

इति अन्यथात्वाधिकरणम् ॥४३॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

पूर्वाधिकरणे छन्दोगानां प्राणविद्योद्गीथावयवोङ्कारालम्बनेत्युक्तं, तदिह साध्यत इति सङ्गतिः । **सामानाधिकरण्ये श्रूयमाण इति** । ननु, यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती'त्यादौ कारकवि[illegible] [illegible]वपरामिति । प्रत्येकं श्रवणात् सर्वेषामारुण्यादीनां भावनयैवान्वयः, न [illegible]यवाक्यमिव प्रकृतत्रापि 'अक्षरमुद्गीथमि'ति कारकविभक्तिद्वितीयाश्रवणात् [illegible]न्वय उचित इति कथं सामानाधिकरण्यं श्रूयत इति चेत्, पार्ष्ठिकान्वयमादाय सामानाधिकरण्यावगमोऽस्ति । स एव श्रूयमाणइतिपदेन विवक्षितः । **अनिवर्तितायामेवान्यतरबुद्धाविति**। नन्वालम्बनस्य नामादेरन्यतरस्य नामत्वाकारबुद्धौ अनिवर्तितायां कथं तत्र विष्ण्वादिबुद्धिस्स्यात् । विष्ण्वाद्यभेदग्रहरूपस्याध्यासस्य भेदाग्रहरूपकारणाधीनत्वात् नामत्वादेर्भेदकस्य च ज्ञानं भेदाग्रहविरोधीति चेत, न । इहाध्यासपदेनाहार्यारोपो विवक्षितः । तत्र च न भेदकज्ञानं विरोधि । अनाहार्यभ्रम एव तस्य विरोधित्वात् । **अनियमप्राप्ताविति** । ननु, निर्धारितप्रामाण्यस्य पूर्वपक्षिणापि नियतोऽर्थो वक्तव्यः, न त्वप्रामाण्यावहमनिर्धारणमेवेति चेत्, उच्यते—अयमत्र पूर्वपक्षाशयः–'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यत्र उद्गीथः प्रणवश्चेति उपासनायां विषयद्वयम्, अथवा द्वयोः पदयोः सामानाधिकरण्यमिति विशये सामानाधिकरण्यपक्षस्याध्यासाद्यन्यतमस्कन्धनिर्धारणाभावेन स्वीकर्तुमशक्यतया वैयधिकरण्यमवलम्ब्य यथा 'यदग्नये च प्रजापतये च सायं जुहोती'त्यादौ तुल्यविभक्तिश्रवणेऽपि देवताद्वयमुपेयते, एवमिहापि प्रत्येकं द्वितीयासमभिव्याहारादुपास्यद्वयमुपेत्य तद्विशिष्टोपासनाविधिपरत्वमास्थेयमिति । सिद्धान्तस्तु समानविभक्तिश्रवणात् सामानाधिकरण्यं प्रतीयते । 'अग्नये च प्रजापतये चे'त्यत्र चशब्दस्तदपवादकः, नेह तदस्तीति अक्षरोद्गीथपदयोर्धैक्यपर्यवसानमपेक्षितम् । न च तत्रानध्यवसाय इति निरूपयितुमध्यासादिपक्षान् दूषयति—**तत्राध्यासे तावदिति** । **आप्त्यादिदृष्टिफलं हि तदिति** । ननु, 'आपयिता ह वै कामानामि'त्यादेरक्षरोद्गीथाध्यासफलत्वाभावेऽपि 'यदेव विद्यये'ति वाक्यप्रतिपाद्यं कर्मसमृद्धिरूपं तत्फलं वक्तुं शक्यत इति किमित्यध्यासपक्षः परित्यज्यत इति चेत्, न । अध्यासविवक्षायामक्षरोद्गीथयोस्साधारणधर्म एव प्रतिपादनीयस्स्यात् । 'ओमिति ह्युद्गायती'त्युत्तरवाक्ये तु अक्षरोद्गीथयोस्सम्बन्ध एव प्रतिपाद्यते । अतो नाध्यासो विवक्षितः । नन्वथाप्यध्यासपक्षे लक्षणावृत्तित्वं प्रसज्यत इति कथमुच्यते। न हीह शाब्दं सामानाधिकरण्यम्, अपि तु पार्ष्ठिकम् । पार्ष्ठिकबोधश्च मानस

इति न तत्र शब्दव्यापार इति चेत्, न । सामानाधिकरण्ये हि यद्यपि कारकद्वारा क्रियायामेवाक्षरोद्गीथपदार्थयोरन्वयः, तथापि कारकान्वयितया द्वाभ्यां पदाभ्यामेक एव धर्मी बोधनीयः । तत्र यद्यक्षरपदेनाक्षरत्वाकारेणोद्गीथो बोध्यते, उद्गीथपदेन वोद्गीथत्वाकारेणाक्षरं बोध्येत । उभयथापि अन्यशब्दस्यान्यत्र वर्तनमेवेति भावः । उद्गीथशब्देनाक्षरं विशेष्यत इति । न च ... सम्भवात् । अतो ... समर्पयदुद्गीथपदमक्षरपरमित्युच्यते, एवमक्षरपदमपि अक्षरावयवित्वं समर्पयदुद्गीथपरमेवास्तु । न ह्यन्यतरनिर्धारणोपयोगि किञ्चिन्नियामकमस्तीति वाच्यम् । उत्तरत्र 'कतमाकतमर्क्, कतमत्कतमत् साम, कतमः कतम उद्गीथ इति विमृष्टं भवति वागेवर्क् प्राणस्सामोमित्येतदक्षरमुद्गीथ' इति वाक्येन उद्गीथपदार्थः क इति प्रश्नं कृत्वोद्गीथ ओङ्कार इति प्रतिपादनात् 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'त्युत्तरत्राक्षरप्राधान्येनैवानुसन्धानाच्च ओङ्कार एवोद्गीथावयवत्वगित्यवगम्यते । ततश्च वक्ष्यमाणासूपासनासूद्गीथावयवोङ्कारातिरिक्तोङ्कारव्यावृत्तिस्सिध्यति । **नन्वस्मिन्नपि पक्ष इति** । ततश्च कोऽध्यासपक्षाद्विशेष इति भावः । **विप्रकृष्टा लक्षणेति** । यथा हि मुखं चन्द्र इति रूपकस्थले चन्द्रपदात् चन्द्रत्वप्रकारकबोधे सत्यपि चन्द्रपदेन मुख्यव्यक्तिप्रतिपादनात् लक्षणा । तत्र चालम्बनं मुखे चन्द्रसादृश्यं, आरोपश्च चन्द्रत्वस्य मुखे स्वीकार्यः, एवमिहाप्यध्यासपक्षे उद्गीथपदेनोङ्कारव्यक्तिप्रतिपादनं, तत्र चोद्गीथत्वारोपः, आलम्बनं च उद्गीथाभेददृष्टिविषयत्वमिति स्वीकार्यम् । अतो गौरवम् । अवयवलक्षणापक्षे त्ववयविपदस्यावयववृत्तिमात्रं स्वीकार्यं, न त्वारोपादिकमिति लाघवमित्यर्थः । **पटग्रामादिष्विति** । पटैकदेशे ग्रामैकदेशे च दग्धे पटो दग्धः, ग्रामो दग्ध इति प्रयोगेष्वित्यर्थः ॥९॥

इति व्याप्त्यधिकरणम् ॥ ४ ॥

## सर्वाभेदादन्यत्रेमे ॥१०॥

'अन्यथात्वं शब्दा'दित्यधिकरणे प्राणविद्याविषयको विचारः प्रवर्तितः। तत्प्रसङ्गादुद्गीथपदस्योङ्कारलक्षणा प्रतिपादिता । अत्रापि प्राणविद्याविषयक एव विचारः क्रियत इति सङ्गतिः । नन्वस्मिन्नधिकरणे छान्दोग्यवाजसनेयकयोराम्नातायाः प्राणविद्याया ज्येष्ठत्वादिगुणान्वितायाः कौषीतक्याम्नाताया 'अथातो निश्श्रेयसादान'मित्यारभ्य प्राणविद्यायाश्चैक्यं सिद्धवत्कृत्य गुणोपसंहारानुपसंहारौ चिन्त्येते । तन्नोपपद्यते । विद्यैक्यस्यासम्भवात् । तदसम्भवश्च फलभेदाद्रूपभेदाच्च । तथा हि कौषीतकिशाखायां 'तथो एवैवं विद्वान् सर्वेषां भूतानां प्रा

णमेव प्रज्ञात्मानमभिसम्भूय सहैतैस्सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रविष्ट आकाशात्मा स्वरेति स तद्भवति यत्रैते देवास्तत्प्राप्य तदमृतो भवति, यदमृता देवा' इति फलमाम्नायते । अस्यार्थः— तथा उ इति छेदः उरप्यर्थे । पूर्वस्मिन्वाक्ये प्राणेन मिलित्वेन्द्रियाणि स्वर्गतानीति प्रतिपादितम् । विद्वानपि तथैव प्राणं प्रज्ञात्मानमभिसंभूय मरणकाले प्राणं प्राप्यैतैरिन्द्रियैस्सहितश्शरीरादुत्क्रामति स आकाशवत्सूक्ष्मात्मा वायुदत्तच्छिद्रप्रविष्टस्सन् स्वः सत्यलोकमेति यत्र सत्यलोके देवा विद्यन्ते । 'स तद्भवती' त्यस्य विवरणं 'तत् प्राप्य तदमृतो भवती'त्यादि । अनेन देवानां सत्यलोकस्थानां यत् प्राणदेवतासायुज्याख्यममृतं, तदुपासकस्यापि भवतीति दर्शितम् । अतः कौषीतक्याम् 'अथातो निश्रेयसादानमि'त्यारभ्याम्नाता प्राणविद्या प्राणदेवतासायुज्यफला । छान्दोग्ये तु 'यो हवै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च हवै श्रेष्ठश्च भवती'ति फलमाम्नातम् । प्राणस्सर्वेभ्य इन्द्रियेभ्यो ज्येष्ठः योनौ निषिक्ते रेतसि प्राणस्य वृत्तिलाभः । इन्द्रियाणां तु तत्तद्गोलकोत्पत्त्यनन्तरम् । अतः प्राणो ज्येष्ठः श्रेष्ठश्च गुणैरुत्कृष्टः । ततश्च यथा वयसा प्राण इन्द्रियेभ्यो ज्येष्ठः गुणेभ्यश्चोत्कृष्ट, एवमुपासकोऽपि भवतीति । वाजसनेयके चेदमैहिकत्वेन प्रतिपादितं— 'ज्येष्ठश्च हवै श्रेष्ठश्च स्वानां भवती'ति, स्वशब्दोपादानात् । अतः फलभेदस्तावत् उपगन्तव्यः । तथा रूपभेदोऽप्युपगन्तव्यः । छान्दोग्यवाजसनेयकयोर्हि प्राणश्श्रेष्ठ इति निर्धारणार्थं सर्वेषामिन्द्रियाणां प्राणस्य च प्रजापतिसकाशं गमनमाम्नाय प्रजापतिना 'यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वश्श्रेष्ठ' इति प्रतिपादिते वाक्चक्षुश्श्रोत्रमनांसि क्रमेण उत्क्रान्तानि । तेषां मध्ये एकैकस्याभावे मूकत्वान्धत्वबधिरत्वाविवेकित्वान्येव यथायथं प्राप्तानि । अन्ये त्विन्द्रियव्यापारा जीवनं च स्थितमेव । प्राणस्य तूत्क्रान्तावुपस्थितायामेव सर्वेषामिन्द्रियाणामुत्क्रमणं प्राप्तम् । ततः प्राणश्श्रेष्ठ इति निर्धार्य वाक्चक्षुश्श्रोत्रमनोरेतोभिस्स्वस्वासाधारणा ये गुणा वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वप्रजापतित्वरूपाः, ते प्राणे प्रत्यर्पिताः 'यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसी'ति प्रकारेणेति प्राणश्रेष्ठत्वनिर्धारणं दर्शितम् । अत्र च वागादीनां वसिष्ठत्वादिकं स्वस्वकार्यकरत्वमेव । तस्य च प्राणाधीनत्वमित्यङ्गीकार एव प्राणे प्रत्यर्पणम् । अतश्छान्दोग्यवाजसनेयकयोर्वागादिकार्यस्य प्राणाधीनत्वानुसन्धानेन प्राणस्य श्रैष्ठ्यमवगम्यते । कौषीतकिशाखायां तु 'अथातो निश्रेयसादानमि'ति प्राणश्रैष्ठ्यावधारणमुपक्रम्य प्राणसंहितानामिन्द्रियाणां शरीरादुत्क्रान्तौ तद्दारुभूतं 'शिश्येऽथैनद्वाक् प्रविवेश तद्वाचावदच्छिश्य एवे'त्यादिना शरीरस्य जाड्यम्, एकैकप्रवेशे च वदनादिकार्यमेवासीत्, न तूत्थानं शरीरस्येति प्रतिपाद्य प्राणप्रवेशे शरीरो-

स्थानमभवत्, अतः प्राणश्श्रेष्ठ इति निर्धारणं दर्शितम् । अत्र च प्राणप्रवेशात् प्रागेव वागादीनां वदनादिकार्यावगमाद्वागादिकार्यस्य प्राणानधीनत्वमवगम्यते । अतो विरुद्धार्थयोरवगमे सति न विद्यैक्यमिति चेत्, उच्यते— छान्दोग्यवाजसनेयकयोः कौषीतक्यामिव प्राणदेवतासायुज्यं विवक्षितमेव । प्राणदेवतासायुज्यमपि प्राणदेवतागतगुणान्वय एव । तच्च 'ज्येष्ठश्च श्रेष्ठश्च भवती'ति प्रतिपादितमेव । न च वाजसनेयके स्वानामिति विशेषणेन ज्ञातीनां मध्ये ज्येष्ठश्श्रेष्ठो भवतीति ऐहिकत्वावगमात् कौषीतक्यां तु स्वरेतीत्यामुष्मिकत्वावगमात् भेदश्शङ्कनीयः । वाजसनेयके 'ज्येष्ठश्श्रेष्ठस्स्वानां भवति, अपि च येषां बुभूषती'त्यन्यत्रापि ज्येष्ठत्वादिप्रतिपादनेन तत्रापि पारलौकिकत्वोपगमात् । अतो न फले विप्रतिपत्तिः । नापि रूपभेदः । उभयत्रापि श्रेष्ठत्वगुणान्वितं प्राणतत्त्वं प्रत्यभिज्ञायते । तदुपपादनं परं छान्दोग्यवाजसनेयकयोः कौषीतक्यां चासदर्थालम्बनेनार्थवादेन वैषम्येण क्रियते । न च प्रधानार्थसाम्ये सत्यसतार्थवादिकेन वैषम्येण विद्याभेदो भवति। आर्थवादिकसाम्यवैषम्ययोर्विद्याभेदाभेदाप्रयोजकत्वात् सतोः प्रधानार्थप्रत्यभिज्ञानतदभावयोः । न हि प्राणसहितानां सर्वेषामिन्द्रियाणां युगपदेव उत्क्रान्तानामेकैकेन्द्रियप्रवेशेन प्राणाभावेऽपि वदनादिकार्यकरत्वमित्यर्थस्सन्निति वक्तुं शक्यम् । नाप्येकैकेन्द्रियस्योत्क्रान्तस्य पुनः प्रवेश इत्यर्थस्सन् । परं तु त्रिष्वपि आम्नानेष्वेतावानर्थो विवक्षितः— शरीरेन्द्रियस्थितेः प्राणाधीनत्वात् प्राणश्श्रेष्ठ इति । अपि च वदनादियत्किञ्चित्कार्यस्य कौषीतक्यां प्राणानधीनत्वावगमेऽपि वागादीनां वसिष्ठत्वादिरूपकार्यविशेषः प्राणाधीनत्वेन छान्दोग्यवाजसनेयकयोर्यः प्रतिपादितः, तस्य शरीरोत्थानसाध्यत्वात् प्राणाधीनत्वं कौषीतक्यामनुमतमेव । वाचो हि वसिष्ठत्वं लौकिकवैदिकविषयकसद्व्यवहारेण वसुमत्तासंपादकत्वम् । 'वसिष्ठो ह स्वानां भवती'ति तद्गुणफलाम्नानात् स्वकार्यकरत्वमात्रस्य नित्यं विद्यमानतया फलत्वानुपपत्तेः । एवं चक्षुषः प्रतिष्ठात्वं समविषमभूमिदर्शनेन सम्यक्स्थितिहेतुत्वम् । 'प्रतितिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्चे' ति फलकीर्तनात् वाजसनेयके च 'चक्षुषा हि प्रतितिष्ठति समे च दुर्गमे चे'त्याम्नानाच्च । श्रोत्रस्य संपत्त्वं वेदादिग्रहणहेतुत्वाद्धनादिसंपादकत्वम् । 'श्रोत्रेण हीमे वेदा अभिसंपन्नास्संहास्मै कामा अभिपद्यन्ते यं कामं कामयत' इति वाक्यशेषात् । मनस आयतनत्वम् ऐहिकामुष्मिकभोगायतनत्वम् । उक्तरूपं च वसिष्ठत्वादिकं शरीरोत्थानानन्तरभाव्येवेति न कौषीतक्यां तदुपसंहारे विरोधोऽस्ति । ननु, यदि विद्यैक्यं, तथासति 'उपसंहारोऽर्थाभेदा'दित्येवोपसंहारे सिद्धे कथं पूर्वपक्षोऽत आह—**एवंशब्दसंयोगादिति** । अयमाशयः— एवंशब्दः प्रकृतपरामर्शकः । तथा च

यस्या शाखायां यत् प्रकृतं, तत् एवंपदेन परामर्ष्टव्यम् । कौषीतक्याञ्च वागादिगतवसिष्ठत्वादिहेतुत्वं ज्येष्ठत्वं च प्राणेऽनाम्नातमिति न तस्य परामर्शस्सम्भवति । न च शाखान्तरवाक्यैकवाक्यतया शाखान्तराम्नातमपीह प्रकृतमेवेति तस्य परामर्शे कानुपपत्तिरिति वाच्यम् । तथासत्येवंशब्दो व्यर्थस्स्यात् । तदभावेऽपि प्रकृतत्वादेव तेषां वेदनविषयत्वलाभसम्भवात् । अत एवंशब्दो व्यर्थो मा भूदिति तस्य शाखान्तरगतगुणव्यावृत्तिफलकतैवास्थेया । न चैवंसति सर्वासु विद्यासु कर्मसु च तत्रतत्र प्रदेशे एवंपदस्य श्रवणेन शाखान्तराम्नाताङ्गव्यावर्तकता भवेत्, भवतु पूर्वपक्षिणः, का हानिः । एतदधिकरणसिद्धान्तन्यायानुसन्धानेनैव तस्याश्शङ्काया निरासो भविष्यतीति । अयमत्र सिद्धान्ताभिप्रायः-—यद्यपि शाखान्तरगतं गुणजातं शाखाद्वयैकवाक्यतानुसन्धानेनैव एवंपदपरामर्शयोग्यम् । स्वशाखाम्नातं तु तदनपेक्षमेवैवंपदेन परामष्टुं शक्यं, तथापि प्रकृतपरामर्शिन एवंशब्दस्यैतादृशं वैषम्यमकिञ्चित्करम् । अन्यथा स्वशाखाम्नातस्यापि दूरस्थस्य परामर्शो न भवेत । न चैवमपि परिसङ्ख्याफलकत्वादेवंपदस्य शाखान्तरगतगुणव्यावृत्तिस्स्यादिति वाच्यम् । फलपरवाक्यगतस्यैवंपदस्य गुणान्तरपरिसङ्ख्याफलकत्वानुपपत्तेः वाक्यभेदप्रसङ्गात् । न च परिसङ्ख्यापरमेव वाक्यमस्त्विति वाच्यम्। अपेक्षितफलपरत्वे सम्भवति त्रिदोषयुक्तपरिसङ्ख्यापरत्वस्यान्याय्यत्वात् । अपि च स्वशाखाम्नातगुणमात्रपरामर्शकत्वे कल्प्येतापि शाखान्तराम्नातगुणपरिसङ्ख्यापरत्वं , तत्तु नास्ति । शाखाद्वयाम्नातवाक्यैकवाक्यतया सर्वेषामपि गुणानां प्रकृतत्वाविशेषेणैवंपदपरामर्शयोग्यतया शाखान्तराम्नातगुणपरिसङ्ख्यापरत्वस्यासम्भवात् । अपि च वाक्यस्य परिसङ्ख्याफलकत्वे फलपदमनर्थकं भवेत् । न च वाजसनेयकाद्याम्नातफलानुवाद इति वाच्यम् । तत्राप्येवंपदश्रवणेन फलपरत्वानुपपत्तेः । अतस्स्वपरशाखासाधारण्येन प्राप्तानां गुणानां फलपरे वाक्येऽनुवाद इत्येवमाश्रयणीयमिति तत्तच्छाखागतैवंपदस्य स्वशाखाम्नातगुणमात्रपरामर्शकत्वेऽपि एवंपदस्य नानुपपत्तिरित्यभ्युपेत्याह—यद्यपीति । तत्तच्छाखागतानामेवंपदानां शाखान्तराम्नातगुणपरिसङ्ख्यायकत्वानुपपत्तेर्वेदेत्यस्य विषयाकाङ्क्षायां वेद्यविशेषसमर्पकतया सर्वशाखावगतं गुणजातं तत्तच्छाखागतैवंपदानुसारेण समुच्चित्य वेद्यतया सिध्यतीत्याह—तथापीत्यादिना ॥१०॥

॥ इति सर्वाभेदाधिकरणम् ॥ ९ ॥

# आनन्दादयः प्रधानस्य ॥११॥

सविशेषविषयासु प्राणाद्युपास्तिषु गुणोपसंहारोऽस्तु नाम । निर्विशेषब्र-

ह्मविद्यायां तु गुणोपसंहारो न सम्भवति । निर्विशेषं हि ब्रह्माखण्डं सत्यादिवाक्यप्रतिपाद्यम् । तादृशब्रह्मावगतिश्चैकेनैव पदेन भवतीति एकस्यामपि शाखायां पदान्तरं नापेक्षितम् । कुतश्शाखान्तराम्नातगुणोपसंहारः।यथा च शास्त्रेण प्रतिपाद्यते, तथैव ध्यातव्यमिति न प्रतिपादनार्थं ध्यानार्थं वा गुणोपसंहारोऽपेक्षित इति पूर्वपक्षाभिप्रायः । परिहाराभिप्रायस्तु यद्यपि निर्विशेषं ब्रह्म परमार्थतः, तथापि तत्रासत्त्वानानन्दत्वजडत्वादिभ्रान्तयस्तेषुतेषु पुरुषेषु सम्भवन्ति । तादृग्भ्रान्तिनिवृत्तिश्च सामग्रीविशेषजनितादेव ब्रह्मस्वरूपावबोधात् भवति । तत्र लक्ष्ये अखण्डे वस्तुनि यद्यपि विशेषणानि न सन्ति, तथापि लक्षके वाच्ये वाक्यार्थेऽनानन्दत्वादिविरुद्धानन्दत्वादिधर्मानुसन्धानात् सा शङ्का निवृत्ता भवतीति वाच्यार्थकोटावारोपितानामानन्दत्वादिधर्माणामुपसंहारोऽपेक्षित इति ध्यानकालेऽपि तत्तदाशङ्कानिवृत्त्युपयोगिधर्मानुसन्धानपूर्वकमेव निर्विशेषे लक्ष्ये मनो निधातव्यमिति निर्विशेषोपासनायामपि गुणोपसंहारस्सार्थकः ॥११॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे॥१२॥

यदि निर्विशेषोपासनायां शाखान्तराम्नातगुणोपसंहारः प्रधानस्य ब्रह्मण एकत्वादुपेयेत, तथासति दहरशाण्डिल्यानन्दमयादिविद्यास्वपि प्रधानस्य ब्रह्मण एकत्वात् परस्परमुपसंहारस्स्यादिति शङ्कानिवर्तनार्थं सूत्रं—प्रियशिरस्त्वादीति । आदिपदेन सत्यकामत्वमनोमयत्वादिग्रहणम् । अयमत्र परिहाराभिप्रायः—सविशेषवाक्येषूपासनाविधिपर्यालोचनया तानितान्युपासनानि भिद्यन्ते । तत्र च यस्यामुपासनायां शास्त्रबलाद्यावन्तो गुणा विधीयन्ते, तावद्भिरेव तस्या उपकारासिद्धेरन्यत्राम्नातगुणोपसंहारो न प्रधानैक्यमात्रेण सम्पादयितुं शक्यते । विद्यान्तराम्नातगुणोपसंहारे तत्तदुपासनाविधिप्राप्तक्रमादिविरोधापत्तेश्चेति । **परस्परापेक्षयेति** । इष्टवस्तुदर्शनजं सुखं प्रियं, तत्प्राप्तिजन्यं मोदः, तदुपभोगजं प्रमोदः, सर्वानुयायी आनन्द इति परस्परापेक्षयोत्कर्षापकर्षौ । एवं मनोमयत्वसत्यसङ्कल्पत्वादीनामप्यौपाधिकधर्मत्वात्तारतम्यादिकं द्रष्टव्यम् । **सति भेद इति** । भिद्यत इति भेदः सप्रपञ्चत्वं, ब्रह्मण उपास्यतया सप्रपञ्चत्वे विवक्षित इत्यर्थः । परमार्थतो निर्विशेषे ब्रह्मणि सत्यसङ्कल्पत्वादीनामौपाधिकधर्माणामुपासनाविवक्षयैवाम्नानाद्यथोपासनं व्यवस्थेति भावः । उपास्यानां ब्रह्मधर्माणां यथाविधि व्यवस्थेति प्रतिपादनार्थं प्रवृत्तेऽस्मिन् सूत्रे प्रियशिरस्त्वादिग्रहणं नोपपद्यते इत्याह—**न चैत इति** । ननु, भवत्वानन्दमयाधिकरणोक्तरीत्या प्रियशिरस्त्वादीनां कोशधर्मत्वं, तथापि नानुपपत्तिः । न ह्यत्र ब्रह्मधर्माणामेव साङ्कर्यशङ्कापरिहारो विवक्षितः,

अपि तु निर्विशेषविद्यागतानामानन्दादिधर्माणां यथा सर्वासु शाखासु प्राप्तिः, एवं सत्यसङ्कल्पत्वादीनामपि अव्यवस्थया प्राप्तिरिति शङ्का । इयं च शङ्का प्रियशिरस्त्वादीनामपि भवति । ब्रह्मप्रतिपत्त्युपयोगितया कोशानां सर्वत्रोपसंहारस्यापेक्षितत्वात् । तद्धर्माणां प्रयशिरस्त्वादीनामपि तद्द्वारा प्राप्तिरस्त्विति, तत्राह— **अपि चेति** । पञ्चकोशाम्नानं निर्विशेषप्रकरणे न निर्विशेषवस्तुध्यानाङ्गतया कोशोपासनाविधानार्थम् । अपि तु तत्त्वंपदार्थयोरैक्यस्य बोधनीयतया कर्तृत्वाद्यनर्थसंपृक्तस्य त्वंपदार्थस्य कथं तद्विनिर्मुक्ततत्पदार्थैक्यमिति शङ्कायां कोशोपाधिक एव त्वंपदार्थस्यानर्थसम्बन्धः, परमार्थतस्तु चैतन्यमात्रस्वरूप एव त्वमर्थ इति प्रतिपादनार्थम् । तदाह— **चित्तावतारेति** । न चैतच्छङ्कानिवृत्त्यर्थमेवान्यत्र कोशोपसंहारोऽस्त्विति वाच्यम् । तत्रतत्र त्वंपदार्थशोधनार्थमवस्थाद्युपन्यासादेर्विद्यमानत्वात्तावतापि ध्यानायोपसंहारशङ्कानुन्मेषाच्च । यस्यां शाखायाञ्च निर्विशेषप्रकरणे विशिष्य त्वंपदार्थशोधनोपायो नाम्नातः, तत्र शाखान्तरोक्तत्वंपदार्थशोधोऽप्युपसंहर्तव्य इति प्रियशिरस्त्वादिकं कोशधर्मत्वेन प्राप्नोतीति तदप्राप्तिरिति सिद्धान्तोऽपि न सङ्गच्छते । अत आनन्दमयवाक्ये सविशेषब्रह्मोपासनं विवक्षितमिति कृत्वाचिन्तयैव प्रियशिरस्त्वादिग्रहणम् । कृत्वाचिन्तायाः प्रयोजनमाह— **स च न्याय इति । संयद्वामत्वादिष्विति** । एते च सूत्रे आदिपदेन संगृहीताः॥

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

ननु, यदि यस्यामुपासनायां ये धर्मा आम्नाताः, ततोऽन्येषां नोपसंहारः । तथासति निर्विशेषप्रकरणाम्नातानां सर्वज्ञत्वादीनामपि सविशेषवाक्ये उपसंहारो न स्यादित्याशङ्कानिवृत्त्यर्थं सूत्रम् । अयमत्र परिहाराभिप्रायः—सर्वज्ञत्वादीनामाम्नानस्य निर्विशेषप्रकरणेऽप्येतदेव प्रयोजनं, यत् प्रधानादिव्यावृत्तासाधारणस्वरूपेण ब्रह्मावगमः । इदं च प्रयोजनं सविशेषविद्यास्वपि तुल्यम् । तत्राप्युपास्यब्रह्मस्वरूपस्य धर्मिणः प्रधानादिव्यावृत्ततया अवगन्तव्यत्वात् । परं तु तत्र सर्वज्ञत्वादीनामनृतत्वं नावगन्तव्यमिति निषेधमुखप्रवृत्तानिर्विशेषवाक्योपसंहारो नास्ति ॥१३॥

इति आनन्दाद्यधिकरणम् ॥६॥

---

## आध्यानाय प्रयोजनाभावात् ॥१४॥

विद्याभेदाभेदप्रसङ्गात् वाक्यभेदाभेदौ विचार्येते । 'अथवा इन्द्रियेभ्यः परा ह्यर्था' इत्यादिवाक्यप्रतिपाद्याः पूर्वपक्षे भिन्ना उपासना इति पादसङ्गतिः ।

**वाक्यबहुत्वोपपत्तेरिति** । ननूपक्रमादिलिङ्गपर्यालोचनया ब्रह्मपरत्वेनावधारिते वाक्ये कथमिन्द्रियादिप्रतिपादनं सङ्गच्छते । न हि पूर्वपक्षिणा सिद्धान्ते यथा ब्रह्मप्रतिपत्त्युपयोगितया इन्द्रियादिप्रतिपादनं, तथोपगन्तुं शक्यम् । प्रत्येकं वाक्यबहुत्वमुपगम्य तत्तदुपासनापरत्वस्य उपगतत्वात् । न च यथा भूमविद्यायां ब्रह्मपरायामपि मध्ये नामाद्युपास्तिप्रतिपादनं, तथा कठवल्लीष्वपि भविष्यतीति युक्तम् । तत्र 'यो नाम ब्रह्मेत्युपास्ते' इति आख्यातश्रवणस्य 'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती'ति फलश्रवणस्य च सद्भावात् अवान्तरवाक्यभेदेन उपासनाविधेरङ्गीकारः, इह तु नैवमिति कथमवान्तरवाक्यभेदं स्वीकृत्य उपासनाविध्यभ्युपगम इति चेत्, उच्यते—'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः । बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः । पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः । पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते ॥' इति स्मृत्या इन्द्रियतन्मात्राहङ्कारबुद्ध्यव्यक्तपुरुषाणामुपासनात् उत्तरोत्तरोत्कर्षेण फलप्रतिपादनात् इहापि इन्द्रियादिपरत्वाम्नानस्य फलापेक्षणात् तदेव स्मृतिप्रसिद्धमस्या उपासनायाः फलमिति कल्प्यते । इन्द्रियादेरुत्तरोत्तरोत्कर्षेण उभयत्र प्रत्यभिज्ञानादिति । **प्रयोजनाभावादिति** । ब्रह्मप्रकरणगतस्य परत्वेनेन्द्रियाद्याम्नानस्य ब्रह्मप्रमितिप्रयोजनत्वे सामान्यतोऽवगते 'अव्यक्तात् पुरुषः परः पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिरि'त्यादिनैकवाक्यतया निरतिशयपुरुषगतपरत्वप्रतिपादनद्वारा दृष्टविधयैवोपपन्ने सति नोपासनापदाध्याहारेण वाक्यभेदमुपेत्यादृष्टार्थता कल्पयितुमुचिता । न च सिद्धान्तेऽपि इन्द्रियादीनां मध्ये उत्तरोत्तरस्य पूर्वपूर्वापेक्षया परत्वमप्रसिद्धमिति, तदपि प्रतिपादनीयम् । अतोऽवान्तरवाक्यभेदोऽपरिहार्य इति वाच्यम् । आनुमानिकाधिकरणोक्तरीत्या ग्रहातिग्रहरूपत्वादिना प्रमाणान्तरप्रसिद्धस्योत्तरोत्तरपरत्वस्यानुवादसम्भवात् । जर्तिलगवीधुकयवागूहोमसाधनत्ववत् असतोऽपि तात्पर्याविषयीभूतस्यानुवादेन पुरुषपदोदितस्य ब्रह्मणः निरङ्कुशपरत्वप्रतिपादनपरत्वसम्भवाच्च । न च साङ्ख्यीययोदाहृतस्मृत्या परत्वप्रतिपादनस्य प्रयोजनमुपहर्तुं शक्यम् । तस्यास्साङ्ख्यमतसिद्धप्रधानादिप्रतिपादिकाया इहाप्रत्यभिज्ञानात् । 'इन्द्रियेभ्यः परा ह्यर्था' इति वाक्ये हि रूपकवाक्यविन्यस्तान्येव प्रसिद्धानि मनोबुद्धिशरीरादीनि गृह्यन्त इत्यानुमानिकाधिकरणे निरूपितम् । अतः परत्वप्रवाहोक्तेः ब्रह्मप्रतिपत्तिपरतैव, न त्वन्तरोपास्तिपरत्वेन वाक्यभेदः ॥

## आत्मशब्दाच्च ॥१५॥

गूढोत्मा । गूढः आत्मा इति छेदः । सूच्यग्रादिवत् अन्तर्गतवस्तुसंस्पर्शसमर्थत्वमग्र्यत्वम् । कामक्रोधादिमलराहित्येन निशितत्वं सूक्ष्मत्वम् ! **आत्मेत्याहेति** । ततश्चात्मशब्दप्रयोगेण प्रकृतपुरुषस्य प्राशस्त्यद्योतनात् तात्पर्यविषयता सूचिता ॥

इति आध्यानाधिकरणम् ॥ ७ ॥

---

# आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

यथा 'अव्यक्तात् पुरुषः पर' इत्यादिवाक्यैकवाक्यत्वादिन्द्रियेभ्यः परा इत्याम्नानं ब्रह्मप्रतिपत्तिपरं, तथा 'स इमान् लोकानसृजते' त्यादिलोकसृष्टिप्रतिपादकवाक्यैकवाक्यतया 'आत्मा वा इदमेक एवाग्र' आसीदित्यादिसन्दर्भोऽपि हिरण्यगर्भपरोऽस्त्विति प्रत्यवस्थानात सङ्गतिः । नन्वत्राधिकरणे ऐतरेयकगतस्यात्मा वा इत्यादेर्हिरण्यगर्भपरत्वमाक्षिप्य ब्रह्मपरत्वं व्यवस्थाप्यते । नैतस्य पादसङ्गतिस्सम्भवति । एकशाखागतं किञ्चिद्वाक्यमुदाहृत्योपक्रमादिलिङ्गैस्तस्य ब्रह्मपरत्वव्यवस्थापनं हि प्रथमाध्याये सङ्गतम् । अत्र तु नानाशाखागतवाक्योदाहरणपूर्वकं गुणोपसंहारः, तदुपयोगितया विद्यैक्यं वा प्रतिपादनीयमिति चेत, तर्हि इहापि सदेवेति छान्दोग्यवाक्ये ऐतरेयकगत 'आत्मा वा' इत्यादिवाक्ये च किमेका विद्या, उत द्वे इति प्रथमसंशयः । तदर्थं च ऐतरेयकगतमात्मा वा इत्यादि हिरण्यगर्भपरं, ब्रह्मपरं वेति संशयः । तत्र पूर्वः पक्षः—नैका विद्येति । सद्विद्यायाः परमात्मपरत्वात् ऐतरेयकवाक्यस्य हिरण्यगर्भपरत्वादिति । **अम्भःप्रभृतीनिति ।** 'स ईक्षत लोन्नु सृजा' इति स इमान् लोकानसृजत अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवीमरः या अधस्तात्ता आप' इत्याम्नायते । अस्यार्थः—ईक्षत ऐक्षत, अम्भो मरीचीर्मरमाप इति लोकनामानि । अम्भःपदार्थं व्याचष्टे—अदोऽम्भः इति । विप्रकृष्टा आपः चान्द्रमस्यः अम्भःपदार्थः । दिवः परेण द्युलोकात परतः । तासां द्यौः प्रतिष्ठा आश्रयः मरीचिपदार्थमाहान्तरिक्षमिति । अन्तरिक्षलोकः सूर्यकिरणव्याप्ततया मरीचिः । पृथिवीलोको मरणयुक्ततया मरपदार्थ इत्याह— पृथिवी मरः । पातालानि अप्पदार्थ इत्याह—या अधस्तादिति । अस्तु प्रकृते लोकसृष्टिप्रतिपादनं, तावता कथं हिरण्यगर्भपूर्वपक्षसिद्धिरत आह—**लोकसृष्टिश्चेति** । पुरुषविधः मनुष्याकारः । रेतःपदार्थमाह—प्रजापतेरिति । देवाः प्रजापते रेतः प्रजापतिजन्या । रेतश्शब्देन देवाः पूर्ववाक्ये विवक्षिताः । ऐतरेयके देवतासहितेष्विन्द्रियेषु सृष्टेषु तैश्चास्माकं भोगसिद्ध्यर्थमाय-

तनं सम्पादयेति स्रष्टुः प्रार्थनायां कृतायां तेन च गवाश्वयोः शरीरे समानीते नेदमस्माकं भोगायालमिति तैः प्रत्याख्याते पुनस्तेन मनुष्यशरीरे समानीते अलमिदमस्मद्भोगायेति तैरङ्गीकृतमित्युपाख्यायते । तदाह—**अपि चेति** । **विशेषवस्त्विति** । शरीरादिविशेषयुक्तेष्विति यावत् । अशरीरस्य परमात्मनः प्रकृते स्रष्टृत्वोपगमे नायं व्यापारस्सम्भवतीति भावः । **लौकिक आत्मशब्दप्रयोग इति** । यद्यपि 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनी'ति कोशानुसारेणात्मपदं प्रमात्रादिसाधारणं, तथापि 'अत सातत्यगमन' इति धातोर्मन्प्रत्ययेन निष्पन्नस्यात्मपदस्य व्याप्तिवाचकतया योगरूढिभ्यामात्मपदं प्रत्यक्चैतन्यवाचकमेव, न तु देहधृतिजीवस्वभावानाम् । तेषु परिच्छिन्नेषु योगासम्भवात् । **पुरुषविध इत्येवमादिविशेषणान्तरमिति** । यद्यप्यात्मपदमत्रापि परमेश्वरमेव स्वारस्येनोपपद्यते, तथाप्युत्तरत्र जीवलिङ्गानां बहूनामुपलम्भाद्धिरण्यगर्भपरं तदास्थीयते । उत्तरत्र हि पुरुषविधपदेन शिरःपाण्यादिमत्त्वं, 'स यत् पूर्वोऽस्मात् सर्वस्मात् पाप्मन औषत् तस्मात् पुरुष' इति पुरुषपदनिर्वचनेन विद्यमानानां पापानां दाहप्रतिपादनेन पापसम्बन्धः, 'सोऽबिभेदि' ति भयसम्बन्धः, 'स वै नैव रेम' इत्यरतिश्च, जीवलिङ्गान्यवगम्यन्ते ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥१७॥

**लोकसृष्टिवचनंत्विति** । तथा च पूर्वपक्षे हिरण्यगर्भपरतया सद्विद्यातो भेदात् न महाभूतोपसंहारः । सिद्धान्ते तु तदैक्यान्महाभूतस्रष्टृत्वं सृष्टानां च लोकानां वाचारम्भणश्रुत्युपसंहारेण मिथ्यात्वं सिध्यतीति फलभेदः । **विवक्षितार्थावधारणानुगुण्येनैवेति** । विवक्षितो ह्ययमर्थः– उपक्रमे 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषदि'ति अद्वैतप्रतिपादनात् मध्ये च स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यते'ति स्रष्टुरेव जीवरूपेण प्रवेशश्रवणात् 'स एतमेव पुरुषं ब्रह्म ततममपश्यदि'ति च जीवस्य ब्रह्मैक्यप्रतिपादनात् अन्तःकरणसाक्षिणं च प्रज्ञानशब्देनोपक्रम्य 'प्रज्ञानं ब्रह्मे'ति तस्य ब्रह्मत्वेनोपसंहाराच्च निर्विशेषं प्रत्यगभिन्नं ब्रह्म प्रकरणार्थ इति प्रतीयते । तदानुगुण्यं चेन्द्रियादिसृष्टिप्रतिपादनस्य तदुपाधिकमेव जीवस्य द्रष्टृत्वादिकं, न तु स्वाभाविकमितितात्पर्यकत्वे उपपद्यते । तथा चोत्तरत्र श्रुतिर्दर्शयति-- 'यदि वाचाभिव्याहृत' मित्यादि । अतो गवाद्यानयनादिव्यवहारस्य त्वंपदार्थशोधोपयोगितया न ब्रह्मपरत्वविरोधिता । **तत्प्रतिपत्तौ पुरुषार्थाभावादिति** । उपलक्षणमेतत् असदर्थकताया अपि । न हीन्द्रियप्रवेशात् प्राक् केवलमेव गवादिशरीरं सृष्ट्वा समानीतमिति सम्भवति । इन्द्रियविशिष्टस्यैव शरीरस्योत्पत्तेः ।

अपि गवाश्वयोश्शरीरमिन्द्रियैरस्वीकृतमिति सम्भवति । तथासति गवादीनां भोग एव न स्यात् । अतो यथाश्रुतार्थतात्पर्यकत्वे असदर्थनिष्प्रयोजनत्वे माभूतामिति देहेन्द्रियविलक्षणस्त्वंपदार्थ इति बोधयितुं कल्पितेयमाख्यायिका । तत्र च शरीरस्येन्द्रियायतनत्वप्रतिपादनेन शरीरविवेको दर्शितः । यस्मिन् प्रतिष्ठिता अन्नमदामेतीन्द्रियवचोभङ्गया भोक्तृत्वं तेषां शिरसि निक्षिप्तम् । तत्प्रसङ्गाच्च साधिष्ठातृकाणामिन्द्रियाणां विराडवयवेभ्यः सृष्टिः प्रतिपादिता 'मुखाद्वाग्वाचोऽग्नि'-रित्यादिना । 'कथं न्विदं मदृते स्यादि'ति वाक्येन शरीरेन्द्रियादिकं स्रष्टारं चेतनं विना स्वकार्यसमर्थं न भवेदिति प्रतिपाद्य तदनुग्राहकतया तद्विलक्षणस्य स्रष्टुः तत्र प्रवेशः प्रतिपादितः—'स एतमेव सीमानमि' ति वाक्येन । एतं ब्रह्मरन्ध्रप्रदेशे विद्यमानं द्वयोः कपालयोस्सीमानं विदार्य एतया द्वारा प्रापद्यत प्राप्तवान्, स जीवरूपेण प्रविष्टः परमात्मा एतमेव जीवाख्यं पुरुषं ततमं तनोतीति तः 'अन्येभ्योऽपि दृश्यत'इति डः । व्याप्ततममित्यर्थः । ब्रह्मापश्यत् प्रज्ञा नेत्रं चक्षुः प्रकाशकं यस्य, तत् प्रज्ञानेत्रम् । एवमैतरेयकवाक्यस्य हिरण्यगर्भपरत्वशङ्कानिराकरणार्थतया सूत्रद्वयं व्याख्यायेदानीं सद्विद्यायाः सत्ताख्यसामान्यपरत्वशङ्कानिराकरणार्थतया योजयति—**अपरा योजनेति** । 'सदेव सोम्ये'ति वाक्यं सत्तासान्यपरम्, उत ब्रह्मपरमिति विचारस्य प्रथमाध्याय एव सङ्गतत्वात् कथं पादसङ्गतिरिति शङ्कायां तथाविधविचारस्य विद्याभेदतदैक्यपर्यवसायितां दर्शयितुं वाजसनेयकवाक्यमुदाहरति—**वाजसनेयक इत्यादिना** । 'इन्द्रियेभ्यः पराह्यर्था-इत्यादिवाक्यस्य ब्रह्मोपक्रमोपसंहारान्तःपातितया माभूत्तत्र विद्याभेदः । छान्दोग्यवाजसनेयकवाक्ययोस्तु भिन्नोपक्रमत्वाद्विद्याभेद इति प्रत्यवस्थानात् सङ्गतिः । अयमत्र पूर्वपक्षाभिसन्धिः—वाजसनेयकवाक्यस्य 'कतम आत्मे'त्युपक्रमानुसारादस्तु विशुद्धात्मपरता । छान्दोग्यवाक्यस्य तु 'सदेव सोम्ये 'त्युपक्रमात् सत्तासामान्यपरताव-गम्यते । सत्पदं हि आकृत्यधिकरणन्यायेन सत्ताजातिवाचकं, नात्मवाचकम् । ततश्च उपक्रमानुसारादुत्तरसन्दर्भोऽपि सत्ताजातिपरतयैव योजनीयः । तथाहि— 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय 'मित्यद्वितीयत्वावधारणम् अभिव्यञ्जकस्याभावेन प्रलये घटत्वादिजातेरनभिव्यक्त्यभिप्रायम् । ईक्षणं च अब्रादीक्षणवत् गौणम् । न चेक्षत्यधिकरणेन गतार्थता । उपक्रमबलेन विशेषशङ्कासमुत्थानात् । 'तत्तेजोऽसृजते'त्यादिकं तु तेजआदौ सृष्टिकाले सत्तासमवायपरम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाप्यवान्तरसामान्यानां महासामान्ये अन्तर्गत्यभिप्राया । एवमन्यान्यपि वाक्यानि यथासम्भवं सत्तासामान्य एव योजनीयानि । **तादात्म्यसम्पत्तिरिति** । अवश्यं च सिद्धान्तिनाप्येतदुपगन्तव्यम् । शब्दभेदेऽर्थभेदस्यावश्यकतया भिन्नपदोपा-

त्तयोस्तत्त्वंपदार्थयोरभिन्नस्वरूपमात्रपर्यवसायितानुपपत्तेरिति पूर्वपक्ष्यभिमानः। सत्पदं न केवलसत्तापरम्। तस्य अस्तिधातोश्शतृप्रत्यये सति निष्पन्नस्य सत्ताश्रयवाचकतया ब्रह्मणि पर्यवसानसम्भवादित्यभिप्रायेण सिद्धान्तयति—**आत्मगृहीतिरित्यादिना**। यदुक्तमाकृत्यधिकरणन्यायेन सामान्यपरत्वं, तदनुवदति — **यदुक्तमिति**। आकृत्यधिकरणस्य रूढपदविषयत्वात् वाचकादिपदवत् सत्पदस्य धर्मिपर्यन्तत्वे नानुपपत्तिरित्यभिप्रेत्य परिहरति—**सोऽभिधीयत इति**। सम्मुग्धतया सद्वस्तूपक्रमस्योत्तरसन्दर्भस्वारस्येन ब्रह्मणि पर्यवसानं दर्शयति—**तथाहीति**। परिचोदनापूर्वकं 'भूय एव मा भगवान्विज्ञापयत्वि'तिप्रश्नपूर्वकम्। एवं सत्पदस्य सम्मुग्धतया सद्वस्तुप्रतिपादकतामुपेत्य वाक्यशेषबलात् ब्रह्मनिर्णयो दर्शितः। इदानीं सत्पदस्य 'सत्ये साधौ च सच्छब्द' इत्यभिधानानुसारेण रूढस्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यमि'ति वाक्यशेषानुसारेण सत्यवस्तुपरत्वावगमात् ब्रह्मव्यतिरिक्तस्य च सर्वस्यानृततया ब्रह्मपरत्वमुपक्रमस्वारस्यादेवावगम्यत इत्याह—**सच्छब्दार्थोऽपि चेति**। आकृत्यधिकरणन्यायाभ्युपगमेऽप्यबाध्यत्वस्य ब्रह्मासाधारणतयाक्षेपस्य ब्रह्मण्येव प्रवृत्तेरिति भावः। **तस्मादेवञ्जातीयकेषु वाक्येष्विति**। ननु, सद्विद्यायास्सत्ताजातिपरतानिरासार्थेऽस्मिन्वर्णके पादसङ्गत्यर्थं शाखान्तरगतस्य निर्विशेषवाक्यस्य यस्य कस्यचिदुदाहर्तव्यत्वे सति विशिष्य ज्योतिर्ब्राह्मणोदाहरणं किमिति कृतम्, उच्यते—सिद्धान्ते उभयोर्विद्यैक्यं सिध्यत् परस्परोपकारकतामनयोराम्नानयोस्सम्पादयतीति द्योतनाय। तथा हि—सद्विद्यायां यथा प्रत्यग्ब्रह्मैक्यं बोध्यते, एवं ज्योतिर्ब्राह्मणेऽपि 'तत्त्वमसी'ति। सद्विद्यायां ज्योतिर्ब्राह्मणे तु 'स वा एष महानज आत्मे'ति। तत्र तत्त्वम्पदार्थशोध उभयोरप्याम्नानयोरपेक्षितः। तत्र सद्विद्यायां तत्पदार्थश्शोध्यते—'वाचारम्भणं विकारो नामधेयमि'त्यादिना। स च तत्पदार्थः शोधनदशायामेवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञया जीवरूपेण स्रष्टुरेव प्रवेशश्रवणेन च त्वंपदार्थपर्यन्तं नीयते। ज्योतिर्ब्राह्मणे तु 'स यत्तत्र किञ्चित् पश्यति अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष' इति त्वंपदार्थश्शोध्यते। स च तत्पदार्थपर्यन्तं नीयते 'अत ऊर्ध्वं विमोक्षायैव ब्रूही'ति। अतश्चाम्नानवैषम्यमपि परस्परोपकारकतायां सुतरामुपयुज्यते। सद्विद्यायां तत्पदार्थोपक्रमस्य त्वंपदार्थपर्यन्तशोधनोपयुक्तत्वात् ज्योतिर्ब्राह्मणे त्वंपदार्थोपक्रमस्यापि तस्य तत्पदार्थपर्यन्तं शोधनोपयुक्तत्वात्। एवं च पदभेदेऽर्थभेदोऽपेक्षित इति शङ्कापि निरस्ता। पदार्थशोधनदशायामेव तत्त्वंपदार्थाभेदपर्यन्ततया दर्शिततया न्यायस्याभेदप्रतीतिविरोधकत्वानुपपत्तेरिति ॥ १७॥ इति आत्मगृहीत्यधिकरणम्॥८॥

# कार्याख्यानादपूर्वम् ॥ १८ ॥

सदेवेति सामान्योपक्रमस्य यथा वाक्यशेषानुसारेण ब्रह्मपरता, एवमत्रापि आचामन्तीति वर्तमानापदेशस्य 'आचामे'दिति वाक्यशेषानुसारेण विधित्वमिति प्रत्यवस्थानात् सङ्गतिः । प्राणसंवादे प्राणश्रैष्ठ्यावधारणानन्तरं किम्मेऽन्नं भविष्यतीति प्राणेन पृष्टे इन्द्रियाणामुत्तरं—'यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुः तद्वा एतदनस्यान्नं' श्वशकुनिप्रभृतिभिः प्राणिभिः यत् भक्ष्यते तत्प्राणान्नमिति तदर्थः । अत्र सर्वैरद्यमानं प्राणान्नमिति दृष्टिर्विवक्षिता । 'न हवा एवंविदि किञ्चनानन्नं भवती'ति वाक्यशेषात् । एवं छान्दोग्ये अन्नदृष्टिविधानानन्तरमाम्नायते 'स होवाच किं मे वासो भविष्यतीति आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवति अनग्नो ह भवति' लम्भुकः प्राप्तिशाली । वाजसनेयके तु काण्वाः 'तस्योमे किमन्नं किं वास इति यत्किंचाश्वभ्य आशकुनिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न हवा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति य एवमेतत् अनस्यान्नं वेद' अन्यैर्जग्धं परिगृहीतञ्च विदुषोऽनन्नं अनुपकारकं न भवति, अपि तु उपकारकमेवेति फलाम्नानात् अन्नदृष्टिर्विवक्षिता । तदनन्तरं तद्विद्वांसश्श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतमेव तदनं प्राणमनग्नं कुर्वन्तो मन्यन्त इति पर्यवस्यति । माध्यन्दिनास्तु 'तस्मादेवंविदशिष्यन्नाचामेत् अशित्वा चाचामेत् एतमेव तदनमनग्नं कुरुते' इत्यप्यामनन्ति । उभयमपि चैतदपूर्वत्वादिति । ननु, उभयविधिरिति न समीचीनम् । वाक्यभेदप्रसङ्गात् । नाप्याचमनमेव विधेयम् । वासस्त्वकीर्तनं तस्यैवार्थवाद इति समीचीनमाचमनमाचान्तेन कर्तव्यमि'त्यादिवाक्यानुसारेण सर्वकर्माङ्गतयावगतं प्राणोपासनायामपि प्राप्तमनूद्यापूर्वं वासस्त्वमेव तदीयानामपां द्रष्टव्यतया प्रतिपाद्यत इति युक्तम् । 'प्राप्तानुवादेन ह्यप्राप्तं विधेयमि'ति हि न्यायः । अन्यथा हि 'लम्भुको ह वासो भवती'ति वाक्यशेषोऽप्यसङ्गत एव स्यात् । न हि स्तुत्यर्थमुपात्तस्य वासोविज्ञानस्य फलं प्रतिपादनीयम् । अतः कथमुभयं विधेयम् , आचमनमेव वा विधेयमिति पूर्वपक्ष इति चेत्, उच्यते— आचामेदित्याचमने स्पष्टो विधिः । अतोऽयमनुवाद इति तावद्वक्तुं न शक्यते । एवंसति यदि सर्वकर्माङ्गतया आचमनं शुद्ध्यर्थतया प्राप्तमस्ति, तदा वचनसार्थक्याय प्राणविद्यासाधारणः आचमनान्तरविधिरयं भविष्यति । ततश्च वचनसार्थक्याय साधारणमाचमनं कृत्वा पुनः प्राणविद्यायामसाधारणाचमनमिदमनुष्ठेयम् । अतो नानुपपत्तिराचमनविधेरिति । अयमत्र सिद्धान्ताभिप्रायः— उभय-

विधानं वाक्यभेदावहं सम्भवत्येकवाक्यत्वे न न्याय्यम् । आचमनं च प्रयतमात्रोपयोगितया प्राणविद्यायां प्राप्तं शक्यमनुवदितुम् । अतोऽप्राप्तमनग्नताचिन्तनमेवैकवाक्यतारक्षणाय विधेयम् । एवं 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदि'ति विधिविभक्तिरपि दध्ना जुहोतीत्यत्र दधिरूपविशेषण इव एवंवित्तारूपविशेषणे संक्रान्ता भविष्यतीति पुरुषमात्रसम्बन्धं तत्तत्कर्मोपयुक्तपुरुषसंबन्धं विदधती विधायकत्वेनोपगता । ननु, यदि आचमनीयास्वप्सु वासोदृष्टिर्विधीयते, तदैकमेवाचमनं प्रायत्यार्थं स्वसाधनीभूताब्द्वारा वासोदृष्टिजन्यः परिधानशब्दार्थः य उपकारस्तदर्थमपि स्यादिति शङ्कते— न चैवंसतीति । क्रियान्तरत्वाभ्युपगमात् वासोदर्शनशेषत्वरहितक्रियात्वाभ्युपगमादिति यावत् । दृष्टिविधिप्रायपाठादपि प्रकृते वासोदृष्टिविधिरेवोपेय इत्याह—अपि चेति ॥ १८ ॥

इति कार्याख्यानाधिकरणम् ॥ ९ ॥

## समान एवं चाभेदात् ॥ १९ ॥

पूर्वत्राचमनानुवादेन वासस्सङ्कल्पो विधेय इत्युक्तम् । इह तु क्वोपासनाविधिः, क्व गुणविधिरिति निर्धारणाभावादग्निरहस्यबृहदारण्यकयोरुभयत्रापि विद्याविधिस्स्वीकर्तव्य इति भवेदेव तस्या भेद इति पूर्वपक्षोत्थानात् सङ्गतिः । इत्येवमादय इति । आदिपदेनाकाशात्मानं कामरूपिणं मनोजवं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा दिशोऽनुप्रभूतं सर्वमिदमभ्यात्तमवाक्यनादरं यथा व्रीहिर्वा यवो वेत्यादि गृह्यते । अत्र बृहदारण्यकाग्निरहस्ययोर्मनोमयत्वादयः केचिद्गुणास्समाना एव । सत्यसङ्कल्पत्वादयोऽग्निरहस्ये, सर्वेशानत्वादयः बृहदारण्यके च विलक्षणाः आम्नायन्त इति[1] । ननु, समानगुणाम्नानं विद्याप्रत्यभिज्ञाद्वारैक्यसम्पादनार्थं भवेत्, तथा चाग्निरहस्यविहितोपासनानुवादेन बृहदारण्यके गुणविधिरिति चेन्न । विनिगमनाविरहेणोभयत्रापि विद्याविधेरावश्यकत्वात् । अपि चैकत्र विद्यानुवादेन गुणविध्युपगमे गुणानामनेकत्वेन वाक्यं भिद्येत । अतो न विद्यैक्यमिति भावः । अयमत्र सिद्धान्ताभिप्रायः—विनिगमनाविरहे हि उभयत्रापि विद्याविधिरिति स्यात् । न च सोऽस्ति । यत्र गुणभूयस्त्वं, तत्र प्रधानं, यत्र गुणानामल्पत्वं, तत्र न प्रधानमिति न्यायो हि लोकसिद्धः । तथा हि यत्र रथगजतुरगपदातिच्छत्रचामरादीनि बहून्यङ्गानि, तत्र राजेत्यध्यवस्यन्ति । यत्र तु तु-

---

१. समाना अपि तु उभयत्राम्नायन्ते इति । क. ख. पुस्तकयोरधिकः पाठः । तत्र विलक्षणा इत्यन्तमेकं वाक्यं, समाना इत्यादि भिन्नं वाक्यमिति ज्ञेयम् ।

रगादीनि कानि चिदेवाङ्गानि, तत्रामात्यादय इत्यध्यवस्यन्ति । अतोऽग्निरहस्ये अनेकगुणश्रवणात्तत्रैव प्रधानोपास्तिविधिः । बृहदारण्यके तु गुणानामल्पतया प्राप्तोपासनानुवादेन गुणविधिरिति निर्णयसम्भवात् । न चैवमपि बृहदारण्यके प्राप्तोपासनानुवादेनानेकगुणविधाने वाक्यभेद इति वाच्यम् । तावद्गुणविशिष्टस्य विततिलक्षणकमस्यैकस्यैव विधानेन तत्पृष्ठलग्नतया गुणानामन्येषामर्थादेव प्राप्तिसम्भवात् ॥ १९ ॥

इति समानाधिकरणम् ॥१०॥

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके सप्तमप्रपाठके 'स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मे'ति हिरण्यगर्भोपासनां विधाय सत्यपदोदितस्य हिरण्यगर्भस्याद्य उत्पत्तिं निरूप्य सत्यनामाक्षरोपासनं च तदङ्गभूतं विधाय तदेवोपास्यं सत्यमनतिवृत्ताधिकारं 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष' इत्यादित्यमण्डलाक्षिस्थानगततयोपदिश्य पुनश्चादित्यस्थानगतं तमेव 'य एष एतस्मिन्मण्डले पुरुष' इत्यनुकृष्य तस्य शिरोबाहुपादरूपाणि त्रीण्यङ्गानि भूर्भुवस्सुवर्व्याहृतिरूपाणि प्रतिपाद्य 'तस्योपनिषदहरि'त्यहर्नाम प्रदर्श्य पुनश्च 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यक्षिस्थं तमेवाधिकृत्य पूर्ववदेव त्रीण्यङ्गानि व्याहृतित्रयात्मकानि निरूप्य 'तस्योपनिषदहमि'त्यहंनामोक्तम् । अमुमर्थं संगृह्णाति—**बृहदारण्यक इत्यादिना**। **उपक्रमाभेदादिति** । उपक्रमे उपासनोत्पत्तिविधेरभेदादित्यर्थः । **व्यतिषक्तपाठादिति** । आदित्याक्षिपुरुषौ क्रमेण पठित्वानन्तरमादित्यपुरुषधर्मान्निरूप्य पुनरक्षिपुरुषमुपक्षिप्य तद्धर्माम्नानात् परस्परं सङ्कीर्णतया अक्ष्यादित्यपुरुषयोराम्नानमवगम्यते । यदि ह्यक्षिपुरुषविद्यादित्यपुरुषविद्यातो भिन्ना स्यात्, तदा यथोद्गीथे प्राणदृष्टिविधिं कृत्स्नं परिसमाप्य तत्रैवाकाशदृष्टिविधिराम्नातः, न तु व्यतिषक्ततया, एवमत्रापि विद्याभेदविवक्षायां भवेदिति भावः । नन्वस्तु उपासनैक्यमुपास्यैक्यं च, तथापि अहरहंनाम्नोर्न सङ्करः। आदित्यमण्डलमुपक्रम्याहर्नाम्नः प्रतिपादनात्, अक्षिस्थानं च उपक्रम्य अहंनाम्नः प्रतिपादनात् । अतः स्थानभेदाद्व्यवस्था भविष्यति । उपासनैक्येऽपि स्थानभेदात् प्रयोगावृत्तिरपेक्षिता । तथा चादित्यमण्डलगतपुरुषोपासनाप्रयोगे अहर्नाम ध्येयम्, अक्षिगततयोपासनाप्रयोगेऽहंनाम ध्येयमिति चेत्, न । तस्योपनिषदिति तच्छब्दः सर्वनाम्नां प्रधानपरामर्शकत्वव्युत्पत्तिबलात् पुरुषस्योपनिषदा सम्बन्धमाह, न तु स्थानस्य, अप्रधानत्वात् । अत एकस्य पुरुषस्य नामद्वयसम्ब

न्धावगमात् पुरुषस्य च प्रयोगद्वयेऽप्यनुस्यूततया प्रधानानुसारेण गुणभूतयोर्नाम्नोः प्रयोगद्वयेऽप्यावृत्तिरिति ॥ २० ॥

## न वा विशेषात् ॥२१॥

अयमभिप्रायः—यद्यपि सर्वनाम प्रधानपरामर्शकं, तथापि येन रूपेण प्रधानं प्रस्तुतं, तद्रूपविशिष्टस्य परामर्शकम् । तथैव व्युत्पत्तेः । तथा च 'तस्योपनिषदहरि'त्यत्रादित्यमण्डलविशिष्टस्यैव प्रस्तुततया तथाभूतं परामृश्य स्थानविशेषोपाधिकतयैवाहर्नाम निर्दिशति । एवं 'तस्य उपनिषदहमि' त्यत्रापि विशिष्टपरामर्शादुपनिषदस्स्थानविशेषोपाधिकता द्रष्टव्या । अत एव व्यवस्थिततया तस्योपनिषदहः, तस्योपनिषदहमिति निर्देशोऽपि सङ्गच्छते । अन्यथा तस्योपनिषदहमित्येव स्यात् । अतो व्यवस्थोपनिषदोरिति ॥ २१ ॥

## दर्शयति च ॥२२॥

नन्वादित्याक्षिगततयोद्गीथाध्यायाम्नातमुपासनमुपास्यं च भिन्नमेव । उभौ स गायतीत्युपास्यद्वित्वप्रतिपादनात् उपासनैक्ये प्रमाणाभावाच्च । अतस्तत्रादित्यपुरुषे आम्नातानां धर्माणामक्षिपुरुषे अप्राप्तेरतिदेशस्सार्थकः । स कथमुपास्योपासनयोरैक्ये धर्मासाङ्कर्ये लिङ्गं भवेदित्यभिप्रेत्य शङ्कते—**कथमस्य लिङ्गत्वमिति । तदुच्यत इति** । उपासनायाः भेदो न सम्भवति । 'य एवंविद्वान् साम गायती'त्युत्पत्तिविधेरेकत्वात् उपास्यस्य परमेश्वरस्योभयत्राप्यैक्यमावश्यकम् । उभाविति निर्देशस्तु स्थानभेदोपाधिक इति भावः ॥२२॥

इति सम्बन्धाधिकरणम् ॥११॥

## सम्भृतिद्युव्याप्त्यपि चातः ॥२३॥

पूर्वत्र स्थानभेदाद्धर्माणामसाङ्कर्यं निरूपितम् । वीर्यसम्भृत्यादिगुणेषु शाण्डिल्यादिविद्याविरुद्धस्थानानाम्नानात्तासूपसंहार इति प्रत्यवस्थानात्सङ्गतिः । ब्रह्मणा ज्येष्ठानि वीर्याणि सम्भृतानि स्वस्मिन् स्थापितानि ज्येष्ठं ब्रह्माग्रे ब्रह्मादिदेवेभ्यः प्रागेव दिवं व्याप्नोत् 'ब्रह्मा देवानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं क' इति मन्त्रस्योत्तरार्धं तत्र द्रष्टव्यम् । तदर्थो द्युनिवेशप्रभृतय इति संगृहीतः । ननु, वीर्यसम्भृत्यादिगुणकोपासनायाश्शाण्डिल्यादिविद्यैक्ये सत्येषां गुणानां तत्रोपसंहारो भवेत्, तदैक्यं तु तत्प्रत्यभिज्ञया भवेत् । न चेह प्रत्यभिज्ञाप्रयोजकं शाण्डिल्यादिविद्यागतासाधारणगुणसङ्कीर्तनमस्ति । अतः कथमुपसंहार इति चेत्, उच्यते— वीर्यसम्भृत्यादिगुणेषु न कश्चिदुपासनाविधिश्शब्दतोऽस्ति। अतो

ऽनारभ्याधीतानामेषां क्व निवेश इति विवक्षायाम् अत्रैवोपासीतेत्यध्याहारेण पृथगुपासनकल्पने गौरवात् खिलग्रन्थपठितानामेषां गुणानां तत्सम्बन्धिशाखागतविद्यासूपसंहारो भविष्यति । खिलस्य तच्छाखानुक्तापेक्षितार्थपूरकत्वेनैव तच्छाखाशेषत्वस्योपपादनीयत्वात् । 'न वा विशेषादि'ति सूत्रे विशेषपदेन स्थानभेदस्य विवक्षितत्वादिहापि अतश्शब्देन स एव परामृश्यत इति अभिप्रेत्यापाततस्सिद्धान्तमाह—**अत एवायतनविशेषयोगादिति** । सूत्रे सम्भृतिश्च द्युव्याप्तिश्च तयोस्समाहारः, सम्भृतिद्युव्याप्तीति विग्रहः । **तासां कुत इति** । द्युव्याप्त्यादीनां विभुधर्माणाम् अल्पायतनगते परिच्छिन्ने ब्रह्मणि निवेशासम्भवादिति भावः । अमुं सिद्धान्तं दूषयति—**नन्विति** । **एतास्वपीति** । तत्र चेत् , 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चे'ति सूत्रोक्तरीत्या परिहारो विवक्षितः । स इहापि समानः । स्वयं सिद्धान्तमाह—**सत्यमेवमिति** । 'न वा विशेषादि'ति सूत्रे हि विशेषपदेन नाहत्य स्थानभेदो विवक्षितः, अपि तु 'तस्योपनिषदहरि'त्यादौ उपनिषद्विशेषे स्थानविशेषोपादानेन स्थानान्तरव्यावर्तनादित्यर्थो विवक्षितः । तथाचेहाप्यतश्शब्देन व्यावृत्तिः परामृश्यते, तद्धेतुश्च उपासनान्तरप्रत्यभिज्ञाभावो विवक्षितः । तदाह—**तथाप्यत्रेति** । तथा च खिलोक्तत्वेऽपि तच्छाखागतविद्याविशेषप्रत्यभिज्ञानाभावात् तच्छाखोक्तसर्वब्रह्मविद्यासूपसंहारे च वाक्यावृत्तिप्रसङ्गादिहैवोपासीतेत्यध्याहृत्य सम्भृत्यादिगुणकमुपासनान्तरं कल्पनीयम् । खिलग्रन्थाम्नानं तु अध्ययनधर्मविशेषसम्बन्धार्थं भविष्यतीति परिहाराभिप्रायः ॥२३॥

इति सम्भृत्यधिकरणम् ॥ १२ ॥

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनं तदस्य वसवोऽन्वायत्ताः तं चेदस्मिन् वयसि किञ्चिदुपतपेत् व्याध्यादिकं यदि पीडयेदित्यर्थः। स ब्रूयात् प्राणा वसवः इदं मे प्रातस्सवनं माध्यन्दिनं सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति । तत्र व्याध्युपशमार्थ आशीर्मन्त्रः अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं तदस्य रुद्रा अन्वायत्ताः तत्र व्याधिप्राप्तौ प्राणा रुद्रा इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुतेत्यादिराशीर्मन्त्रः । अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत् तृतीयसवनं तदस्यादित्या अन्वायत्ताः तत्र व्याधिप्राप्तौ प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेत्यादिराशीर्मन्त्रः । प्राह षोडशं वर्षशतं जीवतीति फलं च कीर्तयित्वा 'स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षा अथ यदश्नाति यत् पिबति यद्रमते

तदुपसदैरेति अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति अथ यत्तपो दा-नमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणा मरणमेवावभृथ'इति ताण्डिनस्समाम-नन्ति । पैङ्गिनोऽप्येवमेवामनन्ति । तदाह—**अस्ति ताण्डिनां पैङ्गिनां चेति** । तै-त्तिरीयकास्तु 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदि-र्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत् पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्यु-त्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत् सायं प्रातरत्ति तत्समिध यत् प्रातर्मध्यन्दिनं सायं च तानि सवनानि ये अहो-रात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ' इ-ति समामनन्ति । पूर्वत्र प्रत्यभिज्ञानाभावात् उपसंहारो नेत्युक्तम् । इह तु पुरुषयज्ञत्व-मरणावभृथत्वाद्यसाधारणधर्मप्रत्यभिज्ञाया विद्यमानत्वात् ताण्डिपैङ्गिशाखागतायास्तै-त्तिरीयकगतायाश्च पुरुषविद्याया एकत्वादुपसंहारो गुणानां भवत्विति प्रत्यवस्थानात् सङ्गतिः । ननु, 'अन्यथात्वं शब्दादि'त्यत्र प्राणसंवादादिबहुसारूप्ये सत्यप्युद्गीथा-वयवोङ्कार एकत्रोपास्यः, अन्यत्र तूद्गातेत्येतावता वैषम्येण विद्याभेद आश्रितः, इह तु मरणावभृथत्वादिकं किञ्चिदेव सादृश्यम् 'आत्मा यजमान'इत्यादिकं बहुवैषम्य-म् । अतः कथमत्र विद्यैक्यशङ्का । सत्यम्, 'अन्यथात्वं शब्दा'दित्यत्रोपसर्जनीभूतानां ब-हूनां साम्ये सत्यपि प्रधानवैषम्यात् विद्ययोर्भेदो दर्शितः । इह तु पुरुषे उपास्यं य-ज्ञत्वरूपं यत् प्रधानं, तदुभयत्रापि सममिति विद्यैक्यमाशङ्क्यते। एवंसति छान्दोग्यतैत्ति-रीयकयोर्ये गुणा विरुद्धाः, यथैकत्र सायंप्रातर्मध्यन्दिनेषु सवनत्रयदृष्टिः, अन्यत्र त्रि-धा विभक्ते आयुषि तेषां विकल्पो भविष्यति । अविरुद्धानामुपसंहारो नित्यं भवि-ष्यतीति पूर्वपक्षिणोऽभिप्रायः । सिद्धान्ती प्रधानवैषम्यमुत्तरत्र प्रतिपादयिष्यति । गुणानां तु यत्र बहूनां वैषम्यं, साम्यं कुचिदंश एव, तादृशस्थले भूयोऽनुग्रहन्याया-दनेकगुणकृतप्रत्यभिज्ञाविच्छेदेन विद्याभेद एव स्वीकर्तव्य इति तावत्प्रथममाह—**नोप-संहर्तव्या इतीत्यादिना** । इदानीं प्रधानवैषम्यं दर्शयति —**न चेति** । ननु, सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम् । अत आह—**न हीति** । यद्यपि सामानाधिक-रण्यमुचितं, तथापि तदाश्रयणे आरोपः स्वीकर्तव्यः । तस्यैव च पुरुषस्य यज्ञत्वेन दृष्टस्य पुनस्तद्विरुद्धं यजमानत्वरूपं यज्ञकर्तृत्वमपि द्रष्टव्यम् । विदुषो यज्ञस्येत्येतदपि गु-णान्तरविधायकमिति वाक्यभेदश्च प्रसज्यत इति वैयधिकरण्यमेवाश्रीयते । ननु, वै-यधिकरण्यपक्षेऽपि विदुषस्सम्पादकयज्ञसम्बन्धोऽनूद्यत इति वक्तव्यं, तत्रोपपद्यते ।

न हीह तस्मिन्पक्षे साम्पादिकस्य कस्य चिद्यज्ञस्य सम्पादनं सम्भवति । उत्तरत्र ह्यात्मादीनां यजमानत्वादिकमेव सम्पादितं, न तु कस्य चिद्यज्ञत्वं सम्पादितम् । नापि यज्ञस्य साम्पादिकस्य विद्वत्सम्बन्धः केनचित् प्रमाणेन प्राप्त इति चेत्, उच्यते-- यज्ञाङ्गानां यजमानादीनां सम्पादनात् तत्समुदायस्य यज्ञत्वमर्थसिद्धम् । तस्य च पूर्वानुवाकाम्नातविद्यासम्बन्धोऽपि प्रकरणात्सिद्ध इति विदुषो यज्ञस्येति वैयधिकरण्यपक्षे सम्भवत्यनुवादः । **ससन्न्यासामात्मविद्यामिति** । 'तस्मान्न्यासमेषान्तपसामतिरिक्तमाहुरि'ति सन्न्यासः, 'ओमित्यात्मानं युञ्जीते' ति ब्रह्मविद्या पूर्वानुवाके प्रस्तुता ॥ २४ ॥

इति पुरुषविद्याधिकरणम् ॥ १३ ॥

## वेधाद्यर्थभेदात् ॥ २५ ॥

पूर्वस्मिन्नधिकरणे विद्यासन्निधिसमाम्नातस्य तैत्तिरीयकगतपुरुषयज्ञस्य विद्याङ्गत्वमुक्तम् । एवं तर्हि विद्यासन्निधिसमाम्नातानां मन्त्रादीनामपि विद्याङ्गत्वमस्त्विति प्रत्यवस्थानात् सङ्गतिः । ननु, विनियोजकवचनाभावे कथं वेधमन्त्रादीनां विद्यासु विनियोगस्स्यादित्याशङ्क्य प्रत्यक्षवचनाभावेऽपि सन्निधिसामर्थ्यकल्पितेन वचनेन विनियोगो भविष्यतीति परिहरति—**नन्वित्यादिना** । ननु, 'सर्वं प्रविध्ये'-त्यादिमन्त्रस्यायमर्थः-शत्रोस्सर्वं शरीरं हृदयं च प्रविध्य भित्वा धमनीस्सिराश्शिरश्च प्रवृज्य नाशयित्वा त्रिधा छिन्नः कर्तव्य इति । अयं च मन्त्रो लिङ्गानुसारेणाभिचारिककर्माङ्गतया प्रतीयते । 'देवसवितरि'ति मन्त्रो यज्ञयज्ञपतिप्रसवस्यादित्यात् प्रार्थनां प्रतिपादयन् यज्ञाङ्गं प्रतीयते । श्वेत उच्चैश्श्रवा हयो यस्य, स श्वेताश्वः, हरिरिन्द्रनीलमणिस्तद्वन्नीलोऽसीति इन्द्रप्रकाशकः, तद्देवत्ये कर्मण्यङ्गमिति प्रतीयते । 'शन्नो मित्र' इत्यादि 'ऋतं वदिष्यामि तेजस्विनावधीतमस्त्वि'ति लिङ्गादध्ययनाङ्गमवगम्यते । प्रवर्ग्यश्च 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ती'ति वचनेन क्रत्वव्यभिचारितोपसद्भिः क्रतोरुपस्थापनात् अनारभ्याधीतानां प्रकृतिगामित्वाच्च 'फलवत्सन्निधावफलं तदङ्गमि'ति ज्योतिष्टोमाङ्गमवगम्यते । अग्निष्टोमस्य च स्वर्गार्थता वचनेनैव 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति सिद्धा । अतो वेधादिमन्त्राणां कर्मणां च प्रवर्ग्यादीनां सन्निधिमपेक्ष्य प्रबलैश्श्रुतिलिङ्गवाक्यैरन्यार्थतया अवगतानां कथं सन्निधिना विद्यार्थता स्यादिति चेत्, उच्यते—सन्निधेश्श्रुत्यादिकमपेक्ष्य दुर्बलत्वं हि श्रुत्यादिकमपेक्ष्य विनियोजकत्वाद्वक्तव्यम् । तत्तुल्यं श्रुत्यादिष्वपि । न हि श्रुत्यादिकमप्यासक्तिरूपं सन्निधिमनपेक्ष्य विनियोजकं भवति । श्रुत्यादिवत् आसक्तिरूपायास्सन्निधेरपि शाब्दबोधाङ्गत्वात् । अतस्सन्निधेर्दुर्बलत्वमेवासिद्धम् । अस्तु वा दुर्बलता ।

अथापि तस्य प्रबलेन बाधो विरोधे सत्येव सम्भवति । न चेह विरोधोऽस्ति । श्रुत्यादिभिरन्यत्र विनियुक्तानामपि तदनपबाधेन सन्निधिना वेधादिमन्त्राणामन्यत्र विनियोगसम्भवात् । अपि च सन्निधिबलेन यदि मन्त्रादीनां विद्यासु विनियोगो नोपेयेत, तदा सन्निधिर्व्यर्थ एव स्यात्। वैयर्थ्यप्रसक्तौ च न प्रबलेनापि दुर्बलस्य बाधस्सम्भवति । अत एव 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'ति वाक्यप्रमाणेन चयनानुनिष्पन्नस्थण्डिलविशेषस्याग्निष्टोमाङ्गाहवनीयाधारत्वावगमेऽपि ज्योतिष्टोमप्रकरणाम्नाताया उत्तरवेद्या अपि प्रकरणपाठो व्यर्थो मा भूदित्याहवनीयाधारतायां समुच्चय उपेयते । तदाह—**न हि सन्निधेरर्थवत्त्वे सम्भवत्यकस्मादसौ अनाश्रयितुं युक्त इति** । ननु, सन्निधिनापि मन्त्राणां विनियोगोऽनुष्ठेयार्थप्रकाशकतामुपेत्यैव वक्तव्यः । वेधादिमन्त्राणां चोपासनोपयुक्तार्थस्मरणजनकता नोपलभ्यते । तत्प्रकाश्यानां धमन्यादिवेधानामुपासनास्वभावादन्यार्थानां च कर्मणामन्यत्र विनियोगे विनियुक्तविनियोगविरोधस्स्यादिति शङ्कते—**ननु नैषां मन्त्राणामिति । हृदयादिसंकीर्तनादिति** । मन्त्रगतं हि यद्येकं पदं पदद्वयं वानुष्ठेयार्थस्मरणोपयुक्तं, तदेतरेषां पदानां तद्विशेषणसमर्पकतया स्तावकतामुपेत्य मन्त्रस्यावगतो विनियोगो निर्वहति । यथा 'देवस्य त्वा सवितुः प्रसव' इति मन्त्रे'ऽग्नये निर्वपामी'ति पदद्वयस्यानुष्ठेयार्थप्रकाशकतया 'देवस्य त्वे' त्यादिपदानां स्तावकतेति भावः। ननु, देवस्य त्वेति मन्त्रे इतरेषां पदानां निर्वापस्तावकता सम्भवति । तत्र निर्वापस्य प्राधान्यावगमात् । वेधादिपदानां तु न हृदयादिस्तावकता सम्भवति। वेधादीनामेव मन्त्रे प्राधान्यप्रतीतेः । अतः कथमत्र देवस्य त्वेतिमन्त्रन्यायः प्रवर्ततामिति चेत्, उच्यते—'शन्नो मित्र' इतिमन्त्रस्य तावदुपासनोपयुक्तार्थस्मारकता सम्भवति । उपासकेन देवताप्रार्थनस्योपासनोपयुक्तस्य कर्तव्यतोपपत्तेः । एवं देवतानमस्कारोऽप्युपासनोपयुक्तो भविष्यति । तथा च 'शन्नो मित्र' इत्यादिप्रार्थनाप्रतिपादकं 'नमो ब्रह्मण' इत्यादिनमस्कारप्रतिपादकं च भवत्युपासनोपयुक्तम् । 'ऋतं वदिष्यामी'त्यादिकम् उपासनाङ्गभूतसत्यादिवदनप्रकाशकं भविष्यति । 'तेजस्विनावधीत'मित्युपासनोपयुक्ताध्ययनस्मारकम् । अन्यत्तु गुरुशिष्ययोर्हितादिप्रार्थनापरमुपासनासमवेतमेव । एवं च वेधादिमन्त्रान्तरोदाहरणं सिद्धान्ते दृष्टान्ततयोपयुक्तं भविष्यतीति तदुदाहरणे नातिवाभिनिवेष्टव्यम् । भूः प्रपद्येऽमुनेति । 'अन्तरिक्षोदरः कोश' इत्यादिना ब्रह्माण्डस्य कोशत्वेन उपासनं पुत्रदीर्घायुष्ट्वफलं विधाय तत्र 'भूः प्रपद्य' इत्यादयो मन्त्रा अङ्गत्वेन विहिताः।अमुनेतिपदस्थाने उपासनाकाले पुत्रनाम ग्राह्यम् । भूरित्यस्य मन्त्रांशस्यार्थस्तत्रैव ब्राह्मणेन प्रतिपादितः—'यदवोचं भूः प्रपद्य इ-

ति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्ये' इत्येतदवोचमिति । अमुना पुत्रेण सहित एव पृथिव्यादिकं प्राप्नवानि, न तु पुत्रवियुक्त इत्युपासकप्रार्थनामन्त्रार्थः । नन्वन्यत्र विनियुक्ततयोपस्थितस्यान्यत्र विनियोगो न सम्भवति । अत एव प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र प्रयाजशेषपदेन प्रयाजार्थतयोपस्थितस्याभिघारणेऽपि विनियोगासम्भवात् प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यार्थस्स्वीकृतः । तथा च प्रवर्ग्यादीनामन्यत्र वचनबलेन विनियुक्ततयावगतानां कथं विद्यासु विनियोगस्स्यादित्यत आह–**तथा प्रवर्ग्यादीनामिति**। बृहस्पतिसवो हि 'यः पुरोधाकामस्स्यात् स बृहस्पतिसवेन यजेते' तिवचनेन ब्रह्मवर्चसार्थतयावगतः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति क्त्वाप्रत्ययसमभिव्याहृतविधिविभक्त्या वाजपेयार्थतया विधीयते । क्त्वाप्रत्ययेन हि द्वयोर्धात्वर्थयोरेकः कर्तावगम्यते । कर्तृत्वं च क्रियाविशिष्टत्वम् । तथा चैकत्वस्य विशिष्टान्वयिनो विशेषणीभूतक्रियायामप्यन्वयात् तस्या अप्येकत्वमवगम्यते । क्रिया च प्रयोगापरपर्यायेति वाजपेयबृहस्पतिसवयोरेकः प्रयोगोऽवगम्यते । प्रयोगैक्यं चाङ्गप्रधानभावेन वा एकफलार्थत्वेन वा वक्तव्यम् । तत्र वाजपेयफले वचनेन वाजपेयावरुद्धे बृहस्पतिसवनिवेशासम्भवादङ्गाङ्गिभाव एव कल्प्यते । तत्रापि वाक्यस्य वाजपेयप्रकरणगतत्वात् 'बृहस्पतिसवेन यजेते'ति पुनर्विधानावगतबृहस्पतिसवप्रयोगस्यैव फलापेक्षणाच्च तस्यैव वाजपेयाङ्गता कल्प्यते । यद्यपि च 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते' तिवचनबलादेव, बृहस्पतिसवव्यतिरिक्ताङ्गविशिष्टतया वाजपेयं परिसमाप्य तदनन्तरं वसन्ते स्वकाल एव बृहस्पतिसवोऽनुष्ठेय इत्यवान्तरप्रयोगभेदोऽस्ति । तथापि महाप्रयोगैक्यमादाय क्त्वाप्रत्ययावगतकर्त्रैक्यनिर्वाहः । ततश्च यथान्यार्थतयावगतस्य बृहस्पतिसवस्य वाक्येन वाजपेये विनियोगः, एवं प्रवर्ग्यादिकर्मणामन्यार्थतयावगतानामन्यत्र विनियोगो भविष्यति । ननु, विनियुक्तस्य विनियोगे प्रतीतावेव विरोधो,न वस्तुनि । अत एव'पुरोडाशकपालेन तुषानुपवपती'त्यत्र पुरोडाशकपालपदेन पुरोडाशस्यैव सम्बन्धि कपालमिति विशेपणस्य व्यावर्तकस्वभावतयावगमे सति तुषोपवापशेषत्वबोधकताया विरोधेनासम्भवात् प्रतीतिविरोधपरिहाराय पुरोडाशकपालपदस्याधिष्ठानलक्षणोपेयते । वस्तुविरोधस्तु नाधिष्ठानलक्षणया परिहर्तुं शक्यः । बृहस्पतिसवस्य तु प्रकृतवाक्येऽन्यशेषतयानुपस्थितत्वान्नास्ति विनियुक्ताविनियोगविरोध इति चेत, तर्हि प्रवर्ग्यादिकर्मणामपि प्रकृतेऽन्यशेषतयानुपस्थानान्नास्ति विरोध इति तुल्यम् । नन्वत्र भाष्ये ब्रह्मवर्चसार्थतया विनियुक्तस्यैव बृहस्पतिसवस्य वाजपेयाङ्गत्वमित्युक्तम् । सिद्धान्तावसरेऽपि तथैव वक्ष्यते । अत एतत् भाष्याभिमतमवगम्यते । तत्तु मीमांसकमर्यादाविरुद्धम् । अनुपादेयपदार्थसमभिव्याहृतासान्निधेः कर्मभेदकृ-

तोपगमात्। तथा हि--कुण्डपायिनामयनप्रकरणे समाम्नातं 'मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेते'तिवाक्यमुदाहृत्य तैस्सिद्धान्तितम्-अत्र हि 'दध्ना जुहोती'-त्यादिवत् गुणसंक्रान्तो विधिरिति वक्तुं न शक्यते । मासस्य पुरुषकृत्यसंपाद्यतया दध्यादिवद्विधेयत्वासम्भवात् ।अतो मासे होमादिकमेव विधेयम् । न च होमादिकमपि विहितमिति तस्यापि विधेयत्वं न सम्भवतीति वाच्यम् । नित्याग्निहोत्रप्रकरणे तद्विधिसद्भावेऽपि तस्येहानुपस्थितेः । न च इदमेव वाक्यं तत्स्मारकं भविष्यतीति वाच्यम् । तथासत्येतस्य वाक्यस्य स्मारकतया विधायकता नास्तीति वाक्यं व्यर्थमेव भवेत् । न च स्मृतस्यैवाग्निहोत्रादेः पुनस्सत्राङ्गतया विध्यभ्युपगमान्न वाक्यवैयर्थ्यमिति वाच्यम् । एकस्यैव वाक्यस्य स्मारकत्वे विधायकत्वे चाग्निहोत्रहोमः प्रसिद्धः । स च सत्राङ्गमिति वचनव्यक्त्यभ्युपगमे व्यापारद्वयावेशेन वाक्यावृत्तिप्रसङ्गात्। न चाग्निहोत्रादिनाम्ना प्रसिद्धाग्निहोत्रस्मरणम् । नाम्न आख्यातपारतन्त्र्येणाख्यातस्य विधिस्वरतया विहितस्य विधानायोगेन कर्मभेदावगतौ नाम्ना तत्प्रतिबन्धासम्भवात् । नाम्ना सिद्धरूपेण विहितत्वोपस्थितेः पूर्वापरीभूतात्मना विधेयताप्रतिबन्धायोगाच्च । अत आख्यातस्वारस्येन कर्मान्तरत्वावगमे सति अग्निहोत्रनाम प्रसिद्धाग्निहोत्रेण सादृश्यं प्रतिपादयदेतद्वाक्यविहिते कर्मणि नैयमिकाग्निहोत्रधर्मातिदेशार्थं भविष्यतीति 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्राप्यनुपादेयवाजपेयोत्तरकालरूपगुणसमभिव्याहृतासन्निधिः प्रसिद्धबृहस्पतिसवस्येति प्रकृतवाक्ये बृहस्पतिसवस्य मासाग्निहोत्रादिवत् कर्मान्तरतैवोचितेति चेत्, उच्यते—उक्ते मीमांसकैरेतस्मिन्न्याये भाष्यकाराणामनादर एव। तथाहि—'मासमग्निहोत्रं जुहोती'-त्यत्र प्रसिद्धाग्निहोत्रस्य नाम्ना तावदुपस्थितिरस्त्येव। एवं च वाक्यस्यावृत्तिर्नास्ति । नाम्ना स्मारितस्य आख्यातेन सत्राङ्गतया विधानसम्भवात् । न चाख्यातपरतन्त्रेण नाम्नाख्यातावगता कर्मोत्पत्तिर्निरोद्धुमशक्येति वाच्यम्।अप्रसिद्धनाम्न आख्यातपारतन्त्र्येऽपि प्रसिद्धनामानुसारेणैवाख्यातवृत्त्युपगमात् ।तथाहीष्टिपशुसोमयागेषु फलापेक्षेषु बहुषूत्पन्नेषु 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति फलवाक्ये श्रुते राजसूयपदस्य क्वचित् कर्मविशेष एतद्दशायामगृहीतशक्तितया यजिपदेन फलापेक्षिणामुत्पन्नानामिष्टिपशुसोमयागानां सर्वेषां फलार्थतया विधिस्वारस्येऽवगते यजिसमानाधिकरणं राजसूयपदमपि तेषां सर्वेषां नामेत्याख्यातानुवर्तित्वमप्रसिद्धस्य राजसूयपदस्याश्रितम् ।'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ज्योतिष्टोमेन स्वर्गकामो यजेते'ति विधौ श्रुतानां दर्शादिनाम्नां तु 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते एतानि वा व तानि ज्योतींषि य एतस्य स्तोमा' इत्यर्थवादानुसारेण कालयोगिष्वाग्नेयादिषु सोमयागे च प्रसिद्धत्वात् आख्यातस्वारस्येन 'दर्शपूर्णमा-

साभ्यां स्वर्गकामो यजेते'त्यत्र कालयुक्तानामाग्नेयादीनां तद्रहितानां प्रयाजादीनाञ्च परामर्शे सत्यपि नामानुसारेण कालयोगेष्वाख्यातस्य सङ्कोच आश्रितः । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र त्वाख्यातस्वारस्येन दीक्षणीयाप्रभृतीनामिष्टीनां सोमयागस्य च परामर्शे सत्यपि ज्योतिष्टोमपदस्य 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयती'त्याद्यर्थवादावगतदीपकत्वगुणेन ज्योतिःपदेन त्रिवृदादिस्तोमानुपादाय ते यस्य सन्तीति बहुव्रीहिणा 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि'ति वाक्यसिद्धस्तोत्रगतसङ्ख्यात्मकस्तोमसंबद्धे ' सोमेन यजेते'ति वाक्योत्पन्ने यागे एतानि वा वेत्यर्थवादेन व्युत्पन्नत्वादाख्यातस्य सोमयागमात्रविषयतया सङ्कोच आश्रितः । ततश्चाग्निहोत्रनाम्नोऽप्यग्निहोत्रं जुहोतीति प्रसिद्धाग्निहोत्रोत्पत्तिवाक्येन होमविशेषनामत्वस्य सिद्धतया'मासमग्निहोत्रं जुहोती'त्यत्रापि आख्यातस्य तदनुसार उचित एव । अपिचाख्यातं नोत्पत्तिमेव कर्मणोऽवश्यं प्रतिपादयति । प्रयोगविधित्वेऽप्याख्यातस्वारस्याहानेः । तथा चाख्यातस्योत्पत्तिप्रयोगयोरुदासीनतया नाम्ना प्रसिद्धाग्निहोत्रप्रत्यभिज्ञानेनोत्पत्तेः प्रतिरोधात् कांस्यभोजिन्यायेनाप्याख्यातस्य प्रयोगविधिपरता सिध्यति । न चाख्यातेन पूर्वापरीभूततया होमप्रतिपादनात्तेन रूपेण सिद्धार्थनाम्ना प्रत्यभिज्ञानाभावात् कथमुत्पत्तिविधिप्रतिरोधकतेति । अस्त्वेवं रूपभेदः, तथाप्यग्निहोत्रनामार्थस्य जुहोत्यर्थस्य चाभेदेनान्वय आवश्यकः । कथमन्यथा प्रसिद्धाग्निहोत्रवाक्ये वा तस्य नामता स्यात् । ततश्च मासमग्निहोत्रमित्यग्निहोत्रपदस्य जुहोतेश्च सामानाधिकरण्यं पश्यतोऽभिज्ञस्य य एव होमः प्रसिद्धाग्निहोत्रवाक्ये विहितस्स एवायमिति भवत्येव प्रत्यभिज्ञा, न तु सिद्धत्वसाध्यत्वरूपधर्मभेदेनाभेदप्रतीतिप्रतिरोधः । सिद्धत्वादेश्शब्दविशेषोपाधिकतया अर्थाभेदप्रतीतौ विरोधाभावात् । अन्यथा वेदाः प्रमाणमित्यत्राप्यभेदप्रतीतिर्न स्यात् । स्वीकृतं च नामानुसारेण दूरस्थस्य प्रत्यभिज्ञान'माज्यभागौ यजती'ति गृहमेधीयप्रकरणपठितवाक्ये । तत्र हि 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमि'ति वाक्यविहितायामिष्टावितिकर्तव्यताकाङ्क्षिण्यामतिदेश इतिकर्तव्यतापूरणाय न कल्पनीयः। दर्शपूर्णमासयोः क्लृप्तोपकारजननसामर्थ्ययोः आज्यभागयोश्श्रवणेन तदेकवाक्यतयेतिकर्तव्यताकाङ्क्षायाश्शरितार्थत्वात् । यत्र हि विकृतौ प्राकृतं क्लृप्तोपकारजननसामर्थ्यमङ्गं न श्रूयते, तत्र सान्निधिपठितैरपि वैकृतैरपूर्वैः पदार्थैर्नेतिकर्तव्यताकाङ्क्षा शान्ता भवतीति कृत्वा चोदनालिङ्गादिसंपन्नेनातिदेशेन प्रापितैः प्राकृतैः क्लृप्तोपकारजननसामर्थ्यैरेव पदार्थैर्झटिति सम्बद्धैरितिकर्तव्यताकाङ्क्षापूरणे सति वैकृतानां सन्निधिपाठो व्यर्थो माभूदिति रक्तपटन्यायेन तेषामपीतिकर्तव्यतानिवेशः कल्प्यते ।

आज्यभागयोस्तूपकारजननसामर्थ्यस्य प्रकृतौ क्लृप्ततया दार्शपूर्णमासिकयोरेव च तयोर्नाम्ना प्रत्यभिज्ञानात् गृहमेधीयवाक्येनान्वये सतीतिकर्तव्यताकाङ्क्षाया निवृत्ततया चोदकाभाव एव कल्प्यते । एवंसति चोदकात् सम्भवत्प्राप्तिकयोराज्यभागयोः पुनश्श्रवणमपि सार्थकमुपपद्यते । चोदककल्पने तु तत एवाज्यभागयोः प्राप्तिसम्भवात् पुनश्श्रवणं व्यर्थमेव भवेत्, परिसङ्ख्याद्यर्थं वा भवेत् । तच्चायुक्तमिति व्यवस्थापितं बाधलक्षणे। न चायमर्थः दूरस्थयोराज्यभागयोर्नाम्ना प्रत्यभिज्ञानं विना सम्भवति । न चैवंसति 'प्रकरणान्तरे प्रयोजनान्यत्व'मित्यधिकरणे यत् कर्मभेदप्रतिपादनं तद्विरुध्यत इति वाच्यम् । यथा 'अग्निहोत्रं जुहोती'ति वाक्योत्पन्नस्य होमस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'यावज्जीवमग्निहोत्रं जुहुयादि'तिवाक्याभ्यां काम्यनैमित्तिकरूपेण प्रयोगभेदस्सम्पद्यते , तथा तस्यैव कुण्डपायिनामयनप्रकरणे समाम्नानेन तदङ्गत्वावगमात् प्रयोगभेद इति भावनाभेदाभिप्रायेण तदधिकरणमुपपद्यते । कर्मभेदनिरूपणपरे द्वितीयाध्याये च भावनाभेदप्रतिपादनमेव साक्षात्सङ्गतम् । शब्दान्तरादिभिर्धात्वर्थभेदप्रतिपादनं तु भावनाभेदफलकतयैव सङ्गच्छते । एवंच यत्सप्तमेऽग्निहोत्रनाम्नोऽतिदेशकत्वमुक्तं, तदपि नानुपपन्नम् । धात्वर्थभेदेऽपि नैयमिकाग्निहोत्रप्रयोगमपेक्ष्य सत्राङ्गप्रयोगस्यान्यतया तत्राग्निहोत्रप्रकरणाम्नातानामङ्गानामुपदेशेन प्राप्तिसम्भवायोगात् । नित्यतयाम्नातानां ह्यङ्गानां नित्यतयावगम्यमानो यः प्रयोगः, तत्रान्वयः । अन्यथा नित्यानित्यसंयोगविरोधप्रसङ्गात् । तत्र च यत्किंचित्फलसम्बन्धं विना विधिपर्यवसानायोगात् तावन्मात्रकृतमनित्यत्वमङ्गवाक्येष्वपि अवर्जनीयमित्यग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि फलं सम्बन्धावगतं यथाकथञ्चिदनित्यत्वं सह्यत इति तत्रैवोपदेशेनाङ्गानामन्वये सति कुण्डपाय्ययनगताग्निहोत्रप्रयोगे नोपदेशेनान्वयः । तस्यात्यन्तानित्यत्वात् । अतस्तत्रातिदेशः । अत एव ज्योतिष्टोमप्रकरणाम्नातानामङ्गानां 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति वाक्यविहितो योऽग्निष्टोमसंस्थाकः प्रयोगः, तत्रैवोपदेशतोऽन्वयः, न तूक्थ्यादिसंस्थाकप्रयोगेऽपीति संस्थाधिकरणे शेषलक्षणे व्यवस्था दर्शिता । न चैवमपि 'मासमग्निहोत्रं जुहोती'त्यादावग्निहोत्रपदं गौणमिति या मर्यादा, सा भग्ना भवेदिति वाच्यम् । तत्र प्रकरणेऽग्निहोत्रनामप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्यास्फुटतया गौणत्ववाचोयुक्तिसम्भवात् । एवं चाग्निहोत्रपदेन प्रत्यभिज्ञानात् यथा कुण्डपायिनामयनप्रकरणे तन्न भिद्यते, एवं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्रापि नाम्ना प्रसिद्धस्यैव बृहस्पतिसवस्य प्रत्यभिज्ञानादभेदसिद्धौ 'अन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्ये'त्यादि भाष्यं नानु-

पपन्नम् । **नैषामुपसंहारो विद्यास्वितीति** । अयमत्र सिद्धान्ताभिप्रायः—सन्निधिमात्रमवलम्ब्य हि विद्यासु मन्त्रादीनां विनियोगः पूर्वपक्षिणा प्रतिपादनीयः। स तु लिङ्गादिभिरन्यत्र विनियोगे सति नोन्मिषति । विद्या हि स्वप्रकरणाम्नातैरङ्गैर्निराकाङ्क्षा इति तासां वेधमन्त्रादिपर्यन्तमाकाङ्क्षानुवर्तते । अतस्सन्निधिनाङ्गत्वं वदता विद्यास्वाकाङ्क्षोत्थापनीया । उत्थाप्य चाकाङ्क्षां विद्याविधीनां मन्त्रादिविशिष्टविद्याविधाने तात्पर्यं कल्पनीयम् । विद्योपकारजननसामर्थ्यरहितानाञ्च प्रवर्ग्यादिकर्मणां वेधादिमन्त्राणाञ्च वैशिष्ट्यासम्भवात् कर्मणां प्रयाजादिवत् आरादुपकारकत्वम् । मन्त्राणां चानुष्ठेयार्थस्मारकत्वं क्लेशेन सम्पाद्य मन्त्रादिभिरुपकृत्येति शब्दकल्पनापूर्वकं विधिपर्यवसानमाश्रयणीयम् । अतः सन्निधिना विनियोगो बहुकल्पनापेक्षत्वाद्विलम्बितः । ततः प्रागेव वचनेन ‘ज्योतिष्टोमेन स्वर्गकामो यजेते’त्यग्निष्टोमस्य ‘पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ती’ति च प्रवर्ग्यस्य लिङ्गेन च मन्त्राणां विनियोगश्शीघ्रमवगम्यते । बहुकल्पनानपेक्षत्वात् । तावतैव च तेषां निराकाङ्क्षतायां सत्यां न सन्निधेर्विनियोजकता भवति । सत्यां हि विनियोज्यपदार्थस्याकाङ्क्षायां सन्निधेर्विनियोजकता । सोऽयमाकाङ्क्षारूपमूलोच्छेदादप्राप्तबाध इत्युच्यते। एवं च यत्पूर्वपक्षिणोक्तं विरोधाभावान्न लिङ्गादिना सन्निधेर्बाध इति, तन्निरस्तम् । आकाङ्क्षारूपमूलोच्छेदेन विरोधसद्भावात् । न च यत्र श्रुतिलिङ्गादिना विनियोगे सन्निधिः क्लृप्त एव भवति, तत्र भवतु नाम पूर्वप्रमाणमपेक्ष्य सन्निधेर्दुर्बलता । विद्यासन्निधिसमाम्नातानां तु प्रवर्ग्यमन्त्रादीनां न तत्तत्कर्मभिस्सन्निधिरस्तीति तेष्वपि सन्निधेः कल्पनीयतया कथं प्रकृते वेधादिमन्त्राणां प्रवर्ग्यस्य च कर्मसु शीघ्रं विनियोगो भवेदिति वाच्यम् । अन्वयबोधाङ्गं हि नाम्ना न सादेश्यरूपस्सन्निधिः, अपि त्वन्वयबोधात्प्राक् शब्दादन्वयप्रतियोगिनां पदार्थानामव्यवधानेनोपस्थितिरेव । स च ‘यजेत स्वर्गकामः पुरस्तादुपसदा’मिति वाचनिकविनियोगस्थले क्लृप्त एव । लिङ्गेन मन्त्रविनियोगस्थलेऽप्यनेन मन्त्रेणाभिचारिककर्मादिकमुपकर्तव्यमिति कल्पितवचनसिद्ध एवेति न तस्य पृथक् कल्पनापेक्षिता । सन्निधिना तु मन्त्रसामर्थ्यपर्यालोचनयैव विनियोगः कल्पनीय इति विलम्बः । यथाहुः ‘यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ।’ इति । एवं दुर्बलोऽपि सन्निधिः यद्यत्यन्तमनर्थकः स्यात्, तदा भवेदपि तेन विद्यासु प्रवर्ग्यादीनां विनियोगः । न च तदस्ति । आरण्यकग्रन्थसन्निधिसमाम्नानस्यारण्यानुवचनादिधर्मविशेषप्राप्त्यर्थत्वात् । अवश्यं च वेधादिमन्त्रे तथाभ्युपगन्तव्यम् । तस्य विद्यातदङ्गप्रकाशकतायाः कथमप्यसम्भवेन विद्याङ्गत्वायोगात् । एवंच ‘शन्नो मित्र’ इत्यादिमन्त्रस्यापि यथा-

कथञ्चित् विद्याप्रकाशकतासम्भवेऽपि न क्लेशेन विद्यासु विनियोग आश्रयणीयः । अध्ययनप्रकाशकतायास्स्वारस्यात् । उपनिषत्सन्निधिसमाम्नानं तु वेधादिमन्त्रवदेवाध्ययनाङ्गधर्मविशेषप्राप्त्यर्थं भविष्यति । विनियोजकप्रमाणेषु लाघवानुसारिणा शीघ्रं विनियोगे बोधिते गौरवानुसारिणो विलम्बितत्वाद्दुर्बलतया मूलोच्छेदन बाध इत्यत्र जैमिनिसूत्रसम्मतिमाह—**दुर्बलो हि सन्निधिरिति** । श्रुतिलिङ्गेत्यादिजैमिनिसूत्रस्यायमर्थः—श्रुत्यादीनां षण्णां प्रमाणानां समुदाये सूत्रनिर्देशानुसारेण यत्परं, तस्य पूर्वापेक्षया दुर्बलता । अर्थस्य विनियोगाख्यस्य विप्रकर्षात् पूर्वमपेक्ष्योत्तरेण विलम्ब्य बोधनीयत्वात् । तत्र श्रुतिलिङ्गविरोधोदाहरणं 'निवेशनस्सङ्गमनो वसूनामि'ति इन्द्रप्रकाशिका ऋक् । तस्या विनियोगः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति । अत्र लिङ्गेनेन्द्रप्रकाशने विनियोगोऽवगम्यते, श्रुत्या गार्हपत्ये । ऐन्द्र्येति तृतीया हि करणतां शक्त्या प्रतिपादयति, गार्हपत्यमिति द्वितीया च कर्मताम् । समभिव्याहारविशेषाच्च गार्हपत्यस्यैन्द्रमन्त्रकरणकप्रकाशनकर्मत्वमित्यर्थस्सिध्यति । उपतिष्ठत इति ह्यात्मनेपदं 'उपान्मन्त्रकरण' इति सूत्रेण मन्त्रः करणं यस्मिन् प्रकाशनरूपेऽर्थे, तत्र वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवतीति विहितम् । अतस्तेन प्रकाशनं प्रतिपाद्यते । तथा च विभक्तिप्रतिपाद्यकर्मत्वकरणत्वयोः प्रतियोगिविशेषलाभार्थं पदान्तरसमभिव्याहारापेक्षत्वेऽपि शक्यतया तयोश्श्रौतत्वं न विहन्यते । तत्र संशयः— किं लिङ्गानुसारेण मन्त्रस्य इन्द्रप्रकाशने विनियोगमुपगम्य गार्हपत्यमिति द्वितीयायास्सामीपिकाधारत्वलक्षणया सप्तम्यर्थतां स्वीकृत्य गार्हपत्यसमीपे स्थित्वैन्द्र्या इन्द्रं प्रकाशयेदित्यर्थस्स्वीकर्तव्यः, उत लिङ्गबाधेन मन्त्रगतेन्द्रपदस्य गार्हपत्ये लक्षणां योगं वा परिकल्प्य श्रुत्या तत्रैव विनियोग आस्थेयः । अथवा प्रमाणद्वयपर्यालोचनया समुच्चयः । तत्र पूर्वः पक्षः—प्रमाणद्वयानुसारेण इन्द्रे गार्हपत्ये च विनियोक्तव्यो मन्त्रः, अथवा विनियोज्यसामर्थ्यानुसारेण विनियोगो वक्तव्यः । न ह्यग्नेस्सेके विनियोगस्सम्भवति । ततश्चैन्द्र्या गार्हपत्यप्रकाशनसामर्थ्याभावेन तत्र विनियोगो न सम्भवति । अपि चास्मिन्नेव वाक्ये ऐन्द्रीति तद्धितेन इन्द्राङ्गतावगमान्न कथञ्चिदपि गार्हपत्यप्रकाशने विनियोगोऽवगन्तुं शक्यते । तस्मात् गार्हपत्यसमीपे स्थित्वेन्द्रं प्रकाशयेदित्येव वाक्यार्थो वर्णनीयः । न चैन्द्र्येन्द्रं प्रकाशयेत्, मन्त्रान्तरेण योग्येन गार्हपत्यं प्रकाशयेदिति वाक्यभेद एव कुतो नाश्रीयत इति वाच्यम् । अनेकपदाध्याहारावगतैकवाक्यत्वभङ्गापेक्षया सप्तम्यर्थे द्वितीयाया लाक्षणिकत्वस्यैवोचितत्वादिति । सिद्धान्तस्तु वचनपर्यालोचनया असत्ययोग्यतानिश्चये झटिति तावदैन्द्र्या गार्हपत्यप्रकाशनाङ्गतावगम्यते । परं त्ववगता सा यदि कथमपि न सम्पद्येत, तदा परित्यज्येत । सति सम्भवे

यागस्य स्वर्गसाधनतेव न कथञ्चिदपि हातुं योग्या । सम्भवति चेहेन्द्रपदस्य लक्षणया गार्हपत्यप्रकाशकता । अथवेन्दिधातोर्दीप्त्यर्थकस्येन्द्रेतिरूपं निपातनात् भविष्यति । तथा च यौगिकार्थमादायेन्द्रपदं गार्हपत्यप्रकाशकं सम्भवति । न चैन्द्रीतितद्धितविरोधः । तेन हि इन्द्रसम्बन्धः ऋचः प्रतीयते । स च वचनानुसारेणाग्निचयनाङ्गगार्हपत्यप्रकाशनशेषत्वेऽपि न विरुध्यते । तदापि मुख्यया वृत्त्या इन्द्रबोधकत्वाक्षतेः । एवं च मन्त्रस्याध्ययनविध्यापादितप्रयोजनाकाङ्क्षायाः वचनेन शीघ्रप्रवृत्तेन निवारितत्वाल्लिङ्गं विनियोगक्षमं न भवति । सत्यां हि मन्त्रस्य प्रयोजनाकाङ्क्षायां सामर्थ्यपर्यालोचनया विनियोगः कल्पनीयः । अतो मूलोच्छेदेन लिङ्गस्य वचनबाधितत्वात्तदनुसारिविनियोगानुन्मेषेणोभयत्र विनियोग इत्यपि निरस्तम् । लिङ्गवाक्यविरोधोदाहरणं—'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ।' स्योनं सुखसाधनभूतं सदनं स्थानं हे पुरोडाश ते त्वदर्थं करोमि तच्च स्थानं घृतस्य धारया सुशेवं सुखशयनयोग्यं कल्पयामीति अयमंशस्सदनकरणं प्रकाशयति । तस्मिन् सीद पूर्वार्धप्रस्तुते सदने तिष्ठ, अमृते प्रतितिष्ठ प्रकृतसदने अवस्थानममृतप्रातिष्ठैव भवति । व्रीहीणां मेध व्रीहीणां सारभूत सुमनस्यमानः प्रसन्नमनास्सन् इत्यंश आसादनं प्रकाशयति । तथा च लिङ्गानुसारेण अंशद्वयस्य विभज्य विनियोगः प्रतीयते । पूर्वार्धस्य सदनकरणे उत्तरार्धस्यासादने तस्मिन् सीदेति तत्पदस्योत्तरार्धगतस्य पूर्वार्धसापेक्षतयैकवाक्यतावगमात् तदनुसारेण कृत्स्नस्य यथाकथञ्चिदेकार्थत्वं परिकल्प्य तत्र विनियोग आस्थेय इति च प्रतीयते । तथा च संशयः—किं विभज्य लिङ्गानुसारेण विनियोक्तव्यः, उतैकवाक्यतानुसारेणाविभज्येति । तत्र पूर्वः पक्षः—देवस्य त्वेत्यादिमन्त्रेषु ह्येकवाक्यतानुसारेण निर्वापप्रकाशकस्य मन्त्रस्यावयवभूतानि यानि देवस्यत्वेत्यादिपदानि, तानि यथाकथञ्चित् निर्वापविशेषणसमर्पकाणीत्येवाङ्गीकृतम्, एवं प्रकृतेऽपि सदनकरणरूपैकार्थतामुपेत्य आसादनं फलतया तस्यैव स्तुत्यर्थमिति स्वीकर्तव्यम् । न च वैपरीत्यं शङ्कनीयम् । आसादनं प्रधानतया मन्त्रप्रकाश्यम् । सदनकरणं तु साधनतया तस्यैव विशेषणं स्तुत्यर्थमिति उपक्रमानुसारेण सदनकरणस्यैव मुख्यताया न्याय्यत्वादिति । सिद्धान्तस्तु वाक्यानुसारिविनियोगो हि तत्तत्पदानां क्लेशेन सदनकरणप्रकाशकताकल्पनया वक्तव्य इति विलम्बितः । ततः प्रागेव लैङ्गिको विभज्य विनियोगः प्रतीयते । पूर्वोत्तरार्धयोस्सदनकरणासादनप्रकाशकतायाः क्लृप्तत्वाद्वाक्यभेदेऽपि च तत्पदस्य नानुपपत्तिः । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यादौ वाक्यान्तरगतस्यापि तत्पदेन परामर्शदर्शनेनेहापि तस्मिन् सीदेति सर्वनाम्नः वाक्यभेदेऽपि पूर्वार्ध-

गतार्थपरामर्शकतोपपद्यते । 'देवस्य त्वे'त्यादिमन्त्रगतानां तु पदानां निर्वपामीत्याख्यातैकवाक्यतां विना प्रधानप्रकरण्युपयुक्तार्थप्रकाशकत्वासम्भवात् । आनर्थक्यपरिहाराय वाक्यानुसारेण सामर्थ्यं कल्पितम् । प्रकृते न तथास्ति । वाक्यभेदेऽपि समवेतार्थत्वोपपत्तेः । तथा चात्रापि शीघ्रप्रवृत्तिकेन लिङ्गेन वाक्यीयविनियोगप्रयोजकप्रकरणाम्नानमन्त्रगतप्रयोजनाकाङ्क्षयोश्चरितार्थत्वाद्वाक्यस्य विनियोजकतैव नास्तीति मूलोच्छेदेन बाधस्सम्पद्यते । वाक्यप्रकरणविरोधोदाहरणं— दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरती'ति समाम्नातं प्रस्तरप्रहरणं प्रक्षेपांशेन प्रस्तरं प्रतिपादयद्यथा प्रधानोपकारकम्, एवं सूक्तवाकमन्त्रांशेनेष्टदेवतास्मरणद्वारा प्रधानोपकारकम् । तत्र दर्शे अग्निरिन्द्रश्च सन्नयतः असन्नयत इन्द्राग्नी पौर्णमास्यामग्निः प्रजापत्यादयोऽग्नीषोमौ च देवताः । सूक्तवाकमन्त्रश्चैवमाम्नायते— 'अग्निरिदं हविरजुषत । अवीवृधतमहोज्यायोऽकृत । प्रजापतिरिदं हविरजुषत अवीवृधतमहोज्यायोऽकृत।अग्नीषोमाविदं हविरजुषेताम् ।अवीवृधेताम्महोज्यायोऽक्राताम्। इन्द्राग्नी इदं हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्र इदं हविरजुषत । अवीवृधतमहो ज्यायोऽकृते'ति । अत्र प्रकरणानुसारेण समन्त्रकस्य प्रस्तरप्रहरणस्य दर्शपूर्णमासयोरुभयत्रानुष्ठानेऽपि तदङ्गभूतस्य सूक्तवाकस्येष्टदेवतास्मरणार्थतया दर्शगतदेवतास्मारकांश एव तत्र प्रयोक्तव्यः । पूर्णमासगतदेवतास्मारकांश एव च तत्र प्रयोक्तव्य इति विभज्य प्रयोगस्स्वीकृतः । एवंस्थिते देवतापदसमभिव्याहृतानि 'इदं हविरजुषते'त्यादिपदानि किं देवतापदानुसारेण व्यवस्थया प्रयोक्तव्यानि, उत अव्यवस्थया सर्वाण्युभयत्रेति । तत्र पूर्वः पक्षः—अग्न्यादिपदानां प्रकरणानुसारेणोभयत्र विनियोगे प्रसक्तेऽपि प्रजापतेरमावास्यायामभावात्तत्पदस्यासमवेतार्थतया ततो निवृत्तिरुपगता। एवमिन्द्रादिपदेऽपि यथायोगमुपगतम् । इदं हविरजुषतेत्यस्य तु हविःप्रकाशकस्योभयत्राप्यस्ति सामर्थ्यम् । अतः प्रकरणानुसारेणोभयत्रापि प्रयोक्तव्यम् । न च 'प्रजापतिरिदं हविरजुषते'त्यत्रत्यस्य हविरित्याद्यंशस्यामावास्यायां बोधकता न स्यात् । प्रजापतिपदैकवाक्यतां विना तत्र कर्त्राकाङ्क्षायाः अनिवृत्तेः प्रजापतिपदस्यामावास्यायां च न प्रयोग इति वाच्यम् । प्रकरणानुसारेणोभयत्रापि प्रयोगावश्यकत्वे अग्निपदेन सह मिलित्वा तस्य बोधकता भविष्यति । यद्यपि चाग्निपदं पृथगेव हविरजुषतेत्यनेन सम्बद्धं, तथाप्यावृत्त्या अनेनापि सम्बन्धो भविष्यति। एवमिदं हविरजुषेतामित्यादेरपि यथायोगमन्वयो द्रष्टव्यः । न चैकवाक्यतानुसारेण प्रजापत्यादिपदैस्सह तस्याप्युत्कर्ष उपगन्तव्यः । उभयत्रापि प्रयोगसंपादकं प्रकरणं च तत एव बाध्यतामिति वाच्यम् । एषां पदानां प्रकरणानुसरणं विना प्रयोजनाकाङ्क्षाया अशान्तत्वेन प्रयोजनसिद्ध्यर्थमुपजीव्यस्य प्रकरणस्य वाक्येन बाधायोगादिति । सिद्धा

न्तस्तु—सत्यं प्रयोजनसम्बन्धाय प्रकरणमुपजीव्यम् । परं तु प्रकरणापादितमपूर्वार्थत्वं किंद्वारेत्यपेक्षायां सामर्थ्यानुसारेणेष्टदेवताप्रकाशनद्वारेति स्थिते अग्न्यादिपदानां साक्षादेव तत्र सामर्थ्यादुपपन्नं, पदान्तराणां तदेकवाक्यतयेति। येषां पदानां येन पदेन एकवाक्यता क्लृप्ता, तेषां तावतैव प्रयोजनाकाङ्क्षायाश्चरितार्थतया अमावास्यागतदेवतापदैकवाक्यतापन्नानां पदानां न पौर्णमासीगतदेवतापदैकवाक्यताकल्पनाक्षमं प्रकरणं भवतीति तस्मिन्नंशे प्रकरणं बाध्यते । न हि प्रजापत्यादिपदघटितवाक्यस्यामावास्यायामपि सम्बन्धं बोधयत् प्रकरणमुपजीव्यम् । पौर्णमास्यंशसम्बन्धं बोधयता प्रकरणेनैव प्रयोजनापेक्षाया उपरतत्वात् । अतः क्लृप्तेन वाक्येन वाक्यकल्पनापेक्षं प्रकरणं मूलोच्छेदेन बाध्यते । प्रकरणस्थानविरोधोदाहरणं—अस्ति राजसूयः इष्टिपशुसोमयागात्मकः । तत्र च सर्वेषां यागानां प्राधान्यम् । 'राजा स्वाराज्यकामो राजसूयेन यजेते'तीष्टिपशुसोमयागानां प्रत्येकमुत्पन्नानां फलापेक्षिणां स्वाराज्यसम्बन्धप्रतिपादनात् । अतस्ते सर्वेऽपि प्रकरणिनः । तेषु चाभिषेचनीय इति कश्चिद्यागः । तत्सन्निधौ समाम्नायते—'शौनश्शेपमाख्यापयती'ति । अनेन वचनेन प्रसिद्धं यत् शुनश्शेपाख्यानं, तद्वक्तव्यमित्यङ्गं विधीयते । तत्र सन्देहः— किं सन्निध्यनुसारेणाभिषेचनीयमात्राङ्गं, प्रकरणानुसारेण च राजसूयसंज्ञकसर्वयागाङ्गम्, उत प्रकरणानुसारेण सर्वाङ्गमेव । तत्र पूर्वः पक्षः—सन्निधिरपि न साक्षादङ्गतां प्रतिपादयति प्रकरणमपि। तथा चोभयोरपि तुल्यबलतया प्रमाणद्वयानुसारेण योऽर्थः प्राप्नोति, सोऽङ्गीकर्तव्यः। तत्र यदि प्रकरणानुसारेण सर्वार्थत्वमेव स्वीक्रियेत, तथासति सन्निधिरत्यन्तं बाधितः स्यात् । अतः तदनुसारेणाभिषेचनीयाङ्गतोपगन्तव्या । न च सन्निधिना बोधनीयस्याभिषेचनीयाङ्गत्वस्यापि प्रकरणेन बोधनात् सन्निधिबोध्यं किमपि नावशिष्यत इति वाच्यम् । यतस्सन्निधिबोध्यमभिषेचनीयाङ्गत्वं प्रकरणादेव लब्धम्। अतस्सान्निधेः परिसङ्ख्यायकत्वं स्वीक्रियते । तथा च सन्निधिना इतराङ्गत्वं प्रतिषिध्यते । तथा च इतराङ्गताबोधकांशे प्रकरणस्यात्यन्तं बाधो माभूदिति तत्रापि पाक्षिकाङ्गत्वं सिध्यति । एवंचसति यदा प्रकरणस्य बाधः, तदापि अभिषेचनीयव्यतिरिक्तांश एव प्रकरणबाधादभिषेचनीये शुनश्शेपाख्यानं नित्यमङ्गं, तदितरेषु तु विकल्पेनेति सिध्यति । ननु, नात्र सिद्धान्तपूर्वपक्षयोरनुष्ठाने विशेषो वक्तुं शक्यते । नित्यं सर्वार्थतेति सिद्धान्तेऽपि हि शुनश्शेपाख्यानस्य माहेन्द्रस्तोत्रसमीप एवानुष्ठानम् । पूर्वपक्षेऽपि तथैवानुष्ठानम् । अभिषेचनीयमध्ये माहेन्द्रस्तोत्रं विदेवनं शौनश्शेपाख्यानं साम्राज्याभिषेक इतीत्येवं बद्धक्रमाः केचन पदार्था अभिषेचनीयानन्तरं समाम्नाताः । ते च माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इत्यन्ति-

मपदार्थस्य माहेन्द्रस्तोत्रकालेऽपकृष्टतया तदन्तापकर्षन्यायेनापकृष्टाः । अतः विदेवनादीनां माहेन्द्रस्तोत्रकाले नियतमनुष्ठानम् । न चाभिषेचनीयसन्निधावनुष्ठीयमानस्य सिद्धान्ते कथं सर्वार्थतेति वाच्यम् । कर्तृदेशकालैक्येनेष्टिपशुसोमयागात्मकराजसूयसम्बन्धिमहाप्रयोगैक्येन च परमापूर्वोत्पत्तिसमये आरादुपकारकस्य शौनश्शेपाख्यानस्यापूर्वद्वारा सर्वोपकारकत्वसम्भवात् । अतश्चिन्ता निष्फलेति चेत्, न । पूर्वपक्षे ह्यभिषेचनीयमात्राङ्गत्वं नित्यमिति उपगमात्तद्विकृतिष्वेव नित्यमतिदेशः । सिद्धान्ते तु सर्वयागार्थता नित्येति राजसूयविकृतिमात्रे नित्यमतिदेश इति फलविशेषसम्भवात् । सिद्धान्तस्तु—भवेदेतदेवम् । यदि सन्निधिप्रकरणयोस्तुल्यबलता स्यात् । यदि ह्यत्र सन्निधिरभिषेचनीयाङ्गत्वबोधकतया अपूर्वविधिरेव भवेत्, तदापि प्रकरणमपेक्ष्य दुर्बल एव राजसूयात्मना सर्वेषामितिकर्तव्यताकाङ्क्षायास्साधारण्येन क्लृप्तत्वात् विशिष्यासाधारण्येनाभिषेचनीयसम्बन्धबोधनार्थं पृथगाकाङ्क्षायाः कल्पनीयत्वात् । ततश्च क्लृप्ताकाङ्क्षाया झटिति विनियोगेनाम्नानचारितार्थ्ये सति न सन्निधिर्विनियोगाय प्रभवति । आम्नानानुपपत्तेर्मूलभूतायाः प्रकरणेनैव परिक्षयात् । न चान्योन्याकाङ्क्षालक्षणेन प्रकरणेनासत्तेरन्वयबोधार्थमपेक्षणाद्विलम्बितप्रवृत्तित्वमिति वाच्यम् । बुद्धौ शब्दतो विपरिवृत्तिरूपाया आसत्तेः प्रकरणेन कृत्स्नेऽपि राजसूये क्लृप्ततया कल्पनीयत्वाभावादाम्नानसन्निधिस्त्वनपेक्षित एव । अन्यथा एकस्मिन्नेव कर्मणि यत् प्रधानसन्निधौ समाम्नातं, तस्यैवाङ्गता स्यात् । विप्रकृष्टतयाम्नातस्याङ्गता न स्यात् । एवं सन्निधेस्स्वार्थपरत्वेऽपि दुर्बलत्वेन सम्भावितस्य प्रकृते तमप्यर्थं परित्यज्याभिषेचनीयेतराङ्गतापरिसङ्ख्यार्थत्वे दुर्बलत्वं किमु वक्तव्यम् । अतश्शुनश्शेपाख्यानादेर्नित्यं सर्वाङ्गतेति । इदं तूदाहरणं कृत्वाचिन्तयेति वदन्ति । अत्र हि विषयभूतमाख्यानादिकमभिषेचनीयावान्तरप्रकरणनिविष्टम् । अभिषेचनीयानन्तरं दिशो ह्ययं राजाभूदिति पञ्चाक्षरान् प्रयच्छति । 'शौनश्शेपमाख्यापयती'ति समाम्नाय तदनन्तरमप्यभिषेचनीयाङ्गेष्टिविशेषानुक्रमणमुपलभ्यते । मारुतस्य चैकविंशतिकपालस्य 'वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यती'ति प्रागुपक्रान्ताभिषेचनीयाङ्गेष्टिविशेषानुवर्तनात् 'अपान्नप्त्रे स्वाहा ऊर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोती'ति पुनरप्यभिषेचनीयाङ्गहोमविशेषाम्नानाच्च । तथाचाभिषेचनीयावान्तरप्रकरणेन राजसूयमहाप्रकरणबाधात् आख्यानादेरभिषेचनीयाङ्गतैव । अवान्तरप्रकरणं नास्तीति कृत्वाचिन्तया सान्निधिदौर्बल्ये न्यायमात्रप्रदर्शनार्थं निबन्धेषु तदुदाहरणम् । यत्रावान्तरप्रकरणं नोन्मिषति, तदिह बहूनां प्रकरणे कस्यचित्सन्निधौ समाम्नातमुदाहरणं स्थिरं द्रष्टव्यम् । स्थानसमाख्ययोर्विरोधोदाहरणं—पौरोडाशिकमिति समाख्यायुक्ते

काण्डे सान्नाय्ययागसन्निधौ 'शुन्धध्वं दैव्याय कर्मणे' इति समाम्नायते । अयं च मन्त्रः शोधनप्रकाशकः । अस्ति च पुरोडाशपात्राणां सान्नाय्यपात्राणां च शोधनम् । तत्र संशयः—किं समाख्यानुसारेण पुरोडाशपात्रशोधनाङ्गता, उत सन्निध्यनुसारेण सान्नाय्यपात्रशोधनाङ्गता । तत्र पूर्वः पक्षः—पौरोडाशिकमिति समाख्याया अयमर्थः—पुरोडाशस्य इदं पौरोडाशं, तस्य व्याख्यानं पौरोडाशिकम्। 'तस्य व्याख्यानमिति च व्याख्यातव्यनाम्न' इत्यधिकारगतेन पौरोडाशपुरोडाशात् ष्ठनि'ति सूत्रेण ष्ठन्। तथा च समाख्यया काण्डस्य पुरोडाशसम्बन्धिपदार्थप्रतिपादकत्वावगमात्तदन्तर्गतस्य मन्त्रस्यापि पुरोडाशपात्रशोधनप्रकाशकता प्रतीयते । सान्नाय्यपात्रशोधनाङ्गता तु सन्निधिना न साक्षात् प्रतीयते । समाख्यास्थल इव तद्बोधकशब्दाभावात्, अपि तु सन्निध्यनुमितवचनेन वक्तव्या । तथा च साक्षादर्थबोधकसमाख्यामपेक्ष्य सन्निधेर्दुर्बलतया बाध एवेति । सिद्धान्तस्तु—भवेदेतदेवं, यदि पौरोडाशिकमित्यादिसमाख्ययानेन मन्त्रेण पौरोडाशिकपदार्थं प्रकाशयेदित्येतावानर्थः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति वाचनिकविनियोगस्थल इव प्रतिपाद्येत। न तु तदस्ति। अपि तु सा काण्डस्य पौरोडाशिकपदार्थव्याख्यानरूपतां साक्षात् प्रतिपादयति । तावता च मन्त्रविनियोगोऽनुमेयः । तत्र समाख्यया विलम्बितं विनियोगानुमानम् । 'शुन्धध्वमि'तिमन्त्रो हि सान्नाय्यसन्निधौ समाम्नातः पाठक्रमात्तत्समीप एवानुष्ठातव्यः प्रतीयत इत्यनुष्ठानसन्निधिस्सान्नाय्यस्थले क्लृप्तः । पौरोडाशपात्रशोधनानुष्ठानसादेश्यं तु कल्पनीयम् । अपि च सन्निधिना शुन्धध्वमिति मन्त्रस्यैव विशिष्य सान्नाय्यसम्बन्धिशोधनाङ्गतावगम्यते । समाख्यया तु काण्डस्य प्रथमं पौरोडाशिकत्वमवगम्यते। तदन्तर्गततया मन्त्रस्य तस्मिंस्तन्मन्दमवतरति । अतश्शीघ्रप्रवृत्तिकसन्निधिना प्रथमं परिच्छिन्ने विनियोगे मन्त्रस्य प्रयोजनाकाङ्क्षापगतेति न समाख्याया विनियोजकता । 'सर्वं प्रविध्ये'त्यादिमन्त्रेपूक्तमर्थं प्रवर्ग्यादिकर्मस्वपि दर्शयति—**तथा कर्मणामपि प्रवर्ग्यादीनामिति** । यच्च पूर्वपक्षिणा बृहस्पतिसवस्येव प्रवर्ग्यादीनामप्यन्यत्र विनियोगो भविष्यतीत्युक्तं, तत्राह—**न हीति** । ऐकार्थ्यम् एकप्रयोजनकत्वं तद्बोधकप्रमाणमिति यावत् । ननु, प्रवर्ग्यादीनां कर्मणां विद्याभिस्सह ऐकार्थ्यबोधकप्रमाणाभावोऽसिद्धः । सन्निधेरेव विद्यमानत्वादित्याशङ्क्याह—अपि चेति ॥२४॥

इति वेधाद्यधिकरणम् ॥१४॥

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥२५॥

विद्यासन्निधिसमाम्नातानां 'सर्वं प्रविध्ये'त्यादिमन्त्राणां कर्मणां च न विद्याशेषत्वमिति प्रतिपादितम् । तर्हि कौषीतकिशाखायां हानसन्निधौ समाम्नातमुपायनमपि न हानशेषभूतमिति यत्र केवलहानं श्रुतं, तत्र तस्य नोपसंहार इति प्रत्यवस्थानात् सङ्गतिः । तत्राप्यर्थादेव हानं सन्निपतेदिति । ननु, यथा गवादेरन्यदीयस्यान्येन स्वरूपत एव ग्रहणं, तथान्यदीययोस्सुकृतदुष्कृतयोर्यद्यन्येन स्वरूपत एव ग्रहणं भवेत्, तदा स्वामिपरित्यागं विनान्येन ग्रहणासम्भवात् उपायनानुपपत्त्या हानाक्षेपो भवेत, न तु तथाप्रकृते सुकृतदुष्कृतयोरुपायनपदोदिता प्रियैरप्रियैश्च प्राप्तिर्विवक्षिता। आत्मगुणभूतयोरन्तःकरणपरिणामभूतयोर्वा तयोः स्वरूपतोऽन्यत्र गमनासम्भवात । अपि तु विद्वद्गतपुण्यपापाभ्यां प्रियेपु अप्रियेपु फलारम्भ एव उपायनम्। तच्च विद्वदुपभोग्याभ्यामपि पुण्यपापाभ्यामन्यत्र फलारम्भसम्भवान्न विदुषस्स्वाम्यनिवृत्तिं तत्रापेक्षते । न च 'तस्य पुत्रा दायमुपयन्ती'ति वाक्यं विद्याफलकीर्तनावसरे दृष्टान्तसमर्पकतयोपयुज्यत इति वक्तव्यम् । अन्यथा तदसाङ्गत्यापत्तेः। तथा च दायदृष्टान्तादयमर्थः प्रतीयते— यथा विदुषः एतावन्तं कालं दाये स्वाम्यमनुवृत्तम् । अनन्तरं तु तत्स्वाम्यनिवृत्तिपूर्वकं पुत्राणां तत्र स्वाम्यं भवति, एवं सुकृतदुष्कृतयोरप्येतावत्कालं तदुपभोगयोग्यत्वरूपं तत्स्वाम्यमासीत्, इदानीं तु तन्निवृत्तिपूर्वकं प्रियाप्रियेपु तत्स्वाम्यं भवतीति । तथा चोपायनमात्रश्रवणेऽपि दृष्टान्तसामर्थ्यात् स्वाम्यनिवृत्तिरूपहानाक्षेपो भवेदिति युक्तम् । तथासति यत्र केवलं हानं श्रुतं, तत्राप्यश्वरोमदृष्टान्तानुसारेण उपायनाक्षेपो भवेत। अश्वाद्धि प्रहीणानि रोमाणि क्वचित् प्रदेशे यथा पतन्ति, एवं विदुषः प्रहीणे पुण्यपापे क्वचिदन्यत्र पतत इत्यवगतिसम्भवात् । अतः कथमुपायनसन्निधौ हानाक्षेपमुपेत्य हानसन्निधावुपायनाक्षेपस्सन्दिह्यत इति चेत, उच्यते– 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यामि'त्यत्र वाक्यस्वारस्येन देवदत्तस्य गावो यज्ञदत्तेन प्राप्ता इत्यत्र देवदत्तस्वत्वनिवृत्तिपूर्वकं यज्ञदत्तस्य प्राप्तिरिव विद्वत्स्वत्वनिवृत्तिपूर्वकं सुहृद्द्विषत्प्राप्तिरवगम्यते । वचनस्वारस्यावगते चैतस्मिन्नर्थे दायदृष्टान्त उपोद्बलको भवति। 'अश्व इव रोमाणि विधूय पापमि'त्यत्र तु न शब्दस्वारस्येनोपायनं प्रतीयते । अतो दृष्टान्तस्वारस्यमात्रेण नोपायनोपसंहारस्सम्भवतीति तात्पर्यम् । ननु, 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतमि'त्यत्र समभिव्याहारेण हानं प्रत्युपायनस्याङ्गतावगम्यते। अतो यत्र हानमात्रं श्रुतं, तत्रापि शेषतयोपायनस्याक्षेपो भवेदित्याशङ्क्य प्रयाजदर्शपूर्णमासादिस्थलशेषशेषिभावस्य समानकर्तृकत्व एव दर्शनात् इह च तदभावान्न शेषशेषिभाव इत्यभिप्रेत्य परिहरति— अपि चात्मकर्तृकामिति । अयमत्र सिद्धा-

न्ताभिप्रायः— कौषीतकिवाक्ये हानसन्निधावुपायनाम्नानेनायमर्थोऽवगम्यते — विद्यया हि विदुषि पुण्यपापयोः फलानारम्भकत्वे हानवाक्येनावगते, तर्हि विद्वद्गतं पुण्यपापादिकं किं सर्वात्मना निष्फलं, यथा कीर्तनप्रायश्चित्तादिना नष्टं पुण्यपापम्, अथवा पुत्रादिकृतपुण्यपापयोः पित्रादाविवान्यत्र क्वचित् फलारम्भकतेति विशये उपायनश्रवणेन सुहृद्द्विषद्गतफलारम्भकता, न त्वत्यन्तं तयोः फलाभाव इति निर्धार्यते । एवं च 'नाभुक्तं क्षीयते कर्मे'त्यादि शास्त्रानुग्रहोऽपि भवति । प्रायश्चित्तादौ तु वचनप्रामाण्याददत्तफलस्यैव नाश उपेयते । अतः कौषीतकिशाखायामन्यकर्तृकमप्युपायनमुक्तगत्या हानोपपादकं भवत्येवेति हानोपायनयोश्शेषशेषिभावस्सिध्यति । न चैवमपि कौषीतकिशाखायां पर्यङ्कविद्याफलभूतस्य पुण्यपापहानस्य शेषभूतमप्युपायनं कथं 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमि'ति निर्विशेषविद्याफलत्वेनावगते अश्व इव रोमाणि विधूयेत्यस्य 'आकाशो हवै नाम नामरूपयोर्निर्वहिते'त्याकाशविद्यारम्भे समाम्नानेन तद्विद्याफलत्वेनावगते च पुण्यपापहाने उपसंह्रियेते । विद्याभेदेन तत्फलस्य हानस्यापि भिन्नत्वादिति वाच्यम् । अत्रापि विदुषि फलानारम्भकयोः पुण्यपापयोरत्यन्तनिष्फलत्वकल्पनाया अनुपपत्त्या विद्यान्तरदृष्टस्यापि विशेषस्यानुषङ्गोपपत्तेः। एवं चाश्व इव रोमाणीति दृष्टान्तोऽपि समञ्जसो भविष्यति । एते च हानोपायने सविशेषविद्यायामनुचिन्तनीये एव । तत्क्रतुन्यायेन फलस्यापि सविशेषविद्यायां ध्येयत्वात् । निर्विशेषविद्यायां तु न ध्येये । एतदभिप्रायेणोक्तं भाष्ये— **न त्विह हानमुपायनं वानुष्ठेयत्वेन सङ्कीर्त्यत इति** । निर्विशेषविद्यायाः स्तुत्यर्थत्वोक्तिरपि नासदालम्बना । स्वरूपेण पुण्यपापयोस्सञ्चारासम्भवेऽपि फलद्वारा तदुपपत्तेः । तथा च विद्यास्तुत्यर्थत्वाच्चेत्यादिभाष्यमपि अन्यदीययोः पुण्यपापयोरन्यत्र स्वरूपेण सञ्चारो न भवतीत्येतदभिप्रायमेव योजनीयम् । कुशाः उद्गातॄणां प्रस्तावकर्मणि स्तोत्रसङ्ख्यागणनार्था दारुशलाकाविशेषाः । देवासुरच्छन्दांसि देवासुरप्रकाशका मन्त्रविशेषाः । समयाध्युषिते अस्तमयकालसन्निहिते । उपगानं उद्गातृषु गायत्सु अन्यैः क्रियमाणं हो इति शब्दोच्चारणम् । तत् अन्यैः ऋत्विग्भिः कर्तव्यमिति क्वचित् सामान्यतः प्रतिपादितम् । तत्र 'नाध्वर्युरुपगायेदि' ति विशेषवचनम् अध्वर्युव्यतिरिक्तैः कर्तव्यमिति बोधयति । अत्र पुण्यपापयोर्हानं क्वचिदुपायनशिरस्कं, क्वचिन्नेति पूर्वपक्षे व्यवस्थितविकल्पः प्रसज्यते, स मा भूदिति शाखान्तरे श्रुतस्योपायनस्यान्यत्रापि सम्बन्धः प्रतिपादितः । तथा च सर्वत्रोपायनशिरस्कमेव हानमिति सिध्यति । अत्र जैमिनिसम्मतिप्रदर्शनाय सूत्रे तदुक्तमित्यंशः । तं व्याचष्टे—**तदुक्तं द्वादशलक्षण्यामिति** । इदमत्रोदाहरणं–'दीक्षि-

तो न ददाति न जुहोती'त्यादिनिषेधाः ज्योतिष्टोमप्रकरणे समाम्नाताः। ते किमुपदेशातिदेशाभ्यां प्राप्तानां क्रत्वङ्गभूतानां होमादीनां प्रतिषेधकाः, उत दूरस्थाग्निहोत्रादिवाक्यशेषभूतास्सन्तः अदीक्षितो यावज्जीवमग्निहोत्रं जुहोतीत्येवमाद्यर्थपर्यवसिताः । तत्र पूर्वपक्षः—युक्तं 'यजतिषु ये यजामहं करोति नानूयाजेष्वि' ति वाक्ये यजतिपदैकवाक्यतया 'नानूयाजेष्वि' त्यस्य पर्युदासपरत्वम्, इह तु यावज्जीवादिवाक्यैनैतेषां निषेधानाम् एकवाक्यताया अक्लृप्तत्वान्न पर्युदासाश्रयणं युज्यते, तस्मात् प्रतिषेधा इति। सिद्धान्तस्तु— तथासति विकल्पस्स्यात् । उपदेशातिदेशाभ्यां क्रत्वर्थतया विहितत्वादनेन वचनेन क्रतावेव निषेधाच्च स मामूदिति दूरस्थेनापि 'अग्निहोत्रं जुहोती'त्यादिवचनेन एकवाक्यतां प्रकल्प्य पर्युदासवृत्तिरेवाश्रयणीयेति। ननु, नात्र विकल्पः प्रसरति । यदि हि क्रत्वर्थानामेवायं प्रतिषेध इति कल्प्येत, तदा खलु विकल्पस्स्यात्। अयं तु पुरुषार्था ये अग्निहोत्रहोमादयः क्रतुकालेऽपि यावज्जीवादिवाक्येन प्राप्ताः, तेषां प्रतिषेधः । तथा च भिन्नविषयत्वान्न विकल्पः । अपि तु पुरुषार्थहोमविधायकतया क्रतोर्बहिरपि सावकाशानामग्निहोत्रादिवाक्यानां क्रतुवैगुण्यापादका यागदानहोमादयः पुरुषार्थाः इत्येवं बोधयता निरवकाशेन निषेधेन बाध एव । अतः प्रतिषेधपक्षे यदि विकल्पस्स्यात्तर्ह्यत्रापि दूरस्थवाक्यैकवाक्यतया पर्युदासवृत्तिरेव ज्यायसीति क्त्वाचिन्तापरमिदमधिकरणमित्याहुः । तत्प्रयोजनं दूरस्थितवाक्यैकवाक्यताकल्पनमपेक्ष्याष्टदोषदुष्टो विकल्पः पापीयानिति न्यायव्युत्पादनम् । अयं च जैमिनिसूत्रार्थः--अपित्विपि पूर्वपक्षव्यावृत्तिः । 'दीक्षितो न जुहोती'त्यादिवाक्यस्य 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिवाक्यशेषत्वादितरस्य दीक्षितस्य पर्युदासो व्यावृत्तिस्स्यादीक्षितो यावज्जीवं जुहुयादि'ति प्रतिषेधपक्षे यतो विकल्पो भवेदि'ति । विधूय पापमित्यादौ विधूयेत्यादिपदैर्विदुषि सर्वात्मना पुण्यपापयोस्सम्बन्धो नास्तीति प्रतिपाद्यत इति सिद्धवत्कृत्योपायनं परमस्ति, नास्तीति सन्दिह्य निर्णयः प्रदर्शितः। इदानीं तु धूञ्धातुना सर्वात्मना पुण्यपापासम्बन्धो न प्रतिपाद्यत इति शङ्कानिराकरणाय वर्णकान्तरमारभते—अथ वेति । ननु, विधूननं चालनमिति पूर्वपक्षिणापि मुख्यार्थो वक्तुं न शक्यते—अमूर्तयोः पुण्यपापयोर्वृक्षादिवच्चालनानुपपत्तेरित्याशङ्क्याह—**चालनं त्विति** । ततश्च धूञ्धातुप्रयोगस्य किञ्चित्कालं फलानारम्भमात्रप्रतिपादकतयोपपत्तौ 'नाभुक्तं क्षीयते कर्मे'ति शास्त्रबाधेनात्यन्तं विदुषि पुण्यपापयोरसम्बन्ध इति न स्वीकर्तव्यमिति भावः। तदानुगुण्येन हानमेव विधूननमिति विदुषः प्रहीणयोः पुण्यपापयोः फलजनकताशक्तिरत्यन्तं प्रहीणा मा भूदित्येतदर्थमेव हि परैरुपायनं प्रतिपाद्यते । तथा च वाक्यशेषानुसारेणैव नाभुक्तमिति शास्त्रोपपादनस-

म्भवेन स्वकपोलकल्पनया विदुषि किञ्चित्कालं फलानारम्भकतेति व्याख्या उपपद्यते । अतः उपायनप्रतिपादकवाक्यशेषानुसारेण विदुषि सर्वात्मना पुण्यपापयोरसम्बन्ध इत्येवोपेयम् । कुशाच्छन्द इत्याद्यंशं पूर्ववर्णकार्थसङ्ग्राहकतया व्याचष्टे— **क्वचिच्चेति । अनेकार्थत्वाच्चेति** । यदाहुः 'क्रियावाचित्वमाख्यातुमेकोऽर्थः प्रतिपादितः । प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः ।' इति ॥ २६ ॥

हान्यधिकरणम् ॥१९॥

## साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

पूर्वस्मिन्नधिकरणे 'तत्सुकृतदुष्कृते विधूनुत' इत्यादिकौषीतकिवाक्यानुसारेण सर्वत्र विधूननश्रुतावुपायनानुवृत्तिरुक्ता । अत्राधिकरणे तदेव वाक्यमुदाहृत्य विचारान्तरं क्रियत इति सङ्गतिः । 'स आगच्छति विजरां नदीमि'ति श्रुतिपाठः । 'विजरां वा अयं नदीं प्रापन्न वा अयं जरयिष्यती' ति निर्वचनात् । विरजां नदीमिति पाठस्तु नातीव प्रामाणिकः । **तस्मात् प्रागेव सन्नित्यादि** । ननु, श्रुतिपाठक्रमानुसारेण मध्येमार्गं प्रतीयमानस्य सुकृतदुष्कृतहानादेः किमिति देहादुत्क्रान्तिकाल एव सम्बन्धो विवक्ष्यते । अर्चिरादिमार्गप्राप्त्यनन्तरमपि सुकृतदुष्कृते अपेक्षिते एव । चन्द्रसंवादोपयोगिशरीरारम्भाय पर्यङ्कविद्यायां हि चन्द्रप्राप्त्यनन्तरं चन्द्रेण संवाद उपासकस्य श्रूयते—'तमागतं प्रत्याह कोऽसीति चन्द्रप्रश्नमवतार्य तं प्रतिब्रूयादि'त्युपासकस्य प्रतिवचनमाम्नातम् । न च पुण्यपापयोर्विद्याफलप्रतिबन्धकतया स्वविरुद्धे पुण्यपापे विद्यया अवश्यन्नाशयितव्ये । विद्याफलारम्भश्च मूर्धन्यनाडीसम्बन्धप्रमुख इति ततः प्रागेव मरणकाले विद्यया पुण्यपापयोः नाशोऽपेक्षितः । अर्थक्रमानुसारेण पाठक्रमाद्विजरानद्यतिक्रमणानन्तरमवगम्यमानोऽपि सुकृतदुष्कृतक्षयः परित्याज्यः । पाठक्रममपेक्ष्यार्थक्रमस्य बलवत्त्वादिति वाच्यम् । भवेदेतदेवं, यदि पाठक्रममात्रेण विजरातरणानन्तरं पुण्यपापक्षयो गम्येत । 'तत्सुकृतदुष्कृत' इत्यत्र तदितिपदं हि तस्मादित्यर्थे विद्यमानं प्रकृतनद्यतिक्रमं परामृशत्तस्य सुकृतदुष्कृतक्षयहेतुत्वं प्रतिपादयति । अतो वचनबलादेव मध्येमार्गं पुण्यपापक्षयोऽवगम्यते । न च 'अश्व इव रोमाणि विधूय पापं धूत्वा शरीर'मिति क्त्वाप्रत्ययबलात् पापविधूननानन्तरं शरीरपरित्यागः प्रतीयते । 'तस्य पुत्रा दायमुपयन्ती'ति दायदृष्टान्तेन च यदा दायः पुत्रैः गृह्यते, तदैव पुण्यपापयोरुपायनमवगम्यते । पुत्रैर्दायग्रहणं च मरणात् प्रागेव इति पुण्यपापोपायनं तत्परित्यागपूर्वकं तदैव वक्तव्यम् । तदनुसारेण पर्यङ्कविद्यायामपि तथैवोपगन्तव्यमिति वाच्यम् । तस्य वाक्यस्य विद्यान्तरविषयत्वेन पर्यङ्कविद्यायां तथाभ्युपगमानु-

पपत्तेः । अतः पर्यङ्कविद्यायां मार्गप्राप्तिप्रतिबन्धकीभूतयोः पुण्यपापयोस्सांपराय एव नाशाभ्युपगमेऽपि अन्येषां पुण्यपापानां विजरानद्यतिक्रमणानन्तरमेव क्षयो भविष्यतीति चेन्न । तत्सुकृतदुष्कृते इत्यत्र तस्मादर्थकमपि तत्पदं न नद्यतिक्रमणं परामृशति । तस्यात्र प्रकरणे अप्रधानत्वात् । प्रधानं ह्यत्र विद्या । सन्निहिता च सा । प्रकरणानुसारेण तस्या बुद्धिस्थत्वात् । अत एतद्वाक्यं विद्याया एव पुण्यपापक्षयहेतुत्वं प्रतिपादयति । वस्तुतस्तु तदिति प्रथमान्तं विद्वत्परामर्शकम् । 'स आगच्छति विजरान्नदीमि'ति पूर्ववाक्ये 'तस्य प्रिया ज्ञातयस्सुकृतमि'त्युत्तरवाक्ये च तत्पदेन विदुष एव परामर्शात् । एवमपि विशेषणतयोपात्तायाः विद्याया एव हेतुत्वमवगम्यते । तथा च यदा मरणकाले फलाभिमुखा विद्या भवति, तदैव तया स्वप्रतिबन्धकीभूतयोः पुण्यपापयोः क्षयो न्याय्यः । अर्थविरोधे पाठस्याप्रयोजकत्वात् । न च चन्द्रसंवादोपयोगिशरीरारम्भाय पुण्यपापयोरपेक्षा । विद्यासामर्थ्यादेव शरीरारम्भस्य चन्द्रसंवादार्थं सम्भवात् । अवश्यं हि ब्राह्मपर्यङ्कारोहणानन्तरं ब्रह्माह— 'कोऽसीति तं प्रतिब्रूयादि'ति आम्नाते उपासकस्य ब्रह्मणा संवादे उपयुक्तं शरीरं विद्ययैवारभ्यत इति वक्तव्यम् । ततः प्रागेव पुण्यपापक्षयपाठात् । एवंसति ताण्डिशाट्यायनिश्रुत्यैकार्थ्यमपि भविष्यति । तस्मादत्र पाठक्रमो नादर्तव्य इति भावः ॥२७॥

## छन्दत उभयाविरोधात् ॥२८॥

'तत्सुकृतदुष्कृते विधूनुत' इत्यत्र हि विदुषः पुण्यपापविधूनने स्वातन्त्र्यं प्रतीयते । तच्च तदैवोपपद्यते । यदि विदुष इच्छातः प्रयत्नपूर्वकं पुण्यपापक्षयोऽभ्युपगम्येत । पुण्यपापक्षयोपयोगी च यत्नो विद्यानुष्ठानमेव । तच्च जीवत एव सम्भवति, न तु परेतस्य । मध्येमार्गं विद्यानुष्ठानोपयोगिनः शरीरस्य तदानीमभावात् । चन्द्रसंवादोपयोगिशरीरस्य च तावन्मात्रार्थतया विद्यानुष्ठानोपयुक्तत्वे प्रमाणाभावादित्यभिप्रायेण सौत्रं छन्दतइतिपदं विद्यानुष्ठानसम्भवादितिपदाध्याहारेण व्याचष्टे— **यदि च देहादपसृप्तस्येत्यादिना** । उभयाविरोधादिति पदं व्याचष्टे—**ताण्डिशाट्यायनिश्रुत्योरि**ति ॥ २८ ॥

इति साम्परायाधिकरणम् ॥१६॥

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥२९॥

एवमधिकरणद्वयेन विदुषः पुण्यपापक्षयः साम्पराय एव । स च सगुणनिर्गुणविद्यासाधारण्येनोपायनशिरस्क एवेति व्यवस्थापितम् । तर्हि पुण्यपापक्षयसन्निधौ श्रुतोऽर्चिरादिमार्गोऽपि सगुणविद्यासाधारणोऽस्त्विति सङ्गतिगर्भं पूर्वपक्षमा-

ह—यथा तावद्धानावविशेषेणैवेति । ननु, निर्विशेषब्रह्मसाक्षात्कारेणाविद्यानिवृत्त्या ब्रह्मप्राप्तेरिहैव सम्भवात् अर्चिरादिगतिर्व्यर्थेति चेन्न । उत्तराधिकरणे 'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासत' इति वाक्यस्य सर्वब्रह्मविद्यासाधारण्येन गतिप्रापकताया वक्ष्यमाणत्वात् कठवल्ल्यां निर्विशेषविषयायामपि 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति मूर्धन्यनाड्या ऊर्ध्वगमनस्य प्रतिपादनाच्च निर्विशेषविद्यायामपि गतिसिद्धौ साक्षात्कारपूर्वकाविद्यानिवृत्तिः ब्रह्मलोकगमनानन्तरमेव भविष्यतीति कल्पनोपपत्तेः । **कथं हि 'निरञ्जनो गन्तेति** । निरञ्जनः अविद्यादिदोषविनिर्मुक्तः । तद्गुणसारत्वादित्यत्र हि उपाधिसम्पृक्तस्यैव जीवस्य गत्यादिकमिति व्यवस्थापितम् । अतोऽविद्याद्युपाधिविनिर्मुक्तस्य गतिर्नोपपद्यते । न च निरञ्जनत्वं ब्रह्मलोकगमनानन्तरभावि । 'यदा पश्यः पश्यते रुक्मवर्णमि' त्यादिपूर्ववाक्यानुसारेण ब्रह्मसाक्षात्कारकाल एव तदवगमात् । गन्तव्यं च परमं साम्यं ब्रह्माभेदात्मकं 'तत्त्वमसी' त्यादिश्रुतेः स्वाभाविकं, न देशान्तरायत्तं साम्यमिति । अत्र समशब्दो हि समकालावित्यादाविव ऐक्यार्थकः । ऐक्यं च जीवस्य ब्रह्मणा सुषुप्तावपीति तद्व्यावृत्त्यर्थं परममिति विशेषणम् । सुषुप्तौ ह्यविद्यानुवृत्त्या न परममैक्यम् । तथा च 'ब्रह्म वेद ब्रह्मैव भवती'त्यादीन्यपि वचनानि अनुकूलानि भवन्ति । अन्यत्र चोत्क्रान्तिप्रतिषेधपूर्वकं जीवस्य ब्रह्मप्राप्तिरिहैव समाम्नायते—'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति। ततश्च 'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासत' इति सामान्यवचनं निर्विशेषविद्याव्यतिरिक्तविषयं भविष्यति । कठवल्ल्यां गतिप्रतिपादनमपि प्रकरणे अनिवेशादुत्क्रष्टव्यम्। तथा च दहरविद्यायां तस्यैव मन्त्रस्याम्नानेन उत्कर्षस्सूचितः । अथवा कठवल्लीष्वप्यग्निविद्यास्ति । तत्रोपयुक्तं भविष्यति शतं चैकेत्यादिवाक्यम् ॥२९॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥

तत्र हि पर्यङ्कारोहणमिति । तथाहि— पर्यङ्कविद्यायां ब्रह्मप्रेप्सुं ब्रह्मविदं प्रस्तुत्याम्नायते—'स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छति अपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति स आगच्छति विचक्षणामासन्दीं स आग-

च्छत्यमितौजसं पर्यङ्कं तस्मिन् ब्रह्मास्ते तमित्थंवित् पादेनैवाग्र आरोहति तं ब्रह्मा-ह कोऽसीति तं प्रतिब्रूयादि' ति । इल्पो ब्राह्मलौकिकोऽश्वत्थः, संस्थानं स्थल-विशेषः, सालज्यमिति तस्य नाम । विभुप्रमितमित्यत्र वेश्मेत्यध्याहारः ॥३०॥

इति गत्यर्थवत्त्वाधिकरणम् ॥१७॥

## अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥३१॥

पूर्वस्मिन्नधिकरणे निर्विशेषविद्यायां न मार्गप्राप्तिः, अपि तु सविशेष-विद्यायामिति व्यवस्था दर्शिता । एवं तर्हि सगुणास्वपि विद्यासु यत्र गतिश्श्रूयते, तत्रैव सा, नान्यत्रेति प्रत्यवस्थानात् सङ्गतिरिति दर्शयति—**सगुणासु विद्यास्विति** । यथा तत्तदुपासनाप्रकरणाम्नाता गुणाः प्रकरणानुसारेण तत्रतत्र व्यव-स्थिताः, न तु सर्वे सर्वत्र प्राप्नुवन्ति, एवं गतिरपि भविष्यतीत्याह—**यत्रैव श्रूयत इत्यादि** । यत्र ब्रह्मलोके क्षुद्रगोचराः कामाः परागताः यं दाक्षिणाः दक्षिणमार्गाः कर्मिणः विद्यारहिताश्च तपस्विनो न यन्ति न गच्छन्ति, तमर्चिरादिमार्गेण विद्यया-रोहन्तीति प्रतिपादनात् श्रद्धातपोभ्यां उपासनं ब्रह्मविषयकमुपलक्षणीयमित्याह—**विद्यया तदारोहन्तीति** । ननु, ये चेमेऽरण्य इत्यादिच्छान्दोग्यवाजसनेयकगतं वाक्यं प्रकृतपञ्चाग्निविद्याया एवार्चिरादिमार्गसम्बन्धप्रतिपादकं भवेत्, न तु सामा-न्यतस्सर्वविद्यास्वित्यत आह—**पञ्चाग्निविद्याविदां चेति** । 'तद्य इत्थं विदुरि'तिवाक्ये-न तेषां पृथगुपादानात् 'ये चेमेऽरण्य' इत्यादिवाक्यं पञ्चाग्निविषयत्वे व्यर्थमेव भवे-दिति भावः । एवं वचनेनोत्तरमार्गस्य सर्वब्रह्मविद्यासाधारण्यमुक्त्वा लिङ्गादपि तदाह—**अथ य एताविति** । पितृयाणस्य कर्मभिः अवरुद्धतया परिशेषान्मार्गद्व-यमध्ये विद्यावतामुत्तरमार्ग एव । अन्यथा तेषां ब्रह्मलोकप्राप्तिर्न स्यादिति दर्श-यति—**तत्रापीति । अनुचिन्तनार्थमिति** । ननु, चिराम्नानं अनुचिन्तनार्थमिति वक्तुं न शक्यते । तथाहिसत्युपकोसलविद्यायामेव मार्गोऽनुचिन्तनीयो, नान्यत्रेति प्राप्नोति । न चैतद्युक्तम् । मार्गप्राप्तेरपि फलकोटिनिविष्टतया तत्क्रतुन्यायेन स-र्वविद्यास्वनुचिन्तनं सूत्रकार एव चतुर्थे दर्शयिष्यति— 'तच्छेषगत्यनुस्मृतियोगाच्चे' ति । न चोपकोसलविद्यायाः पुनराम्नानस्य सम्भवति प्रयोजनान्तरे तत्क्रतुन्याय-प्राप्तसर्वविद्यानुचिन्तनपरिसङ्ख्याफलकत्वमुपगन्तुमुचितम् । सम्भवति चेह 'यदु चै-वास्मिञ्छव्यं कुर्वन्ति यदु चन तेऽर्चिषमेवाभिसम्भवन्ती' तिवचनानुसारेणोपकोस-लविद्यानिष्ठस्यार्चिरादिमार्गप्राप्तौ शव्यकर्मनिरपेक्षताबोधनार्थं सामान्यवचनप्राप्तस्य मार्गस्यानुवाद इति चेत्, सत्यम् । तथापीह अनुचिन्तनार्थमित्यनेन तदेव प्रयोजनं पुनराम्नानस्येति न विवक्षितम्, अपि तु सामान्यवचनप्राप्तस्य मार्गस्य पुनरा

म्नानं परिसङ्ख्यार्थं न भवति । यथासम्भवं तस्य प्रयोजनान्तरं वक्तव्यमिति ॥३१॥

इति अनियमाधिकरणम् ॥ १८॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥

अयमत्र पूर्वपक्षाभिप्रायः । वसिष्ठादीनाम् अपरोक्षीकृतब्रह्मतत्त्वानामपि शरीरान्तरग्रहणं दृश्यते । न च तत् प्रारब्धाधीनमिमि वक्तुं शक्यम् । शरीरभेदे भिन्नकर्मापेक्षणेन वर्तमानशरीरपातावधिकस्य प्रारब्धकर्मणश्शरीरान्तरारम्भाप्रयोजकतया तेषां शरीरान्तरारम्भः सञ्चितकर्माधीन एव वक्तव्य इति विदुषामपि प्रारब्धातिरिक्तपुण्यपापाधीनशरीरारम्भपूर्वकं भोगदर्शनेन विद्यायाः न मुक्तिफलता । तथा च 'ब्रह्म वेद ब्रह्मैव भवती 'तिवाक्यानामर्थवादतया निर्विशेषविद्यासन्निधिसमाम्नातं 'स तत्र पर्येति जक्षन् क्रीडन्रममाण' इत्यादिब्राह्मलौकिकमेव फलं भविष्यति । तथा च यत्पूर्वं व्यवस्थापितं—सविशेषविद्यास्वेव सर्वास्वर्चिरादिमार्गः, न निर्विशेषविद्यायामिति, तदप्याक्षिप्तं भवतीति सङ्गतिरपि द्रष्टव्या । ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमिति न मुख्यः पूर्वः पक्षः । अहेतुत्वमित्येव मुख्यः पूर्वः पक्षः । अयमत्र सिद्धान्ताभिप्रायः— नानेकशरीरारम्भकत्वमेकस्य कर्मणोऽनुपपन्नम् । 'श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा गतिमृच्छति ' ॥ इति पापविशेषे अनेकशरीरग्रहणाम्नानात् योगभ्रष्टानाञ्च योगजनितपुण्यविशेषेण 'प्राप्य पुण्यकृतान् लोकानुषित्वा शाश्वतीस्समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽपि जायते' । इति ऐहिकामुष्मिकशरीरग्रहणाम्नानात् । एवं च वसिष्ठादीनामपि अपरोक्षीकृतब्रह्मतत्त्वानाम् अनेकशरीरप्रापकाधिकारिकप्रारब्धसम्भवात् प्रारब्धस्य च प्रतिबन्धकतायाश्चतुर्थे वक्ष्यमाणतया वसिष्ठादीनां मुक्त्यदर्शनं न ब्रह्मविद्यायाः अहेतुत्वं गमयतीति । तदिदमाह—**नेत्यादिना** । यत् पूर्वपक्षिणोक्तमहेतुत्वं, तन्नेत्यर्थः । **अथ तत इति** । जगद्व्यापारसमाप्त्यनन्तरं ततो जगत उत्कृष्टम्सन् उदेत्य निर्गत्य तदभिमानं विहायेति यावत् । एकल एक एव परमार्थगत्या मध्ये स्वरूपस्य स्थाता । ननु, यदि वसिष्ठादीनामपरिमुषितस्मृतित्वं, तथासति प्राप्तं जातिस्मरतुल्यत्वम् । जातिस्मराणां च देहान्तरप्राप्तिः प्रारब्धातिरिक्तकर्मणा दृष्टेति तत्तुल्यतयैतेषामपि तथा स्यादित्यभिप्रायेण शङ्कते—**न चैते जातिस्मरा इतीति** । **त एवैत इति स्मृतिप्रसिद्धेरिति** । जातिस्मरा हि देहान्तरप्राप्तौ पूर्वदेहे यन्नामरूपादिकं स्थितं, तदात्मना नाविर्भवन्ति । वसिष्ठादयस्तु देहान्तरप्राप्तावपि तुल्यनामरूपाधिकारा एव पुराणादिषु प्रसिद्धाः । यथाचापरिमुषितस्मृतित्वेऽपि इदं जातिस्मर-

भ्यो वैलक्षण्यम् । एवं पूर्वप्रवृत्तकर्मणैव शरीरप्राप्तिरित्यपि वैलक्षण्यसत्त्वे न काचिदनुपपत्तिरिति भावः । एवं वसिष्ठादीनां निर्विशेषवस्तुनिष्ठतामुपेत्यापि प्रारब्धानुसारेण शरीरपरिग्रहस्सम्भवतीत्युक्तम् । इदानीं तेषां निर्विशेषनिष्ठतैव नास्ति, अपि तु दहरादिसविशेषविद्यानिष्ठत्वमित्याह—**ज्ञानान्तरेषु चैश्वर्यादिफलेष्विति । प्रत्यक्षफलत्वाच्चेति** । स्वप्रकाशप्रत्यगानन्द एव हि ज्ञानफलमिति भावः । तत्सिद्धं निर्विशेषविद्याया गतिनिरपेक्षमेव स्वरूपभूतानन्दप्राप्तिफलकत्वात् तत्र गतेः प्रयोजनाभावेनानुपसंहार इति ॥३२॥

इति आधिकारिकाधिकरणम् ॥ १९॥

## अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥

ननु, 'आनन्दादयः प्रधानस्ये' त्यत्र निर्विशेषविद्यायास्सर्वत्र एकत्वात् उपलक्षणानां सर्वत्रोपसंहार इति उक्तत्वात् इदमधिकरणं किमर्थमिति चेन्न । तत्र ह्यानन्दादीनां स्वरूपप्रतिपत्तिप्रयोजनत्वादुपसंहार इत्युक्तम् । अस्थूलत्वादीनां तु अभावरूपाणां सप्रतियोगितया ब्रह्मस्वरूपत्वासम्भवेन नोपसंहार इति शङ्का । न च तेषामस्थूलत्वादीनामभावत्वोपलक्षणमुखेन स्थूलत्वाद्यारोपाधिष्ठानब्रह्मस्वरूपपर्यवसायितया न स्वरूपबहिर्भाव इति वाच्यम् । तादृशस्यापि स्वरूपस्य सत्यज्ञानादिपदैरेवावगमसम्भवात् । स्वरूपप्रतिपत्तौ नैषामुपयोगः । अतो यथा निर्विशेषफलप्राप्तौ गत्युपयोगाभावात् न गतेस्तत्रोपसंहारः, एवं सत्यज्ञानस्वरूपब्रह्मावगतौ अस्थूलत्वादीनामुपयोगाभावान्न तेषामुपसंहार इति सङ्गतिगर्भः पूर्वपक्षो द्रष्टव्यः । सूत्रे सामान्यतद्भावाभ्यामित्यस्य निषेधवाक्येषु सर्वत्राप्यारोपितविशेषनिराकरणमुखेन ब्रह्मप्रतीतिप्रयोजनस्य सामान्यात् प्रतिपादनीयस्य च ब्रह्मणस्सर्वत्र प्रधानभूतस्यैव भावाच्चेत्यर्थं दर्शयन् सिद्धान्तमाह—**अक्षरविषयास्त्विति** । अयं भावः—यद्यपि सत्यादिपदैर्ब्रह्मस्वरूपमवगतं, तथापि सृष्ट्यादिवाक्यपर्यालोचनया तत्सविशेषमेव प्रसक्तम् । अतः सप्रपञ्चत्वभ्रान्तिव्युदासेन ब्रह्मस्वरूपावगमे निषेधवाक्यान्यपेक्षितान्येव । ननु, सप्रपञ्चताव्युदासोऽप्यानन्त्यप्रतिपादनेन 'अथात आदेशो नेति नेती'ति सामान्यनिषेधेन सिद्ध एव । पुनः किमित्यस्थूलादिपदानामप्युपसंहारोऽपेक्षणीयः । न च विशेषेण सप्रपञ्चतानिषेधायास्थूलादिपदापेक्षा । विशेषाणामानन्त्येनास्थूलादिपदैरपि निषेधासम्भवादिति चेत्, उच्यते—'अथात आदेशो नेति नेती'ति संग्रहेण निषिद्धाया एव सप्रपञ्चतायाः विशेषेण पुनः निषेधो हि दार्ढ्यापादनाय । तथा च निर्विशेषप्रकरणे तत्रतत्र ये प्रति

षेधाश्श्रुताः, तेषां सर्वेषामुपसंहारे निष्प्रपञ्चत्वप्रतीतेर्दार्ढ्यं भविष्यतीति तदर्थं विशेषरूपेण प्रतिषेधानामप्युपसंहारोऽपेक्षितः । सूत्रे विशिष्याक्षरब्राह्मणोदितानां प्रतिषेधबुद्धीनां सर्वत्रोपसंहारकथनं तु तत्त्वंपदार्थयोरैक्यप्रतीतिप्रतिरोधिनो ये भ्रमाः प्रसक्ताः, तेषां सर्वेषामपि अपाकरणमुपलभ्यते तत्रेत्यभिप्रायेण । तथा हि—तत्पदार्थे अविद्यातत्कार्यपृथिव्याद्यध्यासः, त्वंपदार्थे शरीरेन्द्रियाद्यध्यासः प्रसक्तः । तस्य सर्वस्यापि अत्रापाकरणमुपलभ्यते—'अवाय्वनाकाशमरसमगन्धमतेजस्कमि'ति पृथिव्याद्यध्यासापाकरणम्, अतम इत्यविद्याध्यासापाकरणं, त्वंपदार्थे च शरीराध्यासापाकृतिः अस्थूलमित्यादिपदैः, इन्द्रियाध्यासापकृतिरचक्षुष्कमित्यादिपदैः, 'न तदश्नाति किञ्चने'त्यादिना भोक्तृत्वाद्यध्यासनिरासः । प्रधानानुसारि गुणस्य वर्तनमित्यत्र दृष्टान्तः—'औपसदवदि'ति । **यथा जामदग्न्येऽहीन इति ।** जामदग्न्यः चतूरात्रमित्यहीनः, तदङ्गभूतोपसत्सु एककपालादिद्वादशकपालान्तपुरोडाशद्रव्यका द्वादश होमाः विहिताः । तेषाम'ग्नेर्वेर्होत्रं वेरध्वरं आविदूरं वैश्वानरं अवस्केरिन्द्राय देवेभ्यो जुषतां हविः स्वाहे'त्याद्याः द्वादश मन्त्राः छान्दोग्ये समाम्नाताः । ते उपसदङ्गपुरोडाशसम्बन्धितयौपसदपदोदिताः । तेषामुद्गातृवेदोत्पन्नतया उद्गात्रोच्चारणं प्राप्नोति । याजुर्वेदिकोपसदङ्गभूततया प्रधानानुसारेणाध्वर्युकर्तृकता प्राप्नोति । सामवेदोत्पन्नमौद्गात्रं, यजुर्वेदोत्पन्नमाध्वर्यवमिति हि व्यवस्था । तत्रोत्पत्तेः प्रथमभावित्वात् छान्दोग्योत्पन्नानां मन्त्राणामुद्गातृकर्तृकत्वमिति पूर्वपक्षे 'गुणमुख्यव्यतिक्रमे' इति सिद्धान्तसूत्रम् । गुणभूतानां मन्त्राणां मुख्यानां प्रधानभूतानामुपसदां च धर्मविरोधे प्रसक्ते प्रधानार्थत्वात् गुणानां प्रधानेन वेदसंयोगः प्रधानवेदसम्बन्धी यः कर्ता, स एव कर्ता मन्त्रेषु भविष्यति । यद्यप्युत्पत्तिः प्रथमभाविनी, तथापि तस्याः प्रयोगविधिशेषत्वात् प्रयोगस्य च यजुर्वेद एव कृतत्वाद्याजुर्वेदिक एव कर्ता मन्त्रेष्विति सिद्धान्ताभिप्रायः ।३३।

इति अक्षरध्यधिकरणम् ॥ २० ॥

## इयदामननात् ॥३४॥

पूर्वत्राक्षरविद्यायास्सर्वत्रैकत्वात् गुणोपसंहार इत्युक्ते 'द्वा सुवर्णा ऋतं पिबन्तावि'त्यत्र विद्याभेदान्नोपसंहार इति प्रत्यवस्थानात् सङ्गतिः । **'ऋतं पिबन्तावि'त्यत्र तूभयोरपि भोक्तृत्वमिति ।** ननु, 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि' त्यत्रास्य मन्त्रस्य जीवद्वितीयपरमेश्वरपरत्वं स्थापयित्वा पिबन्तावित्येतच्छत्रिन्यायेन व्याख्येयमिति प्रतिपादितम् । तथाचेहापीश्वरस्याभोक्तृतोपगमात् कथं 'द्वा सुपर्णे'ति मन्त्रेण भिन्नार्थतेति चेत्, न । 'गुहां प्रविष्टावि' त्यधिकरणे हि जीवद्वि-

तीया बुद्धिरिति पूर्वपक्षेऽपि पिबत्पदस्य मुख्यताया अभावात् प्रकरणाद्यनुरोधेन परमेश्वरद्वितीयजीवपरतोपगता । इह तु पिबन्तावित्यस्य मुख्यतोपपत्तये जीवद्वयप्रतिपादकता मन्त्रस्यास्त्विति पुनराक्षिप्यते । तथा च 'द्वा सुपर्णे' तिमन्त्रात् भिन्नार्थतेति सिध्यति । न चैवंसति प्रकरणे ऋतं पिबन्तावित्यस्य समावेशो न स्यात् । जीवद्वयप्रतिपादनस्य ब्रह्मप्रकरणाननुगुणत्वादिति वाच्यम् । पिबन्ताविति पदसमभिव्याहारात्मकस्य वाक्यस्य प्रबलतया तदनुसारेण मन्त्रस्य प्रकरणादुत्कर्षोपपत्तेरिति पूर्वपक्षाशयः । अयमत्र सिद्धान्ताभिप्रायः—यद्यपि प्रकरणं वाक्याद्दुर्बलं, तथापि नेह प्रकरणस्य दौर्बल्यं वक्तुं शक्यते । उपक्रमोपसंहारैकरूप्यावगतं महाप्रकरणं ब्रह्मविषयं मन्त्रेऽप्यनुवर्तते । तच्च श्रुत्यादिभ्यो बलीय इति प्रतर्दनाधिकरणे व्यवस्थापितम् । अतस्तदनुसारेण पिबन्ताविति पदं च्छत्रिन्यायेनैव व्याख्येयम् । न च तात्पर्यग्राहकलिङ्गोपेतस्योत्तरस्यापि प्रमाणस्य पूर्वप्रमाणापेक्षया प्राबल्यं चेत् प्रतर्दनाधिकरण एव दर्शितं, तर्हीदं तेन गतार्थं स्यादिति वाच्यम् । 'ऋतं पिबन्तावि'त्यादिषु त्रिषु मन्त्रेषु द्वित्वोपेतं वस्तु प्रतिपाद्यते । तथा चैतेषां तुल्यार्थाभिधायकत्वं सिद्धम् । एवंचसति बाधकाभावे तुल्यार्थाभिधायकत्वमपि विद्यैक्यावगमकमिति न्यायान्तरव्युत्पादनेन मन्त्राणां विद्यैक्यप्रदर्शनपरत्वान्न गतार्थता । नन्विहास्ति बाधकम् । 'द्वा सुपर्णे'ति मन्त्रो हि पैङ्गिब्राह्मणानुसारेण जीवस्यैवाभोक्तृताप्रतिपादनपर इति प्रथमाध्याये व्युत्पादितम् । 'ऋतं पिबन्ताविति'मन्त्रस्तु प्रकरणाद्यनुसारेण जीवद्वितीयेश्वरप्रतिपादक इति अर्थभेदावगमादिति चेन्न । पैङ्गिब्राह्मणं नास्तीति कृत्वाचिन्तयेदमधिकरणम् । तत्प्रयोजनं तुल्यार्थाभिधायकत्वमपि विद्यैक्यावगमकमिति न्यायव्युत्पादनमेव ॥ ३४ ॥

इति इयदधिकरणम् ॥ २१ ॥

## अन्तराभूतग्रामवत् स्वात्मनः ॥३५॥

तुल्यार्थाम्नानं विद्यैक्यावगमकमित्युक्तम् । तदिहोदाहरणविशेष आक्षिप्य समाधीयत इति सङ्गतिः । ननु, 'अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्वे'ति प्रथममुषस्तप्रश्नः । पुनश्च 'अथहैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्वे'ति कहोलप्रश्नः । तयोस्तुल्यार्थयोरभ्यासाद्विद्याभेदशङ्कायां सिद्धान्तेऽपि तुल्यार्थतैव सर्वान्तरवस्तुप्रतिपादकत्वाविशेषेण दृढीक्रियते । कथमयमभ्यासमूलकविद्याभेदपूर्वपक्षपरिहारो भवेत्, उच्यते—'द्वावत्र पूर्वपक्षौ—एकस्तावदुषस्तप्रश्नो जीवविषयकः,

कहोलप्रश्नः परमात्मविषयक इति। अस्य च उभयोः परमात्मविषयकतया तुल्यतानिरूपणेन निराकरणमाद्यसूत्रे विवक्षितम् । तर्हि तुल्यार्थत्वे अभ्यासाद्विद्याभेद इत्यपरः पूर्वपक्षः ।सः' अन्यथाभेदानुपपत्तिरि'ति द्वितीयसूत्रेणानूद्य निराकृतः। भाष्ये तु द्वितीयसूत्रनिराकरणीय एवाभ्यासमूलकः पूर्वपक्षः प्रथमसूत्रव्याख्यानावसर एव कण्ठतो दर्शितः। प्रथमसूत्रनिवर्त्यः पूर्वपक्षस्तु तुल्यार्थतासिद्धान्तप्रदर्शनव्याजेन सूचित इति । तत्र प्रथमपूर्वपक्षस्यायमभिप्रायः--उषस्तेन सर्वान्तरे वस्तुनि पृष्टे याज्ञवल्क्यस्योत्तरं 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तर' इत्यादिना प्राणनादिविशिष्टविषयकमुपलभ्यते । पुनश्च तेनैवोषस्तेन 'यथाविब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति । यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्वे'ति परिचोदिते 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेश्श्रोतारं शृणुया' इत्यादिना द्रष्ट्रादिरूपविषयकमुपलभ्यते । प्राणनादिकं द्रष्टृत्वश्रोतृत्वादिकं च जीव एव असाधारणतया प्रसिद्धम् । अत उषस्तब्राह्मणं जीवविषयकमित्युपगन्तव्यम् । कहोलब्राह्मणं तु 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती'त्युत्तरे अशनायाद्यत्ययस्य 'एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रेषणायाश्चे'त्यादिना सन्न्यासश्रवणादिसाध्यमोक्षफलकज्ञानविषयत्वस्य परमेश्वरधर्मस्य कीर्तनात् परमात्मविषयकमित्यवगम्यते । अतो वेद्यभेदादुभयोर्ब्राह्मणयोर्विद्याभेदः । स्यादेतत्—उषस्तब्राह्मणस्य जीवविषयत्वे हि विद्याभेदो भवेत्, तत्तु तदुपक्रमे 'यत्साक्षादपरोक्षात् ब्रह्मे'ति ब्रह्मश्रुतेः 'य आत्मा सर्वान्तर' इति सर्वान्तरत्वलिङ्गाच्च ब्रह्मपरत्वावगमान्न सम्भवति। तथा चोपक्रमानुसारेण चरमश्रुतं प्राणनादिकं परमात्मन्येव व्याख्येयम् । सर्वाधारे प्राणनाद्याधारत्वोपपत्तेः । ननु, सर्वाधारोऽपि परमात्मा 'न प्राणिती'त्यादिव्यपदेशार्हः । न हि सर्वाधारोऽपि कालः प्राणितीत्यादिव्यपदेशार्हो भवतीत्यपरितोषः, तर्हि प्राणितीत्यादिपदं णिजर्थगर्भं भवतु—प्राणयति अपानयतीति । प्राणनादिप्रयोजकत्वं तु परमात्मन उपपद्यत एव । 'न दृष्टेर्द्रष्टारमि'त्यादिकं तु नोपक्रान्तसर्वान्तरवस्तुविषयम् । अयं हि तस्याभिप्रायः—उषस्तेन सर्वान्तरे परमात्मनि पृष्ट 'एष त आत्मा सर्वान्तर' इति सम्मुग्धतया प्रथमं याज्ञवल्क्येनोत्तरितम् । पुनरपि स्पष्टतया सर्वान्तरं ब्रह्म कथयेत्यभिप्रायेणोषस्तस्य 'कतमो याज्ञवल्क्य सर्वान्तर' इति प्रश्ने 'यः प्राणेन प्राणि'तीत्याद्युत्तरिते पुनरप्युषस्तपरिचोदना- विस्पष्टं सर्वान्तरं वस्तु कथयेति मया पृष्टेन भवता जीवसाधारणपदैरेवोत्तरमुक्तम् । अतो न समीचीनमिति पुनरपि चोदिते 'न दृष्टेर्द्रष्टारं पश्ये'रित्यादि याज्ञवल्क्यवचनम् । तत्र च 'प्राणित्यपानिती'त्यादिशब्दैर्निर्दिष्टं त्वं दृष्टेर्द्रष्टारं श्रुतेश्श्रोतारं मतेर्मन्तारं विज्ञातेर्विज्ञातारं जीवं न

विद्याः' अपि तु प्राणनादिप्रयोजकपरमात्मा मया प्रतिपादित इति जानीया इति विवक्षितम् । तथा च 'न दृष्टेर्द्रष्टारमि'त्यादिवाक्यस्य सर्वान्तरवस्तुनि 'प्राणिती'-त्यादिनिर्देशप्रयुक्तजीवत्वभ्रमनिरासपरत्वान्नास्य जीवत्वसाधकता । अत उपक्रमानुसाराडुषस्तप्रश्नस्य ब्रह्मविषयत्वे कथं विद्याभेद इति चेन्न । स्यात् यत्र ह्युपक्रमोपसंहारयोरल्पभूयस्त्वे न भवतः, तत्रैवोपक्रमानुसारेणोपसंहारनयनम् । यत्र तूपसंहारस्य भूयस्त्वं, तत्र वैपरीत्यमेवेति प्रतिष्ठापितं 'दहर उत्तरेभ्य' इत्यादिषु । इह चोपक्रमगतं साक्षादपरोक्षत्वं जीवस्य स्वप्रकाशस्य सम्भवत्येव । घटादिकं ह्यन्तःकरणप्रणाडिकया प्रत्यक्चैतन्यसम्बन्धे सति अपरोक्षं, जीवस्तु स्वत एव अपरोक्ष इति साक्षादपरोक्षत्वेन व्यपदिश्यते । अपरोक्षादिति पञ्चमी श्रुतौ प्रथमार्थे द्रष्टव्या । सर्वान्तरत्वं तु आध्यात्मिकसर्वान्तरत्वाभिप्रायमिति 'एष त आत्मा सर्वान्तर' इत्युत्तरवाक्यबलादेवावगम्यते । एतत्पदं सन्निहितापरोक्षवस्तुपरम् । जीवश्च तथा, न परमात्मा । तस्य शास्त्रैकगम्यत्वेन 'एष आत्मे' ति निर्देशानर्हत्वात् । अत एकं ब्रह्मपदं प्राणनद्रष्टृत्वाद्यनेकजीवलिङ्गानुसारेण इदं ब्रह्मायाति, इदमागच्छतीत्यादाविव जीवपरमित्येव युक्तम् । प्राणितीत्यादीनां णिजर्थगर्भत्वे लाक्षणिकतापत्तेः । न च 'न दृष्टेर्द्रष्टारं पश्येरि'त्यादिषु 'प्राणिती' त्यादिवाक्यनिर्दिष्टो दृष्टेर्द्रष्टा जीव इति न पश्येः एवं भ्रमं मा कुरु, अपि तु परमात्मैवेति कल्पना समीचीना । अध्याहारप्रसङ्गात् । अनन्तरं च द्रष्टृत्वादिना निर्दिष्ट एवोपक्रान्तसर्वान्तरत्व 'स्यैष त आत्मा सर्वान्तर' इति श्रवणाच्च । अत इत्थं तदभिप्रायो वर्णनीयः—साक्षादपरोक्षे सर्वान्तरे प्रथमं पृष्टे एष त आत्मा सर्वान्तर इत्युत्तरिते च एतत्पदेनाहमिति प्रत्यक्षविषयो भवता सर्वान्तरो यदि निर्दिश्यते, तर्हि अहमिति प्रतीयमानानामात्मान्तःकरणेन्द्रियादीनां मध्ये कतमस्त्वया सर्वान्तरो विवक्षितः, तं शृङ्गग्राहिकया प्रदर्शयेति 'कतमो याज्ञवल्क्य सर्वान्तर' इति पुनः परिचोदिते—'यः प्राणेन प्राणिति स त आत्मा सर्वान्तर' इत्यादिना च पुनरपि याज्ञवल्क्येन प्राणनादिलिङ्गोपन्यासेन प्राणादिव्यतिरिक्ते बोधितेऽप्युषस्तेन दूषणमुक्तं—यथा विब्रूयादसौ गौरसावश्व इति एवमेवैतत् व्यपदिष्टं भवती'ति मया शृङ्गग्राहिकया सर्वान्तरं प्रतिपादयेति पृष्टं, भवांस्तु यथा असौ गौरित्यादिवाक्यं दूरस्थं गवादिकं परोक्षतयैव निर्दिशति, तथैव प्राणनादितद्धर्मोपन्यासेन प्राणादिप्रेरयितारं कञ्चित् सूचयति, न त्वङ्गुलीनिर्देशसहितमयं गौरित्यादिवत् शृङ्गग्राहिकया प्रदर्शयतीति तदभिप्रायः । तदभिप्रायनिराकरणार्थं 'न दृष्टेर्द्रष्टारं पश्येरि' त्यादियाज्ञवल्क्यस्य वचनं दृष्ट्यादीनां योऽवभासको जीवः, तस्य दृष्ट्यादिजन्यज्ञानावभास्यत्वाभावात् अङ्गुलीनिर्दे-

शेन प्रतिपादयितुमशक्यस्स इति तदभिप्रायः । अतः 'यः प्राणेन प्राणिति यश्च दृष्टेर्द्रष्टे'तिलक्षणमुखेनैव स प्रतिपाद्यत इति । अत उषस्तप्रश्नस्य जीवविषयत्वात् कहोलप्रश्नस्य च परमात्मविषयतया विद्याभेद इति । अमुं पूर्वपक्षं निराकरोति—**अन्तराम्नानाविशेषादिति** । पूर्वसूत्रात् आमननादित्यनुवर्तते । अन्तरापदं सप्तम्यन्तं, छान्दसस्सप्तम्या आडादेशः । तथा च उषस्तकहोलप्रश्नयोः सर्वाभ्यन्तरे आत्मन आम्नानेनैकार्थत्वं प्रत्यभिज्ञायते । इदं ब्रह्मत्वसाक्षादपरोक्षत्वयोरप्युपलक्षणम् । उत्तरसूत्रादन्यथानुपपत्तिरित्यपकृष्य सर्वान्तरत्वस्येति च पदमध्याहृत्य भूतग्रामवदिति पदं व्याचष्टे—**तदा ह्येकस्येत्यादिना** । अयमत्र परिहाराभिप्रायः —प्रश्नद्वयस्याप्यैकरूप्येण एकार्थत्वं परमात्मविषयत्वं च स्वरसतोऽवगम्यते । अत्र च प्रश्नद्वयेऽपि प्रत्यगभेदेनैव परमात्मा जिज्ञासितः । सर्वान्तरत्वरूपपरमात्मलिङ्गेनैव सह साक्षादपरोक्षत्वस्य जीवलिङ्गस्योपक्षेपात् । एवंचसत्युषस्तब्राह्मणे प्राणनादिद्रष्टृत्वादिजीवलिङ्गोपक्षेपो न परमात्मपरत्वविरोधी । अभेदस्य प्रकृते विवक्षितत्वात् । **तस्माद्वेद्यैकत्वाद्विद्यैकत्वमिति** । अत्रेयं शङ्का—यदि प्रत्यगभिन्नं ब्रह्म विवक्षितं, तर्ह्येकेनैव ब्राह्मणेन तदर्थस्य सिद्धत्वात् पुनस्तत्प्रतिपादनं कहोलब्राह्मणे असङ्गतमिति ॥

इमामाशङ्कामनूद्य निराकर्तुम्—

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्॥३६॥

इति सूत्रम् ॥

**आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेरिति** । अयमर्थः—सुषुप्त्यादिषु येन सद्रूपेण जीवस्सम्पन्नो भवति, तदेव सर्वात्मकं ब्रह्म त्वमसीति प्रथमतस्तत्त्वमसीति प्रतिपादिते 'भूय एव मा भगवान् विज्ञापयत्वि'ति पुनःपुनः प्रश्नाः शङ्काविशेषगर्भिताः । ताश्च शङ्कास्तत्सन्दर्भपर्यालोचनयावगन्तुं शक्यन्ते । तथाहि—प्रथमप्रश्नस्य यदि सर्वाः प्रजास्सुप्तौ सति सम्पन्नाः, तर्हि ताः किमिति न जानन्ति—सति सम्पन्ना वयमितीति शङ्कागर्भत्वं नानावृक्षाणीतैर्मकरन्दैर्मधुकरैसम्पादितं मधु प्रस्तुत्य समाम्नातेन 'ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि, अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य न विदुरि'ति वाक्येनावगम्यते । तदनन्तरप्रश्नस्य सति सम्पन्नानां विवेकाभावात् मास्तु सुप्तिकाले सति सम्पन्ना इति ज्ञानं, तत उत्थितानां तु सतो वयमुत्थिता इति जाग्रद्दशायां ज्ञानेन भवितव्यमित्यभिप्रायकत्वं जलधरैस्समुद्रजलमाकृष्य वृष्टिरूपेण भूमौ निक्षिप्य तेन जलेन संवर्धिता नदीः प्रस्तुत्य ता यथा तत्र न विवेकं लभन्ते इयमहमस्मि समुद्रादहमागतास्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजास्सत

आगम्य न विदुरि'ति वाक्यपर्यालोचनयावगम्यते । एवमुत्तरेष्वपि प्रश्नेषु शङ्काविशेषगर्भत्वं तत्तत्सन्दर्भपर्यालोचनया अवगम्यते । एवं च यथा छान्दोग्ये षष्ठाध्यायगतो नवकृत्वस्तत्त्वमसीति प्रत्यगभिन्नपरमात्मोपदेशश्शङ्काविशेषनिराकरणाय, एवमिहाप्युषस्तब्राह्मणेन प्रत्यगभिन्ने परमात्मनि प्रतिपादितेऽपि अशनायादिमता जीवेन सह कथं परमात्मन एकत्वमिति मनसि निधाय उषस्तपृष्टस्यार्थस्य एवकारगर्भितेन वाक्येन कहोलेन प्रश्ने कृते याज्ञवल्क्येन तदीयमभिप्रायमवगम्य एष त आत्मा सर्वान्तर इति पूर्वोक्तमर्थमुपक्षिप्य तस्यैतत्पदनिर्दिष्टस्य 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती' त्यशनायादेः परमार्थगत्या निषेधो दर्शितः । अतः पुनराम्नानस्य प्रयोजनान्तरार्थत्वान्नानर्थक्यमूलकाभ्यासन्यायः प्रकृते प्रवर्तते ॥३६॥

इति अन्तराभूतग्रामाधिकरणम् ॥२२॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥३७॥

पूर्वत्र पृथगाम्नाने सत्यपि विद्यैक्यमित्युक्तं, तद्वत्रापि 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी' त्यादिपृथगाम्नाने सत्यपि एकरूपैव मतिः कर्तव्येति प्रत्यवस्थानात् सङ्गतिः । **उभयरूपा मतिरिति** । त्वं वा अहमस्मि योऽसौ सोऽहमित्यंशेन देवतोपसर्जना प्रत्यक्प्रधाना मतिः प्रतीयते । अहं वै त्वमसि योऽहं सोऽसावित्यंशेन च प्रत्यगुपसर्जना देवताप्रधाना मतिः ; तथा च उपास्यदेवताप्रत्यगभेदविषयत्वस्याविशिष्टत्वेऽपि प्रधानोपसर्जनभावभेदेन आम्नानात् द्विरूपता द्रष्टव्या । एकरूपैवेतीति । प्रत्यक्प्रधाना देवतोपसर्जनेत्यर्थः । **ऐकात्म्यस्यैवानेन प्रकारेणेति** । देवताया जीवत्वमापादितं स्यादित्यनेन किं विवक्षितं—देवताचैतन्यं प्रत्यक्चैतन्यं च एकतया ध्यातव्यं स्यादिति चेत, इष्टत्वात् । उपासकस्य देवतया सह चैतन्यांशमादाय यद्वास्तवमैक्यमस्ति, तदेव ह्यहंग्रहोपासनेषु व्यतिहारेण ध्येयमिष्यते । देवतात्वावच्छेदेन जीवगतानां संसारित्वादीनां ध्यानं तु नेष्यते । येन देवताया निकर्ष आपादितस्स्यात् । अपि तु देवतागता अपहतपाप्मत्वादय एव उपासके ध्येया इष्यन्ते । ते तूत्कर्षापादका एवेति भावः । **तद्गुणक ईश्वरस्सिध्यतीति** । देवताधिकरणन्यायेनेति भावः । **समाने च विषय इति** । ऐतरेयकजाबालयोर्यामुपासनां प्रस्तुत्याम्नातः, तस्यामित्यर्थः । अथवा तत्तदुपास्यदेवताप्राप्तिफला या उपासनाः, तासु सर्वास्वपीत्यर्थः । ननु, तासामुपासनानामेतद्विकृतित्वाभावात्तत्र कथं व्यतिहारस्य प्राप्तिर्भवेत्, प्रयोजनानुसारादिति ब्रूमः । देवताप्राप्तिफलानि हि सर्वाण्युपासनानि । 'देवो भूत्वा देवानप्येती'ति वचनानुसारादिहैवाभिमानिकदेवभा-

वसंपाद्यानि । यद्यपि 'देवो भूत्वा देवानप्येती'ति वचनं वाग्वै ब्रह्मेत्यादिना वागाद्युपाधिकब्रह्मविषयोपासनाविशेषान् प्रस्तुत्यैव समाम्नातं, तथापि तत्सामान्यनिर्देशसामर्थ्यात् सर्वविषयं प्रतीयमानं न प्रकरणानुसारेण सङ्कोचमर्हति । अत एव संवर्गविद्याप्रकरणे तदुपासनानिष्ठस्य ब्रह्मचारिणः क्वचिद्भिक्षार्थमागतस्य भिक्षाया अदाने वचनं श्रूयते—'यस्मै वा एतदन्नं तस्मा एतन्न दत्तमि'ति । प्राणार्थं ह्यन्नं पच्यते । अहं च प्राणः । अतः प्राणायैवान्नं न दत्तमि'ति । इदं च वाक्यं स्वात्मनि प्राणदेवताभेदाभिनिवेशं सूचयति । तथा च जाबालैतरेयकयोर्व्यतिहाराम्नानस्याभेदाभिमानप्रयोजनकत्वात् तत्प्रयोजनस्य च देवताप्राप्तिफलासूपासनासु सर्वत्राविशेषात् उपासनान्तरेषु दृष्टश्शास्त्रीय उपायः ततोऽन्यत्र ग्राह्यः ॥३७॥

इति व्यतिहाराधिकरणम् ॥ २३ ॥

## सैव हि सत्यादयः ॥३८॥

पूर्वत्राम्नानभेदाद्विरूपा मतिः कर्तव्येत्युक्तम् । तर्हीहापि फलभेदात् द्विरूपोपासना भविष्यतीति प्रत्यवस्थानात्सङ्गतिः । 'स यो हैतन्महद्यक्षं यजनीयं पूज्यं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमान् लोकानि'ति सफलां प्रधानोपासनां विधाय सत्यमिति तदीयनाम्नोऽक्षराणामप्युपासनमाम्नातं—'तदेतत्त्र्यक्षरं सत्यमि'ति । स इत्येकमक्षरं, तीत्येकमक्षरम् । इकारस्सुखोच्चारणार्थः । यमित्येकमक्षरम् । प्रथमोत्तमे अक्षरे सत्यं, मध्यतोऽनृतम् । तदाह—**स यो हैतदित्यादि**। सनामाक्षरोपासनं नामाक्षरोपासनासहिताम् । उपरिष्टात् 'तद्यत् तत् सत्यमसौ स आदित्य' इत्यादिकायामिति यावत् । इदं भेदेन पूर्वपक्षकथनम् । स यो हैतन्महद्यक्षमित्यादिकादुपरिष्टादाम्नातायामादित्यचक्षुरधिकरणकविद्यायामिव ततः पूर्वं समाम्नातायां 'एष प्रजापतिर्यद्धृदयमेतत् ब्रह्मैतत सर्वं तदेतत्त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरं हरन्त्यस्मै बलिं स्वाश्चान्ये च य एवं वेद,द इत्येकमक्षरं ददति अस्मै धनादिकं स्वाश्चान्ये च य एवं वेद,यमित्येकमक्षरम् एति स्वर्गं लोकं य एवं वेदे'ति फलभेदाम्नानाविशेषात् हृदयविद्यायामपि द्रष्टव्यम् । ननु, हृदयविद्यायामुपास्यतयोक्तस्य प्रजापतेः 'तद्वै तदेतदेव तदा स सत्यमेव स यो हैतन्महद्यक्षमि'तिवाक्येनानुकर्षणं सत्यवाक्ये, सत्यवाक्योक्तस्यानुकर्षणं 'तद्यत्सत्यमसौ स आदित्य' इत्युत्तरत्र दृश्यते । अतस्स्थलत्रयेऽपि उपास्यस्यैकस्यैव प्रतीतेः कथं विद्याभेद इत्याशङ्क्य तथापि फलभेदादुपासनाभेदो भविष्यति।यथा एकस्य परब्रह्मण उपास्यत्वेऽपि दहरादिविद्याभेद इत्यभिप्रेत्याह — **प्रकृताकर्षणं त्विति** ।

**तस्योपनिषदहरिति** । यथा 'तस्योपनिषदहरित्यधिदैवतं हन्ति पाप्मानं जहाति च य एवं वेद तस्योपनिषदहमित्यध्यात्मं हन्ति पाप्मानं जहाति च य एवं वेदे'ति आदित्याक्षिपुरुषाङ्गोपनिषदोः स्तावकम्, 'एवं हरन्त्यस्मै स्वाश्चान्ये चे'त्याद्यपि प्रकृतोपासनाङ्गभूतहृदयनामोपासनास्तावकमित्यपि द्रष्टव्यम् । **छान्दोग्ये हीति** । तथा चैकत्र प्राधान्येन उद्गीथ उपास्यः, अन्यत्र च सत्याख्यो हिरण्यगर्भ एवेत्युपास्यभेदाद्विद्याभेदस्सिद्धो भवतीति भावः ॥ ३८ ॥

इति सत्याद्यधिकरणम् ॥२३॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥३९॥

पूर्वत्रैष प्रजापतिरित्यारभ्य हन्ति पाप्मानं जहाति चेत्येवमन्ते समाम्नाने एकैव विद्येति गुणोपसंहारः प्रदर्शितः । छान्दोग्यगतस्य 'एष आत्मापहतपाप्मे'त्यादेस्सगुणविषयत्वाद्वाजसनेयकगतस्य 'स वा एष महानज आत्मा' इत्यादेश्च निर्गुणविषयत्वादुभयत्र विद्याभेदे सति न गुणोपसंहार इति प्रत्यवस्थानात्संगतिः । अत्र 'ननु, विशेषोऽपि दृश्यत' इत्यादिना पूर्वपक्षाभिप्रायं वर्णयिष्यति । प्रथमतस्सिद्धान्तमेव दर्शयति—**तत्रेदमुच्यत इति** । **आकाशशयस्य ब्रह्मण इतीति**। ननु, वाजसनेयके 'य एषोऽन्तर्हृदय आकाश' इत्याकाशपदोदितं ब्रह्म, तच्छयानस्तु जीव एव । सुप्तिलिङ्गात् । अतः सर्वस्य वशीत्यादिना प्रतिपाद्यमानं गुणजातं योग्यतयाकाशपदोदिते ब्रह्मण्येवान्वेति । अतः कथं वैषम्याशङ्केति चेत्, उच्यते—तस्मिन् शेत इति वाक्ये हि शयानो जीव एव प्रधानतया प्रतीयते। तदनन्तरमाम्नातं वशित्वादिकं च प्राधान्येन शयान एवान्वेतुं योग्यं, न तूपसर्जनीभूत आकाशे । न चैश्वराणां धर्माणां जीवे अयोग्यता । परमेश्वराभेदस्य प्रकृते विवक्षितत्वादिति भावः । **छान्दोग्येऽप्याकाशशब्दं ब्रह्मेति** । नन्वेतावता छान्दोग्ये भूताकाशः प्रतिपाद्यः, वाजसनेयके परमात्मेति विशेषः परिहृतो भवति । छान्दोग्ये परमात्मा, वाजसनेयके तु परमात्मनि शयानो जीव इति तु विशेषाशङ्का न परिहृतेति चेत्, न । वाजसनेयके हि आकाशशयानो जीव आकाशाभेदेनैव प्रतिपाद्यः । तस्मिञ्छेत इत्यधिकरणाधेयभावेन भेदनिर्देशस्तु 'यदा सुप्तस्स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवती'ति श्रुत्यन्तरानुसारेणौपचारिकः । तथाचाकाशशयाने प्रतिपाद्यमानं सर्ववशित्वादिकमाकाशे प्रतिपादितमेव भवति । एवं तर्हि छान्दोग्यवाजसनेयकयोः प्रकारान्तरेण विद्याभेद इति शङ्कते— **अयं त्वत्रेति** । परिहरति—**गुणवतस्त्विति** । अयं भावः— निर्गुणायां वाजसनेयकगतायां विद्यायां न ध्यानार्थो गुणोपसंहारः । तत्र गुणानामध्येयत्वात् । स्तु-

त्यर्थगुणोपसंहारस्तु न विद्याभेदेऽपि विरुध्यते । एवं सगुणविद्यायां गुणानां ध्येयत्वेऽपि शास्त्रप्रामाण्याद्यावन्तो गुणाः ध्येयत्वेनावगताः, तावन्त एव ध्येयाः । भिन्नविद्यागतानां तु गुणानां ध्यानविधिना अनुचिन्तनीयत्वेन असङ्ग्रहात्तेषामुपसंहारो हृदयादिस्थानप्रत्यभिज्ञामात्रसिद्धः स्तुत्यर्थमस्मिन्नधिकरणे प्रतिपाद्यते । एवं दहरशाण्डिल्यादिसगुणविद्यास्वपि यदि हृदयादिस्थानप्रत्यभिज्ञानात् सत्यकामत्वादीनां गुणानाञ्च केषाञ्चित् प्रत्यभिज्ञानात् समाख्यादिभेदेन सत्यपि भेदे स्तुत्यर्थं गुणोपसंहारस्स्यात्, तदास्तु । न काचिदनुपपत्तिः । अनुचिन्तनाय गुणोपसंहारे तु विद्यैक्यमेव प्रयोजकम् ॥ ३९ ॥

इति कामाद्यधिकरणम् ॥२४॥

## आदरादलोपः ॥४०॥

यथा परमात्मनः स्तुतिरूपादरप्रयोजनार्थं विद्याभेदेऽपि गुणानाम् उपसंहारादलोप उक्तः, एवं वैश्वानरविद्याङ्गभूताग्निहोत्रस्यापि आदरसिद्ध्यर्थं भोजनलोपेऽपि न लोप इति दृष्टान्तसङ्गत्या पूर्वपक्षः । विद्याविचारप्रसङ्गात्तदङ्गाग्निहोत्रविचारः पादे प्रासङ्गिकः, 'एवं सर्वाणि भूतानि अग्निहोत्रमुपासत' इति सर्वोपास्यताप्रतिपादनम् । 'अथ य एवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु हुतं भवती' ति प्रकृताग्निहोत्रस्य सर्वभूततृप्तिहेतुत्वप्रतिपादनात् सूत्रे अलोप इति प्रसज्यप्रतिषेधात् । तं व्युत्पादयितुं प्रसक्तिमाह---**तद्यद्भक्तमिति ।** यथा हि शालिप्रयुक्तकुल्योपजीविनस्तृणादेश्शालिलोपे लोपः, एवं भोजनप्रयुक्तभक्तागमनोपजीविनः प्राणाग्निहोत्रस्य कुल्यां प्रति तृणस्येव भक्तागमनं प्रति प्रयोजकत्वाभावात् भोजनलोपे लोप एवेति प्रसक्तायां सिद्धान्तिशङ्कायां पूर्वपक्षोऽभिधीयत इति तावदाह—**एवंप्राप्ते न लुप्येतेति तावदाहेति** । ननु, पूर्वोऽतिथिभ्योऽश्नीयादिति वाक्यं वैश्वानरोपासननिष्ठस्य प्रसक्ते भोजने तस्य अतिथिभोजनात् पूर्वकालत्वं विधत्ते । तावता तद्यद्भक्तमिति भोजनप्रयुक्तभक्तोपजीवित्वेनावगतस्य प्राणाग्निहोत्रस्य कथं भोजनलोपे लोपो न भवेदिति चेत्, उच्यते—'पूर्वोऽतिथिभ्योऽश्नीयादि' ति वाक्यं न स्वामिभोजनस्यातिथिभोजनपूर्वकालतां विधत्ते।तथासत्यतिथिभोजनोत्तरकालं स्वामिभोजनाविधायकं शास्त्रं बाधितं स्यात् । अतः प्राणाग्निहोत्रस्यैवापकर्षकमेतद्वाक्यम् । प्राणाग्निहोत्रेऽप्यश्नीयादिति नानुपपन्नम् । 'आस्यमाहवनीय' इति वाक्येन प्रकृताग्निहोत्रस्यास्याधारत्वविधानेन अशनरूपत्वावगमात् यथा हवै 'स्वयमहुत्वाग्निहोत्रं परस्य जुहुया' दिति वाक्यशेषानुसारादपि अश्नीयादिति होमपरमेवावगम्यते, यथा हि स्वयं नित्याग्निहोत्रमकृत्वा परकीयं क्रियते ,

एवमतिथीनां प्राणाग्निहोत्रात्पूर्वमन्नदानमिति । तथा च दृष्टान्ते नित्याग्निहोत्रस्य उपादानाद्दार्ष्टान्तिकेऽप्यश्नीयादित्यग्निहोत्रपरमेवावगम्यते । तथा चायमर्थस्सिध्यति—तृप्त्यर्थं यजमानस्य भोजनमतिथिभोजनोत्तरमेव वचनान्तरानुसारेण कर्तव्यम् । तस्यातिथिभोजनपूर्वकालत्वाविधानात् । वैश्वानरविद्याङ्गभूतं 'प्राणाय स्वाहे'त्यादिमन्त्रपञ्चकयुक्तं पञ्चाहुतिरूपं प्राणाग्निहोत्रमतिथिभोजनात्पूर्वमेव कर्तव्यमिति । तथा च तस्मिन् काले यजमानभोजनाप्रसक्तेः न प्राणाग्निहोत्रस्य भोजनप्रयुक्तभक्तोपजीविता सम्भवति, भोजनप्रयुक्तभक्तागमनस्य तदानीमसम्भवात् । अतः स्वयमेवेदं द्रव्यप्रयोजकम् । तथा चेहाग्निहोत्रमिति नाम्नाग्निहोत्रसादृश्यबोधकेन तदीयानां पयःप्रभृतीनां द्रव्याणां प्राप्तौ तदपवादेन 'तद्यद्भक्तमि'ति भक्तद्रव्यविधायकमेतद्वाक्यम् । नन्वेवंसति भोजनलोपेऽपि प्राणाग्निहोत्रार्थमेव भक्तस्य सम्पादनीयत्वात् कथमुच्यते 'भोजनलोपेऽप्यद्भिरन्येन वे'त्यादीति चेत्, भोजनलोप इत्यस्य दैवगत्यादिना भक्तालाभपरत्वात् । तथा च मुख्यद्रव्यालाभेऽपि यथा प्रतिनिधिना अवश्यप्राप्तं दर्शादिकमनुष्ठीयते, एवमुपासकेन प्राणाग्निहोत्रस्य नित्यं कर्तव्यत्वात् मुख्यद्रव्यालाभेऽप्यबादिकं प्रतिनिधाय कर्तव्यमिति तदाशयः । 'गुणलोपेऽपि न मुख्यस्ये'ति जैमिनीयो न्यायः । तस्यायमर्थः—'अग्निहोत्रहवण्या हवींषि निर्वपेदि'ति श्रूयते । अग्निहोत्रहवणी च सैवोच्यते । ययाग्निहोत्रं हुतं, न तु यया होष्यते । भाविनः पदार्थस्य सन्दिग्धतया भाविहोमसम्बन्धे निश्चयासम्भवेन तत्र शब्दात् स्वरसतो बोधानुदयात् । पवमानेष्टयश्च आधानाङ्गतया विहिताः । तत्र निर्वापश्च दर्शपूर्णमासेष्टितः प्राप्तः । स कर्तव्यो वा, न वेति सन्देहः । तत्र पूर्वः पक्षः—तस्यां दशायामग्निहोत्रस्य अप्रवृत्तत्वेन अग्निहोत्रहवण्या असम्भवात् गुणलोपे च विगुणनिर्वापस्योपकारजनकत्वासम्भवात् न कर्तव्य इति । सिद्धान्तस्तु—प्रकृतिप्राप्तेन निर्वापजन्योपकारेण स्वसिद्ध्यर्थं निर्वापस्यापेक्षितत्वात् पवमानेष्टिकाले च अग्निहोत्रहवण्या असम्भवं पर्यालोच्य सर्वथोपकारलोपो मा भूदिति अग्निहोहवणीविनिर्मुक्त एव निर्वापः पवमानेष्टयुपकारक इति शास्त्रार्थो निर्धार्यते । तस्मात् गुणस्य अग्निहोत्रहवण्या लोपेऽपि यथा मुख्यस्य निर्वापस्य न लोपः, एवं भक्तलोपेऽपि न मुख्यस्याग्निहोत्रस्य लोप इति ॥४०॥

## उपस्थितेऽतस्तद्वचनात् ॥४१॥

प्राणाग्निहोत्रे 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय'मिति वाक्यं द्रव्यविधायकम् । अत्र च तद्धोमीयमिति तत्पदं पूर्ववाक्यार्थावगमसापेक्षम् । पूर्ववाक्ये च तद्यद्भक्तमिति प्रसिद्धभक्तागमनप्रतिपादनात् तस्य च भोजनार्थतयैव प्रसिद्ध-

त्वात् भोजनार्थागतं भक्तं होमीयमित्यर्थस्सिध्यति । ततश्च ‘ यथा शेषात् स्विष्टकृते समवद्यती’त्यत्र कस्य शेषादित्यपेक्षायाम् अग्न्यर्थं सम्पादितपुरोडाशशेषादित्यर्थलाभात् अग्न्यर्थपुरोडाशशेषस्य चाग्निना प्रयुक्ततयान्यप्रयुक्तद्रव्योपजीविनस्स्विष्टकृतस्स्वयं पुरोडाशाप्रयोजकतया पुरोडाशशेषलोपे स्विष्टकृदपि लुप्यते, एवं भोजनप्रयुक्तद्रव्योपजीविनः प्राणाग्निहोत्रस्य स्वयं प्रयोजकत्वाभावात् भोजनलोपे तत्प्रयोजकभक्तद्रव्याभावेन लोप एव । न च ‘पूर्वोऽतिथिभ्योऽश्नीयादि’ति भोजनकालादपकृष्टस्य प्राणाग्निहोत्रस्य कथं भोजनलोपे लोपः । भोजनार्थद्रव्योपजीविनः प्राणाग्निहोत्रस्य भोजनकालादपकर्षणासम्भवात् अश्नीयादित्यस्य भोजन एव स्वरसत्वात् वचनानुसारेण वैश्वानरोपासकस्य अतिथिभ्यः पूर्वभोजने दोषाभावात् भोजनस्यैवायमपकर्षः । अमुमर्थं दर्शयति—**उपस्थिते भोजन इत्यादिना** । यच्च पूर्वपक्षिणोक्तमग्निहोत्रपदं नैयमिकाग्निहोत्रधर्मप्रापकमिति, तन्निराकरोति—**न चेति**। यत्र हि विधिवाक्ये कर्मान्तरवाचकश्शब्दः कर्मान्तरे श्रूयते, तत्र विधेयसादृश्यं बोधयन् स्ववाच्यगतामितिकर्तव्यतामन्यत्र प्रापयेत् । अन्यथा सादृश्यकर्तव्यताबोधपरविधिविरोधात् यथाकथञ्चित् सादृश्यस्य विधिं विनैव सिद्धत्वात् । अर्थवादगतस्त्वन्यत्रान्यशब्दो न कर्तव्यसादृश्यं बोधयति, अपि तु यथाकथञ्चित् सिद्धं सादृश्यमादाय निर्वृतो भवति । यथा ‘सोमो वै वाजिनमि’ति सोमे वाजिनपदं न वाजिनेतिकर्तव्यतां प्रापयति, अपि तु सिद्धं द्रव्यत्वादिसादृश्यमनुवदति । यथा वा ‘एष वै दर्शपूर्णमासयोरवभृथ’ इत्यपां व्युत्सेके अवभृथशब्दो जलसम्बन्धित्वमात्रमनुवदति, एवमत्रापि प्राणाहुतिष्वर्थवादगतोऽग्निहोत्रशब्दस्सिद्धतया साम्पादिकाहवनीयादिसम्बन्धमात्रेणाग्निहोत्रसादृश्यानुवादकः । अग्निहोत्रेतिकर्तव्यतातिदेशोपगमे बहूनां बाधश्च कर्तव्यस्स्यादित्याह—**तद्धर्मप्राप्तौ चेति** । तथा च बहुबाधकल्पनाद्वरमग्निहोत्रपदस्यानुवादकतामात्रकल्पनमिति भावः । अग्निहोत्रधर्मातिदेशे चाहवनीयादीनां गौणानां सम्पादनं व्यर्थं, मुख्यस्यैव प्राप्तिसम्भवादित्यभिप्रेत्याह—**अत एव चेति** । इदं चाग्निहोत्रधर्माणामतिदेशस्य निराकरणं भोजनार्थभक्तरूपद्रव्याभावेऽपि दध्यादिरूपाग्निहोत्रद्रव्याण्येवात्र भविष्यन्ति । भक्तद्रव्यविधानस्य दध्याद्यपवादार्थतया अपवादाप्रवृत्तावुत्सर्गप्रवृत्त्युपपत्तेरिति शङ्कानिराकरणार्थम् ॥४१॥

इति अलोपाधिकरणम् ॥२६॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥४२॥

पूर्वस्मिन्नधिकरणे अन्यप्रयुक्तद्रव्योपजीविनः प्राणाग्निहोत्रस्योपासनायाम-नियतत्वमुक्तम् । तदस्तु नाम । उपासनानामुद्गीथालम्बनानामन्यप्रयुक्तद्रव्योपजीवित्वाभावेन कर्माङ्गत्वे सति तत्र नैयत्यमेवेति प्रत्यवस्थानात् सङ्गतिः । ननु, 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यधिकृत्य विहितानि रसतमत्वादिगुणकोद्गीथोपासनानि न कर्माङ्गम् । तेषां किञ्चित्कर्मारभ्याधीतत्वाभावेन प्रकरणासम्भवात् । नापि श्रुत्यादिकं कर्माङ्गताबोधकं तेषूपलभ्यते । न च यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'त्यस्यानारभ्याधीतत्वेऽपि विहितस्य पर्णमयीत्वस्य फलापेक्षायाम-व्यभिचरितक्रतुसम्बन्धयुक्तजुहूद्वारा क्रतोः परामर्शात् क्रत्वङ्गभूतां जुहूं पर्णमयीं कुर्यादिति वचनव्यक्त्याश्रयणेन वाक्येनैव क्रतुसम्बन्धो बोध्यते, तद्वदत्राप्यव्यभिचरितक्रतुसम्बन्धोद्गीथादिद्वारा क्रतोः बुद्धिस्थतया क्रत्वङ्गभूतानुद्गीथादीनुपासीतेति वचनव्यक्त्या कर्माङ्गावबद्धानामुपासनानामनारभ्याधीतानामपि वाक्येनैव क्रतुसम्बन्धो भवेदिति वाच्यम् । फलापेक्षायां हि सत्यामुद्गीथादिद्वारोपस्थितक्रत्वर्थता परिकल्प्येत, नेह सास्ति । 'आपयिता ह वै कामानां भवती'त्यादिवाक्यैरेव तस्य फलवत्तासिद्धेः । न च वर्तमानापदेशतया अपापश्लोकश्रवणवत्तस्यार्थवादतेति वाच्यम् । 'यस्य पर्णमयी जुहूर्भवती'त्यादौ हि न वर्तमानतापदेशमात्रेण स्तुतिपरतोपेता । तथासति 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यत्रापि फलपरता न स्यात्, अपि तु पर्णतादीनां सिद्धतया स्वतःफलजनकत्वासम्भवेनाश्रयभूतव्यापारापेक्षणात् । तस्य च गोदोहनादाविव सन्निधानतो लाभाद्वाक्येनैवाश्रयसम्बन्धबोधने फलसम्बन्धबोधने च वाक्यभेदस्स्यादिति जुहूद्वारोपस्थितक्रत्वर्थतामुपेत्य फलाकाङ्क्षायाः शान्तत्वादपापश्लोकश्रवणादीनां स्तुतिमात्रप्रयोजनकत्वमुपगतम् । क्रियारूपाणां तूद्गीथाद्युपासनानां स्वत एव फलजननसमर्थतया वाक्यस्याश्रयसम्बन्धबोधनेऽपि व्यापाराप्रसक्तेः न निरर्थकप्रायस्तुतिपरतोपगन्तुं न्याय्या, अपि तु 'प्रतितिष्ठन्ती'त्यत्रेव फलपरतैवोपेया । अतः कथमनारभ्याधीतानामङ्गावबद्धोपासनानां क्रत्वङ्गतया क्रतुप्रयोगवचनपरिग्रहात्पर्णतादिवत् क्रतौ नित्यत्वमिति चेत्, उच्यते—यदि फलपरत्वे सम्भवति न स्तुतिपरत्वमिति न्याय आश्रीयेत, तथासति 'यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाये'त्यादावपि वर्मकरणवादस्य फलपरतैव स्यात् । प्रयाजादीनां क्रियारूपाणामाश्रयानपेक्षणेन वाक्यस्य फलसम्बन्धबोधने आश्रयसम्बन्धबोधने च व्यापाराप्रसक्तेः । यदि तु फलपरत्वकल्पने भूयसी क्लिष्टकल्पना श्रितपदेषु सन्नन्तविपरिणामः, यत्तत्पदाध्याहारः, येन यज्ञस्य वर्म चिकीर्ष्यते, तेन प्रयाजानूयाजा इज्यन्त इति । सा तु प्रकरणलब्धक्रतूपकारेणैव फलाकाङ्क्षायां शान्तायां श्रितपदानामक्लेशेनैव स्तुतिपरत्वकल्पन

उचिता ।'प्रतितिष्ठन्ति हवा' इत्यादौ कथमपि क्रतूपस्थितेरभावेन क्रतूपकारमादाय फलाकाङ्क्षाया अनिवृत्ततया अगत्या सन्नन्तविपरिणामादिना फलपरताश्रितेत्युच्येत, तथास'त्यापयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त' इत्यादावपि उद्गीथादिद्वारोपस्थितक्रतूपकारद्वारेण फलाकाङ्क्षाचारितार्थ्ये सम्भवति न क्लेशेन फलपरतोपेयेति वर्तमानापदेशानां स्तुतिपरतैवाश्रयणीयेति पर्णतादिवदुपासनानां नित्यत्वमिति पूर्वपक्षाभिप्रायः । **तथाह्यनियतत्वमेवञ्जातीयकानां दर्शयति श्रुतिरिति** । ननु, 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति वाक्यं नाङ्गावबद्धोपासानानां क्रत्वङ्गताविरोधि । पर्णतादिवत् नित्यतया प्रयोगे प्रसक्ते यथा 'नातिरात्रे षोडशिनं गृह्णाती'ति वाक्यात् षोडशिग्रहविकल्पः, एवं 'तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेदे'त्यंशः क्रत्वङ्गभूतानामेवोपासनानां विकल्पविधायक इति ततो विकल्पस्सिध्यति । ततश्च क्रत्वङ्गोपसनानुष्ठानपक्षेऽङ्गाधिक्यात् फलाधिक्यस्यापेक्षितत्वात् किं तत् फलमङ्गाधिक्यकृतमित्यपेक्षायां नाना तु विद्या चाविद्याचेति पक्षद्वयस्य वैलक्षण्योपक्षेपपूर्वकं क्रत्वङ्गोपासनानुष्ठानपक्षे फलाधिक्यप्रदर्शनायायमंशः— यदेवविद्ययेत्यादि । वीर्यवत्तरमधिकफलयुक्तं कर्म भवत्युपासनापक्ष इति तदर्थः । एवंसत्येव 'यदेव विद्यया करोती'ति शेषताबोधिका तृतीयापि सङ्गच्छते । इदं रसतमत्वापायितृत्वसमृद्धिगुणकोपासनानामेव विकल्पविधायकम् । तेषामेव प्रस्तुतत्वेनास्मिन्वाक्ये एवं वेदेति परामर्शात् प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनदर्शनमङ्गत्वेऽपि विकल्पसूचकमेव भविष्यति । अतः कथमुपासनानामुद्गीथाद्यालम्बनानां स्वातन्त्र्यसिद्धिरित्यत आह— **तथा लोकसामादिष्विति** । 'लोकेषु पञ्चविधं सामोपासीते'त्यादिवाक्यविहितेषु । इदमुद्गीथालम्बनाप्त्यादिदृष्टान्तानामप्युपलक्षणं । तत्रा'प्यापयिता हवै कामानां भवती'त्यादिफलश्रवणात् । न चेदं 'वर्म वा एतद्यज्ञस्य क्रियत' इत्यादिवत् प्रशंसामात्रपरम् । तथासति लक्षणाद्वयमुपासनावाक्येषु प्रसज्येत । फलपदानां प्राशस्त्यलक्षणा, उद्गीथादिपदानां तु तदर्थोपस्थितक्रतौ । अन्यथा समभिव्याहाराभावेन वाक्यस्य विनियोजकप्रमाणस्यानुन्मेषात् । प्रयाजादिवाक्ये तु प्रकरणादेव क्रतुसम्बन्धलाभेन क्रतूपस्थापनाय पृथग्लक्षणानपेक्षतया तत्र स्तावकतोपगता । अतोऽत्र लक्षणाद्वयपरिहाराय सन्नन्तविपरिणामादिना फलपरतामुपेत्य स्वातन्त्र्यमेवोपासनानामुपगन्तुं न्याय्यम् । पर्णादौ तु फलपरत्वेऽपि आश्रयसिद्ध्ये अवश्यं जुह्वादिपदैः क्रतुरुपस्थापनीयः, फलाश्रयसम्बन्धपरत्वेन वाक्यभेदश्चेति महत् गौरवम् । अतस्तत्र स्तावकतैव 'न स पापं श्लोकं शृणोती'त्या-

देः । तथा हि—'गुणवाद आपद्येत 'फलोपदेशो तु मुख्यवादोपपत्ति'रिति भाष्यमप्युक्तस्यैव वैषम्यस्योपलक्षकम् । अन्यथा फलपरत्वेऽपि सन्नर्थान्तर्भावादेरावश्यकतया मुख्यवादत्वासम्भवात् । अपि च एवंसत्यु'द्गीथमुपासीत' इत्यादावुद्गीथपदमपि दृष्टार्थं सम्पद्यते । यागादौ सोमादेरिव उपासनासु प्रत्ययरूपासु विषयस्यापेक्षितत्वेन तत्समर्पकत्वात् । कर्माङ्गोपासनाविधिपक्षे हि 'व्रीहीन् प्रोक्षती'त्यादाविवादृष्टरूपसंस्काराधारपरमेव स्यात् । उपासनाभिरुद्गीथादिपूत्पत्त्याप्तिविकाराणामसम्भवात् । तत् सिद्धं कर्माङ्गावबद्धानामुपासनानां स्वातन्त्र्येण फलार्थत्वात् कर्मस्वनियतत्वम् । ततश्च 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'त्यादिकमपि न्यायप्राप्तविकल्पानुवादकतया कर्माङ्गावबद्धसर्वोपासनापरमेव, न त्वाप्त्यादिदृष्टिमात्रपरम् । अनुवादस्य पुरोवादानुसारित्वात् । एवं विकल्पिततयानूदितानामुपासनानां प्रातिस्विकतत्तद्वाक्यावगतफलातिरिक्तसाधारणफलसमर्पकं 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति । वीर्यशब्दो हि लोके फलोपयोगिबलवाचकतया प्रसिद्धः, न तु फलवाचक एव । प्रकृते च तरप्प्रत्यय उपात्तः । तस्य बलस्यातिशयः विरोधिना कर्मान्तरेण फलप्रतिबन्धे प्रसक्ते तदभिभावकत्वमेव । अन्यस्यातिशयस्य प्रकृतानुपयोगित्वात् । तदिदमुक्तं पृथग्ध्यप्रतिबन्धः फलमिति । एवंसति प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनदर्शनं स्वतः फलार्थतया प्राप्तस्य विकल्पस्यैव द्योतकं, न त्वङ्गस्यैव सतो विकल्पसूचकम् । विद्ययेति तृतीयापि कर्मफलप्रतिबन्धाभिभावकतया कर्मोपकारतामात्राभिप्राया । 'यदेव विद्यये'ति वाक्ये श्रद्धापदं भक्तिपरम्, उपनिषत्पदं तत्तदुपासनागतरहस्यनामपरम् ॥४२॥

इति तन्निर्धारणानियमाधिकरणम् ॥ २७ ॥

## प्रदानवदेव तदुक्तम् ॥४३॥

वाजसनेयके 'अथातो व्रतमीमांसे'त्युपक्रमः । व्रतं तत्तदसाधारणो व्यापारः । तस्य मीमांसा श्रमरूपेण मृत्युना कस्य व्यापारो नष्टः, कस्य नेति । तदनन्तरं च प्रजापतिसृष्टानीन्द्रियाणि अनुक्रम्य 'वदिष्याम्येवाहमिति वाक् दध्रे द्रक्ष्याम्यहमिति चक्षु'रित्यादिना तैस्तैरिन्द्रियैरश्रान्ततयैव स्वस्वव्यापारं करिष्याम इति प्रतिज्ञायां धृतायां तेषां व्यापारः श्रमरूपेण मृत्युना ग्रस्तः, प्राणस्य तु व्यापारो न मृत्युना ग्रस्त इति प्रतिपाद्य 'इत्यध्यात्ममि'त्यवान्तरोपसंहारं कृत्वा 'अथाधिदैवतमि'ति मध्य उपक्रम्य वागाद्यभिमानिनीभिरग्न्यादिदेवताभिरश्रमेणैव स्वस्वव्यापारान् करिष्याम इति प्रतिज्ञायां धृतायां वागादिवदेव तद्देवतानां व्यापारा उपरताः । प्राणदेवताया वायोस्तु 'सैषानस्तमिता देवता यद्वायुरि'त्यनुपरतत्वं प्रतिपाद्य

'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छती'ति तस्मिन्नेव वायौ श्लोकमुपन्यस्य प्राणाद्वा एष उदेति प्राणेऽस्तमेतीति तद्व्याख्यानव्याजेन वायुप्राणयोरभेदोऽपि दर्शितः । तदनन्तरं चोपसंहृतं—'तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्चे'ति । अत्रोपक्रमोपसंहारयोर्व्रतविषयतयैकरूपत्वादेकोपासनाविधिपरमेतद्वाक्यम् । तत्फलं चाध्यात्मप्रपञ्चके 'तेन हवा व तत् कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद य उहैवंविदा स्पर्धते अनुशिष्य हैवान्ततो म्रियत' इति यत् कुलश्रेष्ठत्वं शत्रुमरणञ्चाम्नातं, यच्चान्ते 'तेनो ये तस्यै देवतायै सायुज्यं सलोकतां जयती'ति चाम्नातं, तत्सर्वमपि रात्रिसत्रन्यायेन विवक्षितमितीमां प्राणश्रैष्ठ्यविद्यां सङ्गृह्णाति—**वाजसनेयक इत्यादिना** । छान्दोग्ये तु 'वायुर्वाव संवर्ग' इति वायोः प्रलयाश्रयत्वमुपक्षिप्य अग्निसूर्यचन्द्राम्भांसि तत्र लीयमानानि प्रतिपाद्य इत्यधिदैवतमित्यवान्तरे उपसंहृत्य अथाध्यात्मं प्राणो वाव संवर्ग इति प्राणं लयाधिकरणमुपक्षिप्य स्वापकाले वाक्चक्षुश्श्रोत्रमनांसि प्राणे लीयन्त इति प्रतिपाद्य तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेष्वि'ति चोक्त्वा 'महात्मनश्चतुरो देव एकः कस्सोजगार भुवनस्य गोपा' इति वायुप्राणयोरेकत्वं प्रदर्शितम् । वागादीनग्न्यादींश्च प्रत्येकं चतुर उक्तान्य एको वायुप्राणपदप्रतिपाद्यो जगारेति हि तदर्थः । तदनन्तरं च 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत् कृत'मित्यग्न्यादीनां चतुर्णां वागादीनां चतुर्णां वायुप्राणसहितानां दशत्वं निरूप्य सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवंवेदे'त्युपसंहृतम् । अत्राप्येकमेवाधिदैवताध्यात्मविषयमुपासनं विवक्षितम् । 'य एवंवेदे'त्येकस्यैव विधेरन्ते श्रवणात् । तामिमां संवर्गविद्यां संगृह्णाति—**तथा छान्दोग्य इत्यादिना । पृथगेवेमाविति** । अयमर्थः—यद्यपि प्राणश्रैष्ठ्यविद्यैका, तथापि इन्द्रियेषु प्राणश्श्रेष्ठः, अग्न्यादिषु वायुश्श्रेष्ठः, इत्यादिरूपेण वायुप्राणौ व्यवस्थिततया ध्येयौ, उतेन्द्रियाणामग्न्यादीनां च मध्ये वायुप्राणपदप्रतिपाद्या देवता श्रेष्ठेत्यादिरूपेण युगपदेवानुचिन्तनं, तथा संवर्गविद्यापि यद्यप्येका, तथाप्यग्न्यादीनां वायुस्संवर्गः, वागादीनां प्राणस्संवर्ग इत्यादिव्यवस्थिततयानुचिन्तनम्, उत वागादीनामग्न्यादीनां च सर्वेषां वायुप्राणपदप्रतिपाद्या देवता संवर्ग इत्यादिरूपेण युगपदेवानुचिन्तनमिति । पूर्वत्र कर्माङ्गावबद्धानामुपासनानां कर्मणां च नित्यानित्यरूपेण प्रयोगभेद उक्तः । इह तु वायुप्राणप्रतिपाद्याया देवताया एकत्वात् एक एव प्रयोग इति प्रत्यवस्थानात् सङ्गतिः । ननु, वायुप्राणयोस्तत्त्वाभेदेऽपि 'न वायुक्रिये पृथगुपदेशा'दित्यधिकरणे अवान्तरवैलक्षण्यमुक्तम् । अतोऽत्राध्यात्माधिदैवतविभागेन व्यवस्थिततया वायुप्राणयोः संवर्गत्वस्य श्रैष्ठ्यस्य च प्रतिपादनात् पृथगुपगमनमेव स्यादित्याशङ्क्याह—**दर्शयति च श्रुतिरित्यादि** । अयं भावः—यद्यपि वा-

युप्राणयोरवान्तरभेदोऽस्ति, तथापि नेह वायुप्राणपदार्थः प्राणनादिवृत्तिको बाह्यश्च वायुः, अपि तु तदभिमानिनी हिरण्यगर्भरूपा देवतैव । वाजसनेयके 'सैषानस्तमिता देवता यद्वायु'रिति देवतात्वस्य विवक्षितत्वात् प्राणपदेनापि 'प्राणाद्वा एष उदेती' ति वाक्यभेदावगमेन देवताया एव विवक्षितत्वात् छान्दोग्येऽपि 'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स' इत्युपक्रमानसारेण देवताविवक्षावगमात् । तथा च छान्दोग्यवाजसनेयकयोः संवर्गविद्यायां श्रैष्ठ्यविद्यायां च वायुप्राणपदाभ्यां तदभिमानिनी देवतैवोपास्यतया विवक्षिता । सा चैकैवेति आध्यात्मिकाधिदैवतोपाधिभेदेऽपि देवतैकेत्यत्र प्रमाणोपन्यासः—**'अग्निर्वाग्भूत्वेत्यादिना**। 'तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः अथैतस्य मनसो द्यौश्शरीरं ज्योतीरूपमयमादित्यः अथैतस्य प्राणस्यापश्शरीरं ज्योतीरूपमयश्चन्द्र' इति वाङ्मनःप्राणगोलकानां पृथिवीद्याद्भिः तद्गतेन्द्रियांशानाञ्चाग्निसूर्यचन्द्रैरुपासनार्थमभेदं निरूप्य 'त एते सर्व एव समा' इत्याम्नातम् । न ह्यत्र वागादीनां स्वरूपतः साम्यमुपपद्यते, अपि तु वागाद्यधिष्ठातृदेवतांशमादायाग्नौ वाचि पृथिव्याञ्चैकैव देवता । 'तद्यावत्येव वाक् तावती पृथिवी तावानयमग्नि'रित्याम्नानात्। एवंमनःप्राणयोरपि द्रष्टव्यम् । 'यतश्चोदेति सूर्य'इत्यत्र विद्यमानस्य यत्पदस्य 'तं देवाश्चक्रिरे धर्ममि'ति तत्पदेन सम्बन्धः। 'तस्मादेकमेव व्रतं चरे'दित्यत्र वायुप्राणपदप्रतिपाद्यगोचरमुपासनं सकृदेव कुर्यादित्यर्थः पूर्वपक्षे विवक्षितः । **एकमेव संवर्गं गमयतीति**। यद्यपि 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेष्वि'ति वायुप्राणयोर्भेदोऽपि दर्शितः, तथाप्यौपाधिकस्य विद्यमानस्य भेदस्य स्वरूपकथनमात्रं, न तु तथैवोपास्यता विवक्षिता । 'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स' इति उपास्यैकत्वावगमात्। एवं वाजसनेयकेऽपि 'स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुरि'त्युपमानोपमेयभावेन भेदसूचनमपि नोपास्यत्वाभिप्रायेणेति द्रष्टव्यम्। **पृथगेव वायुप्राणावुपगन्तव्याविति** । अयमत्र सिद्धान्ताभिप्रायः—यद्यप्यध्यात्ममधिदैवं च प्राणदेवतैकैव, तथाप्यध्यात्माधिदैवाधिष्ठानभेदोपाधिकस्तस्य भेदोऽप्यस्ति । एवं च इत्यध्यात्मम, इत्यधिदैवतमित्यादि व्यवस्थितनिर्देशानुसारेण वागादिसम्बन्धित्वेनाध्यात्मप्राणोपाधिकमेव रूपं विवक्षितम् । अग्न्यादिसम्बन्धित्वेनाधिदैविकवायूपाधिकमेव रूपं विवक्षितम् । तथा च यथा सत्यविद्यायामहरहन्नाम्नोऽव्यैवस्थयैवादित्यचक्षुरुपाधिकरूपविशिष्टतयैवानुचिन्तनम्, एवमत्रापि वागादिनिरूपितं श्रैष्ठ्यं संवर्गत्वं च प्राणोपाधिकरूपेऽनुचिन्तनीयम्। अग्न्यादिनिरूपितं श्रैष्ठ्यं संवर्गत्वं च वायूपाधिके रूपेऽनुचिन्तनीयमिति एकस्या एव देवतायाः उपाधिभेदेन द्विरनुचिन्तनं सिद्धं भवतीति। **एतेन व्रतोपन्यासो**

**व्याख्यात इति**। एकमेव व्रतमित्यत्रापृथगेवानुचिन्तनं कर्तव्यमिति न विवक्षितम्। व्रतशब्दो हि प्राणस्य वायोश्चासाधारणव्यापारं वक्ति। उपक्रमे 'अथातो व्रतमीमांसे'ति व्यापाराभिप्रायेणैव व्रतशब्दप्रयोगात्। चरेदिति च तस्योपासनं विवक्षितम्। एकमेवेत्यनेन तु आधिदैविकव्रतेषु वायुव्रतस्यैवाभग्नत्वात्तदेवैकमुपास्यम्, नाग्न्यादिव्रतं, एवमाध्यात्मिकव्रतेषु प्राणव्रतस्यैवाभग्नतया तदेवैकमुपास्यमिति विवक्षितम्। तदुपासनाप्रकारमाह—**प्राण्याच्चैवापान्याच्चेति**। वागादिव्यापारेषु प्राणनापाननरूपतोपास्येति यावत्। चकारोऽग्न्यादिव्यापारेषु वायुव्यापारतादृष्टिविधानार्थः। 'एकमेव व्रतञ्चरे'दित्यस्यापृथगनुचिन्तनपरता पूर्वपक्ष्यभिमता वक्तुं न शक्यते। पृथगनुचिन्तनस्यैवाध्यात्मिकाधिदैविकविभागनिर्देशतः प्राप्तत्वादिति स्थिते तर्हि 'प्राण्याच्चैवापान्याच्चे'तिवाक्यशेषानुसारेण वायुव्रतोपासनानिवृत्त्यर्थमस्त्विति यदि कश्चिद्वदेत्, तं प्रत्याह—**न वायुव्रतनिवृत्त्यर्थ इति**। ननु, 'तेनो एतस्यै देवतायै सायुज्यं सलोकतामि'ति प्राणसायुज्यसालोक्ये एव निर्दिश्येते। नेत्याह—**देवता ह्यत्रेति**। आध्यात्मिकप्राणसालोक्यं हि प्राणिमात्रस्य सिद्धम्। प्राणसायुज्यमपि प्राणेऽहमभिमान एव। अन्यस्यासम्भवात्। सोऽपि प्राणिमात्रस्य शरीरान्तर्गते तस्मिन्नित्यसिद्ध एवेति देवतापदं वायुदेवताभिप्रायम्। अपरिच्छिन्नात्मभावो वायुदेवतासायुज्यं समानभोगरूपम्। नन्वस्तु देवतापरिच्छिन्नात्मभावप्राप्तिरेव फलम्। उपासनं तु प्राणोपाध्यन्तर्भावेनैव, न वायूपाध्यन्तर्भावेनेत्यत आह—**पुरस्तात्प्रयोगाच्चेति**। तथा चोपक्रमानुसारेण वायोरप्युपास्यतावगमान्न वायुपरित्यागो युक्त इति भावः। **सङ्कर्षे काण्डे इति**। द्वादशलक्षण्यनुक्तनानाविषयन्यायविचारात्मको जैमिनिकृतो द्वादशलक्षणीपरिशिष्टः काण्डः सङ्कर्षकाण्ड इत्युच्यते। 'तत्रेन्द्राय राज्ञे पुरोडाशमेकादशकपालन्निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञ' इति विहितायामिष्टौ पुरोडाशत्रयस्य वेद्यामभिश्रयणे कृते किं त्रिभ्यः पुरोडाशेभ्यो मध्यात् पूर्वार्धात् पृथक्पृथगवदानं ग्राह्यम्, उत पुरोडाशत्रयादपि युगपदेवावदानं मध्यात्पूर्वार्धात् कर्तव्यमिति सन्देहे 'तेषां पृथक्कृतानां त्रिरवदानं यथान्येषां हविः पृथक्त्वादि'ति सूत्रेण यथाग्नेयाग्नीषोमीयादीनां पृथगेवावदानम्, एवमत्रापि पृथङ् निष्पादितानां पुरोडाशानां पृथगेवावदानं कार्यमिति पूर्वपक्षं कृत्वा 'वचनात्सर्वेषां सहावदीयेते'ति सूत्रेण 'सर्वेषामभिगमयन्नवद्यत्यछंवट्कार'मिति वचनात् सर्वेषामिन्द्रादीनां पुरोडाशान् अभिगमयन् प्रापयन् युगपदेवावद्यति, न तु पर्यायेण अछंवट्कारमव्यर्थतायै। पर्यायेणावदाने कृते हि यस्यावदानं प्राक् कृतं, तदतिरिक्तस्य हविषश्शिष्टतया देवतार्हत्वाभावेन व्यर्थता भवेदित्यर्थकात् पुरोडाशत्रयस्यापि युगपदेवावदानं कार्यम्। वचनस्यातिभाराभावात्। न चाशक्यता। अनलकप्रवे·

शाद्युपाग्नेन मध्यात् पूर्वार्धात् त्रयाणामपि युगपत् अवदानसम्भवादिति सिद्धान्तिते युगपदवत्तानां पुरोडाशानां प्रदानं युगपद्वा, क्रमेण वेति सन्देहे 'तेषामपृथक् प्रदानमवदानैकत्वादि' तिसूत्रेण युगपदवत्तानां युगपदेव प्रदानमिति पूर्वपक्षं कृत्वा 'नाना वा देवता पृथक्त्वविज्ञानादि'ति सूत्रेण यद्यपि सर्वेषु पुरोडाशेष्विन्द्रो देवता, तथापि तस्य राजादिगुणयोगेन भेदे सति देवतापृथक्त्वात्तत्तद्गुणकेन्द्रोद्देशेन पृथगेव प्रदानं कार्यमिति सिद्धान्तितम् । पुनश्च 'अन्यार्थप्रदर्शनाच्चे'ति सैद्धान्तिकगुणसूत्रेण प्राच्यां दिशि 'त्वमिन्द्रोऽसि राजे'त्याद्यस्तिस्रः ऋचः प्रकृतायां त्रैधातवीयायामिष्टौ याज्यानुवाक्यरूपतया समाम्नायन्ते । तत्र च प्रथमामनूच्य मध्यमया यजेत् मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेत् । एवं सर्वा अनुवाक्यास्सर्वा याज्या भवन्तीति याज्यानुवाक्ययोर्व्यत्यस्याम्नानमन्यार्थदर्शनरूपलिङ्गतयोदाहृतम् । न हि प्रदानैकत्वे तिसृणामृचां व्यत्यासेन याज्यानुवाक्याभावस्सम्भवतीति ॥४३॥

इति प्रदानाधिकरणम् ॥२८॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥४४॥

पूर्वस्मिन्नधिकरणे एकस्या अपि विद्याया आध्यात्मिकाधिदैविकभेदेन प्रयोगभेद उक्तः । मनश्चिदादीनां तु कर्माश्रिततया कर्मणस्सकाशात् प्रयोगभेदो नोपपद्यत इति शङ्क्यते । 'नैव वा इदमग्रे सदासी'दि'त्यादिकं हि ब्राह्मणमग्निचयनप्रकरणम् । तत्र सांपादिकचयनप्रतिपादकानि वाक्यानि 'तत षट्त्रिंशतं सहस्राणी' त्यादीनि । तत्प्रकृतं मनः, मनोमयान् मनोविकारभूतान् अग्नीन् । अत्र मनोवृत्तिसमुदाये एकैकाहोरात्रावच्छिन्ने इष्टकचिताग्निदृष्टिर्विवक्षिता । पुरुषायुषस्य च शतसंवत्सरपरिमितस्य षट्त्रिंशतं सहस्राणि दिनानि भवन्ति । तथा च तावता कालेन तावन्तोऽग्नयस्सिद्धा भवन्ति । आत्मनो मनस्सम्बन्धिनः प्रत्यगात्मरूपानित्यन्ये । तेषु प्रत्यगभेदोऽनुसन्धेय इति यावत् । अर्कान् अर्चनीयान् मनसा चीयन्तेति मनश्चितः ध्यानमात्रसंपाद्यं हि तेषां चयनं मनोवृत्तिसंघाते अग्निदृष्टि विधायितरेन्द्रियवृत्तिष्वग्निदृष्टिविधानार्थानि वाक्यानि । प्राणपदमिन्द्रियाधिकारात् घ्राणोपस्थापकम् । वागिन्द्रियव्यतिरिक्तकर्मेन्द्रियपरं कर्मचित इति । अग्निचितः जाठराग्निचितः । **क्रियानुप्रवेशिन इति** । प्रसिद्धो ह्यग्निः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'त्यादिवचनानुसारेण ज्योतिष्टोमादिकर्माङ्गभूतः । एवमेतेऽपि साम्पादिका अग्नयः क्रियानुप्रवेशिनः, उत तदप्रविष्टा एव । ननु, 'मनसैवाधीयन्त मनसाचीयन्त मनसा ग्रहा अगृह्यन्त मनसा अस्तुवन् मनसा अशंसन् यत्किञ्चिद्यज्ञे कर्म क्रियते यत्किञ्च याज्ञीयं मनसैव

तेषु मनोमयेषु मनश्चित्सु मनोमयं क्रियत' इतिवाक्यकल्पिते मनोयज्ञे मनश्चिदादीनां निवेश उपेयत एव । अस्मिन्सिद्धान्तेऽपि कथमेषां स्वातन्त्र्यमित्याशङ्क्य सिद्धान्तकोटिं स्वयमेव व्याचष्टे—**केवलविद्यात्मका इतीति** । प्रसिद्धज्योतिष्टोमाननुप्रवेश एव स्वातन्त्र्यमिति भावः । **प्रकरणादिति** । यद्यपि नासदित्यादिकं ब्राह्मणं न ज्योतिष्टोमादिकर्मप्रकरणम्, अपि तु तदङ्गभूताग्निप्रकरणमेव, तथाप्यङ्गद्वारा ज्योतिष्टोमादिस्तत्रोपस्थित इति सन्निधानमेव प्रकरणपदेन विवक्षितम् । 'तद्यत्किञ्चेमानि भूतानी'त्यादिवाक्यपर्यालोचनया हि मनश्चिदादीनां सातत्यमुपलभ्यते । इदं कर्माङ्गत्वे नोपपद्यते । तथासति कर्मप्रयोगकालमात्रभाविता तेषां वक्तव्या स्यात् । अतो न कर्माङ्गत्वमिति सिद्धान्तयति—**भूयांसि हि लिङ्गानीति** ॥४४॥

# पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥४५॥

**तद्विषय एवायं विकल्प इति** । नन्विष्टकचिताग्नीनां मनश्चिदादीनां विकल्प इति कथमुच्यते, एकार्थत्वाभावात् । इष्टकचितस्याग्नेर्हि आहवनीयधारणं कार्यम् । नैतन्मानसैर्मनश्चिदादिभिर्निर्वर्तयितुं शक्यते इति चेत्, उच्यते । यथा इष्टकचितोऽग्निः कर्मप्रविष्टः, एवं मनश्चिदादयोऽपि कर्मप्रविष्टा इत्येतावदेव विकल्पपदेन सादृश्यपरेण विवक्षितम् । 'अन्यत्वभागिप्रतिषेधादि'ति सूत्रे 'पशुकामश्चिन्वीते'तिवचनानुसारेण चयनस्य क्रत्वाश्रयस्य पशुफलार्थत्वं तन्त्रवार्तिककृताभ्युपगतमिति अग्नेरदृष्टार्थतया मनश्चिदादीनामपि पशुफलेन चयनेन सह विकल्प उपपद्यत इति वदन्ति । मनश्चिदादीनां पश्वर्थता तु 'अतिदेशाच्चे'ति सूत्रे स्पष्टा भविष्यति । **अन्यार्थदर्शनं ह्येतदिति** । लिङ्गं द्विविधम्—अन्यार्थदर्शनरूपं, सामर्थ्यरूपं चेति । सामर्थ्यं च द्विप्रकारं—शब्दगतमर्थगतञ्चेति । आद्यं 'बर्हिर्देवसदनं दामी'त्यादिमन्त्राणां स्वप्रकाश्येऽर्थे विनियोजकम् । द्वितीयं तु 'स्रुवेणावद्यति स्वधितिनावद्यती'त्यादौ स्रुवस्वधित्यादिगतं द्रवद्रव्यावदानमांसादिखण्डनोपयुक्तम् । तत्तद्योग्यार्थविनियोजकं सामर्थ्यरूपं लिङ्गमेव च श्रुतिलिङ्गसूत्रे प्रकरणात् बलीयस्त्वेन निबद्धम् । अन्यार्थदर्शनं साहचर्येण सम्बन्धेन कस्यचिदर्थस्य ज्ञापकम् । यथेदमेव मनश्चिदादीनां सातत्यदर्शनम् । तच्च सत्येव मूलभूते प्रमाणान्तरे एतत्सहकारि भवति, न तु स्वयमेव कस्यचिदर्थस्य निश्चयमादधाति । अर्थवादगतसातत्यदर्शनस्य मनश्चिदादिस्तावकत्वेनाप्युपपद्यमानस्य कर्मप्रवेशविरोधित्वाभावादिति तदर्थः । क्रियानुप्रवेशोऽप्यन्यार्थदर्शनरूपं लिङ्गमस्तीति प्रतिपादनाय मानसवदिति सूत्रांशः । तं व्याचष्ट—**यथा दशरात्रस्येति** । द्वादशाहे प्रथमं प्रायणीयातिरात्रः, ततः पृष्ठ्यः षडहः, ततश्छन्दोमचतुष्टयं,

तत उदयनीयातिरात्र इति द्वादशाहानि । तत्र च प्रायणीयोदयनीये प्रथमोत्तमे अहनी वर्जयित्वा मध्यगतानां दशानामह्नां दशरात्र इत्यपि पृथक् समाख्या । तदभिप्रायेण दशरात्रस्य दशमेऽहनीत्युक्तम् । तच्च विस्पष्टवाक्यरहिततया अविवाक्यम् । 'पृथिव्या पात्रेणे'त्यादिना पृथिव्यादिषु पात्रदृष्टिर्विवक्षिता । तथा च मानसस्य ग्रहस्य क्रियाप्रकरणाम्नानात् यथा क्रियाङ्गत्वम्, एवं मनश्चिदादीनामपि क्रियाप्रकरणान्तर्गतत्वे सति मानसत्वाविशेषात् क्रियाङ्गत्वमेव भविष्यति ॥४५॥

## अतिदेशाच्च ॥४६॥

'तेषामेकैक एव तावान्यावानसौ पूर्व' इत्यत्रायमर्थो विवक्षितः—पूर्व इष्टकचितोऽग्निः यावान् यावन्माहात्म्यविशिष्टः, मनश्चिदादिष्वेकैक एव तावान् तावन्माहात्म्यविशिष्टः पूर्वोऽग्निः क्रियामाश्रित्य यत्फलं साधयति, मनश्चिदादिरपि तत्फलं क्रियामाश्रित्य साधयतीति यावत् । तथा च मनश्चिदादीनामपि ज्योतिष्टोमादिक्रियामाश्रित्य पशुफलसाधकत्वावगमात् प्रसिद्धाग्निनास्य विकल्पो भविष्यति । प्रसिद्धाग्न्यभावेऽपि आहवनीयधारणं तूत्तरवेद्यैव भविष्यतीति ॥४६॥

## विद्यैव तु निर्धारणात् ॥४७॥

'ते हैते विद्याचित एवे'त्यत्रैवकारस्यायोगव्यावर्तकता प्रतीयत इत्यन्ययोगव्यावृत्तिपरतासिद्ध्यर्थं श्रुत्यैवेदं वाक्यं व्याख्यायते— 'विद्यया हैवेत एवंविदश्चिता भवन्ती'ति । अत्र च मानसानाञ्चयनस्वरूपमात्रस्य बाह्यसाधनानपेक्षतयार्थादेवान्यव्यावृत्तिलाभे पुनस्तत्प्रतिपादनं फलं साधयितुं प्रसक्तस्य क्रियाप्रवेशस्य व्यावृत्त्यर्थमिति स्वातन्त्र्यमवधारणसामर्थ्याल्लभ्यत इति भावः ॥४७॥

## दर्शनाच्च ॥४८॥

यद्यपि 'तत् यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ती'त्यन्यार्थदर्शनरूपं लिङ्गं न कस्यचिदर्थस्य स्वत एव साधकमिति प्रागुक्तं, तथाप्यवधारणश्रुत्युपोद्बलितं स्वातन्त्र्यसाधकं भवत्येवेति भावः ॥४८॥

**ननु, लिङ्गमप्यसत्यामन्यस्यां प्राप्ताविति** । यद्यप्यवधारणश्रुतिरूपं प्रकृतेऽन्यत् प्रापकं स्वातन्त्र्यस्यास्ति, तथापि प्रकारान्तरेणैतां शङ्कां निवर्तयितुमनयैव शङ्कया सूत्रमवतारयति—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥४९॥

प्रकृतायाश्शङ्कायाः परिहारं 'न चेदर्थवादगमात्' मित्यादिना वक्ष्यति । प्रथमतो लिङ्गभूयस्त्वादिति सूत्रे सङ्ग्रहेणोक्तानि श्रुत्यादीनि विस्पष्टतयेह प्रदर्शय-

ति—श्रुतिस्ताचदित्यादिना । 'विद्यया हैवैत' इति वाक्यं पुरुषसम्बन्धं बोधयत् स्वातन्त्र्यं दर्शयति । **सातत्यदर्शनमेतेषां स्वातन्त्र्येऽवकल्पत इति** । ननु, यथा क्रियाङ्गत्वपक्षे क्रियाकालमात्रवर्तिनां मनश्चिदादीनां सातत्यदर्शनं नोपपद्यते, तथा सिद्धान्तेऽपि 'मनसैव ग्रहा गृह्यन्ते'त्यादिवाक्यसिद्धमानसक्रतुप्रवेशस्य मनश्चिदादिषु स्वीकर्तव्यतया मानसक्रतुकालवर्तिनां मनश्चिदादीनां सातत्यदर्शनमनुपपन्नमेव । यदि तत्र्न्यकालकर्तृकाणामपि मनोवृत्तीनां सर्वा एता मदीयक्रतूपयुक्तचयनरूपा इति ध्यानं मानसक्रतुकालं सम्भवतीति नानुपपत्तिः, तथासति क्रियामयक्रतुकालेऽपि तथाध्यानस्य कर्तुं शक्यतया न सातत्यदर्शनानुपपत्तिरिति चेत्, सत्यमेतत् । तथाप्यवधारणानुसारेण स्वातन्त्र्यावगमात् सातत्यदर्शनमपि तदनुगुणमेव व्याख्येयमिति तात्पर्यम् । 'वाचं तदा प्राण' इत्यत्र वाक्प्राणयोः परस्परमाहुतित्वमाहुत्याधारत्वं च ध्येयमिति विवक्षितम् ॥४९॥

# अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥

यदि हि मनश्चिदादीनां क्रियामयक्रतुप्रवेशस्स्यात्, तथासति तत्सन्निधौ मानसक्रत्वङ्गसमाम्नानबललभ्यमानसक्रत्वनुबन्धो निरर्थक एव स्यात् । प्रसिद्धक्रियाननुप्रवेशाभ्युपगमे प्रसिद्धस्याग्नेः क्रियानुप्रवेशदर्शनात् मानसानां मनश्चिदादीनामग्नीनामनुबन्धी कीदृग्विधः क्रतुरित्यपेक्षायां तत्सदृशो मानसः क्रतुरिति तदाम्नानमुपपद्यते । 'मनसैवाधीयन्ते'ति मनश्चिदादिष्वाहवनीयो मनसैवाहित इत्यर्थः । चित्याग्नेराधानाभावेन यथाश्रुतानुपपत्तेः । अत्र मनोवृत्तिषु चयनदृष्टिः प्रतीकन्यायेन अवगन्तव्या । तत्र क्रत्वनुबन्ध्याहवनीयाधानादिकं तु मानोरथिकपदार्थन्यायेन द्रष्टव्यम् । यत्किञ्चिद्यज्ञे कर्म क्रियत आरादुपकारकं, यत्किञ्चिद्यज्ञीयं कर्म क्रियते सान्निपत्योपकारकम् । **अग्नित्वसामान्येनेति** । उपलक्षणमेतत् पश्वर्थत्वस्यापि । 'तेषामेकैक एव तावान्यावानसौ पूर्व' इत्यत्र हि पूर्वोऽग्निर्यावत्पशुफलं साधयति, मनश्चिदादिष्वेकैकोऽपि तावत्फलं साधयतीत्यर्थो विवक्षितः । न चैतावता प्रसिद्धक्रियानुप्रवेशोऽपि सादृश्यकोटौ निक्षेप्तव्यः, येन पूर्वेण सहायं विकल्पितस्स्यात् ! निर्धारणादिभिः स्वातन्त्र्यावगमेन अग्नित्वपशुसम्पादकत्वमात्रेणैवातिदेशचारितार्थ्यात् । **दृष्टश्च अवेष्टेः राजसूयप्रकरणपठितायाः इत्यादि** । नन्वत्र राजसूयादुत्कर्षमवेष्टेरुपक्षिप्य तत्प्रतिपादकतया 'क्रत्वर्थायामिति चेदि'त्याद्येकादशाध्यायगतं सूत्रमुदाहृतं, तन्नोपपद्यते । न हि तस्मिन्नधिकरणे अवेष्टेरुत्कर्षो राजसूयाद्व्यवस्थाप्यते, किन्त्वा'ग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्ह-

स्पत्यं चरुं शितिपृष्ठो दक्षिणे' त्यादिना समाम्नाताया अवेष्टेः ऐकतन्त्र्यम्, उत पृथक्तन्त्रतेति सन्देहे यदि 'ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिमभिघारयेत्, यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेव'मित्यादिना मध्यनिधानादिपर्यालोचनया पुरोडाशानां साहित्यावगमात् 'एतयान्नाद्यकामं याजये'दिति चैकवचनेन प्रयोगैक्यावगमात् आरादुपकारकाणामैकतन्त्र्यमेवेति पूर्वपक्षं कृत्वा प्रतियागं दक्षिणाभेदावगमेन तत्तद्दक्षिणानकर्तृभेदावगमात् कर्तृभेदे चैकतन्त्र्यानुपपत्तिः, प्रयोगपृथक्त्वात्, मध्यनिधानादिकं तु लिङ्गं राजसूयक्रतुबहिर्भूतायामेव। अवेष्टेर्हि उत्पन्नाया 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति सर्वयागसाधारणफलप्रतिपादकवाक्येन राजसूयान्तर्गततया 'एतयान्नाद्यकामं याजयेदि'ति तावन्मात्रफलप्रतिपादकेन वाक्येन राजसूयबहिर्भावोऽप्यस्तीति सिद्धान्तं प्रदर्श्य तदनन्तरं च यदि मध्यनिधानादिलिङ्गानुसारेण बहिर्भूताया ऐकतन्त्र्यं स्वीक्रियते, तर्हि तदनुसारेण राजसूयान्तर्भूताया अप्यैकन्तन्त्र्यं किं न स्यादितिशङ्कामुद्भाव्य तत्परिहारप्रदर्शनार्थमिदं गुणसूत्रं–'क्रत्वर्थाया'मित्यादि । मध्यनिधानादिकं 'यदि ब्राह्मण' इत्यादिवाक्येन वर्णत्रयकर्तृकावेष्टिप्रयोगेऽवगम्यते । राजसूयान्तर्भूतप्रयोगस्तु 'राजा स्वाराज्यकाम' इति वचनानुसारेण क्षत्रियकर्तृकः । राजपदस्य क्षत्रियजातिवचनत्वात् । अतो न क्रत्वन्तर्भूताया ऐकतन्त्र्यम् । ननु, यदि दक्षिणाभेदाम्नानेन भिन्नतन्त्रता क्रत्वन्तर्गतायाः, तर्हि बहिर्भूतायामुत्पत्तिवाक्यानुसारेण दक्षिणाभेदस्यावश्यकतया तत्रापि पृथक्तन्त्रता स्यात् । यदि तु मध्यनिधानादिलिङ्गाद्यनुसारेण प्रयोगैक्येन कर्त्रैक्ये सिद्धे 'हिरण्यं दक्षिणे'त्यादिषु दक्षिणापदं दक्षिणावयवलक्षकं भविष्यति । अतो न पृथक्तन्त्रता बहिर्भूतायाः, तर्हि क्रत्वन्तर्गतायामपि तथोपपत्तेः न पृथक्तन्त्रता। नह्येक एव दक्षिणाशब्दः क्वचित्प्रयोगैकवाक्यतायामवयवलक्षकः, अन्यत्र तु यथाश्रुत इति वैरूप्यं सम्भवतीति चेन्न। यथा ह्येकस्यैव मन्त्रस्य गौणमुख्यार्थविनियोगप्रमाणवशादर्थभेदो भवति, एवमेकस्यैव दक्षिणापदस्य अन्यान्यवाक्यान्वये तत्तद्वाक्यानुगुण एवार्थो ग्राह्य इति मध्यनिधानादिलिङ्गानुसारेण बहिः प्रयोगवाक्यैकवाक्यतायां लाक्षणिकत्वेऽपि राजसूयवाक्यैकवाक्यतायां लाक्षणिकार्थग्रहणे प्रमाणाभावेन मुख्यार्थत्यागायोगात् । अतो युक्तैव व्यवस्था–बहिर्भूताया ऐकतन्त्र्यं, राजसूयान्तर्गतायास्तु तन्त्रपृथक्त्वमिति । ततश्च कथमस्योत्कर्षप्रतिपादकतेति चेत्, उच्यते––अवेष्टौ वर्णत्रयसंयोगं, राजसूये च तदभावमनुवदतानेन सूत्रेणार्थादुत्कर्षोऽपि ध्वनितो भवतीति भावः । अत एव स्वयमुत्कर्षसाधकतया 'वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्येति' प्रतिपादितम्। तत्र राजयज्ञत्वादित्यनेन क्षत्रियकर्तृकयज्ञत्वादि विवक्षितम्। पूर्वतन्त्रे 'राजा स्वाराज्यकामो

राजसूयेन यजेते'तिवाक्यमुदाहृत्य राजपदस्य क्षत्रियजातिवचनत्वस्य व्यवस्थापितत्वात् । तथाहि—राजपदमार्यैर्म्लेच्छैश्च परिपालनादिकं प्रवृत्तिनिमित्तीकृत्य क्षत्रियादन्यत्रापि प्रयुज्यते । ब्राह्मणादिष्वपि देशपरिपालननिमित्ते सति राजेति व्यवहारस्य सर्वसम्प्रतिपन्नत्वात् । एवं वृक्षराजः पक्षिराज इति श्रैष्ठ्यनिमित्तकोऽपि राजपदव्यवहार उपलभ्यते । अस्ति च तादृशव्यवहारस्य श्रुतिस्मृत्यनुग्रहोऽपि—'राज्यायैव हि तेऽभिषिच्यन्ते तेनैतान् राजेत्याचक्षत' इति । अत्र राज्यपदं राज्ञः कर्म परिपालनं प्रतिपादयति । 'रञ्जनात् खलु राजत्वं प्रजानां पालनादपी'ति च स्मृतिः । अत्र राजपदं परिपालननिमित्तकमिति स्पष्टमवगम्यते । एवं श्रैष्ठ्यवचनोऽपि राजशब्द उपलभ्यते—'सोमोऽस्माकं ब्राह्मणानां राजा, सोमो वा ओषधीनां राजा, राजानौ वा एतौ देवतानां यदग्नीषोमावि'त्यादौ । कात्यायनस्यापि परिपालनार्थकत्वं सम्मतमेव । 'तस्य राजन्यपत्यवदि'ति वार्तिकस्य ह्ययमर्थः—पञ्चालादेर्देशविशेषवाचिनः षष्ठ्यन्तात्पदात् राजनीत्यर्थे विवक्षिते 'जनपदशब्दात् क्षत्रियादञि'त्यादिना ये प्रत्यया अपत्ये विहितास्ते भवन्तीति । पञ्चालानां राजा पाञ्चाल इत्यादि च तदुदाहरणम् । 'राजा चे'ति पाणिनिसूत्रपर्यालोचनया परिपालनादिकमर्थ इत्यवगम्यते । कर्मधारये ब्राह्मणकुमारयोरुत्तरपदयोराजपदमन्यतरस्यां प्रकृतिस्वरं भवतीति तदर्थः । राजब्राह्मण इत्यादि तदुदाहरणम् । अत्र राजपदस्य परिपालनाद्यर्थत्व एव ब्राह्मणपदसामानाधिकरण्यमुपपद्यते । एवं क्षत्रियमात्रेऽप्यान्ध्रादिदेशेषु राजपदं म्लेच्छैः प्रयुज्यते । अस्ति चास्या अपि म्लेच्छप्रसिद्धेः श्रुत्याद्यनुग्रहः । 'राजानमभिषेचयेत् तिष्येण श्रवणेन वे'ति श्रुतिः । अत्र हि राजपदं क्षत्रियपरमेव, न तु परिपालकपरम् । क्षत्रियस्याभिषेकानन्तरं पालकत्वस्य स्मृतिषु विधानेनाभिषेकात् पूर्वं पालकताया असिद्धत्वात् । तथा गौतमस्मृतौ 'द्विजातीनामध्ययनमिज्यादानमि'ति त्रैवर्णिकानां साधारणधर्मोक्त्यनन्तरं ब्राह्मणस्याधिकाः प्रवचनादय इति ब्राह्मणवैशेषिकधर्मोक्त्यनन्तरं क्षत्रियवैशेषिकधर्मकथनप्रस्तावे 'राज्ञोऽधिकं रक्षणं सर्वभूतानामि'त्युक्तम् । अत्र सन्दर्भानुसारेण राजपदं क्षत्रियत्वजात्यभिप्रायेणैव प्रयुक्तम् । एवं राजन्यपदं लोके क्षत्रियापत्य एव प्रसिद्धम् । देशपरिपालकब्राह्मणाद्यपत्ये तदप्रयोगात् । अतस्तस्य 'राजश्वशुराद्यदि'ति सूत्रे यत्प्रत्ययान्ततया व्युत्पादके राजपदं क्षत्रियत्वाभिप्रायेणैव प्रयुक्तम् । एवं राजपदस्य श्रुतिस्मृत्युपष्टब्धार्यम्लेच्छप्रयोगानुसारेण देशपरिपालनकर्तृत्रैवर्णिकादिपरत्वम्, उत क्षत्रियपरत्वमिति सन्देहे यद्यप्यार्यम्लेच्छयोः श्रुतिस्मृतिमूलत्वं समानं, तथापि आर्याणां स्वरूपतो विशेषोऽस्ति । आर्या हि शब्दार्थतत्त्वसंरक्षणमदृष्टोपयोगितया यत्नेन कुर्वन्ति । म्लेच्छा-

स्तु दृष्टव्यवहारस्यापभ्रंशमात्रेणापि सिद्धतया न शब्दार्थतत्त्वसंरक्षणे यतन्ते । अतस्तेषां शब्दार्थविप्लवस्य सम्भवान्न म्लेच्छप्रसिद्ध्यनुसारिराजशब्दार्थो ग्राह्यः, अपि त्वार्यप्रसिद्ध्यनुसारेण । एवं च 'राजसूयेन यजेते'त्यत्र राजपदस्य परिपालनादिनिमित्तेन त्रैवर्णिकपरत्वे सति 'यदि ब्राह्मणो यजेत' 'बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिमभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमि' ति वचनमुपपद्यते । अत्र हि ब्राह्मणादिकर्तृकनिमित्तेन धर्मविशेषोऽभिधीयते । राजपदस्य क्षत्रियपरत्वे तु ब्राह्मणादीनामप्राप्तत्वेन निमित्तत्वानुपपत्तेर्वचनमसङ्गतं स्यादिति पूर्वः पक्षः । सिद्धान्तस्तु—आर्यप्रसिद्धेर्म्लेच्छप्रसिद्धिमपेक्ष्यान्यत्र बलवत्त्वेऽपि नेह प्राबल्यं सम्भवति ! न ह्यत्र म्लेच्छानामपि राजपदतदर्थयोर्विप्लुतिस्सम्भवति । पदस्य तावदार्यम्लेच्छव्यवहारयोस्तुल्यतया न विप्लुतिस्सम्भवति । म्लेच्छा अपि ह्यार्या इव राजेत्येवाविप्लुतं प्रयुञ्जते, न तु गावीपदवद्विप्लुतम् । नाप्यर्थविप्लवस्सम्भवति । स ह्यनादिभूते अर्थान्तरे विद्यमानेऽपि शक्तिभ्रमादर्थान्तरे प्रयोगः । यववराहपदयोः 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति वराहं गावोऽनुधावन्ती'ति वाक्यशेषानुसारेण दीर्घशूकसूकररूपेऽर्थान्तरे विद्यमानेऽपि यथा प्रियङ्गुवायसयोश्शक्तिभ्रमात् प्रयोगः । राजपदं तु यत्र म्लेच्छैः क्षत्रियजातौ प्रयुज्यते, तत्राप्यनादितैव प्रयोगस्य श्रुतिस्मृत्यनुसारादिति न शक्तिभ्रमकृतोऽयं व्यवहारः । ततश्चार्यम्लेच्छप्रसिद्ध्योः प्रकृते तुल्यत्वे सति पालनादिरूपार्थस्य सप्रतियोगिकस्य ग्रहणमपेक्ष्य निष्प्रतियोगिकक्षत्रियत्वजातिग्रहणमेव न्याय्यं राजा स्वाराज्यकाम इत्यत्र । न च 'यदि ब्राह्मण' इत्यादिलिङ्गानुसारेण त्रैवर्णिकप्राप्त्यर्थं पालनार्थकस्यैव राजपदस्य प्रकृते ग्रहणं न्याय्यम् । लाघवानुसारिविधिस्वारस्यानुसारेण क्षत्रियग्रहणे सिद्धे निपातयदिस्वारस्यानुसारेण तत्प्रतिक्षेपासम्भवात् । अपि तु 'यदि रोचते ब्राह्मणो यजेते'ति योजनयास्य वाक्यस्य राजसूयबहिर्भूतप्रयोगान्तरकल्पकतया ब्राह्मणादिप्रापकताया एवाभ्युपगन्तुं युक्तत्वात् । वस्तुतस्त्ववेष्टिसन्निधौ 'एतयान्नाद्यकामं याजये'दित्यधिकारान्तरश्रवणेन तत्र च राजेतिपदाभावेन तस्य त्रैवर्णिकसाधारणतया 'यदि ब्राह्मणो यजेते'ति वाक्यस्य तस्मिन् प्रयोगे यदिपदस्वारस्यमनुरुध्यैव ब्राह्मणादिनिमित्तकमध्यनिधानादिधर्मविशेषविधिपरत्वोपपत्तेः । एवं च यदि पालनादिकं मुख्यैव वृत्त्या राजपदप्रतिपाद्यं, तथापि उक्तगत्या राजसूयवाक्ये क्षत्रियजातिग्रहणमेव सिध्यति । वस्तुतस्तु पालनं शक्यमेव न भवतीति शक्यं वक्तुम् । तथाहि सति श्रैष्ठ्यमपि शक्यमेव भवेत् । न चैतन्न्याय्यम् । क्षत्रियत्वजातिरूपलघुप्रवृत्तिनिमित्तकशक्तिमुपगम्यान्यत्र गौणप्रयोगसम्भवे तत्रापि शक्तिकल्पनाया अनुचितत्वात् । अपि च पालनमात्रस्य

प्रवृत्तिनिमित्तत्वे स्वगृहक्षेत्रादिपालके कुटुम्बिमात्रेऽपि राजपदं मुख्यं स्यात् । देशपरिपालकत्वस्य निमित्तत्वे तु राजनियुक्ते देशाधिकारिण्यपि राजेति प्रयुज्येत । स्वातन्त्र्येण पालकत्वं तन्निमित्तमित्यपि वक्तुमशक्यम् । तथासति सम्राजा देशविशेषेऽभिषिक्ते तदधीनतया परिपालकेऽपि राजपदं न प्रयुज्येत । अतः क्षत्रिय एव राजपदं मुख्यम् । तद्गतं श्रैष्ठ्यं पालकत्वं च गुणमादायान्यत्र गौणः यथायथं सांप्रतिको वा निरूढो वा प्रयोग इत्येव कल्पनम् । तत्सिद्धं राजसूयवाक्ये राजपदस्य मुख्यार्थत्यागे प्रमाणाभावात् राजसूयस्य क्षत्रियकर्तृकतया त्रैवर्णिककर्तृकप्रयोगाय अवेष्टेरतत उत्कर्ष इति ॥५०॥

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥५१॥

यदुक्तं पूर्वपक्षिणाविवाक्येऽहनि मानसग्रहस्य क्रियाप्रवेशदर्शनान्मानसत्वाविशेषेण मनश्चिदादीनामपि क्रियाप्रवेश इति तन्निराकरणार्थं सूत्रमित्याह—**यदुक्तं मानसवदिति** । मानसत्वसामान्यस्य न क्रियाप्रविष्टत्वसामान्यापादकत्वं, मूलाभावादिति परिहाराभिप्रायमाह—**तत् प्रत्युच्यत इति** । किञ्चित्साम्यस्य साम्यान्तरापादकता नास्तीत्यत्र दृष्टान्तमाह—मृत्युवदिति । अग्निमण्डलगतपुरुषयोर्यमस्य च मृत्युपदवत्त्वसाम्येऽपि जनसंहरणहेतुत्वं यमस्यैव, नान्ययोरिति व्यवस्था परस्य न स्यादिति भावः । 'न हि लोकापत्तिरि'ति सूत्रांशं लोकस्य द्युलोकादेर्नाग्निभावापात्तिरित्येवं व्याचष्टे—**यथा चेति** ॥५१॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥

पूर्वोत्तरब्राह्मणयोः कर्मानङ्गभूतविद्याविधिदर्शनान्मनश्चिदादीनां न कर्माङ्गत्वमित्याह—**परस्तादपीति** । ननु,'अयं वात्र लोक एषोऽग्निश्चित' इति वाक्येन चित्याग्नौ पृथिवीलोकदृष्टिविधानात् कर्मप्रवेशोऽस्तीत्याशङ्क्योक्तं—**न शुद्धकर्माङ्गविधित्वमिति** । कर्माङ्गावबद्धत्वेऽपि न कर्माङ्गत्वं लोकदृष्टेरिति भावः । **परेण चेति** सौत्रचशब्दार्थमाह—**तथा पुरस्तादपीति** । 'यदेतन्मण्डलं तपती'त्यस्मिन् ब्राह्मणे हि 'स एष एव मृत्युर्य एष एतस्मिन् पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष' इति विद्याविशेषं विधाय 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवती'ति तत्फलमाम्नातम् । ननु, यदि न मनश्चिदादीनां क्रियाङ्गत्वेन क्रियानुप्रवेश इष्टः, तर्हि किमर्थं क्रियासन्निधिसमाम्नानमित्याशङ्काव्यावर्तकतया भूयस्त्वात्त्वनुबन्ध इति सौत्रांशं व्याचष्टे—**भूयांस्त्विति** । अग्निनानुबध्यते चित्याग्निसमीपे समाम्नायते ॥५२॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ २९ ॥

## एक आत्मनश्शरीरे भावात् ॥५३॥

अधिकरणार्थं सङ्ग्रहेण प्रदर्शयन् तस्य पूर्वोत्तरतन्त्रोपयोगमाह—**इहेति** । बन्धः स्वर्गादिः । **शास्त्रप्रमुख इति** । अत्र शास्त्रपदं जैमिनीयतन्त्रपरम् । तत्र हि पैतृमेधिके कर्मणि यजमानशरीरे पात्रासादनविधानानन्तरं 'स एष यज्ञायुधी यजमानस्स्वर्गं लोकं याती'ति वाक्यमाम्नायते । तत्र यज्ञायुधपदं स्फ्यादिपरम् । 'स्फ्यश्च कपालानि चे'ति प्रकृत्य 'एतानि वै दश यज्ञायुधानी'ति श्रुतेः स एष स्फ्यादिनयेनेन संस्कृतो यजमान इत्यत्र किं प्रत्यक्षदृश्यो देह एव प्रतिपाद्यः, उत देहातिरिक्तः आत्मा देहाभेदोपचारेण प्रतिपाद्य इति । भस्मीभवतो देहस्य गमनं न सम्भवति । नापि देहातिरिक्तः कश्चिदात्मास्तीति अप्रमाणमेतद्वाक्यमिति शङ्कामुद्भाव्य युक्त्या देहातिरिक्त आत्मा शबरस्वामिना निरूपितः । अतः किमर्थं पृथगत्र निरूपणमिति शङ्काभिप्रायः । **इत एव चाकृष्येति** । यथोक्तं तद्वार्तिककृता—'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ इति । अस्य विचारस्य पादसङ्गतिं प्रासङ्गिकीं दर्शयति--**इह चेदमिति** । पूर्वाधिकरणेनापि प्रासङ्गिकीं सङ्गतिमाह—**अपि चेति** । उत्तरसूत्राद्व्यतिरेक इति नेति चापकृष्यते । शरीर इति चावृत्त्या प्रतिज्ञाकोटावप्यन्तर्भवति । तथा च आत्मनश्शरीरव्यतिरेको नेत्येके लोकायतिका मन्यन्त इति योजनामभिप्रेत्य पूर्वपक्षमाह—**अत्रैक इत्यादिना** । ननु भौतिके शरीरे चैतन्यं न सम्भवति । लोके हि पृथिव्यादिषु भूतभौतिकेषु व्यस्तेषु विश्लिष्टेषु चैतन्यं नोपलभ्यते । घटादिष्वदर्शनात् । नापि मिलितेषु समस्तेषु चैतन्यमुपलभ्यते । अग्नितप्ते जलसिक्ते दृतिवायुसंयुक्ते अयसि तददर्शनात् । तत् कथं शरीरे चैतन्यमिति शङ्काभिप्रायेणोक्तं—**समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपीति** । यथा हि ताम्बूलमदिरादिपरिणामयोग्येषु पूगगुडादिषु प्रत्येकं यथाकथंचित् मिलितेषु वा मदशक्तेरदर्शनेऽपि ताम्बूलमदिराकारपरिणामे दृष्टत्वात् मदशक्तिरुपेयते, तथा व्यस्तेषु प्रकारान्तरेण मिलितेषु भूतेषु चैतन्यादर्शनेऽपि शरीराकारपरिणते भूतसंघाते चैतन्यं प्रत्यक्षसिद्धत्वादुपेयम् । प्रत्यक्षस्यार्थस्य भूतत्वसामान्येन अभावसाधने बाधात् मदिरादावपि मदशक्त्यभावसाधनप्रसङ्गाच्चेति अभिप्रेत्य परिहरति—**चैतन्यं शरीराकारपरिणतेषु स्यादिति** । चैतन्यमित्यस्य व्याख्यानं—**विज्ञानमिति । तद्धर्मत्वेनाध्यवसीयत इति** । ननु, यत् यदन्वयव्यतिरेकानुविधायि, तत् तद्धर्म इति नास्ति नियमः । घटाद्यन्वयव्यतिरेकानुविधायिनस्तत्प्रत्यक्षस्य घटादिधर्मत्वानुपगमादिति चेन्न । ये हि पदार्थाः यद्धर्मित्वेनोपलभ्यन्ते, यद्विना-

भूताश्च नोपलभ्यन्ते असति बाधके ते तद्धर्मा एव भवन्तीत्येतदिह विवक्षितम् । अयञ्चार्थः 'तेऽप्यन्तरेव देह उपलभ्यन्त' इत्यादिनोत्तरत्र स्पष्टीकृतः । अनेन च गौरोऽहं जानामीत्यादिप्रत्यक्षश्चैतन्यादीनां देहधर्मत्वे प्रमाणतयोपन्यस्तं भवति । गौरत्वादिकं देहधर्म इत्यास्तिकस्यापि सम्मतम् । तत्सामानाधिकरण्येन चैतन्यमुपलभ्यमानं देहधर्म एव भवेत् । न चास्य बाधकं किञ्चित् प्रमाणमुपलभ्यते । येन लोहितस्स्फटिक इत्यादिवत् भ्रमत्वं परिकल्प्येतेति भावः । **असिद्धे देहव्यतिरिक्ते धर्मिणीति** । यदि हि देहव्यतिरिक्त आत्मा चैतन्यादिधर्मी केनचित् प्रमाणेन सिद्धो भवेत्, तदा तदैक्याध्यासं देहे परिकल्प्य गौरोऽहं जानामीत्यादिप्रत्यक्षं लोहितस्स्फटिक इत्यादिप्रत्यक्षतुल्यं कल्प्येतापि । न च देहातिरिक्तात्मसाधकं किञ्चिदुपलभामहे । नन्वागमादिकं देहातिरिक्तात्मसाधकं भविष्यति । प्रत्यक्षव्यतिरिक्तस्याप्रमाणत्वादिति तदभिमानः ॥५३॥

## व्यतिरेकस्तद्भावाभावित्वान्नतूपलब्धिवत् ॥५४॥

नन्वत्राद्यस्तर्को यदि ज्ञानेच्छादीनामात्मधर्मत्वेन सम्मतानां देहधर्मत्वमुपेयेत, तथासति यावद्देहं तस्मिन्ननुवृत्तिस्स्यादिति, स नोपपद्यते । न हि यावत्पर्यन्तं धर्मी भवति, तावत्पर्यन्तं धर्मानुवृत्तिरिति नियमोऽस्ति । आत्मधर्मत्वेन सम्मतानां ज्ञानेच्छादीनां अयावदात्मभावित्वात् । नापि बाह्यद्रव्यधर्माणामयं नियमः । शब्दस्यायावदाकाशभावित्वात् । नापि बाह्यमूर्तधर्मनियमः । संयोगादीनामयावद्द्रव्यभावित्वात् । नापि मूर्तविशेषगुणेष्वयन्नियमः । सत्येव धर्मिणि पाकेन पूर्वरूपनाशात् । एवं देहधर्मत्वे रूपादिवदन्यैरुपलभ्येते'ति द्वितीयतर्कोऽपि नोपपद्यते । देहधर्मस्य गुरुत्वादेः अन्यैरनुपलभ्यमानत्वात् । अप्रयोजकत्वं च । गौरोऽहं जानामीत्यादिप्रत्यक्षानुसारेण ज्ञानादीनां देहधर्मत्वे सिद्धे तेषामयावद्द्रव्यभावित्वस्य अन्यैरनुपलभ्यमानत्वस्य च कल्पनोपपत्तेः । प्राणस्य च सिद्धान्ते न देहधर्मत्वम् । नाप्यात्मधर्मत्वम् । अपि तु वायुविकारविशेषस्य तस्य देहान्तर्गतिमात्रम् । चेष्टायाश्च देहधर्मत्वं सिद्धान्तिनोऽपि सम्मतम् । अतस्तयोर्ज्ञानादिभिस्सह देहधर्मत्वनिराकरणमसङ्गतम् । अयावद्देहभावित्वेन देहधर्मत्वानुपपत्तेरात्मधर्मत्वमितिपर्यवसानानुपपत्तेरिति चेत्, उच्यते—मूर्तविशेषगुणेष्वयं नियमो दृष्टः । सति धर्मिणि पूर्वगुणनाशेऽपि गुणविभाजकोपाधिना पूर्वसजातीयस्य विशेषगुणान्तरस्य यावद्धर्मिपर्यन्तमनुवृत्तिरिति पाकेन पूर्वरूपनाशेऽपि रूपान्तरोत्पत्तिदर्शनात् । एवं शरीरेऽपि ज्ञानत्वादिजात्याक्रान्तस्य यस्य कस्यचिद्यावद्धर्मिपर्यन्तमनुवृत्तिर्भवेदेव । अन्यैरुपलभ्यमानत्वं तु देहविशेषगुणेषु नियतमेव । गुरुत्वस्य तु वि-

शेषगुणत्वाभावान्न व्यभिचारः । प्राणचेष्टोपन्यासस्तु तयोस्सत्यपि शरीरे कादाचित्कत्वात् अन्यनिमित्तत्वे आवश्यके यद्यदृष्टनिमित्ततोपेयेत, तथासत्ययावद्देहभाविनस्तस्य देहविशेषगुणत्वानुपपत्तेः तदाश्रयतयात्मा सिध्यतीत्यभिप्रायेण । नाप्यप्रयोजकत्वम् । गौरोऽहं जानामीति प्रत्यक्षस्य मम शरीरमिति व्यतिरेकग्राहिप्रत्यक्षप्रत्ययविरुद्धस्य देहमात्रात्मनिश्चायकत्वानुपपत्त्या तेन रूपादिवैलक्षण्येन ज्ञानादीनां शरीरधर्मसमर्थनानुपपत्तेः । अतो यथा जपाकुसुमसंपर्कात् स्फटिके आरुण्यप्रतीतिः, तद्वियोगे तु जपाकुसुमेऽनुवर्तमानस्यैवारुण्यस्य स्फटिके वियोगः, एवं शरीरेऽप्यात्मसंपर्कादेव ज्ञानादेः प्रतीतिः । तद्वियोगे त्वात्मन्यनुवर्तमानस्यैव ज्ञानादेः शरीरे अभाव इति कल्पयितुमुचितम् । तदिदमाह—**अपि चेति ।** ननु, 'मम शरीरमि'ति प्रत्यक्षेण गौरोऽहमित्यस्य न प्रतिरोधः सम्भवति । घटस्य स्वरूपमित्यादिवदभेदेऽपि तथाप्रतीत्युपपत्तेरिति चेत्, तर्हि गौरोऽहमित्यस्यापि नाभेदसाधकता सम्भवति । लोहितः स्फटिक इत्यादिवत् भ्रमत्वोपपत्तेः । न चैवंसति कस्मिन्नपि पक्षे निर्धारणं न भवेत्, मास्तु ; तावतापि देहमात्रमात्मेति नास्तिकपक्षः पराकृत एव भवति । तदिदमाह—**संशयमात्रेणापीति** । वस्तुतस्सिद्धान्तिनो न निर्णयाभावः । दोषशङ्कारहितत्वेन श्रुत्या देहातिरिक्तात्मनिर्णयसम्भवात् । एवं बालस्याद्यस्तन्यपानप्रवृत्त्युपयोगीष्टसाधनतानुमित्यनुकूलस्तन्यपानत्वेष्टसाधनत्वव्याप्तिस्मृत्यनुकूलजन्मान्तरानुभवाश्रयतयापि देहातिरिक्तात्मसिद्धिः । न च शब्दानुमानयोरप्रामाण्यं वक्तुं युक्तम् । तथात्वे परबोधनार्थं शब्दाप्रयोगापत्त्या मूकतैव लोकस्य स्यात् । आगामिपाकेष्टसाधनताज्ञानासम्भवेन प्रवृत्तिराहित्यापाताच्च शब्दप्रयोगस्यागामिपाकेष्टसाधनताज्ञानस्य च शब्दानुमानप्रामाण्याधीनत्वात् । न च शब्दानुमानयोर्विसंवाददर्शनेन प्रमाजनकत्वानुपगमेऽपि सम्भावकतोपगमान्नानुपपत्तिरिति वाच्यम् । तथासति इदं रजतमित्यादिप्रत्यक्षेऽपि विसंवाददर्शनेन प्रत्यक्षस्यापि प्रामाण्यं न स्यात् । तस्मादसति प्रबलबाधके प्रत्यक्षस्येवानुमानादेरपि प्रतीतितः प्रामाण्यमुपेयमेवेति । आत्मनो ज्ञानरूपतया देहातिरेकं साधयितुं ज्ञानस्य देहधर्मत्वव्युदासाय पीठिकामारचयति—**किमात्मकमिति।** ज्ञानं किं स्वतन्त्रं तत्त्वान्तरं वा,उत कस्य चित्तत्त्वस्य धर्मः । नाद्य इत्याह—**न हीति।** आकाशस्यासत्त्वोपगमात्तन्मते चत्वार्येव तत्त्वानीति न ज्ञानं स्वतन्त्रं तत्त्वान्तरम् । द्वितीयं शङ्कते—**यदनुभवनं भूतभौतिकानामिति** । **स्वात्मनि क्रियाविरोधादिति** । ज्ञानस्य हि भूतभौतिकसंघातदेहधर्मत्वोपगमे देहस्यैव कर्तृतया तस्य ज्ञानक्रियां प्रति कर्मता न स्यात् । कर्तृकर्मभावस्यैकत्र विरुद्धत्वादित्यर्थः । रूपादिवत् भूतधर्मस्य प्रकाशकतापि न स्यादित्याह—**न हीत्यादिना** । व्यतिरेकः

देहधर्मत्वाभावः । ननु, यदि कर्तृकर्मविरोधप्रसक्त्या न देहधर्मत्वं, तथात्वे आत्मधर्मतापि न स्यात्, आत्मनोऽपि ज्ञानविषयत्वात्, कथञ्च देहातिरिक्तज्ञानसिद्ध्या अभिलषितात्मसिद्धिरित्यत आह—**उपलब्धिस्वरूप एवेति** । स्वप्रकाशज्ञानस्वरूपतयात्मनोऽभ्युपगमात् न कर्तृकर्मभावविरोधः । उपलब्धृत्वेन स्वपरप्रकाशात्मना । **न चात्यन्तं देहस्येति** । शयानदेहस्वरूपसत्तामात्रेण स्वप्ने उपयोगे सत्यपि न तदीयचेष्टादिकं स्वप्नायपेक्षितम् । एवञ्च स्वापे चेष्टावच्छरीरमन्यदेव वक्तव्यम् । ततश्चोत्थितस्य देहद्वयपरामर्शे सत्यपि स्वप्नजाग्रतोरात्मन एकस्य प्रत्यभिज्ञानात् स्फुट एव देहाद्विवेक इति सूचितं भवति ॥९४॥

इति शरीरेभावाधिकरणम् ॥३०॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५५॥

यथात्मनो देहाद्विवेकः, एवं शाखान्तराम्नातोद्गीथाद्युपासनानां शाखान्तरीयोद्गीथादिभ्यो विवेक इति दृष्टान्तेन प्रत्यवस्थानात् अनन्तरसङ्गतिः । देहातिरिक्तात्मविचारः प्रासङ्गिकी कथा । लोकत्वेन पञ्चविधस्य साम्नः उपासनं, पृथिव्यात्मना उक्थ्यशस्त्रोपासनं, पृथिवीलोकात्मना चित्याग्न्युपासनं कर्माङ्गसामादिसम्बन्धित्वात् कर्माङ्गावबद्धम् । ननु, नात्र पूर्वपक्षसिद्धान्तयोः फलभेदः । उद्गीथादेस्सर्वास्वपि शाखासु एकरूपत्वादित्याशङ्क्याह—**प्रतिशाखं चेति** । तथा च पूर्वपक्षे 'ओमित्येतदक्षर'मित्यादिवाक्यं यस्यां शाखायामाम्नातं, तद्वाक्यविधेयस्योपासनस्य तच्छाखायां यादृशस्वरादियुक्तमुद्गीथादिकर्माम्नातं, तेनैव सम्बन्धः, नान्यादृक्स्वरयुक्तोद्गीथसम्बन्धः । सिद्धान्ते तु नायं नियम इति वैषम्यम् । ननूद्गीथमुपासीतेत्यत्रोद्गीथश्रुत्या सर्वे उद्गीथाः प्रतिपाद्यन्ते । तत्र सन्निधानेन श्रुतिसङ्कोचो न युक्त इति मनसि निधाय शङ्कते—**कुत इति** । **सन्निधानादिति** । अयं भावः—लोके हि घटमानयेत्यादिवाक्ये घटपदेन सर्वेषां घटानां प्रतिपादनेऽपि न सर्वेषामानयनकर्मतयान्वयो भवति, अपि तु सन्निहितस्यैव । तथा च सन्निधानानुसारेण श्रुतिसङ्कोचो व्युत्पत्तिसिद्ध इति । **विशेषे व्यवस्थाप्यमाना पीडिता स्यादिति** । अयं भावः—लोके हि घटमानयेति वाक्ये सर्वघटानयनमशक्यम् । अतो विशेषापेक्षायां घटश्रुतेस्सन्निधानेन सङ्कोचाभ्युपगमेऽपि प्रकृते शाखान्तरीयोद्गीथादेः उपासनाकर्मत्वे बाधकाभावात् न सन्निधानमात्रेण सङ्कोचोऽभ्युपगन्तुं न्याय्य इति । एवमपि यदि सामान्यगोचरप्रत्ययापर्यवसानं भवेत्, तदा विशेषाकाङ्क्षायां सन्निधानात् सङ्कोचो भवेदपि । न तु तदस्ति । तदाह—**न च सामान्याश्रय इति** ॥९९॥

## मन्त्रादिवद्वा विरोधः ॥५६॥

ननूद्गीथादिसामान्यस्यानुष्ठानकाले विशेषापेक्षा । न हि युगपदेव सर्वेषामुपासनाकर्मत्वं वक्तुं शक्यते । तथाचोपासनाकाले यस्यकस्यचिद्विशेषस्य ग्राह्यत्वावश्यंभावादपेक्षानुसारेण सन्निधानं नियामकं भवेदिति शङ्कानिराकरणमत्र विवक्षितम् । अयमत्र निराकरणाभिप्रायः—एतादृशविशेषाकाङ्क्षायां सत्यामपि न तच्छाखाम्नातस्यैव ग्रहणं सन्निधानबलात् सिध्यति । सर्वशाखागतानामप्युद्गीथादीनामत्र सन्निधानाविशेषात् शाखान्तरगतानामप्यङ्गानां शाखान्तरप्राप्तेः सर्वशाखास्वेकं कर्मेति । न्यायसिद्धत्वात् शाखान्तरश्रुतस्यापि शाखान्तरप्राप्तौ लिङ्गमाह—**तथाहीति** । **'ऋतवो वै प्रयाजा'** इति । हेमन्तशिशिरावेकीकृत्य पञ्चत्वसङ्ख्यासाम्यात् अभेदोपचारः । समानत्र समानदेशे । **सजनीयं शस्यमिति** । 'यो जात एवे'ति सूक्ते हि सजनास इति पदं पठ्यते । अतस्तत् सजनीयम् ॥५६॥

इति अङ्गावबद्धाधिकरणम् ॥ ३१ ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५७॥

पूर्वस्मिन्नधिकरणे सन्निधानमात्रेण श्रुतिसङ्कोचो न युक्त इत्युक्तं, तर्हि समस्तोपासनाविधिसन्निधानेन व्यस्तोपासनाविषयकाख्यातानां स्तावकत्वमात्रेण सङ्कोचः कर्तुं शक्यत इति प्रत्यवस्थानात् सङ्गतिः । ननु, समस्तोपासनं व्यस्तोपासनं चेति पूर्वपक्षो न सम्भवति । तथासति वाक्यं भिद्येत । न च तद्युक्तम् । 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही'त्युपक्रम्य 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्युपसंहारेणैकवाक्यतावगमात् । अतस्समस्तोपासनमेवैकं विवक्षितम् । 'औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचे'त्यादौ व्यस्ततया दिवादिषु वैश्वानराभेदप्रतिपादनं त्विन्द्रियादिपरत्वप्रतिपादनं यथा वाक्यार्थीभूतपुरुषपरत्वप्रतिपत्त्यर्थं, तद्वत्समस्तोपासनाप्रतिपत्त्यर्थमेव भविष्यतीति शङ्कां निराकुर्वन् पूर्वपक्षमुपपादयति—**प्रत्येकमिति** । अयं भावः—युक्त'मिन्द्रियेभ्यः परा ह्यर्था' इत्यादावाख्यातफलपदयोरश्रवणेन तस्यार्थवादत्वम् । इह तु दिवादिषु वैश्वानराभेदं प्रतिपाद्य 'य एतमेवात्मानं वैश्वानरमुपास्त' इत्याद्याख्यातश्रवणात् 'अत्यन्तं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुल' इत्यादिफलपदश्रवणाच्च भूमविद्यायामवान्तरवाक्यविधया नामाद्युपास्तिविधिवदिहापि मध्ये व्यस्तोपासनाविधयः उपगन्तव्याः । न चेह 'मूर्धा त्वेष वैश्वानरस्येति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य' इति व्यस्तोपासनानिन्दा श्रूयते । अतो न तत्र विधियुक्त इति वाच्यम् । निन्दावाक्यस्य 'नहिनिन्दा'न्यायेन स्तावकतया समस्तोपासनाविधिशेषतया व्यस्तोपासनाविधिविरोधित्वाभावा-

दिति । अयमत्र सिद्धान्ताभिप्रायः—नहिनिन्दान्यायेन प्रकृते निन्दावाक्यस्य व्यस्तोपासनाविरोधित्वं नास्तीति वक्तुं न शक्यते । अत्र हि 'मूर्धा त्वेष आत्मन इति होवाचे'ति वाक्येन द्युलोके कृत्स्नवैश्वानरदृष्ट्यपवादं तुशब्देनोपक्षिप्य तस्य वैश्वानरमूर्धभावो विधीयते । एवमुत्तरत्रापि 'चक्षुष्ट्वे तदात्मन' इत्यादिवाक्यैरादित्यादिषु कृत्स्नवैश्वानरदृष्ट्यपवादो विवक्ष्यते । पुनश्च 'एते वै खलु यूयं पृथगिवेमं वैश्वानरमात्मानं विद्वांसोऽन्नमात्थे'तीवशब्देन द्युलोकादिषु पृथक्त्वेन वैश्वानरविज्ञानस्य भ्रमत्वं सूच्यते । अतस्तद्वाक्यसहकृतं निन्दावाक्यं व्यस्तोपासनात्र न विवक्षितेत्येव गमयति । ततश्च 'दिवमेव भगवो राजन्नि'त्यादिसन्दर्भो न व्यस्तोपासनाकर्तव्यतापरः, अपि तु तद्व्युदासेन दिवादीनां वैश्वानरमूर्धत्वादिसुतेजस्त्वादिगुणप्रतिपादनार्थ एवेति प्रकृते भूमविद्यान्यायस्याप्रवृत्तेः समस्तोपासनमेकमेव प्रकृते विवक्षितमिति । अयमर्थो भाष्ये 'पुनश्च व्यस्तोपासनं व्यावर्त्ये'त्यनेन संगृहीतः । केचित्तु व्यस्तोपासनान्येवात्र विवक्षितानि । सामस्त्यप्रतिपादनं तु व्यस्तोपासनाविधिसिद्धसमुदायानुवाद इति पूर्वपक्षं कृत्वा वचनद्वयप्रामाण्यात् समस्तोपासनं व्यस्तोपासनं च इत्युभयमपि विवक्षितं, परं तु समस्तोपासना व्यस्तोपासनातः प्रशस्तेति सौत्रेण ज्यायस्त्ववचनेन सूच्यत इति वदन्ति । तन्मतमनुवदति—**केचित्त्वत्रेति । तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वादिति** । समस्तोपासनावाक्यं व्यस्तोपासनाविधिसिद्धसमुदायानुवाद इति पूर्वपक्षसम्भावनस्य निर्युक्तिकत्वादिति भावः ॥९७॥

इति क्रतुवज्ज्यायस्त्वाधिकरणम् ॥ ३२ ॥

## नाना शब्दादिभेदात् ॥५८॥

यथा द्युमूर्धत्वादिगुणभेदेऽपि तद्विशिष्टस्य वैश्वानरस्यैकस्यैव वाक्यप्रतिपाद्यतयोपासनैक्यं, तथा प्रकरणभेदेन भिन्नगुणाम्नाने सत्यपि गुणिनो ब्रह्मण एकत्वादेकमेव सर्वत्रोपासनम् । एवं गुणभेदेऽपि प्राणस्य सर्वत्रैकत्वात् तद्विषयमप्युपासनं भिन्नमिति दृष्टान्तसङ्गत्या पूर्वपक्षः । 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादि'ति जैमिनिसूत्रस्यायमर्थः—यजति ददाति जुहोतीत्यादिकं समाम्नायते । देवतोद्देशेन द्रव्यत्यागो यागः । स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दानम् । याग एव प्रक्षेपाधिको होमः । तत्र यागाद्यवच्छिन्ना कर्मापरनामधेया भावना एका, उत यागादिरूपधात्वर्थभेदेन भिन्ना । तत्र पूर्वः पक्षः—अनेकभावनाकल्पने गौरवात् सर्ववाक्यालोचनया यागाद्यनेकधात्वर्थावच्छिन्ना भावनैकैवेति । सिद्धान्तस्तु शब्दान्तरे कर्मभेदः भिन्नप्रवृत्तिनिमित्तको धातुश्शब्दः, तद्भेदे कर्मणो भावनाया भेदः, कृतानुबन्धत्वात् कृतसम्बन्धत्वात् । यजतीत्युक्ते हि यागविशिष्ट एवाख्यातार्थः प्रती-

येत । तत्र भावनाविशेषणतयावगम्यमानेन यागेन स्वसजातीयस्य करणान्तरस्य व्यवच्छिन्नत्वात् तत्र दानादेर्निवेशासम्भवेन शब्दसामर्थ्याद्दानाद्यवच्छिन्ना भावना भिन्ना एवावगम्यन्त इति न तेषामैक्यकल्पनं न्याय्यमिति । अभ्यासादयश्च कर्मभेदहेतवः सर्ववेदान्तप्रत्ययाधिकरण एव विवृताः । **अनुबन्धभेदाद्विद्याभेदोपपत्तेरिति ।** यद्यपि वेदोपासीतेत्यादीनामर्थैक्यं, तथापि तत्तत्प्रकरणगतगुणपदसमभिव्याहारेण तत्तद्गुणोपरक्तं तत्तदुपासनमवगम्यते । तथा च प्रत्ययरूपस्य उपासनस्य विषयभूतगुणावच्छेदेन भेदावगमात् उपासीतेत्यादीनि पदानि भिन्नार्थानि सन्ति शब्दान्तरतां प्राप्नुवन्तीत्यपि द्रष्टव्यम् । नन्वेवं शब्दान्तरत्वसम्पादनस्यापि प्रकृते गुणभेदायत्तत्वात् गुणकृत एवोपासनानां भेदो वक्तव्यः । स तु न सम्भवति । प्रधानस्य वेद्यस्य ब्रह्मण एकत्वादित्याशङ्क्याह—**एकस्यापि हीति** । यद्यपि ब्रह्मैकम् । नापि गुणभेदात्तस्य भेदः, तथाप्याम्नानानुसारेण अस्यामुपासनायामेतावद्गुणविशिष्टमुपास्यमन्यस्यामेतावद्गुणविशिष्टमिति व्यवस्था व्यज्यते । यथा चोपासनायां ब्रह्म विषयतया निरूपकम्, एवं गुणा अपीति रूपभेदात् भेदोऽभ्युपगन्तव्यः । एवं रूपभेदेनोपासनानां भेदं प्रदर्श्य फलभेदादपि भेदमाह— **प्रतिप्रकरणं चेति** । ननु, यदि प्रतिप्रकरणमुपासनानां भेदस्स्यात, तथासति 'सर्ववेदान्तप्रत्ययमि'ति यद्विद्यायाश्शाखाभेदेन भेदेऽप्यभेद इत्युक्तं , तद्विरुध्येतेत्यत आह—**स्थिते चेति** । उक्तगत्योपासनानां भेदे सिद्ध एव यत्र चोदनाद्यविशेषकृतं प्रत्यभिज्ञानमस्ति, तत्र तदैक्यमिति न विरोधः । दहरशाण्डिल्यविद्ययोस्तु यद्यप्यसाधारणगुणाम्नानात् उभयत्र प्रत्यभिज्ञानमस्ति, तथापि दहरविद्या शाण्डिल्यविद्येति समाख्याभेदात् भेदो द्रष्टव्यः ॥५८॥

इति नानाशब्दाधिकरणम् ॥ ३३ ॥

## विकल्पोऽविशिष्टफलत्वात् ॥५९॥

एवं विद्याभेदं प्रसाध्य तासां क्वचिद्विकल्पः, क्वचित् याथाकाम्यमित्यनुष्ठानप्रकारं निरूपयितुमधिकरणत्रयम् । तत्रोपास्यसाक्षात्कारद्वारकफलास्वहंग्रहोपासनासु विकल्पोऽस्मिन्नधिकरणे व्यवस्थाप्यते । **तस्माद्याथाकाम्यप्राप्ताविति ।** यथा दर्शपूर्णमासज्योतिष्टोमादीनां तुल्यफलानामपि फलभूमार्थं समुच्चयोऽधिकारिविशेषे , एवमहङ्ग्रहोपासनास्वपीति पूर्वपक्षाभिप्रायः । नन्वेकेनोपासनेनेश्वरे साक्षात्कृतेऽपि नोपासनान्तरं व्यर्थम् । साक्षात्कारद्वारकतदुपासनाफलत उपासनान्तरजनितफलस्यान्यत्वेन तत्कामिनस्तदुपासनाजनितसाक्षात्कारसिद्धये तत्र प्रवृत्त्युपपत्तेरित्याशङ्क्याह—**अपि चेति** । उपासनाजनितसाक्षात्कारो हि उपास्यदेवोऽहमिति दृढाभिमान एव । स च निरन्तरं समानविषयकप्रत्ययादेव भवतीति

नोपासनान्तरावकाशस्सम्भवतीति भावः । यस्य स्यादद्धा अत्यन्ताभिमानः स एवाहमिति, न विचिकित्सा स एवाहमन्यो वेति, स एव यथोक्तं फलं प्राप्नोतीत्यर्थः । अविशिष्टफलानाम् उपास्यसाक्षात्कारद्वारकफलत्वेन तुल्यफलानाम् ॥५९॥

इति विकल्पाधिकरणम् ॥ ३४ ॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥

उपासनात्वसामान्यात् नामादिषु ब्रह्मदृष्ट्यादिरूपाणामप्युपासनानां विकल्पनियमप्राप्तौ सिद्धान्तमाह—**यासु पुनरित्यादिना** । न पुत्ररोदं रोदिति पुत्रविपत्तिनिमित्तं रोदनं न प्राप्नोति, पुत्रो दीर्घायुर्भवतीति यावत् ॥ ६० ॥

इति यथाकामाधिकरणम् ॥ ३५ ॥

## अङ्गेषु यथाश्रयभावः ॥६१॥

'तन्निर्धारणानियम' इत्यधिकरणे रसतमत्वादिदृष्टीनां कर्माङ्गत्वाभावान्न कर्मसु नियम इत्युक्तम् । इह तु कर्माङ्गत्वाभावेऽपि कर्माङ्गोद्गीथाद्याश्रितत्वान्नियम इति प्रत्यवस्थीयते । अतो न तेन पौनरुक्त्यम् । पूर्वं कर्मबहिर्भूतास्वनहङ्ग्रहोपासनासु याथाकाम्यं व्यवस्थापितम् । इह तु कर्माङ्गावबद्धासु याथाकाम्यं व्यवस्थाप्यत इति पूर्वेण सङ्गतिः । **आश्रयपरतन्त्रत्वादिति** । नन्वत्र पारतन्त्र्यं नाम यत्रयत्राश्रयभूता उद्गीथादयः, तत्रतत्र तदाश्रिता उपासना इत्येवंरूपं वक्तव्यम् । तत्तु न सम्भवति । प्रमाणाभावादिति चेन्न । यत्रयत्रोद्गीथादि शेषिभूतं वर्तते, तत्रतत्रोद्गीथादीनां शेषभूताः पदार्था इति यथोपेयते, तथोद्गीथाश्रिता अपि पदार्थाः कल्पनीयाः । उद्गीथसम्बन्धित्वाविशेषात् । न चैवंकल्पनायां किञ्चित् बाधकमस्ति । नन्वस्ति बाधकम् । रसतमत्वादीनि हि फलकामेनोद्गीथादिषु ध्येयानि, कामाश्चानित्याः । अतो रसतमत्वादिदृष्टीनां नित्यताभ्युपगमे नित्यानित्यसंयोगो विरुद्ध आपद्येतेति चेन्न । यथा सूक्तवाकेन क्रियमाणे प्रस्तरप्रहरणे 'आयुराशास्त' इत्यादिमन्त्रावयवप्रकाश्यानां फलानामनुषङ्गेण जायमानानां कामो रागिपुरुषेषु प्रतिप्रयोगमनुवर्तत एवेति कल्प्यते, एवमत्रापि भविष्यति । अतो न नित्यानित्यसंयोगविरोधः प्रकृते बाधकोऽस्ति ॥६१॥

ननु, यदि क्रत्वङ्गाश्रितानां काम्यानामुपासनानां नित्यत्वं, तर्हि तुल्यतया अप्प्रणयनाद्याश्रितानां गोदोहनादीनामपि क्रतुप्रयोगे नित्यत्वं स्यादित्याशङ्कानिवृत्त्यर्थं सूत्रं —

## शिष्टेश्च ॥६२॥

गोदोहनादिकं हि क्रत्वर्थचमसस्थानापत्त्या फलाय विधीयते । अतस्तस्य नित्यतोपगमे 'चमसेनापः प्रणयेदि'ति शास्त्रमत्यन्तबाधितं स्यादिति गोदोहनादीनां नित्यता न कल्प्यते। रसतमत्वादिदृष्टयस्तु यथोद्गीथादीन्यङ्गानि किञ्चित् स्थानापत्तिं विनैव शिष्यन्ते, एवमेव शिष्यन्ते। न तु गोदोहनादिवदङ्गविशेषस्थानापत्त्या। अत एषां नित्यताकल्पने नास्ति बाधकम् ॥ ६२ ॥

## समाहारात् ॥६३॥

'य उद्गीथस्स प्रणवो यः प्रणवस्स उद्गीथ' इति 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती'ति च समाम्नायते। अत्रोद्गीथावयवप्रणवस्य हौत्रप्रणवस्य च अभेदानुसन्धानमुद्गातुर्विधीयते। तस्य च फलं दुरुद्गीथम्—अङ्गलोपादिना दुष्टमुद्गातृकर्म होतृषदनात् होता यस्मिन् कर्मणि कर्तृत्वेन सीदति, तद्धोतृषदनं हौत्रं कर्म। ततस्सम्यक् कृतादनुसमाहरति समादधातीति । अत्र सामवेदोत्पन्नस्यैतस्योपासनस्य होतृवेदोत्पन्नेन प्रणवेन सम्बन्धो नियतो वक्तव्यः। एवंसति वेदान्तरोदितप्रणवेन सह वेदान्तरोदितानाम् उपासनानामपि वेदान्तरोदितत्वसामान्यात्तेनोपासनेन सह नियतस्सम्बन्धस्सिध्यति । वेदान्तरोदितोपासनाभिस्सह नियतश्च सम्बन्धोऽस्योपासनस्य तदैव भवति, यदि समुच्चयनियमस्स्यादित्यन्यार्थदर्शनं लिङ्गमेतत् ॥६३॥

## गुणसाधारण्यश्रुतेश्च ॥६४॥

नन्वाश्रयसाधारण्यादाश्रितानामुपासनानां साधारण्यमिति लिङ्गप्रदर्शनपरतयास्य सूत्रस्य व्याख्या न साध्वी। आश्रयस्य प्रणवस्योद्गीथावयवस्य वेदत्रयसाधारण्याभावात् 'ओमित्याश्रावयती'त्यनेन वाक्येनाश्रयीभूतस्यैव प्रणवस्य न साधारण्यं प्रतिपाद्यते । 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रमविरोधात् । अपि तु प्रणवसामान्यस्य वेदत्रयसाधारण्यप्रतिपादनद्वारा प्रकृतः प्रणवविशेषः स्तूयते। अस्तु वा आश्रयसाधारण्यात् वेदत्रयसाधारण्यमुपासनानाम् । न तु तावता सर्ववेदविहितप्रयोगेषु नियमस्सिध्यति । याथाकाम्येऽपि वेदत्रयसाधारण्योपपत्तेरित्याशङ्क्य प्रकारान्तरेण सूत्रं योजयति—अथ वेति । अनेनाश्रयीभूतानाम् उद्गीथादीनां समुच्चयनियमाभावात् कथं तदाश्रितानामुपासनानां समुच्चयनियमस्स्यादिति शङ्काव्यावर्तकतया सूत्रं योजितं भवति ॥ ६४ ॥

## न वा तत्सहभावाश्रुतेः ॥६५॥

अयमत्र सिद्धान्ताभिप्रायः—सति हि प्रमाणे अङ्गावबद्धोपासनानां समुच्चय-

नियमो भवेत्, न तु बाधकाभावमात्रेण। अङ्गानां हि विनियोगविधिभिः प्रधानोपकारकतयावगतानां यत्रयत्र प्रधानं, तत्रतत्राङ्गमिति नियमेऽवगते सर्वेषामङ्गानां युगपदेवानुष्ठानविधायकेन प्रयोगविधिना समुच्चयस्य बोधिततया साहित्यनियमस्सिध्यति । अङ्गाश्रितोपासनानां तु यत्रयत्राश्रयः, तत्रतत्राश्रिता इत्यत्र न किञ्चित्प्रमाणमस्ति । अपि त्वाश्रयाभावेनाश्रितान्युपासनानि कर्तव्यानीत्येतावन्मात्रमाश्रित्य विधानसामर्थ्याल्लभ्यते । न चोद्गीथाङ्गेषु तन्नैयत्यदर्शनमात्रेण सम्बन्धित्वाविशेषादाश्रितानां प्रत्ययानामपि तत्कल्पयितुं न्याय्यम् । किञ्चित् साधर्म्यदर्शनेन साधर्म्यान्तरकल्पनस्यातिप्रसङ्गापादकत्वात् । अतश्च तेषां समुच्चयोऽपि न सिध्यति। अङ्गत्वाभावे प्रयोगविधिपरिग्रहासम्भवात् । अतो गोदोहनादिवद्यथाकाम्यमेवेति । **अङ्गानां स्तोत्रादीनां सहभावश्श्रूयत इति** । यद्यपि वैशेषिकवचनबलादङ्गानां साहित्यावगमो न सार्वत्रिकः । प्रयाजादिषु तदभावात् । अतः प्रयोगविधिरेवाङ्गानां सर्वत्र साहित्यप्रापकः, तथाप्याश्रितानां प्रत्ययानां प्रयोगविधिपरिग्रहाभावेऽपि यथा स्तोत्रादिषु साहित्यबोधकं विशेषवचनमस्ति, एवमङ्गावबद्धोपासनेषु यदि भवेत्, तदा साहित्यनियमो भवेत्, न तु तदप्यस्तीति द्योतयितुमित्थमित्युक्तम् ॥६५॥

## दर्शनाच्च ॥६६॥

छान्दोग्ये 'यद्यृक्तो रिष्येत् भूस्स्वाहेति गार्हपत्ये जुहुयाद्यदि यजुष्टो रिष्येत् भुवस्स्वाहेति दक्षिणाग्नौ जुहुयाद्यदि सामतो रिष्येत स्वस्स्वाहेत्याहवनीये जुहुयात्' रिष्येत्, व्यङ्गतामापादयेत् । एवं प्रायश्चित्तमाम्नाय 'एवंविद्धवै ब्रह्मे'त्यादिकं समाम्नातम् । तत्रैवंविदित्यनेन प्रकृतप्रायश्चित्तवित्त्वं विवक्षितम् । यदि ह्युपासनानां साहित्यनियमो भवेत् , तदा यजमानस्य सर्वेषामृत्विजां च प्रायश्चित्तेन ब्रह्मणा रक्षणीयत्ववचनमनुपपन्नं भवेत् । यजमानस्य रक्षणं हि कर्मफलप्रतिबन्धनिरासरूपम् । तत्तु अप्रतिबन्धफलार्थविहितैरुद्गीथाद्युपासनैरेव सिद्धम्। ऋत्विजां रक्षणमङ्गलोपकृतवैगुण्यपरिहारः । 'अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विज'- इति मन्त्रपदोपलक्षिताङ्गवैकल्ये ऋत्विजां दोषश्रवणात्तदपि 'यः प्रणवः स उद्गीथ' इत्याद्यङ्गवैगुण्यपरिहारार्थं विहितैरुपासनैरेव सिद्धम् । साहित्यनियमाभावे तु यदोपासनानि न सन्ति, तस्मिन् पक्षे ब्रह्मणा रक्षणीयत्ववचनमुपपद्यत इति ॥६६॥

इति यथाश्रयभावाधिकरणम् ॥ ३६ ॥

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
तृतीयस्याध्यायस्य तृतीयः पादः ॥

ॐ

---

॥ श्रीः ॥

अथ

## तृतीयाध्यायस्य चतुर्थः पादः ।

---

## पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥१॥

पूर्वस्मिन् पादे अनेकशाखागतवाक्योदाहरणेन विद्याविषयीभूतो वाक्यार्थो निरूपितः। इह पादे तस्या एव विद्यायास्सन्निपत्योपकारकाणि शमादीनि यज्ञादीनि कर्माणि श्रवणादीनि च निरूप्यन्ते । विद्यायाश्चाङ्गाकाङ्क्षा फलवत्त्वे सिद्ध एव भवतीत्यतः प्रथमाधिकरणे उपोद्घाततया विद्यायास्स्वातन्त्र्येण फलवत्ता निरूप्यते । विषयश्च विद्यास्वरूपकोटौ निविष्ट इत्यन्तरङ्गस्य तस्य निरूपणं प्रथमं कृतम् । विद्योत्पत्त्युपयोगितया विषयमपेक्ष्य बहिरङ्गानां सन्निपत्योपकारकाणां निरूपणं तदनन्तरमिति अवसरसङ्गत्या चतुर्थपादविचारः प्रवर्तते । एवं विद्याङ्गनिरूपणमेव पादार्थः । विद्यायाः फलसाधनतानिरूपणं तु तदुपयोगितयेति न पादार्थभेदः ॥ १ ॥

सिद्धान्तेनाधिकरणमुपक्रम्य पूर्वपक्षप्रतिपादकं सूत्रमवतारयति–अथात्रेति—

## शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

## आचारदर्शनात् ॥३॥

जैमिनिना हि 'द्रव्यसंस्कारकर्मसु परार्थत्वात फलश्रुतिरर्थवादस्स्यादि'त्यत्र 'यस्य पर्णमयी जुहूर्भवती'ति श्रुतेः पर्णतारूपद्रव्ये 'न स पापं श्लोकं शृणोती'ति श्रुतस्यापापश्लोकश्रवणस्य 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति चक्षुरञ्जनरूपे संस्कारे श्रुतस्य शत्रुचक्षुर्नाशस्य 'यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते' इति प्रयाजादिकर्मणि श्रुतस्य यजमानवर्मकरणस्य च न फलरूपता। । फलस्य भावितया वर्तमाननिर्देशानुपपत्तेः फलताबोधककमिपदसमभिव्याहाराभावात् । पर्णतादीनां क्रत्वर्थत्वेन क्रतूपकारमादायैव फलाकाङ्क्षानिवृत्तेश्चेति निरूपितम् । तत्राञ्जनस्य प्रयाजादीनाञ्च प्रकरणादेव कर्माङ्गता सिध्यति । पर्णतायास्त्वनारभ्याधीतायाः यद्यपि न प्रकरणात् क्रत्वङ्गता सिध्यति, तथापि तस्या विहिताया नैयत्यावगमात् फलाकाङ्क्षायां जुहूस्वरूपे नियमानुपयोगेन तस्य फलत्वानुपपत्तेः अव्यभिचरितक्रतुसम्बन्धया जुह्वा क्रतोरुपस्थापितत्वात् क्रत्वपूर्व-

साधनतास्वरूपांशमादाय जुह्वां तस्य निवेशः कल्प्यते । ततश्च जुहूपदे क्रतुसाधनतालक्षणोपगमात् वाक्येनैव क्रतुसम्बन्धः सिध्यतीति । एवं चानारभ्याधीतस्यात्मज्ञानस्यापि क्रतावेवासाधारण्योपगमेन देहातिरेकिणात्मना क्रतोरुपस्थापितत्वाद्वाक्येनैव क्रतुसम्बन्धे सति तत्र श्रुतस्य 'तरति शोकमात्मवि' दित्यादेः न फलसमर्पकता, अपि तु फलार्थवादतैवेति पूर्वपक्षो नात्र प्रवर्तते । यदि हि देहातिक्त एवात्मा उपनिषत्सु प्रतिपाद्येत, तदैवं भवेत्, न तु तथास्ति । देहातिरिक्तस्यापि तस्यासंसारित्वमपि ह्युपनिषत्सु प्रतिपाद्यते । सर्वज्ञत्वादिगुणकश्चात्मा प्रतिपाद्यते । नास्य क्रतुषु उपयोगोऽस्ति । एतेषां च वचनानां नार्थान्तरपरतेत्यपि तत्रतत्र प्रसाधितमेव । अशनायाद्यतीतासंसार्यात्मज्ञानं च क्रतुप्रवृत्तिविरोध्यपि । अतः कथं तस्य क्रत्वङ्गता पर्णतान्यायेन भवेत् । अपि च देहातिरिक्तात्मज्ञानं क्रतूपयुक्तमित्येतावन्मात्रेणैव नाप्रकृते क्रतौ निवेष्टुमर्हति । पर्णतादिवत् सत्यां हि तस्य प्रयोजनाकाङ्क्षायां क्रतौ प्रवेशो भवेत्, न तु सास्ति । स्वप्रकरणाधीततत्त्वमस्यादिमहावाक्यार्थज्ञाने त्वंपदार्थशोधनद्वारोपयुक्तस्य तस्य प्रयोजनाकाङ्क्षायाः पुनरभावात् । यदि चोपकारकतामात्रेण क्रतौ प्रवेशस्स्यात्, तथासति निषिद्धाननुष्ठानस्यापि देहातिरिक्तात्मज्ञानापेक्षतया तत्रापि तदङ्गं भवेत् । न चेष्टापत्तिः । तथाहिसति देहातिरिक्तात्मज्ञानवतैव कृतं निषिद्धाननुष्ठानं प्रत्यवायपरिहारायेति निषेधवाक्यार्थपर्यवसानेन देहातिरिक्तात्मज्ञानराहितस्य निषिद्धानुष्ठान इव तदननुष्ठानेऽपि प्रत्यवायापरिहाराविशेषानुसन्धानेन[1] निषिद्धानुष्ठान एव प्रवृत्तिप्रसङ्गात् । अतो नापेक्षामात्रेणानारभ्याधीतस्य देहातिरिक्तात्मज्ञानस्यापि कर्माङ्गता वक्तुं शक्यते । तदधिकात्मज्ञानस्य तु दूरत एव सा निरस्ता भवतीत्यभिप्रायेण शङ्कते—**नन्वपहतपाप्मत्वादीत्यादिना । सत्यं प्रसाधितं तस्यैव त्विति।** अयमर्थः—यथानारभ्याधीतायाः पर्णताया लिङ्गोपस्थापिते क्रतौ वाक्येन विनियोगः, नैवमात्मज्ञानस्याव्यभिचरितपदार्थद्वारोपस्थिते क्रतौ वाक्येन विनियोगो बोध्यते, अपि तु यथा 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'ति वाक्येन स्वशब्दोपात्ते क्रतौ चयनाग्नेर्विनियोगः, एवमात्मज्ञानस्यापि वचनादेव क्रतौ विनियोगः । तथाच वचनबलादात्मज्ञानस्य कर्मणि विनियुक्तत्वेऽपि 'तरति शोकमात्मविदित्या'-दिवचनानुसारेण मोक्षार्थताप्यस्तु । खादिरादिवदुभयार्थत्वोपपत्तेरिति शङ्कायां 'शेषत्वात् पुरुषार्थवाद' इति सूत्रेण 'तरति शोकमात्मविदि'त्यादीनामर्थवादता वर्तमानापदेशत्वादिना प्रसाध्यते । सिद्धे च केवलक्रत्वर्थत्वे क्रतावपहतपाप्मत्वादिविशेषणस्यानपेक्षितत्वादसंसारित्वादेर्विरुद्धत्वाच्च तदंश उपनिषदां न तात्पर्यमित्यपि श-

१. प्रत्यवायपरिहारविशेषानुसन्धानेन इति पाठान्तरम् ॥

ङ्क्षोन्मिषतीति अनारभ्याधीतस्यात्मज्ञानस्य क्रत्वाङ्गताप्रसाधनार्थानि 'आचारदर्शनादि'त्येवमादीनि सूत्राणि ॥ २ ॥ ३ ॥

ननु, जनकोद्दालकप्रभृतीनां निर्विशेषविद्यानिष्ठत्वेनाभिमतानां कर्मदर्शनं 'लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसी'ति न्यायेनोपपद्यते। अश्वपतेः कैकेयस्य वैश्वानरज्ञाननिष्ठस्य 'यक्ष्यमाणो हवा' इत्यादिवाक्येनावगम्यमानं कर्मानुपपन्नं न भवति। सविशेषविदां कर्मसमुच्चयस्यापेक्षितत्वात्। कथं वा ज्ञानकर्मणोरेकपुरुषनिष्ठत्वमात्रदर्शनमात्रेण विद्यायाः कर्माङ्गत्वं निर्णेतुं शक्यम्। कर्मैव विद्याङ्गमित्यपि वक्तुं शक्यत्वात्। तस्मान्नासति मूलप्रमाणे इदं विद्यायाः कर्माङ्गताबोधनसमर्थं लिङ्गं भवतीत्यत आह—

## तच्छ्रुतेः ॥४॥

'यद्यपि यदेव विद्यया करोती'त्यादिवचनं न विद्यायाः कर्माङ्गताबोधकमिति 'तन्निर्धारणानियम' इति सूत्रे व्यवस्थापितं, तथापि अङ्गताबोधकतामुपेत्यैवासार्वत्रिकीति परिहारान्तरं वक्तुमयमुपक्षेपः ॥४॥

## समन्वारम्भणात् ॥५॥

यद्यपि विद्याकर्मणोः फलारम्भे साहित्यदर्शनं कर्मणां विद्याङ्गत्वेऽप्युपपन्नं, तथापि 'यदेव विद्यये' त्यादिवचनानुसारेणाचारदर्शनवदिदमपि कर्मप्राधान्यमादायैवोपपादनीयमिति भावः ॥५॥

## तद्वतो विधानात् ॥६॥

**इतिचैवंजातीयका श्रुतिरिति**। अनेन 'धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य' इति शेषो गृह्यते। यथाविधानं यथाशास्त्रम्। गुरोः कर्मातिशेषेण गुरोश्शुश्रूषाख्यं कर्म कृत्वावशिष्टेन कालेन आचार्यकुले स्थित्वा वेदमधीत्य अभिसमावर्त्य गुरुकुलवासं परिसमाप्य कुटुम्बे गार्हस्थ्याश्रमे स्थितः शुचौ देशे अविस्मरणार्थं स्वाध्यायमधीयानो धार्मिकान् पुत्रान् शिष्यांश्च कुर्वन् आत्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्य जितेन्द्रियस्सन् तीर्थेभ्यो विहितकर्मभ्योऽन्यत्र भूतानि प्राणिनः अहिंसन्वियमानो ब्रह्मलोकमभिसम्पद्यते। न च पुनरावर्तते। नन्वनेन वाक्येन कृत्स्नवेदाध्ययनानन्तरं गार्हस्थ्यविधानमात्रेण विद्यायाः कर्माङ्गता कथं लभ्यते। यद्युच्यते—अध्ययनभावनाया अर्थज्ञानफलकत्वात् भावनासमाप्तिः फलनिष्पत्तावेवेति अधीत्येत्यनेनाध्ययनेन वेदार्थज्ञानं सम्पाद्येति प्रतिपाद्यते। तथा च कृत्स्नवेदार्थज्ञानवतो गार्हस्थ्यविधिबलात् गार्हस्थ्यविहितकर्मानुपयोगे वेदार्थज्ञानस्य तद्वतो गार्हस्थ्यविधानस्यानुपपन्नतया कृत्स्नवेदार्थ-

ज्ञानं गार्हस्थ्यविहितकर्मसूपयुज्यते इति सिद्धावौपनिषदमात्मज्ञानमपि गार्हस्थ्याश्रमोपयुक्तमिति सिध्यतीति । एतावतापि हि शाब्दज्ञानस्य कर्माङ्गता सिध्यति, न तु साक्षात्कारपर्यन्ताया आत्मविद्याया इति चेत्, उच्यते—भवेदेषानुपपत्तिः । यद्येतत्पूर्वपक्षे परमात्मविषया साक्षात्कारपर्यन्ता काचिद्विद्या भवेत्, न तु सास्ति । उपनिषज्जन्यज्ञानस्य कर्मविनियोगसामर्थ्येन यावन्मात्रं कर्मसूपयुज्यते देहातिरिक्तात्मगोचरं तावन्मात्रस्यैव ज्ञानस्य उपनिषत्प्रयोजनत्वोपगमात् । अस्तु वा संसार्यधिकात्मगोचरा साक्षात्कारपर्यन्तात्मविद्या । तस्या अप्युपनिषज्जन्यात्मज्ञानस्य विद्यानुष्ठानोपयोगिनः कर्माङ्गत्वावगमेन विद्यायाः कर्माङ्गत्वं विना तदनुपपत्तेः कर्माङ्गता परिकल्प्यते । असंसार्यात्मगोचरायाश्च विद्यायाः कर्माङ्गता न कर्मज्ञानवदृष्टविधया । नापि प्रयाजादिवदारादुपकारकतया, अपि तु 'आत्मानमुपासीतात्मा द्रष्टव्यः' इत्यादिवाक्यैरात्मसंस्कारकत्वावगमात् कर्मबहिर्भूतस्य चात्मनोऽवगतकर्माङ्गभावविद्यासंस्कार्यत्वानुपपत्तेः । आत्मपदस्य कर्मकर्तृपरतां स्वीकृत्य कर्तृसंस्कारभूतौपनिषदी विद्येति स्वीक्रियते । तदभिप्रायेणोक्तं भाष्ये—'**कर्तृत्वेनात्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् कर्मण्येवानुप्रविशती**'ति ॥६॥

## नियमाच्च ॥७॥

'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगदि'तिवाक्येनात्मविद्यां प्रस्तुत्य तद्वतः 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इतिवाक्येन कर्मसु विनियोगप्रतिपादनाद्विद्यायाः कर्माङ्गतावगम्यते । जरामर्यं जरामरणपर्यन्तम् । अमुमेवार्थं विशदयति—**जरया वाह्येवास्मान्मुच्यते मृत्युना वेति** । तथा च विदुषोऽपि कर्मकर्तव्यताया आवश्यकतया विद्यायाः कर्माङ्गता सिध्यति ॥७॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

अनेन सूत्रेण समन्वयाध्यायादौ यो वेदान्तार्थः प्रसाधितः, तस्य स्मरणं देहातिरिक्त एवात्मा वेदान्तेषु प्रतिपाद्य इति पूर्वपक्ष्यभिमाननिरासाय, तदुपन्यस्तकर्माङ्गतासाधकप्रमाणानामन्यथाकरणं तु 'तुल्यं तु दर्शनमि' त्यादिभिस्सूत्रैः क्रियते ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥९॥

अपि च यक्ष्यमाणो हवै भगवन्तोऽहमस्मीत्यादि । इदमुपलक्षणं जनकादीनामपि निर्विशेषविदां कर्मनिष्ठता लोकसङ्ग्रहोपयुक्ता भविष्यतीत्यस्यापि ॥९॥

## असार्वत्रिकी ॥१०॥

ननु, 'यदेव विद्यया करोती'त्यत्रैवकारेण य एव धूमवान्, स वह्निमानित्यत्र यथा कृत्स्नधूमाधिकरणनिष्ठता वह्नेः प्रतीयते, तथा कृत्स्नकर्मसम्बन्धिता विद्यायाः प्रतीयते। न चायमर्थ उद्गीथविद्याग्रहणे सम्भवति। तस्या उद्गीथरहितकर्मस्वभावात्। अतोऽत्र विद्यापदेन यत्किञ्चित्कर्माङ्गानवबद्धामात्मविद्यामुपादाय तस्यास्सर्वकर्मसम्बन्धो बोध्यत इत्येव स्वीकर्तव्यमिति चेन्न। 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'ति पूर्ववाक्ये एवंपदेन प्रकृतामुद्गीथविद्यां परामृश्य तस्या विकल्पं प्रतिपाद्य विद्यानुष्ठानपक्षे फलाधिक्यप्रतिपादनार्थमेतद्वाक्यं 'यदेव विद्यया करोती'ति ह्यस्मिन् पक्षे। अतो नात्रोद्गीथविद्यातिरिक्तविद्याग्रहणावसरः। एवकारश्चोद्गीथयुक्तकर्मप्रयोगसाकल्यपरो भविष्यतीति भावः। यथा च यदेव विद्ययेति तृतीयाया न कर्मशेषत्वप्रतिपादकत्वं, तथा व्युत्पादितं 'तन्निर्धारणानियम' इत्यत्र।१०।

## विभागश्शतवत् ॥११॥

ननु, विद्यान्यं पुरुषमारभते, कर्म चान्यमिति विभागेन व्याख्यानं नातीव समीचीनम्। विद्याकर्मणी इति द्वन्द्वसमासबलेन साहित्यावगमादित्याशङ्क्य स्वयं प्रकारान्तरेण श्रुतिं व्याचष्टे—**न चेदमन्वारम्भवचनमिति** ॥११॥

## अध्ययनमात्रवतः ॥१२॥

अधीत्येत्यत्राध्ययनभावनासमाप्त्यवगमेऽपि न विद्यायाः कर्माङ्गता भवति। अध्ययनस्याक्षरावाप्तिफलकताया अपशूद्राधिकरणे प्रतिपादिततयाक्षरावाप्तिपर्यन्तकृत्स्नाध्ययनवत एवानेन वाक्येन गार्हस्थ्यप्रतिपादनात्। न चैवं कर्मविचारमकृत्वापि दारपरिग्रहस्स्यादिति वाच्यम्। दारपरिग्रहानन्तरं निरन्तरसन्तन्यमाननित्यनैमित्तिककर्मव्यग्रस्य वेदार्थज्ञानसम्पादनसामर्थ्याभावेन कर्मस्वनधिकारापत्त्या दारपरिग्रहात् प्रागेव कर्मविचारस्य न्यायसिद्धत्वात्। तदिदमुक्तं—**'न वयमध्ययनप्रभवामि'ति**। न चैवंसति कर्मविचारवदुपनिषद्विचारोऽपि दारपरिग्रहात् प्रागेव सर्वस्य स्यादिति वाच्यम्। कर्मानुपयुक्तस्य तस्य तदानीमप्रसङ्गात्। नित्यानित्यविवेकाद्यधिकारिविशेषणाभावे सर्वेणापि कर्मविचारवत्तस्य कर्तुमशक्यत्वाच्च। अतः कर्मकाले विचारमूलकौपनिषदज्ञानस्याप्रसक्तत्वेन तस्य कर्माङ्गता दूरनिरस्तैव भवति। तदिदमाह--**किं तर्ह्यौपनिषदमात्मज्ञानमिति**। अस्तु वार्थज्ञानपर्यन्ताध्ययनभावना, कृत्स्नवेदार्थज्ञानानन्तरं च गार्हस्थ्यविधानम्। तथापि न कृत्स्नवेदार्थज्ञानस्य गार्हस्थ्यविहिते कर्मनिकुरुम्बे सामर्थ्यं पर्यालोच्यैवान्वयो वक्तुं शक्यते। अपि तु सामर्थ्यालोचनया यस्ययस्यांशस्य यत्रयत्र सामर्थ्यं, तत्र तस्य

विनियोग उपगन्तव्यः । तथा चौपनिषदात्मज्ञानस्य कर्मसु सामर्थ्याभावात् न तत्र विनियोगस्सम्भवतीत्यभिप्रेत्याह—**यथा च न क्रत्वन्तरज्ञानमिति** ॥१२॥

## नाविशेषात् ॥१३॥

'कुर्वन्नेवेह कर्माणी'त्यत्र न विदुष इति विशेष उपात्तोऽस्ति । नापि पूर्वाम्नातेशावास्येतिमन्त्रानुसारेण कल्पयितुं शक्यते । विद्यायाः कर्मविरोधित्वस्य वक्ष्यमाणत्वात् । अतोऽविद्वानेव 'कुर्वन्नेवेह कर्माणी'त्यत्र सम्बध्यत इति भावः ।१३।

## स्तुतयेऽनुमतिर्वा ॥१४॥

प्रकरणानुसारेणास्य मन्त्रस्य विद्वद्विषयत्वे तु जिजीविषेदिति लिङ् न विधौ, अपि त्वामन्त्रणपदोदितायां कामचारानुज्ञायाम् । तथा च यदि यावज्जीवं कर्माणि कर्तुमिच्छति, तदा कुर्वन्नेव कर्माणि जिजीविषुर्भवतु नाम शतं समाः । एवं त्वयि विद्यमानेऽपि इतोऽन्यथाभावः कर्मणो ज्ञानफलप्रतिबन्धो नास्ति । यतो न कर्म लिप्यते नरे विदुषीत्यर्थमादाय ज्ञानस्तुतिपरो मन्त्रो भविष्यति ; अविद्वत्पक्षे तु जिजीविषेदिति विधौ लिङ् । त्वय्यविदुषि नरे एवंसत्येव पापं कर्म न श्लिष्यते । इतोऽन्यथा शास्त्रार्थो न भवतीति मन्त्रार्थो द्रष्टव्यः ॥१४॥

## कामकारेण चैके ॥१५॥

एषां विदुषामस्माकमयं स्वप्रकाशतया भासमानश्शास्त्रोक्त आत्मा अयमेव च मोक्षाख्यो लोकः । यदपि पूर्वपक्षिणोक्तं—न स पापं श्लोकं शृणोतीतिवत् 'ब्रह्म वेद ब्रह्मैव भवती'त्यादीनां वर्तमानापदेशतया अर्थवादत्वमिति, तत्राह—**अनुभवारूढमेव चेति** । तथा च यत्र फलस्य वर्तमानता न भवति कर्मविषये, तत्र भवतु तस्य स्तुतिशेषता । ब्रह्मज्ञानफलस्य तु विद्यासमानकालत्वान्नार्थवादतोपगन्तुं युक्ता 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिनिर्देशानामिति भावः ॥१५॥

## उपमर्दं च ॥१६॥

सुगमम् ॥१६॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥१७॥

किं गार्हस्थ्योदिताग्निहोत्रादिकर्मशेषत्वं विद्यायाः, उत सर्वाश्रमोदितकर्मशेषत्वम् । नाद्यः । नैष्ठिकादिष्वपि सविशेषनिर्विशेषविद्ययोश्श्रुतिस्मृतिपुराणेषूपलम्भात् । न द्वितीयः । सर्वकर्मरहिते परमहंसपरिव्राजकेऽपि विद्याया उपलम्भात् । न च तस्यापि स्वाश्रमोचितं कर्मास्ति । तत्र विद्यायाश्शेषत्वमिति वाच्यम् । तस्य हि स्वाश्रमोचितं ब्रह्मविद्यातिरिक्तं न किमपि कर्मास्ति । शौचाचमनादिकं तु

तत्तदाश्रमविहितकर्मस्वङ्गमेव, न तु प्रधानम् । ततश्च तस्य तदाश्रमोचितब्रह्मविद्याङ्गतैव, न तु तां प्रति प्राधान्यमिति । अपाकृतानपाकृतर्णानामिति । ऋणानि ऋषिदेवपितृसम्बन्धीनि । तेषामपाकरणं ब्रह्मचर्ययज्ञप्रजासम्पादनेन । 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति वचनेन ऋणापाकरणं विना वैराग्ये सति पारिव्राज्यं विधीयते । 'आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ।' मोक्षं मोक्षसाधनभूतं सन्न्यासम् । 'प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ।' इत्यादिस्मृतिरप्युदाहर्तव्या ॥१७॥

पुरुषार्थाधिकरणम् ॥१॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

ऊर्ध्वरेतस्सु विद्याया दर्शनात् न कर्माङ्गतेति यत् पूर्वाधिकरणावसान उक्तं, तदिहाक्षिप्य समाधीयत इति सङ्गतिः । 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नि'ति नैष्ठिकब्रह्मचारिण आचार्यकुले शुश्रूषया यावज्जीवं वासो विधीयते । अवसादयन् क्षीणं कुर्वन् 'त्रयो धर्मस्कन्धा' इत्यत्र धर्मस्कन्धपदेन ब्रह्मचर्यगार्हस्थ्यवानप्रस्थाख्यास्त्रय आश्रमा यद्यपि गृहीताः, तथापि श्रुतेर्न तत्र तात्पर्यम्, अपि तुताननूद्य पुण्यलोकप्राप्तिरूपाल्पफलतया निन्दित्वामृतत्वफलेन ब्रह्मसंस्था स्तूयते । सन्न्यासस्य तु तत्र गन्धोऽपि नास्ति । तत्रापि ब्रह्मचारिवानप्रस्थयोरग्निहोत्रादिकर्मानधिकृतान्धपङ्ग्वादिविषयतया स्मृत्याचारप्रसिद्धयोरनुवादः । गार्हस्थ्यस्य तु 'कुटुम्बे शुचौ देशे' इत्यादिश्रुतिप्रसिद्धस्यैवानुवादः । ब्रह्मचर्यं समाप्य गुरुदक्षिणारूपं प्रियं धनमाचार्यायाहृत्य गार्हस्थ्यातिरिक्ताश्रमग्रहणेन प्रजातन्तुं तन्तुवत् सन्तन्यमानां प्रजां मा व्यवच्छेत्सीरित्यादिश्रुत्या बोधितत्वाच्च नोर्ध्वरेतस्त्वं वैदिकमिति वक्तुं शक्यम् । 'ये चेमेऽरण्ये' इत्यादिवाक्यं तु अतिक्लेशसाध्यतया देवयानं स्तौति । अपि च 'तप एव द्वितीय' इत्यत्र न स्वशब्देनाश्रमान्तरग्रहणमस्ति, अपि तु तपोलिङ्गेनानुमेयम् । तपसश्च यथाकथञ्चित् गृहस्थेऽपि सम्भवान्न तेनाश्रमान्तरं ग्रहीतुं शक्यम् । एव'मत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नि'त्यप्युपकुर्वाणविषयमात्यन्तिकशुश्रूषाविषयं व्याख्यातुं शक्यमिति नात्राश्रमान्तरग्रहणं निर्धारयितुं शक्यम् । एवं 'ये चेमेऽरण्य' इत्याद्यपि यथाकथञ्चित् गृहस्थविषयमेव द्रष्टव्यम् । युधिष्ठिरादिवन्निमित्तविशेषेण तस्याप्यरण्ये तपस्सम्भवात् । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'त्यत्रापि न सन्न्यासविधिः । अपि तु क्लेशात्मकतया प्रसिद्धं यत् स्मृत्यादिषु पारिव्राज्यमनधिकारिविषयं, तदनुवादेनात्मरूपस्य

लोकस्य स्तुतिः--अतिक्लेशसाध्योऽयं लोक इति । यद्यपि 'ब्रह्मचर्यादेव प्रव्रजेदि'-त्यादिर्हि स्पष्ट आश्रमान्तरविधिरस्ति, तथापि स नास्तीति कृत्वाचिन्तया वैदिकत्वेन सम्प्रतिपन्नो योऽर्थस्तत्समभिव्याहृतमन्यदप्यसति बाधके वैदिकत्वेनोपगन्तव्यमपूर्वत्वं विध्युन्नायकं चेति व्युत्पादनायायं विचारः प्रवर्तितः ॥१८॥

## अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥१९॥

यथा च शास्त्रान्तरप्राप्तयोरिति । 'उपव्ययत' इति विधिसन्निधौ 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामि'तिसमाम्नायते--वामांसस्थं दक्षिणपार्श्वव्यापि यज्ञसूत्रमुपवीतम् । दक्षिणांसस्थं वामपार्श्वव्यापि प्राचीनावीतम् । कण्ठलम्बितं निवीतम् । अत्रोपवीतं विधेयम् । निवीतप्राचीनावीतयोस्तु मानुषपित्र्यकर्मसम्बन्धितया श्रुत्यन्तरप्रसिद्धयोरेवानुवादः उपवीतविध्येकवाक्यत्वाय । एवमत्रापि आश्रमान्तराणां शास्त्रान्तरप्रसिद्धानामेवानुवाद आश्रयितव्यः । समभिव्याहृतस्य गार्हस्थ्यस्य श्रौतत्वोपगमात् । 'त्रयो धर्मस्कन्धा' इत्यत्र धर्मस्कन्धपदोदितानां धर्माश्रयाणां त्रित्वमाश्रमग्रहणेनैव व्युत्पादनीयम् । तत्र ब्रह्मचारी स्वशब्देनैव गृहीतः । तत्राप्याचार्यकुलवासीत्यनेनैव उपकुर्वाणग्रहणे सिद्धे अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति पृथग्ग्रहणं नैष्ठिकाभिप्रायमेव । 'यज्ञोऽध्ययनं दानमि'ति गृहस्थस्यैव प्रधानधर्मानुसारेण ग्रहणम् । तथा च तप एवेत्यत्रापि वानप्रस्थग्रहणमेव । तपसो वानप्रस्थं प्रत्येव प्रधानत्वात् गृहस्थं प्रति तस्य प्राधान्याभावात् । ब्रह्मसंस्थपदेन तु सन्न्यासिनो ग्रहणमिति वक्ष्यति । अरण्यवासोऽपि वानप्रस्थस्यैव नित्य इति 'ये चेमेऽरण्य'इत्यत्र वानप्रस्थानामेव ग्रहणम् ॥१९॥

## विधिर्वा धारणवत् ॥२०॥

एवं ब्रह्मसंस्थस्यामृतत्वविधिपरे वाक्ये आश्रमान्तरानुवादेऽपि गार्हस्थ्यवदाश्रमान्तरस्यापि श्रौतत्वं सिध्यतीत्युक्त्वा एकवाक्यताभङ्गेनान्येषामप्याश्रमाणामपूर्वत्वादत्र विधिरुपेय इत्याह--विधिर्वायमाश्रमान्तरस्येति । अपूर्वत्वात् लौकिकप्रमाणेनाप्राप्तत्वात् । 'विधिस्तु धारणेऽपूर्वत्वात् ।' प्रेताग्निहोत्रप्रकरणे 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'ति श्रूयते--स्रुग्बिलस्योपरिष्टाद्दैवे कर्मणि समिद्ध्रियते, अतोऽत्र 'अधस्तात् समिधं धारयन्ननुद्रवेदि'त्यधोधारणविधिपरे वाक्ये उपरि धारणविध्युपगमे वाक्यभेदापत्तेरवगतैकवाक्यतानिर्वाहायोपरिधारणे न विधिरिति पूर्वपक्षं कृत्वा उपरिधारणस्याप्राप्तत्वेनानुवादासम्भवादगत्या वाक्यभेदमुपगम्य विधिस्स्वीकर्तव्य इति सिद्धान्तितम् । तदिह दृष्टान्तीकृतम् । ननु, 'त्रयो धर्मस्कन्धा' इत्यत्रोक्तगत्या ब्रह्मचारिवानप्रस्थयोरूर्ध्वरेतसोस्सिद्धाव-

पि सन्न्यासो न सिध्यति । त्रित्वसङ्ख्यया चतुर्थाश्रमव्यवच्छेदादित्याशङ्क्य येनापि पूर्वपक्षिणा ब्रह्मसंस्थताया अमृतत्वफलताबोधनपरे वाक्ये आश्रमान्तरानुवादान्न तेषां वैदिकत्वमित्युच्यते, तन्मतेऽपि ब्रह्मसंस्थतारूपस्सन्न्यासो विहित एव भवतीत्यतिशयमाह **—यद्यपि परामर्श एवायमित्यादिना** । वृत्तिकारास्तु तपश्शब्देनैव सन्न्यासिनो ग्रहणम् । 'ब्रह्मसंस्थोऽमृतत्वमे'तीत्यत्र तु चतुर्ष्वाश्रमेषु मध्ये यो ब्रह्मसंस्थः, सोऽमृतत्वमेतीति ब्रह्मसंस्थपदं प्रकृतधर्मस्कन्धविषयमेवेति वदन्ति । एवमपि ब्रह्मविद्यायाः कर्माङ्गत्वाभावः प्रकृतस्समर्थित एव भवति । अब्रह्मनिष्ठानां चतुर्णामाश्रमाणामल्पफलमभिधाय ब्रह्मसंस्थपदोदितस्य ब्रह्मविदो मोक्षाभिधानस्य कर्माङ्गत्वपक्षेऽनुपपत्तेः । अयं तु पक्षो न श्रुतिस्वारस्यानुगुण इति तत्पक्षदूषणव्याजेन प्रकृतवाक्यं ब्रह्मसंस्थपदोदितसन्न्यासविधिपरमिति साधयति— **सा च किमित्यादिना** । वैखानसग्राहिणा वानप्रस्थग्राहिणा । **तपश्शब्देन[1] परामृष्टः परिव्राडपीति** । परिव्राजोऽपि समधिकशौचशमदमादिकं तपोऽस्त्येव । वानप्रस्थस्य ग्रीष्मे पञ्चाग्निसेवनादिवत् । **तपश्चासाधारणो धर्मो वानप्रस्थानामिति** । कायस्य पञ्चाग्न्यादिसेवनेन क्लेशनं हि तपः । तत्तु वानप्रस्थानामेव । सन्न्यासिभिस्तु 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा' ॥ इत्यादिशास्त्रानुसारेण चित्तविक्षेपहेतुत्वात् । पञ्चाग्न्यादिसेवनं परित्यक्तव्यमेव । शौचशमदमादिकं तु तदीयो धर्मः, न तपश्शब्दार्थः । 'शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः' इतिपातञ्जलसूत्रे शौचस्य पृथग्ग्रहणात् । सन्तोषपदेन तद्धेतुतया शमस्यापि पृथग्ग्रहणात् । श्रुतौ च 'तप इति तपो नानशनात् परमिति 'तपःकीर्तनानन्तरं 'शम इत्यरण्ये मुनय' इति शमः पृथग्गृहीतः । ननु, ब्रह्मसंस्थपदं यौगिकं ब्रह्मणि संस्था अस्येति विग्रहात् सर्वनामार्थगर्भितम् । सर्वनाम्नश्च प्रकृतपरामर्शितास्वाभाव्यात । प्रकृता ये धर्मस्कन्धाः, त एवेह ब्रह्मसंस्थपदेन ग्राह्याः । अतश्च त्रयाणां मध्ये अब्रह्मसंस्थो भवति पुण्यलोकभाक् । ब्रह्मसंस्थस्तु तेषां मध्ये यो भवति, सोऽमृतत्वभागित्येव वाक्यार्थो वर्णनीय इत्यभिप्रायेण शङ्कते—**कथं पुनः ब्रह्मसंस्थ इति** । **ब्रह्मसंस्थ इति हीति** । सम्पूर्वो हि तिष्ठतिस्समाप्तिवचनः । ब्रह्मणि समाप्तिश्चामृतत्वफला ब्रह्मान्यविषयकव्यापाराहित्यमेव । तत्तु सन्न्यासिव्यतिरिक्तानामन्येषां न सम्भवति । ऐहिकामुष्मिकनित्यनैमित्तिककाम्यव्यापारव्यग्रत्वात् । सन्न्यासिनां तु ब्रह्मसंस्थामुद्दिश्यैव वि-

1. तपश्शब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपीति भाष्यस्थः पाठो दृश्यते । अत्र तु वैखानसग्राहिणा वानप्रस्थग्राहिणा इति प्रथमतो विवरणं कृत्वा ततः तपश्शब्देन परामृष्ट इत्यादिप्रतीकग्रहणेन एवमपि पाठोऽस्तीति अनुमीयते ॥

धिना सर्वव्यापाराणां परित्यक्ततया सम्भवति ब्रह्मसंस्थत्वम् । एवंचसति ब्रह्मसंस्थपदस्य योगपर्यालोचनयैव प्रकृतपरामर्शित्वासम्भवात् योगार्थसामर्थ्योपस्थितसन्न्यासिपरत्वं कल्प्यते । यदि 'स्थःकचेति'सूत्रेण कर्तृवाचिकप्रत्ययान्तं ब्रह्मणि संतिष्ठते ब्रह्मसंस्थ इति व्युत्पाद्यते, तदा सर्वनामगर्भत्वाभावात् प्रकृतपरामर्शिताशङ्कैव नास्तीति भावः। ब्रह्मसंस्थ इत्यत्र यदि 'ओङ्कार एवेदं सर्वमि' ति वाक्यसन्निधानानुसारेण ब्रह्मपदं प्रणवपरं स्वीक्रियते, तदा ओङ्कारावलम्बनसर्वात्मकब्रह्मोपासनैव ब्रह्मसंस्था । तस्याश्च निर्विशेषब्रह्मसाक्षात्कारद्वारामृतत्वसाधनत्वं माण्डूक्यादिश्रुतिपर्यालोचनया सिध्यतीति नामृतत्वफलत्वानुपपत्तिः। यदि तु सन्निधानानुसारेण ब्रह्मश्रुतिसङ्कोचायोगात् ब्रह्मपदं परमात्मपरमेव, तदा अमृतत्वफलत्वानुपपत्तिशङ्कैव नास्ति ।'न्यास इति ब्रह्मे'ति वाक्ये ब्रह्मत्वेन सन्न्यासः स्तूयते—तानि वा एतान्यवराणीति । पूर्वोक्तानि सत्यादीनि तपांसि सन्न्याससमपेक्ष्यावराणि अपकृष्टानि न्यास एवात्यरेचयत् आत्मानमुत्कृष्टं कृतवान्। तथा च सर्ववैदिकपदार्थातिशयितया प्रतिपादितस्य सन्न्यासस्य यत्किञ्चिदपवादवचनं क्वचिद्दृश्यते । तन्मन्दवैराग्येण सन्न्यासोद्युक्तान् प्रति कर्मसूत्साहजननार्थमिति द्रष्टव्यम् । यदि वेतरथा । यदिवेतिपदं विकल्पद्योतकम् । अथवेत्यर्थः । इतरथा पूर्वोक्तक्रमादन्यक्रमेण। तमेवाह—**ब्रह्मचर्यादेव प्रव्रजेदिति** । तथाच यदा वैराग्यं, तदैव सन्न्यासः । न तत्राश्रमक्रमापेक्षा, तदाह—श्रुतिरेव 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति । एवं च 'वीरहावा एष देवाना'मित्यादिनिन्दावचनमवैधाग्नित्यागविषयकमेव । यथा च गृहस्थानामेव उत्सर्गेष्टिपूर्वकमग्नित्यागे न दोषः, एवं पारिव्राज्यविधिपूर्वकमग्नित्यागे न दोषः । 'अथ पुनरव्रतीवा व्रती'वेत्यादिना कर्माधिकृतानामनधिकृतानां च सर्वेषां पारिव्राज्यविधानात् अव्रती अनारब्धव्रतः यथा सन्न्यासे व्रतसमाप्तिकालं न प्रतीक्षते, एवं सति वैराग्ये आरब्धव्रतोऽपि न व्रतसमाप्तिं प्रतीक्षितुमर्हति, अपि तु तदैव प्रव्रजेत्, एवं समाप्तब्रह्मचर्यव्रतवत् असमाप्तब्रह्मचर्यव्रतोऽपि न समाप्तिकालं प्रतीक्षेत । तथा अनग्निवत् उत्सन्नाग्निरपि न प्राजापत्यादीष्टिसिद्ध्यर्थमाधानादिकर्तव्यतां प्रतीक्षेतेति तदर्थः । **ब्रह्मज्ञानपरिपाकाङ्गत्वाच्चेति** । साक्षात्कारपर्यन्तता ब्रह्मज्ञानस्य परिपाकः । तथाच तत्कामिनोऽधिकारितायाः 'तस्मात् ज्ञानं समुद्दिश्य सन्न्यसेदिह बुद्धिमान् । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती 'त्यादिवचनैः प्रतिपादनान्न कर्मानधिकृतस्तत्राधिकारीति कल्पनमुचितमिति भावः ॥२०॥

इति परामर्शाधिकरणम् ॥ २ ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥२१॥

पूर्वत्र वैदिकतयानुष्ठेयेन गार्हस्थ्येन सह तुल्यतयाश्रमान्तराणां परामर्शात्

तेषामनुष्ठेयत्वमुक्तम् । तर्हि 'इयमेव पृथिव्येव जुहूरादित्यः कूर्म' इति स्तावकवाक्यसामान्यात् 'स एष रसानां रसतम' इत्यादीनामपि स्तावकतेति प्रत्यवस्थानात् सङ्गतिः । रसतमत्वाद्युपासनानां विविदिषार्थकर्मगतवीर्यवत्तरत्वफलकताया अपि सम्भवेन विद्योपकारकत्वात् पादसङ्गतिरस्याधिकरणस्य । एषां भूतानां पृथिवी रसः सारभूता कारणत्वात्, पृथिव्या आपो रसः कारणत्वादेव, अपामोषधयो रसः प्रधानकार्यत्वात्, ओषधीनां पुरुषो रसः कार्यत्वादेव, पुरुषस्य वाग्रसः 'अवदतो हि किं स्यादि'ति श्रुतेः, वाच ऋग्रसः वाक्कार्येषु मध्ये प्रशस्तत्वात्, ऋचस्साम रसः, सामाभावे ऋचःस्तोत्रसाधनत्वासम्भवात्; साम्न उद्गीथो रसः उद्गीथावयवोङ्कारोपास्यतया तस्य प्रकृतत्वात्, स एष उद्गीथः रसानां पृथिव्यादीनां मध्ये उत्कृष्टो रसः रसतमः, परमः शैव्यप्रश्नादिषु परमात्मप्रतीकतया प्रतिपादनादुत्कृष्टः, परार्ध्यः परस्य परमात्मनः अर्धं स्थानमर्हति परमात्माभेदेनोपास्यत्वात् सालग्रामादिवत्, अष्टमः पृथिव्यादिरसानपेक्ष्य। नन्वत्र रसतमत्वगुणवाक्यं नोदाहर्तुमुचितम्।तत्र सिद्धान्तिनाप्युपास्यताया वक्तुमशक्यत्वात् । सिद्धान्तेऽपि परमत्वं परार्ध्यत्वं 'तेनेयं त्रयीविद्या वर्तत' इति वाक्यप्रतिपाद्यं वेदत्रयानुयायित्वं चोद्गीथगुणत्वेनोपास्यमिति न स्वीक्रियते । प्रकृतसन्दर्भप्रतिपाद्यत्वेऽपि 'आपयिता ह वै कामानां भवति समर्धयिता ह वै कामानां भवती'त्याप्तिसमृद्धिगुणयोरिव परमत्वादिषु फलस्यानाम्नानात्, तद्वद्रसतमत्वेऽपि फलानाम्नानादनुपास्यत्वमेव सिद्धान्तेऽपीति चेन्न । परमत्वं परार्ध्यत्वं च व्याख्यातेन प्रकारेण ओङ्कारसामान्यविषयमेव । शैव्यप्रश्नादिष्वोङ्कारसामान्यस्यैव ग्रहणात् 'तेनेयं त्रयीविद्या वर्तत' इत्यपि सामान्योङ्कारविषयमेव । प्रकृतोद्गीथावयवस्योङ्कारस्य वेदत्रयानुयायित्वासम्भवात् । अतो नास्योपास्यगुणत्वं वक्तुं शक्यम् । स्तुतिस्तु ओङ्कारसामान्यगुणकीर्तनेऽपि सामान्यसम्बन्धिन्युद्गीथावयवे प्रणवविशेषे पर्यवस्यति । 'वेतसशाखया चावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताश्शान्ताभिरेवास्य शुचं शमयती' ति वेतसकारणानामपां शान्तत्वगुणकीर्तनेन वेतसस्तुतेर्दर्शनात् । रसतमत्वं तु प्रकृतोङ्कारगतमेव श्रुत्या प्रतिपाद्यत इति न तस्योपास्यगुणत्वानुपपत्तिः । फलानाम्नानं त्वसिद्धम् । अनुक्तवैशेषिकफलेषु कर्मवीर्यवत्तरत्वफलस्य सम्भवात् । अतो युक्तमेव रसतमत्वोदाहरणम् । **कर्माङ्गान्युपादायाश्रवणादिति** । ननु, कर्माङ्गान्युपादायाश्रवणेऽपि 'यस्य पर्णमयी जुहूर्भवति हिरण्मय्यस्स्रुचो भवन्ती'त्यादौ न स्तावकतोपगम्यते, अपि तु गुणविधानार्थत्वम् । एवमत्रापि गुणविधानार्थत्वं किं न स्यादिति चेत्, जुह्वादीनां पर्णमयत्वादेरनुष्ठातुं शक्यतया गुणविधित्वाभ्युपगमेऽपि रसतमत्वपृथिवीलोकाग्नित्वादेरोङ्कारऋक्सामचित्याग्न्युक्थशस्त्रादिष्वनुष्ठातुमशक्यतया इयमेव जुहूरित्यादिवत् स्तावकतोपपत्तेः । न चोपनिषदाम्नातेन रसतमत्वादिना प्रघट्टकान्तराम्नात-

कर्मस्तुतिः कथं स्यादिति वाच्यम् । कर्मसम्बन्ध्युद्गीथादिना कर्मण इहोपस्थिततया उपनिषदाम्नातानामपि रसतमत्वादीनां कर्मस्तावकतोपपत्तेः । **स्तुत्यर्थतायां त्वानर्थक्यमेव स्यादिति** । ननु, रुच्युत्पादनेन प्रवृत्तिविशेषकरत्वात् स्तुतेः कथमानर्थक्यमिति चेत्, उच्यते—यद्यपि विधिभीरुच्युत्पादनमपेक्षितम् , तथापि न तदर्थमर्थवादा एवापेक्षिताः । विधिनापि स्तुतेराक्षेपसम्भवात् । परंतु यत्र अर्थवादा आम्नायन्ते विधिसन्निधौ, तत्र तेषां सार्थक्यायार्थवादैरेव स्तोतव्यमिति नियम उपेयते। अतोऽर्थवादानां स्तावकतायामनर्थकप्रायता स्तुतेरन्यतोऽपि सम्भवादिति, तन्मा भूदित्युपास्यगुणसमर्पकतैव युक्ता। असति निर्विशेषप्रकरणे उपनिषद्गतस्य गुणस्य सम्भृतिद्युव्याप्त्यादिवदुपासनाकल्पकत्वात् । न चानुष्ठेयत्वासम्भवेन कर्मसम्बन्धित्वासम्भवेऽप्युपासनायां कोऽपि विरोधोऽस्ति। अतो रसतमत्वाद्याम्नान 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति सन्निहितोपासनाविधिशेषः । एव'मयं वाव लोक' इत्यादीन्यपि तत्तत्प्रकरणाम्नातोपासनाविधिविशेष इति द्रष्टव्यम् । ननु, यद्यपि विधिभिरेव स्तुतिराक्षेप्तुं शक्या, तथापि तत्तद्गुणकीर्तनपूर्वकमर्थवादैः प्राशस्त्ये प्रतिपाद्यमाने यथा प्ररोचना भवति, नैवं विध्याक्षिप्तस्तुत्या । तथा च प्ररोचनातिशयायार्थवादा विधिभिरपेक्षिता एव । न च तत्रापि विधिसन्निहितानामेव स्तावकतेति नियमः । कामाद्यधिकरणे छान्दोग्यवाजसनेयकाम्नातानां सत्यकामत्वादीनां सर्ववशित्वादीनां च विद्याभेदेऽपि आयतनादिसामान्यादुपस्थितदूरस्थविधिस्तावकतोपगमात् स्तुत्यतिशयलाभाय । एवं च प्रकृते उद्गीथादिभिः कर्माङ्गैः कर्मणां दूरस्थानामपि रसतमत्वादिवाक्यप्रदेशे उपस्थिततया तत्स्तावकता स एष रसानामित्यादिवाक्यानां प्राप्नुवती न निवारयितुं शक्यते । न चैवमपि सन्निहितोपासनाविधिविषयसमर्पकताप्यस्तु, न तु स्तुतिमात्रमेव रसतमत्वादीनां प्रयोजनम् । सन्निहितविध्येकवाक्यताया अप्यावश्यकत्वादिति वाच्यम् । सन्निहितोपासनाविध्येकवाक्यतावश्यंभावेऽपि कर्मविधिस्तावकतायाः क्लृप्तत्वेन तद्वैरूप्याय सन्निहितविधिष्वपि स्तावकताया एवोपगन्तुं युक्तत्वात् । अन्यथा क्वचित् स्तावकत्वं, क्वचिदुपासनाविषयसमर्पकतया विधायकत्वमित्येकस्यैव वाक्यस्य वैरूप्यं स्यादित्याशङ्कानिवृत्त्यर्थम् ॥२१॥

## भावशब्दाच्च ॥२२॥ इति सूत्रम् ।

अयं भावः—रसतमत्वादिकीर्तनस्य हि उपासनाविधिना सन्निधानादेकवाक्यता झटिति प्रतीयते । तत्र च प्रथममुपासनाविषयसमर्पकतयैवान्वय उचितः । न हि तस्यां दशायां कर्मविधिस्तावकता क्लृप्तास्ति । उद्गीथादिभिः कर्मस्मरण-

द्वारा तद्विध्येकवाक्यतापादनस्य विलम्बितत्वात् । तथा च स्वसन्निहितविधिविषयसमर्पकतयोपयुक्तस्य यदि दूरस्थविधौ यथाकथञ्चित् उपस्थिते तत्स्तावकतानुषङ्गिकी भवति चेत्, भवतु नाम । न तु तया प्रथमप्रवृत्तमुपासनाविषयसमर्पकत्वं वारयितुं शक्यम् । कामाद्यधिकरणेऽप्यन्यत्र स्तावकानामपि गुणवाक्यानां स्वसन्निहितोपासनाविधिविषयसमर्पकत्वमुपगतमेवेति नेदं वैरूप्यं दोषावहम् । ननु, यद्युक्तन्यायादेवान्यत्र स्तावकानामपि सन्निहितविधिविषयसमर्पकतोपेयते, तथासति 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति कामानामपि पृथग्वेद्यतावचनमनर्थकमेव स्यात् । तद्धि सत्यकामत्वादिगुणानां निर्विशेषविद्यास्तावकतयोपयुक्तानां दहरविद्यायामप्यवैरूप्याय स्तावकतैव भविष्यतीति शङ्कानिराकरणार्थमिति वक्तव्यम् । गुणानां वेद्यताया 'आत्मानमनुविद्ये'ति गुणिनो वेद्यत्वविधानादेव सिद्धेरिति चेन्न । न्यायप्राप्तस्यैवार्थस्य क्वचिद्विषये वाक्येनानुवादे सति सार्वत्रिकस्यास्य दृढीकरणोपपत्तेः । न्यायदृढीकरणस्यैवान्यार्थलिङ्गदर्शनविधया तत्प्रयोजनत्वोपपत्तेरिति । नन्वत्र भाष्य 'उद्गीथमुपासी'तेत्यादीनि विद्याविधिवाक्यान्युदाहृत्य तेषां विधित्वे कुर्यात् क्रियेतेति न्यायविदां स्मरणं सम्मतित्वेनोदाहृतम् । नेदमुपपद्यते । तस्मिन् वचने उपासीतेत्यादीनां विधित्वस्यानुक्तेः तद्वचनमप्यनुपपन्नम् । न हि कुर्यादित्येवमादयः पञ्चैव शब्दा विधायकाः । 'यजेते'त्यादीनामन्येषामपि विद्यमानत्वादित्याशङ्कां निराकुर्वन् कारिकातात्पर्यमाह—**लिङाद्यर्थो विधिरिति मन्यमाना इति** । आदिपदेन लोट्तव्यदादयो गृह्यन्ते । कारिकायां विधिलक्षणमित्यत्र विधिरिष्टसाधनत्वम् । तस्य लक्षणं प्रतिपादकमेतल्लिङादिस्वरूपम् । तत्र च केवललिङादेः प्रयोगानर्हतया कस्मिंश्चिद्धातौ प्रयोक्तव्ये सर्वधात्वर्थानुगतार्थकाः कृभ्वस्तयः प्रयुक्ताः । पचति पाकं करोति पाकक्रिया भवति अस्तीत्येवंरूपेण तदर्थस्यानुगततया सर्वधातुसमभिव्याहृतलिङादिग्रहणसम्भवात् । 'कुर्यात् क्रियेते'ति करोत्विति लोटोऽप्युपलक्षणम् । क्रियेतेति कर्मणि पृथक् लिङुदाहरणं तु कारकभेदेऽपि लिङो विधिशक्तिकुण्ठनं नास्तीति द्योतनाय । भवेत् स्यादिति लिङ् अस्तिभवत्योरुदाहरणम् । भवत्वस्तु भवितव्यमिति लोट्तव्ययोरप्युपलक्षणम् ॥२२॥

इति स्तुतिमात्राधिकरणम् ॥ ३ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥२३॥

पूर्वस्मिन्नधिकरणे 'स एष रसानां रसतम' इत्यादिसन्दर्भस्य विधिविषयस-

मर्पकतैव तात्पर्यविषयीभूतेत्युक्तं, तर्हि 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुरि'-त्याद्युपाख्यानानामपि 'पारिप्लवे सर्वाण्याख्यानानि शंसन्ती'ति विधिविशेषतैवेति प्रत्यवस्थानात् सङ्गतिः। नन्वश्वमेधस्त्र्यहसाध्यः। तत्र पारिप्लवाख्यं शस्त्रं 'पारिप्लवं शंसन्ती'ति विधाय 'सर्वाण्याख्यानानि पारिप्लवे शंसन्ती'ति यद्यप्यविशेषेण सर्वाण्याख्यानानि विनियुक्तानि, तथापि नायं सर्वशब्दो वैदिकानि कृत्स्नान्याख्यानानि विनियुङ्क्ते, अपि तु वाक्यशेषे 'प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजा तृतियेऽहनि वरुण आदित्य' इत्याख्यानविशेषाणामाम्नानात्तद्विषयतया सङ्कुचद्वृत्तिरयं सर्वशब्दोऽवगम्यते। अतो न पारिप्लवशंसने वेदान्तगताख्यानानां विनियोगस्सम्भवतीति चेन्न। उपक्रमगतस्य सर्वशब्दस्योपसंहारानुसारेण सङ्कोचस्यानुचिततया वाक्यशेषस्य सर्वाख्यानोपलक्षकत्वसम्भवादिति पूर्वपक्षिणोऽभिप्रायः। अयमत्र सिद्धान्ताभिप्रायः—यदि ह्युपक्रमगतस्सर्वशब्दस्सङ्कोचसहिष्णुर्न भवेत्, तदैवं स्यात्। स तु सङ्कोचमपेक्षते। सर्वेषामाख्यानानां प्रयोगस्याशक्यत्वात्। एवञ्चोपक्रमगतस्सर्वशब्दः केषु सङ्कोचनीय इत्यपेक्षायां तदपेक्षितार्थ एव वाक्यशेषेण समर्प्यत इति नात्रोपसंहारानुसार उपक्रमस्य विरोधी; अपि तु अनुकूल इति ॥२३॥

## तथा चैकवाक्यतोपबन्धात् ॥२४॥

विद्याप्रतिपादकवाक्यैस्सहैकवाक्यतोपबन्धाच्च नैषां पारिप्लवार्थत्वमिति सूत्रार्थः। यदि हि पारिप्लवशंसने आख्यानपदानां विनियोगस्स्यात्, तदा तावतैव प्रयोजनाकाङ्क्षाया उपरतत्वेन विद्यास्तावकतया विद्याविधिभिरेकवाक्यता न स्यात्। प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्चेति याज्ञवल्क्येन महर्षिणा अतिप्रियां स्वभार्यां प्रति आत्मविद्योक्ता। अत इयमत्यन्तं हितभूतेति हि प्रतीतौ आख्यायिकायाः प्ररोचनोपयुक्तता स्पष्टैव। बाह्यविषयासक्तानाञ्च पुरुषाणामाख्यायिकायामुच्यमानायां बाह्येभ्यो विषयेभ्यश्चित्तं व्यावर्तते। ततस्समाहितचित्तानामाप्तैर्नित्यादिरूपो लौकिकोऽर्थः प्रतिपाद्यत इति प्रतिपत्तिसौकर्यकरत्वं विरोधिविषयकचित्तव्यावर्तनेन लौकिकाख्यानेषु दृष्टम्। सा रीतिर्वेदान्तेषु योजनीयेति भावः ॥२४॥

इति पारिप्लवाधिकरणम् ॥ ४ ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥२५॥

'परामर्शं जैमिनिरि'ति द्वितीयाधिकरणं पुरुषार्थाधिकरणगुणसूत्रोपाक्षिप्तोर्ध्वरेतसामाक्षेपसमाधानार्थमिति तस्यैव शेषभूतम्। तृतीयचतुर्थाधिकरणे तु स्तुति-

विधिविचारप्रसङ्गागते । अतस्तैस्सह सङ्गतिरस्याधिकरणस्य न वक्तव्येत्यभिप्रेत्याद्याधिकरणप्रयोजनकथनपरतया सूत्रं योजयति—**पुरुषार्थोऽतश्शब्दादित्येतदिति** । पुरुषार्थाधिकरणपूर्वपक्षरीत्या विद्यायाः कर्माङ्गत्वे हि अग्नीन्धनादियुक्तं यदग्निहोत्रादिकर्म भवति, तदपेक्षैव विद्या भवेत् । प्रधानाभावेऽङ्गानुष्ठानानुपपत्तेः । तत्तु नास्ति, किं तु विद्यायास्स्वत एव पुरुषार्थहेतुत्वं साधितम् । अतो न विद्याग्नीन्धनादियुक्तकर्मापेक्षेति भावः । अनेन च सूत्रेण 'ऊर्ध्वरेतस्सु च शब्दे ही'ति सूत्रार्थस्यापि परामर्शात् शङ्कान्तरमपि व्यावर्तितं भवति । आत्रेयं शङ्का—विद्यायाः कर्माङ्गत्वाभावेन तस्याः प्रधानतया कर्मानपेक्षत्वेऽपि कर्मणां विद्याङ्गत्वाद्विद्यया कर्माण्यपेक्ष्यन्ते । न च विद्यायाः कर्माङ्गत्वे प्रमाणाभावः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति वाक्येन विद्यायां कर्मणामङ्गत्वप्रतिपादनात् । न चानेन वाक्येन विविदिषायामेव कर्मणां विनियोगः । आख्यातोपात्तभावनाया भाव्यापेक्षायां 'विविदिषन्ती'त्यत्र प्रकृत्या प्राधान्येन उपात्तोऽर्थस्तथान्वेतीति तत्र प्राधान्येन वेदनेच्छैव प्रतिपाद्यते, न तु वेदनम् । सन्नन्तप्रकृतौ सन्प्रत्ययोपात्तमर्थं प्रति विदिधातूपात्तस्यार्थस्य विशेषणत्वादिति वाच्यम् । विषयसौन्दर्यज्ञानजन्यायामिच्छायां कर्मणामनुपयोगात् । अपि च प्रधानार्थस्यैवार्थान्तरेणान्वय इति सामान्यन्यायमपेक्ष्य इच्छेष्यमाणसमभिव्याहारे विधेयभावनाया भाव्यापेक्षायामिष्यमाणमेव भाव्यत्वेनान्वेतीति स्वर्गकामो यजेतेत्यादिवाक्येषु क्लृप्तेन विशेषन्यायेन प्रबलेन सामान्यन्यायस्य बाधिततया वेदन एव कर्मणां विनियोगः । प्रमाणजन्ये वेदनस्वरूपे च कर्मणामुपयोगासम्भवात् ज्ञानेन मोक्षे जनयितव्ये सहकारीणि तानि सम्पद्यन्त इति अस्ति ज्ञानकालेऽपि कर्मसाहित्यमिति । अयमत्र परिहारः—यत एवोर्ध्वरेतस्सु परमहंसेषु विद्या दृष्टा, अतस्तया मोक्षरूपे फले जननीये नाग्नीन्धनाद्यपेक्षा । न 'च विविदिषन्ती'ति वाक्यं कर्मापेक्षाबोधकम् । वस्तुसौन्दर्यज्ञानलभ्यायामपीच्छायां प्रतिबन्धकीभूतपापनिरासद्वारा कर्मोपयोगसम्भवेन प्रधानतयोपस्थितायां विविदिषायामेव तेन कर्मणां विनियोगात् । न चेच्छेष्यमाणसमभिव्याहारे इष्यमाणस्यैव भाव्यतेति न्यायः प्रकृते विविदिषायां कर्मविनियोगं प्रतिबध्नाति । 'स्वर्गकामो यजेते'त्यत्र हि विधिनेष्टसाधनत्वे बोधिते भावनाभाव्यस्य रूपद्वयमवगतं भवति । साध्यत्वमिच्छाविषयत्वं चेति । तत्र स्वर्गस्येच्छाविषयत्वं शाब्दम् । भाव्यत्वं तु कामनयार्थाक्षिप्तम् । सिद्धे इच्छाविरहात् । कामनायां तु नोभयम् । अतः कामनामुल्लङ्घ्य स्वर्गपदमेवेष्टविशेषाकाङ्क्षापूरकं तत्रोपगतम् । यद्यपि च यागे साध्यत्वमुपस्थितं, तथापि तस्य गौणतया मुख्यतया वा स्वर्गसाधनत्वान्वयात् प्राक् इष्टत्वं न सिद्धमिति, सोऽपि तत्र भाव्यत्वेन नान्वेति । विविदिषन्तीत्यत्र त

धातूपात्तायाः विविदिषाया भावनायां साध्यत्वमुपस्थितमेव । श्रवणादिप्रवृत्तिसंपादकतया इष्टसाधनत्वादिष्यमाणत्वमपि तस्यार्थिकमस्त्येव । एवं च प्रधानतयोपस्थितां तां परित्यज्य न वेदनस्य साध्यत्वेनान्वय उचितः । यदि च यज्ञादिगोचरप्रवृत्तिजनकवेदनेच्छाव्यतिरेकेण ज्ञानसाधनश्रवणादिप्रवृत्तिजनिका यथा वेदनेच्छा प्रसिद्धा , एवं यागगोचरप्रवृत्तिजनकस्वर्गकामनाव्यतिरेकेण स्वर्गसाधनगोचरप्रवृत्तिजनिका यदि काचित् स्वर्गकामना पुरुषेष्विह प्रसिद्धा स्यात, तदा विविदिषान्यायेन स्वर्गकामनाया भाव्यत्वं कल्प्येतापि । न च तदस्ति । अतोऽपि नात्र स्वर्गकामवाक्यन्यायः प्रवर्तते । अतो न विविदिषानन्तरं कर्मापेक्षेति न निर्विशेषविद्यया स्वकाले कर्माक्ष्यपेक्ष्यन्त इति ॥२९॥

इति अग्नीन्धनाद्यधिकरणम् ॥५॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥२६॥

पूर्वाधिकरणोक्तं विविदिषार्थत्वं कर्मणां पुनरप्यत्राक्षिप्यते । विविदिषाया यज्ञादिफलत्वं हि स्वर्गादिवन्न स्वतः पुरुषार्थतया सम्भवति । सुखरूपत्वाभावात् , अपि तु मोक्षसाधनज्ञानजनकतया गौणपुरुषार्थत्वेनेति वक्तव्यम् । विविदिषार्थेषु कर्मस्वधिकारश्च विविदिषागोचरेच्छावत एव वक्तव्यः। तत्र वक्तव्यं विविदिषेच्छा किं वेदनेच्छायां सत्याम् , उत तदभावेऽपि । नाद्यः । यदि कर्मकरणात् प्रागेव विविदिषेच्छासिद्ध्यर्थं वेदनेच्छोपगम्यते , तर्हि प्रागेव विविदिषायाःसिद्धत्वान्निरर्थकमेव यज्ञादिकं विविदिषार्थत्वे स्यात् । न द्वितीयः । फलेच्छां विना साधनेच्छाया असम्भवेन वेदनेच्छाया असत्त्वे विविदिषेच्छाया एवासम्भवात् । अतो विविदिषोद्देशेन कर्मणां विधानासम्भवात् 'अश्वेन जिगमिषति असिना जिघांसतीत्यादाविवोपसर्जनीभूतवेदनसाधनतयैव यज्ञादीनां विधिरुपेय इति पूर्वः पक्षः । अयमत्र परिहाराभिप्रायः—लोके हि भोजनादिगोचरा द्विविधेच्छा प्रसिद्धा । एका क्षुत्प्रतिबन्धकीभूतव्याधिदशायामपि भोजनगतरसानुसन्धानायत्ता। सा न तृप्तिपर्यन्तभोजनगोचरप्रवृत्त्युपयोगिनी । द्वितीया त्वौषधादिना व्याध्युपशमे सति क्षुद्दुःखासहिष्णुतादशायां जायमाना तीव्रा तृप्तिशरीरपुष्ट्याद्युपयोगिभोजनपर्यन्तप्रवृत्त्युपयोगिनी । तत्र भोजनं तृप्त्यादिसाधनमिति ज्ञानवतो व्याधिग्रस्तस्य भोजनेच्छायां सत्यां तादृशभोजनमुत्कृष्टेच्छासाध्यमिति ज्ञानादुत्कृष्टेच्छागोचरं पुनरपीच्छान्तरमुत्कृष्टेच्छासाधनौषधसेवनप्रवृत्तिजनकमिति प्रसिद्धम् । न चौषधसेवनं व्याध्युपशमे कारणं, न बुभुक्षायाम् । सा तु भोजनगतेष्टसाधनताज्ञानादेव भवतीति वाच्यम् । सत्यपि भोजनगतेष्टसाधनताज्ञाने उत्कटेच्छाया अदर्शनेन व्याधेस्तत्र प्रतिबन्धक-

तया व्याधिनिवृत्त्यनन्तरमुपलभ्यमानायामुत्कटेच्छायां प्रतिबन्धापनयनमुखेनौषधसेवनस्य तत्र करणत्वावश्यम्भावात् । एवं च 'तरति शोकमात्मविदि' तिवाक्यानुसारेण प्रथमतः आत्मजिज्ञासायां सत्यामात्मज्ञानसाधनश्रवणाद्युपयोगिनिदिध्यासनपरिपाकपर्यन्तं सततमुदित्वरी विविदिषा प्रतिबन्धकीभूतपापापगमे सत्येव भविष्यतीत्यवगच्छतः पापनिवृत्तिद्वारा विविदिषाकामस्याधिकारिणः सम्भवान्न विविदिषोद्देशेन कर्मविधाने काचिदनुपपत्तिरस्तीति सिद्धम् । विद्यया मोक्षे जनयितव्ये न कर्मापेक्षा । विविदिषाद्वारा स्वोत्पत्तौ तु विद्यायाः कर्मापेक्षेति । वेदानुवचनं नित्याध्ययनं, तपसानाशकेन अनशनरूपेण । अनशनं च युक्ताहारत्वम् । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या सर्वेषां वेदानां ब्रह्मणि तात्पर्यमिति ब्रह्मप्रतिपादकतोच्यते । सा न कर्मकाण्डे साक्षात् सम्भवति, अपि तु कर्मणां विविदिषाद्वारा आत्मज्ञानोपयुक्ततया कर्मभागस्यापि परम्परया समर्थनीया । एवं 'तपांसि सर्वाणि च यद्वदन्ती'त्यपि तपसां चित्तशुद्धिद्वारा तद्वेदनोपयोगितया कर्तृत्वोपचारः । पद्यते गम्यत इति पदं ब्रह्माख्यम्, ओमित्येतदित्योङ्कारस्य तदुपासनोपयुक्ततया तत्त्वेन निर्देशः । कषायः पापं, तस्य पक्तिर्नाशः, तत्साधनमिति यावत् । परमा गतिर्मोक्षः, तत्साधनमिति यावत् ॥ २६ ॥

## शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥२७॥

ननु, विविदिषोः 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दित्यादिशास्त्रेणाचार्यशुश्रूषापूर्वकं श्रवणादिरूपस्यानेकव्यापारस्य विधानेन कथं बाह्याभ्यन्तरकरणनिग्रहरूपं शमादिकमनुष्ठेयं, कथं वाग्निहोत्रादिकर्मानुष्ठानम् । अत'स्तमेतं वेदानुवचनेने'त्यादिवाक्यं 'तस्मादेवंविच्छान्तो दान्त' इत्यादिवाक्यं च वर्तमानापदेशतया विद्यास्तुत्यर्थमेवेति सूत्रव्यावर्त्यां शङ्कां दर्शयति—**यदि कश्चिन्मन्येतेति** । **तस्मादिति** । 'प्रकृतप्रशंसापरिग्रहादि'ति पूर्ववाक्ये हि तं विदित्वा न लिप्यते कर्मणा पापकेनेत्यात्मज्ञानस्य फलमभिहितम् । तदिह परामृश्यते प्ररोचनार्थं--यस्मादात्मज्ञानं महाफलं, तस्माच्छमादिसाधनैरात्मज्ञानं सम्पादयेदिति । तत्र च यदि विधिविवक्षा न स्यात्, प्ररोचना व्यर्थैव स्यात् । आत्मज्ञानस्य चाविधेयतया तदनुवादेनात्र शमादिकमेव विधीयते । न च तस्य श्रवणादिविद्यासाधनानुष्ठानविरोधिता । तद्व्यतिरिक्तव्यापारेभ्य एवेन्द्रियनिग्रहस्य विवक्षितत्वात् । **पौष्णं पेषणं विकृतौ प्रतीयते इत्यादिविचार इति** । दर्शपूर्णमासप्रकरणगतं 'पूषा प्रपिष्टभाग' इति वाक्यम् । तच्चापूर्वत्वात् पूषदेवताके कर्मणि पेषणविधायकम् । पुरोडाशे पेषणस्य

प्राप्तत्वेऽपि चरौ तन्न प्राप्नोति । दर्शपूर्णमासयोश्च पूषदेवताककर्माभावाद्यत्र विकृतिषु पूषा देवता, तत्र तस्योत्कर्षः कर्तव्य इति । यच्चोक्तं विरोधि विविदिषोः कर्मानुष्ठानं न सम्भवतीति, तत्राह—**विविदिषासंयोगात्त्विति** । तथा च विविदिषोत्पत्तेः प्रागेव कर्मणामनुष्ठेयतया श्रवणादिकाले तेषां प्रसक्तिरेव नास्तीति न विरोधः ॥२७॥

इति सर्वापेक्षाधिकरणम् ॥६॥

# सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

वर्तमानापदेशत्वेऽप्यपूर्वत्वाद्विद्यार्थं यज्ञादिकं शमादिकञ्च विधेयमिति पूर्वाधिकरण उक्तम् । तथासति 'न ह वा एवंविदि किञ्चनानन्नं भवती'त्यत्रापि प्राणविद्याङ्गतया सर्वान्नानुमतिर्वर्तमानापदेशत्वेऽप्यपूर्वत्वाद्विधेया भवत्विति प्रत्यवस्थानात् सङ्गतिः । **नन्वेवंसतीति** । भक्ष्याभक्ष्यविभागशास्त्रव्याघातः अशक्यतायां अप्युपलक्षणम् । यत् सर्वैः प्राणिभिरद्यते, तत्सर्वं प्राणस्यान्नमिति प्रतिपाद्य 'न ह वा एवंविदि किञ्चनानन्नं भवती'त्याम्नातम् । तथा च विधिपक्षे सर्वप्राणिभिर्यदद्यते, तत् प्राणस्य सर्वमन्नमिति ज्ञानवता अदनीयमित्यर्थः । न च गजादिभिर्भक्ष्यमाणं वटकाष्ठादिकमुपासकेन भक्षयितुं शक्यम् । **सामान्यविशेषभावादिति** । 'सर्वं भक्षणीयमिति' विधिबलादेव वटकाष्ठादिकमपि पेषणादिना अदनीयतामापाद्य किञ्चित् भक्षणीयमित्यपि द्रष्टव्यम् । **वामदेवविद्याविषयेणेति** । 'स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेदे'तिवामदेव्ये साम्नि मैथुनदृष्टिर्विहिता । तदङ्गतया 'न काञ्चन परिहरेत्तद्व्रतमि'ति वाक्येन कामतस्समीपमागतां कामपि स्त्रियं न परिहरेत्तस्याः कामं सम्पादयेदि'ति नियमोऽङ्गत्वेन विहितः । **तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवाद इति** । 'न ह वा एवंविदि किञ्चनानन्नं भवती'त्यत्र सर्वं प्राणविदादनीयमिति स्पष्टो विधिर्नोपलभ्यते, अपि तु कल्पनीयः । न च प्राणस्य सर्वमन्नम् । अतः प्राणोपासकस्यापि प्राणभूतत्वात् सर्वमन्नमित्येवं प्राणज्ञानस्तुतिपरत्वेन वाक्यस्य भक्ष्याभक्ष्यविभागशास्त्रबाधं विनैव उपपत्तौ सम्भवन्त्यां विभागशास्त्रबाधेन विधिकल्पनं न न्याय्यमिति भावः । उपासकेनापि भक्ष्याभक्ष्यविभागशास्त्रादरः कर्तव्य इत्यत्र लिङ्गप्रदर्शनपरं सूत्रं व्याचष्टे—**तद्दर्शयतीति** । **मटचीहतेषु कुरुष्वित्यस्मिन् ब्राह्मण इति** । एवं हि श्रूयते—'मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे तं होवाच नेतोऽन्ये विद्यन्ते यच्च ये म उपनिहिता इति एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादितिहोवाच न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपा-

नमिति सह खादित्वा अतिशेषाञ्जायाया आजहार साग्र एव सुभिक्षा बभूव । तान् प्रतिगृह्य निदधौ सह प्रातस्सञ्जिहान उवाच यत् बतान्नस्य लभेमहि लभेमहि धनमात्रं राजासौ यक्ष्यते समासर्वैरार्त्विज्यैर्वृणीतेति तञ्जायोवाच हन्त पत इमे कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाये'ति । मठच्यः सस्यविरोधिनः कीटविशेषाः, आटकी असञ्जातयौवना । इभ्यो हस्तिपकः । प्रद्राणकः क्षुत्पीडितः, कुल्माषाः माषविशेषाः । यच्चात्र राशौ मे मया 'अनुपानं जलं गृहाणे'ति इभ्यवचनम् । 'उच्छिष्टं वा' इति चाक्रायणवचनं, न स्विदेतेऽपीति पुनरिभ्यवचनं, नं वा अजीविष्यमिति चाक्रायणवचनं, काम इच्छाधीनम् अतिशेषानवशिष्टान् सुभिक्षा लब्धान्ना सञ्जिहानः शयनं विसृजन् अन्नस्यान्नम् । एतदाख्यायिकार्थं संगृह्णाति—**चाक्रायणः किलर्षिरित्यादिना** । नन्वनेन ब्रह्मविदश्चाक्रायणस्य भक्ष्याभक्ष्यविभागानुमतिस्सूच्यते । अतो नेदं प्राणविदो भक्ष्याभक्ष्यविभागशास्त्रादरे लिङ्गमिति चेन्न । ब्रह्मविदोऽपि भक्ष्याभक्ष्यविभागशास्त्रादरश्चेत्, प्राणविदस्सोऽस्तीति किमु वक्तव्यमिति भावः ॥२८॥

## अबाधाच्च ॥२९॥

पूर्वसूत्रेण लिङ्गदर्शनानुसारेण 'न ह वा एवंविदि किञ्चनानन्नं भवती'त्यादेरर्थवादत्वमेवाश्रयणीयमित्युक्तम् । अनेन तु विभागशास्त्राबाधायापि तस्यार्थवादतैवाश्रयणीयेति प्रतिपाद्यते । आहारशुद्धौ अभक्ष्यवर्जनेन संपादितायां सत्त्वस्यान्तःकरणस्य शुद्धिर्भवति ॥२९॥

## अपि च स्मर्यते ॥३०॥

## शब्दश्चातोऽकामकारे ॥३१॥

विदुषोऽविदुषश्चापत्काल एव नियमपरित्यागाम्नानात् अनापदि सर्वेणापि भक्ष्याभक्ष्यनियमोऽनुष्ठेय इति गम्यते । 'मद्यन्नित्यं ब्राह्मण' इति गौतमवचने 'वर्जयेन्मधुमांसगन्धमाल्ये'त्यादिपूर्ववाक्याद्वर्जयेदित्यनुषज्यते । अत्र नित्यमितिपदादप्रतिसमाधेयव्याधिं विना न ग्राह्यं मद्यमिति द्योत्यते । सुरयैव प्रतिसमाधेये व्याधौ तु तदनुमतिरस्त्येव । 'गौडीं मध्वीं सुरां पैष्टीं पीत्वा विप्रस्समाचरेत् । तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमादि'ति बार्हस्पत्यवचने लघुप्रायश्चित्तविधानस्य भिषक्क्रियाविषयताया आवश्यकत्वात् । अन्यथा सुरापाने मरणान्तप्रायश्चित्तविधानविरोधापत्तेः । 'एतान्येवातुरस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति, यानि चान्यान्यवप्रकाराणि तेष्वप्यदोष' इति अभक्ष्यभक्षणे भिषक्क्रियायामदोषत्वस्मरणमपि लघुप्रायश्चित्ताभिप्रायम् ॥३०॥३१॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ६ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥३२॥

यथा ऽव्यवस्थावचनविरोधात् सर्वान्नानुमतिवाक्यमर्थवादः, एवं नित्यत्वप्रतिपादकवचनविरोधात् कर्मणां न विविदिषार्थत्वं सम्भवतीति प्रत्यवस्थानात् सङ्गतिः। **नित्यानित्यसंयोगविरोधादिति** । ननु, यद्येकस्यैव वचनस्य नित्यताबोधकत्वं विविदिषार्थत्वबोधकत्वञ्चोच्येत, तथासत्येकेन वचनेनार्थद्वयस्य बोधयितुमशक्यतया विरोधस्स्यात्, तत्तु नास्ति । यावज्जीवादिवाक्येन यज्ञादीनां नित्यता बोध्यते । विविदिषन्तीतिवाक्येन विविदिषार्थता बोध्यते । अतो न विरोधः । दृष्टञ्च वचनद्वये सति एकस्योभयार्थत्वम् । यथा 'खादिरे पशुं बध्नाति खादिरं वीर्यकामस्ये'ति वचनद्वयानुसारेण खादिरतायाः क्रतौ नित्यत्वं, कामार्थत्वञ्चेति चेत्, एवं मन्यते—एतावता हि प्रमाणस्य विरोधः परिहृतो भवति । एकस्य वचनस्यार्थद्वयपरतानुपगमात् । प्रमेयविरोधस्तु न परिहृतः । न ह्येकस्यैवार्थस्यावश्यकत्वमनावश्यकत्वञ्च सम्भवतीति । एवञ्च खादिरताया अप्युभयार्थत्वमाक्षिप्तमेव भवति । तथा चार्थविरोधेन वचनद्वयप्रामाण्यासम्भवात् वर्तमानापदेशयुक्तं विविदिषावाक्यमेवार्थवाद इति पूर्वः पक्षः । अयमत्र सिद्धान्ताभिप्रायः—एकस्यैव पदार्थस्योपाधिभेदेनावश्यकत्वानावश्यकत्वे न विरुध्येते । तथा चाग्निहोत्रादीनां जीवनादिनिमित्तकत्वेनावश्यकत्वं, विविदिषासाधनत्वाकारेणानावश्यकत्वं, तथैव खादिरत्वादीनामपि क्रतूपकारार्थत्वेन क्रतावावश्यकत्वं, कामार्थत्वेनानावश्यकत्वमिति । अत्र कर्मणां विविदिषार्थत्वे उक्ते गूढाभिसन्धेः पूर्वपक्षिणश्चोद्यं 'तर्हि न नित्यते'ति । तन्निवृत्त्यर्थश्चकारो 'विहितत्वाच्चे'ति । अपिशब्दात् विविदिषाकर्मत्वसमुच्चयः । तर्हि नित्यानित्यसंयोगविरोधात् विविदिषार्थत्वं न सम्भवतीति शङ्कापरिहारार्थं सूत्रम् ॥३२॥

## सहकारित्वेन च ॥३३॥ इति ॥

इदमनुष्ठेयानि स्युरिति पदाध्याहारेण योजयति—**विद्यासहकारीणीति**। सहकारित्वपदं प्रकृतत्वात् विद्यासहकारित्वपरम् । नन्वविधिलक्षणत्वेऽपि विद्या यथा स्वोत्पत्ताविति कर्तव्यतामपेक्षते, एवं स्वफलेऽपीतिकर्तव्यतापेक्षा किन्न स्यादित्यत आह—**तथाचोक्तमिति** । विविदिषावाक्यस्य ज्ञानेन फले जनयितव्ये कर्मापेक्षताबोधकतायास्तत्र निरस्तत्वादिति भावः ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥३४॥

पूर्वस्मिन्नधिकरणे विविदिषार्थत्वेन यज्ञादिकं विधेयमित्युक्तम् । तर्हि तेषां यज्ञादीनां प्रकरणान्तरेण मासाग्निहोत्रादिवत् प्रसिद्धयज्ञादिभ्यो भेदोऽभ्युपग-

न्तव्य इति प्रत्यवस्थानात्सङ्गतिः । विविदिषोद्देशेन विधेयानि यज्ञादीनि प्रसिद्धयज्ञादिभ्यो भिन्नानि, उत तान्येवेति सन्देहः । तत्र पूर्वः पक्षः—यथा 'मासमग्निहोत्रं जुह्वती'त्यादिष्वनुपादेयस्य मासस्य कर्तव्यताया बोधयितुमशक्यतया मासेऽग्निहोत्रादिकर्तव्यताबोधनात् विहितस्य च विधानानुपपत्तेः प्रसिद्धाग्निहोत्रादिभ्यः कर्मान्तराण्येव 'मासमग्निहोत्रं जुह्वती'त्यादिविधिविधेयानि, एवमत्रापि फलरूपतया विविदिषायाः कर्तव्यताया बोधयितुमशक्यत्वात् तामुद्दिश्य यज्ञादीन्येव विधेयानीति विहितविधानानुपपत्त्या प्रसिद्धयज्ञादिभ्यः कर्मान्तराण्येव । न च मासं जुह्वतीत्यत्राख्यातेन विधेयसमर्पणम्, इह तु यज्ञेनेत्यादिसुबन्तैः । अतो न मासाग्निहोत्रन्यायोऽत्र प्रवर्तत इति शङ्कनीयम् । विहितस्य विधानानुपपत्तेः । कर्मभेद इति न्यायस्य तौल्ये सत्येतादृशवैषम्यस्याप्रयोजकत्वात् । न च अनुपादेयगुणसमभिव्याहृतासन्निधाने सत्यपि यज्ञादिपदैर्दूरस्थकर्मप्रत्यभिज्ञानम् । अतः फलसम्बन्धमात्रपरं विविदिषावाक्यम् । 'मासमग्निहोत्रं जुह्वती'त्यत्र तु आख्यातेन दूरस्थकर्मप्रत्यभिज्ञानाभावादुत्पत्तिविधिरेव सम्भवतीति वाच्यम् । अनुपादेयगुणसमभिव्याहृतासन्निधेः प्रत्यभिज्ञाविच्छेदे सति यज्ञादिनाम्नस्तद्पवादकत्वं, न तु जुह्वतीत्याख्यातस्येत्यत्र नियामकाभावात् । अतः प्रकरणान्तरन्यायेन भिन्नान्येव यज्ञादीनीति । **सिद्धवदुत्पन्नरूपाण्येवेति** । कर्मकाण्डे यद्रूपं सिद्धवद्वर्तते, तदेव स्वीकृत्य इह रूपान्तरमप्रतिपाद्येत्यर्थः । अयं भावः—यदि हीह यज्ञादिपदोदितकर्मान्तरोत्पत्तिस्स्वीक्रियेत, तदा तानि किं मुख्ययज्ञरूपाणि, उत यज्ञादीतिकर्तव्यताकत्वात् यज्ञादिपदेन गौणतया प्रतिपाद्यान्ययज्ञरूपाण्येव । नाद्यः । प्रसिद्धयज्ञादिभेदकस्य द्रव्यदेवतादिरूपस्यापर्यवसानात् । न ह्यत्र उपदेशत इतिकर्तव्यता लभ्यते । नाप्यतिदेशतः । यज्ञत्वस्य 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुस्सोम' इत्यनेनासाधारणत्वावगमेन कस्याप इतिकर्तव्यता भवतीति विनिगमनालाभात् । अत एव न द्वितीयोऽपि । अपि च अग्निहोत्रादीतिकर्तव्यताप्राप्तौ यज्ञपदप्रवृत्तिनिमित्तस्य द्रव्यदेवतासम्बन्धादेरिहापि सम्पन्नतया गौणयज्ञत्वानुपपत्तेः । एवं वेदानुवचनादिकमपि प्रसिद्धवेदानुवचनादिभ्यो भिन्नतया निर्धारयितुमशक्यम् । अतो नेह प्रकरणान्तरन्यायावसरः । ततश्च उक्तानुपपत्त्या दूरस्थानां कर्मणां बुद्धौ विपरिवर्तमानत्वे सति तान्येवेह विविदिषार्थत्वेन विहितानि भवन्ति । नापीह प्रसिद्धाग्निहोत्रादिप्रयोगाद्विविदिषाप्रयोगोऽपि भिद्यते, अपि तु यथा स्वर्गकामस्याग्निहोत्रप्रयोगेन पृथङ्नित्यप्रयोगः स्वर्गार्थप्रयोगान्नित्यप्रयोगवैलक्षण्याभावेन प्रयोगद्वयतन्त्रता, एवं विविदिषाप्रयोगस्य नित्यप्रयोगस्य च तन्त्रता बोध्या । अनाश्रि-

तः कर्मफलमित्युत्तरार्धे 'स सन्न्यासी च योगी चे'ति स्तुतिबलान्निरभिसन्धिककर्म-कर्तुर्मुमुक्षुत्वमवगम्यते । तस्यैव च कर्मणः 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत' इत्युत्तरश्लोके योगपदोदितायां चित्तशुद्धौ विनियोग उच्यते । तथा च गीतावचने 'कर्मफलमनाश्रित' इत्युक्त्या प्रसिद्धानि यान्यग्निहोत्रादीनि फलवन्ति कर्माणि, तेष्वेव फलाभिसन्धिपरित्यागे ज्ञानार्थतावगमान्मुमुक्षुणा क्रियमाणानि कर्माणि न प्रसिद्धकर्मभ्यो भिद्यन्त इति सिध्यति । तदैकार्थ्याय विविदिषावाक्येऽपि प्रसिद्धानामेव कर्मणां विनियोगस्स्वीकर्तव्यः ; 'अनाश्रितः कर्मफलमि'ति वचनानुसारेण काम्यानामपि कर्मणां ज्ञानार्थतास्तीत्यपि सिध्यतीति द्रष्टव्यम् । **यस्यैते चत्वारिंशत्संस्कारा इति** । प्रसिद्धान्येवाग्निहोत्रादीनि प्रस्तुत्येदं वचनम् । तत्र चाग्निहोत्रादिसंस्कारस्य क्वोपयोग इत्यपेक्षायामुत्तरवाक्यं—'स ब्रह्मणस्सायुज्यं सलोकतां जयती'ति । ततश्च सायुज्यस्य विद्यैकसाध्यतया विद्याद्वारत्वे आवश्यके प्रसिद्धानामेवाग्निहोत्रादीनां विद्योपयोग उक्तो भवतीति तत्सिद्धं प्रसिद्धानामेवाग्निहोत्रादीनां विविदिषावाक्ये ग्रहणेन तेषामाश्रमकर्मत्वं विद्यासहकारित्वं चेति ॥३४॥

## अनभिभवं च दर्शयति ॥३५॥

'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दत' इत्यत्रात्मनो नाशाप्रसक्त्या आत्मा न नश्यतीत्यनेनात्मज्ञाननाशाभावो विवक्षितः । यथाकथञ्चिदपि हि उत्पन्नमप्यात्मज्ञानं ब्रह्मचर्यादिनियमरहितस्य साक्षात्कारपर्यन्ततां न प्राप्नोतीति स एव ज्ञाननाशः । तथा च यथा ज्ञानेन ब्रह्मचर्यादिसाधनानि रागादिभिरनभिभवार्थमपेक्षितानि, एवं कर्माण्यप्यपेक्षितानीति तात्पर्यम् ॥३५॥

इति आश्रमकर्माधिकरणम् ॥ ८ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥३६॥

अनन्तरातीताधिकरणे 'सहकारित्वेन चे'तिसूत्रोक्तं यदाश्रमकर्मणामेव विद्यासहकारित्वं, तद्विद्यार्थकर्मणामाश्रमकर्मभेदाशङ्कयाक्षिप्याभेदेन समाहितम् । अतः तदाश्रमकर्मणां विद्यासाधनत्व एवान्तर्भूतमिति व्यवहिताधिकरणेनास्य सङ्गतिः । तत्राश्रमकर्मापीत्युक्त्याश्रमकर्मबहिर्भूतानां विधुरादिकर्मणां विद्योपयोगो नास्तीति प्रतिभाति । तत्परिहारार्थत्वमस्येति सङ्गतिः । **विधुरादीनामिति** । विधुरोऽत्र मृतपत्नीकः । आदिपदेन सपत्नीक एवान्धपङ्ग्वादिरग्निहोत्रादिकर्मानधिकृतो विवक्षितः । अन्यतमाश्रमप्रतिपत्तिहीनानामित्यनेन समाप्तब्रह्मचर्या अकृतदारपरिग्रहाः स्नातका विवक्षिताः । **किं विद्यायामधिकारोऽस्तीति** । नन्वत्र यदि विद्यापदं निर्विशेषविद्याभिप्रायं, तर्हि सिद्धान्ते रैक्वोदाहरणमसङ्गतम् । तस्य सविशेषसं-

वर्गविद्यानिष्ठत्वात् । कीदृग्विधश्च विद्याधिकारो विवक्षितः । यदि विविदिषारूपः, स तु विधुराणामपि सम्भवति । वस्तुसौन्दर्यलभ्याया वेदनेच्छाया नियन्तुमशक्यत्वात् । उत्कटेच्छापि तेषु जन्मान्तरानुष्ठितकर्मवशादस्मिन् जन्मनि अग्निहोत्राद्यभावेऽप्युपपद्यत इति न तेष्वग्निहोत्राद्यभावेन तस्यापवादो वक्तुं शक्यते । नापि विद्यानुष्ठानोपयुक्तविशेषणवत्त्वमधिकारः निर्विशेषविद्यायामुपपद्यते । तस्याननुष्ठेयत्वादिति चेत्, उच्यते । विद्यापदं सविशेषनिर्विशेषविद्यासाधारणम् । विद्याधिकारश्च विद्याफलभाक्त्वम् । तत्र सविशेषविद्यायां सहकारिण्यग्निहोत्रादिकर्माणि । तेषां विधुरादेरधिकारासम्भवान्न विद्याफलभाक्त्वं वक्तुं शक्यते । निर्विशेषविद्योत्पत्त्युपयोगीनि चाग्निहोत्रादीनि श्रवणादीनि च । तान्यपि न विधुरादीनां सम्भवन्ति । अग्निहोत्रादिषु गृहस्थस्यैवाधिकारात् । निर्विशेषश्रवणादिषु यतेरेवाधिकारात् । तथा च निर्विशेषविद्योत्पत्तेरेव तत्रासम्भवाद्दूरत एव विद्याफलम् । यद्यपि विधुरादीनां वर्णमात्राधिकारीणि जपादिकर्माणि सम्भवन्ति, तथापि न तेषां विविदिषादिषूपयोगः । 'अनाश्रमी न तिष्ठेत दिनमात्रमपि द्विज' इत्यादिनिषेधानुसारेण तेषां विद्याभावस्योन्नयनादिति पूर्वपक्षाभिप्रायः ॥ ३६ ॥

**अपि च स्मर्यते ॥३७॥** सुगमम् ॥३७॥

## विशेषानुग्रहश्च ॥३८॥

अयं भावः—सविशेषविद्यासु ह्यग्निहोत्रादिकर्मणां सहकारित्वं यथा दर्शपूर्णमासादिषु प्रयाजादीनामङ्गतया विशिष्य तदेकप्रयोगान्तर्गततया विधानात् भवति, नैवं विशेषेणविधिप्रयुक्तम्, अपि तु 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतश्नुते' इति कर्मसामान्यस्य तत्तदधिकारोचितस्य पृथक्प्रयुक्तस्यैव विद्याप्रतिबन्धकीभूतपापनिर्हरणेन । तथा च विधुरादिकृतकर्मणामपि 'धर्मेण पापमपनुदती'ति शास्त्रानुसारेण पापनिवर्तकतायास्सिद्धतया विद्यासहकारित्वेन कृतानां विद्याप्रतिबन्धकीभूतपापनिवर्तकत्वोपपत्तेस्सम्भवति सविशेषविद्योपयोगः । विविदिषार्थत्वमपि यज्ञादिसामान्यस्यावगम्यते, न त्वग्निहोत्रादियज्ञस्यैव । सम्भवति च जपयज्ञादिकं दानादिकं च विधुरादौ । अतस्तेषां विविदिषोत्पत्त्युपयोगिकर्मसु नानुपपत्तिः । 'जप्येनैव तु संसिध्येदि'ति वचनोदाहरणं तु जपादिषु ब्राह्मण्यमात्रस्यैवापेक्षा, न तु गार्हस्थ्याद्याश्रमविशेषापेक्षेति प्रदर्शयितुम् । तत्र मैत्र इत्यहिंसाप्रधानत्वात् सर्वसुहृत्त्वं जपमात्रनिष्ठस्य विवक्षितम् । विधुरादीनामस्मिन् जन्मनि विविदिषाप्रयुक्तकर्माभावमुपेत्याप्याह—**जन्मान्तरानुष्ठितैरपीति** । यद्यपि पूर्वपक्षिणोऽभिमतं निर्विशेषगोचरश्रवणादौ यतिमात्रा-

धिकारे न विधुरादीनां प्राप्तिरिति, तत्राह—**दृष्टार्था चेति** । अयं भावः—यद्यपि मुख्योऽधिकारो यतीनां श्रवणादिषु । सन्न्यासनियमादृष्टोपबृंहितस्यैव श्रवणस्यापरोक्षज्ञानपर्यवसायित्वात्, तथापि त्रैवर्णिकानां तत्र प्रतिषेधाभावात् ज्ञानस्य दृष्टतया श्रवणादिभ्यस्तदर्थं तत्र प्रवृत्तौ नानुपपत्तिः। दृश्यते ह्युपनिषत्सु यतिव्यतिरिक्तानामपि निर्विशेषगोचरश्रवणादिकम् । परं तु तज्जन्मान्तरे अपरोक्षतापर्यवसायि भवतीति विशेषः ॥३८॥

अनाश्रमित्वनिन्दावचनस्य गतिं वक्तुं सूत्रम्—

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥

**तेनैतीति** । 'तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च एष पन्था ब्रह्मणाहानुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्चेति' मन्त्रः । तत्र तेनेति पूर्ववाक्यप्रस्तुतोऽर्चिरादिमार्गो विवक्षितः। पुण्यकृत्तदनन्तरं तेजसः निर्धूतपापो ब्रह्मवित् अर्चिरादिमार्गेण याति । अत्र पुण्यस्य पापनिवर्तकताप्रतिपादनादनाश्रमिणां निन्दास्मृतेश्चाश्रमकर्मणामतिशयेन पापनिवर्तकता सूच्यते ॥३९॥

इति अन्तराधिकरणम् ॥९॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥४०॥

पूर्वस्मिन्नधिकरणे विधुरादिकर्मणामपि विद्योपयोग उक्तः । तर्हि ऊर्ध्वरेतस्त्वं प्राप्य पुनर्गार्हस्थ्याश्रमं प्राप्तेन सम्यक् कृतानामाश्रमकर्मणां विद्योपयोगः कैमुतिकन्यायात् सिध्यतीति प्रत्यवस्थानात् सङ्गतिः । स्वनुष्ठानचिकीर्षया सुष्ठु अनुष्ठानेच्छया। **अत्यन्तमात्मानमिति**। 'अत्यन्तमात्मानमिति'वाक्ये अत्यन्तपदेन नैष्ठिकब्रह्मचारिणः पुनरावृत्त्यभावो द्योत्यते । **अरण्यमियादिति** । अरण्यमिति यत् पदं वानप्रस्थाश्रमरूपं, तदियात्,ततःपदान्न पुनरावर्तेत इति योजना । 'आविमोक्षात् अनुतिष्ठेदि'ति पूर्वाश्रमप्रच्युत्यभावे तात्पर्यम् । उत्तराश्रमप्राप्तौ तु न निषेधः, 'गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि'त्यादिशास्त्रात् । सौत्रं नियमपदं व्याख्याय अतद्रूपपदं व्याचष्टे—**यथा चेति**। अभावपदं व्याचष्टे—**नचैवमिति** ॥४०॥

इति तद्भूताधिकरणम् ॥१०॥

## न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥४१॥

ऊर्ध्वरेतसां प्रत्यवरोहोऽशास्त्रीय इत्युक्तम् । तेष्वेव ब्रह्मचर्यभङ्गे प्रायश्चित्तविचारणात् सङ्गतिः । **अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वादितीति**।

अवकीर्णिपशुः किं लौकिकाग्नौ कर्तव्यः, उत आहवनीय इति संशये पूर्वपक्षः—'यदाहवनीये जुहोती'ति होममात्रस्याहवनीये विधानादवकीर्णिहोमोऽप्याहवनीये कर्तव्यः। न च यथोपनयनहोमाः नाहवनीये कर्तव्याः, उपनयनात् प्राक् दारसङ्ग्रहस्यासंभवेनाधानासम्भवादाहवनीयस्य सम्पादयितुमशक्यत्वात् आधानं कृतदारस्यैव शास्त्रे विहितम् , एवं ब्रह्मचारिणोऽप्याधानासम्भवात् नाहवनीयस्सम्भवतीति लौकिकेऽग्नावेवावकीर्णिपशुर्भवेदिति वाच्यम् । अवकीर्णी स्नात्वा दारान् स्वीकृत्य प्रायश्चित्तं करोतु,नात्रानुपपत्तिरिति । सिद्धान्तस्तु उपनयनहोमवदवकीर्णिपशुरपि लौकिकेऽग्नावेव । 'अविलुप्तब्रह्मचर्यो गृहस्थाश्रममावसेदि' त्यविलुप्तब्रह्मचर्यस्यैव दारपरिग्रहेऽधिकारप्रतिपादनात् प्रायश्चित्तात् प्राक् ब्रह्मचर्यविप्लवासम्भवेन दारपरिग्रहपूर्वकाधानकालस्याप्राप्तकालत्वादिति । **अप्रतिसमाधेयपतनस्मरणादिति** । तथा च विशेषवचनानुसारेणावकीर्णिपशुरुपकुर्वाणविषय इति भावः ॥४१॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥४२॥

अयमत्र सिद्धान्ताभिप्रायः—'प्रायश्चित्तं न पश्यामी'तिहि स्मृतिः । सा तु श्रुतिमपेक्ष्य स्वभावत एव दुर्बला । ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभं पशुमालभेते'ति श्रुतिः । अपि च स्मृतौ न साक्षात् प्रायश्चित्ताभाव उक्तः, अपि तु 'न पश्यामी'त्युक्तम् । तेनाभावो लक्षणीयः । अतः स्पष्टतया प्रायश्चित्तबोधकश्रुत्यनुसाराय च स्मृत्या न प्रायश्चित्ताभावो लक्षणीयः । अपि तु श्रुत्यविरोध्यर्थान्तरमेव लक्षणीयम् । तदुत्तराधिकरणे स्पष्टं भविष्यति । यववराहादिपदेषु शास्त्रानुसारिणामन्योऽर्थः, लौकिकानामन्योऽर्थः । तत्र उभयोरपि समा विप्रतिपत्तिस्स्यादिति पूर्वपक्षे शास्त्रस्थानां प्रसिद्धिरेव प्रबला । शब्दार्थतत्त्वरक्षणस्य शास्त्रस्थपुरुषनिमित्तत्वादिति 'शास्त्रस्था वा तन्निमित्तत्वादि'त्यनेन सिद्धान्तितम् । महाकक्षं सोमम् । स्वशास्त्रं यतिधर्मप्रतिपादकं शास्त्रम् ॥४२॥

इति आधिकारिकाधिकरणम् ॥११॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥४३॥

आरूढपतितानां शुद्ध्यर्थप्रायश्चित्तसद्भावे कृतप्रायश्चित्तैस्तैस्सहभोजनाध्ययनादिषु शिष्टैस्संव्यवहारोऽपि कार्य इति प्रत्यवस्थीयते । अयमत्र सिद्धान्ताभिप्रायः-पापानां शक्तिद्वयम् । एका इहाशुद्धिकरी, अपरा परलोकाशुद्धिकरी । तत्र प्रायश्चित्तैः परलोकाशुद्धिनिवर्तने नरकादिकं न भवति । ऐहिकाशुद्धिनिवर्तने तु शिष्टैस्संव्यवहार्यता । तत्रारूढपतितमित्यादिवचनात् 'नैष्ठिकानां वनस्थानां यतीनाञ्चावकीर्णिनाम् । शुद्धानामपि लोकेऽस्मिन् प्रत्यापत्तिर्न विद्यते । ' इति वचनादै-

हिकाशुद्धिनिवृत्तिर्नास्तीत्यवगम्यते । तदनुसारेण 'प्रायश्चित्तं न पश्यामी' तिवचनमपि ऐहिकशुद्धिकरं प्रायश्चित्तं नास्तीत्यभिप्रायं द्रष्टव्यम् ॥४३॥

इति बहिस्तूभयथाधिकरणम् ॥१२॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥

पूर्वं कृतप्रायश्चित्तस्शिष्टसंव्यवहार्य इत्युत्सर्गस्यारूढपतितेऽपवादो दर्शितः । तर्हि, क्रतौ विद्यमानो व्यापारः ऋत्विग्भिरेव कर्तव्य इत्युत्सर्गस्यापि क्रत्वङ्गाश्रितोपासनास्वपवादोऽस्त्विति प्रत्यवस्थानात् सङ्गतिः । अङ्गेषूपासनेष्विति व्यधिकरणे सप्तम्यौ । अङ्गाश्रितोपासनेष्वित्यर्थः । **फलं हि श्रूयत इति** । अयं भावः— 'वर्षति हास्मै वर्षयति ह य एवंवेदे' तिवाक्येषु वृष्ट्यादिरूपफलभागिन उपासनाकर्तृत्वमवगम्यते । न चोपासनाजनितं फलमृत्विजामिति वक्तुं शक्यम् । 'यजेत स्वर्गकाम'इति वाक्ये आत्मनेपदश्रुत्या यागकरणको यो व्यपारः, तज्जन्यस्यापि फलस्य स्वर्गकामिकर्तृगततायाः प्रतिपादनात् ऋत्विजाञ्चातद्रूपत्वात् । न चोपासनाजन्यं फलं न यागकरणकव्यापारजन्यम् । उपासनानां पृथक्फलतया यागेतिकर्तव्यतारूपत्वाभावादिति वाच्यम् । उपासनानां यागाङ्गाश्रिततया तज्जन्यस्यापि फलस्याङ्गापेक्षताया अवश्यम्भावात् । ननु, 'यजेत स्वर्गकाम' इति वाक्येन स्वर्गकामिनो यजमानस्य साङ्गप्रधाने साक्षात्कर्तृत्वावगमेऽपि 'ऋत्विग्भ्यो दक्षिणां ददाती'ति ऋत्विक्परिक्रयाम्नानात् परिक्रयस्य दृष्टार्थत्वाय कृत्स्ने व्यापारे सक्षात्कर्तृत्वमृत्विजामेव । यजमानस्य तु प्रयोजककर्तृत्वं, तदभिप्रायेण च 'यजेत स्वर्गकाम' इतिवाक्ये स्वर्गकामपदस्य कर्त्राख्यातसामानाधिकरण्यम् । 'तत्प्रयोजको हेतुश्चे'ति सूत्रेण प्रयोजकस्यापि कर्तृसंज्ञाविधानादित्युपगम्यते । एवं च 'वर्षति हास्मै वर्षयति ह य एवंवेदे'तिफलभागिन उपासनाकर्तृताप्रतिपादकमप्याख्यातं प्रयोजककर्त्रभिप्रायं भविष्यतीति न तद्बलाद्यजमानस्य साक्षात्कर्तृत्वं वक्तुं शक्यमिति चेन्न । यदर्थो हि परिक्रयः, तावत्स्वेव यजमानस्य प्रयोजककर्तृत्वमिति परिक्रयश्च क्रतुप्रकरणाम्नातः क्रत्वपूर्वार्थः । तत्र द्वारापेक्षायां परमापूर्वप्रयुक्तव्यापारकर्त्रानतिरेव द्वारत्वेन सम्बध्यत इति क्रयानतानामेव साङ्गप्रयोगकर्तृत्वावगमेन तत्र यजमानस्य साक्षात्कर्तृत्वाभावेऽपि उपासनानां पृथक्फलतया परमापूर्वार्थत्वाभावेन तत्रर्त्विजां कर्तृत्वस्याप्राप्त्या न प्रयोजककर्तृपरमाख्यातं योजयितुं युक्तमुपासनावाक्येषु । न चोपासनानामप्यङ्गावबद्धानां क्रतुप्रयोगनियततया क्रतुप्रयोगवाक्ये उपासनावाक्यानामपि सन्निधानात् परिक्रयस्योपासनार्थत्वमपि कल्प्यत इति वाच्यम् । प्रकरणान्तरपठितानामुपासनानां यथाकथञ्चित् क्रतौ सन्निधानेऽपि प्रकरणोपात्तव्याप१-

रमादाय निराकाङ्क्षस्य परिक्रयस्य उपासनास्वन्वयायोगात् । अपि च प्रधानयागकर्तृत्वं यजमानस्यैव दृष्टम् । उपासनानामपि फलसाधनतया प्रधानत्वात्तत्रापि यजमानस्यैव कर्तृत्वमुचितम् । न च 'तं ह बको दाल्भ्यो विदाञ्चकार सह नैमिशीयानामुद्गाता बभूव तस्मादेवंविदुद्गाता प्रब्रूयादि'त्यादिषूद्गात्रादिकर्तृकतयोपासनानि सिद्धवदनूद्यन्ते । अतः ऋत्विक्कर्तृकत्वमेव तेषामिति वाच्यम् । असति न्याये अन्यार्थदर्शनरूपस्य लिङ्गस्य किञ्चिदर्थसाधकत्वाभावात् । अस्तु वा तद्बलादृत्विजां कर्तृत्वं, तथापि यासूपासनासु तादृग्विधं लिङ्गमुपलभ्यते, तासामेव तु ऋत्विक्कर्तृकता भवेत्, न तु सर्वासामङ्गावबद्धोपासनानाम् । एतेनौद्गात्रादिसमाख्याते काण्डे उपासनानां पाठात् तासामृत्विक्कर्मतेत्यपास्तम् । वाक्येन यजमानकर्तृकतावगमे समाख्याबाधोपपत्तेः । **तस्य साङ्गे प्रधाने अधिकृतत्वादिति** । आत्मनेपदश्रुत्या साङ्गप्रधानजन्यफलभागित्वादित्यर्थः । नन्वेतासां साङ्गप्रधानजन्यं फलं स्वामिगामि भवतु, उपासनाफलं तु कथं स्वामिगामि भवेदित्यत आह—**अधिकृताधिकारेति** । यस्य साङ्गप्रधानजन्यं फलं, तस्यैवोपासनाजनितं फलम् । उपासनाफलस्याप्याश्रयीभूतव्यापारजन्यत्वादिति भावः । तमागायति आगानेन सम्पादयति ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥४५॥

अयमत्र परिहाराभिप्रायः—'ऋत्विग्भ्यो दक्षिणां ददाती'त्याम्नातः परिक्रयः किं 'यजेत स्वर्गकाम' इतिप्रकरणवाक्योपात्तफलमात्रोपयुक्तः यावान् व्यापारः, तावन्मात्रार्थः कल्पनीयः, उत क्रतावुपासनानामपि सन्निहिततया तत्साधारण्याय क्रतुप्रयोगान्तःपाती यावान् यजमानफलसाधनीभूतो व्यापारः, तावन्मात्रार्थ इति विशये सामान्येन कल्पनाया लघीयस्त्वादन्यार्थदर्शनेष्वृत्विक्कर्तृकतया सिद्धवदङ्गावबद्धानामुपासनानामाम्नानादौद्गात्रादिसमाख्यया ऋत्विजामुपासनार्थताया अपि प्रतीतेश्चोपासनासाधारण्येनैव क्रयस्याङ्गता परिकल्प्यते । एतेन यत् पूर्वपक्षिणा लिङ्गदर्शनस्याप्रयोजकत्वमुक्तं, तदपि परिहृतं भवति । न हि स्वातन्त्र्येण लिङ्गदर्शनमार्त्विज्यसाधकतयेह विवक्षितम् । अपि तु परिक्रयवाक्यस्य उपासनासाधारण्येन तात्पर्यनिर्णायकतया । अस्तु वा प्रकरणवाक्योपात्तफलोपयुक्तव्यापारमात्रार्थत्वं क्रयस्य, तथापि नानुपपत्तिः । उपासनानामपि क्रतुफलप्रतिबन्धकनिरासार्थतायाः 'पृथग्ह्यप्रतिबन्धः फलमि'त्यत्र प्रतिपादिततया तासामपि प्रकरणवाक्योपात्तफलोपयुक्तत्वानपायात् । अतः परिक्रयानुसारेण उपासनानामप्यृत्विक्कर्तृकतया कर्त्राख्यातपदसामानाधिकरण्यमुपासनाप्रयोजकत्वाभिप्रायेव वक्तव्यम् । न च यागस्य साक्षात्फलसाधनतया यजमानकर्तृकतोपेयते । ये

नोपासनानामपि तथा यजमानकर्तृकता स्यात् । किं तु यजमानद्रव्यस्य ऋत्विग्भिस्त्यागासम्भवात् । अत एवाग्निहोत्रं जुहोती'त्यादौ जुहोतिचोदनास्थले प्रक्षेपांशस्य प्रधानत्वेऽपि ऋत्विग्भिः कर्तुं शक्यतया तेषामेव तत्र कर्तृत्वम् । दक्षिणादानस्य चाङ्गत्वेऽपि यजमानादन्येन कर्तुमशक्यतया यजमानस्यैव तत्र कर्तृत्वमुपेयते । तस्मात् प्रधानत्वमपि न यजमानकर्तृकतायां प्रयोजकम् । ननु, 'यत्तूक्तमि'ति भाष्येण फलभागिनो यजमानस्यैव 'वर्षति हास्मै वर्षयति ह य एवंविद्वानि'ति वाक्यानुसारेणोपासनायां कर्तृत्वमवगम्यत इति पूर्वपक्षिकृता शङ्कानूदिता । तत्परिहारग्रन्थे परिक्रयाम्नानाद्यजमानस्य साक्षात्कर्तृत्वं नोपपद्यत इति वक्तव्यम् । पारार्थ्येन ऋत्विजां फलसम्बन्धो नोपपद्यत इत्युक्तिस्तु न युक्तेति चेन्न । परार्थत्वादृत्विज इति भिन्नं वाक्यम् । तस्य परिक्रीतस्य ऋत्विजो व्यापारो यजमानार्थ इति ऋत्विग्व्यापारे यजमानस्य प्रयोजकत्वान्नानुपपत्तिरिति तात्पर्यम् । तदनन्तरं च यदि परिक्रीतः ऋत्विक्, तर्हि तस्य कुत्राप्युपासनाफलं न स्यात् । तथा चात्मने वा यजमानाय वा यं कामं कामयते, तमागायतीति वचनकोप इति शङ्कायामन्यत्र वचनात् फलसम्बन्धानुपपत्तेरिति वाक्यमत्र ऋत्विज इत्यनुषज्यते । न्यायानुसारेण परिक्रीतर्त्विग्व्यापारस्यान्यफलार्थत्वेऽपि वचनेन न्यायं बाधित्वा ऋत्विजोऽपि फलं भविष्यतीति तदर्थः ॥४५॥

यदि क्वचिदङ्गाश्रितोपासनेषु ऋत्विजां फलसम्बन्ध उपेयते, तर्ह्यङ्गाश्रितोपासनात्वाविशेषात् सर्वत्रर्त्विजां फलभागितास्तु । एवं चोपास्त इत्यादिपदानां प्रयोजकपर्यन्तवाचनमपि न भविष्यतीति शङ्कानिवृत्त्यर्थं सूत्रम्—

## श्रुतेश्च ॥४६॥

'यजेते' त्यात्मनेपदश्रुत्या कृत्स्नस्य फलस्य यजमानगामितायाः परिक्रयानुसारेण च कर्त्राख्यातानां प्रयोजकपर्यन्ततायाश्च सिद्धत्वान्न क्वचिदृत्विजः फलदर्शनमात्रेण सर्वत्रर्त्विजां फलमुपगन्तुं न्याय्यम् । आशिषं फलम् । तस्मादुहैवंवित् यस्मात् प्रकृतमुपासनं क्रतुवीर्यवत्तरत्वमपि सम्पादयति सर्वलोककामावाप्तिं च, तस्मादुक्तप्रकारेणोपासनाभिज्ञ उद्गाता ब्रूयात्—कं ते काममागायानीति । किं क्रतुवीर्यवत्तरत्वमागानेन साधयामि, उत सर्वलोककामावाप्तिम् । नन्वृत्विजो यजमानकामप्रश्नः किमर्थः । ऋत्विजोपासनं कर्तव्यं, यजमानकामानुसारेण तस्य फलं भविष्यति । अत उक्तम्—एष ह्येव कामागानस्येष्टे इति । 'कामं ध्यायन्नप्रमत्त' इति वाक्यानुसारेण उपासनाकाले ऋत्विजा यजमानकामस्य ध्येयत्वविधानाद्यजमानकामः ऋत्विजापि ज्ञेय इति फलप्रश्न इति तस्य तात्पर्यम् ॥४६॥

इति स्वाम्यधिकरणम् ॥ १३ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

ऊर्ध्वरेतसां विचारप्रसङ्गे सङ्गतिविशेषेण मध्य उपासनानां ऋत्विक्कर्तृकता व्युत्पादिता । अस्मिन्नधिकरणे ऊर्ध्वरेतसामेव धर्मविशेषो निरूप्यत इति सङ्गतिः । **तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्येति** । पण्डा शास्त्रार्थविचारोपयोगिनी बुद्धिः, सास्य सञ्जातेति पण्डितः । तस्य कर्म पाण्डित्यं वेदान्तविचार इति यावत् । स चोपक्रमाद्यनुसारेण शब्दतात्पर्यनिर्धारणानुकूलः यः प्रथमाध्याये कृतः, उपक्रमादिनिर्णीततात्पर्ये प्रमाणान्तरादिविरोधाभावप्रतीत्यनुकूलश्च यो द्वितीयाध्यायकृतः, अयं द्विविधोऽपि विचारः 'श्रोतव्यो मन्तव्य' इत्यत्र पृथङ्निर्दिष्टः । इह तु पाण्डित्यपदेन युगपदेव गृहीतः । निर्विद्य सम्यगनुष्ठाय । बाल्येन तिष्ठासेत् बाल्यं कामक्रोधादिराहित्यमिति उत्तराधिकरणे स्पष्टं भविष्यति। तिष्ठासेत् स्थातुमिच्छेत् बाल्यं सम्पादयेदिति यावत् । **अथ ब्राह्मण इति** । अत्र ब्राह्मणपदं न जातिपरम् । जातेः प्रागेव सिद्धतया अथेति पाण्डित्याद्यनन्तरभावित्वनिर्देशानुपपत्तेः । अतो ब्रह्मणोऽयं ब्राह्मण इति शैषिकाणन्तोऽयं शब्दः । ब्रह्मसाक्षात्कारवान् भवतीत्यर्थः । एवंसतीह ब्रह्मसाक्षात्कारोद्देशेन पाण्डित्यादेर्विधानात् 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति वाक्येनैकार्थ्यं लभ्यते । **पाण्डित्यं निर्विद्येत्येवं प्राप्तमिति** । पण्डितपदवन्मुनिपदमपि शास्त्रार्थविचारकुशलपरमेवेति पूर्वपक्षिणोऽभिप्रायः । न चानुवादो व्यर्थः। बाल्यस्तुतिपरत्वात् । बाल्यात् प्राग्विद्यमानमपि प्रशस्तं न भवति पाण्डित्यम्, अपि तु बाल्यानन्तरमेव तत्प्रशस्तमिति । 'बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरि'ति वाक्येन प्रतिपादनसम्भवात् । **प्रागेव प्राप्तत्वादिति** । इदं च ब्राह्मणपदं जात्यर्थकमिति कृत्वोक्तम् । यदापि ब्रह्मसाक्षात्कारपरं, तदापि तस्य विधेयत्वं नास्तीत्यपि द्रष्टव्यम् । **विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्योऽपूर्वत्वादिति** । ननु, पाण्डित्यपदोदितो विचारो न विधातव्यः । विचार्यनिर्णयार्थतया लोकत एव विचारस्य प्राप्ततया अपूर्वत्वाभावात् । षड्जादिनिर्णयार्थं तद्विचारात्मकगान्धर्वशास्त्रादिषु लोकत एव हि प्रवृत्तिर्दृश्यते । न च विचार्यनिर्णयार्थताया विचारस्य लोकतस्सिद्धतया विचार्यवेदान्तवाक्यानां नानाविधयोजनासु प्रसक्तासु तन्निरासेनाभिमतयोजनया वेदान्तवाक्यनिर्धारणार्थत्वे लोकतस्सिद्धेऽपि ब्राह्मणपदोपात्ताविद्यानिवर्तकाद्वितीयात्मसाक्षात्कारार्थता वेदान्तवाक्यविचारस्य न प्राप्तेति वाच्यम् । पारम्पर्येण तदर्थताया अपि

प्राप्तत्वात् । तथाहि—येषां मते शब्दादेवापरोक्षं, तन्मते अधीतसाङ्गस्वाध्यायस्य प्रथमतो जायमानमद्वितीयात्मगोचरं यद्विज्ञानं, तदप्यपरोक्षमेव । परं तु वेदान्तवाक्येषु बहुविधयोजनाप्रतिभासादर्थान्तरमप्यत्र वक्तुं शक्यमिति शङ्काकलङ्कितं तदापातरूपमिति नाविद्यानिवृत्तिक्षमम् । वेदान्तवाक्यगतोपक्रमाद्यनुसन्धानात्मकविचारेण तस्यां शङ्कायामपनीतायां पुनर्वाक्यार्थज्ञानं निर्धारणात्मकं भवति । तदपि विपरीतभावनाप्रतिबद्धं सन्नाविद्यानिवृत्तिक्षममिति ध्यानेन कर्तृत्वादिभावनास्वपनीतासु जायमाना सर्वप्रतिबन्धविधुरा वेदान्तवाक्यजन्या साक्षात्कारव्यक्तिः अविद्यानिवृत्तिक्षमा भवतीति । तथा च विचारस्य साक्षात्प्रयोजनं संशयप्रतिबन्धः । ततो वाक्यार्थनिर्धारणं, तच्च ध्येयनिर्णयरूपतया ध्यानोपयोगिध्यानमविद्यानिवर्तकसाक्षात्कारजननोपयोगीति परम्परया विचारस्याविद्यानिवर्तकसाक्षात्कारोपयोगिता विधिं विनैव प्राप्नोति । येऽपि शब्दादपरोक्षं नाभ्युपगच्छन्ति, तेषामपि शाब्दं निर्धारणं परोक्षम् । ततो ध्यानसंस्कृतान्तःकरणजनितं ज्ञानं साक्षात्काररूपमिति विशेषः । अन्यत्सर्वं तुल्यमेवेति पक्षद्वयेऽपि न वेदान्तविचारस्याप्राप्तिर्वक्तुं शक्यत इति चेत्, उच्यते–यत एवोक्तप्रणाडिकया विचारस्याविद्यानिवर्तकसाक्षात्कारार्थता विधिं विनैव प्राप्ता, अत एव प्रकृतवाक्ये नोक्तप्रणाडिकया साधनताश्रीयते, अपि तु यथा विविदिषावाक्येन वस्तुसौन्दर्यज्ञानलभ्यायामिच्छायां प्रतिबन्धकीभूतपापनिरासद्वारा कर्मणां साधनता बोध्यते, एवं प्रमाणजन्येऽपि वाक्यार्थसाक्षात्कारे प्रतिबन्धकीभूतपापापगमद्वारा तर्करूपस्य विचारस्य साधनता बोध्यते । न च कर्मणां पापनिवर्तकतायाश्शास्त्रान्तरसिद्धतया पापनिवृत्तिद्वारा विधानोपगमेऽपि वेदान्तविचारस्य पापनिवर्तकता न सिद्धेति कथं तद्वारा साक्षात्कारार्थतया विधिस्स्यादिति वाच्यम् । 'दिनेदिने च वेदान्तश्रवणात् भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेदि'ति विचारस्यापि पापनिवर्तकतायाश्शास्त्रान्तरसिद्धत्वात् । न चैवमपि विचारस्य पापनिवर्तकता उक्तप्रमाणसिद्धा । पापक्षयस्य च 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण' इति शास्त्रेण ज्ञानसाधनत्वं सिद्धम् । अतोऽयं विधिर्व्यर्थ एव भवेदिति वाच्यम् । असति विचारविधौ विचारेण ज्ञानप्रतिबन्धकीभूतानामेव पापानां नियमेन नाशालाभात् । सति तु तस्मिन् साक्षात्कारोद्देशेन विचारानुष्ठानसम्भवात् ज्ञानप्रतिबन्धकीभूतपापक्षयनियमलाभः । अत एव यदि वा साक्षात्साधनं विचारः, यदि वा परम्परया साधनम्, उभयथा विचारप्रवृत्तावनुष्ठानविशेषो नास्तीति शङ्का अभ्युपगता भवति । असति विधौ विचारस्य साक्षात्कारोद्देशेनानुष्ठानालाभात् । कृतविचाराणां नियमेन साक्षात्कारोत्पत्तिरित्यर्थोऽपि न लभ्यते । न चैवं यदि पापनिवृत्तिद्वारा विचारस्य साक्षात्कारसाधनतोपेयेत, तथासति सकृद्विचारानुष्ठानेऽपि विधेश्च-

रितार्थतया 'आवृत्तिरसकृदुपदेशादि'त्यधिकरणे वक्ष्यमाणा या संशयनिवृत्तिपर्यन्तं विचारस्यावृत्तिः, सानुपपन्ना भवेदिति वाच्यम् । न ह्येतावता लोकतस्सिद्धं यत् फलपर्यन्तं साधनानुष्ठानं, तद्यावृत्तिः प्रसक्ता भवति । लोकतस्सिद्धस्य संशयविरोधित्वस्य श्रवणेऽप्रत्याख्यानात् । ततश्च यस्य यावता कालेन नानाविधयोजनासंशयोच्छेदो भवति, तस्य तावत्पर्यन्तं श्रवणं दृष्टार्थत्वात् वितुषीभावपर्यन्तावघातवत् सिद्धं भवति । शास्त्रेण तु संयोगान्तरन्यायेन दृष्टार्थत्वमनपबाध्यैव ज्ञानप्रतिबन्धकीभूतदुरितनिवृत्तिद्वारा साक्षात्कारार्थता बोध्यत इति न किञ्चिदनुपपन्नम् । अथवा दृष्टार्थतायामपि विधेरवकाशोऽस्ति । उक्तप्रणाडिकया सक्षात्कारे श्रवणस्य पक्षतः प्राप्तत्वात् । नानाविधयोजनासंशयानन्तरभाविनि एतस्य वाक्यस्यायमेवार्थ इत्यवधारणे यथा इदं वाक्यमेतदर्थपरम्, एवंविधोपक्रमादिशालित्वात् इत्यादिन्यायानुसन्धानात्मकं पाण्डित्यमुपयुक्तम् । एवं न्यायसिद्धार्थकथनपराप्तवचनमपि तत्रोपयुक्तमेव । यद्यप्याप्तवचनविश्वासरहितस्य नाप्तवाक्यान्निर्णयः, तथाप्याप्तवचनविश्वासशालिनः कुशलबुद्धेरपि पक्षतश्श्रवणाप्राप्तौ तन्नियमार्थोऽयं विधिर्भविष्यति । ननु, श्रद्धावत आप्तवचनादेव निर्णयेऽपि पुनःकालान्तरे स्वोद्भावितानुपपत्तिवशेनान्योद्भावितानुपपत्तिवशेन वा चित्तक्षोभे सति नावधारणात्मकं वेदार्थज्ञानं सम्भवतीति विचार एव तत्र नियमेन प्राप्नोति, यस्य त्वाप्तवचनश्रवणमात्रेण न कथञ्चिदपि चित्तक्षोभः, तं प्रति विचारो नाभ्युपगम्यते । तथा च श्रुतिः—'तत्कारणं साङ्ख्ययोगाभिपन्नमि'ति । अत्र ह्यात्मज्ञाने श्रवणमननध्यानात्मकस्साङ्ख्यपदोदित एक उपायः, आप्तवचनादवगम्य ध्यानमेव कर्तव्यमिति योगपदोदितोऽपर उपायः प्रतिपाद्यते । अतो न नियमविधेरवकाश इति चेन्न । श्रद्धावतः कुशलबुद्धेर्हि मार्गद्वयेऽप्यधिकारः प्रसक्तः । उत्कटश्रद्धारहितस्य कुशलबुद्धेस्तु साङ्ख्यमार्ग एवाधिकारः । मन्दबुद्धेश्श्रद्धाशालिनस्तु योगमार्गे । तथाच यस्य उभयत्राधिकारस्तं प्रत्यस्ति नियमविधेरवकाशः । योगमार्गगम्यत्वश्रुतिस्तु मन्दबुद्धिविषया भविष्यति । अथोच्येत—पाण्डित्यविधिं विनापि श्रवणनियमस्सिध्यत्येव । 'भृगुर्वै वारुणिरि'त्यत्र उपसन्नाय भृगवे आचार्यश्शृङ्गग्राहिकया ब्रह्माप्रतिपाद्य लक्षणमुखेन ब्रह्म प्रतिपादयति—'यतो वा इमानि भूतानि जायन्त' इत्यादिना । तत्र शृङ्गग्राहिकया लघूपायेन सम्भवति गुरूपायेन तद्बोधनं लक्षणमुखेनैव ब्रह्म ज्ञातव्यमिति नियमार्थं सम्पद्यते । न चासम्भवातिव्याप्त्यादिदोषपरिहारं विना ब्रह्म लक्षणमुखेन ज्ञातुं शक्यमिति असम्भवादिनिरासोपयोगितया विचारोऽर्थसिद्ध एवेति । नैतदपि सम्भवति । शृङ्गग्राहिकयेति कोऽर्थः ? किं यथा अयं गौरयमश्व इति बालान् प्रत्यङ्गुलिनिर्देशपूर्वकं पदार्थोपदेशः, एवं ब्रह्मापि कुतो

नोपदिष्टमिति । नैवं सम्भवति । उपदेशैकगम्यस्यातीन्द्रियस्य ब्रह्मणः अङ्गुलिनिर्देशानुपपत्तेः । अथ स्वरूपकथने सम्भवति किमिति जगत्कारणत्वेन निर्देश इति, नैतदपि । स्वरूपमपि 'सत्यं ज्ञानमनन्तमि'ति प्रतिपाद्यत एव । जगत्कारणत्वादिप्रतिपादनं पञ्चकोशावतरणवत् स्थूलारुन्धतीन्यायेन चित्तावतरणार्थमिति । तत्प्रयोजनानि जन्मादिसूत्र एव निरूपितानि । न च लक्षणकथनमात्रेण तन्मुखेनैव ज्ञातव्यमिति नियन्तुं युक्तम् । तथासति पञ्चकोशादिप्रक्रियायाश्श्रुतिषु बहुलमुपलम्भात् तत्रापि नियमः प्रसज्येत । यदि पञ्चकोशप्रक्रियामपेक्ष्य जगत्कारणत्वादिनिर्देशेऽस्ति विशेषः । यतो लक्षणाम्नानानन्तरं 'तद्विजिज्ञासस्वे'ति श्रूयते, अतो लक्षणेन विजिज्ञासा सम्पादनीया इति विधिस्सिद्धो भवति । एवं तर्हीदं वाक्यं विचारे लक्षणपूर्वकत्वगुणविधानार्थमिति सम्पद्यते । तत्र विचारस्य प्राप्तिरन्यत एवास्थेया । अतोऽस्ति विचारविधेरवकाशः । अस्मिन् पक्षे दृष्टान्तक्तितस्य भाष्ये अपूर्वत्वं पक्षतः द्रष्टव्यम् । **मुनिशब्दस्य ज्ञानातिशयार्थत्वादिति** । ज्ञानातिशयवान् यो ध्याननिष्ठो भवति, स एव मुनिरिति प्रसिद्धः, न तु विचारमात्रविश्रान्तः । तथा च मुनिशब्देन प्रतिपाद्यस्य ध्यानस्य पाण्डित्यपदेनाप्राप्तत्वान्मुनिपदमपि विधेयसमर्पकं द्रष्टव्यम् । **निर्वेदनीयत्वनिर्देशादपीति** । 'अमौनं च मौनं च निर्विद्येति' वाक्ये अमौनपदोदितबाल्यपाण्डित्यवत् मौनस्य निर्वेदनीयत्वमुच्यते । विदेर्लाभार्थतया मौनं सम्यक् लब्ध्वेति तदर्थः । तथा च लम्भनस्य कार्यताप्रतिपादनलाभस्सूच्यत इति विधेयत्वमिति भावः । **तदधिकारादिति** । ननु, 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति पूर्ववाक्ये विदित्वेति निर्देशाद्विद्वत्सन्न्यासः प्रस्तुतः । न चोत्तरत्र पाण्डित्यादिसाधनविधानाद्विदित्वेत्यापातज्ञानविवक्षेति वाच्यम् । न हीदं वाक्यं विधीयमानपाण्डित्याद्यधिकारिसमर्पकं, येन तथा विवक्षोच्येत । अपि तु तस्मादिति श्रवणेन पाण्डित्यादिविधौ पुराकल्पन्यायेन स्तावकम् । यस्मात् पूर्वे ब्राह्मणाः पाण्डित्यादिसाधनैर्ज्ञानं लब्ध्वा सकलविक्षेपरहितं जीवन्मुक्तिसौख्याभिव्यञ्जकं पारमहंस्यं प्राप्तवन्तः, तस्मादाधुनिकोऽपि पाण्डित्यादिसाधनैर्ज्ञानं सम्पादयेदित्यर्थावगमात् । अतः कथमुच्यते पूर्ववाक्ये सन्न्यासिनः प्रस्तुतत्वात् पाण्डित्यादौ तस्याधिकारोऽवगम्यत इति चेत्, उच्यते—इदं भाष्य 'मेतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'त्यस्य वाक्यस्योपलक्षणम् । तत्र हि विविदिषासन्न्यास एव विधीयते । विदित्वा व्युत्थायेति वाक्योदाहरणं तु पाण्डित्यादिविधौ सन्न्याससामान्यं बुद्धिस्थं भवतीत्येतावन्मात्रतात्पर्यकम् । **ननु, सति विद्यावत्त्व इति** । कृतश्रवणमननस्य ब्रह्मापरोक्ष्यसिद्ध्यर्थं विपरीतभावनानिवृत्तिद्वारा ध्यानं प्राप्नोत्येव । स्वत•

त्वसाक्षात्कारादौ प्रत्ययावृत्तेः कारणतायाः लोकसिद्धत्वादिति भावः । **यस्मिन् पक्षे भेददर्शनप्राबल्यादिति** । अयमर्थः—लोकसिद्धकारणतानुसारेण ब्रह्मापरोक्षसाधनत्वेन तद्ध्यानस्य विधिं विना प्राप्तत्वेऽपि ध्यानोद्देशेनासनादिनियमविधानात्तत्तत्कालमेव ध्यानं प्राप्नोति । क्षुत्तृष्णादिपीडितस्य समाधितोऽप्युत्थितस्य तस्मिन् काले परमात्मनि चित्तस्थापनं न प्राप्नोति । आसनादिनियमानुष्ठानस्य तदानीमसम्भवात् । अपि तु भिक्षाटनादिकाले यथासम्भवं परमात्मनि चित्तं स्थापनीयमिति बोधयदिदं वाक्यं सार्थकं भवतीति भावः । ननु, परमात्मप्रकरणे पाण्डित्यादिविध्युपगमे वाक्यभेदस्स्यादित्याशङ्क्योक्तं— **विध्यादिवदिति** । यथा दर्शपूर्णमासादिप्रधानप्रकरणेऽङ्गानि विधीयन्तेऽवान्तरवाक्यविधया, एवं ब्रह्मप्रकरणेऽपि तज्ज्ञानोपायतयावान्तरवाक्यानि श्रवणादीनां विधायकानि भविष्यन्तीत्यभिप्रायेण तद्व्याचष्टे—**यथा दर्शपूर्णमासाभ्यामिति**। विध्यादौ विधिमुखे ॥४७॥

उत्तरसूत्रमवतारयति—**एवमिति** । अयं भावः—छान्दोग्ये 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इत्युपनिषदन्ते समाम्नायते । यदि हि सन्न्यासिन एव श्रवणादिसाधनसंपन्नज्ञानसाध्यानावृत्तिः, तदानीमिदं नोपपद्यते । अथोच्येत—नास्मिन्वाक्ये इहैवामृतत्वं प्रतिपाद्यते । अपि तु ब्रह्मलोकं गतस्य । तच्च क्रममुक्तिसाधनानां सगुणविद्यानां फलम् । तासु गृहस्थानामधिकारो नानुपपन्न इति, तदपि न सम्भवति । सगुणास्वपि विद्यासु शमादिपूर्वकमाप्रायणं निरन्तरं सर्वदा ध्यानपरतापेक्षिता । 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः । तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य चे' त्यादिशास्त्रात् । न चैतल्लौकिकवैदिककर्मक्षुभितचित्तानां गृहस्थानां सम्भवति । अतस्सगुणविद्यासाध्यायाः क्रममुक्तेरप्यनुपपत्तेरिदं वाक्यमनुपपन्नमेव स्यादिति—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥४८॥

यद्यपि निर्विशेषविद्यासाध्यमिहैवामृतत्वं गृहस्थस्यानुपपन्नम्, तथापि क्रममुक्तौ नानुपपत्तिः । शरीरधारणोपयुक्तानां लौकिककर्मणामग्निहोत्रादिनित्यनैमित्तिककर्मणाञ्च विद्यार्थतायाः प्रमाणसिद्धतया तद्व्यतिरिक्तकाल एव सविशेषे परमात्मनि चित्तधारणं शास्त्रार्थः । तत् गृहस्थस्यापि सम्भवति । शमादिकं च तस्य विद्योपयुक्तव्यापारातिरिक्तकर्मसु सम्भवति । अतो न तेनोपसंहारानुपपत्तिरिति परिहाराभिप्रायः ॥४८॥

## मौनवदितरेषामप्युपदेशात् ॥४९॥

ननु, सूत्र इतरपदेन ब्रह्मचारिवानप्रस्थयोर्विवक्षितत्वाद्द्विवचनेन भाव्यम् । कथं बहुवचनमत आह—**द्वयोराश्रमयोरिति** । 'ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । चत्वार आश्रमाः प्रोक्ता एकैकस्तु चतुर्विध' इति प्रत्येकञ्चतुर्विधाः । तत्र गायत्रो ब्राह्मः प्राजापत्यः बृहन्निति ब्रह्मचारी चतुर्विधः । वार्तावृत्तिः शालीनवृत्तिः यायावरः घोरसन्न्यासिकश्चेति चतुर्विधो गृहस्थः । वैखानसः औदुम्बरः वालखिल्यः फेनपश्चेति चतुर्विधो वानप्रस्थः । कुटीचको बहूदकः हंसः परमहंसश्चेति चतुर्विधस्सन्न्यासी । ततश्चोक्तगत्या ब्रह्मचारिवानप्रस्थयोः प्रकारभेदसद्भावात् बहुवचननिर्देशः ॥४९॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १४ ॥

## अनाविष्कुर्वन्नन्वयात् ॥५०॥

पूर्वस्मिन्नधिकरणे प्रसिद्ध्यनुसारेण मौनशब्दस्य ज्ञानातिशयपरत्वमाश्रितं, तद्वद्बाल्यपदमपि प्रसिद्धार्थमेव ग्राह्यमिति प्रत्यवस्थानात्सङ्गतिः । यथोपपादं यथोपपत्ति नियमवर्जितमिति यावत् । ननु, 'सर्वान्नानुमतिरि' त्यत्र 'न हवा एवंविदि किञ्चनानन्नं भवती' ति वाक्यं भक्ष्याभक्ष्यविभागशास्त्रानुसारेणार्थवादः, न तु तद्विरोधेन प्राणोपासकस्य सर्वान्नानुमतिविधिरित्युक्तम्, एवमिहापि बाल्यपदस्यार्थद्वयसम्भवेन नियमशास्त्रानुसाराप्रसिद्धत्वेऽपि दम्भादिराहित्यमेवार्थो ग्राह्यः, न तु तद्विरोध्यर्थान्तरं गृहीत्वा विदुषो नियमशास्त्रपरित्याग आश्रयणीय इत्यभिप्रायेण शङ्कते—**नन्विति** । **न विद्यावतस्सन्न्यासिन इति** । 'न हवा एवंविदी'त्यत्र हि न स्पष्टो विधिश्श्रूयते । अतस्तस्य सामान्येनापि नियमशास्त्रेण स्तुतिपरत्वकल्पनं युक्तम् । इह तु बाल्येन तिष्ठासेदिति स्पष्टो विधिरुपलभ्यते । अतोऽस्य न सामान्येन नियमशास्त्रेण दम्भदर्पादिमात्रे सङ्कोच आश्रयणीयः । अपि तु यावद्बालचरितं दम्भदर्पादिराहित्यं यथोपपादं मूत्रपुरीषादिकं च, तत्सर्वमिहासङ्कोचेन स्वीकृत्य नियमशास्त्रस्यैव सामान्यस्याविद्वद्विषये सङ्कोच आश्रयणीयः । सामान्यशास्त्रस्य विशेषशास्त्रानुसारेण सङ्कुचद्वृत्तिताया एवोचितत्वादिति भावः । **प्रधानोपकाराय चाङ्गं विधीयत इति** । विद्यायां हि 'नाविरतो दुश्चरितान्नाशान्तो नासमाहित' इति दुश्चरिताद्यावृत्तिरङ्गं विधीयते । असङ्कुचिते बाल्यशब्दार्थे आश्रीयमाणे विद्याविरोधप्रसङ्गात् प्रधानानुसाराय सङ्कुचद्वृत्तिर्बाल्यशब्द आश्रयणीयः । प्रधानानुसारिण्यङ्गवाक्यार्थो न्याय्य इति भावः ॥५०॥

इति अनाविष्कुर्वदधिकरणम् ॥ १५ ॥

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥५१॥

विद्यासाधननिरूपणानन्तरं विद्यागत ऐहिकत्वादिविशेषश्चिन्त्यत इति सङ्गतिः । **समान एव तु जन्मनीति** । तथा च कामानुसारेणास्मिन्नेव जन्मनि श्रवणादिभ्यो विद्या जायत इति कल्प्यते । ननु, 'चित्रया यजेत पशुकाम' इत्यादौ पश्वादीनां फलानामिहैव कामनायां प्रसिद्धायामपि कर्मान्तरप्रतिबन्धसम्भवोन्नयनाद्वाक्ये च विशिष्यैहैव फलं भवतीति प्रतिपादनाभावात् 'पशवो मे स्युरि'ति सामान्येन कामनया यागे प्रवर्तितव्यम् । असति प्रतिबन्धे इहैव फलम्, अन्यथा जन्मान्तर इति स्वीक्रियते, एवमिहापि किं न स्यात्! न स्यात्। चक्षुरादिव्यापारेषु दृष्टफलेष्वैहिकमेव घटादिदर्शनं फलं दृष्टम् , एवं श्रवणादीनामपि दृष्टार्थतयैहिकफलत्वमेव वक्तव्यम् । अतश्श्रवणाद्यनुष्ठानवतामिहैव विद्या भविष्यति । ननु, विद्यायां यज्ञादयोऽपि साधनं भवन्ति । तेषामदृष्टद्वारा फलजनकत्वात् । चित्रादिफलतुल्यता विद्यायाः किं न स्यादित्यत आह—**यज्ञादीन्यपीति** । तथा च कर्मणां विविदिषाद्वारा विद्योपयोगित्वात् विविदिषया श्रवणादौ प्रवृत्तिरिहैव फलं साधयिष्यतीति भावः । सूत्रे ऐहिकमपीत्यपिशब्देनामुष्मिकमपि विद्याजन्म भवतीति समुच्चीयते । ऐहिकत्वोपपादनम् 'अप्रस्तुतप्रतिबन्ध' इति । प्रस्तुतप्रतिबन्धे त्वामुष्मिकत्वमित्यर्थादुक्तं भवति । तदाह—**एतदुक्तं भवतीत्यादिना** । उपस्थितविपाकेन प्रारब्धफलेन । ननु, प्रतिबन्धकत्वं पापकर्मणां वक्तव्यम् । तानि च चित्तशुद्ध्यर्थमनुष्ठितैः कर्मभिरेव निरस्तानि । अतश्श्रवणादिकं कुर्वतः प्रतिबन्धकानां कर्मणामभावात् कथमामुष्मिकत्वं विद्याया इत्याशङ्कानिराकरणाय 'तद्दर्शनादि'ति सूत्रावयवं व्याचष्टे—**तथा च श्रुतिरित्यादिना** । अयमर्थः—प्रतिबन्धकीभूतानि पापानि द्विविधानि—प्रारब्धफलानि, अप्रारब्धफलानि च । तत्र विविदिषाप्रतिबन्धकीभूतानि पापानि यानि, तान्यप्रारब्धफलानि । विविदिषोद्देशेन कृतैः कर्मभिर्नष्टानि प्रारब्धफलानि तु भोगैकनाश्यानीति यावत् । भोगक्षयं विना विविदिषैव नोदेति । तदिदमाह—श्रवणायापि बहुभिर्यो न लभ्य इति । सत्सु प्रतिबन्धकेषु श्रवणसामग्र्या अनिष्पत्तेः । एवं विविदिषोत्पत्त्यनन्तरमपि यदि प्रारब्धफलानि प्रतिबन्धकानि सम्भावितानि, तदापि श्रवणादि दुर्घटमेव यावद्भोगक्षयम् । विविदिषोत्पत्त्यनन्तरं विद्यमानानां श्रवणप्रतिबन्धकीभूतानां तु पापानामप्रारब्धफलानां ज्ञानोद्देशेन कृतैः कर्मभिर्नाशः । 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः । कषायपक्तिः कर्माणी'त्यादिवचनपर्यालोचनया ज्ञानार्थतापि यथासम्भवं कर्मणामवगम्यते । श्रवणादिषु प्रवृत्तस्यापि प्रारब्धफलानि अप्रारब्धफलानि च निदिध्यासनपरिपाकपर्यन्तं

प्रतिबन्धकानि सम्भावितान्येव । तत्रापि प्रारब्धानां भोगादेव नाशः । अप्रारब्धानां श्रवणादिनियमानुष्ठानेन । तदिदमाह—'शृण्वन्तोऽपि बहवो यन्न विद्युः।' 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यत्र हेतुमाह–आश्चर्यो वक्ता दुर्लभ आचार्यः जातायामपि विविदिषायाम् । वक्तृपदं श्रवणसामग्र्या उपलक्षणम् । 'शृण्वन्तोऽपि बहवो यन्न विद्युरि'त्यत्र हेतुमाह—'कुशलोऽस्य लब्धा' अस्य आत्मनः लब्धा साक्षात्कारवान् कुशल एव, योऽपि ध्यानं सम्यगनुतिष्ठति । कृतश्रवणस्यापि यदि ध्यानप्रतिबन्धकपापं प्रस्तुतं भवति, तदा यावद्भोगक्षयं ध्यानासम्पत्तेर्दुर्लभ एवात्मेति भावः । किं बहुना । क्रियमाणे श्रवणे मतिमान्द्यादिना शाब्दज्ञानमपि नोत्पद्यते । तदाह—'आश्चर्यो ज्ञाता कुशलानुशिष्टः ।' कुशलेन आचार्येण बोधितोऽपि ज्ञाता आश्चर्यः दुर्लभः । तथा च यस्य ध्यानपरिपाकान्तं प्रतिबन्धकानि प्रारब्धानि न भवन्ति, तस्यैहैव विद्या सिध्यति, अन्येषां तु श्रवणादिसाधनानुष्ठाने प्रवृत्तानामपि यथायथं जन्मान्तर इति ॥५१॥

इति ऐहिकाधिकरणम् ॥ १६ ॥

# एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥५२॥

सङ्गतिगर्भं पूर्वपक्षमाह—**यथा मुमुक्षोरिति** । **उत्कर्षनिकर्षकृत इति** । साधनीभूता हि विद्या ऐहिकत्वामुष्मिकत्वविशेषवती । विशेषवत्साधनसाध्यानि च फलानि विशेषवन्ति दृष्टानि लोके । मुक्तौ चोत्पन्ने ज्ञाने आमुष्मिकत्वासम्भवात् विशेषान्तरापेक्षायां सगुणोपासनासाध्यायाम् अवान्तरमुक्तावुत्कर्षापकर्षरूपविशेषस्य दृष्टत्वादिहापि उत्कर्षापकर्षरूपो विशेषो भवेत् । न च निर्विशेषमुक्तेर्ब्रह्मरूपाया उत्कर्षनिकर्षावसम्भावितौ । ब्रह्मण एकरूपत्वादिति वाच्यम् । ब्रह्मरूपाया अपि तस्या आवरणनिवृत्त्यपेक्षतया यस्य किञ्चिदावरणं निवृत्तं, तस्य ईषद्ब्रह्मानन्दस्स्फुरति, यस्य तु कृत्स्नमावरणं निवृत्तं, तस्य सम्यग्ब्रह्मानन्दस्स्फुरतीत्यावरणावशेषनिरवशेषाभ्यां निर्विशेषमुक्तेरपि तारतम्यसम्भवादिति पूर्वपक्षी मन्यते । अयमत्र सिद्धान्ताभिप्रायः—ध्यानपरिपाकान्तसाधनानुष्ठानेन लब्धा या विद्या, सा मोक्षसाधनम् । सा च सर्वेषां न तारतम्ययुक्ता । सगुणविद्यायामिवेह गुणविशेषासम्भवात् । निर्विशेषविद्यागतमैहिकत्वादिकं तु न फले विशेषप्रयोजकम् । सम्पन्नायां विद्यायां फलावश्यम्भावात् निरवशेषाविद्यानिवृत्तिरेव मुक्तिफलाभिव्याञ्जिका । अतो नाविद्यानिवृत्तितारतम्यानुसारेणापि मुक्तौ तारत-

म्यं वक्तुं शक्यम् । न चोत्पन्नायामपि विद्यायां प्रारब्धप्रतिबन्धकानि सन्तीति नैहिकत्वं मुक्तेस्सम्भवतीति वाच्यम् । प्रारब्धांशेन विक्षेपशक्त्यनुवृत्तावप्यावरणशक्तिनाशेन ब्रह्मस्वरूपानन्दस्य स्फुरणेन जीवन्मुक्तेस्तदानीमेव सम्भवात् । **न हि गतिरधिकास्तीति** । गतिः प्राप्यं फलं निर्विशेषे कस्यचिदधिकं, कस्यचित् न्यूनमिति नास्ति । सति हि गुणे उपास्ये तत्तारतम्यात् फले अतुल्यतां प्रवदन्तीत्यर्थः ॥५२॥

इति मुक्तिफलानियमाधिकरणम् ॥१७॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्री-**
**चरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्या-**
**दिगुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्द-**
**तीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थ-**
**स्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वै-**
**तानन्दस्य कृतौ शारीरकभाष्यव्या-**
**ख्यायां ब्रह्मविद्याभरणाख्यायां**
**तृतीयस्य अध्यायस्य**
**चतुर्थः पादः ॥**

**॥ समाप्तश्चाध्यायः ॥**

ॐ

---

॥ अथ ॥

# ॥ चतुर्थाध्याये ॥

## ॥ प्रथमः पादः ॥

## आवृत्तिरसकृदुपदेशात् ॥१॥

सङ्गतिं सूचयन् वृत्तवर्तिष्यमाणाध्याययोरर्थं कीर्तयति–**तृतीयेऽध्याये इत्यादि**। अस्मिन्नप्यावृत्त्यादीनां परापरविद्याङ्गानां निरूपणीयतया प्रायेणेत्युक्तम्। ततश्च साधनभूतपरापरविद्यानिरूपणानन्तरं तत्फलनिरूपणमर्थक्रमानुसारि भवति। अध्यायार्थयोस्साधनफलयोः क्रमिकत्वादिति भावः। अस्मिन्नध्याये परापरविद्ययोर्यत् साधारणं फलं, तत् तन्त्रेणैव विचारयिष्यते। अपरविद्यायां विदुषः पापक्षयः प्रथममिति स प्रथमपादे निरूप्यते। स निर्गुणविद्यासाधारणः। पापक्षयानन्तरभाविन्युत्क्रान्तिः सगुणविदाम्। सा द्वितीये पादे निरूप्यते। उत्क्रान्तिनिरूपणप्रस्तावे परविदुषस्सा नास्तीति 'प्रतिषेधादि'त्यधिकरणे निरूपयिष्यते। निर्विशेषविद्यायामुत्क्रान्तिप्रतिषेधे उत्क्रान्तिप्रसङ्गागते निरूपिते प्रसङ्गादेव निर्विशेषफलं लिङ्गशरीरलयादिकं निरूपयिष्यते। तृतीयपादे तु उत्क्रान्तस्यार्चिरादिमार्गप्राप्तिर्निरूपयिष्यते। अर्चिरादिमार्गविचारप्रसङ्गवशात् प्रतीकोपासकानाममानवपुरुषसम्बन्धो नास्तीति प्रतिपादयिष्यते। ततश्चतुर्थे पादेऽर्चिरादिमार्गेण ब्रह्मलोकं गतानां सगुणोपासकानां सत्यकामत्वाद्यभिव्यक्तिः। निर्विशेषविदां तु स्वरूपेणैवावस्थितिरिति फलविभागो दर्शयिष्यते। अतोऽर्थक्रमानुसारेण पादानामपि क्रमो द्रष्टव्यः। अत्र प्रथमाधिकरणे विद्यासाधनभूतानि श्रवणादीनि, सकृदेव कर्तव्यानि, उत यावत्फलमावर्तनीयानीति सन्देहः, एवं सविशेषोपासनमप्याप्रायणमावर्तनीयम्, उत सकृदेव कर्तव्यमिति। **एवमपि यावच्छब्दमिति**। ननु, 'व्रीहीनवहन्ती' त्यवघातमात्रश्रवणेऽपि यथा वितुषीभावपर्यन्तं तस्यावृत्तिः, एवं श्रवणादीनामपि आवृत्तिः किं न स्यात्। न स्यात्। अवघातस्य हि वितुषीभावो दृष्टं फलम्। अतः तत्सिद्ध्येऽश्रुताप्यावृत्तिस्तत्राक्षिप्यते। श्रवणादीनां तु साक्षात्कारोद्देशेन विहितानां साक्षात्कारो न दृष्टं फलम्। तस्य प्रमाणजन्यस्य तर्करूपश्रवणं प्रति न दृष्टफलत्वं वक्तुं शक्यम्। एवं ध्यानमपि प्रत्ययावृत्तिरूपं न प्रमाणमिति तस्यापि साक्षात्कारो न दृष्टं फलम्। अतोऽदृष्टद्वारैव श्रवणादेस्साक्षात्कारहेतुत्वान्नावघातवदिहावृत्त्याक्षेपः। सगुणोपासनानामपि ब्रह्मलोकावाप्त्यादिकमदृष्टद्वारैवेति न तत्राप्यावृत्त्याक्षेप इति पूर्व-

पक्षिणो हृदयम् । **दर्शनपर्यवसानानि हीति** । अयं भावः—यद्यपि श्रवणादिकमप्रमाणभूतं, तथापि परम्परया साक्षात्कार उपयुज्यते दृष्टविधयैव । तच्च व्युत्पादितं 'सहकार्यन्तरविधि'रित्यत्र । अतः प्रमाणासम्भावनादिनिवृत्तिपर्यन्तं तान्यावर्तनीयानि । एवं सगुणोपासनेष्वप्यावृत्तिरपेक्षिता । तत्र हि फले जननीये उपास्यसाक्षात्कारो द्वारम् । 'यस्य स्याद्द्धा न विचिकित्सास्तीति देवो भूत्वा देवानप्येती'ति श्रवणात् । यद्यपि इदं वचनं विद्याविशेषप्रकरण एव श्रुतं, तथापि यत्र श्रुतं, तेषु साक्षात्कारस्य वचनबलात् द्वारता सिद्धा । ध्यानस्य ध्येयसाक्षात्कारहेतुत्वं विधुरपरिभावितकामिनीसाक्षात्कारस्थले क्लृप्तमिति विद्यान्तराणामपि द्वारापेक्षायामन्यत्र क्लृप्त उपास्यसाक्षात्कार एव द्वारत्वेन कल्प्यते । न चासौ सकृद्ध्यानमात्रेण सिध्यतीति तदुपपत्तये सगुणेष्वप्युपासनेषु नैरन्तर्येणादरपूर्वकावृत्तिराक्षिप्यते । एवं च यत्र विदिधातुना सविशेषविद्या निर्दिश्यते, तत्रावृत्तिरर्थादाक्षिप्ता । उपासीतेति विधाने तु तस्याश्शब्दार्थतामप्याह—**अपि चोपासनमित्यादि** । विदिधातुनिर्देशस्थले आवृत्तेश्शब्दार्थतां वक्तुमुपासिना समानार्थतां दर्शयति—**विद्युपास्त्योश्चेति** । **यस्तद्वेदेति** । अत्र पूर्ववाक्ये रैक्वः प्रस्तुतः, स रैक्वः यद्वेद, तद्रैक्ववेद्यमन्योऽपि यो वेद, तस्यापि धर्मे सर्वलोकानां धर्मा अन्तर्गता भवन्तीति पूर्ववाक्यादनुषज्यते । स रैक्व एवं महिमशाली मया एतदित्थमुक्त इति हंसस्य हंसान्तरं प्रति वचनम् । अत्र रैक्वगता संवर्गविद्या विदिनोपक्रान्ता, रैक्वं प्रति विद्याग्रहणार्थमागतस्य जानश्रुतेर्वाक्यमनुमणुतामिति, मामनुशाधीत्यन्वयः । अत्र वेदितृत्वेन पूर्वं निर्दिष्टो रैक्व उपास्य इति निर्दिष्टः । **आवृत्तेस्सूचक इति** । साङ्गवेदाध्ययनादेवात्मप्रतीतेस्सिद्धतया पुनश्श्रवणादिकर्तव्यताप्रतिपादनं हि तस्याः प्रतीतेरसम्भावनादिना आपातत्वं सूचयदसम्भावनादिनिवृत्त्यर्थमावृत्तिं सूचयतीति भावः ॥ १ ॥

## लिङ्गाच्च ॥२॥

छान्दोग्ये 'असौ वा आदित्य उद्गीथ' इत्युद्गीथविज्ञानं प्रस्तुत्य 'एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाचेत्ये'कपुत्रतादोषेण तदपोद्य 'रश्मींस्त्वं पर्यावर्तयात् बहवो मे भविष्यन्ति' पर्यावर्तयादिति 'तुह्योस्तातङ्ङाशिष्यन्यतरस्यामि'ति हेस्तातङादेशे तकारलोपश्छान्दसः, पर्यावर्तयेत्यर्थः । इत्युद्गीथे रश्मिदृष्टिं बहुपुत्रतायै विदधद्वाक्यं वेदनमावृत्तिपदेनानुवदतीति भवत्येतल्लिङ्गम् । उपासनस्यावृत्तिगर्भत्वे श्रवणस्यावृत्तिः कर्तव्येति सिद्धान्तिना प्रतिपादितम् । तत्र श्रवणपदेन किं विवक्षितं, किं पदार्थमात्रव्युत्पत्तिमतो यच्छाब्दज्ञानं,

तदेव, उत विचारयुक्तशाब्दज्ञानम् । आद्येऽपि किं प्रयोजनमावृत्तेः । न तावत् पूर्वपूर्वपर्यायानवगतो विशेष उत्तरोत्तराभ्यासेऽवगम्यत इति शक्यते निर्विशेषविद्यायां वक्तुमित्याह—**साध्यफलेषु प्रत्ययेष्विति** । साध्यं फलं पूर्वपूर्वप्रत्ययानवगतविशेषविषयकत्वरूपं येषु, तेष्वित्यर्थः । अस्यैव ग्रन्थस्य विवरणं स्वयमुत्तरत्र करिष्यति—'अपि चानेकांशोपेत' इत्यादिना । तर्हि शाब्दबोधोत्पत्त्यर्थमेवावृत्तिरस्त्विति शङ्कते—**सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीतीति** । विचारयुक्तशाब्दज्ञानं श्रवणमिति पक्षमुद्भावयितुं प्रथमतो विचारस्य प्रयोजनमाह—**अथोच्येतेति** । अयमर्थः–शब्दो हि स्वभावतः परोक्षज्ञानजनकः । परं तु यथा सन्निहितवस्तुगोचरप्रत्यक्षजननस्वभावमिन्द्रियं संस्काररूपसहकारिसाचिव्यात् व्यवहितगोचरमपि प्रत्यभिज्ञाप्रत्यक्षं जनयति, एवं विचाररूपसहकारिसाचिव्यात् शब्दोऽपि ब्रह्मविषयकापरोक्षज्ञानजनको भविष्यतीति भावः । यद्यप्यर्थानुरोधितया ज्ञानापरोक्ष्यस्य प्रतिपादनात् शब्दजन्यमपि ज्ञानमपरोक्षात्मगोचरमपरोक्षं नापरोक्ष्याय विचारमपेक्षत इति, तथापि तदुपेत्य तावताप्यावृत्तिर्न सिध्यतीत्याह—**तथापीति** । सामान्यविषयम् आवृत्तिजन्यज्ञानविषयत्वयोग्यस्वरूपविशेषाविषयम् । यदि श्रवणावृत्तिरपेक्षिता स्यात्, तदात्मापरोक्ष्यं कस्यापि सकृच्छ्रवणे न स्यात् । क्लृप्तकारणं विना कार्यानुदयात । न चैतदस्ति । सकृच्छ्रवणमात्रेणैव केषाञ्चिदात्मापरोक्ष्यदर्शनात् । अतो व्यभिचारादपि नावृत्तेः कारणत्वमित्याह—**न च सकृत्प्रवृत्त इति** । पूर्वोक्तस्य द्विविधस्यापि श्रवणस्यावृत्तिरपेक्षिता , तत्राद्यस्य श्रवणस्य तत्तदधिकरणनिरसनीयशङ्काकन्दलनाय पूर्वपक्षिसिद्धान्त्यभिमतसाधारणार्थज्ञानपर्यन्ता । दृश्यते हि कठिनश्लोकादौ साधारणार्थज्ञानेऽप्यावृत्त्यपेक्षा । द्वितीयस्य तूद्भावितत्तत्संशयनिरसनपर्यन्ता । येषां तु कुशलबुद्धीनां जन्मान्तरीयविचारसंस्कृतत्वात् सकृत्प्रवृत्तस्यैव निर्धारणादिकं , तान् प्रत्यावृत्त्यपेक्षाविरहेऽपि नानुपपत्तिः । जन्मान्तरीयावृत्तिमादाय व्यभिचारपरिहारसम्भवात् । वामदेवादिषु हि जन्मान्तरीयाचार्योपदेशादिकं स्वीकृत्यैवावृत्त्यतिरिक्ताया अपि ज्ञानसामग्र्या व्यभिचारः परिहरणीय इत्यभिप्रेत्य परिहरति—**अत्रोच्यत इत्यादिना** । आवृत्तेश्शङ्काविशेषनिरसन उपयोग इत्यत्र लिङ्गमाह—**तथा हि छान्दोग्य इति** । 'तत्त्वमसी'ति महावाक्यार्थनिर्णयशङ्काविशेषनिरासद्वारावृत्तेरपेक्षेति किमु वक्तव्यम् । यतस्तादृशवाक्यार्थज्ञानोपयोगितत्त्वंपदार्थनिर्णयायाप्यावृत्तिरपेक्षितेत्याह—**अपि च तत्त्वमसीत्येतद्वाक्यमित्यादिना** । **तत्तु पूर्वरूपमेवेति** । तत्पदार्थज्ञानं पूर्वरूपमेव वाक्यार्थप्रतिपत्तेरित्यर्थः । विचारावृत्तिवद्ध्यानस्याप्यावृत्तिः कर्तृत्वादिभ्रमवासनादिनिवृत्तिपर्यन्तेत्यपि द्रष्टव्यम् । जीवस्यासंसारि·

ब्रह्मात्मत्वनिर्धारणोपयोगित्वमावृत्तेरुक्तं, तत्तदैव भवेत् , यदि जीवस्य तथाविधं स्वरूपं भवेत् , तत्तु नास्ति । प्रत्यक्षादिप्रमाणैस्संसारित्वनिर्धारणादित्यभिप्रेत्य शङ्कते—**सत्यमेवमिति** । अनन्यथासिद्धप्रबलश्रुतिस्मृतिप्रमाणेनात्मनोऽसंसारित्वप्रतिपादनात्तद्विरोधिनो लौकिकमानस्य व्यावहारिकवस्तुविषयत्वमिति आरम्भणाधिकरणादिषु प्रतिपादनान्नोक्तानुपपत्तिरिति परिहरति–**न देहाद्यभिमानवदिति** । चैतन्यात् बहिः चैतन्यस्वरूपात्स्वरूपान्तरेण । ननु, दुःखित्वादीनां स्वरूपत्वाभावेऽपि आत्मधर्मता भवतु । परमार्थतः नेत्याह—**सुषुप्त्यादिषु चेति** । व्यभिचारिणां पारमार्थिकता नास्तीति भावः । ननु, यथा सगुणेषु विज्ञानेषु जातेष्वप्युपास्यसाक्षात्कारेऽन्त्यप्रत्ययार्थमावृत्त्यपेक्षा, एवं निर्विशेषविदामपि साक्षात्कारानन्तरमावृत्तिः किं न स्यात् । ततश्च यस्य सकृच्छ्रवणेनाप्यात्मतत्त्वनिर्धारणं जातं, तेनाप्यावृत्तिः कार्येत्याशङ्क्याह—**न चैवमात्मानमनुभवत इति** । सगुणविद्याफलस्यान्त्यप्रत्ययाधीनत्वाद्युक्ता तावत्पर्यन्तं तत्रावृत्तिः । निर्विशेषविदां त्वात्मतत्त्वसाक्षात्कारकाले इहैव मुक्तेः प्रतिपादनान्नानन्तरमावृत्त्यपेक्षेति भावः । **यस्त्वात्मरतिरिति** । प्रियविरहितनायिकाया नायकानुसन्धानमभिलाषयुक्ततया रतिरित्युच्यते । यस्य साधकस्य तादृशमात्मन्यनुसन्धानमात्मरतिः, प्राथमिकस्वरूपानन्दसाक्षात्कारस्तृप्तिः । स एव जीवन्मुक्ते सन्ततसन्तोषः । ननु, यदि वेदान्तेष्वावृत्तियुक्तश्रवणादिविधिरुपेयते , तथासत्यमृतत्वकामिनं तत्राधिकारिणं प्रकल्प्य तन्निष्ठं शास्त्रमुपगम्यताम् । आत्मा तु तच्छेषतयैव प्रतिपाद्यताम् । यदि त्वन्यपराद्वाक्यादात्मा न सिध्येदित्यात्मसाक्षात्कारः प्रमारूपो न लभ्येत, तदा मास्तु तादृशस्सः । सविशेषविद्यास्विवारोपरूपसाक्षात्कारस्यैव निर्विशेषविद्यायामपि द्वारत्वोपपत्तेरिति शङ्कां निराकर्तुमाह—**तत्रापीति** । उपक्रमोपसंहारैकरूप्याद्यनेकतात्पर्यलिङ्गोपेतैर्वाक्यैरद्वितीयमात्मतत्त्वं प्रतिपाद्यते । तत्प्रतीत्युपायतया चावान्तरवाक्यविधया श्रवणादिकं विधीयते । अतो यथा प्रधानार्थसंरक्षणं भविष्यति, तथैव वाक्यार्थ आश्रयणीयः, न तु तद्विरोधेनेति भावः । ननु, विधिशेषतयात्मनः प्रतिपादनेऽपि न व्याघातः । देवताधिकरणन्यायेनात्मनोऽपि सिद्धिसम्भवादिति , नेत्याह—**नियुक्तस्य चेति** । तथासति प्रधानविनियोगवाक्यानुसारेण नियोज्यपरमार्थतासिद्धेस्तद्विरोधेन प्रमाणान्तरविरोधेन चान्यपरवाक्यादद्वितीयात्मतत्त्वं न सिध्येत् । प्रमाणान्तराविरोध एव देवतान्यायः प्रवर्तत इति भावः ॥२॥

इति आवृत्त्यधिकरणम् ॥१॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३॥

पूर्वस्मिन्नधिकरणे ब्रह्मप्रतिपत्तिसाधनानि श्रवणादीन्यावर्तनीयानीत्युक्तम् । तत्र प्रतिपत्तिविषयीभूतं ब्रह्मात्राधिकरणे प्रत्यगभिन्नं निर्धार्यत इति सङ्गतिः । ननु, तत्रतत्र प्रत्यगभेदो ब्रह्मणश्श्रुत्या तदविरोधिन्यायेन च प्रतिपादितः । पुनः किमर्थोऽयमारम्भ इति चेत्, उच्यते—शङ्काविशेषनिराकरणार्थोऽयमारम्भः । यदि हि ब्रह्म निर्विशेषानन्दमात्रं जीवस्वरूपं भवेत्, तदा जीवस्य स्वप्रकाशतया सदाभासमानत्वात् तद्रूपं ब्रह्मापि सदायत्तं विनैव भासेत । न च जीवस्वरूपभूतमपि ब्रह्मावृतत्वान्न भासत इति वाच्यम् । न हि स्वप्रकाशानन्दस्वरूपब्रह्मरूपादन्यज्जीवस्य स्वरूपमस्ति । अतिरिक्तस्वरूपाभ्युपगमे ब्रह्माभेदानुपपत्तेः । ततश्चावरणोपगमे किमपि जीवस्वरूपं न भासेत । भासमानत्वे वा ब्रह्मस्वरूपं नित्यमेव भायात् । अतो जीवब्रह्मणोर्भेदमुपेत्यैव ब्रह्मणो भानं समर्थनीयमिति शङ्का । अयमत्र परिहारः——भासत एवानन्दरूपेण जीवः, परं तु तत्राविद्यादिदोषाणामारोपात् सविशेषमेव तत् भासते, निर्विशेषमात्मतत्त्वं नास्तीति व्यवहारयोग्यं च भवति । अतो निर्विशेषात्मना तदावृतमित्युच्यते । न चाभ्युपगम्यमानाविद्या ब्रह्मविषया तत्रारोपिता च वक्तव्या । सा च न सम्भवति । प्रकाशमाने वस्तुनि अविद्याविषयत्वानुपपत्तेः अधिष्ठानावरणं विना अविद्यारोपानुपपत्तेश्चेति वाच्यम् । अविद्यारोपस्यानादितया तस्य स्वपरनिर्वाहकत्वेन तदर्थमन्येन केनचित् ब्रह्मस्वरूपावरणस्यानपेक्षितत्वात् । स्वप्रकाशस्फुरणं च नाविद्याविषयत्वविरोधि, अपि तु सामग्रीविशेषजन्यमात्मतत्त्वज्ञानमेव तद्विरोधीति विशदतया प्रथमसूत्र एव प्रतिपादितमिति । एतौ शङ्काविशेषपरिहारौ 'कस्य पुनरयं प्रबोध' इत्यादिशङ्कापरिहारभाष्येण सूचितौ ॥३॥

इति आत्माधिकरणम् ॥ २ ॥

## न प्रतीके न हि सः ॥४॥

पूर्वस्मिन्नधिकरणे जीवब्रह्मणोरभेदमुपजीव्य निर्विशेषविद्यासु सविशेषविद्यासु च प्रत्यगभेदेनैव ब्रह्मानुसन्धानं कर्तव्यमित्युक्तं, तर्हि जीवब्रह्मणोरभेदादेव ब्रह्मत्वेन भासमानेषु मनआदिप्रतीकेष्वपि आत्माभेदो द्रष्टव्य इति प्रत्यवस्थानात् सङ्गतिः । निर्विशेषविद्यायां चैतन्यमात्रमनुसन्धेयं तदभिन्नमेवेति नाहंग्रहे विरोधः । सविशेषविद्यास्वप्युपास्यस्य प्रधानस्य ब्रह्मरूपस्यासत्यभेदो जीवेन सहेति तत्रापि नाहंग्रहानुपपत्तिः । 'मनो ब्रह्मेत्यादेश' इत्यादौ मनआदिकमेव प्राधान्येन ब्रह्मदृष्ट्योपास्यं, न च तेन सह जीवस्याभेदः । जडाजडयोरभेदासम्भवात् । अतः प्रतीकेष्वहंग्रहो नोपपद्यत इत्यभिप्रायेण शङ्कते—**अस्मादिति**।

परिहरति—**ब्रह्मण इति** । अयमर्थः—कार्यकारणयोरनन्यत्वं तावदनेकैः प्रमाणैरारम्भणाधिकरणे व्यवस्थापितम् । तथा च मनआदीनां ब्रह्मकार्यतया ब्रह्मणा अभेदसिद्धौ ब्रह्माभिन्नजीवेनाप्यभेद इति न मनआदिष्वहंग्रहे काचिदनुपपत्तिः । ननु, 'तदिदमप्येतर्हि य एवंवेदाहं ब्रह्मास्मीति स इदं सर्वं भवती'त्यादिवाक्यानुसारेण प्रत्यगभिन्नात्मज्ञानस्यैव मोक्षसाधनतया निर्विशेषविद्यायामहंग्रह आदृतः । सविशेषविद्यास्वपि 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'ति वचनबलादेवाहंग्रह आदृतः । प्रतीकेषु सत्यपि जीवैस्सह यथाकथञ्चित्प्रतीकानामभेदेन तथैवानुसन्धानं कार्यमित्यत्र नियामकं किञ्चिदस्ति । मनआदिषु ब्रह्मदृष्टिमात्रेण विधिबलादाम्नातफलसिद्ध्युपपत्तेः । अतः कथमत्राहंग्रह इति चेन्न । सविशेषविद्यासु न सर्वत्र वचनमस्ति । अहंग्रहे 'त्वं वा अहमस्मी'ति वाक्यस्य विद्याविशेषगतत्वात् । अतो यत्र वचनं नास्ति, तत्र सविशेषविद्यास्वहंग्रहोऽर्थादेव कर्तव्य इति । आर्थिकश्चाहंग्रहः प्रतीकेषु व्यावर्तयितुं न शक्यते । जीवानां प्रतीकानाञ्चाभेदस्योपपादितत्वात् । ब्रह्माभेदेऽनुसन्धीयमाने ब्रह्माभिन्नजीवाभेदस्यापि उपस्थितस्य त्यागायोगादिति पूर्वपक्षी मन्यते । अयमत्र सिद्धान्ताभिप्रायः—यथा सविशेषेषूपासनेष्वर्थादहंग्रहः, नैवं प्रतीकोपासनेषु प्राप्नोति । सविशेषब्रह्मोपासनेषु हि इहैवाभिमानिक उपास्याभेदः फलजनने द्वारम् । न चासावहंग्रहं विना सम्भवति । अतस्तत्राहङ्ग्रह आदृतः । प्रतीकेषु न तथा । अपि तु ब्रह्मात्मना प्रतीकेषु गृहीतेषु यथोक्तं फलं सिध्यति, न तूपासकस्य प्रतीकेष्वभेदाभिमानोऽपेक्षितः । आर्थिको ह्यर्थः स उच्यते, येन विना श्रुतोऽर्थो नोपपद्यते । इह च श्रुताया मनआदिषु ब्रह्मदृष्टेः तत्फलस्य चाहङ्ग्रहं विनैवोपपत्तेः न तस्यार्थिकतेति । यदपि पूर्वपक्षिणोक्तं—प्रतीकानां ब्रह्माभिन्नत्वात् ब्रह्माभिन्नजीवाभेदोऽपि तत्राविकल इति तत्र वक्तव्यम् । किं प्रतीकानां ब्रह्माभेदः ब्रह्मविकारत्वात्, उत ब्रह्मदृष्टिविषयत्वात् । आद्येऽपि मनो ब्रह्मेत्यत्र ब्रह्मविकारतया मनश्शब्देन प्रधानतया प्रतिपादितः जडांशो विवक्षितः,उतोपसर्जनतया प्रतिपादितो मनोऽवच्छिन्नसत्तांश इति । नाद्य इत्याह—**न हि स उपासकः प्रतीकानिति** । जडांशस्य ब्रह्मविकारत्वेऽपि न स्वरूपैक्यमभेदः, अपि तु तादात्म्याख्यस्वरूपसम्बन्धविशेषः । अतो न जीवाभेदः तस्मिन्नंश इति भावः । न द्वितीय इति दर्शयितुं तमुद्भावयति—**यत्पुनरिति** । सत्तांशस्याप्यवच्छिन्नवेषेण विकारत्वम् । **प्रतीकाभावप्रसङ्गादिति** । मनआदिशब्दैर्यद्यपि सत्तांशः प्रतिपाद्यते । तथापि स उपसर्जनतयैव प्रसिद्ध्यनुसारेण जडांशस्यैव प्राधान्येन शक्यत्वात् । अतस्सत्तोपसर्जनजडांश एव ब्रह्मदृष्ट्या प्रतीक उपास्यत्वेनावगम्यते । तत्र यदि ब्रह्मपदसामानाधिकरण्यागं 'इदं सर्वं यदयमात्मे'त्यादिनिर्विशेषप्रकरणगतवाक्येष्विव

सत्तांशो लक्ष्येत, तथासति शब्दस्वारस्यानुरोधेन यस्य प्रतीकत्वमवगतं, तस्य परित्यागस्स्यात् । अपि च तदनुगतसत्तांशस्य निर्विकारब्रह्माभेदे बोध्यमाने मनश्शब्दार्थस्य मिथ्यात्वमपि द्योदितं भवेत् । न चैतदुचितमिति भावः । ब्रह्मदृष्टिविषये ब्रह्मणि तत्त्वमसीत्यादिवाक्यैर्जीवाभेदप्रतिपादनात् ब्रह्मदृष्टिविषयेषु प्रतीकेष्वपि जीवाभेदोऽनुसन्धेय इत्याद्यद्वितीयं शङ्कते—**न च ब्रह्मण आत्मत्वादिति** । **कर्तृत्वाद्यनिराकरणादिति** । आदिपदेन तत्पदार्थगतसविशेषत्वं गृह्यते । अनिराकरणादित्यभेदप्रतिपादनस्याप्युपलक्षणम् । निर्विशेषविद्यायां ब्रह्मणो ब्रह्मदृष्टिविषयत्वमात्रं जीवाभेदानुसन्धानप्रयोजकं न भवति, अपि तु तत्त्वंपदार्थविशोधनपूर्वकमभेदप्रतिपादनम् । इह तु प्रतीकविद्यायां न तदस्तीत्यभिप्रायेण सङ्ग्रहवाक्यं विवृणोति--**कर्तृत्वादिसर्वधर्मेति** । ननु, 'मनो ब्रह्मे'त्यादौ ब्रह्मपदेन त्रिविधपरिच्छेदशून्यवस्तुप्रतिपादनात्तदुपपत्तये इहापि कर्तृत्वादिनिराकरणं सूचितमेवेती'दं सर्वं यदयमात्मे'तिवत् इहापि वाक्यार्थो ग्राह्य इत्याशङ्क्याह–**सुवर्णात्मनेव** इति मनो ब्रह्मेत्यादौ मनआदीनां प्राधान्यात्तदुपपत्तये वस्तुपरिच्छेदराहित्यमिह ब्रह्मपदेन न विवक्षणीयम् । अन्यथा प्रधानस्य मनस उपमर्दस्स्यादिति भावः ॥४॥

इति प्रतीकाधिकरणम् ॥३॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥५॥

सङ्गतिं सूचयन्नधिकरणमवतारयति—**तेष्वेवेति** । 'आदित्यो ब्रह्मे' त्यादिवाक्यैर्हि आदित्यादेर्ब्रह्माभेदोऽनुसन्धेय इत्युच्यते । तदनुसन्धानं चारोपात्मकम् । तत्रारोपे आदित्यादयः प्रकारतया, ब्रह्म विशेष्यतया, उत वैपरीत्यम् इति सन्देहः । **परिमितविकारेति** । निर्विशेषवाक्यत्वे हि कृत्स्नस्य प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय 'इदं सर्वं यदयमात्मे'तिवत् कृत्स्नोपादानं न्याय्यम् । मनआदिपदैः परिमितानां विकाराणां तु उपादानं न न्याय्यमित्यर्थः । ननु, ब्रह्मप्राधान्यपक्षे यद्यपि ब्रह्मोपास्यं भवति, तथापि अस्मिन् पक्षे निकृष्टवस्त्वभेदो ब्रह्मणि ध्यातव्य इति नेदमुपासनं ब्रह्मप्रसादाय पर्याप्तं भवेत् । लोके उत्कृष्टे निकृष्टाभेदज्ञानस्य तत्कोपापादकत्वदर्शनादित्याशङ्क्याह — **ब्रह्मोपासनं चेति** । ब्रह्म हि फलप्रदमिति शास्त्रसिद्धम् । अतो ब्रह्मणः प्राधान्यं फलप्रदतया शास्त्रानुमतम् । ततश्च शास्त्रानुसारेण निकृष्टाभेदानुसन्धानेनापि फलेऽवगम्यमाने तस्य लौकिकन्यायेन न बाधनमुचितं भवतीति भावः । **लौकिकोऽपि न्याय आश्रीयमाण इति** । ब्रह्मणः फलप्रदत्वमात्रेण प्राधान्येनात्र ब्रह्मोपास्यमिति निर्धारयितुं न शक्यते । संवर्गविद्यादिषु यथाकथञ्चित् ब्रह्मण उपास्यत्वाभावेऽपि हि तदेव फलप्रदम् । एवं

च गुणतयापि ब्रह्मसंस्पर्शिन्यामुपासनायां ब्रह्मणः फलप्रदत्वमिति किमु वक्तव्यम् । ततश्च ब्रह्मणः प्रधानत्वेऽप्रधानत्वे वा ब्रह्मैव फलप्रदमिति श्रुतेरुपपत्तौ सत्यामुत्कृष्टे निकृष्टदृष्टिः कर्तव्येति लौकिकन्यायो न बाधनीय इति भावः ॥ ५ ॥

इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

सङ्गतिर्भाष्य एव स्पष्टा । **कर्मात्मकत्वादिति** । ननूद्गीथादीनां कर्मात्मकत्वम्, आदित्यादीनां सिद्धरूपत्वमिति अस्तु विशेषः । तावता कर्मात्मका एवोद्गीथादय आदित्यादिषु ध्येयाः, न तु सिद्धरूपा आदित्यादयः उद्गीथादिषु ध्येया इति नियमः कुतो लभ्यते । उच्यते—एवं मन्यते—फलजननसामर्थ्यं हि कर्मणः सिद्धम् । सति सम्भवे प्राधान्येन यदुपास्यं, तस्मादेव फलं वक्तव्यम् । तत्र यदि क्रियारूपेषूद्गीथादिषु सिद्धरूपाणामादित्यादीनां दृष्टिर्विधीयेत, तथासत्युद्गीथादीनां क्रियारूपत्वं सिद्धरूपादित्यादिदृष्ट्यावगतं भवेत् । अतो न फलजननसामर्थ्यं तेषां भवेत् । आदित्यादीनामुद्गीथादिदृष्ट्योपासनायां तु कर्मरूपोद्गीथादिदृष्ट्यादीनां सिद्धरूपत्वमभिभूय क्रियारूपतोद्भूता भवेदिति अस्मिन् पक्षे उपास्यस्यादित्यादेः क्रियारूपत्वोद्भवात् फलजननसामर्थ्यं सम्भवतीति प्रकृतग्रन्थस्य चामुमाशयमेतद्दूषणपरेणादित्यादिभावेनापि दृश्यमानानामुद्गीथादीनां कर्मत्वानपायादिति सिद्धान्तगतेन वाक्येन स्वयमेव स्फुटीकरिष्यति—**तथा चेयमेवर्गग्निस्सामेत्यत्रेति** । 'इयमेवर्गग्निस्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयत' इति वाक्ये इयमेवेति पृथिवी निर्दिश्यते । पृथिव्यग्न्योः ऋक्साम्नोश्चाभेदारोपे आलम्बनमाधाराधेयभावं प्रतिपादयितुं 'तदेतदेतस्यामि'त्यादिवाक्यम् । तत्र ऋक्सामयोः प्रसिद्धयोराधाराधेयभावः 'तस्मादृच्यध्यूढमि'ति वाक्ये प्रतिपादितः । अतस्तदेतदेतस्यामिति वाक्ये ऋक्सामशब्दौ पृथिव्यग्न्योराधाराधेयभावप्रतिपादनपराविति । इदं चेयमेवेति वाक्ये पृथिव्यग्न्योरेव ऋक्सामारोप इत्यत्र लिङ्गं भवति । आरोप्यवाचकेन हि पदेनाधिष्ठानग्रहणं प्रसिद्धम् । माणवके ह्यग्न्यारोपेऽग्निपदेन माणवको गृह्यते । ऋक्सामयोः पृथिव्यग्न्यारोपे तु ऋक्सामपदाभ्यां पृथिव्यग्न्योर्ग्रहणमनुपपन्नं भवेदिति भावः । **अपि च 'लोकेषु पञ्चविधं सामोपासीते'** ति । ननु, लोकेष्विति सप्तम्या लोकानामधिकरणत्वे प्रतीतेऽपि द्वितीयानिर्देशबलात् साम्नामेवोपास्यतावगम्यते । लोकाधिकरणत्वं तु तस्यैव गुणः, न त्विदमुपासनम् । लोकविशेष्यकं सामोपसर्जनमिति सप्तमीनिर्देशात्सिध्यति । न चोत्तरत्र 'पृथिवी हिङ्कारोऽग्निः प्रस्ताव' इति वाक्येषु सामावयवानां पृथिव्यादिलोकानां च सामानाधिकर-

ण्यनिर्देशात् पूर्वत्राधिकरणाधेयभावो नोपास्यत्वेन विवक्षितः । अपि तु लोकान् पञ्चविधसामोपासीतेत्येव वाक्यार्थो विवक्षितः । सप्तमी च विषयत्वार्थेति लोकविशेष्यकमेवेदमुपासनं भवेदिति । एवमपि लोकानां प्रकारत्वं साम्नां विशेष्यत्वमिति वैपरीत्यं किमिति न स्वीक्रियत इति चेत्, उच्यते—शुक्तौ रजतत्वप्रत्ययः, घटे घटत्वप्रत्यय इत्यादिप्रयोगेषु हि विषयतयाधारताप्रतिपादिकायाः सप्तम्या विशेष्यत्वार्थकत्वं दृष्टमितीहापि लोकानां सप्तमीनिर्देशात् प्रधानता प्रतीयत इति तात्पर्यम् । **प्रथमनिर्दिष्टेषु चेति** । 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमि'ति न्यायेन प्रथमनिर्दिष्टस्य प्राधान्यमवगम्यत इति भावः । **उपपद्यते ह्येवमिति** । अङ्गसमभिव्याहृतानां ह्युपासनानां कर्मवीर्यवत्तरत्वफलकतावगम्यते । कर्मणश्च वीर्यवत्तरत्वं तदा भविष्यति, यद्युपासनैः कश्चित् कर्माङ्गेष्वतिशय आहितस्स्यात् । अत उपासनानां कर्माङ्गातिशयाधायकत्वावगमात्तेषामेवोपासनासु प्राधान्यमवगम्यत इति अनङ्गभूतानामुपसर्जनत्वेनैवोपेयेति भावः । नन्व'सार्वत्रिकी'ति सूत्रे उद्गीथाश्रिताप्त्यादिदृष्टिविषयकमेतद्वाक्यमिति व्यवस्थापितम् । अतो 'लोकेषु पञ्चविधं सामोपासी'तेत्यादीनां न कर्मवीर्यवत्तरत्वफलकता । तथा च कथमङ्गप्रधानता तत्र स्यादित्यभिप्रायेण शङ्कते–**भवतु कर्मसमृद्धिफलेष्विति** । स्वतन्त्रफलेषु 'लोकेषु पञ्चविधं सामोपासीते'त्युपक्रम्य 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्चे' त्यादिकं फलं समृद्ध्यतिरिक्तमाम्नातम् । **तादृशफलेषु तेष्वपीति** । अयं भावः–'असार्वत्रिकी'ति सूत्रे संहितोपासनाविषयकमिदं वाक्यमित्यभ्युपगमवादेनोक्तम् । कर्माङ्गसमभिव्याहृतसर्वोपासनाविषयकमिदं वाक्यमित्यर्थस्य 'तन्निर्धारणानियम' इत्यधिकरणे दर्शितत्वादिति परिहारो यद्यप्यस्ति, अभ्युपेत्य तु ब्रूमः । स्वतन्त्रफलत्वेऽपि प्रयुक्तिलाघवानुसारेणाङ्गेष्वेव लोकादिदृष्टिः कर्तव्या । यदि ह्यनङ्गेष्वेवादित्यादिषु दृष्टिः प्रक्षिप्येत, तदादित्योद्देशेन सामविशिष्टदृष्टिविधानाद्यत्रादित्यस्सन्निहितः, तत्रेदमुपासनं कर्तव्यमिति प्राप्नोति । तत्राविद्यमानस्य साम्न आदित्याभेददृष्टेरनुचितत्वात् सामापि प्रयुञ्ज्य एतदभेदो ध्येय इति प्राप्नोति । तथा च प्रयुक्तिगौरवम् । सामोद्देशेनादित्यदृष्टिविधौ तु यत्र साम क्रतुना प्रयुक्तं स्वप्रयोगान्तर्गतमस्ति, तत्रैवोपासनं कर्तव्यमिति प्राक्सिद्धादित्यदृष्टिमात्रकरणात् प्रयुक्तिलाघवमिति कुतोऽत्वधिकृतस्यैव प्रयुक्तिलाघवानुसारेण उपासनास्वाधिकरात्क्रत्वपूर्वसामानाधिकरण्येनैव लोकमामाद्युपासनानां फलं कल्पनीयमित्यक्षरार्थः । पूर्वाधिकरणन्यायादप्युद्गीथादिष्वेवादित्यदृष्टिः कर्तव्येत्याह—**फलात्मकत्वाच्चेति** । अधिकारवाक्यपर्यालोचनयाप्युद्गीथस्यैव प्राधान्यमित्याह —**अपि चोमित्येतदक्षरमिति** । सिद्धरूपादित्यादिदृष्ट्योपास्यमानाः उद्गीथादयः सिद्धभावं प्राप्नुयुः । ततो न फलजनकतासामर्थ्य-

मिति पूर्वपक्ष्युक्तमनुवदति–**यत्तुक्तमिति**। कर्मभूयं भूत्वा कर्मभावं प्राप्य। 'तदेतदेस्यामृच्यध्यूढमि'ति निर्देशानुपपत्तिं सिद्धान्ते परिहरति—**तदेतदेतस्यामिति**। **लाक्षणिक एवेति**। नन्वेवमत्र पृथिव्यग्न्योः ऋक्सामपदस्य लाक्षणिकत्वोक्त्या गौणत्वं पूर्वपक्षाभिमतमिति भाति। तत् कथम्। न ह्यत्र गौणत्वपक्षे सिद्धान्तानुपपत्तिः, लाक्षणिकत्वपक्षे सिद्धान्तत्वोपपत्तिरिति विशेषो वक्तुं शक्यते। यदि वा गौणी वृत्तिः, यदि वा लक्षणा, पक्षद्वयेऽपि 'आरोप्यवाचकेन पदेनाधिष्ठानस्य ग्रहणं, न त्वधिष्ठानवाचकेन पदेनारोप्यस्य ग्रहणमि'ति न्यायस्य प्रकृते बाधनीयत्वात्। तद्बाधनं च पूर्वोपन्यस्तैर्वक्ष्यमाणैश्च न्यायैरङ्गानां प्राधान्येन उपास्यत्वावगमात्। एवं तत्राधिष्ठानवाचकाभ्यामृक्सामशब्दाभ्यामारोप्ययोः पृथिव्यग्न्योः ग्रहणमिति। यदि सिद्धान्तपक्षे गौणी वृत्तिराश्रीयते, तदा पृथिव्यग्निदृष्टिविषयत्वं गुणः, लक्षणाश्रयणे तु ऋक्सामाध्यस्तत्वं शक्यसम्बन्ध इति द्वयमप्युपपद्यते। न च गौणीलक्षणयोरुक्तं सिद्धान्ताभिमतं निमित्तं पूर्ववाक्यस्य 'इयमेवर्गग्निस्सामे'त्यस्य ऋक्सामयोः पृथिव्यग्निदृष्टिपरत्वे सम्भवति। न च तत्पूर्ववाक्यार्थहेतुकथनपरे उत्तरवाक्ये आश्रयितुं युक्तम्। हेतुवाक्यार्थविवेचनदशायां साध्यवाक्यार्थानिर्णयादिति वाच्यम्। तथासति पूर्वपक्षिणापि गौणीलक्षणयोः यन्निमित्तं वक्तव्यं ऋक्सामदृष्टिविषयत्वं गुणरूपं ऋक्सामाधिष्ठानत्वरूपसम्बन्धात्मकं च हेतुकथनपरे वाक्ये, तदपि पूर्ववाक्यस्य पृथिव्यग्न्योः ऋक्सामदृष्टिविधिपरत्व एव सम्भवतीति तुल्यो दोषः। अत इत्थं परिहारो वक्तव्यः—न ह्यत्र विधिवाक्यस्य हेतुकथनवाक्यानुसारेणैवार्थो निर्णीयते। न्यायानुसारेणैवार्थनिर्णयोपपत्तेः। नापि विधिवाक्यार्थसिद्धौ स उपयुज्यते। विधित एव तत्सिद्धेः। परं तु अभेदे पूर्ववाक्येनोक्ते तत्र हेतुवन्निगदोऽयं आधाराधेयभावालम्बनं बोधयतीति स परिहारः सिद्धान्तिपूर्वपक्षिणोरुभयोरपि तुल्यः। अतो गौण्या वा लक्षणया वा पूर्वपक्षवत्सिद्धान्तिनाप्युपपादयितुं शक्यतया विशिष्य लक्षणाग्रहणं गौणीवृत्तेः लक्षितलक्षणाया दुर्बलत्वात् वस्तुगतिमनुरुध्येति द्रष्टव्यम्। विधिवाक्यस्वारस्येनापि ऋक्सामयोरेव पृथिव्यग्निदृष्टिरित्याह—**इयमेवर्गिति चेति**। 'य एवं विद्वान् साम गायती'ति क्रतुप्रयोगान्तर्गतगानकाले विद्याया अनुष्ठेयत्वसूचनादपि अङ्गानामुद्देश्यत्वमवगम्यत इत्याह—**य एवं विद्वानिति**। अनङ्गेषु सप्तमीनिर्देशात्तेषामेव प्राधान्यमवगम्यत इति पूर्वपक्ष्युक्तमनुवदति–**तथा लोकेष्विति**। **द्वितीयानिर्देशेन साम्नामुपास्यत्वावगमादिति**। यद्यपि घटे घटत्वप्रत्यय इत्यादिसमभिव्याहारेषु विषयतया आधारतावाचिन्याः सप्तम्याः विशेष्यतापर्यवसानं व्युत्पत्तिसिद्धं, तथाप्युपास्त इत्यादिसमभिव्याहारे विषयत्वविवक्षायां द्वितीयैव प्र-

युज्यते, न तु सप्तमी । न हि राजानमुपास्त इति वक्तव्ये राजनीति प्रयुज्यते । नापि घटं जानातीति विवक्षायां घट इति प्रयुज्यते । अतः प्रकृते सप्तमीनिर्दिष्टानां लोकानामुपासनाविषयत्वं न प्रतीयते । उपासनायां प्राधान्येन विषयत्वप्रतिपत्तिस्तु दूरापास्ता । अतो द्वितीयया साम्नामुपास्यत्वे झटित्यवगते उत्सर्गतः प्राधान्यस्यैव प्रत्ययात् उत्तरवाक्यगतलोकसामसामानाधिकरण्यनिर्देशानुसारेण सप्तम्याः प्रकृत्यादितृतीयार्थतामुपेत्य लोकात्मना सामोपासीतेति वाक्यार्थो ग्राह्यः, न तु द्वितीयावगतं स्वारस्येन साम्नां प्राधान्यं परित्यज्य सप्तम्या क्लेशेन लोकानां प्राधान्यमुपक्रम्य सामात्मना लोकानुपासीतेति वाक्यार्थो ग्राह्य इति तात्पर्यम् । **तत्रापीति** । 'समस्तस्य खलु साम्न उपासनं साध्वि'त्युपक्रमे साम्न एवोपास्यत्वमुपक्षिप्य 'लोकेषु पञ्चविधं सामोपासीते'ति कानि चिदुपासनानि प्रपञ्चयोपसंहृतम्—'इति तु पञ्चविधस्ये'ति । पुन'रप्यथ सप्तविधस्ये'ति उपक्रम्य कानिचिदुपासनानि दर्शितानि । तथा चोपक्रमेऽवान्तरोपसंहारे पुनरवान्तरोपक्रमे च साम्न एवोपास्यत्वावगमात् तत्प्रपञ्चपरेषु वाक्येषु साम्न एव प्राधान्यविवक्षेति गम्यते । तत्र साम्नः पञ्चविधत्वं पञ्चभक्तिकत्वम् । भक्तिस्साम्नां भागः । हिंकारः, प्रस्ताव,उद्गीथः,प्रतिहारो, निधनमिति पञ्चविधत्वम् । उद्गीथभक्तेः ओङ्काराकारं निधनाच्चोपद्रवं पृथक्कृत्य सप्तविधत्वं द्रष्टव्यम् । **निर्देशविपर्यय इति** । हिङ्कारादीनां सामावयवानामुपास्यत्वेन उद्देश्यतया प्राथम्येन निर्देश उचितः । स परं सिद्धान्ते नास्तीति निर्देशविपर्ययः प्रसज्यत इति भावः । तथा चाङ्गावबद्धोपासनानाम् 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादिसन्दर्भेण विधीयमानानामङ्गानुसारितया अङ्गानां यस्मिन् काले चोदना अङ्गेषु यदवस्थानं शरीरस्याम्नातमुत्थानमवस्थानं वा, तथैवोपासनान्यपि कार्याणीत्यपि सिध्यति । इयं चाङ्गावबद्धोपास्यचिन्ता ब्रह्मविद्यायामहंग्रहे प्रतिपादिते तत्प्रसक्तानुप्रसक्त्या प्राप्ता भवति ॥६॥

इति आदित्यादिमत्यधिकरणम् ॥५॥

इदानीं पुनरपि ब्रह्मविद्यायामेवासनादिनियमचिन्तामारभते —

## आसीनस्सम्भवात् ॥ ७ ॥

अत्र सिद्धान्तिना चित्तैकाग्र्यार्थमासननियमोऽपेक्षित इति वक्तव्यम् । तत् नोपपद्यते । अङ्गावबद्धोपासनेष्वासननियमाभावेऽपि चित्तैकाग्र्यस्य वक्तव्यतया स्वतन्त्रोपासनेष्वपि तथासम्भवादिति पूर्वपक्षिणोऽभिप्रायः । **आसीनस्य त्वेवंजातीयक इति** । अङ्गावबद्धोपासनानामङ्गतन्त्रतया तत्रासननियमाभावेऽप्यगत्या यावच्चित्तैकाग्र्यं सम्भविष्यति, तावदेव स्वीक्रियते । स्वतन्त्रोपासनेषु

तु तादृशागतिकत्वाभावात् सम्यक् चित्तैकाग्र्यं संपादनीयम् । तत्रासननियमोऽपेक्षितः । येषां तु व्याध्यादिपीडितानामासननियमोऽनुष्ठातुमशक्यः, तेषामप्यासननियमो नादर्तव्यः । अपि तु यावत् चित्तैकाग्र्यं भविष्यति, तावतैव यथाकथञ्चित् उपासनं संपादनीयम् । सति सम्भवे दृढचित्तैकाग्र्यायासननियमः आदर्तव्य इति भावः ॥ ७ ॥

ननूपासनं नाम ज्ञानधारा । सा तु चित्तैकाग्र्याभावेऽपि घटादिषु दृष्टेति शङ्कानिराकरणार्थं सूत्रम्—

## ध्यानाच्च ॥८॥

न केवलं ज्ञानधारोपासनम् । अपि तु विजातीयप्रत्ययानन्तरिता ज्ञानधारा। अतो ध्येयमात्रविषयकतया चित्तस्यावस्थानं तत्रापेक्षितम् । तदासीनस्यैव सम्भवतीति भावः ॥ ८ ॥

ध्यानकाले शरीरस्य निश्चेष्टत्वं चापेक्षितम् । तदासीनस्यैव सम्भवति, नान्यस्येत्याह—

## अचलत्वं चापेक्ष्य ॥९॥

निश्चेष्टेषु पृथिव्यादिषु ध्यातृत्वोत्प्रेक्षणात् निश्चेष्टतायै अत्यन्तचित्तैकाग्र्यं तत्रापेक्षितम् । अत आसननियमस्सिध्यति ॥ ९ ॥

## स्मरन्ति च ॥१०॥

यद्यपि चित्तैकाग्र्यरूपदृष्टोपकारायासननियमः प्राप्तः ; तथापि आसनविशेषनियमः स्मृत्या बोध्यते नियमादृष्टाय ॥१०॥

इति आसीनाधिकरणम् ॥ ६ ॥

## यत्रैकाग्रता तत्राविशेषात् ॥११॥

तथा आसनादिनियम उपासनायाम्, एवं दिग्देशकालादिष्वपि नियम इति प्रत्यवस्थानात् सङ्गतिः । आरम्भेष्वारभ्यमाणेषु दर्शपूर्णमासादिकर्मसु वैदिकत्वाविशेषात् उपासनायामपि प्राच्यादिदिक्प्राचीनप्रवणादिदेशः पूर्वाह्णादिः कालोऽपेक्षित इति पूर्वः पक्षः । प्राचीनप्रवणः प्राग्भागे निम्नः । शुचौ गिरिगुहादौ, रमणीये अमेध्याद्यशुचितावर्जिते, शर्करास्सूक्ष्मपाषाणाः, शब्दजलाश्रयादिभिर्वर्जित इत्यनुषङ्गः। शुचितादिदेशविशेषणानां प्रयोजनमाह—मनोऽनुकूल इति । उक्तविशेषणानि मनःप्रसादसम्पादकानीति भावः । तथा च यत्र मनः प्रसीदति उपासनायां, स एव तस्यामुपासनायामङ्गभूतो देशः । चक्षुःपीडनं मशकादि, तद्युक्तेन तु योजयेदित्य-

न्वयः।गुहानिवातात्मकं यदाश्रयणमाश्रयस्तत्र प्रयोजयेत् कुर्यादुपासनमित्यर्थः॥११॥

इति यत्रैकाग्रताधिकरणम् ॥ ७ ॥

## आप्रायणात्तत्रापि हि दृष्टम् ॥१२॥

यथा आवृत्तौ दिगादिनियमोऽनपेक्षितः, एवमामरणं कर्तव्येति नियमोऽपि नापेक्षित इति सङ्गतिः । **अनियोज्येति** । नियोज्यरहिता ब्रह्मात्मत्वप्रतिपत्तिर्यस्योदिता, तस्य पुरुषस्य शास्त्राविषयत्वं शास्त्रार्थेऽधिकारो नास्ति। नियोज्यत्वादेरुपमर्दादिति भावः । **अभ्युदयफलानीति** । अभ्युदयफलेष्वपि यानि कर्माङ्गावबद्धानि, तेष्वपि नेयं चिन्ता । कर्मकालादन्यत्र तेषामसम्भवात । यान्यपि 'वाचन्धेनुमुपासी'तेत्यादीनि स्वतन्त्रप्रतीकोपासनानि, तेष्वपि नेयञ्चिन्ता । ध्येयस्यैव प्राप्यत्वभावात् । अपि त्वग्निहोत्रादिवदभ्युदयफलानि । तत्रावृत्त्याधिक्यात फलभूमा भवति । यानि तु प्रतिपत्तव्यफलविषयाण्युपासनानि, तेष्वियं चिन्ता । **कियन्तं चित्कालं प्रत्ययमभ्यस्येति** । ननु, प्रतिपत्तव्यवस्तुगोचराणि यानि दहरशाण्डिल्याद्युपासनानि, तेषामिहैवोपास्याभेदेन साक्षात्कारो द्वारम् । तत्र कथं कियन्तञ्चित्कालमावृत्तोपासनं सिध्येत् । न चोपास्याभेदसाक्षात्कारस्य द्वारत्वेऽपि यदा साक्षात्कारः, तदनन्तरमुत्सृजेत्, न त्वाप्रायणमावर्तयेदिति वाच्यम् । उपास्यसाक्षात्कारस्यान्त्यकाले अपेक्षिततया तदर्थमाप्रायणमावृत्तेरपेक्षितत्वात । 'यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तन्तमेवैति कौन्तेय सदा तद्भावभावित इति शास्त्रानुसारेणान्त्यप्रत्ययस्य पारलौकिकफलेषु सर्वत्रापेक्षितत्वात् । न चान्त्यप्रत्ययो यथाग्निहोत्रफलेष्वदृष्टवशात् भवति, एवमुपासनाफलेष्वप्युपपत्तेर्न तदर्थमावृत्तिरपेक्षितेति वाच्यम् । कर्मणां दृष्टेन द्वारेणान्त्यप्रत्ययाजनकतया तेष्वदृष्टाश्रयणेऽप्युपासनेषु आवृत्त्यात्मकदृष्टद्वारेणान्त्यप्रत्ययजनकत्वोपपत्तौ अदृष्टकल्पनाया अनुचितत्वात् । श्रूयते चाप्रायणमावृत्तिः कर्तव्यतया 'सयो हवै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत अहरहर्वा एवंवित् स्वर्गं लोकमेति आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य स खल्वेवंवर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति । तस्मात् कथं कियन्तं चित्कालं प्रत्ययमावृत्य विसृजेदिति चेत्, उच्यते —अन्त्यकाले उपासनानां प्रत्ययजननार्थमदृष्टद्वारकत्वं तावदवश्यमङ्गीकर्तव्यम् । येषां तावदुपासनया अन्त्यप्रत्ययस्सम्पन्नः , ततः प्रबलप्रारब्धकर्मान्तरप्रतिबन्धादुपासनाफलप्राप्तिर्नास्ति, तेषां भवान्तरे उपासनाफलप्राप्तिर्वक्तव्या । तत्र चान्त्यप्रत्ययः अदृष्टाधीन एव, अपि चान्त्यकालेऽपि येषां प्रबलेन व्याधिना चित्तव्यामोहादिकं प्राप्तं प्रबलवासनान्तरोद्भवादन्यगोचरो वान्त्यप्रत्ययः ,

तेषामपि जन्मान्तर एव उपासनाफलं वक्तव्यमित्यदृष्टद्वारकत्वे आवश्यके किमाप्रायणमावृत्त्या । न च प्रारब्धादपि सगुणोपासनायाः प्रबलतया उपासकस्य ब्रह्मविद्याफलगोचर एवान्त्यप्रत्यय इति वाच्यम् । तथासति यदैव सविशेषब्रह्मसाक्षात्कारः, तदैव शरीरपातप्रसक्त्या शरीरधारणाय प्रारब्धस्यावश्यं प्रबलताया वक्तव्यत्वात । नापि वचनानुसारेण सर्वासूपासनास्वाप्रायणमावृत्तिः प्राप्नोति । 'अहरहर्वा एवं विदि'ति वाक्यस्य दहरविद्यागतत्वात् प्रायणान्तमोङ्कारमभिध्यायीतेत्यस्य त्रिमात्रप्रणवोपासनाप्रकरणगतत्वात् स खल्वेवंवर्तयन्यावदायुषमिति च कर्मणामेवावृत्तिमाप्रायणं प्रतिपादयति । अतः प्रमाणाभावात आप्रायणमावृत्तिर्न प्राप्नोतीति पूर्वः पक्षः । अयमत्र सिद्धान्ताभिप्रायः—आमुष्मिकफलानामन्त्यप्रत्ययस्तावदपेक्षितः । तत्र यत्फलगोचरोऽन्त्यप्रत्ययः, तदनन्तरं तदेव फलं प्राप्यत इति तावदुपेयम् । 'तदेव सक्तः सहकर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययमि'ति श्रुतेः 'यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तन्तमेवैति कौन्तेय सदा तद्भावभावित' इति स्मृतेश्च । ततश्च यस्यान्तकाले ब्रह्मविषयकप्रत्ययस्सम्पन्नः, तेन ब्रह्म प्राप्यमेव । नापि रोगादीनामन्त्यप्रत्ययप्रतिबन्धकता । अन्त्यकाले यत्किञ्चित्फलगोचरप्रत्ययावश्यम्भावात् । नाप्याप्रायणमावृत्तिमतामपि अन्त्यकाले वासनान्तरोद्भवः प्रबलप्रारब्धाधीन इति सम्भावयितुं शक्यम् । सगुणनिष्ठानां साक्षात्कारानन्तरं शरीरसद्भावावगत्या शरीरस्थित्युपयुक्तप्रारब्धस्य प्राबल्यकल्पनेऽपि शरीरपातकालेऽप्यन्त्यप्रत्ययप्रतिबन्धकप्रारब्धस्य प्राबल्यकल्पने प्रमाणाभावात् । अपित्वाप्रायणमनुवृत्तोपासनावासनाया उद्भूतत्वात् तत्सहकारिणां नित्यनैमित्तिककर्मणां ब्रह्मलोकावाप्तिफलकानां ब्रह्मविद्यायुक्ततया वीर्यवत्तरत्वाच्च वासनान्तरसहितप्रारब्धस्याप्यभिभवः कल्प्यते । एवं 'स यदास्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इत्यादिषूपासकस्य एतच्छरीरपातानन्तरमेवार्चिरादिसम्बन्धप्रतिपादनमुपपद्यते । दृष्टं च कर्मविपाकग्रन्थोक्तानां प्रायश्चित्तानां प्रारब्धादिभिः प्राबल्यम् । ततश्च यस्याप्रायणमावृत्तिः, तस्यान्त्यकाले ब्रह्मसाक्षात्कारस्य ततोऽर्चिरादिपर्वणा ब्रह्मप्राप्तेश्चावश्यंभावात् अन्त्यकालसाक्षात्कारोपयोगिदृढसंस्कारसिद्धये चित्तैकाग्र्यसमयेष्वाप्रायणमावृत्तिरपेक्षिता । तथा च 'सदा तद्भावभावितः । तस्मात् सर्वेषु कालेसु मामनुस्मरे'ति च स्मृतिलिङ्गमप्युपपद्यते। 'अहरहर्वा एवंविदि'ति 'प्रायणान्तमोङ्कारमभिध्यायीते'ति च उपासनाविशेषप्रकरणगतमपि न्यायप्राप्तार्थानुवादकं सत्सर्वसाधारणं लिङ्गं भवत्येव । 'स खल्वेवं वर्तयन्नि'त्यपिं न केवलकर्मणामेवावृत्तिं प्रतिपादयति । ब्रह्मलोकापुनरावृत्तेः कर्म-

भ्योऽसम्भवात् । 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति सर्वेन्द्रियाणामात्मविषयकनिरोधस्योपासनां विनान्यत्रानुपयुक्तत्वात् । अत इदं वाक्यमुपासनासहितानामेव कर्मणामावृत्तिं विदधाति । स विज्ञानो भवति मरणकाले फलविषयकविज्ञानसहितो भवति, स विज्ञानं विज्ञानविषयीकृतमेव फलं अन्ववक्रामति प्राप्नोति । यच्चित्तः यत्फलविषयकं चित्तमस्य, तेन चित्तविषयीकृतेन फलेन सह प्राणमायाति प्राणप्रधानो भवति, प्राणस्तेजसा उदानेन युक्तः स आत्मना स्वेन जीवं यथा सङ्कल्पितं लोकं नयति 'अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमि'ति वाक्ये उदानस्य फलप्रापकत्वश्रवणात् 'तेजो हवा उदानः' इति तेजःपदस्य उदाने प्रयोगाच्च तेजसोदानेनेति व्याख्यातम् । यथा तृणजलूका तृणान्तरात् तृणान्तरप्राप्तौ उभयतृणसम्बद्धा भवति, एवं जीव उत्क्रान्तिकाले एतच्छरीरसम्बद्ध एवान्त्यप्रत्ययेन भाविशरीरमपि विषयतया स्पृशतीति 'तद्यथा तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरती' ति श्रुतितात्पर्यम् । प्रत्ययास्त्वेते उपासनारूपाः, प्रायणकालभाविभावनाविज्ञानं भावना दृढसंस्कारः, तज्जन्यं विज्ञानं, प्रतिपत्तव्यफलभावनात्मकाः भावनाद्वारकाः । अनेन विशेषणेन येषूपासनेषु ध्येयमन्यत् प्राप्यं च फलं अन्यदेव, यथा पञ्चाग्न्यादिषु, तत्र दृष्टविधया अन्त्यकाले फलप्राप्त्याधायकत्वासम्भवात् आप्रायणमावृत्तिर्नापेक्षिता । अग्निहोत्रादिकर्मवत् अदृष्टसामर्थ्यादेवान्त्यप्रत्ययाक्षेपकत्वादिति सूचयति—'स यावत्क्रतुरस्माल्लोकात् प्रैति यावद्विषयकोपासनाविशिष्टः प्रैति, तावत् विभूतिमानयं भवति । अत्र 'यावत्क्रतुः प्रैती'ति प्रायणकालेऽप्युपासनवैशिष्ट्यप्रतिपादनात् आप्रायणम् अनुवृत्तिस्सूच्यते। एतत्त्रयम्। 'अच्युतमस्यक्षितमसि प्राणसंशितमसी'ति मन्त्रत्रयमुच्चारयेदि'ति। अत्र च प्रायणकाले उपासकस्य मन्त्रत्रयोच्चारणकर्तव्यताप्रतिपादनात् उपासकानां प्रायणकालेऽपि कर्तव्यशेषो वर्तत इति द्योतयति । तदेतदन्यार्थदर्शनविधया प्रायणकाले प्रत्ययावृत्तिं सूचयति ॥१२॥

इति आप्रायणाधिकरणम् ॥८॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

गतस्तृतीयशेष इति । 'आवृत्तिरसकृदुपदेशा'दित्यारभ्या'प्रायणात्तत्रापि हि दृष्ट'मित्यन्तैरधिकरणैः परमात्मप्रत्ययः सविशेषगोचर एकाग्रचित्तेनाप्रायणमावर्तनीयः, निर्विशेषगोचरस्त्वातत्त्वसाक्षात्कारमिति निरूपितोऽर्थस्साधनतया तृ

तीयान्तर्गतियोग्योऽपि 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति परमात्मनः प्रियतया तद्विषयकप्रत्ययस्य इष्टत्वेन फलान्तर्गतिरपि विद्यत इति द्योतयितुं फलाध्याये सम्बद्ध इति भावः। इह सविशेषनिर्विशेषविद्ययोः फलभूतः पापक्षयः सहैव विचार्यते । सविशेषविद्यायां चास्य प्रथमभाव इति तमेव प्रथमं निरूपयति—**प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेरिति** । पापिना प्रायश्चित्तं कार्यमित्येवंविधेषु वाक्येषु पापं अधिकारिविशेषणं निवर्तनीयत्वाभिप्रायेण नोपादीयते । येन तन्निवृत्तिः प्रायश्चित्तफलं भवेत् । 'नाभुक्तं क्षीयते कर्म' इति भोगं विना कर्मक्षयासम्भवात् । अपि तु यथा 'यस्याहिताग्नेः गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे'दिति ग्रहदाहो निमित्ततयाधिकारिविशेषणम् , एवं पापमित्यर्थः । ननु, विधेयस्य प्रायश्चित्तस्य फलापेक्षायामधिकारिविशेषणतयोपात्तस्य पापस्य निवृत्तिरेव योग्यतया फलं कल्प्यते । अतः प्रायश्चित्तवाक्येषु पापोपादानं स्वनिवृत्तिफलद्योतनार्थमेव । उपस्थितपापनिवृत्तिं फलं परित्यज्य प्रायश्चित्तानां फलान्तरकल्पने प्रमाणाभावात् । ग्रहदाहेष्ट्यादौ उपात्तस्य गृहदाहस्य फलाकाङ्क्षापूरकत्वासामर्थ्यादगत्या तत्र तस्य निमित्ततैव परिकल्प्यते । एवं 'नाभुक्तमि'ति वाक्ये अकृतप्रायश्चित्तं कर्मेति विवक्षणीयम् । एवं विद्याया अपि कर्मविरोधित्वस्य शास्त्रेण प्रतिपादनात् विद्यारहितपुरुषगतमित्यपि कर्मविशेषणं नाभुक्तमिति वाक्ये विवक्षणीयमेवेत्याशङ्क्याह—**अपि चेति** । 'नैवं ब्रह्मविद्यायां विधानमस्ती'ति निर्विशेषविद्याभिप्रायम् । ततश्च निर्विशेषविद्याया दोषसंयोगेन विधानाभावात् न तन्निवृत्तिः प्रायश्चित्तवत्फलत्वेन वक्तुं शक्या । सविशेषविद्यायां तु यद्यपि विधानमस्ति, तथापि दोषनिर्घातार्थत्वमर्थवादैरवगन्तव्यम् । न च ब्रह्मप्राप्तिफलेन निराकाङ्क्षायां तस्यामार्थवादिकं फलं 'नाभुक्तमि'ति वचनविरुद्धं कल्पयितुं युक्तमिति भावः । **देशकालनिमित्तापेक्ष इति** । यथा सत्स्वप्यन्येषु भोक्तव्येषु कर्मसु कस्यचित् कर्मणः वृत्त्युद्भवात् तत्फलं कालविशेषे प्राप्यते , एवं ब्रह्मविद्या यदोद्भूता भविष्यति , तदा तस्या अपि फलप्रदातृत्वं भविष्यतीति पूर्वपक्षिणोऽभिप्रायः । अयमपरः निर्विशेषविद्याविषय इति यावत् । **सगुणासु तावद्विद्यास्विति** । न च विहितायामपि तस्यां निराकाङ्क्षत्वात् आर्थवादिकफलकल्पनानुपपत्तिरिति वाच्यम् । सविशेषविद्यासु ब्रह्मप्राप्तिरप्यर्थवादतयैव कल्प्या । तथा च फलाकाङ्क्षायां यद्यदर्थवादेभ्यः फलत्वयोग्यमुपस्थितं, तस्य सर्वस्य फलत्वं कल्प्यत इति कर्मक्षयोऽपि तत्र फलं भविष्यतीति भावः । यद्यपि विधानं नास्तीति अविधेयस्यापि ज्ञानस्य यथावाक्यशेषानुसारेण मोक्षः फलत्वेनावगम्यते , एवं कर्मक्षयोऽपि फलत्वेनावगन्तुं शक्यत एवेति परिहारस्सम्भ-

वत्येव । प्रकारान्तरेणाप्याह—**तथापीति** । ब्रह्मज्ञानेन मूलभूतायामविद्यायां निवर्तितायां तन्मूलानां कृत्स्नानामपि सांसारिकधर्माणां निवृत्तेः कर्मापि नष्टं भवतीति भावः । **अश्लेष इति चेति** । ननु, निर्विशेषविद्यायां यदात्मतत्त्वसाक्षात्कारः सम्पन्नः, तदा जीवत्यपि विदुषि साक्षात्कारप्राचीनानां कर्मणां नाशः तदनन्तरभाविनामश्लेषो वक्तव्यः । तन्नोपपद्यते । न हि कृतब्रह्मसाक्षात्कारस्य सर्वतो विरक्तस्य पापे प्रवृत्तिस्सम्भवति । येन कृतेऽपि तस्मिन्विदुषि तस्य फलजननसामर्थ्यानुत्पत्तिरूपोऽश्लेषो भवेत् । सविशेषविदस्तु फलारम्भशरीरपातावसर इति अन्त्यप्रत्ययसमये प्राचीनानां पापानां नाशः, तदनन्तरभाविनामश्लेषो वक्तव्यः । न च प्रायणानन्तरं तस्य पापप्रसक्तिरस्ति, येन तदश्लेषः फलं भवेदिति चेत्, उच्यते—निर्विशेषविदस्तावत् जीवद्दशायां न बुद्धिपूर्वं पापे प्रवृत्तिस्सम्भवति । प्रबलप्रारब्धानुसारेण प्रमादादपि तत्प्रवृत्तिस्सम्भवति । 'इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः तेनोमुञ्चन्त्वेनसो यदन्यकृतमारिम प्राप्ता' इति मन्त्रानुसारेण पुत्रादिपापस्यापि तस्मिन् प्रसक्तिरस्ति । तस्य सर्वस्याप्यश्लेषो 'न लिप्यते कर्मणा पापकेने'ति श्रुतेर्विषयो भविष्यति । सविशेषविदि तु प्रयातेऽन्यकृतपापसंश्लेषः, तदभावः 'तद्यथा पुष्करपलाश' इति वाक्यस्य विषयो भविष्यतीति न काचिदनुपपत्तिः । यद्यपि पापक्षयोऽर्थवादेभ्योऽवगम्यते, तथापि तस्य ब्रह्मप्राप्तिरूपप्रधानफलापेक्षत्वात् तद्विवक्षावश्यं वक्तव्येत्याह—**एवमेव चेति** । कर्मफलस्यैहिकत्वनियमाभावात् प्रतिबन्धकाभावे सति देशकालानुसारेण तत् भवतीति वक्तुं युक्तम् । विद्याफलं तु ब्रह्मापरोक्ष्यसमानकालं पुनरावृत्तिराहितमिति वक्तव्यम् । तत्प्रतिबन्धकीभूतपापानिवृत्तिं विना नोपपद्यत इत्यभिप्रेत्याह—**अनित्यत्वप्रसङ्गादिति** ॥१३॥

इति तदधिगमाधिकरणम् ॥२॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥

अतिदेशनिवर्त्यां विशेषाशङ्कामाह—**धर्मस्य पुनरिति** । अपि च विदुषि धर्माश्लेषवचनस्य विषयो न लभ्यते । निर्विशेषविदस्तत्राधिकाराभावात् । न चाधिकाराभावेऽपि पुण्यमपि कृतं फलं जनयितुं समर्थम् । सविशेषविदस्तु प्रायणकाल एवाश्लेषो वक्तव्यः । न च तदा पुण्यं प्रसक्तं, यस्याश्लेषस्स्यादिति पूर्वः पक्षः । **दुष्कृतेन सुकृतमप्यनुकम्येति** । 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति हि श्रूयते । न चाश्लेषस्य विषयासम्भवः । स्वस्याधिकाराभावेऽपि तदुद्देशेन पुत्रादिभिः कृ-

वं यत्तटाकप्रतिष्ठादिकं तत्फलं तत्र प्रसक्तमिति तस्याश्लेषो भविष्यति ॥१४॥

इति इतराधिकरणम् ॥१०॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

अधिकरणद्वयेन उत्सृष्टस्य कर्मनाशस्य प्रारब्धे अपवादः क्रियत इति सङ्गतिं सूचयितुं वृत्तं कीर्तयति—**पूर्वयोरिति** । ननु, 'तस्य तावदेव चिरमि' ति श्रुत्या शरीरपातावधिप्रतिपादनात् शरीरधारणोपयुक्तप्रारब्धकर्मव्यतिरिक्तविषयमेव 'उभे उहैवैष' इत्यादिवचनं भविष्यतीति चेन्न। निर्विशेषविद्ययाह्युपादानभूताज्ञाननाशे किञ्चिदवशिष्यत इति वक्तुं न शक्यते । निरुपादानकार्यस्थित्ययोगात् । अतो ब्रह्मसाक्षात्कारानन्तरं प्रारब्धमवशिष्यत इति वक्तुं न शक्यते । 'तस्य तावदेव चिरमि'ति वाक्यस्य निर्विशेषविद्याप्रकरणगतत्वेन सविशेषविद्यागतपुण्यपापसम्बन्धवचनसङ्कोचकतेति शङ्कैव नास्तीति । तद्वचनं तु तस्य विदुषस्तावदेव चिरं विलम्बः यावदस्मात् शरीरात् न विमोक्ष्यत इति प्रतिपादयितुं शरीरपातानन्तरं विलम्बो नास्तीत्येतावन्मात्रे एवकारार्थे पर्यवस्यति, न तु तावत्पर्यन्तं विलम्ब इत्यपि प्रतिपादयतीति पूर्वः पक्षः। निर्विशेषविद्यानिष्ठानां प्रजापतीन्द्रप्रभृतीनां सविशेषविदामश्वपतिकेकयप्रभृतीनां च शरीरधारणस्य श्रुत्यावगमेन विद्याफले प्रारब्धस्य प्रतिबन्धकतावश्यं कल्पनीया । तत्र निर्विशेषविद्याया अविद्यानिवर्तकत्वस्वाभाव्यात् आवरणशक्त्यंशेनाविद्यायां निवर्तितायामपि विक्षेपशक्त्यंशेन प्रारब्धोपादानांशोऽनुवर्तत इति कल्प्यते । सविशेषविदां तु शरीरपातावसर एव फलारम्भः । न च 'यावदधिकारमवस्थितिराधिकारिकाणामि'त्यधिकरण एव प्रारब्धस्य प्रतिबन्धकता दर्शिता । किमर्थमिदमधिकरणमिति वाच्यम् । तत्र हि प्रारब्धस्य प्रतिबन्धकतामुपेत्यैव तस्यानेकशरीरग्रहणोपयोगिता नास्तीति शङ्कायां वसिष्ठादीनामनेकशरीरदर्शनात् प्रारब्धस्यानेकशरीरानुयायितास्तीति प्रतिपादितमिति न तेनास्य पौनरुक्त्यम् । तथा च 'तस्य तावदेव चिरमित्य'पि वचनं प्रारब्धस्य प्रतिबन्धकतां सूचयत् स्वरसं भवतीति सिद्धान्ताभिप्रायः ॥१५॥

इति अनारब्धाधिकरणम् ॥ ११ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥१६॥

विद्यया प्रारब्धव्यतिरिक्तपुण्यपापयोर्नाशः प्रतिपादितः । तत्र पुण्यस्य प्रारब्धव्यतिरिक्तस्यापि विद्योपयोगिनो विद्यया नाशो नास्तीति प्रतिपादनार्थमेतदधिकरणम् । अयमत्र पूर्वपक्षाभिप्रायः । निर्विशेषविद्यायां कर्मणामुपयोगो वक्तुं न शक्यते । कर्मविरोधिन्या विद्यायाः कर्माजन्यत्वात् । तथा च 'तमेतं वेदानु-

वचनेने'त्यादि वचनं वर्तमानापदेशत्वात् अर्थवादो भविष्यति । नापि सविशेषविद्यायां कर्मोपयोगप्रतिपादकं किञ्चित् स्पष्टं वचनमस्ति । अतो नित्यनैमित्तिककर्मणामपि विद्यया विनाश इति । सिद्धान्तस्तु काष्ठजातीयविरोधिनोऽप्यग्नेः काष्ठादुत्पत्तिदर्शनात् सति प्रमाणे विरोधिन्या अपि विद्यायाः कर्मभ्यः उत्पत्तौ नानुपपत्तिः । न च 'तमेतमि' ति वाक्यस्यार्थवत्त्वसम्भवे अनुवादत्वं कल्पयितुं न्याय्यम् । तथा च विद्योद्देशेन कृतानामग्निहोत्रादीनां परंपरया विद्याकार्योपयोगित्वात् न तेषामितरकर्मवत् विद्याविनाश्यत्वं सम्भवति । नापि सविशेषविद्यायां कर्मणामनुपयोग इति 'सखल्वेवं वर्तयन्नि' ति वाक्यस्यात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येति समभिव्याहारानुसारेण ब्रह्मलोकप्राप्तिद्वारा अपुनरावृत्तिप्रतिपादनेन च विद्यासहितकर्मानुष्ठानपरत्वावगमात् । न च तत्र कर्मणामुपयोगप्रकारोऽयमिति निरूपयितुं न शक्यत इति वाच्यम् । आरब्धायामुपासनायामाप्रायणमनुवर्तनीयायां प्रतिबन्धकपापसम्भवेन तन्निराकरणद्वारा विद्यास्वरूपोपयोगसम्भवात् । तथा च श्रुतिः— 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते । तत् उभयं, सह एकस्मिन् काले ज्ञात्वा अनुतिष्ठति यः, तदुभयं किमित्यपेक्षायां विद्यां चाविद्यां चे'त्युक्तम् । विद्या सविशेषविषया, अविद्या कर्माणि ; निर्विशेषविद्यायां कर्मसाहित्यासम्भवात् सविशेषविद्याग्रहणम् । सः अविद्यया कर्मणा मृत्युं पापं विद्यानुवृत्तिप्रतिबन्धकीभूतं तीर्त्वा नाशयित्वा आप्रायणमनुवृत्तया विद्ययामृतं कैवल्यं क्रमेणाश्नुते । तथा च स्मृतिः—'तपो विद्या च विप्रस्य नैश्रेयसकरं परम् । तपसा कल्मषं हन्ति विद्ययामृतमश्नुत ॥' इति । ननु, विद्योत्पत्तेः प्राचीनानि यानि नित्यनैमित्तिककर्माणि, तेषां विद्योत्पत्तावुपयोगः विविदिषार्थत्वात् । यानि तु काम्यानि अभुक्तफलानि, तेषां विद्योत्पत्त्या विनाशः । भुक्तफलानि तु स्वत एव नष्टानि । प्रारब्धं तु भोगैकनाश्यमिति विद्योत्पत्तेः प्राग्भाविनां कर्मणां सुहृद्द्विषत्संक्रमणं नोपपद्यते । विद्यानन्तरभाविनां तु अश्लेष एव । अतः 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यामि'त्यस्य विषयो नोपपद्यते । न च येषामश्लेषविनाशौ, तद्विषयमिदं संक्रमणं भविष्यतीति वाच्यम् । दायदृष्टान्तेन ह्येतदवगम्यते—यदा दायस्य पुत्रेषु संक्रमणं, तदा पुण्यपापयोस्सुहृद्द्विषत्संक्रमणं, तत्र च यद्यपि सविशेषफलस्य प्रायणकालभावित्वात् तदानीं विनष्टयोः पुण्यपापयोः दायवत् संक्रमणं भवतु नाम । निर्विशेषविद्याफलं तु जीवत एव साक्षात्कारसमानकालमिति तदानीं विदुषस्सकाशाद्विनष्टयोः दायसंक्रमणपर्यन्तं निराधारास्थित्ययोगेन स्वरूपत एव नष्टतया कथं दायसंक्रमणकाले सुहृद्द्विषत्संक्रमणं भवेदित्यभिप्रायेण शङ्कते—

**किं विषयं पुनरिति ॥१६॥**

## अतोऽन्यापि ह्येकेषामुभयोः ॥१७॥

अयं भावः—ययोः पुण्यपापयोः अश्लेषविनाशौ, तयोरेव सुहृद्द्विषत्संक्रमणम् । अपेक्षानुसारादिति 'हानौ तूपायनशब्दशेषत्वादि'त्यत्र निरूपितम् । अतो दायदृष्टान्तेन एतद्विवक्षितं--यथा विदुषानुभोग्यस्य स्थितस्य दायस्यान्यैरुपभोगः, एवं विद्यामाहात्म्यात् विदुषानुपभोग्ययोः पुण्यपापयोः सुहृद्द्विषद्भोग इति, न तु संक्रमणेऽपि तुल्यकालत्वम् । अतो नानुपपत्तिरिति ॥१७॥

इति अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

## यदेव विद्ययेति हि ॥१८॥

येषां कर्मणां विद्योपयोग उक्तः, तेषामेव विद्यावैशिष्ट्यचिन्तेति सङ्गतिं द्योतयन् वृत्तं कीर्तयति—**समधिगतमिति । विद्यासंयुक्तमेवाग्निहोत्रादीति** । ननु , विद्यानां विविदिषोपयुक्तकर्माङ्गत्वासभावात् विद्यासंयुक्तमेवाग्निहोत्रादीति कथमुच्यते । न च विद्यानां कर्मसु सर्वत्राङ्गत्वाद्विविदिषुकर्मस्वपि विद्यानुप्रवेशो भवेदिति वाच्यम् । 'तन्निर्धारणानियम' इत्यत्र कर्माङ्गताया विद्यासु निरासात् । उच्यते—विद्यासंयुक्तानां कर्मणां 'पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न यदहरेव जुहोति तदहः पुनर्मृत्युमपजयती'त्यादिवाक्यैः प्रशंसावगम्यते । 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यती'त्यादिषु च विद्यारहितानां प्रस्तावादिकर्मणां निन्दावगम्यते । अतो विद्यानां पुनः कर्माङ्गत्वनित्याशङ्का । न च 'प्रस्तोतर्या देवते'त्यस्मिन्नेव सन्दर्भे विद्यारहितानामेव प्रस्तोत्रादीनामार्त्विज्यमुपलभ्यते । 'यदेव विद्यया करोती'त्यादिवाक्ये च 'तदेव वीर्यवत्तरं भवती'ति पृथक् फलं च विद्यानामवगम्यत इति कथं कर्माङ्गतेति वाच्यम् । नित्येषु कर्मसु तावत् यथाशक्त्यनुष्ठानं तत्र प्रस्तोत्रादीनां विद्वत्त्वाभावात् विद्यानुष्ठानशक्त्यभावेन केवलप्रस्तावादिकर्मसु प्रवृत्तिर्नानुपपन्ना । अत एवोषस्त्यागमनानन्तरं तत उपदेशं लब्ध्वा साङ्गकर्मकरणसम्भवात् तद्रहितकर्मकरणे उषस्तिना शाप उपक्षिप्तः । वीर्यवत्तरमित्यत्र तरप्प्रत्ययश्च स्वार्थिको भविष्यति अल्पाच्तरमित्यादाविव । यदि तु अर्थाधिक्यसम्भवे स्वार्थकता न न्याय्या, तदा सर्वाङ्गोपेतात् कर्मणः फलाधिक्यावश्यम्भावात् यथाशक्ति किञ्चिदङ्गविकलात् कर्मणः सर्वाङ्गयुक्तं शक्तस्य कर्म वीर्यवत्तरमिति भविष्यति । न चैवमप्यशक्तस्य विविदिषार्थं केवलकर्मसम्भवात् कथं विविदिषार्थेषु कर्मसु अङ्गावबद्धोपासनानियम इति वाच्यम् । शक्तस्य विद्यानुष्ठाने विविदिषोपयोगिकर्म विद्यायुक्तमेव भविष्यतीति पूर्वपक्षिणोऽभिप्रायः । 'यदेव विद्यये'ति वाक्यं न सर्वाङ्गयुक्तकर्मकरणपक्षे विद्यमानं यत्फलाधिक्यं ,

तत्प्रतिपादनपरम् । तस्य न्यायसिद्धतया वाक्यस्यानुवादकतापत्तेः । अतः पृथगस्य प्रतिबन्धः फलमित्यत्रोक्तन्यायेन विद्यानां फलान्तरकथनपरमेव । अतः पृथक् फलत्वात् न कर्माङ्गतोपपद्यते । प्रशंसापि विद्यासंयुक्तस्य कर्मणः प्रतिबन्धराहित्यफलान्तरसम्बन्धादेव । 'ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्धाते विपतिष्यतीति' अविद्वत्तायां शापस्तु उषस्तेः स्वमाहात्म्यप्रकटनार्थ एव शापानन्तरं प्रस्तोत्रादीनां कर्मण्य उपरमोऽपि शापभयादेव, न तु विद्याभावे कर्म विगुणं भविष्यतीत्यभिप्रायेण । अयं चार्थ उषस्तिचाक्रायणोपाख्यानपर्यालोचनया अवगम्यत एव । अतो न विविदिषार्थे कर्मणि विद्यानियमः ॥१८॥

इति यदेवाधिकरणम् ॥ १२ ॥

## भोगेन त्वितरे क्षपयित्वा सम्पद्यत ॥१९॥

अनारब्धकार्य एवत्वित्यस्याग्निहोत्रादिनित्यकर्मसु अपवादे दर्शिते तत्प्रसङ्गात् ब्रह्मविद्योपयुक्तेषु कर्मसु शङ्कावबद्धोपास्तिनियमो निराकृत इति प्रसक्तानुप्रसक्तमधिकरणद्वयं विहाय व्यवहिताधिकरणेन सङ्गतिमाह—**अनारब्धकार्ययोरिति** । अयमत्र पूर्वपक्षाभिप्रायः—विक्षेपांशेनाविद्या प्रारब्धोपयोगितया सत्यपि ब्रह्मसाक्षात्कारे अनुवृत्ता । अतस्तस्या ब्रह्मसाक्षात्कारादपि प्रबलतया न तेन निरासस्सम्भवति । नापि निरासकमन्यत् किञ्चिदुपलभ्यते । अतः प्रारब्धक्षपणानन्तरमपि तदंशस्यानुवृत्तत्वात् विद्यायाः कैवल्यहेतुता नोपपद्यते । अपि च येषामनेकजन्मप्रापकं प्रारब्धमस्ति । तेषां जन्मान्तरे ब्रह्मसाक्षात्कारसंस्कारोच्छेदात् तत्र च पापादिकर्मणः यस्यकस्यचित् प्रसक्तस्याश्लेषासम्भवात् पुनरपि जन्मान्तरमिति न मोक्षः प्रारब्धक्षयेऽपि सम्भवती । न चापरोक्षीकृतब्रह्मतत्त्वानां न जन्मान्तरे संस्कारोच्छेद इति वाच्यम् । मरणस्य संस्कारविच्छेदकतया तथाकल्पनानुपपत्तेः । न च 'तस्य तावदेव चिरमि'ति वाक्येन कैवल्यप्राप्तौ प्रारब्धक्षयावधिकरणात् तथा कल्पनीयमिति वाच्यम् । येषामेव जन्मप्रापकं प्रारब्धं, तदभिप्रायेण तच्छ्रुत्युपपत्तेः । एवं सविशेषोपासकानामपि यदि केनचित्प्रबलेन प्रारब्धेन जन्मान्तरं, तदा तेषामपि संस्कारप्रमोषेण विद्यानुवृत्तेरसम्भवात् न जन्मान्तरेऽपि फलप्राप्तिरिति अमुं पूर्वपक्षाभिप्रायं 'ननु, सत्यपि सम्यग्दर्शने' इति, 'नन्वपरः कर्माशय' इति चानूद्य स्वयमेव निराकरिष्यति । प्रथमतस्सिद्धान्तं दर्शयन् सूत्रं योजयति—**इतरे त्वारब्धकार्ये इति** । अयमत्र परिहाराभिप्रायः—प्रारब्धक्षपणानन्तरम विद्याया निरासको ब्रह्मसाक्षात्कार एव । पूर्वं प्रारब्धरूपप्रतिबन्धकवशेन तस्यानिवर्तकत्वेऽपि प्रतिबन्धकाभावे निवृत्त्युपपत्तेः । नापि येषामनेकजन्मप्रापकं प्रारब्धं,

तेषां संस्कारप्रमोषस्सम्भवति । अधिकारिपुरुषाणां संस्काराप्रमोषस्य श्रुतिस्मृतिसिद्धत्वात् । अन्येषामपि विदुषां ज्ञानस्य मुक्तिसाधनताप्रतिपादकशास्त्रानुसारेण संस्काराप्रमोषस्य कल्पनीयत्वात् । यदि हि येषामनेकजन्मप्रापकं प्रारब्धं, तेषां संस्कारप्रमोषेण जन्मान्तरकृतकर्मणां विद्यया नाशाभावात् मुक्तिर्नास्तीति सम्भाव्येत,तदानेकजन्मप्रापकप्रारब्धसम्भावनया कस्यापि प्रवृत्तिर्न स्यात् । अतो मोक्षशास्त्रसार्थक्याय पूर्वकृतदृढसंस्कारवशात् जन्मान्तरेऽपरिमुषितसंस्कारात् ब्रह्मविदः प्रारब्धक्षये स्वभावसिद्धब्रह्मसाक्षात्कारेण अविद्यालेशं दग्ध्वा सम्पद्यन्ते । एवं सविशेषविदामपि आप्रायणकृतोपासनासम्पन्नसंस्कारदार्ढ्यात् सहकारिकर्मसामर्थ्याच्च जन्मान्तरे अपरिमुषितस्मृतित्वं द्रष्टव्यम् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतिरपि प्रारब्धबलायत्तशरीरविमोक्षो यावन्न भवति, तावानेव विलम्ब इति प्रारब्धक्षयमवधींकरोति । सा नैकशरीरमात्राभिप्राया व्याख्येया इति ॥१९॥

इति भोगाधिकरणम् ॥१४॥

**इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां चतुर्थाध्यायस्य प्रथमः पादः ॥**

ॐ

---

अथ

# द्वितीयः पादः ॥

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥

ननु, प्रारब्धावसाने सत्सम्पत्तावुक्तायां तत्प्रकारो निरूपणीयः । वागादिलयप्रकारस्तु किमिति निरूप्यत इत्याशङ्क्याह— **अथापरास्विति** । अयमर्थः— सविशेषविदां मूर्धन्यनाडिद्वारा अर्चिरादिमार्गेण ब्रह्मसम्पत्तिर्वक्तव्या । वागादिवृत्तिलयस्तु मूर्धन्यनाडीप्राप्तावुपाय इति तदुपयोगितया निरूप्यते । वृत्तिलयपूर्विका वागादिप्राणानामुत्क्रान्तिर्निर्विशेषविदां नास्तीति प्रतिषेधद्वारा परविद्यायामपि तत्प्रतिपादनं सङ्गतम् । वागादिस्वरूपलयेन हि परब्रह्मविदामिहैव ब्रह्मसम्पत्तिः । 'अस्य सोम्य पुरुषस्ये'त्यत्र सम्पद्यत इतिपदं लयप्रतिपादकम् । 'सता सोम्य तदा सम्पन्नो भवती'त्युक्त्वा 'स्वमपीतो भवती'तिवाक्येन सम्पत्तिपदस्य लयपरताप्रतिपादनात् । प्रयतो म्रियमाणस्य । ननु, 'भोगेन त्वितरे क्षपयित्वा सम्पद्यत 'इति सूत्रादनुवृत्तं सम्पद्यत इति पदमिह सूत्रे वाक्पदेन सम्बन्धं वाच एव लयं प्रतिपादयेदिति

**शङ्कते—कथं वाग्वृत्तिरिति** । 'अविभागो वचना'दिति सूत्रेणोत्तरत्र विशिष्य निर्विशेषविदां वागादिस्वरूपलयप्रतिपादनात् ततोऽन्यत्र स्वरूपलयो नास्तीत्यवगम्यते । अतो वाक्यपदं वाग्वृत्तिपरमिति परिहरति--**सत्यमेतदिति । दृश्यते हि वाग्वृत्तेरिति** । ननु, यद्यपि लोके प्रथमतो मनसि विद्यमान एव वागादिकार्यनिरोधमात्रमुपलभ्यते, न तु वाचः स्वरूपमेव निरुद्धमित्युपलभ्यते । तथापि 'वाङ्मनसी'तिश्रुतिसामर्थ्यान्मुमूर्षूणां वागादीन्द्रियलय एवोपेयः । न च मनसो वाचं प्रति प्रकृतित्वाभावात् कथं तस्मिन्वाचो लयश्श्रुत्या प्रतिपादयितुं शक्यत इति वाच्यम् । वाग्वृत्तेरपि वागुपादानत्वेन मनसि लयासम्भवात् । श्रुतिसामर्थ्यानुसरणं तु स्वरूपपक्षेऽपि समानमिति चेत्, उच्यते —'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति श्रुत्या जीवेन सह प्राणानामुत्क्रान्तिप्रतिपादनात् स्वरूपपरत्वं वाक्यस्य वक्तुं न शक्यते । अतो लोकसिद्धार्थानुवादकमिदं वाक्यमाश्रयणीयं लाक्षणिकार्थविशेषनिर्धारणोपयोगितया । लोके च वागादिकार्यलयः प्रसिद्ध इतीहापि वागादिकार्यलय एव प्रतिपाद्यते । न च लोके तस्य मनोऽधिकरणकत्वं न प्रसिद्धमिति कथं तदंशेऽनुवादस्स्यादिति वाच्यम् । मनसीति 'यस्य च भावेन भावलक्षण'मिति सप्तमी भविष्यति । यदि तु सोपपदविभक्तिः न कारकविभक्तौ सम्भवन्त्यां स्वीकर्तुमुचिता वृत्तिलयानुवादेन, तदा मनोऽधिकरणताविधिपरमेतत् भवतु । न च वागादिवृत्तीनां प्रकृतौ मनसि लयो नोपपद्यत इति वाच्यम् । मनसो वृत्तिलयप्रयोजकवागादिसंयोगाधारत्वेन वृत्तिलयं प्रत्यधिकरणत्वोपपत्तेः जलेऽग्निश्शाम्यतीतिवत् । सौत्रं शब्दाच्चेतिपदं शब्दोपपत्तेश्चेत्यर्थकं व्याचष्टे — **शब्दोऽपीति** ॥१॥

## अत एव च सर्वाण्यनु ॥२॥

उपशान्तं तेजः शरीरौष्ण्यं यस्य तथाभूतः । ऊष्मोपशमो हि मृतस्य चिह्नं पुनर्भवमुद्दिश्य । ननु सूत्रद्वयेन मनसीन्द्रियवृत्तिलयो भवती'ति प्रतिपाद्यते । तदेकेनैव सूत्रेण सम्भवति । अतस्सूत्रद्वयं किमर्थमित्याशङ्क्याह—**सर्वेषां करणानामिति** । वाङ्मनसि सम्पद्यत इति वाक्यपदस्य वागिन्द्रियपरतामुपेत्य प्रथमसूत्रेण न्याये प्रतिपादिते द्वितीयं सूत्रं वाक्पदस्य श्रुत्यन्तरानुसारेण इन्द्रियमात्रोपलक्षकताप्रतिपादनार्थं सद्यथाश्रुत्यन्तरानुसारेण लोकदर्शनानुसारेण च वाक्पदं सर्वेन्द्रियोपलक्षणार्थं, तथैव श्रुत्यन्तरादर्शनाच्च वृत्तिलयलक्षकतापि भविष्यतीति उपपत्त्यन्तरसूचकमपि भविष्यतीति भावः ॥२॥

इति वागधिकरणम् ॥ १ ॥

## तन्मनः प्राण उत्तरात् ॥३॥

यथा वागुपलक्षितानां सर्वेषां बाह्यकरणानां मनसि वृत्तिलयः, एवं मनसोऽपि प्राणे वृत्तिलय एव 'मनः प्राण' इत्यनेन प्रतिपाद्यते इति पूर्वन्यायातिदेशात्सङ्गतिः । विशेषाशङ्कामति देशाव्यावर्त्यामाह—तत्प्रकृतित्वोपपत्तेश्चेति । सौत्रतत्पदार्थमाह—तदपीति । आत्मगृहीतबाह्येन्द्रियवृत्तीति मनसो विशेषणं पृथक्पदम् ॥३॥

इति मनोधिऽकरणम् ॥ २ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥४॥

मनः प्राण इत्यनन्तरं समाम्नाते 'प्राणस्तेजसी'तिवाक्ये विचारकरणात्सङ्गतिः । शरीरगतौष्ण्ये सत्येव प्राणवृत्तिर्लीयत इति लोकप्रसिद्धेः प्राणस्तेजसीत्यत्रापि वृत्तिलय एव विवक्षितः, पूर्वन्यायादिति स्थिते श्रुत्यन्तरपर्यालोचनया जीवोऽप्यत्रोपसंहर्तव्यो वा, न वेति विचार्यते—अश्रुतकल्पनाया अन्याय्यत्वादिति । ननु, 'तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसम्सूतग्रामण्योऽभिसामायान्ति एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' उग्राः वैश्याः शूद्रायामुत्पन्नाः, प्रत्येनसः एनस्विनां प्रतिकूलाः तेषां शिक्षार्थं विनियुक्ताः राजभटास्सूताः क्षत्रियाद्ब्राह्मण्यामुत्पन्ना उग्राः ग्रामण्यः ग्रामनेतृत्वेन राज्ञा विनियुक्ता प्रयान्तः राजनमभिलक्ष्य समायन्ति सङ्गता भवन्ति, एवमेवेममात्मानमन्तकाले सर्वे प्राणा इन्द्रियाण्यभिसमायन्ति । यत्र यस्मिन् काले एतत् उर्ध्वोच्छ्वासी भवति यदेतदूर्ध्वोच्छ्वसनं तद्वान् जीवो भवतीति प्राणस्य जीवेन सह सम्बन्धः प्रतिपाद्यते । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति च प्राणस्य जीवेन सहोत्क्रान्तिः प्रतिपाद्यते । न च प्राणस्य जीवेन सहोत्क्रान्तिः प्रायणकाले जीवप्राणयोः सम्बन्धाभाव उपपद्यते । सविज्ञानो भवतीति च विज्ञायते अनेनेतिव्युत्पत्त्या विज्ञानपदोदितप्राणसाहित्यं जीवस्य प्रतिपाद्यते मरणकाले । अतश्श्रुत्यन्तरपर्यालोचनया जीवसाहित्यस्याप्युत्क्रान्तिकाले प्राणस्यावश्यं वक्तव्यतया कथं "प्राणस्तेजसी'ति यथाश्रुतमाश्रयितुं शक्यमिति चेन्न । 'एवमेवेममात्मानमि'तिवाक्येन हि न मुख्यस्य प्राणस्य जीवोपगमनं प्रतिपाद्यते, अपि त्विन्द्रियाणामेव । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'तिवाक्यं तु जीवोत्क्रान्तिं विहाय तामनुसृत्य पृथक् प्राणोत्क्रान्तेः प्रतिपादनान् मरणकाले जीवप्राणयोर्वियोगमेव प्रतिपादयतीति सिद्धान्तिप्रतिकूलमेव। 'सविज्ञानो भवती'त्यत्र च विज्ञानपदं भावव्युत्पत्त्या अन्त्यकाले भाविप्रत्ययसाहित्यं वक्ति, न तु प्राणसाहित्यम् । अतो नोदाहृतवचनानुसारेणान्त्यकाले जीव-

प्राणयोस्साहित्यं सिध्यति । यदि तु 'स ह्येतस्मिन् शरीरे वसतस्सहोत्क्रामत' इति 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी'ति प्राणसहितस्य जीवस्य उत्क्रान्तेः स्पष्टं प्रतिपादनादन्त्यकाले प्राणस्य जीवं प्रति गमनमपेक्षितमित्युच्यते, तदापि प्राणस्तेजसीत्यत्र तेजसः प्रागेव जीवेनोपसंहर्तव्यः । अपि तु तेजोऽनन्तरमेव । न च विनिगमनाविरहः । तेजसः पूर्वं जीवोपसंहारे हि प्राणवृत्तिर्जीवे लीयते सवृत्तिके जीवे सत्येव, जीववृत्तिश्च वृत्तिमति तेजसि सत्येवेति वक्तव्यम् । नैतल्लोकसिद्धम् । प्राणवृत्तौ परिस्पन्दात्मिकायां शरीरोष्मानुवर्तत इत्येतावन्मात्रं हि लोकसिद्धं, न त्वन्त्यप्रत्ययरूपायां जीववृत्तौ लीयमानायामपि शरीरोष्मानुवर्तत इत्यत्र लोकसम्प्रतिपत्तिरस्ति । अतस्तेजसः प्राक् तदुपसंहारे लोकसिद्धार्थानुवादकत्वासम्भवात् तेजोऽनन्तरमेव जीवो निवेशनीयः इति पूर्वपक्षाभिप्रायः । अयमत्र सिद्धान्ताभिप्रायः—'एवमेवेममात्मानमन्त्यकाले सर्वे प्राणा अभिसमायन्ती'ति वचनं यद्यपि इन्द्रियाणामेव जीवोपगमनं साक्षात्प्रतिपादयति, तथाप्यन्तकाले प्राणे लीनानामिन्द्रियाणां प्राणस्य जीवोपगमनं विना तं प्रत्युपगमनानुपपत्त्या प्राणोपगमनमाक्षिपति । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती' त्यत्रापि जीवः प्रथमं पृथगेवोत्क्रामति-तमनुसृत्य पश्चात् प्राणोऽनूत्क्रामतीत्यर्थो न विवक्षितः । प्राणं विहाय केवलस्य जीवस्योत्क्रमणासम्भवस्य 'तद्गुणसारत्वादिति' न्यायसिद्धत्वात्, 'सहोत्क्रामत इति श्रुतेश्च । अपि च 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती' त्युत्तरवाक्ये प्राणे लीनानामिन्द्रियाणां प्राणमनुसृत्य पृथगुत्क्रान्तिर्वक्तुं न शक्यते । अतोऽनुशब्देन सहोत्क्रममाणानामपीन्द्रियाणां प्राणाधीनत्वमात्रं विवक्षितम् । एवं 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती' त्यत्रापि सहोत्क्रममाणस्यापि प्राणस्य जीवाधीनत्वमात्रं विवक्षितमिति न सिद्धान्ताननुगुण्यं तस्य वाक्यस्य । 'सविज्ञान' इत्यत्रापि भाविफलविज्ञानसाहित्योक्त्या प्राणसम्बन्ध आक्षिप्यते । प्राणसम्बन्धाभावे विज्ञानानुपपत्तेः । नन्वस्तु श्रुत्यन्तरानुसारेण जीवोपसंहारः, तथापि तस्य क्व निवेशः । तेजसः प्राङ्निवेशे हि 'प्राणस्तेजसी'तिश्रुत्या प्राणस्याव्यवधानेन तेजसि लयोऽवगम्यमानो बाधितो भवेदित्यभिप्रेत्य शङ्कते—**ननु प्राणस्तेजसीति श्रूयत इति ॥४॥**

उक्तशङ्काव्यावर्तकं सूत्रम् ॥

## भूतेषु तच्छ्रुतेः ॥५॥

तेजसोऽनन्तरं जीवनिवेशेऽपि पूर्वपक्ष्युपगते 'तेजः परस्यां देवताया'मिति श्रुतेः परदेवतायां तेजसस्साक्षात् लयोऽवगम्यमानो बाधितो भवेदेव । अत्रापि प्रत्यक्षसिद्धत्वाभावस्तुल्य एव । न हि वृत्तिमति जीवे सत्येव तेजस ऊष्मरूपवृत्त्युपशमो

लोके प्रसिद्धः । अतो भाष्योक्तपाटलीपुत्रगमनन्यायेन 'तेजः परस्यां देवतायामि'-ति निर्देशः प्रत्यक्षसिद्धत्वाभावेऽपि उपगन्तव्यः । तथासति प्राणस्तेजसीत्यत्रैव तथा कुतो नावगम्यत इति तात्पर्यं भाष्यस्य । उक्तप्रकारेण प्राणानन्तरं जीवनिवेशकथनं पूर्वपक्षयुक्तार्थप्रतिबन्दीरूपेणोपन्यस्तम् । वस्तुतस्तु नात्र यथाश्रुत्यन्तरप्राप्तानां वरुणलोकादीनामर्चिरादिमार्गपर्वतया क्रमेण निवेशः, एवं जीवस्य श्रुत्यन्तरप्राप्तस्य प्राणानन्तरं तेजसः पूर्वं निवेशः, अध्याहारप्रसङ्गात् । अपि तु तेजःपदेनैव लक्षणया जीवस्य ग्रहणम् । तत्रेयमाशङ्का—लक्षणापक्षे प्राणपदेनैव कुतो जीवो न लक्ष्यत इति । तन्निराकरणार्थं सूत्रे तेजसीत्यनुक्त्वा भूतेष्विति निर्देशः कृतः । तेजःपदेन हि श्रुत्यन्तरप्राप्तानि भूतान्युपलक्षणीयान्येव । तथा च तेजःपद एव लक्षणायाः प्रवृत्तत्वात् श्रुत्यन्तरप्राप्तो जीवोऽपि लक्षणीय इति तदाशयः । अपि च प्राणपदे जीवलक्षणायां प्राणवज्जीवस्यापि तेजोवृत्तावूष्मरूपायां सत्यामेव लय उपगन्तव्य इति लोकसिद्धार्थानुवादता न भवेत् । तेजःपदेन जीवलक्षणायां तु न जीवस्य तेजसि लयोऽप्युपगन्तव्यः । अपि तु भूतान्तरजीवऽविशिष्टे तेजसि प्राणलयमात्रम् । तत्र भूतान्तरयुक्ततेजस्सम्पर्को जीवस्योत्तरसूत्रे दर्शयिष्यते । प्राणस्य तत्र लयस्तु मरणकाले प्राणव्यापारोपरमानन्तरमप्यूष्मसद्भावोपलम्भेन लोकसिद्धोऽनुवदितुं शक्यते ॥५॥

उत्तरसूत्रमवतारयति—कथमिति ।

## नैकस्मिन्दर्शयतो हि ॥ ६ ॥

रंहत्यधिकरणे हि पञ्चभूतात्मकसूक्ष्मशरीरविशिष्ट एव जीवं इतः परलोकं गच्छति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति, इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नप्रतिवचनाभ्यां व्यवस्थापितम् । अतो मरणकाले भूतान्तरसम्पर्कस्यावश्यकत्वात् तेजःपदं भूतपञ्चकात्मकशरीरलक्षकम् । दर्शयत इति द्विवचनं प्रश्नप्रतिवचनाभिप्रायेण व्याख्याय श्रुतिस्मृत्यभिप्रायेण व्याचष्टे—**श्रुतिस्मृती चैतमिति** । 'स यत्रायमात्माबल्यं नेत्य संमोहमिवन्येत्यथैनमेते प्राणा अभिसमायन्ति' अबल्यं अबलस्य भावं नेत्य नितरामेत्य मरणावस्थां प्रक्रम्य पृथिवीमय' इत्यादिकमाम्नातम् । अतः पञ्चभूतविशिष्टत्वं मरणकाले उक्तश्रुतिसिद्धं मात्रा भूतांशभूता दशार्धानां पञ्चानां सर्वं प्राणिजातं सम्भवति उत्पद्यते । ननु, 'वाङ्मनसि दर्शनादि'त्यादिभिस्त्रिभिरधिकरणैः वागुपलक्षितानामिन्द्रियाणां मनसि लयः, मनसः प्राणे च, प्राणस्य जीवभूतान्तराविशिष्टे तेजसि लय इति 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसी'ति श्रुतिमवलम्ब्योक्तम् । इदं तु श्रुत्यन्तरविरुद्धम् । 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैः मनसि

सम्पद्यमानैः यच्चित्तः तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथा सङ्कल्पितं लोकं नयती'त्यत्र प्रथमं तेजसो लयः, अनन्तरमिन्द्रियाणां मनस्सहिते जीवे सत्येव लयः, जीवस्य प्राणसम्पर्कः, प्राणस्तेजश्शब्दोक्तोदानेनैव सम्पृच्यत इत्यवगम्यत इति चेत्, उच्यते— 'अस्य सोम्य पुरुषस्ये'ति श्रुतिर्लोकानुसारेण प्रवृत्ता प्रमाणान्तरसंवादात् बलवतीति तस्मादुपशान्त' इति श्रुतिः संवादाभावात् तदनुसारेण व्याख्येया । 'इन्द्रियैर्मनसि सम्पद्यमानैरि'त्यत्र यथाश्रुतग्रहणानुपपत्त्या अस्या अपि श्रुतेः प्रमाणान्तरनिरीक्षकत्वेन मुख्यार्थविधिपरत्वाभावात् । अतः 'तस्मादुपशान्ततेजा' इत्यत्र पाठप्राप्तप्राथम्यं न विवक्षितम् । 'यच्चित्तस्तेनैष प्राणमायाती'त्यत्रापि जीवस्य प्राणे लयो न विवक्षितः । अपि तु मरणकाले जीवस्य प्राणसम्पर्कमात्रम् । बृहदारण्यके 'यत्रास्य पुरुषस्य मृतस्याग्नि वागप्येती' ति म्रियमाणं जीवं प्रस्तुत्य आर्तभागेन याज्ञवल्क्यं प्रति 'क्वायं पुरुषो भवती'ति जीवाश्रये पृष्टे रहस्यार्थोऽयमेकान्ते वक्तव्य इत्यभिप्रायेणाहर सोम्यहस्तमार्त्तभागआवामेवैतस्य वेदिष्यावो न नावेत् स जन'इति एकान्ते गमनपूर्वकं याज्ञवल्क्येन योऽर्थ उत्तरितः, 'सोऽर्थश्श्रुत्या प्रतिपाद्यते–' यदूचतुरि'त्यादिना । रहसि गत्वा कर्माश्रयता जीवस्यार्त्तभागयाज्ञवल्क्याभ्यां निर्णीतेति 'तौ ह यदूचतुरि'त्यादिश्रुतिवचनार्थः । स्थूलदेहोपादानभूतसूक्ष्माश्रयत्वे सत्येव जीवस्य शरीरग्रहणं प्रति निमित्ततया कर्मणस्तदाश्रयतोक्तिर्मरणकाले न विरुध्यत इत्यभिप्रायेण परिहरति— **तत्रोच्यत इत्यादिना** । गृह्णन्ति पुरुषपशुं बध्नन्तीति ग्रहा इन्द्रियाणि। इन्द्रियवृत्तिरपि विषयाधीनेऽति विषया अतिग्रहाः। वाङ्मनसि दर्शनादित्यारभ्य निरूपिताया उत्क्रान्तेः सिद्धान्तपूर्वपक्षयोस्सगुणोपासनेष्वनुचिन्तनीयतया फलभेदः ॥ ६ ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

उत्क्रान्तिर्निर्गुणविदां नास्तीति वक्ष्यते । सगुणविदामस्ति न वेति चिन्ता। यदापि सगुणविदामुत्क्रान्तिः, तदापि विदुषामविदुषां च सा समाना, उतोऽस्ति वैषम्यमिति । तत्र पूर्वः पक्षः—सगुणविदामपि ब्रह्मस्वरूपभूतममृतत्वमेव । 'न च पुनरावर्तत' इति तान् प्रत्यपुनरावृत्तेश्श्रवणात् फलं वक्तव्यम् । ब्रह्मस्वरूपं तु व्यापीति न तत्प्राप्त्यर्थं तेषां गतिरपेक्षिता । तदभावे गत्यर्थोत्क्रान्तिरपि तेषां नास्तीत्येकः पूर्वपक्षिणोऽभिमानः । अर्चिरादिमार्गेण ब्रह्मप्राप्तिकथनं तु अश्वमेधादिना ब्रह्मलोकप्राप्त्यभिप्रायं नेतव्यम् । न च सगुणब्रह्मप्रकरणविरोधः । लिङ्गेन

प्रकरणबाधोपपत्तेरिति । ननु, 'अस्य सोम्य पुरुषस्य प्रयत' इति निर्विशेषप्रकरणे उत्क्रान्तेराम्नानान्निर्विशेषविदामपि यदोत्क्रान्तिः, तदा सविशेषविदां सास्तीति किमु वक्तव्यमित्यभिप्रायेण शङ्कते—**नन्विति** । यथा निर्विशेषप्रकरणे स्वापादिकीर्तनं ब्रह्मस्वरूपप्रतिपत्त्यर्थम् , एवमुत्क्रान्तिकीर्तनमपि ब्रह्मस्वरूपप्रतिपत्त्यर्थं, न विदुष उत्क्रान्तिं साधयितुं शक्नोतीत्यभिप्रायेण परिहरति —**न स्वापादिवदिति** । सविशेषविदामुत्क्रान्तिस्तावदपेक्षिता अर्चिरादिमार्गेण ब्रह्मप्रतिपत्त्यर्थम् । ब्रह्मस्वरूपस्य व्यापित्वेऽपि न सगुणोपासनानुरूपभोगोपयुक्तं तत्स्वरूपं ब्रह्मलोकावच्छिन्नमेव । सविशेषप्रकरणेषु 'तयोर्ध्वमायन्नमृतत्वमेती' ति अमृतत्वफलकीर्तनमपि आभूतसम्प्लवस्थानममृतत्वं हि भाष्यत इति अमुख्यामृतत्वाभिप्रायं भविष्यति । अपुनरावृत्तिश्रवणमपि क्रममुक्त्यभिप्रायम् । एवं च सविशेषप्रकरणेष्वर्चिरादिना ब्रह्मप्राप्तिकथनं न प्रकरणादुत्कृष्टव्यं भवति । अयं सिद्धान्तः 'सूत्रे अमृतत्वं चानुपोष्ये'त्यंशेन सङ्गृहीतः । उपपूर्वादुपदाह इत्यस्मात् क्त्वाप्रत्यये रूपमुपोष्येति । ततो नञ्समासः । यद्यपि सविशेषविदामुत्क्रान्तिः, तदापि अविद्वदुत्क्रान्तिमपेक्ष्य सा विलक्षणोपेया । विद्वदविदुषोः प्राप्यस्य फलस्य विलक्षणत्वेन तदुपयोगिन्या उत्क्रान्तेरपि विलक्षणत्वावश्यंभावात् । कारणवैलक्षण्येन हि कार्यवैलक्षण्यमित्यपरः पूर्वपक्ष्याशयः । तस्योत्तरं—समाना चासृत्युपक्रमादिति । सृतिः मार्गः मूर्धन्यनाडीमारभ्य ब्रह्मलोकप्राप्त्यर्थं समाम्नातः । तावत्पर्यन्तं समानैवोत्क्रान्तिः विद्वदविदुषोः । अनन्तरं विद्वान् मूर्धन्यनाडीं प्राप्तो भवति , अविद्वान् नाड्यन्तरम् । तथा च उत्क्रान्तौ किञ्चित्सालक्षण्ये सत्यपि मूर्धन्यनाडीमारभ्य वैलक्षण्यस्य विद्यमानतया न फलवैलक्षण्यानुपपत्तिः ॥ ७ ॥

इति आसृत्युपक्रमाधिकरणम् ॥४॥

## तदापीतेस्संसारव्यपदेशात् ॥८॥

उत्क्रान्तिप्रसङ्गात् विद्वदविदुषोस्तत्र विशेषं निरूप्य 'प्राणस्तेजसी'ति वाक्यानन्तरं समाम्नातं 'तेजः परस्यां देवतायामि'ति वाक्यं विचारयति—**तेजः परस्यां देवतायामित्यत्रेत्यादिना । तत्रात्यन्तिक एव तावदिति** । ननु, सुषुप्तौ प्रकृतिभूतब्रह्माश्रयोऽपि लयस्सावशेष एव भवतीति 'स एव तु कर्मानुस्मृतिशब्दविधिभ्य' इत्यत्रोक्तम् । मरणकालेऽप्यात्यन्तिकलयोपगमे कर्मविद्याविधिवैयर्थ्यं तुल्यमेव । अतः कथमयं पूर्वः पक्ष इति चेत्, उच्यते—शङ्काविशेषनिराकरणार्थोऽयमारम्भः । तेजःपरस्यां देवतायामित्यत्र सावशेषलयाभिधानं अर्चिरादिमार्गप्रतिपत्त्युपयोग्युत्क्रान्तिनिरूपणावसरे न सङ्गतम् । यथा राज्ञः मार्ग-

प्रतिपत्त्युपयोगिरथगजादिसाहित्ये सति झटिति मार्गगमनमेव भवति, न तु मध्ये क्वचिदप्यवस्थानम् । एवं प्रयतो जीवस्य मार्गप्रतिपत्त्युपयोगिप्राणादिपरिष्वङ्गे सति झटिति शरीरात् बहिर्निर्गमनमेव, न तु शरीरमध्ये परस्यां देवतायामवस्थानं वक्तव्यम् । मार्गप्रतिपत्तौ तस्योपयोगाभावात् । अतोऽत्र परदेवतासम्पत्तिरात्यन्तिकी वक्तव्या । न च कर्मविद्याविधिविरोधः । एतस्य वाक्यस्य प्रकरणानुसारेण निर्विशेषविद्वद्विषयत्वोपपत्तेः । न च तस्मिन्नुत्क्रान्तिप्रतिषेधो वक्ष्यत इति वाच्यम् । द्विविधाह्युत्क्रान्तिः प्राणानाम् । एका तावत् स्वस्वगोलकेभ्यः शरीरमध्य एव हृदयं प्रति 'स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्ववक्रामती'ति श्रुतिसिद्धा । अपरा 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति श्रुतिसिद्धा शरीरात् बहिः । तत्र द्वितीया निर्विशेषविदो माभूत् । आद्या तु भवतु कानुपपत्तिः । ततश्चैतद्वाक्यानुसारेण सविशेषविद्यायामुत्क्रान्तिविशेषाचिन्तनं न लभ्यत इत्येतावान् पूर्वः पक्षः । न चैवंसत्येकस्यैव सम्पद्यत इति पदस्य वागादिषु वृत्तिलयपरत्वं, 'तेजःपरस्यां देवतायामि'त्यत्र त्वात्यन्तिकलयपरत्वमिति वैरूप्यं प्रसज्यत इति वाच्यम् । पुनस्संसारदर्शनानुपपत्त्या हि यथाश्रुतार्थपरतां परित्यज्य लोकानुसारतो वृत्तिलयार्थतोपगता प्रकृतवाक्यस्य विद्वद्विषयताशङ्कायां तु तत्र पुनस्संसारानपेक्षणात् वागादिष्वप्यात्यन्तिकलयोपपत्तेः । अस्तु वा प्रकृतवाक्यस्य निर्विशेषविद्व्यतिरिक्तविषयता, तथाप्युत्क्रान्त्युपगमे लिङ्गशरीरस्य महत्त्वे सति रूपवत्त्वात् बहिर्गमनावसर उपलम्भस्स्यादित्यादिशङ्काशूकोद्धारणार्थोऽप्ययमारम्भः । अयमत्र सिद्धान्ताभिप्रायः । नास्य प्रकरणानुसारेण निर्विशेषविद्विषयतोपगन्तुं न्याय्या । तदीयेन्द्रियादीनां स्वप्रपञ्चप्रविलयवद्युगपदेवाधिष्ठाने ब्रह्मणि प्रविलयस्य वक्तव्यतया वाङ्मनसीत्यादिक्रमानुपपत्तेः । अतोऽनान्तरोत्क्रान्तिरपि सम्भाविता । अतोऽस्य वाक्यस्य सुषुप्त्यादिवाक्यवत् सर्वसाधारण्यमेव पूर्वोक्तमुपगन्तुं न्याय्यम् । न च तस्मिन्नपि किञ्चित्कालं प्रायणसमये ब्रह्मण्यवस्थानकथनमनुपयुक्तमिति वाच्यम् । उत्क्रान्तिजनितवेदनापनोदनाय विश्रान्त्यर्थतासम्भवात् । विश्रान्तिप्रयोजनं तु 'तदोकोग्रज्वलन'मित्यधिकरणे स्फुटं भविष्यति । निर्विशेषविद्व्यतिरिक्तविषयत्वे च कर्मविद्याविधिसार्थक्याय नात्यन्तिकलयपरतैव वाक्यस्य युक्तेति ॥८॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥

अनेकावयवारब्धस्यापि सूक्ष्मता त्रसरेण्वादिवत् । पार्श्वस्थैरनुपलम्भस्तूद्भूतरूपवत्त्वाभावात् सूक्ष्मशरीरस्य । यथा च नायनरश्मीनां स्वभावविशेषात् काचादिभिः प्रतिघातः, एवंसूक्ष्मशरीरस्य शरीरान्निर्गमने न प्रतिघातः स्वच्छत्वं प्रतिघातप्रयोजकस्वरूपविशेषः ॥९॥

## नोपमर्देनातः ॥१०॥

स्पष्टम् ॥१०॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥११॥

सूक्ष्मशरीरस्योत्क्रान्तिं प्रसाध्य प्रसङ्गात्तत्र प्रमाणोपन्यासार्थमिदं सूत्रम् । यद्यपि 'तस्यैषा दृष्टिः यदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाती'तिवाक्यं जाठराग्निविषयं, तथापि जाठराग्नेः सूक्ष्मशरीरान्तर्गतिविवक्षया तस्यैवायमूष्मेति प्रतिपादनान्नानुपपन्नम् ॥११॥

इति तदापीत्यधिकरणम् ॥९॥

## प्रतिषेधादिति चेन्न शारीरात् ॥१२॥

प्रस्तुताया उत्क्रान्तेर्निर्विशेषवित्स्वपवादकरणात् सङ्गतिः । 'न तस्य प्राणा उत्क्रामन्ती'त्यादिवाक्यानां शरीरापादानकोत्क्रान्तिप्रतिषेधकत्वशारीरापादानकोत्क्रान्तिप्रतिषेधकत्वान्यतरकोट्यनिर्धारणात् संशयः । यदि हिं 'न तस्य प्राणा उत्क्रामन्ती' त्यादिवाक्यानां शरीरापादानकत्वप्रतिषेधपरता, तदा 'न तस्य प्राणा उत्क्रामन्ती'त्यादिवाक्यानां विदुषस्सकाशात् प्राणा नोत्क्रामन्ति न वियुज्यन्ते मरणकाले, अपि तु तेन संश्लिष्टा एव भवन्तीत्यर्थस्सिध्यति । तथा चैतेषां वाक्यानाम् 'एष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वे'त्यादिवाक्यप्रतिपाद्यशरीरावयवापादानकोत्क्रान्तिविरोधित्वाभावात् परब्रह्मविदोऽपि देहादुत्क्रम्य लोकान्तरं प्राप्य तत्रामृतत्वमित्यर्थस्सिध्यति । शरीरापादानकोत्क्रान्तिप्रतिषेधपरत्वे तु प्राणानां बहिर्निर्गमनाभावेन लोकान्तरप्राप्तेरसम्भवात् इहैवामृतत्वमिति प्रतिषेधादिति चेदित्यंशः पूर्वपक्षावसरे सिद्धान्तिशङ्कानुवादार्थः । तं व्याचष्टे—**अथाकामयमान** इति । सिद्धान्तनिराकरणमुखेन पूर्वपक्षप्रतिपादनार्थो न शारीरादित्यंशः । तं व्याचष्टे—**नेत्युच्यत** इति । **सम्बन्धविशेषे व्यवस्थाप्यत** इति । यथा नटस्य शृणोतीत्यपादानेऽपि सम्बन्धमात्रविवक्षया षष्ठी, एवं 'न तस्य प्राणा' इत्यत्राप्यपादान एव सम्बन्धमात्रविवक्षया षष्ठी भविष्यतीति भावः ॥१२॥

## स्पष्टो ह्येकेषाम् ॥१३॥

**उच्छ्वयनादीनि समामनन्तीति** । ननु, 'यत्रायं पुरुषो म्रियत' इति पूर्ववाक्ये प्राधान्येन पुरुषः प्रस्तुतः । 'अतः उदस्मात् प्राणा उत्क्रामन्ती'त्यत्राप्यपादानतयेदंपदेन पुरुष एव परामर्शनीयः । तथा च प्रश्नवाक्यस्य देह्युपादानकत्वविषयकतया 'नेति होवाचे'ति निर्णयवाक्यमपि देह्यपादानकोत्क्रान्तिप्रतिषेधपर-

मेव भविष्यति । एवं सत्युच्छ्वयनादिकं देहधर्मभूतं यद्यपि 'स उच्छ्वयती'त्यत्र तत्पदपरामृष्टे उत्क्रान्तिनिषेधावधौ देहिनि नान्वेति । तथाप्यत्र देहिपदस्य तत्पदस्य देहे लक्षणा भविष्यति । स उच्छ्वयति तत्सम्बन्धी देह उच्छ्वयतीति यावत् । न चोपसंहारस्वारस्यानुरोधेन उपक्रमगतस्योदस्मात् प्राणा इति इदंपदस्यैव देहपरता कल्पयितुं न्याय्या । तस्मान्नात्र देहापादानकोत्क्रान्तिप्रतिषेधावगम इति चेत् , उच्यते—उपसंहारानुसारेण भूयोनुग्रहश्चेल्लभ्यते, तदोपक्रमोऽपि अन्यथयितव्य इति प्रहतमेव । ततश्च प्रकृतेन 'स उच्छ्वयत्याध्मायती'त्यस्यैव वाक्यस्य देह्यपादानकोत्क्रान्तिप्रतिषेधपर उपक्रम इति पक्षेऽनुपपत्तिः । अपि तु 'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहाति नामेति य उत्तरत्रार्त्तभागं प्रश्नः सोऽप्यनुपपन्न एव । अयं प्रश्नःतदोपपद्यते । यदि पूर्ववाक्ये विदुषः प्राणाः देहान्नोत्क्रम्य लोकान्तरं गच्छन्ति, अपि त्वत्रैव लयं यान्तीत्यर्थो विवक्ष्येत । तदा यदि लीनत्वात् प्राणा विद्वांसं जहति तं किं न जहातीति प्रश्नः उत्तिष्ठति । देह्यपादानकप्रतिषेधपरत्वे तु विदुषि किञ्चित्पदार्थत्यागाप्रतिपादनात् किमेनं न जहातीति प्रश्नः,नाममात्रं न जहातीत्युत्तरं चासङ्गतमेव स्यात् । अतो यत्रायं पुरुष इति पुरुषे प्रस्तुतेऽपि 'उदस्मात् प्राणा' इत्यत्र पुरुषसम्बन्धिशरीरमेव परामृश्यते । अपि च 'यत्रायं पुरुष'इति पूर्ववाक्ये यत्र शरीरेऽयं पुरुषो म्रियत इति शरीरमपि प्रस्तुतमेवेति न काचिदनुपपत्तिः । अथापि स्यात् 'यत्रायं पुरुषो म्रियत' इति न विशिष्य विद्वत्पुरुषोऽपादानम्, अपि तु पुरुषसामान्योपादानम् । नन्वार्तभागस्य प्रथमः प्रश्नः 'याज्ञवल्क्येति ' होवाच कति ग्रहाः कत्यतिग्रहा' इति सविषयेन्द्रियगोचरः । तस्योत्तरं 'अष्टौ ग्रहा इत्यादि । पुनश्च 'याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं कास्वित्, सा देवता, यस्या मृत्योरन्नमि'ति द्वितीयः प्रश्नः । तस्योत्तरं 'अग्निर्वै मृत्युस्सोऽपामन्नं अपपुनर्मृत्युञ्जयती'ति । पुनश्च तृतीयः प्रश्नः—याज्ञवल्क्येति होवाच यत्रायं पुरषो म्रियत इत्यादि । तथा च मृत्युतरणहेतुभूतदेवताविज्ञानवान् द्वितीयप्रश्नोत्तरे प्रस्तुतः । स एव यत्रायं पुरुष इति विवक्ष्यते । अतो विद्वद्विषयमेवेदं वाक्यमिति चेत् , न । एतावता ह्यपमृत्युतरणे हतुभूतदेवताविज्ञानवानेवेह गृह्यते । न च तस्मिञ्छरीरादुत्क्रान्तिः प्रतिषेद्धुं शक्या । परब्रह्मविद्यातिरिक्तानां सर्वेषां संसारोपगमात् । अपि च 'यत्रायं पुरुपो म्रियते किमेनं न जहाती'ति प्रश्नानन्तरं 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण' इत्यादिना प्रकृतं पुरुषं यत्रास्येति परामृश्य मरणे सति 'क्वायं पुरुषो भवती'ति प्रश्ने 'कर्म हैव तदूचतुः अथ यत्प्रशंसतुः कर्महैव तत् प्रशशंसतुरिति तस्य कर्माश्रयता प्रतिपादिता । अतोऽप्यब्रह्मविदेव इह सन्द प्रतिपाद्यत इति गम्यते । अतः कथमिह शरीरादुत्क्रान्तिः प्रतिषेद्धुं शक्या ।

'तस्मादस्मात् प्राणा उत्क्रामन्त्याहो नेतिनेतिहोवाच याज्ञवल्क्य' इति वाक्यमपि शारीरापादानकोत्क्रान्तिप्रतिषेधपरम् । 'न तस्मात् प्राणा उत्क्रामन्तीति तु शारीरापादानकोत्क्रान्तिप्रतिषेधपरमिति स्पष्टमेव । ततश्च 'स उच्छ्वयती'त्यादिवाक्यं लक्षणयैव योजनीयम् । 'किमेनं न जहाती'त्यपि प्राणा एनं न जहत्यन्यदपि किमेनन्न जहाती'त्यभिप्रायमिति चेत्, अत्रोच्यते—'यत्रायं पुरुषो म्रियते उदस्मात् प्राणा उत्क्रामन्ती' ति परब्रह्मविद्विषयमेव । पूर्ववाक्ये ब्रह्मविद एव प्रस्तुतत्वात् 'याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं कास्वित्सा देवता यस्या मृत्योरन्नमित्यत्र संसारमृत्युतरणहेतुभूता हि देवता पृष्टा । 'यदिदं सर्वं मृत्योरन्नमि' त्यत्र मृत्युपदेन सर्वेषां प्राणिनां बन्धनहेतुभूतं 'ग्रहातिग्रहलक्षणं यद्वस्तु, तद्विवक्षितम् । पूर्ववाक्ये तस्य प्रस्तुतत्वात् ग्रहातिग्रहलक्षणबन्धननिदाननाशिका च देवता मृत्युमृत्युभूता देवता परं ब्रह्मैव। तस्य वेदान्तवृत्त्यभिव्यक्तस्य ग्रहातिग्रहोपादानभूताविद्यानिवर्त्तकत्वात् । न च तथासति 'अग्निर्वै मृत्युस्सोऽपामन्नमि'त्युत्तरासाङ्गत्यमिति वाच्यम् । मृत्युमृत्युभूताया देवताया 'यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः । मृत्युर्यस्योपसेचनमि'ति शास्त्रतो ब्रह्मरूपत्वेन प्रसिद्धत्वात् तामनुक्त्वा मृत्युमृत्युमपि सम्भावयितुं लौकिकदृष्टान्तमात्रम् 'अग्निर्वै मृत्युस्सोऽपामन्नमि' ति प्रतिपाद्यत इति नोत्तरस्य प्रश्नानुगुण्यम् । अत उदस्मात् प्राणा उत्क्रामन्ती'ति वाक्यं पूर्वोत्तरसन्दर्भपर्यालोचनया परब्रह्मविदश्शरीरादुत्क्रान्तिनिषेधपरमेव। न चार्तभागसन्दर्भस्य ब्रह्मविद्विषयत्वे कर्माश्रयताप्रतिपादनमसङ्गतमिति वाच्यम्। तस्य प्रासङ्गिकत्वात् ग्रहातिग्रहलक्षणं हि बन्धनमविदुषां संसारप्रयोजकत्वेन, विदुषां च नाशनीयत्वेन प्रस्तुतम्। तत्र ग्रहातिग्रहलक्षणस्यापि संसारहेतोः किं प्रयोजकमित्यभिप्रायेणैव 'यत्रास्य पुरुषस्ये' त्यादिलोकसिद्धाविद्वत्पुरुषविषयकं, न तु प्रकृतविद्वत्पुरुषविषयकं, अयोग्यत्वात् । तत्सिद्धं 'उदस्मात् प्राणा' इत्यादिवाक्यानुसारेण 'न तस्मात प्राणा उत्क्रामन्ती' त्यपि देहादुत्क्रान्तिप्रतिषेधपरम् । न च 'योऽकामो निष्काम' इति पूर्ववाक्ये विदुषः प्रस्तुततया तस्मादिति पदेन तस्य परामर्शे कथं शरीरादुत्क्रान्तिप्रतिषेधपरं स्यादिति वाच्यम् । शारीरपरेणापि तस्मादितिपदेनाध्यासिकाभेदमालम्ब्य शरीरलक्षणोपपत्तेः । तदिदमाह—**अभेदोपचारेणेति** । अवश्यं चेत्थमेवोपगन्तव्यम् । यदि हि तस्माद्विदुषस्सकाशात् प्राणा नोत्क्रामन्ति, अपि तु तेन सहायान्तीत्यर्थो विवक्ष्येत, तदा 'अत्रैव समवलीयन्त' इति इहैव लयप्रतिपादको वाक्यशेषः कदर्थितो भवेत्। **देहादुत्क्रान्तिः प्राप्तेति** । चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति पूर्ववाक्यपर्यालोचनया लोकतश्च देहादेव प्राणानामुत्क्रान्तिः प्राप्ता । अतो

देहापादानकोत्क्रान्तिप्रतिषेधपरत्वेन तस्येतिवाक्यमप्रसक्तप्रतिषेधस्स्यात् । न चात्र ब्रह्म समश्नुत इति वाक्यपर्यालोचनया प्राणानामिहैव लयः प्रसक्तः स निषिध्यते । 'न तस्य प्राणा उत्क्रामन्ती'ति इहैव लयेन विदुषस्सकाशात् प्राणा न वियुज्यन्ते । अपि त्वत्रैव समवलीयन्ते विदुष्येव संपृक्ता भवन्तीति । एवंसति 'अत्र ब्रह्म समश्नुत' इति वाक्यस्य यथार्थग्रहणे प्रसक्तस्य प्राणवियोगस्य वारितत्वात् अवियुक्तप्राणस्य चात्रैव मुख्याया ब्रह्मप्राप्तेरसम्भवात् साक्षात्काररूपा प्राप्तिस्समश्नुत इत्यनेन विवक्षितेति वाच्यम् । 'अत्र ब्रह्म समश्नुत' इतिवाक्येन यथाश्रुतेनात्रैव ब्रह्मप्राप्त्यभिधायकेन विदुषि प्राणलयाक्षेपेऽपि नोर्ध्वाक्रमणरूपोत्क्रान्तिः विद्वदुपादानका प्राणानां प्राप्ता भवति । ततश्च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्यादिवाक्यसिद्धदेहापादानकोत्क्रान्तिरविद्वत्साधारण्येन विदुष्यपि प्रसक्ता 'न तस्य प्राणा उत्क्रामन्ती'ति निषिध्यते । एवंसत्युत्क्रामन्तीत्यपि न वियोगलक्षकं भविष्यति । अनुत्क्रान्तानां च प्राणानां विदुष्येव लयम् 'अत्रैव समवलीयन्त' इति वाक्यं स्वारस्येन प्रतिपादयति । विगलितोपाधेश्च ब्रह्मात्मनावस्थानरूपां ब्रह्मप्राप्तिम् 'अत्र ब्रह्म समश्नुत' इति वाक्यं प्रतिपादयति । तथा च सर्वेषां वाक्यानां देहापादानकोत्क्रान्तिपक्ष एव स्वरसतया न देहापादानकोत्क्रान्तिप्रतिपादकतास्थेयेति भावः । ननु , 'न तस्य प्राणा उत्क्रामन्ती'त्यत्रापादानापेक्षायामन्तरङ्गप्रत्यासत्त्या विदुष एवोपस्थितस्यान्वये सति कथं वाक्यान्तरपर्यालोचनया शरीरावयवानामपादानता भवेदित्याशङ्कयाह—अपि च चक्षुष्टो वेति । 'इति तु कामयमान'इत्युपसंहारसमभिव्याहृतेन 'अथाकामयमान' इति विद्वद्विषयकोपक्रमेण ह्ययमर्थोऽवगम्यते—अविदुषो यद्युत्क्रान्तिस्तद्वैपरीत्येन विद्वान् द्यत' इति । अविदुषि च शरीरावयवापादानकोत्क्रान्तिः परलोकगमनं पुनस्सञ्चरणमित्यादिकं निरूपितं , तद्विदुषि नास्तीत्युपक्रम एव निर्णये सति कथं 'न तस्य प्राणा उत्क्रामन्तीति वाक्ये उपस्थितत्वेन विद्वानेवापादानत्वेनाध्याहर्तुं शक्यत इति भावः ॥१३॥

## स्मर्यते च ॥१४॥

सम्यक्त्वाभेदेन पद्यते मार्गद्वयेन प्राप्यते यत्पुण्यफलं , तद्रहितस्य मार्गे ब्रह्मविद्यारूपे पदैषिणो देवा मुह्यन्तीत्यन्वयः । उपरिष्टात् 'कार्यं बादरि'रित्यधिकरणे ॥१४॥

इति प्रतिषेधाधिकरणम् ॥६॥

## तानि परे तथा ह्याह ॥१५॥

'एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं ग-

च्छन्ती'ति श्रुतिः 'यथानद्यस्समुद्रं प्राप्यास्तं गच्छन्त्येवमेव स प्राणमसृजते'ति श्रुत्युपक्रान्ताः प्राणाद्या जीवोपाधयः पुरुषपदोदिते परमात्मनि लयं प्रतिपादयति।'गताः कलाः पञ्चदश प्रतिष्ठा' इति श्रुतिस्तु कलाशब्दोदितानां जीवोपाधीनां प्रतिष्ठापदोदितासु असाधारणस्वस्वप्रकृतिषु पृथिव्यादिषु लयं प्रतिपादयति । अतश्श्रुतिविप्रतिपत्तेस्संशयः । पूर्वस्मिन्नधिकरणे विद्वदुपाधीनामुत्क्रान्तिर्नास्तीत्युक्तम् । तद्विषय एव विचारान्तरप्रवर्तनात् सङ्गतिः। तत्र पूर्वः पक्षः—घटादिकार्याणां ह्यसाधारणस्वस्वप्रकृतिष्वेव लयो दृष्टः । एवं विद्वदुपाधीनामपि असाधारणप्रकृतिष्वेव पृथिव्यादिषु लयो भविष्यति । तथा च 'गताः कलाः पञ्चदश प्रतिष्ठा इति श्रुतिरेव मुख्यया वृत्त्या उपपादिता भवति । 'पुरुषं प्राप्यास्तं गच्छन्ती'ति कलालयाधारभूतपृथिव्यादिकं प्रति पुरुषस्याधारतया कथञ्चिद्योजनीया । एवं च ज्ञानकृतोऽपि लयो घटादिलौकिकलयवत् सावशेष एव । कलासूक्ष्मावस्थाविशिष्टपृथिव्यादिपरिशेषादिति । भवेदेवं, यदि ज्ञाने सति पृथिव्यादिपरिशेषो भवेत्, तत्त्वज्ञानेन तु अविद्यामूलभूतस्य कृत्स्नस्यापि अविद्यया सह निरस्ततया पृथिव्यादिपरिशेषाभावात् पुरुषपर्यन्त एव कलाप्रविलय उपगन्तव्यः । दृश्यते हि लोकेऽपि अग्निना पटे दग्धे उपादानभूततन्त्वाद्यवस्थाभिः पटदाह इति । 'गताः कला' इति श्रुतिः लौकिकभ्रान्तिमूलकार्थानुवादिनीति सिद्धान्तमाह—**तानि पुनरित्यादिना**॥१५॥

इति परसम्पत्त्यधिकरणम् ॥७॥

## अविभागो वचनात् ॥१६॥

यत्तावदुक्तं—तत्त्वज्ञानेनाविद्याया निरस्ततया पुरुषपर्यन्तः कलाप्रविलय इति, तन्न सम्भवति । एकस्य तत्त्वज्ञाने सति अविद्यायाः प्रविलीनत्वेन तन्मूलककृत्स्नप्रपञ्चविलये सति सर्वेषामेव युगपदेवासंसारिता भवेत् । अतस्सावशेष एव कलाप्रविलय इत्यभिप्रायेण पूर्वपक्षयति—**तत्र प्रविलयसामान्यादिति** । पुरुषं प्राप्यास्तं गच्छन्तीत्युक्तौ सावशेषताशङ्कायां 'भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवती'ति पुरुषमात्रपरिशेषता प्रतिपाद्यते । अतो वचनबलात् न सावशेषलय उपगन्तव्यः । न च निरवशेषलये संसारिशून्यतापत्तिः । अज्ञाननानात्वस्वीकारेण तदीयतत्त्वज्ञानेन तदीयाज्ञाननिवृत्त्या तन्मूलकस्य प्रपञ्चैकदेशस्यापगमेऽप्यवशिष्टप्रपञ्चसत्त्वेऽनुपपत्त्यभावादिति सिद्धान्तयति—**अविभागएवेतीति** ॥१६॥

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया॥

उत्क्रान्तिप्रसक्तानुप्रसक्तिं निरूप्य पुनरप्युत्क्रान्तिमेव निरूपयति—**समाप्ता प्रासङ्गिकी परविद्यागताचिन्तेति** । 'चक्षुष्टो वा मूर्ध्नो वा' इत्यादिश्रुतिस्सर्वसाधारण्येन चक्षुरादिद्वारत्वमनियतमुत्क्रान्तौ प्रतिपादयति—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति श्रुतिस्तु अवान्तरामृतत्वप्राप्तौ मूर्धन्यनाड्योत्क्रमणं नियच्छति । नाड्यन्तराणां तु विष्वग्विद्यमानानां लोकान्तरप्रयोजकोत्क्रमणहेतुत्वं प्रतिपादयति । तत्रोपासकानां मूर्धन्यनाड्यैवोत्क्रमणं नियतम्, उतानियतमिति संशये नियमप्रापकाभावादनियमः । न च तयोर्ध्वमायन्निति श्रुतिर्नियामिका । तया खलु मूर्धन्यनाड्या यो निष्क्रामति, सोऽमृतत्वं प्राप्नोतीति प्रतिपाद्यते, न तूपासको मूर्धन्यनाड्येति । न चोपासकस्यामृतत्वप्राप्तिर्नियता । मरणानन्तरं येनार्थात्तस्य मूर्धन्यनाडीसम्बन्धस्सिद्धो भवेत् । नापि तस्य स्वप्रयत्नानुसारेण मूर्धन्यया नाड्या निष्क्रमणं सम्भवति । जीवद्दशायामेव नाडीद्वारविवेचनसामर्थ्याभावेन मरणवेदनायुक्तस्य सुतरां नाडीद्वारा विवेचनासम्भवात् । न च तस्य हैतस्य हृदयस्याग्रं प्रद्योतत' इति श्रुत्या नाडीद्वारा निष्क्रमणोपयुक्तहृदयाग्रवर्त्यन्तःकरणपरिणामविशेषरूपस्य ज्ञानस्य प्रतिपादनान्मरणसमये नाडीद्वारविवेकस्सम्भवतीति वाच्यम् । एवमपि हृदयस्याधोमुखतया तदग्रे जायमानस्य प्रद्योतस्याधोमुखनाडीद्वारविवेकोपयुक्तत्वेऽपि मूर्धन्याभिमुखब्रह्मनाडीद्वारविवेकयुक्तत्वानुपपत्तेः । अतो यदा मूर्धन्यनाड्योत्क्रमणं, तदैव ब्रह्मलोकप्राप्तिरिति न विदुषो मरणानन्तरमेव ब्रह्मलोकप्राप्तिः । नाड्यन्तरेणापि उत्क्रमणस्य निवारयितुमशक्यत्वादिति पूर्वः पक्षः । अयमत्र सिद्धान्ताभिप्रायः—उपासकस्य तावच्छरीरपातानन्तरममृतत्वमवश्यंभावि । तत्प्रतिबन्धकपुण्यपापयोरश्लेषविनाशयोः प्रतिपादितत्वात् । अमृतत्वप्राप्तिश्च मूर्धन्यनाड्युत्क्रमणनियता । 'तयोर्ध्वमायन्नि'तिश्रुतेः । तथा च विदुषश्श्रुतार्थापत्त्या मूर्धन्यनाड्या निष्क्रमणं सिध्यति । न च मुमूर्षावेदनायुक्तस्य तदानीं द्वारविवेकानुपपत्तिः । 'तेजः परस्यां देवतायामि'ति वाक्यसिद्धया सत्सम्पत्त्या विश्रमणेन मुमूर्षावेदनाया अपगतत्वात् । सत्स्वपि नाड्यन्तरद्वारेषु तदानीं मूर्धन्यनाडीगोचर एव हृदयाग्रप्रद्योतस्तु विद्याशेषभूता या ब्रह्मनाडीद्वारा गत्यनुस्मृतिः अहरहरनुचिन्तनारूपा, यश्चेश्वरानुग्रहः,तद्वशात् भवति। हृदयपुण्डरीकं चाधोमुखनाडीचक्रपर्यन्तमूर्ध्वाभिमुखायाश्च ब्रह्मनाड्या जीवप्रवेशार्थं द्वारं नाभिचक्रप्रदेशो नाभिचक्रमारभ्य मूर्धदेशपर्यन्तं हि ब्रह्मनाडी प्रसृता । तथा च मरणकाले हृदयपुण्डरीकं प्रविष्टस्य जीवस्य विद्यासामर्थ्येनामृतत्वप्राप्तेर

वश्यम्भावात् विद्याशेषभूतहृदयनाडीध्यानाहितसंस्कारवशेन च मूर्धन्यनाडीद्वारगोचरहृदयाग्रप्रद्योते सतीश्वरानुगृहीतस्य हृदयपुण्डरीकान्तर्गत्या नाभिचक्रलग्नां मूर्धन्यनाडीं प्रविश्य मूर्ध्नो निर्गमने न काचिदनुपपत्तिरिति । पूर्वपक्षे मार्गध्यानकालेन ब्रह्मनाडीचिन्तनं, सिद्धान्ते तु तच्चिन्तनमिति फलभेदः ॥१७॥

इति तदोकोऽग्राधिकरणम् ॥९॥

## रश्म्यनुसारी ॥१८॥

मूर्धन्यनाडीनिष्क्रमणानन्तरं रश्मिसम्बन्ध इति पूर्वाधिकरणेनास्य सङ्गतिः। **सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वेति** । 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च एवमेवैता आदित्यस्य रश्मयः उभौ लोकौ गच्छन्तीमञ्चामुञ्चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता' इति वाक्येन ग्रामद्वयसम्पृक्तमहामार्गवत् आदित्यरश्मीनां शरीरगतनाडीरारभ्यादित्यपर्यन्तं व्याप्तिर्दर्शिता । रश्मिपदस्योभयलिङ्गत्वात् 'ता आसु तेऽमुष्मिन्नि'त्यत्र स्त्रीलिङ्गपुल्लिङ्गतत्पदाभ्यां रश्मिपरामर्शः ॥१८॥

सिद्धान्तेनोपक्रम्य पूर्वपक्षनिरासपूर्वकं पुनस्सिद्धान्तप्रदर्शनार्थम् सूत्रम् ।

## निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वात् ॥१९॥

सुगमम् ।

नन्वत्रापि पूर्वपक्षे रश्मिसम्बन्धस्यानियतत्वात् न मार्गान्तर्गततया तस्य चिन्तनम् । सिद्धान्ते तु नियततया चिन्तनमिति फलभेदः ॥१९॥

इति रश्म्यधिकरणम् ॥१०॥

## अतश्चायनेऽपि हि दक्षिणे ॥२०॥

पूर्वस्मिन्नधिकरणे रात्रौ प्रयतस्यापि रश्मिसम्बन्ध उपपद्यत एव । रात्रावपि सूर्यकिरणसद्भावात् । यदि तु रात्रौ मृतस्य सूर्यकिरणसम्बन्धो नोपेयेत, तदा 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इति नियमवचनं पीड्येत । यदि तु दिवसप्रतीक्षा स्वीक्रियेत, तदा त्वरावचनम् । यदि तु रात्रौ प्रेतस्य रश्मिसम्बन्धाभावात् विद्याफलं ब्रह्मलोकप्राप्तिर्नास्तीत्युच्येत, तदा विद्यायाः पाक्षिकफलत्वेन मरणकालानिश्चयात् कस्यापि विद्यायां प्रवृत्तिर्न स्यात्, इति न्यायः स्थितः दक्षिणायनमृतेऽपि विदुषि अतिदिश्यते । दक्षिणायनमृतोऽपि विद्वान् रश्मिभिस्सम्बध्य ब्रह्मलोकं गच्छत्येव । नाडीकिरणसम्बन्धस्य यावद्देहभावितया दक्षिणायनेऽपि तस्यानपायात् दक्षिणायनमृतस्याप्युत्तरायणोदीक्षणं तु नोपपद्यते । मार्गप्रतिपत्त्यर्थं त्वरावचनविरोधात् । दक्षिणायनापराधमात्रेणार्चिरादिमार्गप्राप्त्यभावे विद्यायाः पाक्षिकफलत्व-

प्रसक्त्या कस्यापि प्रवृत्तिर्नस्यादिति विशेषाशङ्कामाह---**उत्तरायणेति ।** ‘दिवसश्शुक्लपक्षश्च उत्तरायणमेवच । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितमि’ तिवचनादित्यर्थः । **आपूर्यमाणपक्षादिति** । यद्यप्यत्रातिवाहिकाः प्रतिपाद्यन्ते, तथापि तत्तत्कालाभिमानिनीनां देवतानामातिवाहिकत्वं तत्कालमृतत्व उपपद्यत इत्याशयः। अत एव ‘यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । इति कालमुपक्रम्यैव ‘अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् । ‘तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः’ । इतिगीतावचनमुपपद्यते । **प्राशस्त्यप्रसिद्धिरविद्वद्विषयेति** । विदुषस्सर्वप्रतिबन्धकनिवृत्त्या फलप्राप्तेरवश्यम्भावित्वात् दिवस इत्यादिवचनमविद्वद्विषयम् । भीष्मस्य मरणाय उत्तरायणप्रतीक्षणमपि भारते प्रतिपादितं, तदविदुषः प्रति तत्प्राशस्त्यप्रतिपादनाय । पितृप्रसादात् भीष्मस्य स्वच्छन्दमरणं भारत एव प्रसिद्धम् ॥२०॥

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥

सूत्रे योगपदं साङ्ख्यपरम् । पातञ्जलशास्त्रोक्तो योग इह योगपेदन विवक्षितः। कापिलोक्तो बुद्धिपुरुषविवेकस्साङ्ख्यपदोदितः । अस्मिन्पक्षे गीतावचने योगपदमपि साङ्ख्यस्याप्युपलक्षणम् । तथा च प्रत्यासत्त्या स्मृत्युक्तः कालनियमः स्मृत्युक्तयोगसाङ्ख्यविषय इति द्रष्टव्यः । गीतावचनमपि अर्चिराद्यातिवाहिकविषयमिति वक्तुं शङ्कते—**नन्विति** । अभ्युपेत्यवादत्वं सूत्रस्य दर्शयति—**उच्यत इत्यादिना** । वास्तविकं गीतावचनार्थं स्वयमाह—**यदा पुनरिति** । अस्मिन्पक्षे यत्र काल इति कालपदेनोपक्रमस्तु आतिवाहिकगणे कालाभिमानिदेवतासत्त्वात्तल्लक्षणार्थ एव । योगपदमपि कर्मोपासनात्मकयोगपरं गीतायां द्रष्टव्यम् ॥२१॥

इति अयनाधिकरणम् ॥११॥

**इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां चतुर्थाध्यायस्य द्वितीयः पादः ॥**

ॐ

---

अथ

# चतुर्थाध्यायस्य तृतीयः पादः ।

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

पूर्वस्मिन्पादे उत्क्रान्तिर्निरूपिता । अस्मिन् पादे उत्क्रान्त्यनन्तरभाविनी अर्चिरादिमार्गप्राप्तिरिति अर्चिरादिमार्गविषयको विचारः क्रियत इति पादयोः

पौर्वापर्यम् । अत्र भिन्नप्रकरणगतत्वे हेतुरुपासनैक्येऽपि मार्गवैलक्षण्याम्नानं यत्र वर्तते शाखाभेदेन तदभिप्रायः । ननूपासनैक्येऽपि मार्गवैलक्षण्येनाम्नानं न मार्गभेदसाधकम्। उपास्यगुणानामिव मार्गपर्वणामपि उपसंहारसम्भवादित्याशङ्क्य यत्रोपासनाभेदेन मार्गभेदाम्नानं, तत्रोपसंहारस्य वक्तुमशक्यतया मार्गभेदो भवत्येवेत्यभिप्रायेणाह—**भिन्नोपासनाशेषत्वाच्चेति** । ननु, मार्गपर्वणामर्चिरादीनां सर्वत्र किञ्चित् किञ्चित् प्रत्यभिज्ञानात् ऐक्ये सति मार्गस्य उपसंहारो भविष्यतीति चेत्, न। उपासनाभेदे यस्यामुपासनायां यावन्ति मार्गपर्वाण्याम्नातानि, तावतामेव तत्राङ्गतया प्रत्यभिज्ञामात्रेण उपसंहारासम्भवात् । अन्यथा ब्रह्मण उपास्यगुणानामपि सर्वेषां सर्वत्र उपसंहारस्स्यात् । **अवधारणमर्चिराद्यपेक्षायामुपरुध्येतेति** । 'अथैतैरेव रश्मिभि'रित्यत्र केवलानां रश्मीनामूर्ध्वाक्रमणहेतुत्वावगमात् पर्वान्तरोपसंहार एवकारो बाधितो भवेदिति भावः । अपि चाथैतैरेव रश्मिभिरित्यत्र पर्वान्तरोपसंहारे विलम्बस्य तत्तत्पर्वप्राप्तिव्यवधानकृतस्यावश्यंभावात् 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छे'दिति रश्मिप्राप्त्यनन्तरं झटित्यादित्यप्राप्तिवचनमप्यसङ्गतं भवेदित्याह—**त्वरावचनं चेति** । एवंसति यथैक एव ग्रामो मार्गभेदैर्यथायथं लोकैः प्राप्यते, एवमेकोऽपि ब्रह्मलोको मार्गभेदेन प्राप्यो भविष्यतीति पूर्वपक्षाभिप्रायः । अयमत्र सिद्धान्ताभिप्रायः–'ये चेमेरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्ती'ति सामान्यवचनेन सर्वासूपासनास्वर्चिरादिमार्गः प्रतिपाद्यते । तत्र यद्युपासनाविशेषेषु मार्गान्तरमङ्गीक्रियेत, तथासति एतस्य वचनस्य सङ्कोचः कल्पनीयस्स्यात् । अथवा तत्तन्मार्गेण सहास्य विकल्पोऽभ्युपगम्येत । न हि मार्गद्वयसमुच्चयो वक्तुं शक्यते । एकेनैव मार्गेण ब्रह्मलोकप्राप्तेस्सिद्धतया मार्गान्तरानपेक्षणात् । न च मार्गैक्यमुपगम्य सङ्कोचविकल्पयोः परिहारसम्भवे तयोरङ्गीकारो युक्तः । अपि च मार्गैक्यकल्पनायां लाघवानुसारिण्यां सत्यां गौरवग्रस्तं मार्गबहुत्वकल्पनमुचितम् । एवंच तत्राम्नानविशेषस्थले अर्चिरादिमार्गपर्वप्रत्यभिज्ञानम् ऐक्यावगमकमबाधितं भवति । न चात्र सर्वत्राम्नातानां ब्रह्मगुणानामुपसंहारे उपास्यगुणानन्त्यप्रसक्त्यानुष्ठानाशक्तिरिव तत्रतत्राम्नातानां क्वचिन्मार्गपर्वणामुपसंहारे अशक्तिरापद्यते। अपि च देवयानपितृयाणावध्वानावनुक्रम्य अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्तीति मार्गद्वयभ्रष्टानामधोगतिराम्नायते । तत्र यद्यर्चिरादिमार्गापेक्षया ब्रह्मलोकप्रापकं मार्गान्तरं उपगम्येत, तदा इदमपि वचनं पीडितं भवेत् । अतो विद्याविशेषेषु आम्नातानां पर्वविशेषाणामर्चिरादावन्तर्भावमुपगम्यैव समीचीनलोकप्रापकमार्गद्वित्वमाश्रयणीयम्। ते उपासकाः। तेषु ब्रह्मलोकेषु। ब्रह्मलोकान्तर्गतानां ब्रह्मविष्णुरुद्रादिभोगभूमीनां ब-

हुत्वात्तदभिप्रायं बहुवचनम् । परास्संवत्सराः । प्रशंसायां मतुप् । प्रशस्तसंवत्सरशालिनः दीर्घजीविन इति यावत् । तस्य ब्रह्मणः परास्संवत्सराः जितिः जयः । व्युष्टिर्व्याप्तिः । अपि च यदि ब्रह्मलोकप्रापकं मार्गबहुत्वमुपगम्य विकल्पस्स्वीक्रियेत, तदा विकल्पस्वीकार एव न दोषावहः , अपि तु अथैतैरेव रश्मिभिरित्याद्यल्पपर्वमार्गेण सहानेकपर्वकार्चिरादिमार्गस्य विकल्प उपगन्तव्य इति विकल्पे विषमशिष्टतापि प्रसक्ता भवतीत्याह—भूयांसि चेति ॥१॥

इति अर्चिरधिकरणम् ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥२॥

मार्गैक्येन तत्तच्छाखाम्नातानां पर्वविशेषाणामुपसंहारे स्थिते आगम्यमानानां क्रम इदानीं चिन्त्यते उपासनाकाले मार्गपर्वणां चिन्तनक्रमाय । स प्रजापतिलोकं स ब्रह्मलोकं प्रजापतिर्विराट् ब्रह्मा हिरण्यगर्भः । अयमत्र पूर्वः पक्षः—स एतन्देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकमिति पाठानुसारेणाग्निलोकपदोदितार्चिरनन्तरं वायोर्निवेशः कर्तव्यः । न च 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुलोकमागच्छती'ति बृहदारण्यकपाठानुसारेण वायोः प्रथमस्थानता किं न स्यादिति वाच्यम् । तत्र हि पाठक्रमस्य नियामकत्वं न क्लृप्तं, 'स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मित्युत्तरत्र यथापाठं वरुणलोकादीनां निवेशोपगमात् । अतोऽग्निवायुलोकयोरपि पाठो नियामको भविष्यति । बृहदारण्यके तु 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति यथा अण्डं बदरस्य वाद्यविशेषस्य खं तेन सह ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स उर्ध्व आक्रमते स ब्रह्मलोकमागच्छति अशोकमहिममि'ति वाक्ये तु चन्द्रलोकानन्तरमशोकत्वादिविशेषणको ब्रह्मलोक आम्नातः । न तत्र पाठक्रमः नियामकः । चन्द्रानन्तरं विद्युदादीनां निवेशनीयत्वात् । न चाग्निलोकानन्तरं वायोर्निवेशाभ्युपगमेऽर्चिषोऽहरिति श्रौतक्रमविरोधः । अर्चिष इत्यादिपञ्चमीनां हेतुत्वार्थकताया वक्ष्यमाणत्वात् हेतुत्वस्य च पूर्वत्वगर्भत्वादिति वाच्यम् । मार्गैक्ये दृढन्यायसिद्धे वायोः क्वचिदवश्यं निवेशनीयत्वेन तटितोऽन्ते निवेशे वायुदत्तच्छिद्रेणादित्यप्राप्तेरसम्भवात् । आदित्यात् प्राङ्निवेशाय श्रुतिक्रमस्य क्वचिदवश्यं भञ्जनीयत्वेन पाठानुग्रहायार्चिषोऽहरित्यत्रैव भङ्गोऽस्तु । न चैवं यद्यादित्यात् पूर्वभावो वायोरावश्यकः, तथासति अव्यवधानेनैवादित्यात् पूर्वं निवेशः किं न स्यादिति वाच्यम् । तेन स ऊर्ध्व आक्रमत इति निर्देशस्य चन्द्रपर्याये व्यवधाने-

नापि दृष्टतया अव्यवधानानपेक्षणात् । अतः पाठानुग्रहायार्चिरनन्तरमेव वायोर्निवेश इति । अयमत्र सिद्धान्ताभिप्रायः—'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छती'त्यत्र तावद्रथचक्रपरिमितेन वायुदत्तच्छिद्रेण ऊर्ध्वमाक्रामतीत्युक्तौ आक्रमणीय ऊर्ध्वदेशः कइत्यपेक्षायां स आदित्यमागच्छतीति उत्तरवाक्यानुसारेण आदित्यरूपस्स इत्यवगमाद्वायुदत्तच्छिद्रस्य आदित्यप्राप्तौ साधकतमत्वं तृतीयाश्रुत्या प्रतीयते । साधकतमत्वं च वायुदत्तच्छिद्रस्य अव्यवधानेन आदित्यप्राप्तावुपपद्यते । न च श्रौतोऽर्थः पाठमात्रेण बाधितुं न्याय्यः । तेन स ऊर्ध्वमाक्रमते सब्रह्मलोकमागच्छतीत्युत्तरत्र तु अव्यवधानपरित्यागश्चन्द्रमसो विद्युतमिति श्रौतक्रमानुसारादेवागत्यादृतः । अत आदित्यात्पूर्वं संवत्सरादनन्तरं वायुर्निवेशयितव्य इत्येवं छान्दोग्यगतार्चिरादिपाठानुसारेण संवत्सरानन्तरं वायोर्निवेशः कर्तव्य इति यथासूत्रं व्याख्याय बृहदारण्यकगतार्चिरादिपाठानुसारेण संवत्सरानन्तरं देवलोकस्तदनन्तरं वायुर्निवेशनीय इत्याह—**वाजसनेयिनस्त्विति** । ननु, छान्दोग्यवाजसनेयकपर्यालोचनया मासादित्ययोर्मध्ये संवत्सरदेवलोकवायूनां निवेशे वक्तव्ये अहश्शुक्लपक्षोत्तरायणानामुत्तरोत्तरत्वदर्शनात् उत्तरायणानन्तरं संवत्सरनिवेशे स्थितेऽपि वायोः पूर्वं संवत्सरानन्तरं देवलोक इति कथं नियन्तुं शक्यम् । यथा हि 'स वायुमागच्छति तस्मै स तत्र विजिहीते । यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती'ति वायोः आदित्याव्यवधानेन पूर्वं निवेशः प्रतीयते । एवं देवलोकादादित्यमिति पञ्चम्या देवलोकस्याप्यादित्याव्यवधानेन पूर्वं निवेशोऽवगम्यत इति चेदुच्यते—'मासेभ्यो देवलोकं देवलोकादादित्य'मिति देवलोकस्य मासादित्यसान्निध्यमवगम्यते । तत्र वायोरनन्तरं देवलोकनिवेशे तस्य संवत्सरवायुभ्यां द्वाभ्यां मासं प्रति व्यवधानं भवेत् । आदित्येन तु अत्यन्तसान्निध्यं, तन्माभूत्, अपि तु मासादित्ययोः सान्निध्यं व्यवधानं च तुल्यमेव भवत्विति संवत्सरवाय्वोर्मध्य एव देवलोको निवेशनीयः । केचित्तु 'यो यः पवते एष देवानां गृह' इत्यर्थवादादाकाशस्थानां देवलोकानां स्तम्भात्मना स्थितेन वायुनावष्टब्धतया देवगृहान्तर्गतत्वोपपत्तेश्च वायुरेव देवलोक इति मासेभ्यो देवलोकमिति वाजसनेयकपाठेऽपि 'वायुमब्दादि'ति सूत्रस्य नानुपपत्तिरिति वदन्ति ॥२॥

इति वाय्वधिकरणम् ॥२॥

## तटितोऽधिवरुणस्सम्बन्धात् ॥ ३॥

व्यवहिताधिकरणे यन्मार्गैक्यमुक्तं, यच्च तदुपेत्यैवादित्यात्पूर्वं निवेशनम् अव्यवहिताधिकरणे, तदुभयमपि न सम्भवतीत्याक्षिप्यते । तथाहि—कौषीतक्यामाम्नाता-

नां वरुणलोकादीनां क्व निवेशः। न तावत् अर्चिषोऽनन्तरं, 'स यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत' इत्युत्क्रान्त्यनन्तरमेव रश्मिपदोदितार्चिस्सम्बन्धप्रतिपादनात्; नाप्यर्चिरादीनां मध्ये, अर्चिषोऽहरित्यादिपञ्चमीभिः पर्वणां बद्धक्रमत्वात्। नापि विद्युदन्ते। तदनन्तरममानवपुरुषस्य नेतृत्वात् वरुणादीनां तटिदनन्तरं निवेशे हि तेषां नेतृता वक्तव्या। आतिवाहिकत्वस्य वक्ष्यमाणत्वात्। तथा चामानवपुरुषस्य तटिदनन्तरं नेतृत्वं विरुध्येत। तथा च वरुणादीनां अर्चिरादिषु निवेशासम्भवात् कौषीतकिगतं मार्गान्तरमेवेति मार्गैक्यमुपगम्य यद्वायोरादित्यात्पूर्वनिवेशनीयत्वमुक्तं, तन्न सम्भवतीति पूर्वः पक्षः। सिद्धान्तमाह—**आदित्याच्चन्द्रमसमित्यादिना**। नभसि विद्युतोऽनन्तरं मेघा उपलभ्यन्ते। अप्पतेश्च वरुणस्य मेघेष्ववस्थानं न्याय्यम्। अतस्तटिदनन्तरं वरुणो निवेशनीयः। वरुणानन्तरं च यथापाठमिन्द्रादीनां निवेशः, न त्वनेकप्रमाणसिद्धं मार्गैक्यं परित्याज्यम्। तटिदनन्तरं तु अमानवपुरुषस्य वरुणादीनां नेतृत्वं समुच्चयेन भविष्यतीति 'वैद्युतेनैव तत' इति सूत्रे वक्ष्यते। अतो नानुपपत्तिरिति। **आगन्तुकत्वादपीति**। लोके सभायामागतानां पुरुषाणां असति विशेषनियामके अन्त एव निवेशो दृष्टः। पूर्वं विद्यमानानां क्लृप्तस्थानतया उद्वापासम्भवात्। तथात्रापि भविष्यतीति भावः ॥३॥

इति तटिदधिकरणम् ॥३॥

## आतिवाहिकास्तल्लिङ्गात् ॥४॥

अर्चिरादीनां क्रमनिरूपणानन्तरं तेषां स्वरूपमस्मिन्नधिकरणे चिन्त्यत इति सङ्गतिः। लौकिकमार्गचिह्नोपदेशतुल्यत्वात् अर्चिषोऽहरित्याद्युपदेशस्य अर्चिषोऽहरित्यादीनामपि मार्गचिह्नत्वमित्येकः पक्षः। अग्निलोकमागच्छतीति अर्चिषो लोकत्वेन कौषीतकिशाखायामनुवादादहरादीनामपि लोकत्वमवगम्यते। लोकपदं भोगभूमिवाचकतया प्रसिद्धमिति भोगभूमय एवार्चिरादय इत्यपरः पक्षः। तदिदं पूर्वपक्षद्वयं प्रतिपादयति—**तत्र मार्गलक्षणभूता अर्चिरादय इत्यादिना**। तेऽर्चिरादिलोकं गता अहोरात्रं लोकेषु भोगाय सज्जन्ते आसक्ता भवन्ति। मार्गेषु सीमाविशेषेषु स्थिताः राजनियुक्ताः पुरुषाः गन्तॄन् स्वसीम्नः सीमान्तरं ये प्रापयन्ति, ते आतिवाहिका इत्युच्यन्ते। इदं चातिवाहिकत्वं चेतनानामर्चिरादीनां न सम्भवतीत्याह—**अचेतनत्वादपीति**। प्राप्तमानवत्वनिषेधपरत्वाद्विशेषणस्येति 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयतीति,' वाक्येन विद्युल्लोकपर्यन्तं स्वत एवोपासकानां गमनम, अनन्तरं त्वातिवाहिकप्रयुक्तमित्यर्थो विवक्षितो भवेत्, तदा पुरुष एनान् ब्रह्म गमयतीत्येव वदेत्। तावतैवोक्तार्थसिद्धेः, नत्वमानव इति विशेषणं वदेत, तद्वशेन तु पूर्वत्रापि पुरुषा गमयितारस्सन्ति। परं तु ते मानवाः, विद्युल्लोकानन्तरं त्व

मानव इति विशेषं द्योतयति । ननु, 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयती'ति वाक्यानुसारेण पूर्वेषां गमयितृत्वं नास्तीति येनोच्यते, तं प्रतीदं वक्तुं शक्यम् । अस्य वाक्यस्य पूर्वत्र मानवत्वद्योतकतया गमयितृत्वाभावद्योतकत्वाभावात् । यस्तु प्रमाणाभावादेव पूर्वेषां गमयितृत्वं नास्तीति वदति, तं प्रति नेदं लिङ्गमुपन्यासार्हम् । न चेदमेव पूर्वेषां गमयितृत्वे प्रमाणमिति वाच्यम् । अस्य वाक्यस्य विद्युल्लोकानन्तरममानवपुरुषगमयितृत्वविधिपरतया अर्चिरादीनां गमयितृत्वाबोधकत्वादित्यभिप्रायेण शङ्कते—ननु लिङ्गमात्रमिति ॥ ४ ॥

## उभयव्यामोहात्तत्सिद्धेः ॥५॥

गन्तॄणामर्चिरादिपदमुख्यार्थानां चोभयेषां व्यामोहात् प्रज्ञाराहित्यात् लोके मूर्च्छितादीनामन्यप्रयुक्तगमनदर्शनेन उपासकानामपि प्रज्ञारहितानाम् अन्यैरेव गमनस्यापेक्षिततया असति बाधके अर्चिरादिपदानां तन्मुख्यार्थाभिमानिदेवतालक्षकतया आतिवाहिकपुरुषसिद्धिरित्यभिप्रायेण सूत्रं व्याचष्टे—ये तावदिति । 'तत्पुरुषोऽमानव' इति वाक्यं तु यथा न प्रकृतार्थविरोधि, तथा पूर्वसूत्र एव निरूपितम् । अनवस्थितत्वादपीति । मार्गचिह्नानि देशतः पूर्वोत्तरभावेन समकालं व्यवस्थितानि । अर्चिरादिमुख्यार्थस्तु न तथेति भावः । अर्चिषा हेतुनेति । यद्यपि 'विभाषा गुणेऽस्त्रियामि'ति सूत्रेण गुणवाचकाद्धेतुपञ्चमी विहिता । द्रव्याश्रितश्च गुणो जाड्यादिः । अर्चिरादिस्तु न तथा, तथापि बाहुलकात् पञ्चमी हेतौ । इदं छान्दसप्रक्रियया भविष्यति ॥ ५ ॥

## वैद्युतेन ततस्तच्छ्रुतेः ॥ ६ ॥

विद्युल्लोकानन्तरममानवपुरुषस्य प्राधान्येन गमयितृत्वम् । विद्युदाद्यभिमानिनां तु तदुपसर्जनतयेति समुच्चयेऽपि वैद्युतेनैवेत्येवकारः विद्युराद्यभिमानिनां प्राधान्यमात्रनिवृत्तिपर इति द्रष्टव्यम् ॥ ६ ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

## विशेषितत्वाच्च ॥८॥

मार्गनिरूपणानन्तरं प्राप्यमिदानीं निरूप्यत इति सङ्गतिः । 'गतेरर्थवत्त्वमुभयथे'त्यत्र 'प्रतिषेधादिति चेदि'त्यत्र च निर्विशेषविद्भिः प्राप्यं परं ब्रह्म नोत्क्रान्तिपूर्विकां गतिमपेक्षत इति प्रतिपादितम् । अस्मिंस्त्वधिकरणे सविशेषविद्भिः गतिपूर्वकं

प्राप्यं शुद्धं परं ब्रह्मैवेति शङ्क्यते । यद्यपि सिद्धान्तेऽपि दहरादिसविशेषविद्यानिष्ठानां क्रमेण परब्रह्मप्राप्तिरवश्यम्भाविनीत्युपेयत एव, तथापि अर्चिरादिना क्रमेणैव परप्राप्तिरित्यत्राशङ्का । अस्मिश्चाधिकरणे मतान्तरकथनव्याजेन पूर्वपक्षः प्रदर्शयिष्यते । प्रथमतो मतान्तरकथनव्याजेन सिद्धान्तः प्रदर्श्यते—**कार्यमेवेत्यादिना** । ननु, ब्रह्मशब्दस्य विशुद्धे ब्रह्मण्येव मुख्यत्वात् 'स एनान् ब्रह्म गमयती'त्यत्र न सोपाधिकब्रह्मविवक्षा । तस्य परिच्छिन्नत्वेन निरङ्कुशब्रह्मत्वायोगादित्याशङ्क्य न केवलं गत्युपपत्तय एव सोपाधिकपरतोपेयते । ब्रह्म गमयतीति छान्दोग्यपाठस्थाने बृहदारण्यके ब्रह्मलोकान् गमयतीत्यादिसमाम्नानादपीत्याह—**विशेषसत्त्वाच्चेति** । ननु, लोकपदं न परब्रह्मविवक्षाविरोधि । ब्रह्मैव लोक इति कर्मधारयसम्भवात् इत्याशङ्क्य तथासति बहुवचनमनुपपन्नं स्यात् । ब्रह्मण एकत्वादित्याह—**बहुवचनेनेति** । तथा चार्चिरादिभोगस्थानभूतलोकविशेषप्राप्तेरवगमात् लोकविशेषोपाधिकब्रह्मणा सह भोगसाम्यमेव सविशेषनिष्ठैः प्राप्यं, न तु परामृतमिति भावः । **गौणी त्वन्यत्रेति** । लोक्यत इति लोकः प्रकाशरूप इति यौगिकीति भावः ॥ ८ ॥

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

अपरब्रह्मणः लोकविशेषोपाधिकस्येति यावत् ॥ ९ ॥

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्॥१०॥

परब्रह्मप्राप्तिरिति पदाध्याहारेण सूत्रं व्याचष्टे—**परिशुद्धं विष्णोः परमं पदमिति** ॥१०॥

## स्मृतेश्च ॥११॥

प्रतिसञ्चरे ब्राह्मप्रलये, कृतात्मानः साक्षात्कृतनिरुपाधिकात्मानः, परस्य ब्रह्मणः, अन्ते देहावसाने ॥११॥

## परं जैमिनिर्मुख्यत्वात् ॥१२॥

**परमेव ब्रह्म प्रापयतीति मन्यत इति** । न च परस्य ब्रह्मणस्स्वरूपभूतत्वेन नित्यसन्निहिततया न गत्यपेक्षेति वाच्यम् । शास्त्रबलेनार्चिरादिना ब्रह्मलोकं गत्वा अविद्यां विधूय स्वरूपेणावस्थितो भवतीति कल्पनोपपत्तेः ॥१२॥

## दर्शनाच्च ॥१३॥

**कठवल्लीषु पठ्यत इति** । 'शतं चैका च हृदयस्य नाड्य' इति वाक्यं हि कठवल्लीष्वपि पठ्यते । ननु नेदं प्रकृतोपन्यासार्हम् । अत्र हि सविशेष-

विद्यानां परप्रापकत्वं जैमिनिमते विवक्षितं, न तु निर्विशेषविद्याया गतिसापेक्षत्वम् । निर्विशेषविद्यायां गत्यपेक्षायाः प्रागेव निरस्तत्वादिति चेत्, उच्यते—सविशेषविद्यानामर्चिरादिना परप्रापकत्वं परस्य सर्वगततया अनुपपन्नमिति शङ्कायां यथा निर्विशेषविषयविद्यायाः परप्रापकत्वेन सम्मताया गत्यपेक्षा कठवल्लीपर्यालोचनया, एवं सविशेषविद्याया अपि किं न स्यादित्यभिप्रायः । निर्विशेषविद्याया गत्यपेक्षत्वे निराकृतेऽपि कठवल्लिगतस्य गतिवाक्यस्य गतिं प्रसङ्गाद्वक्तुमयमुपक्षेपः ॥१३॥

ननु, 'प्रजापतेस्सभां वेश्म प्रपद्ये' इत्युपासकानां प्रजापतिसभाप्राप्त्यभिसन्धेः प्रतिपादनात् तैस्सभागतं सोपाधिकमेव ब्रह्म प्राप्यमित्याशङ्कायामाह—

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥१४॥

अपिचेतिपदं शङ्काव्यावर्तनद्वारा मुख्यत्वादिहेतुसमुच्चयाय । नामरूपयोर्निर्वहितुः नामरूपासंस्पृष्टत्वस्य ते यदन्तरेत्यनेन विवक्षितत्वात् निरुपाधिकवस्तुगोचरेयं विद्येत्यवगमात् सभां प्राप्याविद्यां निवर्त्य परमेव ब्रह्मात्र प्राप्यम् । एवंसत्येव 'यशोऽहं भवामि ब्राह्मणाना'मित्यादिना यशःप्रकाशः साक्षिरूपो यो ब्राह्मणादीनां, तदहं भवामीति सर्वात्मतागोचरफलाभिसन्धिप्रतिपादनमुपपद्यत इति परिहाराभिप्रायः । एवं मतद्वयमुपन्यस्य बादरिमतस्य सिद्धान्तत्वे नियामकमाह—**तावेताविति** । जैमिनिना मुख्यत्वं 'तयोर्ध्वमायन्नि'ति दर्शनं चोपन्यस्तम् । तत्र मुख्यत्वमप्रयोजकम् । अनुपपत्तौ अमुख्यार्थग्रहणस्य न्यायसिद्धत्वादित्याह—**न ह्यसत्यपीति** । दहरविद्यागतं तयोर्ध्वमायन्निति दर्शनममृतत्वञ्चानुपोष्येति व्याख्यातमेव । कठवल्लीगतं तु सविशेषविद्यागतगत्यनुवादेन निर्विशेषविद्यास्तुत्यर्थं भविष्यति—सविशेषविद्याभिरुत्क्रान्तिगतिपूर्वकं क्लेशेनापि गौणमेवामृतत्वं प्राप्यम् । निर्विशेषविद्यया त्विहैवोत्क्रान्त्यादिक्लेशं विनैव परं प्राप्यमिति प्रशस्ता निर्विशेषविद्येति । इत्थमेव कर्मफलप्रापकनाडीकीर्तनस्य 'विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति अस्य गतिर्वक्तव्येत्याह—**परविद्याप्रकरणेऽपि चेति** । 'आकाशो ह वै नामे'त्यादिवाक्यं यदि निरुपाधिकवस्तुगोचरं, तदा 'प्रजापतेस्सभामि'त्यादिवाक्यं तत उत्कृष्टव्यम् । निर्विशेषविद्ययैव ब्रह्मप्राप्तेः अनेकप्रमाणसिद्धतया प्रजापतिसभाप्राप्त्यपेक्षाविरहादित्याह—**प्रजापतेस्सभामिति** । वस्तुतस्तु 'आकाशो ह वा' इत्यादिवाक्यं सविशेषविषयमेव । नामरूपासंसृष्टत्वकीर्तनं तु तत्र वस्तुगत्या । अन्यथा नामरूपनिर्विहितृत्वप्रजापतिसभाप्राप्त्यादिकीर्तनासाङ्गत्यापातात् , तत्र

यशोऽहमित्यादिसर्वात्मत्वकीर्तनं तु उपास्ये नानुपपन्नम् । सविशेषस्यापि सर्वात्मत्वानपायात्। फलं तु तस्य क्रममुक्त्या भविष्यतीत्यभिप्रेत्याह—**सगुणेऽपि चेति** । ततश्च तत्क्रतुन्यायेन गत्युपपत्त्यादिभिश्च सविशेषविदां सोपाधिकब्रह्मप्राप्तिस्साक्षात्, क्रमेण तु निरुपाधिकप्राप्तिरित्युपसंहरति—**तस्मादपरेति** । केचित्तु अर्चिरादिना कार्यं हिरण्यगर्भाख्यमेव ब्रह्म प्राप्यमिति बादरिमतेन पूर्वपक्षं प्रदर्श्य अर्चिरादिना परमेव ब्रह्म प्राप्यमिति जैमिनिमतेन सिद्धान्तं वर्णयन्ति । तन्मतं दूषयितुमनुवदति—**केचित्पुनरिति** । अत्र परशब्देन प्राप्यं ब्रह्म किं निरुपाधिकं विवक्षितम्, उत सोपाधिकम् । नाद्य इत्याह—**गन्तव्यत्वानुपपत्तेरिति** । निर्विशेषं ब्रह्मापलपन् पराशयस्थं द्वितीयं पक्षं शङ्कते—**जगदुत्पत्तीति । अनन्यार्थत्वादिति** । तथा च सप्रपञ्चत्वनिष्प्रपञ्चत्वप्रतिपादकश्रुतीनां विरोधे प्रसक्ते अनन्यार्थकनिष्प्रपञ्चत्वश्रुत्यनुसारेण सप्रपञ्चत्ववाक्यानि नेयानीति भावः । सृष्टिप्रतिपादकश्रुतीनां न सप्रपञ्चः परमात्मेत्येवंपरता । तासां सृष्टिप्रतिपादनद्वारा कारणवस्तुमात्रसम्भावनायाः श्रुत्यैव प्रतिपादनादित्याह—**प्रत्यक्षं त्विति**। तत्राद्भिरन्ने जीर्णे सति यदेतत् शरीराख्यं शुङ्गं कार्यमुत्पतितं, नेदममूलमकारणकम्। अतोऽस्य मूलमन्नमेवेति दृष्टान्तमुक्त्वा यथात्र कार्यानुसारेणान्नरूपं कारणमुपगतम्, 'एवमन्नेन सोम्य शुङ्गेन अपो मूलमन्विच्छ अद्भिस्सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे'त्युपसंहृतम् । यतो वेत्यादिवाक्येऽपि यत्पदेन कारणत्वादेर्वस्तूपलक्षकतैव प्रतिपादिता, न तु कारणत्वमेव वस्तुस्वरूपमिति प्रतिपादितमित्याह—**यतो वा इमानीति** । तथा च सृष्टिवाक्यानां वस्तुसम्भावनयोपलक्षणमात्रपरत्वात् 'अथात आदेशो नेति नेति' 'सत्यं ज्ञान' मित्यादिस्वरूपनिष्ठवाक्यविरोधे व्यावहारिकसृष्ट्यादिपरतैवोपेयेत्युपसंहरति—**एवमिति । अवयवो विकारोऽन्यो वेति**। यद्यपि विकारावयवविकल्पेऽप्यन्यत्वमविशिष्टं, तथापि तयोर्विकल्पयोर्जीवोऽयुतसिद्धो ब्रह्मणा भवति । अन्य इति विकल्पस्तु विश्लिष्टत्वाभिप्रायः । ब्रह्मप्राप्तिर्हि मुक्तिः । तथा च संसारो ब्रह्माप्राप्त्या व्यवस्थापनीयः । विकारावयवपक्षयोश्च तदवयवशालिनो ब्रह्मणो नित्यं विद्यमानतया जीवस्य ब्रह्मवियोगासम्भवात् संसारानुपपत्तिरित्याह—**विकारावयवपक्षयोश्चेति । अनन्यत्वादोष इति चेदिति** । अयुतसिद्धत्वात्तत्त्वमस्यादिवाक्यं नानुपपन्नमित्यर्थः । तत्त्वमस्यादिवाक्यानि नायुतसिद्धत्वं जीवब्रह्मणोः प्रतिपादयन्ति, अपि तु स्वरूपैक्यम् । तथा च परस्य तद्विरोध इति परिहरति—**मुख्यैकत्वानुपपत्तेरिति** । जीवस्य संसारित्वमग्न्यौष्ण्यवत् स्वभावः । तन्मोक्षदशायामवतिष्ठ-

ते वा, अपगच्छति वा । आद्यं दूषयति—**सर्वेषु चैतेष्विति । निवृत्तौ वेति ।** सति धर्मिणि स्वभावनाशादर्शनात् स्वभावनाशो धर्मिणा सहैव भवेदिति भावः । प्रसङ्गान्मतान्तरमनूद्य दूषयति—**यत्तु कौश्चिदिति । फलान्तरस्याप्यनुनिष्पादिन इति ।** अग्न्यन्वाधानप्रस्तरप्रहरणाङ्गभूतमन्त्रप्रकाश्यानि फलानि असत्यामपि कामनायां भवन्तीत्यभ्युपगमान्नित्येष्वपि कर्मस्वस्ति आनुषङ्गिकं फलमित्यभिप्रायः । **तच्च न निमित्तानामपीति ।** अदृष्टादीनां क्रियानिमित्तानां शक्त्यात्मना कर्त्रा सम्बध्यमानेन स्वरूपेण नित्यमवस्थितत्वादित्यर्थः । **यत्रापि ब्रह्म प्रकृत्येति ।** वैश्वानरपर्यङ्कविद्ययोस्तावत् ब्रह्म प्रकृत्यैव गतिरुक्ता । अन्यत्रापि यत्र ब्रह्म प्रकृत्य गतिरुच्यत इत्यर्थः । परविषया निर्विशेषविषया । **तत्र प्ररोचनं तावदिति ।** कठवल्लीगतगतिप्रतिपादनस्य प्ररोचनार्थतया अत्रैवोक्ततया प्ररोचनार्थत्वाभावे नातीव तात्पर्यमिति द्रष्टव्यम् । **एतद्वै सत्यकामेति ।** यद्यप्यस्यां श्रुतौ हिरण्यगर्भोऽपरं ब्रह्म, बिम्बरूपं परं ब्रह्मेति विवक्षितम् । प्रकृते तु सोपाधिकं बिम्बरूपम् अपरं, निरुपाधिकमेव परमिति विभागो विवक्षितः, तथापि यथास्यां श्रुतौ एकस्यैव चैतन्यस्य परापरभावो विवक्षितः, एवमिहापि एकस्यैवेश्वरस्य सोपाधिकत्वनिरुपाधिकत्वाभ्यां परापरभावो विवक्षित इति तात्पर्यम् ॥१४॥

इति बादर्यधिकरणम् ॥९॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥१५॥

गतिगन्तव्यनिरूपणानन्तरं गन्तृस्वरूपं निरूप्यत इति सङ्गतिः । 'मनो ब्रह्मे' त्यादिप्रतीकोपासकानहङ्ग्रहोपासकांश्चाविशेषेणैवामानवः पुरुषो ब्रह्मलोकं प्रापयति, उताप्रतीकानेवेति संशयः । अयमत्र पूर्वपक्षाशयः 'स एनान् ब्रह्म गमयती'त्यत्र एतत्पदपरामृष्टानाममानवः पुरुषो नेतेति तावत् अविवादम् । तेन च' तद्य इत्थंविदुर्येचामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसंविशन्ती'ति पूर्ववाक्ये ये प्रस्तुताः, तेषां परामर्शः । 'तद्य इत्थंविदुरि'ति पञ्चाग्निविदः ये चामी अरण्ये श्रद्धां सत्यमितीतरब्रह्मविदश्च प्रस्तुताः । न च येचामी अरण्य इति वाक्ये अहङ्ग्रहोपासकानामेव ग्रहणं, तेषामेव प्राधान्येन ब्रह्मोपासकत्वात्प्राधान्येन ब्रह्मोपासकेष्वेव श्रद्धां सत्यमित्युपासत इति निर्देशस्वारस्यात् ' मनो ब्रह्मे ' त्यादौ तु न प्राधान्येन ब्रह्मोपास्यते, अपि तु मनस उपसर्जनतया । अत'स्स एनान् ब्रह्म गमयती'त्यत्र न प्रतीकालम्बनानां ग्रहणं भवेदिति वाच्यम् । यदि हि 'ये चामी अरण्य' इति वाक्य

प्रतीकोपासकानां ग्रहणं न स्यात्, तदा तेषां कर्मप्राप्यपितृयाणस्याभावात् देवयानाभावाच्च मार्गद्वयभ्रष्टानां तृतीयमार्गप्राप्तिस्स्यात, सा मा भूदिति देवयानसम्बन्धसिद्ध्यर्थं ये चामी अरण्य इति वाक्ये प्रतीकोपासका अपि ग्राह्या एवेति तेषामप्यमानवपुरुषो नेता भवेदेवेति । अयमत्र सिद्धान्ताभिप्रायः—यद्यपि पूर्ववाक्ये प्रतीकोपासकाः प्राप्ताः, तथापि 'स एनानि' त्यत्र न तेषां ग्रहणम् । तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव ब्रह्मप्राप्तौ योग्यतया प्राधान्येन ब्रह्मोपासनारहितानां ब्रह्मक्रतुत्वाभावात् न तेषां प्राप्तियोग्यता । सर्वनामानि च न केवलं प्रस्तुतपरामर्शकानि, अपि तु यत्प्रस्तुतं योग्यं च, तत्परामर्शकानि । न चैवं पञ्चाग्निविदामपि 'स एनानि'त्यत्र ग्रहणं न स्यादिति वाच्यम्। पञ्चाग्निविद्याप्रकरणपठिते 'स एनानि'ति वाक्ये तद्वर्जनानुपपत्तेः । अतः पञ्चाग्निविद्याविषये तत्क्रतुन्यायबाध एवाश्रीयते । एवं 'चानियमस्सर्वेषामि'ति न्यायः प्रतीकोपासकेषु अमानवपुरुषनयने सङ्कोच्यते । केचित्तु 'ये चामी अरण्य' इति वाक्यगतयत्पदप्रतिनिर्देशाय 'तेऽर्चिषमेवाभिसम्भवन्ती'त्यत्र तत्पदेन प्रकरणिनां पञ्चाग्निविदां प्रासङ्गिकानां श्रद्धातपोभ्यां ब्रह्मोपासकानां च ग्रहणे सति 'स एनानि'त्यत्र पञ्चाग्निविदामेव ग्रहणम् । न ह्यत्र प्रासङ्गिकानामग्रहणे यत्पदप्रसक्तिरस्ति । 'तेऽर्चिषमेवाभिसम्भवन्ती'त्यत्र परामर्शमात्रेणैव तस्य निराकाङ्क्षत्वोपपत्तेः । तथा च पञ्चाग्निविद्यागतवाक्यानुसारेणाहङ्ग्रहोपासकानामपि ब्रह्मप्राप्तिर्न सिध्यति, किमु प्रतीकोपासकानाम् । अहङ्ग्रहोपासकानां ब्रह्मप्राप्तिस्तु तत्क्रतुन्यायात्, उपकोसलविद्यायामर्चिरादिमार्गं प्रस्तुत्य 'एष देवपथो ब्रह्मपथ' इति तस्य सामान्येन ब्रह्मप्रापकत्वकीर्तनाच्च सिध्यतीत्याहुः ॥१५॥

## विशेषं च दर्शयति ॥१६॥

प्रतीकोपासकानां ब्रह्मक्रतुत्वाभावे लिङ्गदर्शनमेतत्। यदि 'नाम ब्रह्मे'त्यादौ प्राधान्येन ब्रह्मैवोपास्यं भवेत्, तदोपास्यतारतम्येन फलतारतम्यं न स्यात् । ब्रह्मण उपास्यस्य सर्वत्राविशिष्टत्वात्। नामादीनां प्राधान्ये तु तेषामुत्तरोत्कर्षात् फलोत्कर्षप्रतिपादनमुपपद्यते । ननु, 'यो नाम ब्रह्मेत्युपास्त' इति नामोपासनायां नाम्नो यो विषयः, तत्र कामचारः,तस्य प्राप्तिः फलत्वेनाम्नाता। नामापेक्ष्य वाचमधिकां प्रतिपाद्य 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवती'ति । एवमुत्तरत्रापि तत्तदुपास्यवस्तुविषयभूतं तत्तदुपासकेन प्राप्यमिति प्रतिपादितम् । न चैतावता पूर्वपूर्वमपेक्ष्य उत्तरोत्तरं फलोत्कर्षस्सिध्यति । सर्वं हि वस्तुजातं नाम्नो विषयः । वाचोऽपि सर्वं विषयभूतम्, एवं मनसोऽपि, एवमुत्तरत्रापीति चेत्, उच्यते—अत्र यावन्नाम्नो गतमि'त्यादिना लोकसिद्धो यो नामविषयस्स न गृह्यते, अपि तु नाम वा ऋग्वेद इत्यादि

ना नामादीनां तत्तत्प्रकरणे यत्र व्याप्तिराम्नाता, तत्रोपासकस्य कामचारो विवक्षितः । स चास्मिन्प्रकरणे पूर्वपूर्वमपेक्ष्योत्तरोत्तरमधिकैव दर्शितेति न काचिदनुपपत्तिः ॥ १६ ॥

इति अप्रतीकालम्बनाधिकरणम् ॥६॥

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
चतुर्थाध्यायस्य तृतीयः पादः ॥

ॐ

---

अथ

# चतुर्थाध्यायस्य चतुर्थः पादः ॥

## सम्पद्याविर्भावस्स्वेन शब्दात् ॥ १ ॥

निर्विशेषविदां सकलपुण्यपापक्षये इहैव प्राणानां लयः, न तूत्क्रान्तिरिति दर्शितम् । सविशेषविदां तु पुण्यपापक्षये मूर्धन्यया नाड्योत्क्रम्यार्चिरादिना सगुणब्रह्मप्राप्तिर्भवतीति प्रतिपादितं त्रिपाद्याम् । अस्मिन् पादे निर्विशेषविदां विलीनप्राणानां स्वाभाविकेन विशुद्धचिदात्मना ब्रह्माभेदेनारोपितेन च सर्वज्ञत्वादिना अवस्थानं, सविशेषविदां कार्यब्रह्मप्राप्तानां तु सविशेषब्रह्मसायुज्येनावस्थानमिति निरूप्यते । अत्र प्रथमाधिकरणे निर्विशेषविदां स्वाभाविकेन रूपेणावस्थानं निरूप्यते । नन्वभिनिष्पद्यत इति पदं यद्यप्युत्पत्तिं प्रतिपादयति, तथापि स्वेनेति पदेन स्वरूपस्याभिनिष्पाद्यत्वावगमात् स्वरूपस्य नित्यसिद्धतया उत्पत्त्यनुपपत्तेरभिनिष्पद्यत इति पदमप्यभिव्यक्त्यर्थकं भविष्यतीत्यत आह--**स्वरूपमात्रेण चेदभिनिष्पत्तिरिति।** विद्यायास्स्वरूपाभिव्यक्तिः फलमिति वक्तुं न शक्यम् । स्वप्रकाशस्य जीवस्य नित्याभिव्यक्तस्वरूपत्वात् । अत उपपत्त्यनुसारेणाभिनिष्पद्यत इति पदस्य उत्पत्त्यर्थकत्वे स्थिते स्वेनेति पदं स्वीयेनेत्यर्थकं भविष्यतीत्यभिप्रेत्य परिहरति—**पूर्वास्वप्यवस्थास्विति** ॥ १ ॥

स्वेनेति विशेषणसार्थक्याय स्वाभाविकेनैव रूपेणाभिनिष्पत्तौ प्रतिपादितायां स्वप्रकाशस्वरूपस्य बन्धावस्थायामपि अभिव्यक्ततया बन्धमोक्षयोर्वैलक्षण्यं न स्यादिति पूर्वपक्षिणा प्रतिपादितम् । तन्निरासायोत्तरसूत्रमवतारयति—**कः पुनरिति** ॥

## मुक्तः प्रतिज्ञानात् ॥२॥

स्वप्रकाशस्यापि स्वरूपस्य बन्धदशायामविद्याध्यस्तविशेषैराच्छादिततया न स्फुटतयावभासः । मुक्ते त्वविद्यादेर्निस्स्वरूपतापत्त्या अधिष्ठानपरिशेषात् स्फुटतयावभासस्स्वरूपस्येति परिहाराभिप्रायः । विस्तरेण चायमर्थो जिज्ञासासूत्र एव निरूपितः ॥२॥

ननु, प्रजापतिविद्यागतेन 'एष सम्प्रसाद' इति वाक्येन निर्विशेषविदामपि आदित्यं प्राप्य स्वेन रूपेणाभिनिष्पत्तिरवगम्यते । अतस्सा आगन्तुकरूपगोचरैव भवेत्, स्वाभाविकस्वरूपाभिनिष्पत्त्यर्थं आदित्यादिप्राप्तेरनपेक्षणादित्याशङ्कानिवृत्त्यर्थं सूत्रं—

## आत्मा प्रकरणात् ॥३॥ इति ॥

ज्योतिर्दर्शनादित्यत्र परं ज्योतिरिति वाक्यगतज्योतिःपदस्य ब्रह्मपरताया व्यवस्थापितत्वात् नेयं शङ्कोचिता । तस्यैव न्यायस्य स्मरणार्थमिदं सूत्रमिति न पुनरुक्तादोषः ॥३॥

इति सम्पद्याविर्भावाधिकरणम् ॥१॥

## अविभागेन दृष्टत्वात् ॥४॥

मुक्तैः स्वेन रूपेणाविर्भूतं यज्जीवस्वरूपं, तत् भेदेनैव ब्रह्मणो भवतीति प्रत्यवस्थानात् संगतिः । ननु, तत्रतत्र तत्त्वमसीत्याद्यनेकश्रुतिपर्यालोचनया जीवस्य ब्रह्माभेदः पारमार्थिक इति व्यवस्थापितम् । पुनः कथं मुक्तो भेदेनावतिष्ठत इति शङ्क्यत इति चेत्, एवं—'स तत्र पर्येती'त्यादिभेदनिर्देशस्य फलोपदेशगततया साधनीभूतज्ञानोपदेशगताभेदनिर्देश औपचारिको यथाकथञ्चिन्नेयः । फलस्य प्रधानतया तदुपदेशानुसारेण साधनोपदेशनयनस्योचितत्वादिति । अयमत्र सिद्धान्ताभिप्रायः—'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः ब्रह्म वेद ब्रह्मैव भवती'ति फलोपदेशेष्वपि अभेदश्रवणात् तदुपोद्बलितं तत्त्वमस्यादिवाक्यमपि नान्यथा व्याख्यातुमुचितम् । अपि तु क्वाचित्को मुक्तौ भेदनिर्देश एव यथाकथञ्चिद्व्याख्येय इति ॥४॥

इति अविभागाधिकरणम् ॥२॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥

ब्रह्माभेदेनाभिव्यक्तं मुक्तस्वरूपं सविशेषमेवेति प्रत्यवस्थानात् सङ्गतिः । ननु, सविशेषविषयत्वमाविद्यकमिति तत्रतत्र व्यवस्थापितम् । अतो मुक्तः परमार्थगत्या सविशेष इति कथं पूर्वः पक्षः कर्तुं शक्यत इति चेत्, एवं—मुक्तौ श्रू

यमाणं सविशेषत्वं आविद्यकमिति वक्तुं न शक्यते । तदानीमविद्याया अभावात् । अतस्तत्पारमार्थिकमेवेति । सूत्रे उपन्यासादिभ्य इति उपन्यासपदमुपक्रमपरम् । प्रजापतिविद्यायां ह्युपक्रमे श्रुतमपहतपाप्मत्वादिगुणजातमाविर्भूतस्वरूपजीवगतमेवेत्युक्तम् 'उत्तराच्चेदाविर्भूतस्वरूप'स्त्वित्यत्र । तथा 'सर्वांश्च लोकानाप्नोती'त्यादिकमपि परविद्याफलत्वेनोपक्रमे श्रूयते । आदिपदेन 'स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्याद्युपसंहारभूमविद्यागतं 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवती'त्यादिकं च गृह्यते । न चेदं सर्वलोककामावाप्त्यादि दहरविद्यादिफलं भविष्यतीति शङ्कनीयम् । विद्यान्तरगतस्य विद्यान्तरविषयकत्वकल्पनानुपपत्तेः ॥५॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥

प्रज्ञानघन एवेत्येवकारेण ज्ञानव्यतिरिक्तरूपान्तरप्रतिषेधात् 'असङ्गो ह्ययं पुरुषः अथात आदेशो नेति नेती'ति च सर्वप्रतिषेधात् विशेषाणामाविद्यकत्वे प्रबलप्रमाणसिद्धे क्वचिन्मुक्तौ श्रूयमाणं जक्षणादिकमर्थवादो भविष्यति । तथा च 'यत्र त्वस्य सर्वमात्मैवाभू'दित्यादिना मुक्तावपि सर्वविशेषप्रतिषेधो दृश्यते ॥६॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥७॥

यद्यपि मुक्तजीवगताविद्या निवृत्ता, तथापि बद्धजीवसम्बद्धाभिरविद्याभिरीश्वरे सर्वज्ञत्वादिकमारोपितम्, अन्येषु जीवेषु च जक्षणादिकम् । तथा च ब्रह्मात्मनावस्थिते ब्राह्ममपहतपाप्मत्वादिकं मुक्ते उपपद्यते । सर्वात्मकत्वादेव जीवान्तरगतं ब्राह्मलौकिकं जक्षणादिकमुपपद्यते । न च व्यावहारिकं सत्यकामत्वादिकं ब्राह्मं जैवं जक्षणादिकं च पारमार्थिकेन निर्विशेषचिदात्मना विरुध्यते । अतो नोपन्यासादीनां निरालम्बनार्थवत्त्वमात्रं कल्पयितुमुचितमिति भावः ॥७॥

इति ब्राह्माधिकरणम् ॥३॥

## सङ्कल्पादेव तु तच्छ्रुतेः ॥८॥

इतःप्रभृत्यापादपरिसमाप्तेः सविशेषविद्याफलचिन्ता । पूर्वत्र मुक्तजीवविषयकसविशेषनिर्विशेषश्रुतीनां व्यावहारिकत्वपारमार्थिकत्वाभ्यां विरोधः परिहृतः । 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती'त्यत्र व्यवहारदशायामेव ब्राह्मलौकिकभोगसाधनेषु एवकारेण सङ्कल्पातिरिक्तकारणकलापनिरासः प्रतिपाद्यते । न हि तदुपपद्यते । व्यवहारदशायामेव पुष्कलभोगसाधनानां सङ्कल्पातिरिक्तसाधनापेक्षादर्शनेन तदभावस्य श्रुत्या प्रतिपादयितुमशक्यत्वात् । न हि मानोरथिकानां ग्रहादीनां पुष्कलभोगसाधनता दृष्टा । अतो ब्राह्मलौकिकानां पुष्कलभोगसाधनानां पित्रादीनां का·

रणान्तरसापेक्षत्वे लोकप्रमाणसिद्धे एवकारः कारणान्तराणामल्पप्रयत्नसाध्यतार्थो भविष्यतीति सङ्गतिगर्भः पूर्वपक्षः । अयमत्र सिद्धान्ताभिप्रायः—सङ्कल्पादेवेति श्रुतिप्रामाण्यात् सङ्कल्पमात्रसाधनानामपि न लोकदृष्टिमात्रेण पुष्कलभोगसाधनता नास्तीति वक्तुं शक्यते । न चैवं ब्राह्मलौकिकानां पित्रादीनां सङ्कल्पमात्रसाध्यत्वे उपादानतयापि कारणान्तरापेक्षा न स्यादिति वाच्यम् । संकल्पादेवेत्येवकारस्य सजातीयसाधनान्तरव्यावर्तकतया जविगतयत्नाद्यनपेक्षत्वेऽपि उपादानापेक्षायामनुपपत्त्यभावात् । तदिदमुक्तं—'निमित्तान्तरमपि तु यदि सङ्कल्पानुविधाय्येवे'त्यादि ८

## अत एव चानन्याधिपतिः ॥९॥

ननु, तत्तल्लोकाधिपतिभिरधिकारिपुरुषैः संङ्कल्पप्रतिबन्धसम्भवात् कथं सङ्कल्पादेवेति वचनमिति शङ्का अत्र व्यावर्त्यते । अनन्याधिपतित्वम् ईश्वरातिरिक्ताधिपतिराहितत्वम् । ईश्वरस्तु शास्त्रप्रामाण्यादेव नोपासकानां सङ्कल्पं प्रतिबध्नातीति कल्प्यते , अन्यैश्च प्रतिबन्ध ईश्वराज्ञावशादेव न भवतीति च ॥९॥

इति सङ्कल्पाधिकरणम् ॥४॥

## अभावं बादरिराह ह्येवम् ॥१०॥

यदि श्रुतिप्रामाण्यात् सङ्कल्पातिरिक्तसाधनापेक्षोपासके नास्ति , तर्हि 'मनसैतान् कामान् पश्यन्रमते य एते ब्रह्मलोक' इति श्रुतिप्रामाण्यात् शरीरमपि सविशेषे फलोपभोगे मास्त्विति भत्यवस्थानात् सङ्गतिः । ननु, मनसेति निर्देशो मनःप्रापको भविष्यति, कथमेतावता शरीराभावोऽवगन्तव्य इति चेत् , न । कामान् पश्यन् रमत इति भोगप्रतिपादनादेवार्थसिद्धे मनसि तन्निर्देशस्येतरव्यावर्तकत्वात् । न च भूमविद्यायां 'स एकधा भवति त्रिधा भवती'त्यादिनिर्देशस्य एकस्मिन् जीवे शरीरभेदोपाधिकतया निर्वहणीयतया शरीरमप्यवान्तरमुक्तौ स्वीकर्तव्यमिति वाच्यम्। भूमविद्यायां निर्विशेषविषयायामाम्नातस्य शरीरभेदस्य सविशेषविद्यायां सञ्चारयितुमयोग्यत्वात्, परममुक्तौ प्राणभूमविद्याफलभूतायां शरीरासम्भवाच्च । तस्यार्थवादमात्रत्वादिति बादरेर्भावः ॥१०॥

## भावं जैमिनिर्विकल्पामननात् ॥११॥

पर्यङ्कविद्यायां 'तमित्थंवित्पदेनैव अग्रे आरोहति तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात्' इत्याम्नानेन शरीरसम्बन्धस्तावदवगम्यते। दहरविद्यायां च 'यंयमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव समुत्तिष्ठती'तिसङ्कल्पानुसारिकामप्राप्तेराम्नानात् सत्यां कामनायां अनेकशरीरग्रहणमभिसम्भवति । तथा च सविशेषवित्फलभू-

तस्यानेकशरीरग्रहणस्यानुवादेन भूमविद्यायां सर्वात्मकत्वाभिप्रायेण सालम्बनस्तुतिसम्भवेन निरालम्बनस्तुतिस्वीकारोऽयुक्तः । मनसेतित्वनुवादमात्रं, नेतरपरिसङ्ख्येति जैमिन्यभिप्रायः ॥११॥

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥

सङ्कल्पानुसारेण सशरीरताया अशरीरतायाश्चावान्तरमुक्तेस्सम्भवादुभयश्रुत्यनुग्रहोपपत्तौ न कस्या अपि श्रुतेस्स्वारस्यभङ्गो युक्तः । द्वादशाहवदिति दृष्टान्तस्यायमर्थः—'द्वादशाहमृद्धिकामा उपेयु'रिति वचनात् 'सप्तदशावराश्चतुर्विंशतिपरम असीरन्नि'तिद्वादशाहप्रकरणपठितादेव वचनाच्च द्वादशाहस्य सत्रत्वमवगम्यते । तथा 'द्वादशाहेन प्रजाकामं याजयेदि'ति वचनात्तस्य अहर्गणत्वं च । आसिचोदनावत्त्वं वा उपपूर्वकेण्धातुचोदनावत्त्वं वा सत्रलक्षणम् । अहर्गणसाध्यत्वे सति यजतिचोदनावत्त्वमहीनलक्षणं च मीमांसकसम्प्रदायसिद्धम् । एवं लक्षणान्तरमपि सत्राहीनयोर्मीमांसकसम्प्रदायागतं यथासम्भवमुन्नेयम् । तथा चोभयलक्षणायत्ततया यथा द्वादशाहस्योभयविधत्वम्, एवमवान्तरमुक्तस्यापि श्रुतिद्वयप्रामाण्यात् कामानुसारेण शरीरत्वाशरीरत्वोपगमे न काचिदनुपपत्तिरिति बादरायणमतम् ॥१२॥

## तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥

यदा शरीरराहित्यं, तदा यथा स्वप्नदशायां वासनापरिणामभूताः पित्रादयो भोग्याः, तथा मुक्तस्यापि वासनापरिणामभूताः पित्रादयो भोग्या इति ॥१३॥

## भावे जाग्रद्वत् ॥१४॥

स्थूलशरीरस्यापि भावे तु यथा जाग्रति भौतिका भोग्या भवन्ति, एवं मुक्तस्यापि पित्रादिकामाः भौतिका एवेति ॥१४॥

इति बादर्यधिकरणम् ॥५॥

## प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥

पूर्वाधिकरणव्यवस्थापितकामनानुसार्यनेकशरीराणां सजीवत्वव्यवस्थापनात्सङ्गतिः । **आत्ममनसोर्भेदानुपपत्तेरिति** । यद्यप्येकस्यैवात्मनोऽविद्योपाधिकस्य व्यापकत्वेन सर्वशरीरसम्बन्धितासम्भवात् तस्य भेदानपेक्षत्वं सर्वशरीरसंसर्गार्थं, तथाप्यन्तःकरणोपहितस्यैव प्रमातृत्वेनान्तःकरणपरिच्छेदेन तस्य परिच्छिन्नत्वात् अन्तःकरणभेदं विना न सर्वेषां शरीराणां प्रमातृत्वसंसर्गस्सिध्यतीति भावः । **एकमनोऽनुवृत्तीनीति** । प्राक्सिद्धं यदेकं मनः, तेन संकल्पवशात्सृज्यमानैर्मनोभिस्सर्वेष्वपि

शरीरेष्वविद्योपाधिकस्यैव जीवस्यावच्छेदसम्भवात् न कायव्यूहस्य प्रमातृत्वसम्बन्धविधुरता । योगमाहात्म्यादेवानेकान्तःकरणावच्छेदेनैकैकस्यैवानुसन्धातृत्वमपि सम्भवतीति न काचिदनुपपत्तिरिति भावः ॥१५॥

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥१६॥

'यत्र त्वस्य सर्वमात्मैवाभूदि'त्यादिना विशेषविज्ञानाभावः क्वचित् सुषुप्तिं प्रस्तुत्य दर्शितः, क्वचित्परममुक्तिं प्रस्तुत्य । अतोऽवान्तरमुक्तौ सशरीरतया विशेषविज्ञानवत्त्वे न काचिदनुपपत्तिः ॥१६॥

इति प्रदीपाधिकरणम् ॥६॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१७॥

यदि सङ्कल्पानुसारेण समनस्कानेकशरीरस्रष्टृत्वं, तर्हि सङ्कल्पादेव निरवग्रहैश्वर्यमप्युपासकस्यास्त्विति प्रत्यवस्थानात्सङ्गतिः । **जगदुत्पत्त्यादिव्यापारं वर्जयित्वेति** । अयं भावः—उपासकानां सङ्कल्पानुसारेण निरवग्रहैश्वर्ये कल्प्यमाने जगदुत्पत्त्यादिव्यापारोऽपि तेषामङ्गीकर्तव्यः । न चैतदुपपद्यते । अनादिसिद्धं परमात्मानं प्रकृत्य तस्यैकस्यैव यतो वेत्यादिवाक्यैः जगद्व्यापारप्रतिपादनात्, न तत्समश्चाभ्यधिकश्च दृश्यत'इतिवचनैरन्येषां तन्निषेधाच्च । तथा च श्रुतिविरोधे न सत्यसङ्कल्पतामात्रेण तस्य निरवग्रहैश्वर्यकल्पनोचिता, अपि तु स्वभोग्यविषय एव तस्य सत्यसङ्कल्पत्वमुपगन्तव्यमिति । ननु, 'यतोवे'त्यादिवाक्यमुपासकविषयकमप्यस्त्वित्याशङ्क्याह—**तस्य तत्र प्रकृतत्वादित्यादिना । नित्यशब्दनिबन्धनत्वाच्चेति** । नित्यसिद्धस्य कारणत्वप्रतिपादकश्रुतिजातस्य नित्यसिद्धं यस्यैश्वर्यं, स एव विषय उचितः, न तु साधनायत्तानित्यैश्वर्य उपासकः । नित्यानित्यसंयोगविरोधादिति भावः । यद्यपि 'सर्वकर्मा सर्वकामः सर्वैश्वर्यसम्पन्नः शम्भुराकाशमध्य' इत्यादिनिरङ्कुशैश्वर्यविषयोपासकानां तत्क्रतुन्यायेन निरङ्कुशैश्वर्यं फलमपेक्षितम्; तथापीश्वरैकत्वप्रमापकश्रुतिस्मृतिन्यायैरेतादृशविषये तत्क्रतुन्यायस्संकोचनीयः ॥१७॥

पूर्वपक्षोपन्यस्तश्रुतीनां गतिं वक्तुं सूत्रम्—

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः १८

'आप्नोति मनसस्पतिमि'ति प्राक्सिद्धपरमेश्वरप्राप्तिपूर्वकमेव वाक्पतिरित्यादिप्रतिपादनात् तत्तन्त्रमेव वाक्पतित्वादिकमित्याह—**एतदुक्तमिति** । एवंसति 'तमीश्वराणां परमं महेश्वरमि'त्यादिनित्यसिद्धेश्वरविषयमुपपद्यत इति भावः॥१८॥

## विकारावर्ति च तथा हि स्थितिमाह ॥१९॥

'पादोऽस्य सर्वा भूतानी'ति विकारजातं परमात्माध्यस्ततया तदेकदेश (एव) इव, त्रिपादस्यामृतं दिवीति अधिष्ठानं तु परमात्मा विकारातीतः तदधिकस्स्वप्रकाशः स्वमहिमप्रतिष्ठितः । न च तन्निर्विकारं रूपमिति । निर्विशेषसाक्षात्काराभावेनाविद्यायाः अनुवृत्तेरुपासकानामिति भावः ॥१९॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥ स्पष्टम् ॥२०॥

## भोगमात्रसाम्यलिङ्गाच्च ॥२१॥

तमुपासकं स्वसमीपमागतं ब्रह्मा आह, आपोऽमृतरूपाः, मीयन्ते भुज्यन्ते, असौ लोको भोग्यः पदार्थस्तवापि साधारण इत्यर्थः ॥२०॥

आवृत्तिः प्रसज्येतेति । न चेष्टापत्तिः । 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति श्रुतिविरोधात् ॥

## अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥२२॥

शास्त्रोक्तविशेषणमिति । 'अरश्चह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरः तदश्वत्थस्सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयमि'त्यादिशास्त्रम् । अर इति ण्य इति चार्णवसदृशयोर्जलाशययोस्संज्ञा । ऐरम् इरा मद्यं तत्सम्बन्धि मदीयं मदकरम् । सोमः अमृतं तद्यस्मात् स सोमसवनः । विमितं निर्मितं मन्त्रार्थवादादिषु प्रदेशेषु कौषीतक्यादिगतेषु । 'एतेन सर्वे व्याख्याताव्याख्याता'इत्यादौ अध्यायपरिसमाप्तिद्योतनाय पदमेवाभ्यस्यते । कृत्स्नसूत्राभ्यासस्तु शास्त्रसमाप्तिं द्योतयतीत्याह—सूत्राभ्यास इति ॥२२॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्री-
चरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्या-
दिगुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्द-
तीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थ-
स्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वै-
तानन्दस्य कृतौ शारीरकभाष्यव्या-
ख्यायां ब्रह्मविद्याभरणाख्यायां
चतुर्थस्याध्यायस्य
चतुर्थः पादः ॥**

**॥ अध्यायश्च समाप्तः ॥**

**ओम्**

॥ ब्रह्मविद्या भरणग्रन्थस्समाप्तः ॥